"श्वेतद्वीपे पुरा देव्याः क्रीडन्त्या रजसाप्लुतम्। दुकूलं तेन वस्त्रेण स्नातायाः क्षीरनीरधौ। प्रसृतं यद्रजस्तस्माद्गन्धकः समजायत"। तस्य भेदाः "चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः। रक्तो हेमक्रियासूक्तः पीतश्च रसायने। व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः स दुर्लभः। श्वेतो हेमक्रियादिषु सर्वत्र प्रशस्ततरः इत्यर्थः। अस्य गुणाः। गन्धकः कटुकस्तिक्तो वीर्य्योष्णस्तुवरः सरः। पित्तलः कटुकः पाके कण्डूविसर्पजन्तुजित्। हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः। अशोधितो गन्धक एष कुष्ठं करोति तापं विषमं शरीरे। सौख्यस्य रूपस्य बलं तथौजः शुक्रं निहन्त्येव करोति चास्रम्। शोधितो यस्तु गन्धः स्यात् जराम्रत्युज्वरापहः। अग्निसन्दीपनः श्रेष्ठो वीर्यवृद्धिकरोऽस्थिकृत्। शोधनविधिस्तु। लोहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत्। तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः। विद्रुतं गन्धकं दृष्ट्वा ततुपस्ते विनिःक्षिपेत्। तथा वस्त्राद्विनिःसार्य्य दुग्धमध्येऽखिलं क्षिपेत्। एवं स गन्धकः शुध्येत् सर्वकर्मोचितो भवेत्।" गन्धेन कायति कै—क। इति व्युत्पत्तिरित्यन्ये।

**गन्धकचूर्ण** पु० गन्धकप्रधानश्चूर्णः। (बारुद) इति ख्याते पदार्थे शब्दार्थचि०।

**गन्धकन्द** पु० गन्धप्रधानः कन्दोऽस्य। कसेरुणि वैद्य०।

**गन्धकारिका** स्त्री गन्धं गन्धप्रधानं वेशादिकं करोति कृ—ण्वुल् कापि अत इत्वम्। परवेश्मस्थायां स्ववशायां वेशादिकारिकायाम् १सैरिन्ध्र्यां हेमा०।

**गन्धकाली** स्त्री प्रशस्तं गन्धलेशं अलति पर्य्याप्नोति अल—अच् गौरा० ङीष्। सत्यवत्यां व्यासमातरि। "भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् यामाहुर्गन्धकालीमिति तस्यां पूर्वं कानीनो गर्भः पराशराद् द्वैपायनोऽभवत्। तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभूवतुः विचित्रवीर्य्यश्चित्राङ्गदश्च" भा० आ० ९५अ०। "अद्य त्वं जननीं भीष्म। गन्धकालीं यशस्विनीम्" भा० हरि० २० अ०। गन्धवतीशब्दे दृश्यम्। स्वार्थे क। गन्धकालिकाऽप्यत्र हेमच०। [२अम्बरचन्दने राजनि०।

**गन्धकाष्ठ** न० गन्धयुक्तं काष्ठमस्य। १अगुरुचन्दने त्रिका०।

**गन्धकुटी** स्त्री गन्धस्य कुटीवाधारः। १मुरानामगन्धद्रव्ये। अमरः।

**गन्धकुसुमा** स्त्री गन्धयुक्तं कुसुमं यस्याः। (गणियारी) गणिकारीवृक्षे राजनि०।

**गन्धकेलिका** स्त्री गन्धं केलति गच्छति केल—ण्वुल् कापि अत इत्वम्। १कस्तूर्य्यां मृगमदे राजनि०। गन्धप्रधानत्वात्तस्यास्तथात्वम्।

**गन्धकोकिला** स्त्री गन्धप्रधाना कोकिलेव कृष्णत्वात्। "तीक्ष्णोष्णा कफहृत् तिक्ता सुगन्धा गन्धकोकिला" भावप्र० उक्तगुणके वतौषधिभेदे।

**गन्धखेड(ल)(क)** न० गन्धस्य खेला यत्र वा कप् डलयोरेकत्वात्। (वेणा) गन्धवति १भूतृणे रत्नमा०। कबन्तः तत्रार्थे न० शब्दरत्नावली।

**गन्धचेलिका** स्त्री गन्धं चेलति गच्छति चेल—ण्वुल् कापि अत इत्वम्। १कस्तूर्य्यां मृगमदे त्रिका०।

**गन्धजटिला** स्त्री गन्धेन जटिला। १वचायां(वच)रत्नमा०।

**गन्धजल** न० गन्धाढ्यद्रव्यवासितं जलं शा० त०। गन्धाढ्यकुसुमादिपुष्पवासितजले "सिक्ता गन्धजलैरुप्ता फलपुष्पाक्षताङ्कुरैः" भाग० १।११।१२।

**गन्धजात** न० गन्धो व्यञ्जनादौ जातो यस्मात् निष्ठान्तत्वात् परनि०। (तेजपात) १तेजपत्रे शब्दरत्ना०। हेम०। २गन्धद्रव्यमात्रे च०।

**गन्धज्ञा** स्त्री गन्धं जानाति रसज्ञेत्यत्रेव करणस्य कर्तृत्वोपचारात् ज्ञा—कर्त्तरि क। १नासिकायाम् हेमच०।

**गन्धतण्डुल** पु० गन्धप्रधानस्तण्डुलमस्य। (वासमति) १शालिभेदे राजनि०।

**गन्धतन्मात्र** न० साङ्ख्यमतप्रसिद्धे शान्तघोरादिविशेषशून्यगन्धमात्रगुणके स्थूलपृथिव्यारम्भके सूक्ष्मपार्थिवांशे यथाह "स्थूलात् पञ्चतन्मात्रस्य" सा० प्र० सूत्रभाष्ये "तन्मात्राणि च यज्जातीयेषु शान्तादिविशेषत्रय न तिष्ठति तज्जातीयानां शब्दस्पर्शरूपरसगन्धानामाधारभूतानि सूक्ष्मद्रव्याणि स्थूलानां हेतवोऽविशेषाः "तस्मिंस्तस्मिंस्तु तन्मात्रास्तेन तन्मात्रता स्मृता। न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" इति विष्णुपुरादिभ्यः। अस्यायमर्थः तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्तीति कृत्वा धर्मधर्म्यभेदाद्द्रव्याणामपि तन्मात्रता स्मृता। ते च पदार्था शान्तघोरमूढाख्यैः स्थूलशब्दादिगतविशेषैः शून्या एकरूपत्वात्। तथा च शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूतानां शब्दादितन्मात्रत्वमित्याशयः। अतोऽविशेषिणोऽविशेषसञ्ज्ञा इति शान्तं सुखात्मक

घोरं दुःखात्मकं मूढ मोहात्मकम् । तन्मात्राणि च देवादिमात्रभोग्यानि केवल सुखाधिकानीति” [गन्धर० ।

**गन्धतूर्य्य** न० गन्धे हिंसाम्याने रणे तूर्य्यम् । १रणवाद्यभेदे

**गन्धतृण** न० गन्धप्रधानं तृणं शा०त० । सुगन्धयुक्ते भूतृणे सुरसे सुगन्धे तृणभेदे (वेणा) राजनि० । “देवनिका गन्धतृणं स्निग्धं चैव रसायनम् । सुगन्धि मधुरं शीतं कफपित्तश्रमापहम्” इति तत्र तद्गुणा उक्ताः ।

**गन्धतैल** न० गन्धयुक्तस्य चन्दनाद्यान्वितसंयोगेन जनितं तैलम् शा० त० । यन्त्रपाकेन जनिते तैलभेदे । (चन्दनोद्यातर) शब्दार्थ० । “घटीमें काशुनैलंच गन्धतैलावसेविते” भा०भी० ८८४० । सुश्रुतोक्ते २भक्ततैलभेदे च तच्च कल्पकारसात्वोक्तो यथा

‘रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले । दिवा दिवा शोषयित्वा गतं क्षीरेण भावयेत् । त्रिरात्रं सप्तरात्रं वा भावयेन्मधुकाम्बुना । ततः क्षीरे पुनः पीतान् सुशुष्कान् चूर्णयेद्भिषक् । काकोल्यादिं सवन्ध्याह्रं मञ्जिष्ठां सारिवां तथा । कुष्ठं सर्ज्जरसं मांसीं सुरदारु सचन्दनम् । शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत् । पीडनार्थञ्च कर्त्तव्यं सर्वगन्धशृतं पयः । चतुर्गुणेन पयसा तत्तैलं विपचेद्भिषक् । एलामंशुमतीं पत्रं जीवकं तगरं तथा । लोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिवम् । शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् । पिष्ट्वा शृङ्गाटकञ्चैव पूर्वोक्तान्यौषधानि च । पचेत्तैलं शान्तवह्निर्मृदुनाग्निना । एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्म्मसु । आक्षेपके पक्षघाते तालुशोषे तथार्द्दिते । मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे । बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः । पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने । ग्रीवास्कन्धोरसां वृद्धिरस्यैवोपजायते । मुखञ्च पद्मप्रतिमं सुगन्धिश्वसमीरणम् । गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् । राजार्हमेतत्कर्त्तव्यं राज्ञामेव विचक्षणैः ।”

**गन्धत्वच** न० गन्धप्रधाना त्वक् यस्य । १एलवालुके राजनि०

**गन्धदला** स्त्री गन्धयुक्तं दलं यस्याः । १अजमोदायाम् राजनि०

**गन्धदारु** न० गन्धप्रधानं दारु । चन्दने मलयजे हेमच० । तस्य दारुत्वेऽपि गन्धस्यात्प्राधान्यम् । [स्याढ्यद्रव्यमात्रे च

**गन्धद्रव्य** न० गन्धप्रधानं द्रव्यम् । १नागकेशरे त्रिका० । २गन्ध-

**गन्धद्विप** पु० गन्धप्रधानो मदगन्धाढ्यः द्विपः । मदगन्धाढ्ये हस्तिनि । “गन्धद्विपे मध्य इव द्विरेफाः” “स्यणो गन्धद्विपस्येव गन्धमिभाः प्रत्यनिन” रघुः । “गन्धद्विपस्येव मतङ्गजेन” किरा० । गन्धगजादयोऽप्यत्र ।

**गन्धधारिन्** त्रि० गन्ध गन्धयुक्तं द्रव्यं धारयति धारि-णिनि । १गन्धद्रव्यधारिणि स्त्रियां ङीप् । २महादेवे पु० । “कृतञ्च वसुदेवश्च गन्धधारी कपर्द्यपि” भा० अनु० १७अ० शिवनामोक्तौ ।

**गन्धधूमज** पु० गन्धस्य गन्धाढ्यस्य धूमात् जायते जन-ड । स्यादुनामगन्धद्रव्ये राजनि० ।

**गन्धधूलि** स्त्री गन्धाय धूलिरिव पूर्णोऽस्याः । कस्तूर्य्यां हेमच० ।

**गन्धन** न० गन्ध-अर्द्दने भावकरणादौ ल्युट् । १उत्साहे २प्रकाशने ३हिंसायाम् ४सूचने च मेदि० । ५तृणभेदे (गन्धतृणे) शब्दार्थचि० । “गन्धनावक्षेपणसे-वनादि” पा० । “वा गतिगन्धनयोरिति धातुः” । गातपदस्य तृणत्वे सुश्रुतः “गन्धनाकुले” सि० कौ० ।

**गन्धनकुल** पु० गन्धेन हेतुना नकुलतुल्यत्वात् नित्यात्, दुर्गन्धप्रधानो वा नकुलः । (छुँचो) छुछुन्दर्य्यां जन्तुभेदे शब्दार्थ० ।

**गन्धनाकुली** स्त्री गन्धान्विता नाकुली रास्ना । रास्नाभेदे अमरः । “नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली । नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी । नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् । भोगिलूताहविकाखुविषज्वरकृमिव्रणान्” भावप्र० ।

**गन्धनामन्** पु० गन्धेति पदयुक्तं नामास्य । १रक्ततुलस्याम् रत्नमा० २रोगभेदे स्त्री ङीप् । तल्लक्षणादि भावप्र० यथा “बाहुकक्षांसपार्श्वेषु कृष्णस्फोटां सवेदनाम् । पित्तप्रकोपसम्भूतां कक्षामिति विनिर्द्दिशेत् । एकान्तु तादृशीं दृष्ट्वा पिडकां स्फोटसन्निभाम् । त्वग्जातां पित्तकोपेन गन्धनाम्नीं प्रचक्षते । तादृशीं बाह्वादिषु कृष्णां सवेदनाम्”

**गन्धनाली** स्त्री गन्धस्य गन्धज्ञानस्य नालीव । नासिकायाम् त्रिका० । स्वार्थे क ह्रस्वः । गन्धनालिका तत्रार्थे ।

**गन्धनिलया** स्त्री गन्धस्य निलयो वासो यत्र । नवमल्लिकायाम् शब्दच० । [शटीभेदे राजनि० ।

**गन्धनिशा** स्त्री गन्धेन निशा हरिद्रेव । गन्धपलाश्यां

**गन्धप** पु० गन्धं पिबति गन्धेनैव तृप्यति पा-क । १देवभेदे “आमाशुरा गन्धपा दृष्टिपाश वाचा विरुद्धाश मनोविरुद्धा” भा० अनु० १८अ० नानादेवानां शिवस्तुतौ ।

**गन्धपत्र** पु० गन्धयुक्तं पत्रमस्य । १श्वेततुलस्यां रत्नमा० । २बर्बरके ३वर्बरे ४नागरङ्गे ५बिल्वे च राजनि० । ६शटीभेदे स्त्री टाप् “गन्धपत्रा कटुः स्वाद्वी तीक्ष्णोष्णा कफ-

वातहृत्। कासश्लेष्मार्दिज्वरान् हन्ति पित्तकोपकरी तथा" राजनि०। गौरा० ङीष्। ६अश्वगन्धायाम् ७अम्बष्ठायाम् ८अजमोदायाञ्च राजनि०। तत स्वार्थे क। गन्धपत्रिका अश्वगन्धादिषु राजनि०।

**गन्धपलाशिका** स्त्री गन्धयुत पलाशमस्याः कप् अत इत्त्वम्। हरिद्रायां हारा०। [भावप्र०।

**गन्धपलाशी** स्त्री गन्धयुक्तं पलाशं यस्याः ङीप्। शठ्याम्

**गन्धपाषाण** पु० गन्धयुक्त पाषाण इव कठिनत्वात्। गन्धके उपधातुभेदे जटाधर०। [धूमे हेमच०।

**गन्धपिशाचिका** स्त्री गन्धेन पिशाच इव उद्धगतित्वात्।

**गन्धपोता** स्त्री गन्धयुक्तं पीत पत्रं यस्याः। १शटीभेदे गन्धपत्रायाम् राजनि०।

**गन्धपुष्प** पु० गन्धयुक्त पुष्पमस्य। १वेतसवृक्षे शब्दच०। २अङ्कोटवृक्षे जटाध० ३वञ्जुलवृक्षे राजनि०। ४नील्यां ५केतकीवृक्षे ६गणिकारीवृक्षे च स्त्री टाप् राजनि०। ७पुष्पयति गन्धयुक्तवृक्षमात्रे त्रि०। गन्धसहितं पुष्पम् शा०त०। ८गन्धसहितपुष्पे न० "गन्धपुष्पैरलङ्कृतम्" रामा०२१अ०। द्वन्द्व।९गन्धपुष्पयोः द्विव०। "अभावे गन्धपुष्पाभ्यां केवलेन जलेन वा" आ०त०। [वृक्षे रत्नमा०।

**गन्धफणिज्झक** पु० गन्धप्रधान फणिज्झक। रक्ततुलसी

**गन्धफल** पु० गन्धयुक्तं फलं यस्य। १कपित्थे २बिल्वे ३तेजफलवृक्षे राजनि०। ४प्रियङ्गुवृक्षे स्त्री टाप् शब्दरत्ना०। ५मेथिकायां ६विदार्य्यां ७शल्लक्याञ्च स्त्री टाप् राजनि०। ८चम्पककलिकायां ९प्रियङ्गुवृक्षे च स्त्री अमर गौरा० ङीष्। १०आमोदयुक्तफलवति वृक्षमात्रे त्रि०।

**गन्धवणिज्** पु० गन्धस्य आमोदिद्रव्यस्य वणिक्। (गन्धवेणे) सङ्कीर्णजातिभेदे "अम्बष्ठात् राजपुत्र्याञ्च जातो गन्धवणिक् स्मृत" ब्रह्मवै०। नवशाखशब्दे विवृतिः। वणिक्शब्दस्य शब्दादित्वात् शब्दकल्पद्रुमे तन्मूलतया शब्दस्तोमे च अयथास्थाने लिखन प्रामादिकम्।

**गन्धबन्धु** पु० गन्धं बध्नाति बन्ध–उण्। आम्रवृक्षे शब्दर०

**गन्धबहुला** स्त्री गन्धोबहुलोऽत्र। १गोरक्षीवृक्षे राजनि०।

**गन्धभद्रा** स्त्री गन्धेन वेधमात्रसेवनेन भद्र यस्याः ५ब०। (गन्धभादाल) लताभेदे शब्दच०। [शब्दर०।

**गन्धभाण्ड** पु० गन्धस्य भाण्ड इव। (गन्धभादाल) लताभेदे

**गन्धमांसी** स्त्री गन्धप्रधाना मांसी। जटामांसीभेदे राजनि०

**गन्धमाता** स्त्री गन्धस्य मातेव उत्पादकत्वात्। क्षितौ हेमच० "तत्र क्षितिर्गन्धहेतुः" इत्युक्तेस्तस्यास्तदुत्पादकत्वम्।

**गन्धमाद** पु० १रामसैन्यस्थवानरभेदे। "सुग्रीवलक्ष्मणमरुत्सुतगन्धमादनीलाङ्गदर्क्षपनसादिभिरन्वितोऽगात्" भाग० ९।१०।१९। "गान्दिन्यास्तु श्वफल्कत अक्रूरप्रमुखा आसन्" इत्युपक्रमे "शत्रुघ्नो गन्धमादश्चेति" भाग० ९।१४।९०। उक्ते २अक्रूरभ्रातरि च।

**गन्धमादन** पु न० गन्धेन मादयति मादि–ल्यु। १पर्वतभेदे स च पर्वतः रोमकपत्तनात् उदक्, नीलनिषधपर्य्यन्तदीर्घः तस्य जलधेश्च मध्ये केतुमालं वर्षम्। एवं निषधनीलमाल्यवद्गन्धमादनैरावृतमिलावृत नवम वर्षम् मूलयाक्यमिलावृतशब्दे ९८९ पृ० दृश्यम्। "गन्धमादनशृङ्गेषु पुरथः सह राघवैः"। "गन्धमादनपार्श्वे तु परेत्वपरगण्डिकाः" भा० भी० ६अ०। "ततः किंपुरुषावासं सिद्धचारणसेवितम्। ददृशुर्हृष्टरोमाणः पर्वत गन्धमादनम्" भा० व० १५८ अ०। "तथैवापरेण पूर्वेण च माल्यवद्गन्धमादनौ नीलनिषधायतौ" भाग०५।१६।१०२। एवं सर्वत्र पुंस्त्वम् क्वचित् क्लीवत्वमपि। "यस्य चोपवनं बाह्यं गन्धवत् गन्धमादनम्" कुमा०। "अत्र गन्धवत्गन्धमादनम्" इति आगन्तुक पाठ। प्राचीनपाठस्तु "सुगन्धिर्गन्धमादन" इति पुंलिङ्गान्त। अतएव क्षीरस्वामिना "गन्धमादनमन्ये चेत्यत्र गन्धेन मादयतीति गन्धमादन" इति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यत इत्याशयेनोक्त "सुगन्धिर्गन्धमादन इति" कालिदास इति" मल्लिना०। स च मेरोर्दक्षिणस्थविष्कम्भरूप यथाह विष्णुपु० "इलावृतमतुलस्य "चत्वार उपपर्वताः"। "विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः। पूर्वेण मन्दरो नाम दक्षिणे गन्धमादन। विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे स्मृतः"। तत्र च केतुवृक्षो जम्बुः। यथाह तत्रैव "कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च" तत्र वन नन्दन, चैत्ररथ, गन्धमादनाख्य, वा कल्पभेदात् व्यवस्थित तत्र विष्णु पु०० "वन चैत्ररथ पूर्वे दक्षिणे गन्धमादनम्। वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम्" इत्युक्ते गन्धमादनाख्यवनवत्त्व तस्य। "तान् विष्कम्भान् गिरीनुपक्रम्य" भाग० ५।१६। देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति"। चैत्ररथवनवत्तोक्ता। सि०शि० "वनं तथा चैत्ररथं विचित्रं तेष्वप्सरोनन्दननन्दनञ्च। इत्याह्वय यत्र विहृत् सुराणां भ्राजिष्णु वैभ्राजमिति प्रसिद्धम्" इत्युक्ते नन्दनवनवत्त्वम्।

द्रव्यगणे चतुर्विकल्पेन भिद्यमानानाम्। अष्टादश जायन्ते शतानि सहितानि नियुत्या। षण्णवतिभेदभिन्नचतुर्विकल्पो गणो यतस्तस्मात्। षण्णवतिगुणं कार्यं सा सङ्ख्या भवति गन्धानाम्। पूर्वेण पूर्वेण गतेन युक्तं स्थानं विनान्त्यं प्रवदन्ति सङ्ख्याम्। इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः। द्वित्रीन्द्रियाष्टभागैरगुरुः पत्रं तुरुष्कशैलेयौ। विषयाष्टपक्षदहना प्रियङ्गुमुस्तारसा केशः। स्पृक्कात्वक्तगराणां मांसीच कृतैकसप्तषड्भागा। सप्तर्तुवेदचन्द्रैर्मलयनखश्रीककुन्दरुकाः। षोडशके कच्छपुटे यथा तथा मिश्रिते चतुर्द्रव्यैः। येऽत्राष्टादशभागास्तेऽस्मिन् गन्धादयो योगाः। नखतगरतुरुष्कयुता जातीकर्पूरमृगकृतोद्बोधाः। गुडनखधूप्या गन्धाः कर्तव्याः सर्वतोभद्राः। जातीफलमृगकर्पूरबोधितैः सहकारमधुसिक्तैः। बहुशोऽत्र पारिजाताश्चतुर्भिरिच्छापरिगृहीतैः। सर्जरसश्रीवासकसमन्विता येऽत्र धूपयोगास्तैः। श्रीसर्जरसवियुक्तैः स्नानानि समांसकत्वग्भिः। लोध्रोशीरनतागुरुमुस्तापत्रप्रियङ्गुवनपथ्याः। नवकोष्ठात्कच्छपुटाद्‌द्रव्यत्रितयं समुद्धृत्य। चन्दनतुरुष्कभागौ शुक्त्यर्धं पादिका तु शतपुष्पा। कटुहिङ्गुलगुडधूप्याः केसरगन्धाश्चतुर्भिरिति। अभ्यङ्ग गोमूत्रे हरीतकीचूर्णसंयुते क्षिप्त्वा। गन्धोदके च भूयो विनिक्षिपेद्दन्तकाष्ठानि। एलात्वक्पत्राञ्जनमधुमरिचैर्नागपुष्पकुष्ठैश्च। गन्धाम्भः कर्तव्यं कञ्चित्कालं स्थितान्यस्मिन्। जातीफलपत्रैलाकर्पूरैः कृतयमैकशिखिभागैः। अवचूर्णितानि भानोर्मरीचिभिः शोषणीयानि। वर्णप्रसादं वदनस्य कान्तिं वैशद्यमास्यस्य सुगन्धितां च। संसेवितुः श्रोत्रसुखां च वाचं कुर्वन्ति काष्ठान्यसकृद्गुणानाम्। कामं प्रदीपयति रूपमभिव्यनक्ति सौभाग्यमावहति वक्त्रसुगन्धितां च। ऊर्जं करोति कफजांश्च निहन्ति रोगांस्ताम्बूलमेवमपरांश्च गुणान् करोति। युक्तेन चूर्णेन करोति रागं रागक्षयं पूगफलातिरिक्तम्। चूर्णाधिकं वक्त्रविगन्धकारि पत्राधिकं साधु करोति गन्धम्। पत्राधिकं निशि हितं सफलं दिवा च प्रोक्तान्यथाकरणमस्य विडम्बनैव। कक्कोलपूगलवलीफलपारिजातैरामोदितं मदमुदावदितं करोति” “वेश्यजनप्रियरागगन्धयुक्तिविदः” वृ०स०।

गन्धरस पु० गन्धयुक्तो रसोऽस्य। १बोले। (फुलवस्) ख्याते उपधातुभेदे। गन्धश्च रसश्च द्व०। २आमोदरसयोः द्वि०। “अन्नपानं गन्धरसोपपन्नम् (अन्नम्)” भा०उ० २६अ० “शीतस्यान्नतकल्पस्य दिव्यगन्धरसस्य च” भा०भी०१२२अ०।

गन्धरसाङ्गक पु० गन्धरसो अङ्गे यस्य कप्। श्रीवेष्टनाख्यगन्धद्रव्ये राजनि०।

गन्धराज पु० गन्धानां गन्धयुक्तानां राजा टच् समा०। १स्वनामख्याते पुष्पप्रधाने वृक्षे २मुद्गरवृक्षे ३कणगुग्गुलौ च राजनि०। गन्धेन राजते राज–अच्। ४जवादिनामगन्धद्रव्ये पु० ५गन्धद्रव्यमात्रे त्रि० ६चन्दने न० राजनि०। ७नखीनामगन्धद्रव्ये स्त्री ङीप् शब्दचन्द्रिका।

गन्धर्व्व पु० गन्धमामोदमर्वति अर्व–अच् ६त० शक०, गां स्तुतिरूपां गीतिरूपां वा वाचः रश्मीन् वा धारयति धृ–व गोर्गमादेशो वा। १घोटके २मृगभेदे कस्तूरीमृगे ३अन्तराभवसत्त्वे च अमरः। अन्तराभवसत्त्वस्तु जन्ममरणयोर्मध्यभवः यातनाशरीरवान्, शुभमात्री वा। “गन्धर्वा पतयो मम” भा०वि०१०अ०। सैरिन्ध्रीरूपद्रौपदीवाक्यम्। अन्तराभवश्च सत्त्वान्तरमध्ये आवेशकारी सत्त्वभेद इत्येव युक्तम्। स च सुश्रुते दर्शितो यथा “अथातोऽमानुषप्रतिषेधीयं व्याख्यास्यामः” इत्युपक्रमे “देवास्तथा शत्रुगणाश्च तेषां गन्धर्वयक्षाः पितरो भुजङ्गाः। रक्षांसि या चापि पिशाचजातिरेषोऽष्टधा देवगणो ग्रहाख्यः” इत्यष्टधा विभज्य। “हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः। नृत्यन् वा प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीडितो मनुष्यः” इति तदुपलक्षणमुक्तम्। “ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता” शत०ब्रा० १४।६।३।१। “गन्धर्वेणामानुषेण गृहीता आविष्टा” भा०। ४एरण्डे भावप्र० “गन्धर्वतैलसिद्धां हरितकीं गोऽम्बुना पिबेत्” अस्य व्याख्यायां “गन्धर्वतैलमेरण्डतैलम्” तदुक्तेः तस्य च गन्धर्वरूपघ्नभेदपादतुल्यपत्रकत्वात्तथात्वम्। ५गायनमात्रे त्रि० मेदि०। ६देवगायने देवयोनिभेदे पु० अमरः। तत्रार्थे “रथं संयोजयामासुर्गन्धर्वैर्हेममालिभिः” भा०व०१६१अ०। “गाव रश्मय उदकानि वा धारयति गवि उपपदे धृ–व गोर्गमादेशः इति ता० ब्रा० भाष्ये माधवोक्तेः ७रश्मिधारके सोमादित्यादौ। “गन्धर्वोऽस्य रशनामगृभ्णात्” ऋ० १,१६३,२, “गन्धर्वः सोमः” भा०। “अद्भ्यो गन्धर्वो अभि नाके अस्थात्” ऋ० ९,८५,१२। “गन्धर्वो रश्मीनां धारकः” भा०। “गन्धर्व इत्था पदमस्य रक्षति” ९,८३,४। “गन्धर्व. अप्सुमा

स्तुतीनां वा धारकः आदित्यः" भा० "गतकल्पतरङ्गरङ्ग गन्धर्वमस्तुतम्" ऋ० ८,१,११। "गन्धर्वः गवां रश्मीनां धर्त्तारं सूर्यम्" भा० "दिव्यो गन्धर्वः केतपूः" यजु० ११, ७, "गां वाचं स्तुतिरूपाम् धारयतीति गन्धर्वः सविता" वेददी०। गायने। "विश्वावसुरभि तन्नो गृणातु दिव्यो गन्धर्वः" ऋ० १०,१३९५ दिव्य इति विशेषणात् गायनमात्रपरत्वम्। अत एव शब्दार्थचि० "अस्मिन् कल्पे मनुष्यः सन् पुण्यपाकविशेषतः। गन्धर्वत्वं समापन्नो मर्त्यगन्धर्व उच्यते। पूर्वकल्पकृतात् पुण्यात् कल्पादावेव चेद्भवेत्। गन्धर्वत्वं, तादृशोऽसौ दिव्यगन्धर्व उच्यते" इति गायनरूपगन्धर्वाभिप्रायेण द्वैविध्यमुक्तम्। देवयोनिगन्धर्वास्तु वह्निपुराणे एकादशविधा उक्ता यथा "अभ्राजोऽङ्घारिबम्भारी सूर्यवर्चास्तथा कृशुः। हस्तः सुहस्तः स्वाम्येव मूर्द्धन्वांश्च महामनाः। विश्वावसुः कृशानुश्च गन्धर्वैकादशो गणः"। जटाधरेण तन्नामान्यप्युक्तानि यथा "हाहा हूहूश्चित्ररथो हंसो विश्वावसुस्तथा। गोमायुस्तुम्बुरुर्नन्दिरेवमाद्यास्ते स्मृताः"। देवगन्धर्वाश्च द्विविधा केचित् मौनेयाः केचित् प्राधेयाश्च तत्र मौनेया कश्यपपत्न्यां दक्षसुतायां मुनिनामिकायां जाताः षोडश, प्राधेयाश्च प्राधायां तत्पत्न्यां जाता दश इत्येव भा० आ० ६५ अ० उक्ता यथा "भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा। गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः। सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः। भीमश्चित्ररथश्चैव विख्यातः सर्ववित् वशी। तथा शालिशिरा राजन् पर्जन्यश्च चतुर्दशः। कलिः पञ्चदशस्तेषां नारदश्चैव षोडशः। इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिताः। अथ प्रभूतान्यन्यानि कीर्त्तयिष्यामि भारत!। अनवद्यां मनुं वंशामसुरां मार्गणप्रियाम्। अनूपां सुभगां भासीमिति प्राधा व्यजायत। सिद्धः पूर्णश्च बर्ही च पूर्णायुश्च महायशाः। ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः। विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा। इत्येते देवगन्धर्वाः प्राधेयाः परिकीर्त्तिताः" स्वारोचिषमन्वन्तरे तु गन्धर्वा अरिष्टायाः सुताः यथा हरिवं० ३अ०। "अरिष्टा तु महासत्त्वान् गन्धर्वानमितौजसः" इत्युक्त्वा "एवं मन्वन्तरे तात! सर्गः स्वारोचिषे स्मृतः"। जातिपरत्वे स्त्रियां ङीष्। "नैव देवी न गन्धर्वी न यक्षी न च किन्नरी" रामा० आर० ८३ अ०। पत्न्यामपि ङीष् "गन्धर्वी सुरका यथा विश्वभानुश्चराश्च ये। नवैताप्सरसः सर्वा राजसेन्द्रसमा गतिः"। "दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम्" मनुः। ८द्वीपभेदे पु० "भारतस्यास्य वर्षस्य नव भेदान्निशामय। इन्द्रद्वीपः कशेरुश्च ताम्रपर्णो गभस्तिमान्। नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः। अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः"। गन्धर्वो देवताऽस्य अण्। गान्धर्व अस्त्रभेदे "संमोहनं नाम सखे! ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम्। गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते" रघु। विवाहभेदे च "गान्धर्वः समयान्मिथः" मनुः।

**गन्धर्वनगर** न० अनिष्टसूचके आकाशोत्थिते ह० सं० उक्ते १पुरे अपुरगन्धे विहति तस्य कालभेदे विपाक ह० सं० ३७अ० उक्तो यथा। "गन्धर्वपुर नाशाय रक्तैकर्म हिरण्यविकृतिव"। हेम०। २गन्धर्वाणां नगरे च। "ततो नामसभामाद्य हाटकामित प्रभु। गन्धर्वरक्षितं देशमजयत् पाण्डवस्ततः। तत्र तित्तिरिकल्माषान् मण्डूकाख्यान् हयोत्तमान् लेभे स करमत्यन्तं गन्धर्वनगरात्तदा" भा० स० २७ अ०। अर्जुनोत्तरदिग्विजयोक्तौ। गन्धर्वपुरादयोऽप्यत्र।

**गन्धर्ववधू** स्त्री गन्धर्वस्य वधूरिव प्रियत्वात्।।चण्डां २चीडानामगन्धद्रव्ये च राजनि०।

**गन्धर्वलोक** पु० ६त०। गुह्यकलोकोपरिस्थे विद्याधरलोकस्याधोनिविष्टे स्थाने। तत्स्थानकथा तत्प्राप्तिपुण्यानि च गुह्यकलोकोक्त्यनन्तरं काशीख०दर्शितानि यथा।

"गान्धर्वस्त्वेष लोकोऽसौ गन्धर्वाश्च शुभप्रदाः। देवानां गायना ह्येते चारणाः स्तुतिपाठकाः। गीतज्ञा अभिगीतेन तोषयन्ति नराधिपान्। स्तुवन्ति च धनाढ्यांश्च धनलोभेन मोहिताः। राज्ञां प्रसादलब्धानि सुवासांसि धनान्यपि। द्रव्याण्यपि सुगन्धीनि कर्पूरादीन्यनेकशः। ब्राह्मणेभ्यः प्रयच्छन्ति गीतिं गायन्त्यहर्निशम्। सुतानेव ममैषां नाट्यशास्त्रे कृतश्रमाः। तेन पुण्येन गन्धर्वलोकस्त्वेषां विधीयते। ब्राह्मणालोचिता यद्वै गीतिविद्यार्जितैर्धनैः। गीतविद्याप्रभावेन देवर्षिर्नारदो महान्। मान्यो वैष्णवलोके वै श्रीशम्भोश्चातिवल्लभः। तुम्बुरुर्नारदश्चोभौ देवानामपि दुर्लभौ। नादरूपी शिवः साक्षान्नादविद्याविदां हितः। यदि गीतं क्वचिद्गीतं श्रीमद्धरिहरात्मकम्। मोक्षन्तु तत्फलं प्राहुः सान्निध्यमथवा तयोः।

गीतज्ञो यदि गीतेन नाप्नोति परमं पदम्। रुद्रस्यानुचरोभूत्वा तेनैव सह मोदते। अनिलोके सदा काल स्तिरेषा प्रगीयते। तद्गीतमालया पूज्यौ देवौ हरिहरौ सदा। इति श्रुण्वन् क्षणात् प्राप पुरमन्यन्मनोहरम्। प्रियव्रतोथ पप्रच्छ किंसंज्ञं नगरन्त्विदम्। गणानूचतु:। असौ विद्याधरो लोको नानाविद्याविशारदाः।"

**गन्धर्वविद्या** स्त्री ६त०। सङ्गीतविद्यायाम्। [वेदशब्दे दृश्य०।

**गन्धर्ववेद** पु०६त०। सामवेदस्योपवेदे सङ्गीतमूलग्रन्थे उप-

**गन्धर्वहस्त** पु० गन्धर्वस्य मृगभेदस्य हस्त पाद इव पत्रमस्य। एरण्डवृक्षे हारा०। कप्। तत्रार्थे अमर०। सुश्रुतेन तत्पत्राङ्कुरयोरुत्पत्तिरभिहिता यथा "गन्धर्वहस्तकसुष्ककणक्षपाकाटष्ट्रकपूतीकारगव्याचित्रपट्टीना पत्राण्याद्रीणि लवणेन सहोदूखलेऽवक्षुद्य स्नेहघटे प्रक्षिप्यावलिप्य गोमयाद्भिर्दाहयेदेतद्रुपलवणमुपदिशन्ति वातरोगेषु"।

**गन्धलता** स्त्री गन्धान्विता लता। प्रियङ्गौ शब्दार्थचि०।

**गन्धलोलुप** त्रि०७त०। गन्धलोभातिशयवत्यां मधुमक्षिकायां शब्दर०।

**गन्धवत्** त्रि० गन्धो विद्यतेऽस्य मतुप् मस्य वः। १गन्धयुक्ते "गन्धवद्रुधिरचन्दनोक्षिता" रघु। स्त्रियां ङीप्। सा च २पृथिव्याम् ३मत्स्यगन्धाया सत्यवत्याम् ४व्यासमातरि तस्याश्च तन्नामत्वप्राप्तिः भा० भी०६३अ० उक्ता यथा

"एवमुक्ता वर वव्रे गात्रसौगन्ध्यमुत्तमम्। स चास्यै भगवान् प्रादात् मनस काङ्क्षितं भुवि। ततोलब्धवरा प्रीता स्त्रीभावगुणभूषिता। जगाम सह संसर्गमृषिणाऽद्भुतकर्मणा। तेन गन्धवतीत्येव नामास्याः प्रथित भुवि। तस्यास्तु योजनाद्गन्धमाजिघ्रन् यन्नरा भुवि। तस्या योजनगन्धेति ततो नामापरं स्मृतम्। इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम्। पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा। जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान्।"

५सुरायां मेदि० ६नवमल्लिकायां रत्नमा० ७सुरानामगन्धद्रव्ये जटा०।८वायुपुर्य्याञ्च यथाह स्कन्दे उक्ता यथा "वायोर्गन्धवतीं तद्वच्छ्वेतपीतध्वजां शृणु। बलवद्भूतसंजुष्टां सर्वरत्नविनिर्मिताम्"। काशीख०१२अ०। "इमां गन्धवतीं रम्यां पुरीं वायोर्विलोकय। वारुण्या उत्तरे भागे महाभाग्यनिधे! द्विज!" इति गन्धवतीपुर्य्याः स्वरूपं ते निरूपितम्। तस्याः प्राच्यां कुबेरस्य अलकेत्यभिधा पुरी"। तदुत्तराध्याये। मेदिनिकोषे "अथ गन्धवती पृथ्वी सुरीभिद्व्यासमातरीति" सुरीभेदार्थकतामात्रोक्तिः शब्दकल्पद्रुमे तन्मूलकशब्दस्तोमे च वरुण पुरीपरत्वकथनं प्रामादिकमेव। वरुणपुर्य्यास्तु निम्लोचनीति नाम यथोक्तं भाग० ५।२०।१०। यथा "तस्यामैन्द्रीं पूर्वस्मान्मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमनी नाम पश्चाद्वारुणीं निम्लोचनी नाम उत्तरतः सौम्यां विभावरीं नाम"

**गन्धवल्कल** न० गन्धो वल्कलेऽस्य। (दारचिनि) त्वचे। राजनि०। [गन्धवल्लीत्यप्यत्र राजनि०।

**गन्धवल्लरी** स्त्री गन्धान्विता वल्लरी। सहदेवीलतायाम्

**गन्धवह** पु० गन्ध वहति वह—अच् ६त०। १वायौ अमरः "आघ्रायि वान् गन्धवहः सुगन्ध" भट्टिः "दिग्दक्षिणा गन्धवहं मुखेन" कुमा०। २गन्धयुक्ते नायकभेदे पु०। "नवलता गन्धवहेन चुम्बिता" नैष०। अत्र नायिकापक्षे गन्धवहशब्दस्य नायकभेदपरत्वम्। ३गन्धधारिमात्रे त्रि०। "आकाशात्तु विकुर्वाणात् सर्वगन्धवहः शुचि। बलवान् जायते वायुः स वै स्पर्शगुणो मत" मनु। "वायुर्गन्धवह" भाग० २।१०।२०। ४नासिकायां स्त्री अमर०।

**गन्धवहल** गन्ध वहति वह—बा०कलच् गन्धो बहुलोऽस्य वा। १सिताजकृष्णे २श्वेततुलस्याञ्च राजनि०। [जवे।

**गन्धवारि** न० गन्धद्रव्यवासितं वारि। सुगन्धिद्रव्यवासिते

**गन्धवाह** पु० गन्धं वहति वह—अण् उप०स०। १वायौ। अमर०। "प्रसरदवसथायप्राप्यवद्गन्धवाह" गीतगो०। २कस्तूरीमृगे हेमच०। ३नासिकायां स्त्री ङीप् हेमच०

**गन्धविह्वल**पु० गन्धेन विह्वलयति वि+ह्वल—णिच्—अच्। गोधूमे शब्दच०। [राजनि०।

**गन्धवीजा** स्त्री स्त्री गन्धो वीजे यस्याः। मेथिकायाम्।

**गन्धवृक्षक** पु० गन्धप्रधानो वृक्षः संज्ञायां कन्। १शालवृक्षे राजनि०। [अच्। १कक्कोले। शब्दच०।

**गन्धव्याकुल** पु न० गन्धेन व्याकुलयति वि+आ+कुल—णिच्-

**गन्धशटी** स्त्री गन्धप्रधाना शटी शा० त०। शट्याम् शब्दच०

**गन्धशाक** न० गन्धप्रधान शाकम् शा०त०। गौरसुवर्णशाके राजनि०।

**गन्धशालि** पु० गन्धप्रधानः शालि०। आमोदवति धान्यभेदे (वासमती) प्रसिद्धे सुगन्धके शालौ। "गन्धशालिः समधुरो हृद्य' पित्तघ्नमारुत्। आयुर्विदाहशमन स्त्यगर्भस्थिरत्वकृत्। ईषद्वातप्रशमनः स्वल्पकफवल-

न्धिदां ङीप्। "गात्र सुरभिगन्धिम्यमया सुगुगुगन्ध-य" भा० आनु० ७८अ०। सा च २मुरानामगन्धद्रव्ये अमर। [गन्धिपत्त्रादयोऽप्यत्र।

गन्धिपर्ण पु० गन्धि गन्धयुक्तं पर्णमस्य। सप्तच्छदे राजनि०।

गन्धेन्द्रिय न० गन्धग्राहकमिन्द्रियम् शा० त०। घ्राणेन्द्रिये तच्च पृथिव्या गोगृप्यन्नम् "पार्थिवो गन्धो गन्धेन्द्रिय सर्वमूर्त्तिसमूहो गुरुता चेति" सुश्रुत। तस्य यथा पार्थिवता तथा मुक्तावल्यां समर्थितं यथा

"घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धव्यञ्जकघृतवत् न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् न च नवशरावगन्धव्यञ्जकजले-नानैकान्तमिति वाच्यं तस्य शक्तुरसाभिव्यञ्जकत्वात् यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टान्तत्व-सम्भवात् न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं द्रव्यत्वे सति इति विशेषणात्।" अधिकमिन्द्रियशब्दे उक्तम्। [जन्तुभेदे त्रिका०।

गन्धो(न्धो)तु पु० गन्धप्रधान ओतु वा इद्वि। खट्टासे

गन्धोत्कटा स्त्री गन्धेन उत्कटा उग्रा। दमनकवृक्षे राजनि०

गन्धोत्तमा स्त्री गन्धेन उत्तमा उत्कृष्टा। मदिरायाम् अमर

गन्धोद न० गन्धवासितमुदकम् शा० त० वा उदादेश। गन्धद्रव्य वासितजले "आसिञ्चमानं गन्धोदे" भाग० ८।११।१८। उदादेशाभावे गन्धोदकमप्यत्र गन्धयुक्तिशब्दे उदा०।

गन्धोपजीविन् पु० गन्धं गन्धद्रव्यमुपजीवति उप+जीव-णिनि। गन्धवणिजि। "दन्तकारा सुधकारा ये च गन्धोपजीविनः" रामा० अयो० ८३॥ अ०।

गन्धोलि(ली) स्त्री गन्ध-ओलि-न। ङीप्। वराम्। शोवम। २भद्रशालायाम् मेदि०।

गन्धोली स्त्री गन्ध-अर्दने वा० ओलच् गौरा० ङीष्। वरटायां (बोलता) अमर।

गभ न० भग+पृषो० वर्णविपर्ययः। भगे। "आहन्ति गभे पसो निगल्गलीति धारका" यजु० २३।२२ "गभे भगे वर्णविपर्ययः" वेददी० "गभे मुष्टिमतंसयत्" २३।४।२४ "आहन्ति गभे पसो निगल्गलीति धारके" शत० ब्रा० १३।२।८।६।

गभस्ति पु० गम्यते ज्ञायते गम-ड गः विषयस्तं बभस्ति भासयति भस-क्तिच्। १किरणे, २सूर्ये च। ३स्वा-हायां वह्निपत्न्यां स्त्री मेदि० वा ङीप्। "यथा

राजन्! स्रतौ सदां सूर्यं पाति गभस्तिभिः" भा० व० १२२अ०। "भिन्नवदनमलिनमयगभस्तिभिः सुख-यति" भाग० ५।८।२७। "गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोः" भट्टि०। ४अङ्गुलीषु स०प० ५बाहौ द्विप० निघण्टु। "इन्द्र करन्ना वहुला गभस्ती" ऋ० ६।१८।९। "भगस्ती बाहू" भा०। "आ रश्मयो गभस्त्यो सूरयो" २८।२। "गभस्त्यो बाह्वो" भा० ६पाणौ च "पाणी वै गभस्ती पाणिभ्यां ह्येनं पावयति" गभस्तिपूतनिरुक्तौ शत०ब्रा० ४।१।१।९। "हस्तोऽशुभ्यां गभस्तिपूत" यजु० ७।१। "गभस्तिभ्यां पाणिभ्यां पूत" वेददी०।

गभस्तिनेमि पु० गभस्तय एव चक्रं तस्य नेमिरिव। गभ-स्तिरूपचक्रमध्यस्थस्य सूर्यात्मनो नेमितुल्ये परमेश्वरे। "गभस्तिनेमिः सत्वस्थः" विष्णु स०। "गभस्तिनेमि श्रीपद्म" भा० शा० १२अ० विष्णुस्तुति।

गभस्तिपाणि पु० गभस्तिः पाणिरिवास्य रसाकर्षणाय। सूर्ये हेमच०। गभस्तिकरादयोऽप्यत्र। गभस्तिहस्तशब्दे दृश्यम्।

गभस्तिमत् पु० गभस्तयो भूम्ना सन्त्यस्य मतुप्। सूर्ये शब्द-रत्ना०। तस्य सहस्रकिरणत्वात्तथात्वम्। "पनव्यपायेन गभस्तिमानिव" रघु गभस्तयो नित्यं सन्त्यत्र नित्ययोगे मतुप्। २पातालभेदे न० शब्दर०। "आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः। दिवार्करश्मयो यत्र प्रभा तन्वन्ति नातपम्। शशिनश्च न शीताय निशि द्यो-ताय केवलम्" विष्णुपुराणोक्ते तस्य सर्वदा मण्यादि-दीप्तिमत्त्वात् तथात्वम् ३द्वीपभेदे पु० गन्धर्वशब्दे दृश्यम्।

गभस्तिहस्त पु० गभस्तयो हस्ता इव जलाकर्षणाय यस्य। सूर्ये त्रिका०। "सूर्यं किरणजालेन वायुयुक्तेन सर्वतः, जगतो जलमादत्ते कृत्स्नस्य द्विजसत्तम!" विष्णु पु० उक्तेस्तस्य किरणद्वारा जलाकर्षकत्वात् तत्किरणानां तस्य हस्ततुल्यत्वम्। [ "मेतद्व्यमह मदम्" काशीख०।

गभस्तीश पु० काशीस्थे लिङ्गभेदे "गभस्तीशो महालिङ्ग-

गभि त्रि० गच्छति नीरमत्र गम-आधारे इन् भगान्तादेश। गभीरे। "गभौ सज्जते सनुज-क्विप् गभिषक् गभीरस्था-यिनि। "तेषां हि धाम गभिषक् समुद्रियम्" ऋ० ७।७॥

गभीका स्त्री गभीरे कायति कै-क पृषो० रलोप। (गाभार) वृक्षभेदे तस्याः फलम् अण् हरितक्या० तस्य लुप् तद्धित लुपि स्त्रीत्वविधानात्। गभीका तत्फलं स्त्री।

**गभीर** त्रि० गच्छति जलमत्र गम–ईरन् भान्तादेशश्च । १निम्नस्थाने, २अतलस्पर्शे, ३मन्द्रे ध्वनौ च अमरः । ४गहने, ५दुष्प्रवेशे, ६दुर्बोधे च उणादिकोषः । "जीर्णा तरिः सरिदतीव गभीरनीरा" उद्भट "न त्वां गभीर सुहृत्स्व ! सिन्धु" ऋ० १।२२।६ । "न तं गूहन्ति स्रवतो गभीरा" ऋ० १०।१०८।४ ॥ ७शाचि स्त्री निघण्टुः । द्यावापृथिव्योः रोदस्योः स्त्री द्वि० निघण्टुः ।

**गभीरात्मन्** पु० गभीर दुर्ज्ञेय आत्मा स्वरूपमस्य । परमेश्वरे । "चतुरस्रो गभीरात्मा" विष्णु स० । "आत्मा स्वरूपं चित्तं वा गभीरं परिच्छेत्तुमशक्यमस्य गभीरात्मा" भा० । [उच्चट्टाख्यायाम् शब्दरत्ना० ।

**गभीरिका** स्त्री गभीरा मन्द्रध्वनियुक्ता स्वार्थे कन् ।

**गभोलिक** पु० अव्युत्पन्नप्रातिपदिकम् । मस्तरे त्रिका० ।

**गम** गतौ भ्वा० पर० अनिट् । गच्छति लृदित् अगमत् जगाम जग्मतुः । गन्ता गम्यात् गमिष्यति । गन्ता गमो गम्यः गन्तव्यः गमनीयः गच्छन् गत गत गतिः गन्तुम् गत्वा आगत्य । छुदयक्रम । जग्मिवान् । कर्मणि गम्यते अगामि गम्यमान । णिच् । गमयति ते अजीगमत् ते । सन् जिगमिषति संजिगांसते । यङ् जङ्गम्यते । यङ्लुक् जङ्गमीति जङ्गन्ति । जङ्गमम् । "नीदीयानपि गच्छति" माघ "गच्छति पुरः शरीरम्" शकु० "तेन गच्छन् न रिष्यति" मनुः । "न गच्छस्यापतो गच्छेत्" हितो० । "जगाम गहनं वनम्" देवीमा० । "तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः" कुमा० । "गत तिरश्चीनमनूरुसारथेः" माघः । "क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा" रघु । "अगम्यां च स्त्रियं गत्वा" स्मृति ।

अच्छ+आभिमुख्ये गच्छगत्य अभिमुख्य गत्वा ।

अति+अतिक्रम्य उल्लङ्घ्य वा गमने । "ततो दशाहेऽतिगते कृतशौचो नृपात्मजः" रामा० अयो० ७७।१ । "चिन्तामतिजगाम ह" भा० शल्य०४७ अ० । अतिक्रमार्थे नास्य गतित्वम् अतिगत्य ।

वि+अति+विशेषेणातिक्रम्य गतौ "कथमर्जुन ! कालोयम् स्वर्गे व्यतिगमस्तव" भा० व० १६७ अ० ।

अधि+प्राप्तौ । "अधिगत्य जगत्यधीश्वरात्" नैष० । यथा "धनन्तु अनित्येष नरो गार्ह्यमधिगच्छति" मनु । "विशेषं नाधिगच्छामि निर्वेदमुपायतस्य च" भा० शा० २२६ श्लो० । "वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च" याज्ञ० ।

सम्+अधि+सम्यक् प्राप्तौ । "यत्र समधिगच्छन्ति यच्चैते तेष्व तद्गमम्" मनुः ।

अनु+प्राप्तौ पश्चाद्गमने अनुकरणे च । "तत् पार्श्वं मतवशा भूत्वा तद्दत्तमनुगच्छति" स्मृति "श्रुतेरिवार्थं स्मृतिरन्वगच्छत्" रघु । "अनुगमनयमागोमर्णशो दुर्नयस्य" माघ ।

अन्तर्+व्यवधाने गतौ मध्यगतौ च । "भासो यस्मादन्तर्गत" गाता०भा० ११६।११ । "अन्तर्गता मदनवह्निशिखावली या" उद्भटः ।

अप+अपाये विश्लेषजनकक्रियायाम् । "सा कन्यापजगामाथ समीपात्तस्य धीमतः" भा० द्रो० ५४अ० ।

अपि+सकारलोपे प्रवेशे "अप्सु वागपिगच्छतु" अथ०२।१२।८ ।

अभि+आभिमुख्येन गतौ । "अनुरागादहमे राम दृष्ट्वा समभिगच्छति" रामा० अयो० २ स० । सम्यग्गतौ च "अभिगन्तास्मि भगिनीं मातरं वा तथेति च" याज्ञ० ।

अव+बोधे, "यदावगच्छेदायत्यामनिष्टं प्रभवात्मनः" मनु । प्राप्तौ च "कुतो युद्धं जातु नरोऽवगच्छेत्" भा० उ० ७४०श्लो० ।

आ+पश्चाद्देशविभागपूर्वकगतौ । "आगच्छ विन्ध्यपार्श्वायां चण्डिके । कुरु सन्निधिम्" दुर्गावाहनमन्त्र । "धनुषोऽभ्यासमागत्य" भा० आ०१८७अ० । "आगता यत्र जरेव हिमानी सेव्यतां सुरतरङ्गिणी" उद्भटः । बोधे "आगमो निष्फलस्तत्र भुक्तिस्तोकापि यत्र नो" । आ+गम+णिच् । प्रतीक्षायाम् आत्म० "यावदागमयतेऽथ नरेन्द्रान्" नैष० । आगमयते कालम् । "कर्मादिषु सर्वेषु अध्वर्युं समेपमागमयेत" आश्वा०श्रौ४।६।८ ।

अधि+आ+प्राप्तौ "नाध्यागमन् भूगयत्तां मा यतिरुदारधीः" भा० आ०८९अ० ।

अनु+आ+अनुगतौ सम्यग्गतौ पश्चाद्गतौ प्रत्यागतौ च "अन्वागतो यज्ञपतिर्वो अत्र" यजु०८।१९ । "अन्वागतो कर्मसमाप्तौ भवतः प्रत्यागमिष्यति" वेददी० । सम्बन्धे च । "किञ्चित् पश्चात्त्वमन्वागतः" शत० ब्रा० १४।६।१।१७ । "असमन्वागतः असम्बद्ध" भा० ।

अभि+आ+आभिमुख्येनागतौ "सर्वस्याभ्यागतो गुरुः" मनु सम्यगागतौ "क्रमादभ्यागतं द्रव्यम्" याज्ञ० । प्राप्तौ च

उप+आ+समीपागतौ "वनादाराढुपागत" रामा० । "तपोनिधिं वेत्सि न मामुपागतम्" शकु० । उपस्थितौ च । "कथमापदुपागता" भा० व०२६०अ० ।

प्रति+आ+परावृत्यागमने (गतो गतिस्तत्र पुनरागतौ) "प्र-

यात् प्रत्यागतं भूरं भार्याश्च गतयौवनाम्" भाग० ।
"प्रत्यागतश्चैव पुनस्तथैव" भा०स० ।

उद्+ऊर्द्ध्वगतौ उत्थाने अक० । "इत्युद्गता पौरवधूमु-
खेभ्यः शृण्वन् कथा" रघु० । उद्गमः । उत्क्रमस्य गतौ
च "ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति" मनुः ।

अभि+आ+आभिमुख्येनागमने । "अभ्यागतास्ता वयमद्य
सर्वे" भा०आ० ८८अ० ।

प्रति+उद्+प्रतिमुखीकृत्य उत्थाने अक० "तमागतमभिप्रेक्ष्य
प्रत्युद्गम्य परन्तपा" भा०आ० १६८अ० । (आगवाडा)
गतिभेदे सक० "प्रत्युज्जगामातिथिमातिथेय" । "प्रत्यु-
द्गतमिवानुष्णौ" "प्रत्युद्गता पार्थिवधर्मपत्न्या" रघु०
"प्रत्युज्जगामागमनप्रतीतः" कुमा० ।

उप+समीपगमने । "धन्धालसमुपगच्छन्ति सारमेया इवा-
मिषम्" "सदनमुपगतोऽहं पूर्वमम्भोजयोने" प्रबोधच० ।
"सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति" मनु० ।
प्रतिज्ञायाम् उपगम ।

अभि+उप+प्रतिज्ञायाम् स्वीकारे च । "वयमभ्युपगच्छाम
कथमेष त्वां प्रधर्षितम्" हरिव०३अ० । अभ्युपगमः ।
आभिमुख्येन समीपगतौ च "गच्छन्नभ्युपयच्छन्ति यमवैऽ-
र्धाय भाविनि !" भा०१२४अ० ।

नि+नियमेन प्राप्तौ । "हिते मित्रे निगतावू इन्ति वी-
रान्" ऋ०१०।११२।५ । "निगतान् इन्तमाय नियमेन
प्राप्तान्" भा० । णिच् । नियमेन बोधने च निगमो वेद ।
निगमकल्पतरोर्गलितं फलम्" भाग० १।१।३ । उक्ता-
र्थस्योपसंहारे च निगमनशब्दे विवृतिः ।

निर्+निष्क्रमणे । "अभिविद्धा तु या नारी निर्गच्छे-
द्रुषिता गृहात्" मनुः । विशेषेण प्राप्तौ च । "पुरुषा
प्रेप्सतामेके निर्गच्छन्ति धनार्थिनः" भा० व० ७५८अ० ।

परा+पराहत्य गमने परिगतौ च । "यद्धे मनः परागतं
यद्दद्धमिह वेह वा" अथ०७।१२।४ । "विद्यया तदा-
रोहन्ति यत्र कामाः परागताः" शत०ब्रा० १०।५।४।१६ ।
व्याप्तौ च । "स्फुटपरागपरागतपङ्कजम्" माघ ।

परि+परितो गतौ "यथा हि मेरुमंशवः(सूर्यस्य)नित्यशः
परिगच्छति" भा०व० २०४ अ० । वेष्टने च"अथ स वल्क-
दुकूलकुथादिभिः परिगतोऽज्वलदुद्धतवालधिः" भट्टिः ।

प्रति+वैपरीत्येन गतौ (यत आगतस्तत्रैव गमने) "भवतु
प्रतिगमिष्यामस्तावत्" शकु० "अधीतां योगहीनस्य विद्यां
प्रतिगतामिव" रामा०सुन्द०१८अ० ।

वि+विशेषेण गतौ विच्छेदे विगमे च । "अवनितलविगते-
भूतसंघे" भा० द्रो० १७अ० । "ततो निशा साव्यगम-
न्महात्मनाम्" भा० आश्व० ६४अ० । "श्रद्धा च नो मा-
विगमत्" मनु० । "इषिभत्तु रस्य विरहाधिगमा-
दिति सन्ध्ययापि सपदि व्यगमि" माघ ।

सम्+सङ्गे अक० आ० । "यत्र देवाः समगच्छन्त विश्वे" ऋ०
१०।८२।६ । "सङ्गच्छस्व मया सार्द्धं मैकैकेनकरायन !" भा०
अयो०१५३अ० । "जले स्थले चान्तरीक्षे गङ्गासागर-
सङ्गमे" भा०त० । "परम भगवन्नेव समभिप्ये त्वया सह"
भा० व० ३०६ अ० । "दिष्ट्या मे सङ्गतं यथा" भा०
सम्यग्गतौ पर०सक० "सङ्गच्छ यो षि ! सौधं माम्"
भट्टिः । गमे कर्मत्विषये उपपदे कर्त्तरि ख । तुरङ्गमः
हृदयङ्गम भुजङ्गम इत्यादि । उरआदिषु उपपदेषु ड ।
उरग भुजग तुरग हृद्ग अन्तग इत्यादि ।

**गम** पु० गम–यथायथं भावादौ अप् । १जिगीषोर्यात्रा-
याम्, २पथि, अमर ३द्यूतभेदे, ४गमने, च । ५अप-
र्य्यालोचिते अध्वनि मेदि० । ६सदृशपाठे हेम० ।
गम्यते कर्मणि अप् न वृद्धि । ७गम्यमाने मार्गादौ ।
"अक्षसैकाङ्गम" पा० तत्र गमने "इपसिद्धृहंसिकवटे-
विद्धि स्थान गमागमौ नरः" षट्पञ्चाशिका ।

**गमक** त्रि० गमयति गम–णिच्–ण्वुल् । १गमयितरि २बोधके
च "सापेक्षत्वेऽपि गमकत्वात् समास" महाभा०
"वत् प्रौढत्वमुदारता च वचसा यच्चार्थतोगौरवम्
तच्चेदस्ति ततस्तदेव गमक पाण्डित्यवैदग्ध्ययो" मा-
लतीमा० । ३स्वरभेदे । "गमकः स्वश्रुतिस्थानस्थान-
श्रुत्यन्तराश्रयात् । स्वरो यो मूर्च्छनामेति गमकः स
इहोच्यते । कम्पित-स्फुरितो लीनो भिन्न स्थविर
एव च । आहतान्दोलितौ चेति गमका सप्त की-
र्त्तिता । माधवौधनिशायान्तु शेषप्रहरमात्रके ।
साधके बलिशे स्थित्वा गमकान् सप्त साधयेत् । दाक्षि-
णात्या हरिप्रीत्यै गायन्ति गमकानिमान्" सङ्गी०दा०

**गमथ** पु० गम–अथच् । पथिके उज्ज्वद० ।

**गमन** न० गम–भावे ल्युट् । स्वाश्रयसंयोगविभागासम-
वायिकारणे १क्रियाभेदे "प्रसारणञ्च गमनं कर्माण्येतानि
पञ्च च" "भ्रमणं रेचनं स्यन्दनोर्द्ध्वज्वलनमेव च । ति-
र्य्यग्गमनमप्यत्र गमनादेव लभ्यते" भाषा० । उत्क्षेपण-
शब्दे १०८६पृ०विवृतिः । २जिगीषो प्रयाणे च अमर ।

**गमिन्** त्रि० "भविष्यति गम्यादय" पा० गम–भव्ये इनि ।

भाविगमनके स्त्रियां ङीप्। "गम्यादीनामुपसंख्यानम्" वार्त्तिकोक्तेः ग्रामगमीत्यादौ द्वितीयातत्समा०। कृदन्तत्वेऽपि तद्योगे कर्म्मणि न षष्ठी ग्राम गमी।

**गमिष्ठ** त्रि०अतिशयेन गन्ता—गन्तृ—अतिशायने इष्ठन्। गन्तृतमे। "किमङ्ग वा प्रत्यवर्त्ति गमिष्ठ"ऋ० १।११८।२।

**गम्ब(न्व)** गतौ भ्वा० पर० सक० सेट्। गम्बति अगम्बीत् जगम्ब। नोपधत्वे क्विपि गन्तौ गन्‌। नोपधत्वे गमौ गम इति भेदः।

**गम्भन्** त्रि० गम—बा० अन् भुगागमश्च। गभीरे "अपां गम्भन्त्सीद मा त्वा" यजु० १३।३०। "गम्भन् गम्भनि गभीरे" वेददी०। वेदे सप्तमीलोपः।

**गम्भर** न० गम—क्विप् गम निम्नगतिं बिभर्त्ति भृ—अच् ६त०। उदके निघण्टुः। "इहन्तेव गम्भरेषु प्रतिष्ठाम्" ऋ०१०।१०६।९।"गम्भरेषु गहनेषु जलेषु" भा०।

**गम्भारिका** स्त्री गम—क्विप् गमं निम्नगतिं बिभर्त्ति—भृ—ण्वुल् कापि अत इत्वम्। (गाम्भार) वृक्षभेदे राजनि०।

**गम्भारी** स्त्री गम गतिभेदं बिभर्त्ति अण्, क जलं बिभर्त्ति पृषो० कस्य ग इत्यन्ये उप स० गौरा० ङीष्। (गाम्भार) वृक्षभेदे अमरः। गम्भार्य्याः फले पुष्पे वा अण् तस्य लुपि प्रकृतिवल्लिङ्गता। गम्भारी तत्फले पुष्पे च स्त्री। "गम्भारी भद्रपर्णी च श्रीपर्णी मधुपर्णिका। काश्मीरी कश्मरी हीरा काश्मर्य्यः पीतरोहिणी। कृष्णवृन्ता मधुरसा महाकुसुदिकापि च। काश्मरी तुवरा तिक्ता वीर्य्योष्णा मधुरा-गुरुः। दीपनी पाचनी मेध्या भेदनी भ्रमशोषजित्। दोषतृष्णामशूलार्शोविषदाहज्वरापहा। तत्फलं बृंहणं वृष्यं गुरु केश्यं रसायनम्। वातपित्ततृषारक्तक्षय-मूत्रविबन्धहृत्। स्वादु पाके हिमं स्निग्धं तुवराम्लं विशुद्धकृत्। हन्याद्दाहतृषावातरक्तपित्तक्षतक्षयान्" भावप्र०।

**गम्भिष्ठ** त्रि० गम्भन्+अतिशायने इष्ठन् टिलोपः। गम्भीरतमे। "अपां गम्भन्त्सीदेति एतद्वा अपां गम्भिष्ठं यदेष एतत्तपति" शत०ब्रा० ७।५।१।८।

**गम्भीर** त्रि० गच्छति जलमत्र गम—ईरन् नि० भुगागमः। १निम्नस्थाने अगाधे, अमरः। "स्तनगम्भीरखनीखमीनिम" मेघ०। २मन्द्रे शब्दे "स्निग्धगम्भीरनिर्घोषमेकस्यन्दनमास्थितौ" रघु। ३गभीरार्थे च उणादि०। ४जम्बीरे, ५पद्मे, ६ऋग्मन्त्रभेदे च पु०। "स्वरे सत्त्वे च नाभौ च त्रिषु गम्भीरता शुभा।

**गम्भीरवेदिन्** पु०गम्भीरं गहनं यथातथा वेत्ति विद—णिनि। "चिरकालेन यो वेत्ति शिक्षां परिचितामपि। गम्भीरवेदी विज्ञेय स गजो गजवेदिभिः" राजपुत्रीयोक्तचिह्ने, १गजे। "अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः" रघु। गम्भीरवेदिन पुरः कवलं करीन्द्रे" माघ। तल्। गम्भीरवेदिता "त्वग्भेदात् शोणितस्रावात् मांसस्य क्रथनादपि। आत्मानं यो न जानाति स स्यात् गम्भीरवेदिता" इत्युक्तधर्म्मोपेतचिह्ने गजे।

**गम्भीरिका** स्त्री गम्भीर—स्वार्थे क टापि कन् वा कापि अत इत्वम्। १गम्भीरायां नद्यां २नदीभेदे च। "लौहित्यं सिन्धुनदं सरयूर्गम्भीरिका रथाह्वा च। गङ्गाकौशिक्याद्याः सरितो विदेहकाम्बोजाः" वृ०सं०१६अ०। ३नाड़ीभेदे "नाड्यो गम्भीरिका यास्तु सद्यश्छस्तास्तथैव च"सुश्रुत। ४दृष्टिरोगभेदे "हताधिमन्थो निमिषो दृष्टिर्गम्भीरिका च या"सुश्रुत। तल्लक्षणं तत्रैव उक्तं यथा "दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कुच्यतेऽभ्यन्तरतश्च याति। रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः"।

**गम्य** त्रि गम—पवर्गान्तत्वात् कर्मादौ यत्। १गमनीये २प्राप्ये च। अर्हार्थे यत्। गमनयोग्ये। "गम्यान्यपि तीर्थानि कीर्त्तितान्यगम्यानि च"भा०व० ८५। "धर्मकामां स्त्रियं यत्र गम्यां रहसि याचितः" भा० आ० ८३ अ०। "गम्य त्वभावे दातॄणां कन्या कुर्य्यात् स्वयं वरम्"याज्ञ०। "समानश्च खेदविगमो गम्यायामगम्यायाञ्च तत्र नियमः क्रियते इयं गम्या इयमगम्येति 'महाभाष्यम्' "खेदयतीति खेदो रोगः इन्द्रियनियमासामर्थ्यं वा" इति कैयटः। तथा च अगम्यानिषेधस्य इतराभ्यनुज्ञाफलकतया स्वदारगमने दोषाभाव "विवरणम्।

**गम्यमान** त्रि० गम—कर्म्मणि शानच्। १वर्त्तमानगतिकर्मणि। २बुध्यमाने च"गम्यमानाऽपि क्रिया विभक्तौ प्रयोजिका" इति न्यायः। "गम्यमानेऽर्थे" सि० कौ० भूरिप्रयोगः।

**गम्यादि** न० "भविष्यति गम्यादयः" पा० उक्ते भविष्यदर्थे इनिप्रत्ययान्तशब्दसमूहे स च "गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतिषेधी इत्येते" पा०ग०। "गम्यादीनामुपसंख्यानम्" वार्त्ति० तद्योगे द्वितीयातत्पुरुषः। ग्रामगमी।

**गय** पु० रामायणप्रसिद्धे १वानरभेदे। "कोटीशतहतो वापि गयो गवय एव च। वानरेन्द्र कौमर्थौ पृथक्

पृथगदृश्यताम्" भा० व० २८२अ०। २हविर्धानराजपुत्रभेदे, तत्कथा "हविर्धानाद्धविर्धानी विदूराख्रत षट् सुतान्। वर्हिषदं गयं शुक्लं कृष्णं सत्यजित व्रतम्" भाग० ४।२४अ०। प्रियव्रतवंश्योद्भवे ३राजभेदे तत्कथा यथा "नक्ताद्द्युतिपुत्रो गयो राजर्षिप्रवर उदारश्रवा अजायत। साक्षाद्भगवतो विष्णोर्जगद्रिरक्षिषया गृहीतसत्त्वस्य कलात्मवत्त्वादिलक्षणेन महापुरुषतां प्राप्तः। स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिना च भगवति महापुरुषे परावरे ब्रह्मणि सर्वात्मनार्पितपरमार्थलक्षणेन ब्रह्मविच्चरणानुसेवयापादितभगवद्भक्तियोगेन चाभीक्ष्णशः परिभावितातिशुद्धमतिरुपरतानात्म्य आत्मनि स्वयमुपलभ्यमानब्रह्मात्मानुभवोऽपि निरभिमान एवावनिमजूगुपत्। तस्येमां गाथां पाण्डवेय! पुराविद उपगायन्ति। गयं नृप कः प्रतियाति कर्मभिर्यज्वाभिमानी बहुविद्धर्मगोप्ता। समागतश्रीः सदसस्पतिः सतां सत्सेवकोऽन्यो भगवत्कलामृते। यमभ्यषिञ्चन् परया मुदा सतीः (सत्य) सत्याशिषो दक्षकन्याः सरिद्भिः। यस्य प्रजानां दुदुहे धराऽऽशिषो निराशिषो गुणवत्सस्नुतोधाः। छन्दांस्यकामस्य च यस्य कामान् दुदूहुराजह्रुरथो बलिं नृपाः। प्रत्यञ्चिता युधि धर्मेण विप्रा यदाशिषां षष्ठमंशं परेत्य। यस्याध्वरे भगवानध्वरात्मा मघोनि माद्यत्युरुसोमपीथे। श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार। यत्प्रीणनाद्बर्हिषि देवतिर्यङ्मनुष्यवीरुत्तृणमाविरिञ्चात्। प्रीयेत सद्यः स ह विश्वजीवः प्रीतः स्वयं प्रीतिमगाद्गयस्य। गयाद्गयन्त्यां चित्ररथः सुगतिरवरोधन इति त्रयः पुत्रा बभूवुः" भाग०५।१५। अमूर्त्तरयसः पुत्रे प्रधानयोद्धराजान्तर्गते ४राजर्षिभेदे तत्कथा।

"गयस्यामूर्त्तरयसः शृतं सृञ्जय! शुश्रुम। यो वै वर्षशतं राजा हुतशिष्टाशनोऽभवत्। तस्मै ह्यग्निर्वरं प्रादात्ततो वव्रे वरं गयः। तपसा ब्रह्मचर्येण व्रतेन नियमेन च। गुरूणाञ्च प्रसादेन वेदानिच्छामि वेदितुम्। स्वधर्मेणाविहिंसान्यान् धनमिच्छामि चाक्षयम्। विप्रेषु ददतश्चैव श्रद्धा भवतु नित्यशः। अनन्यासु सवर्णासु पुत्रजन्म च मे भवेत्। अन्नं मे ददतः श्रद्धा धर्मे मे रमतां मनः। अविघ्नं चास्तु मे नित्यं धर्मकार्येषु, पावकः। तथा भविष्यतीत्युक्त्वा तत्रैवान्तरधीयत। गयो ह्यवाप्य तत्सर्वं धर्मेणारीनजीजयत्। स दर्शपौर्णमासाभ्यां कालेष्वाग्रयणेषु च। चातुर्मास्यैश्च विविधैर्यज्ञैश्चावाप्तदक्षिणैः। अयजच्छ्रद्धया राजा परिसंवत्सरान् शतम्। गवां शतसहस्राणि शतमश्वशतानि च। शतं निष्कसहस्राणि गवाञ्चाप्ययुतानि षट्। उत्थायोत्थाय स प्रादात् परिवत्सरान् शतम्। नक्षत्रेषु च सर्वेषु ददन्नक्षत्रदक्षिणाः। ईजे च विविधैर्यज्ञैर्यथा सोमोऽङ्गिरास्तथा। सौवर्णीं पृथिवीं कृत्वा य इमां मणिशर्कराम्। विप्रेभ्यः प्राददद्राजा अश्वमेधे महामखे। जाम्बुनदमया यूपाः सर्वे रत्नपरिच्छदाः। गयस्यासन् समृद्धास्तु सर्वभूतमनोहराः। सर्वकामसमृद्धांश्च प्रादात्तांश्च गयस्तथा। ब्राह्मणेभ्यः प्रहृष्टेभ्यः सर्वभूतेभ्य एव च। ससमुद्रवनद्वीपनदीनदवनेषु च। नगरेषु च राष्ट्रेषु दिवि व्योम्नि च येऽवसन्। भूतग्रामाश्च विविधाः संतृप्ता यज्ञसम्पदा। गयस्य सदृशो यज्ञो नास्त्यन्य इति तेऽब्रुवन्। षट्त्रिंशद्योजनायामा त्रिंशद्योजनमायता। पश्चात् पुरश्चतुर्विंशद्वेदी ह्यासीद्धिरण्मयी। गयस्य यजमानस्य मुक्तावज्रमणिस्तृता। प्रादात् स ब्राह्मणेभ्योऽथ वासांस्याभरणानि च। यथोक्ता दक्षिणाश्चान्या विप्रेभ्यो भूरिदक्षिणाः। यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः। कुल्याः सुकृतवाहिन्यो रसानामभवंस्तदा। वस्त्राभरणगन्धानां राशयश्च पृथग्विधाः। यस्य प्रभावाच्च गयस्त्रिषु लोकेषु विश्रुतः। वटश्चाक्षयकरणः पुण्यं ब्रह्मसरश्च तत्। स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथा" भा० द्रो० ६६अ०। ५धने ६अपत्ये ७गृहे च निघण्टुः। "इन्द्रो वसुभिः परिपातु नो गयम्" ऋ० १०।६६।३। "गयं गृहनामैतत्। प्राप्तव्यं गीयते शब्द्यतेऽस्मिन्निति वा गयं गृहम्" भा०। "अरक्षद्दाशुषे गयम्" ऋ० १।७४।२। "गय धनम्" भा०। "परि पाहि नो गयम्" ऋ० ६।७१।३। "गयं गृहं धनं वा" भा०। ८अन्तरीक्षे च। "गयमस्माकं शर्म वनवत्स्वावसुः" ऋ०५।४४।७। "गयं गृहमन्तरिक्षं वा" भा०। ९गृहगते प्राणिनि च। "आ नो गयमाविवेश" ऋ० ६।७४।२। "गयं गृहगतं प्राणिजातम्" भा०। १०स्वस्थाने। "हित्वी गयमारे अवद्य आगात्" ऋ०१०।८८।५। "गयं स्वस्थानम्" भा०। ११प्राणेषु शब्दर०, "या हैषा गयांस्तत्रे प्राणा वै गयास्तत्

आर्यान्तरे तद्वद्गयान्तरे तस्माद्गायत्री नाम” शत० ब्रा० १४।८।१५।७। गयाऽस्त्यत्र अच्। १२गयाप्रदेशे शब्दच०। “गयस्य यजमानस्य गयेष्वेव महाक्रतुम्। आहूता सरिता श्रेष्ठे गययज्ञे सरस्वती” भा० शल्य०३८ अ० “गयेन यजमानेन गयेष्वेव पितॄन् प्रति” रामा० अयो०१०७।११। तेन तद्यागस्थानत्वेन च गयेति प्रसिद्धि १३असुरभेदे। तत्कथा वायुपु०गयामाहात्म्ये २अ०यथा।

“गयासुरोऽसुराणाञ्च महाबलपराक्रमः। योजनानां सपादञ्च शतं तस्योच्छ्रयः स्मृतः। स्थूलः षष्टियोजनानां श्रेष्ठोऽसौ वैष्णवः स्मृतः। कोलाहले गिरिवरे तपस्तेपे सुदारुणम्। बहुवर्षसहस्राणि निरुच्छ्वासः स्थितोऽभवत्। तत्तपस्तापिता देवाः संक्षोभं परमं ययुः। ब्रह्मलोकं गता देवा प्रोचुस्ते प्रपितामहम्।”

ततस्तत्तत्तपआदिकमुपवर्ण्य तद्वरकथा तत्रैव यथा

“यदि तुष्टास्तु मे देवा ब्रह्मविष्णुमहेश्वराः। सर्वदेवद्विजातिभ्यो यज्ञतीर्थशिलोच्चयात्। देवेभ्योऽतिपवित्रोऽहमृषिभ्योऽपि शिवाव्ययात्। मन्त्रेभ्यो देवदेवीभ्यो योगिभ्यश्चापि सर्वशः। न्यासिभ्यश्चापि कर्मिभ्यो धर्मिभ्यश्च तथा पुनः। ज्ञानिभ्योऽतिपवित्रोऽहं पवित्रः स्यां सदासुराः!। पवित्रतास्तु ते देवा सत्यसङ्गा दिवं ययुः। दृष्ट्वा दैत्यं, तथा स्पृष्ट्वा सर्वे हरिपुरं ययुः। शून्ये लोकत्रये याते शून्या यमपुरी ह्यभूत्। यम इन्द्रादिभिः सार्द्धं ब्रह्मलोकं ततोऽगमत्। ब्रह्माणमूचिरे देवा गयासुरविलोपिताः। त्वया दत्ताधिकारांस्त्वं तान् गृहाण पितामह!। ब्रह्माब्रवीत्ततो देवान् प्रयामो विष्णुमव्ययम्। ब्रह्मादयोऽब्रुवन् विष्णुं त्वया दत्तवरोऽसुरः। तद्दर्शनाद्ययुः स्वर्गं शून्यं लोकत्रयं ह्यभूत्। देवैरुक्तो वासुदेवो ब्रह्माणं स वचोऽब्रवीत्। गयासुरं प्रार्थयस्व यज्ञार्थं देहि देहकम्। विष्णूक्तः ससुरो ब्रह्मा गत्वाऽपश्यद् गयासुरम्। गयासुरोऽब्रवीद् दृष्ट्वा ब्रह्माणं त्रिदशैः सह। सम्पूज्योत्थाय विधिवत् प्रणतः श्रद्धयान्वितः। गयासुर उवाच। अद्य मे सफलं जन्म अद्य मे सफलं तपः। यदागतोऽतिथिर्ब्रह्मा सर्वं प्राप्तं मयाद्य वै। योगिन्! योगाङ्गवित् सर्वलोकस्वामिन्! पितर्गुरो!। यदर्थमागतो ब्रह्मन् तत्कार्यं करवाण्यहम्। ब्रह्मोवाच। पृथिव्यां यानि तीर्थानि दृष्टानि भ्रमता मया। यज्ञार्थं न तु ते तानि पवित्राणि शरीरतः। त्वया देहे पवित्रत्वं प्राप्तं विष्णुप्रसादतः। अतः पवित्रं देहं त्वं यज्ञार्थं देहि मेऽसुर!।

गयासुर उवाच। धन्योऽहं देवदेवेन! यद्देहं प्रार्थ्यते त्वया। पितृवंशे कृतार्थोऽहं मातृवंशे तथैव च। त्वयैवोत्पादितो देहः पवित्रस्तु त्वया कृतः। सर्वेषामुपकाराय यागोऽयं भविष्यति। इत्युक्त्वा सोऽपतद्भूमौ श्वेतकल्पे गयासुरः। नैर्ऋतदिशमाश्रित्य तदा कोलाहले गिरौ। शिरः कृत्वोत्तरे दैत्य पादौ कृत्वा तु दक्षिणे। ब्रह्मा सम्भृतसम्भारो मानसान् ऋत्विजोऽसृजत्” इत्युपक्रम्य कतिचित्तत्कल्पितवीतुक्त्वा “एतानन्यांश्च विप्रेन्द्रान् वेधा लोकपितामहः। परिकल्प्याकरोद्यागं गयासुरशरीरके। अग्निशर्मापि पञ्चाग्नीन् सम्पादेतानशासुजत्। दक्षिणाग्निं गार्हपत्याहवनीयौ तथोऽव्ययः। सभ्यावसथ्यौ देवर्षिवर्येषु यथा प्रतिष्ठिताः। यज्ञस्य च प्रतिष्ठार्थं विप्रेभ्यो दक्षिणां ददौ। कृत्वा पूर्णाहुतिं ब्रह्मा स्नात्वा चावभृथे सुरैः। यज्ञयूपं सुरैः सार्द्धं समानीय व्यरोपयत्। ब्रह्मणः सरसां श्रेष्ठे सरसो वेदिकं शुभम्। यज्ञवाटे सुरैः सार्द्धं गयासुरमपश्यत। चलितं चकितो ब्रह्मा धर्मराजमभाषत। या सा ग्रहे तव शिला समानीयाविचारयन्। दैत्यस्य शीघ्रं शिरसि तां धारय ममाज्ञया। शिलार्थं, यम श्रुत्वाऽधारयन्मस्तके शिलाम्। शिलायां धारितायान्तु सशिलश्चासुरोऽचलत्। देवानूचेऽथ रुद्रादीन् शिलायां निश्चला स्थिताः। तिष्ठध्वं देवाः सकलास्तथेत्युक्त्वा च ते स्थिताः। देवाः पादैश्चलयित्वा तथापि चलितोऽसुरः। ब्रह्माथ व्याकुलो विष्णुं गतः क्षीराब्धिशायिनम्। सुदाय प्रणतो भूत्वा मत्वा चाटव्यं च प्रभुम्। ब्रह्माब्रवीत्स पते! नाथ! नमामि जगतां पतिम्। गतिं कीर्त्तिमतां नृणां भुक्तिमुक्तिप्रदायकम्। विष्वक्सेनोऽब्रवीत् विष्णुं देव! त्वां स्तौति पद्मजः। हरिराह्वानयस्व तं विष्णूक्तः स तमानयत्। अब्जमूचे हरिः कस्मादागतोऽसि वदस्व तत्। ब्रह्मोवाच। देवदेव! कृते यागे प्रचचाल गयासुरः। शिलायां देवरूपिण्यां न्यस्तायां तस्य मस्तके। रुद्रादिषु च देवेषु संस्थितेष्वसुरोऽचलत्। इदानीं निश्चलार्थं हि प्रसादं कुरु माधव!। ब्रह्मणो वचनं श्रुत्वा ह्याकृष्य स्वशरीरतः। मूर्त्तिं ददौ निश्चलार्थं ब्रह्मणे भगवान् हरिः। आनीय मूर्त्तिं ब्रह्मापि शिलायां समधारयत्। तथापि चलितं वीक्ष्य पुनर्देव मयागमत्। आगत्य विष्णुः क्षीराब्धेः शिलायां स्थितोऽभवत्। अनादिनाभिधानेन पुण्डरीकेति माधवः।

शिलायां निश्चलार्थं हि स्वयमादिगदाधरः। निश्चलार्थं पद्मधासीत् शिलाया प्रपितामहः। पितामहोऽथ फल्ग्वीशः केदारः कनकेश्वरः। ब्रह्मा स्थितः स्वयं तत्र गजरूपी विनायकः। गयादित्यस्तोत्तरार्को दक्षिणार्कस्त्रिधा रविः। लक्ष्मीः सीताभिधानेन, गौरी वै मङ्गलाह्वया। गायत्री चैव सावित्री त्रिसन्ध्येयं सरस्वती। इन्द्रो बृहस्पतिः पूषा वसवोऽष्टौ महाबलाः। विश्वे देवाश्चाश्विनेयौ मरुतो विश्वनायकाः। यक्षोरगगन्धर्वाः स्थिता देवाः स्वशक्तिभिः। आदितो गदया चासौ यस्माद्दैत्यः स्थिरीकृतः। स्थित इत्येव हरिणा तस्मादादिगदाधरः। ऊचे गयासुरो देवान् किमर्थं वञ्चितोऽस्म्यहम्। यज्ञार्थं ब्रह्मणे दत्तं शरीरममलं मया। विष्णोर्वचनमात्रेण किं न स्यां निश्चलोऽस्म्यहम्। यत् सुरैः पीडितोऽत्यर्थं गदया हरिणा तथा। पीडितो यद्यहं देवाः प्रसन्नाः सन्तु सर्वदा। गदाधरादयस्तुष्टा प्रोचुर्दैत्यं गयासुरम्। वरं ब्रूहि प्रसन्नाः स्मो देवानूचे गयासुरः। यावत् पृथ्वी पर्वताश्च यावच्चन्द्रार्कतारकाः। तावच्छिलायां तिष्ठन्तु ब्रह्मविष्णुमहेश्वराः। अन्याश्च सकला देवा मन्नाम्ना क्षेत्रमस्तु मे। पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः। तन्मध्ये सर्वतीर्थानि प्रयच्छन्तु हितं नृणाम्। स्नानादितर्पणं कृत्वा पिण्डदानात् फलादिकम्। सहात्मनि सहस्रं कुलानामुद्धरेन्नरः। व्यक्ताव्यक्तस्वरूपेण यूयं तिष्ठन्तु सर्वदा। गदाधराद्यस्य लोकात् भूयात् सर्व्वाघनाशनात्। श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते। ब्रह्महत्यादिकं पापं विनश्यतु च सेविनाम्। नैमिषं पुष्करं गङ्गा प्रयागं चाविमुक्तकम्। एतान्यन्यानि तीर्थानि दिवि भुव्यन्तरीक्षतः। समायान्तु सदा नृणां प्रयच्छन्तु हितं सुराः। ते देवास्तानि तीर्थानि प्रयच्छन्तु हितं नृणाम्। पितॄणां ब्रह्मलोकस्य भुक्तिमुक्तिफलं तथा। एको विष्णुस्त्रिधामूर्त्तिर्योऽसौ सकीर्त्त्यते बुधैः। तावद्गयासुरक्षेत्रं ख्यातिमेतु सदा भुवि। ब्रह्महत्यादिकं पापं विनाशयतु सेविनाम्। किं बहुना सुरेशाना। युष्माभिश्चापि देवता। चैत्र तिष्ठतु चापि, समयं प्रतिपाल्यताम्। गयासुरवचः श्रुत्वा प्रोचुर्विष्ण्वादयः सुराः। त्वया यत् प्रार्थितं सर्वं तद्भविष्यत्यसंशयम्। पितॄणां वै कुलशतमात्मानं पिण्डदानतः। श्राद्धादिना गमिष्यन्ति ब्रह्मलोकमनामयम्। अस्मत्पादानर्द्दयित्वा यास्यन्ति परमां गतिम्। सनत्कुमार उवाच। दैवैर्दत्तवरो दैत्यो हर्षितो निश्चलोऽभवत्।" ४अङ्गिरसे मुनिभेदे गर्गशब्दे दृश्यम् अस्य उणा०आद्युदात्तता।

**गयस्फान** पु० स्फायी—वृद्धौ अन्तर्भूतण्यर्थात् ल्युट् नि० यलोपः गयस्य धनस्य स्फानः। धनवर्द्धके। "गयस्फानो अमीवहा वसुवित् पुष्टिवर्द्धनः" ऋ० १। ९१।१२। "गयस्फानः धनस्य वर्द्धयिता" भा०। "एधि गयस्फानो गोभिरश्वेभिरिन्द्र।" ऋ० ७।५४।२।

**गया** स्त्री गयो गयासुरः गयरूपो वा कारणत्वेनास्त्यस्य अच्। तीर्थभेदे गयशब्दे तत्कथा उक्ता। वायुपु० गयामा० १अ० तन्माहात्म्य यथा

"पञ्च तीर्थवरं पुण्यं श्राद्धादौ सर्वतारकम्। गयातीर्थं सर्वदेशे तीर्थेभ्योऽप्यधिकं शृणु। गयासुरस्तपस्तेपे ब्रह्मणा क्रतवेऽर्थितः। प्राप्तस्य तस्य शिरसि शिला धर्मोऽप्यधारयत्। तत्र ब्रह्माकरोद्यागं स्थितश्चादिगदाधरः। फल्गुतीर्थादिरूपेण निश्चलार्थमहर्निशम्। गयासुरस्य विप्रेन्द्र! ब्रह्माद्यैर्दैवतैः सह। कृतयज्ञो ददौ ब्रह्मा ब्राह्मणेभ्यो गृहादिकम्। श्वेतकल्पे तु वाराहे गयो यागमकारयत्। गयनाम्ना गयाख्याता क्षेत्रं ब्रह्माभिकाङ्क्षितम्। काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः। गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति। गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत्। पद्भ्यामपि जलं स्पृष्ट्वा सोऽस्मभ्यं किं न दास्यति?। गयां गत्वान्नदाता यः पितरस्तेन पुत्रिणः। पक्षत्रय निवासी च पुनात्यासप्तमं कुलम्। न चेत् पञ्चदशाहं वा सप्तरात्रं त्रिरात्रकम्। महाकल्पकृतं पापं गयां प्राप्य विनश्यति। पिण्डं दत्त्वा च पित्रादेरात्मनोऽपि तिलैर्विना। ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। पापं तत्सङ्गजं सर्व्वं गयाश्राद्धाद्विनश्यति। आत्मजोऽप्यन्यजो वापि गयाभूमौ यदा तदा। यन्नाम्ना पातयेत् पिण्डं तन्नयेद् ब्रह्म शाश्वतम्। नामगोत्रे समुच्चार्य्य पिण्डपातनमिष्यते। येन केनापि कस्मैचित् स याति परमां गतिम्। ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा। वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्व्विधा। ब्रह्मज्ञानेन किं साध्यं गोग्रहे मरणेन किम्। वासेन किं कुरुक्षेत्रे यदि पुत्रो गयां व्रजेत्। गयायां सर्व्वकालेषु पिण्डं दद्याद्विचक्षणः। अधिमासे जन्मदिने चास्तेऽपि गुरुशुक्रयोः। न त्यक्तव्यं गयाश्राद्धं

पिष्टानां प्रयतः प्रेतपर्वते । प्राचीनावीतिनाभ्यर्च्य दक्षिणाभिमुख स्मरन् । 'कव्यवालोऽनल सोमो यमश्चैवार्यमा तथा । अग्निष्वात्ता बर्हिषदः सोमपा पितृदेवताः । आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह"। "मदीया पितरो ये च कुले जाता सनाभयः । तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् । ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम्" । आचम्योक्त्वा च पश्चाच्च प्राणायाम प्रयत्नतः । पुनराहृत्य चिरञ्चित ब्रह्मलोकाप्तिहेतवे । एवञ्च विधिवत् श्राद्ध कृत्वा पूर्व यथाक्रमम् । पितृनावाह्य चाभ्यर्च्य मन्त्रैः पिण्डप्रदो भवेत् । तीर्थे प्रेतशिलादौ च चरुणा सक्तुना वा । प्रक्षाल्य पूर्वं तत्स्थानं पञ्चगव्यैः पृथक् पृथक् । मन्त्रैस्तैरथ सम्पूज्य पञ्चगव्यैश्च देवताम् । यावन्तिला मनुष्यैश्च गृहीता पितृकर्मसु । गच्छन्ति तावदसुरा सिंहत्रस्ता यथा मृगा । अष्टकासु च वृद्धौ च गयायां च मृतेऽहनि । मातुः श्राद्धं पृथक् कुर्यादन्यत्र पतिना सह । वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्वकम् । गृहीत्वाञ्जलिना तेभ्यः पितृतीर्थेन तत्त्वतः । सक्तुना मुष्टिमात्रेण दद्यादक्षय्यपिण्डकान् । आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्वे मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आ ब्रह्मभुवनात् लोकादिदमस्तु तिलोदकम् । पिता पितामहश्चैव तथैव प्रपितामहः । माता पितामही चैव तथैव प्रपितामही । मातामहस्तत्पिता च प्रमातामहकादयः । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् । मुष्टिमात्रप्रमाणञ्च आर्द्रामलकमात्रकम् । शमीपत्रप्रमाणं वा पिण्डं दद्याद्गयाशिरे । उद्धरेत् सप्तगोत्राणि कुलानि शतमुद्धरेत् । पितुर्मातुश्च भार्य्याया भगिन्या दुहितुस्तथा । पितृष्वसुर्मातृष्वसुः सप्त गोत्राः प्रकीर्त्तिताः । त्रिंशतिर्विंशतिरिन्द्राः १४ षोडश द्वादशैव हि । रुद्राः ११ दश पञ्चैव कुलान्येकोत्तरं शतम् । नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः । सकारुण्येन कर्त्तव्य तीर्थश्राद्धं विचक्षणैः । पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनम् । दक्षिणा चाथ संकल्पस्तीर्थश्राद्धेष्वयं विधिः" ।

अधिकं मदीयगयाश्राद्धादिपद्धतौ द्रष्टव्यम् । गयाश्राद्धस्य फलादेराधारादिकं गयाश्राद्धादिपद्धतौ अस्माभिर्न्यरूपि तद्यथा "गयाश्राद्धफलं किंनिष्ठमिति विविच्यते । "यद्यत्र पातयेत् पिण्डम्" इत्यादिवचनजातात् पुत्रादिकृतश्राद्धात् तदुद्देश्यपित्रादिगतं नरकनिवृत्तिब्रह्मलोकावाप्त्यादिफलमवगम्यते तच्च नोपपद्यते । तथा हि सर्वो हि लोकः स्वेष्टसाधने कर्मणि प्रवर्त्तते तत्प्रवृत्त्या च तत्तदिष्टसाधनं वस्तु साधयति इत्येवं नियमे स्थिते वैदिककर्म्मण्यपि तथैव स्वाभीष्टफलवत्त्वेन प्रवृत्तिरुचिता नान्यगामिफले । एवं शास्त्रदेशितं फलमनुष्ठातर्य्येव कर्म्मभिर्ज्ज्यते "शास्त्रीय फलं प्रयोक्तरि तल्लक्षणत्वादिति" जैमिनीयन्यायात् । अन्यकर्त्तृकक्रियया अन्यदीयफलस्य जननेऽतिप्रसङ्ग स्यात् । ततश्च पुत्रादिकृतश्राद्धात् कथं पित्रादेरुद्धारादिसम्भवः तस्य श्राद्धाद्यकर्त्तृत्वात् इत्येवं प्राप्ते उच्यते "यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स" इत्यादिवेदवचनात् जैमिनीयन्यायस्य जातेष्ट्यादिभिन्नविषयत्वं कल्प्यते । तथा च पित्रादिकृतजातेष्ट्यादिद्वारा अध्यापनादिसंस्कारद्वारा च यथा तत्राऽकर्त्तर्य्यपि पुत्रे फलमुत्पद्यते एवं गयादिश्राद्धकर्त्तुरुद्देश्यस्याकर्त्तुरपि उद्धारादिफलसम्बन्धः नानापुराणवचनबलादपि सम्भवति "फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वादिति" जैमिनीयन्यायान्तरेण विधिविशेषेणैव फलविशेषसम्बन्ध इत्युक्तत्वात् । तथा च प्रागुक्तातिप्रसङ्गस्य शास्त्रातिरिक्तविषयत्वमिति कल्प्यते "नास्ति वचनस्यातिभारः" इति न्यायात् "वाचनिकेऽर्थे न्यायानवतारात्" इति न्यायाच्च । तत्र वचनाच्चोभयगतफलसाधनताऽवगता जातेष्ट्यादिवत् । तत्र फलं पुण्यविशेषस्तज्जन्यनरकादुद्धारो नेत्यन्यदेतत् । मीमांसादावेतद्विवेचितमित्युपरम्यते । काम्यादिस्वतपितृककृतगयाश्राद्धस्य तु कर्त्तव्यताकरणनिबन्धनप्रत्यवायपरिहारमात्रं, सति कामे विशिष्टसन्तानस्य फलम् "गयायां पिण्डदानेन पितृणामनृणो भवेत्" इत्यादिवचने पितृणापाकरणस्यावश्यकतया तदकरणे प्रत्यवायबोधनात् "गयाभिगमनं कर्त्तुं यः शक्तो नाभिगच्छति । शोचन्ति पितरस्तस्य वृथा तस्य परिश्रमः" इति कूर्मपुराणीयेन समर्थस्य गयाश्राद्धाऽकरणे वृथाजन्मतोक्तेः 'जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता" इत्यादिवचने गयाश्राद्धादिकरणेनैव पुत्रकार्य्यकारितया पुत्रत्वसिद्ध्युक्तेश्च । तेन गयाश्राद्धं नित्यमत एव यथाशक्ति चैतदनुष्ठेयं "नित्ये यथा शक्त्यादिति" न्यायात् । तथापि सकृत्करणमेव

मित्यं तावतैव शास्त्रार्थसिद्धेः "सकृत्कृते कृतः शास्त्रार्थ इति" न्यायात् आवृत्तिबोधकवचनाद्यभावाच्च जन्मतिथ्यादिकं यथा पुनःपुनः करणावश्यकता । पुनःकरणे तु फलाधिक्यम् "यो भूय आरभते तस्य फले विशेषः" इति न्यायात् "सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम्" इत्यादिवाक्यमप्याद्यस्यैवावश्यकत्वार्थं न तु द्वितीयादेर्निरासार्थमपि, परिसंख्यापत्तेः । तत्रापि प्रथमयात्रायां येषां प्रेतत्वनिवारणार्थं प्रेतशिलायां पिण्डदानभाण्डस्फोटने कृते तत्र द्वितीययात्रायां तेषां ते न कार्य्ये इत्येव विशेषः । प्रथमयात्रानन्तरमृतानान्तु द्वितीययात्रायां ते अपि कार्य्ये । अन्यत् सर्व्वं सर्व्वास्वपि यात्रासु समानम् । तस्मादशक्ते पित्रादौ नरकोद्धारादि यथायथं फलं शक्ते तु तस्मिन् पुत्रादेः प्रत्यवायाभावः सत्याञ्च कामनायां विशिष्टस्नानादि पुत्रादिगतं फलं भवतीति सिद्धम् । अत्रेदं विविच्यते प्रागुक्तपुराणादिवचनेषु गयाश्राद्धस्य पित्राद्युद्धारः प्रत्यवायपरिहारः पुत्रावाप्तिश्च फलत्वेन श्रूयते तत्र गयाश्राद्धप्रवृत्तौ किं प्रयोजकं किमेकैकमुभयं वा मिलितं चेति सन्देहे मिलितस्यैव प्रयोजकता तत्र कामनाभेदादेकस्य मुख्यफलताऽपरयोर्द्वारता प्रासङ्गिकता वा तथा च यदा पित्राद्युद्धारार्थिना गयाश्राद्धं क्रियते तदा तदेव मुख्यं फलं तत्प्रवृत्तौ प्रयोजकं, प्रत्यवायपरिहारः पुत्रोत्पत्तिश्च तत्र प्रासङ्गिकौ अन्यार्थदीपस्यानुद्देश्यप्रकाशनवत् । यदा तु पुत्रार्थिना तदनुष्ठीयते तदा पुत्रोत्पत्तिरेव मुख्यं फलं पित्राद्युद्धारस्तु तत्र द्वारमित्येव सिद्धान्तः । एवं पित्राद्युद्धारस्य फलत्वे स्थितेऽधुना तदेव विचार्य्यते । उद्धारो नाम स्वापेक्षयोत्कृष्टस्थानादिनयनं तच्च प्रकृते नारकीयदेहविगमानन्तरं दैवादिदेहप्राप्तिरूपं तच्च न सम्भवति नारकीयादिदेहादेः स्वस्वकर्म्मारब्धतया कारणसत्त्वे विगमासम्भवात् तत्कर्म्मणां च भोगेनैव नाश्यत्वात् "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति" आगमात् । तत्र च तद्देहनाशः आरम्भककर्म्मनाशं विना नान्यथा । तथा च गयाश्राद्धादिना कथमुद्धारसम्भवः । प्रारब्धकर्म्मणाञ्च भोगादेव क्षये सति गयाश्राद्धेनोद्धारो जननीय इति कल्पनापि न युक्ता भोगादेव कर्म्मक्षये कल्प्ये गयाश्राद्धवैफल्यापत्तेः । इत्थं च स्थिते उच्यते कर्म्मविपाकोक्तदानादिना प्रारब्धकर्म्मक्षयद्वारा यथा रोगनाशकल्पना तथा प्रकृतेऽपि गयाश्राद्धादिना प्रारब्धक्षयनाशद्वारैव उद्धारकल्पना "नाभुक्तं क्षीयते" इत्यादिवाक्यस्य तु वचनबाध्यस्यैव प्रतिबन्धकस्य क्षये नाभवत् "न हि वचनस्यातिभारः इति" न्यायात् तथा च गयाश्राद्धस्यैव प्रारब्धक्षयजनकपुण्यविशेषजनकता कर्म्मविपाकोक्तदानादिवदेव कल्प्यते इति न कश्चिद्विरोधः । किञ्च भोगादेव प्रारब्धकर्म्मक्षयादनन्तरमुद्धारकल्पनेऽपि न गयाश्राद्धवैफल्यं पापविशेषैरेकैकयोनिष्वनेकावृत्तिश्रवणात् फलोन्मुखानामितरेषामनारब्धफलानां कर्म्मणाञ्च गयाश्राद्धनाश्यता भविष्यतीति । अस्ति च नारकीयाद्याद्यारम्भके पापे उद्धारस्य महल्लोकावाप्तिरूपतैव । स्वकर्म्मानुसारेण तल्लोकप्राप्तेरपि पूर्व्वं कृतत्वे तु पुत्रेण प्रत्यवायपरिहार एव फलं शक्तपित्रादौ तथाकल्पनस्य पूर्व्वमुक्तत्वात् तथैवात्र कल्पनौचित्यात् ।

अथ गयाश्राद्धाधिकारिणः । तत्र पुत्रपौत्रप्रपौत्रा एव प्रधानाधिकारिणः । तद्भिन्नाः सर्व्वेऽपि गौणाधिकारिणः । तथा "पुत्रेषु विद्यमानेषु नान्यो वै कारयेत् स्वधाम्" इत्यादिवचनेन पुत्रसत्त्वेऽन्यकर्त्तृकश्राद्धस्य निषेधेऽपि गयायां तस्य प्रतिप्रसवः, "आत्मजो वाऽन्यजो वापि गयाकूपे यदा तदा । यन्नाम्ना पातयेत् पिण्डं तं नयेद्ब्रह्म शाश्वतम्" इति वायवीयवचनात् "बान्धवा ज्ञातयो मित्रबान्धवाः सुहृदस्तथा । तेऽपि भूमौ गयां गत्वा पिण्डं दद्युर्विधानतः" इति कृत्यरत्नाकरधृतवाक्यात् । तथा चात्र सर्व्वेषामेवाधिकारः । यो यदीयधनं यथा कथञ्चिद्गृह्णाति सोऽसवर्णोऽपि तदीयगयाश्राद्धेऽधिकारी, "प्रेत किञ्चिद्द्रव्यत्रयम्" इत्यादि वायवीयवचनेऽसवर्णस्यापि तद्दत्तपिण्डेन प्रेतोद्धारस्य कीर्त्तनात् पुत्रो वा भ्रातृपुत्रो वा मित्रं वा स्वजनोऽपि वा । ऋत्विजो वाथवा दद्याद् द्वयोः स्वर्गस्तदा तयोरिति" वह्निपुराणीयाच्च । तथान्यत्र कर्त्तृविशेषविषयनिषेधोऽपि गयायां न प्रवर्त्तते "न पुत्रेभ्यः पिता दद्यान्नानुजेभ्यस्तदाग्रजः । न पत्न्यै तु पतिर्द्दद्यात् बुद्धिमान् सुसमाहितः" इति च सामान्यतो निषिध्य "तेऽपि यान्ति दिवं सर्व्वे पिण्डे दत्ते इति स्मृतिः । अतस्तेभ्योऽत्र यत्नेन पिण्डं दद्यात् समाहितः" इति कृत्यरत्नाकरधृतं गयायां प्रतिप्रसवात् बौधायनेनापि "पित्रा श्राद्धं न कर्त्तव्यं पुत्राणान्तु कदाचन । भ्रात्राप्यग्रजेन वा कार्य्यं भ्रातॄणां न कनीयसाम् । अतिस्नेहेन कार्य्यं वा सपिण्डीकरणं विना । गयायामविशेषेण ज्यायानपि कनी-

चरेदिति सामान्यतो निषिध्य गयायां प्रतिप्रसवाच्च । पूर्व्ववचने अत्रेति गयायामित्यर्थः ।

अथ गयाश्राद्धानधिकारिणः । जीवत्पितृको जीवन्मातृकश्च गयाश्राद्धे सर्व्वथानधिकारी । जीवत्पितृको मृतमातृकस्तु यदि प्रसङ्गेन गयां प्राप्नोति तदा अन्वष्टकाश्राद्धमिव मातृपार्व्वणमेव कुर्य्यात् "अन्वष्टक्य गयाप्राप्तौ सत्यां यच्च क्षयाहनि । मातुः श्राद्धं सुतः कुर्य्यात् पितर्य्यपि च जीवति" इति मैत्रायणीयपरिशिष्टवाक्यात् । अत्र प्राप्नोतीत्युक्त्या प्रासङ्गिकगमनं सूचितम् "गयां प्रसङ्गतो गत्वा मातृश्राद्धं समाचरेदिति त्रिस्थलीसेतुधृतवचने प्रसङ्गत इति पदस्य सटीपादानस्वरसात् । तेन जीवत्पितृकस्य गयामुद्दिश्य गमने न मातृश्राद्धकरणम् । मातृश्राद्धस्यान्वष्टकाश्राद्धसाहचर्य्यात् पार्व्वणमेव कार्य्यमिति त्रिस्थलीसेतुप्रभृतयः । अन्ये तु जीवन्मातृको मृतमातृको वा जीवत्पितृकोऽपि पार्व्वणविधिना पितामहादीनां गयाश्राद्धं कुर्य्यात् "जीवे पितरि वै पुत्र श्राद्धकार्य्यं विवर्ज्जयेत् । येषां वापि पिता दद्यात्तेषाञ्चैके प्रचक्षते" इति हारीतवचनोत्तरार्द्धेन जीवत्पितृकपार्व्वणस्य विधानेन गयायामपि तत्प्रवृत्तेरित्याहुः । आचारः पक्षान्यतरपक्षग्रहणे शरणम् ।

सन्न्यासिनस्तु सर्व्वकर्म्मपरित्यागितया गयाश्राद्धेऽनधिकारिणः । तथापि तत्र विष्णुपदादिश्राद्धस्थानेषु दण्डमात्रस्पर्शेन प्रणामादिवत् तैराचरणीयं न तु श्राद्धतर्पणादि "दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः । दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते" इति वायवीयात् स्पृष्ट्वा स्पर्शयित्वेत्यर्थः । पुत्त्रवत्याः स्त्रिया नाधिकार इति गौड़ैकदेशिनामाचारः स तु मूलाभावान्नादरणीयः ।

अथ गयाश्राद्धकालः । न तत्र कालशुद्ध्यपेक्षा "गयायां सर्व्वकालेषु पिण्डं दद्याद्विचक्षणः । अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः । न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च वृहस्पताविति" वायवीयात् । अत्र सर्व्वकालेष्वित्युपक्रमात् अस्ते इत्याद्युक्तिस्तु सर्व्वसमयशुद्धिप्रयोजकनिमित्तमात्रोपलक्षणार्था न तु रात्र्यादिपर्य्युदस्तकालग्रहणार्थेति बोध्यं सर्व्वत्र तीर्थादौ रात्र्यादिकालस्य पर्य्युदस्ततया रघुनन्दनादिभिः स्वीकारात् । सङ्क्रान्त्यादौ तु फलातिशयः "गयाश्राद्धं प्रकुर्व्वीत सङ्क्रान्त्यादौ विशेषतः । काले याऽपरपक्षे या चतुर्थ्यादितिथिष्वपीति" वह्निपुराणीयात् "मकरे वर्त्तमानेऽर्के ग्रहणे चन्द्रसूर्य्ययोः । दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनमिति" वायुपुराणवाक्याच्च । तथान्येऽपि निषिद्धकाला गयायां प्रतिप्रसूताः । यथा "विवाहव्रतचूड़ासु वर्षमर्द्धं तदर्द्धकम् । पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणमिति" कार्ष्णाजिनिवचनेन, "वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रिया । कृता गर्गादिभिर्मुख्यैर्मासमेकन्तु कर्म्मणामिति" स्मृतिसङ्ग्रहवाक्येन च विवाहादेरूर्द्ध्वं वर्षादिकालपर्य्यन्तं पिण्डदानस्य निषेधेऽपि "महालये गयाश्राद्धे मातापित्रोर्मृताहनि । कृतोद्वाहोऽपि कुर्व्वीत पिण्डनिर्व्वपणं सुत" इति, "पित्रोः क्षयाहे यज्ञे च पितृयज्ञे महालये । गयायां पिण्डदानस्य न कदाचिन्निराक्रियेति" च त्रिस्थलीसेतुधृतस्मृतिसङ्ग्रहवाक्याच्च तत्प्रतिप्रसवः । तथा तत्र तिलतर्पणनिषेधाभावोऽपि "उपरागे व्यतीपाते गयायामथ पर्व्वणि । आदित्यादिनिषेधेऽपि कर्त्तव्यं तिलतर्पणमिति" स्मृतिदर्पणधृतसङ्ग्रहवाक्यात् ।

अथ गयाश्राद्धे निषिद्धकालः । "तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् । अब्दमध्ये न कुर्व्वीत महागुरुनिपातने" इति गारुड़ात् प्रमीतमहागुरुकस्य वर्षमात्रं गयाश्राद्धं निषिद्धम् । तत्रायं विशेषः वृद्ध्यादिनिमित्तकसपिण्डीकरणे तु कर्त्तुं शक्यत एव "अस्थिक्षेपं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम् । अब्दमध्ये न कुर्व्वीत सपिण्डीकरणं विना" इति गारुड़वाक्यान्तरात् । अत्राप्यपरो विशेषः यदि पितृभक्तिमान् तदाब्दमध्येऽपि गयाश्राद्धं कर्त्तुं शक्नोति "अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् । प्रथमाब्देऽपि कुर्व्वीत यदि स्याद्भक्तिमान् सुतः" इति त्रिस्थलीसेतुधृतवचनात् । अत्र भक्तिः प्रीतिरिति वदन्ति । अन्ये तु अब्दमध्ये प्रेतस्य देवतात्वयोग्यतासिद्धये देवतासंस्कारकमेकं पार्व्वणं कर्त्तव्यं तदेव भक्तिपदाभिधेयं तच्च कृत्वा गयाश्राद्धं कुर्य्यादित्याहुः । भक्त्या वर्षमध्ये गयाश्राद्धकरणे तु वृद्धाविव मासिकादीन्यपकृष्य कार्य्याणीति बोध्यम् । अत्रैव सम्प्रदायानुसारिणी व्यवस्था अकृतसपिण्डनस्य प्रथमाब्दे गयाश्राद्धं नैव कार्य्यं कृतसपिण्डनस्यापि सति सम्भवे प्रथमाब्दे नैव कार्य्यमित्येव मुख्यः पक्षः प्रसङ्गतो गयाप्राप्तौ पुनरागमनाद्यसम्भवशङ्कायान्तु भक्त्या, कृतान्तरोक्तं श्राद्धं कृत्वा वा । प्रथमाब्देऽपि तत् कार्य्यं नित्य

शकुनौ गूढानि मन्त्रास्तथा । गोकार्यादि चतुष्पदे द्विज पिर्मनुद्दिश्य राज्यानि च । नागे स्थावरदारुणानि हरणं दौर्भाग्यकर्माशयत । किन्तुमे शुभमिष्टकृत्यकरण मङ्गल्यसिद्धिक्रिया ।"

गरघ्न पु॰ गर हन्ति हन–टक् । १कृष्णार्जके २वर्बरे च राजनि॰ । (गरुड) ३मत्स्यभेदे स्त्री ङीप् । भावप्र॰ तद्गुणा उक्ता यथा "गरघ्नी मधुरा तिक्ता तुवरा वातपित्तनुत् । कफघ्नी रुचिकृद्रुग्घ्नी दीपनी बलवीर्य्यकृत्" ।

गरण न॰ गृ–सेचने गॄ–निगरणे वा भावे ल्युट् । १सेचने २भक्षणे च । "गरुत्मान् गरणवान्" निरुक्तौ ६।१८ । ३विषे शब्दचि॰।

गरद न॰ गरेण सेचनेन दीयते खण्ड्यते दो–खण्डने कर्मणि बलर्थे क । १विषे हेम॰ दा–क कृत॰ । २विषदातरि त्रि॰ "अग्निदो गरदश्चैव" स्मृतिः ।

गरभ पु॰ गॄ–बा॰ अभच् । गर्भे हेमच॰ ।

गरल न॰ गिरति जीवनम् गॄ–अलच् गर सेचनं लाति प्रतीकाराय ला–क वा । १विषे अमर । "स्मरगरलखण्डन मम शिरसि मण्डनम्" "गरलमिव कलयति मलयसमीरम्" गीतगो॰ "सक्षादित गरलमिवाशनेन" भा॰ अ॰ ६७ अ॰ । २तृणपुले(घासेर आटि) ३सर्पविषे ४मानभेदे च हेमच॰ ।

गरलारि पु॰ ६त॰ । मरकतमणौ राजनि॰ । [शब्दरत्ना॰ ।

गरव्रत पुस्त्री गर विषवद्दुःसर्पभोजन व्रतमस्य । मयूरे

गरस् न॰ गॄ–बा॰ असुन् । १भक्षणे । "सगरा असि सुभग"ता॰ब्रा॰। "गरसा भक्षणेन सह वर्त्तमानः" भा॰।

गरहन् पु॰ गर हन्ति हन्–क्विप् । १कृष्णार्जके २वर्बरे च त्रिका॰ ।

गरा स्त्री स्ट–गॄ–वा अच् अजादेराकृतिगणत्वात् टाप् । १देवताडीशके राजनि॰। भावे–अ । २भक्षणे धरणी ।

गरागरी स्त्री गर मूर्च्छिकविषमागिरति गॄ–अच् गौरा॰ ङीप् । देवताडीशके अमरः ।

गरात्मक न॰ गरस्य विषस्येवात्मा यस्य । शिग्रुवीजे शब्दच॰।

गराधिका स्त्री गरे गरप्रतीकारेऽधिका श्रेष्ठा । लाक्षायाम् रत्नमा॰। गरायिकेति पाठान्तरे गर इवाचरति क्यच्–ण्वुल् । तत्रार्थे । [उभ॰ सेट् गरयति अजगरत् त ।

गरि (गुरु करोतीत्यर्थे णिच् गुरोर्गरादेश) गुरुकरणे अक॰

गरिमन् पु॰ गुरोर्भाव इमनिच् गरादेश । अध पतनसाधने ऊर्द्ध्वस्थितिविरोधिनि गुरुत्वरूपे गुणे । "पादाहतं यत् सहसा गरिम्णा" । "इतराकृत यदिदं गरिमग्लपितायसभनगमत्तनुताम्" माघ॰ । "प्रोद्यद्राजफलो गृहीतगरिमा विष्वग्वृतो भोगिभि "सा॰द॰ ।

गरिष्ठ त्रि॰ अतिशयेन गुरुः गुरु+इष्ठन् गरादेशः । १अतिगुरौ । २राजभेदे पु॰ "हविर्धांश्च गरिष्ठश्च हरिश्चन्द्रश्च पार्थिव" भा॰ स॰ ७अ॰ शक्रसभ्योक्तौ । ३दैत्यभेदे पु॰ । "हविष्यश्च गरिष्ठश्च मत्तयो नरक पृथु" हरिव॰ २६२ अ॰ दैत्योक्तौ ।

गरी स्त्री गॄ–पचाद्यच् तत्र गणे गरट् इति पाठात् ङीप् । देवताडीशके अमर गरागरीत्यत्र पदद्वयमित्यन्यमतात् ।

गरीयस् त्रि॰ अतिशयेन गुरु गुरु+ईयसुन् गरादेश । अतिगुरौ "सखा गरीयान् शत्रुश्च" "वाक्यस्यार्थगरीयस" माघ । स्त्रियां ङीप् । "तथापि शुश्रूषुरहं गरीयसी" माघ ।

गरुड पु॰ गरुद्भ्यां डयते डी–ड पृषो॰ तल्लोप । कश्यपात्मजे विनतागर्भजाते १पक्षिराजे अमर । "विनतापि सुसिद्धार्था बभूव मुदिता तदा । जनयामास पुत्रौ द्वावरुणं गरुडं तथा । विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसर । पतत्रिणान्तु गरुड इन्द्रत्वेनाभ्यषिच्यत" भा॰ आ॰ ३१अ॰ । विंशतिविधप्रासादमध्ये २प्रासादभेदे । "गरुडाकृतिश्च गरुडो नन्दीति षट्चतुष्कविस्तीर्णः । कार्य्यश्च सप्तभौमो विभूषितोऽण्डैश्च विंशत्या" बृ॰स॰ ५६अ॰ ३सैन्यनिवेशनभेदरूपे व्यूहभेदे । "दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा । वराहमकराभ्यां वा सूच्या वा गरुडेन वा" मनु । "सूच्याग्रवपक्षाङ्गाः पृथुमध्यो वराहव्यूह एष एव पृथुतरमध्यो गरुडव्यूहः तार्श्वौ पार्श्वयोर्भये सति प्रयोक्तु"कुल्लू॰ ।

गरुडध्वज पु॰ गरुडो ध्वजोऽस्य । १विष्णौ अमर । यथा च तस्य तत्केतनत्वं तथा खगासनशब्दे पृ॰२४१६ दृश्यम् । गरुडकेतनादयोऽप्यत्र । "पयासि भक्त्या गरुडध्वजस्य" माघ । "महाक्षो गरुडध्वज" विष्णु स॰ ।

गरुडपुराण न॰ गरुडायोक्तं विष्णुना पुराणम् । अष्टादशमहापुराणान्तर्गते सप्तदशे महापुराणभेदे । गरुडस्येदम् उद्देश्यतया अण् गारुडमप्यत्र । तत्सङ्ख्याप्रतिपाद्यविषयाश्च उत्तरख॰ १०८अ॰ नारदीयपुराणोक्ता यथा

"ब्रह्मोवाच । मरीचे । शृणु वक्ष्यद्य पुराणं गारुडं शुभम् । गरुडायाब्रवीत् पृष्टो भगवान् गरुडा-

४कलसे अल्पार्थे ङीप्। ५भ्ल्लघटे स्त्री “मैमाटौ सङ्गमो देया मारिपूर्णा तु गर्गरी” ति०त०। गर्गस्येदम् कृष्वा० यञ्। गार्ग्य तत्सम्बन्धिनि त्रि०।

गर्गशिरस् पु० दैत्यभेदे। “हरा गर्गशिरा यय” हरिव० २७०।

गर्गसंहिता स्त्री गर्गेण कृता कालज्ञानस्य संहिता। गर्गकृते ज्योतिषग्रन्थभेदे।

गर्गस्रोतस् न० भा०श० प्रसिद्धे सरस्वतीयस्थे तीर्थभेदे “त स्मादु गाच्छ्वतीर्थाञ्च महाबाहुररिन्दम। गर्गस्रोतो महातीर्थमाजगामैककुण्डली (बलभद्र)। यत्र गर्गेण वृद्धेन तपसा भावितात्मना। कालज्ञानगतिश्चैव ज्योतिषाञ्च व्यतिक्रम। उत्पाता दारुणाश्चैव शुभाश्च जनमेजय!। सरस्वत्याः शुभे तीर्थे विदिता वै महात्मना। तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम्। तत्र गर्गं महाभागमृषय सुव्रता नृप। उपासाञ्चक्रिरे नित्य कालज्ञान प्रति प्रभो।” भा० श० ३८अ०

गर्गाट पु स्त्री गर्गेति शब्दायाटति अट–अच्। मत्स्यभेदे हारा०।

गर्गादि पु० गोत्रे यञ्प्रत्ययनिमित्ते शब्दगणे सच गणः गर्ग वत्स (राजा से) संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग अगस्ति पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस् धनञ्जय वृक्ष विश्वावसु जरमाण लोहित संशित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष वृक्ष तनु तरुक्ष तलुक्ष तण्ड वतण्ड कपि कत कुरुकत अनडुह् कण्व शकल गोकक्ष अगस्त्य कुण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृषगण रहूगण शण्डिल चणक चुलुक मुद्गल मुसल जमदग्नि पराशर जातूकर्ण महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अररक एलाक पिङ्गल कृष्ण गोलन्द उलूक तितिक्ष भिषज् भिष्णज भडित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलू पिप्पलू वृहदग्नि सुलोहिन् सुलाभिन् उक्थ कुटीगु।

गर्ज्ज अव्यक्तशब्दे भ्वा० पर० अक० सेट्। गर्ज्जति। अगर्ज्जीत् सगर्ज्ज। गर्ज्जितम्। गर्ज्जन गर्ज्ज। गर्ज्जन्। गर्ज्जा। “गर्ज्ज गर्ज्ज क्षणं मूढेति” देवीमाहात्म्यम्। “शरदि गर्ज्जति, न वर्षति, वर्षति वर्षासु नि स्वनो मेघ” उद्भट। कुम्भकर्ण्णस्ततोऽगर्ज्जीत्” “गर्ज्जन् हरि साम्भसि शैलकुञ्जे” भट्टिः। “गोभान चैव गर्ज्जताम्” भा० भी० ६७८ श्लो०। “नाम संश्रावयामास जगर्ज्ज च ननाद च” रामा० सु० ८६। शीलार्थे चानश्। गर्ज्जमान। “तथात्र गर्ज्जमाने तु मेघवृन्दे ऽभिनिस्वनम्” भा० स्त्रा० १०अ०। “सन्ध्यायां गर्ज्जिते मेघे शास्त्रचिन्तां करोति यः। चत्वारि तस्य नश्यन्ति आयुर्विद्यायशोबलम्” स्मृति। “मासादिपञ्चरो मासान् गर्ज्जमान विवर्ज्जयेत्” स्मृति।

अनु+गर्ज्जनप्रतिध्वनगर्ज्जने। “अनुगर्ज्जितसन्दिग्धाः करणैः रजस्वला” कुमा०। अनुरूपगर्ज्जने च। “सोऽनुगर्ज्जन् धनुष्मान्” भा०द्रो० ९० अ०।

अभि+अभिमुख्य गर्ज्जने सक०। “दु शासनस्तामभिगर्ज्जमान” भा०स०६५अ०। ताच्छील्ये चानश्। “शार्दूलाविव चान्योन्यमभिपार्श्वेऽभ्यगर्ज्जताम्” भा०द्रो १२३अ। सम्यग्गर्ज्जने अक०। “शूराणाञ्चाभिगर्ज्जताम्” भा०क०२१अ०

प्रति+प्रतिरूपगर्ज्जने अक०। “वलवन्तापि सङ्क्रुद्धावन्योन्य प्रतिगर्ज्जताम्” भा० वि० २२अ०। आर्ष परस्मैपदत्वं। “प्रतीप पततो मत्तान् कुञ्जरान् प्रतिगर्ज्जत” भा० उ० ५० अ० “शुहृदयोहृदयः प्रतिगर्ज्जताम्” रघु। प्रतिस्पर्धीकृत्य गर्ज्जने सक०। “अयीषां कदन कृत्वा मामपि प्रतिगर्ज्जति” हरिव ४९अ०।

गर्ज्ज रवे चुरा० उभ० अक० सेट्। गर्ज्जयति ते अजगर्ज्जत्-त। गर्ज्जया बभूव आस–चकार चक्रे। गर्ज्जयन् गर्ज्जयमान।

गर्ज्ज पु० गर्ज्ज–भावे घञ्। १हस्तिशब्दे २मेघादिशब्दे च गुरुमत्त्वात् सेट्त्वाच्च भावे अ स्त्रियाम्। गर्ज्जा। २मेघादिध्वनौ स्त्री “ताण्डवगर्ज्जनागरभुजङ्गीलक्ष्यखर्वकक्रीड़ा। उत्कण्ठलवराटकरभसा स्त्रीत्वे तु टावन्ता” त्रिका०।

गर्ज्जक पु० गर्ज्ज–ण्वुल्। (याल) मत्स्यभेदे शब्दर०। त्रिदि०।

गर्ज्जन न० गर्ज्ज–भावे ल्युट्। १शब्दे करणे ल्युट्। २कोपे

गर्ज्जर न० गर्ज्ज–बा० अरच्। १मूञ्जने (गाजर) ख्याते मूलप्रधाने वृक्षे भावप्र०। “गर्ज्जरं मूञ्जनं प्रोक्तं तथा सारङ्गवर्णकम्। गर्ज्जरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु। सङ्ग्राहि रक्तपित्तार्शोग्रहणीकफवातजित्”।

गर्ज्जाफल पु० गर्ज्जया फलति फल–अच् ३त०। विकङ्कतवृक्षे राजनि०।

गर्ज्जि पु गर्ज्ज–भावे इन्। १मेघशब्दे हेम०।

गर्ज्जित न गर्ज्ज–भावे क्त। १मेघादिध्वनौ कर्म्मणि क्तः।

१मत्तगजे अमर० । २गर्जनकर्त्तरि मेघादौ त्रि० "स-न्ध्यायां गर्जिते मेघे शास्त्रचिन्ता करोति यः" स्मृति । गर्जो जातोऽस्य तार०—इतच् । ४जातगर्जने त्रि०।

**गर्ज्य** न० गर्ज—ण्यत् "न क्वादेः" पा० न कुत्वम् । गर्जनीये ।

**गर्त्त** पु० गृ—तन् । १भूमिच्छिद्रे २त्रिगर्त्तदेशे ३स्त्रीनितम्बस्य ककुन्दरे च विश्व० । ४रोगभेदे शब्दर० । ५गृहे निघ० । ६रथे ७सभास्थाणौ च निरु० । "अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम्" ऋचो निरुक्तौ गर्त्तः सभास्थाणुर्गृणाते सत्यसङ्गरो भवति रथोऽपि गर्त्त उच्यते गृणाते स्तुतिकर्म्मणः स्तुततमं यानम्" इति ३।५। "वरुण ! मित्र ! गर्त्तमपचाथे" ऋ० ५।६२।८। "गर्त्तं रथम्" भा० "नमस्यन्ता धृतदक्षाधिगर्त्ते" २५।६।५ । "गर्त्ते रथे" भा० । ८खातभेदे "धनुः-सहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदी-शब्दवहा गर्त्तास्ताः परिकीर्त्तिताः" ति० त० । "स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च" मनु । ९खातेन क्षतविलमात्रदेशे च "अशुचिस्थानम् उच्छिष्टलेपनस्थान गर्त्तादिकम्" मिता० । "न ससत्त्वेषु गर्त्तेषु न गच्छ-न्नापि च स्थितः" (मूत्रं कुर्य्यात्) मनु । "गर्त्तेष्वव-काशी-घासमित्यवधापयेत्" आश्व० गृ० २।८।१४ । "सर्वासा स्थूणानां गर्त्तेषु" नारा० "वर्षाभ्यस्तत्र गर्त्तेऽवदध्युः" ४।५।५ । "स्थाणु वध्नन्तु गर्त्ते वा पात्यते" क०भा०श्रुति । गर्त्तस्यादूरभवो देशः सुवास्त्वा० अण् । गार्त्त गर्त्तसन्नि-कृष्टदेशादौ त्रि० । तत चतुरर्थ्याम् प्रेक्षा० इनि । गर्त्तिन् गर्त्तसन्निकृष्टादौ त्रि० स्त्रियां ङीप् । गर्त्ते भव धूमा० वुञ् । गार्त्तक गर्त्तभवे त्रि० । उत्करा० चतु-रर्थ्यां छ । गर्त्तीय गर्त्तयुक्तदेशादौ त्रि० । कुमुदा० चतुरर्थ्यां ठच् । गर्त्तिक गर्त्तसन्निकृष्टदेशादौ । गर्त्तं तत्पतनमर्हति "छन्दसि च" पा० यत् । गर्त्त्य गर्त्तपतनमर्हति त्रि० छन्दसीत्युक्तेः वेद एवास्य प्रयोगः ।

**गर्त्तिका** स्त्री गर्त्तोऽस्त्यस्याः ठन् । १तन्तुवयनशालायां (ता-तघर) । हेमच० । २गर्त्तवति त्रि०।

**गर्द्द** रवे वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट् । गर्द्द-यति-ते गर्दति अजगर्दत्-त अगर्दीत् । गर्द्दयाम् बभूव आस चकार चक्रे जगर्द्द ।

**गर्द्दभ** पुस्त्री० गर्द—अभच् (गाधा) १जन्तुभेदे । स्त्रियां जातित्वात् ङीष् । "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" "अविश्राम वहेद्भारं शीतोष्णञ्च न विन्दति । ससन्तोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात्" चाणक० । "दीपनं गार्दभं मूत्रं कृमि-वातक-फापहम् । शोफकुष्ठोदरोन्मादमारुतक्रिमिनाशनम्" सुश्रु० तत्र पुंसामेव मूत्रं ग्राह्यं यथाह भावप्र० "खरोष्ट्रेभतराश्वानां पुंसां मूत्रं हितं स्मृतम्" । तस्यो-त्पत्ति "अथ यासां पांसव पर्य्यशिष्यन्त ततो गर्द-भः समभवत् तस्माद्यत्र पांसुलं भवति गर्दभस्थानमिव तत्रेत्याहुः" शत०ब्रा० ४।५।१।९ । तस्य पांसुषु उत्पन्न-त्वात् पांसुलस्थानप्रियता । "चण्डालश्वपचानान्तु बहि-र्ग्रामात् प्रतिश्रयः । अपात्राश्च कर्त्तव्या धनमेषां श्व-गर्दभम्" मनुना तस्य श्वपचादिधनत्वमुक्तम् । २गन्धे हेमच० । ३श्वेतकुमुदे ४विडङ्गे च न० रत्नमा० ।

**गर्द्दभगद** पु० जालगर्दभाख्ये रोगभेदे राजनि० । जाल-गर्दभशब्दे लक्षणादि ।

**गर्द्दभयाग** पु० गर्दभेन यागः । अवकीर्णिना पाप-क्षयार्थं नैर्ऋतदेवताककाणगर्दभपश्वालम्भनेन कर्त्तव्ये यागभेदे । तद्विधिर्मनुनोक्तो यथा

"अवकीर्णी तु काणेन गर्दभेन चतुष्पथे । पाक-यज्ञविधानेन यजेत निर्ऋतिं निशि । हुत्वाग्नौ विधि-वद्धोमानन्ततश्च समेत्यृचा । वातेन्द्रगुरुवह्नीनां जुहुयात् सर्पिषाऽऽहुती । कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः । अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः । मारुतं पुरु-हूतञ्च गुरुं पावकमेव च । चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः" ।

गर्दभयज्ञ गर्दभेज्यादयोऽप्यत्र । तत्र विशेष कात्या०श्रौ० सूत्रे उक्तो यथा ।

"याऽवकीर्णिनो गर्दभेज्या" सू०१।१।१२ "यो ब्रह्मचारी सन् स्त्रियं गच्छति सोऽवकीर्णी तस्यावकीर्णिनः स्खलित-ब्रह्मचर्य्यस्य गर्दभेज्या गर्दभेनेज्या यागो गर्दभेज्या प्राय-श्चित्तार्था भवति । वाशब्दो विकल्पार्थः तेन गृह्योक्तमपि प्रायश्चित्तान्तरमाज्याहुतिद्वयरूपं विकल्पेन भवति "अथाप-रमाज्याहुती जुहोति कामावकीर्णोऽस्मीत्यादिना" (पार-स्कर) शाखान्तरे उभयस्य विकल्पेन श्रुतत्वात् अत्रैतद्विचार्य्यते किं स्थपतीष्टिरवकीर्णिपशुश्च तदुभय-साधनसंस्कृतेष्वाहवनीयादिषु भवति उत लौकिके इति । तत्र प्रकृतित आहवनीयादिप्राप्तेराहवनीयादीनां चा-धाननिष्पाद्यत्वात् स्थपतेरवकीर्णिनश्चाधानविध्यभावेऽपि इष्टिपश्वोराधानं प्रयोजकम् अत एतदर्थमेवाधानेनाऽऽ-

क्रमः। एकोनविंशाध्याय तार्क्ष्यकल्पकथाचितम्। तत्र पूर्वखण्डे। "पुराणोपक्रमो यत्र सर्गः संक्षेपतस्ततः। सूर्य्यादिपूजनविधिर्दीक्षाविधिरतः परम्। श्राद्धादिपूजा तत्र नवव्यूहार्च्चनं द्विज।। पूजाविधानञ्च वैष्णवं तथा पञ्जरं ततः। योगाध्यायस्ततो विष्णोर्नामसाहस्रकीर्त्तनम्। ध्यानं विष्णोस्ततः सूर्य्यपूजा मृत्युञ्जयार्च्चनम्। मालामन्त्राः शिवार्च्चाऽथ गणपूजा ततः परम्। गोपालपूजा त्रैलोक्यमोहन श्रीधरार्च्चनम्। विष्णोरर्च्चा पञ्चतत्त्वार्च्चा चक्रार्च्चा देवपूजनम्। न्यासादिसन्ध्योपास्तिश्च दुर्गार्च्चाऽथ सुरार्च्चनम्। पूजा माहेश्वरी चातः पवित्रारोहणार्च्चनम्। मूर्त्तिध्यानं वास्तुमानं प्रासादानाञ्च लक्षणम्। प्रतिष्ठा सर्वदेवानां पृथक् पूजा विधानतः। योगोऽष्टाङ्गो दानधर्मः प्रायश्चित्तविधिक्रिया। द्वीपेशनरकाख्यानं सूर्य्यव्यूहश्च ज्यौतिषम्। सामुद्रिकं स्वरज्ञानं नवरत्नपरीक्षणम्। माहात्म्यमथ तीर्थानां गयामाहात्म्यमुत्तमम्। ततो मन्वन्तराख्यानं पृथक् पृथग् विभागशः। पित्राख्यानं वर्णधर्मा द्रव्यशुद्धिः समर्पणम्। श्राद्धं विनायकस्यार्च्चा ग्रहयज्ञस्तथाऽऽश्रमाः। जननाख्यं प्रेताशौचं नीतिसारो व्रतोक्तयः। सूर्य्यवंशः सोमवंशोऽवतारकथनं हरेः। रामायणं हरिवंशो भारताख्यानकं ततः। आयुर्वेदे निदानं प्राक् चिकित्सा द्रव्यजा गुणाः। रोगघ्नं कवचं विष्णोर्गारुडं त्रैपुरो मनुः। प्रश्नचूडामणिश्चान्ते हयायुर्वेदकीर्त्तनम्। ओषधीनामकथनं ततो व्याकरणोहनम्। छन्दःशास्त्रं सदाचारस्ततः स्नानविधिः स्मृतः। तर्पणं वैश्वदेवञ्च सन्ध्या पार्वणकर्म च। नित्यश्राद्धं सपिण्डाख्यं धर्मसारोऽघनिष्कृतिः। प्रतिसंक्रम उक्तोऽथ युगधर्माः कृतेः फलम्। योगशास्त्रं विष्णुभक्तिर्नमस्कृतिफलं हरेः। माहात्म्यं वैष्णवञ्चाथ नारसिंहस्तवोत्तमम्। ज्ञानामृतं गुह्याष्टकं स्तोत्रं विष्ण्वर्च्चनाह्वयम्। वेदान्तसांख्यसिद्धान्तं ब्रह्मज्ञानात्मकं तथा। गीतासारः फलोत्कीर्त्तिः पूर्वखण्डोऽयमीरितः"। उत्तरखण्डे प्रेतकल्पे। "अथास्यैवोत्तरे खण्डे प्रेतकल्पः पुरोदितः। यत्र तार्क्ष्येण संपृष्टो भगवानाह वाडव!।। धर्मप्रकटनं पूर्वं योनीनां गतिकारणम्। दानादिकं फलञ्चापि प्रोक्तमत्रौर्द्ध्वदैहिकम्। यमलोकस्य मार्गस्य वर्णनञ्च ततः परम्। षोडशश्राद्धफलकं वृत्तान्तञ्चात्र वर्णितम्। निष्कृतिर्यममार्गस्य धर्मराजस्य वैभवम्। प्रेतपीडाविनिर्द्देशः प्रेतचिह्ननिरूपणम्। प्रेतानां चरिताख्यानं कारणं प्रेततां प्रति। प्रेतकृत्यविचारश्च सपिण्डीकरणोक्तयः। प्रेतत्वमोक्षणाख्यानं दानानि च विमुक्तये। आवश्यकोत्तमं दानं प्रेतसौख्यकरं हितम्। शारीरकविनिर्द्देशो यमलोकस्य वर्णनम्। प्रेतत्वोद्धारकथनं कर्मकर्त्तृविनिर्णयः। मृत्योः पूर्वक्रियाख्यानं पश्चात् कर्मनिरूपणम्। मध्यं षोडशकं श्राद्धं स्वर्गप्राप्तिक्रियोहनम्। सूतकस्याथ सङ्ख्यानं नारायणवलिक्रिया। वृषोत्सर्गस्य माहात्म्यं निषिद्धपरिवर्जनम्। अपमृत्युक्रियोक्तिश्च विपाकः कर्मणां नृणाम्। कृत्याकृत्यविचारश्च विष्णुध्यानं विमुक्तये। स्वर्गतौ विहिताख्यानं स्वर्गसौख्यनिरूपणम्। भूर्लोकवर्णनञ्चैव सप्तधा लोकवर्णनम्। पञ्चोर्द्ध्वलोककथनं ब्रह्माण्डस्थितिकीर्त्तनम्। ब्रह्माण्डानेकचरितं ब्रह्मजीवनिरूपणम्। आत्यन्तिकलयाख्यानं फलस्तुतिनिरूपणम्। इत्येतद्गारुडं नाम पुराणं भुक्तिमुक्तिदम्"। तत्फलश्रुतिः। "कीर्त्तितं पापशमनं पठतां शृण्वतां नृणाम्। लिखित्वैतत्पुराणन्तु विषुवे यः प्रयच्छति। सौवर्णहंसयुग्माढ्यं विप्राय स दिवं व्रजेत्"।

गरुडमन्त्र पु० इत०। "स्वर्त्तिको नेत्रयुत पार्श्वस्थारोऽग्निचन्द्री। (क्षिप ओं स्वाहा)। गारुडो मनुराख्यातो विषद्वयविनाशनः। स्मरन् गरुडमात्मानं मन्त्रेण जपेश्वरः। विषमालोकनेनैव हन्यात्सागमव क्षत" तन्त्रसारे निबन्धोक्ते विषहारके मन्त्रभेदे।

गरुडमुद्रा स्त्री "हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठके। मिथस्तर्ज्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा। मध्यमानामिकाद्वे तु द्वौ पक्षाविव चालयेत्। एषा गरुडमुद्रा स्याद्विष्णोः सन्तोषवर्द्धिनी" तन्त्रसारोक्ते विष्णुपूजाङ्गे मुद्राभेदे।

गरुडरुत न० "गरुडरुतं नजौ भजतगा यदा सुदृशा" छन्दो० उक्तलक्षणे षोडशाक्षरपादके छन्दोभेदे इत०। गरुडस्य रवे च "भ्रमरमयूरमानसहरे गरुडरुत सुरारिभुजगेन्द्रसन्त्रासने" छन्दोम०।

गरुडवेगा स्त्री गरुडस्य वेग इव वेगो गमने यस्याः। गीत्रोत्पद्यमानलताभेदे। "वीरभयो वाराही ज्योतिष्मती च गरुडवेगा" इ०म० ५४ अ०।

गरुडव्यूह पु० गरुड इवाकृत्या व्यूहः। सैन्यनिवेशन-

विशेषण गरुडाकृतौ व्यूहभेदे गरुडशब्दे दृश्यम् ।

**गरुडाग्रज** पु० ६त० । विनतायाः ज्येष्ठपुत्रे सूर्यसारथौ १अरुणे । अमरः । तस्य गरुडाग्रजत्वकथा गरुडशब्दे दृश्या । "विभिन्नवर्णा गरुडाग्रजेन" माघ ।

**गरुडाङ्कित** न० गरुड इवाङ्कितं तुल्यवर्णत्वात् । १मरकतमणौ शब्दरत्ना० । गरुडाङ्काटयोऽप्यत्र ।

**गरुडाश्मन्** पु० गरुड इवाश्मा समानवर्णत्वात् । मरकतमणौ जटाधरः ।

**गरुडासन** न० "गरुडासनमाबध्य येन ध्यानस्थिरो भुवि । सर्वदोषाद्विनिर्मुक्तो भवतीह महाबली । एकपादमूरौ बद्ध्वा एकपादे च दण्डवत् । जङ्घापादसन्धिदेशे जान्वोरस्य व्यवस्थितम् । एतदासनमाख्यातं पृष्ठे वंशारसंज्ञया । आधार्यं योगनाथस्य स दास ईश्वरस्य च" रुद्रयामलोक्ते आसनभेदे ।

**गरुडोत्तीर्ण** पु० गरुडो वर्णेनोत्तीर्णः अतिक्रान्तो येन । मरकतमणौ राजनि० । [उपनिषच्छब्दे दृश्यम् ।

**गरुडोपनिषद्** स्त्री अथर्ववेदान्तर्गते गारुडाख्योपनिषद्भेदे ।

**गरुत्** पु० ऋ—गॄ—आ उति । खगानां नभोगतिहेतौ पक्षे (पाखा) अमरः । २गरणे गरुत्मच्छब्दे उदा० । ३भक्षणे च ।

**गरुत्मत्** पु० प्रशस्तौ गरुतौ स्तोऽस्य मतुप् यवादि० मस्य न वः । १गरुडे अमरः । "सुपर्णोऽसि गरुत्मान्" यजु० १२।४ । "अद्ध सवितुर्गरुत्मान् पूर्व्यो जातः" ऋ० १०।१४९।३ । २इविर्भक्षणवति पक्षी च । "सुपर्णोऽसि गरुत्मान् पृष्ठे" यजु० १७।७२ । "अग्ने ! त्वं सुपर्णोऽसि सुपर्णपक्षाकारो गरुड इवासि । गरुत्मान् गरुत् गरणं गिलनं भक्षणमस्यास्तीति गरुत्मान् अदनशीलोऽसीत्यर्थः" वेददी० । ३पक्षिमात्रे च ।

**गरुद्योधिन्** पु॰ स्त्री गरुता युध्यति युध—णिनि ३त० । भारतीवके (भारद्व) त्रिका० ।

**गरुल** पु० गरुड+डस्य ला च । गरुडे हेमच० ।

**गर्ग** पु० गॄ—ग तस्य नेत्त्वम् । आङ्गिरसे मुनिभेदे । "बृहस्पतेराङ्गिरसः पुत्रो राजन् ! महामुनिः । संक्रामितो भरद्वाजः" इत्युपक्रमे "वितथस्याभिषिच्याथ भरद्वाजो दिवं ययौ । स चापि वितथः पुत्रान् जनयामास पञ्च वै । सुहोत्रञ्च सुहोतारं गयं गर्गं तथैव च । कपिलञ्च महात्मानम्" हरिव० ३२ अध्या० । तस्य च शिवतोषात् चतुःषष्ट्यङ्गज्योतिर्ज्ञानं यथाह भा० अनु० १८अ० । "गर्गः उवाच चतुःषष्ट्यङ्गमददत् कालज्ञानं ममाद्भुतम् । सरस्वत्यास्तटे तुष्टो (शिवः) मनोयज्ञेन पाण्डव ।" कलाज्ञानमित्यपपाठः । तस्य च कालज्ञानप्रकारः भा० व० २८७०उक्तः । तस्य वाक्यं गर्गस्रोतःशब्दे दृश्यम् । तत्कृता ज्योतिषसंहिता गर्गसंहितेति प्रसिद्धम् । "नक्षत्राणि मुनिमुख्यानि नियताानि तानि दृढेदम् । क्रियते गर्गपराशरकाश्यपयातृभ्यरचितानि" "गर्गादीनां मतं वीक्ष्य" इति च वृ०सं० २१अ० । स च भरद्वाजगोत्रान्तर्गतः आर्षेयशब्दे ८।७५७पृ० दृश्यम् । तस्य गोत्रापत्यं गर्गा०यञ् । गार्ग्यः तद्गोत्रापत्ये पुंस्त्री । यून्यपत्ये फक् । गार्ग्यायणः यूनि तद्गोत्रापत्ये पुंस्त्री । बहुषु यञो लुक् अस्त्रियाम् । "गर्गा शतं भोज्यन्ताम्" महाभा० "गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगैन्यगार्ग्येति पञ्च" आश्व० श्रौ० १०।१२।१२। स्त्रियान्तु ङीप् यलोपश्च गार्गी इत्येव "गार्गी वाचक्नवी" आश्व० गृ० ३।४।४ । गार्ग्यश्च गार्ग्यायणश्च इत्येकशेषे "वृद्धो यूना" पा० वृद्धशेषे गार्ग्यौ । कुष्ठिरोगाक्रान्ते २मुनिभेदे । "ऋषिरासीत् महावीर्य्यः कुष्ठिगर्गो महायशाः" भा० श० ५२ अ० । तत्कथा वृद्धकन्याशब्दे दृश्या । गयाक्षेत्रे यज्ञार्थं सृष्टे ब्रह्मणो ३मानसपुत्रभेदे । "ब्रह्मा यज्ञं समारेभे स्रष्टान् मानसानृत्विजोऽसृजत्" इत्युपक्रमे "गर्गं कौशिकवासिष्ठौ" वायु० गयामा० २अ० । ४वृषे ५किञ्जुलुके शब्दार्थचि० । "चतुर्द्दुतविरामान्तस्तालोऽयं गर्गसंमितः" सङ्गीतदामोदरोक्ते ६तालभेदे पु० ।

**गर्गत्रिरात्र** पु० त्रिवृन्ति रात्रिभि० साध्यः अण् द्विगोर्लुक् लुकि व्यक्तिवचनत्वा गर्गकृतत्रिरात्रम् । त्रिसंख्यके त्रिदिनसाध्ये यागभेदे । "त्र्यहः पञ्च गर्गवैदच्छन्दोमान्तर्वसुपराकाः" कात्या० श्रौ० २३२।८ । "त्र्यहाः (त्र्यहसाध्याः") पञ्च अहीनाः । "द्विगौ क्रतौ" पा० पूर्वपदमन्तोदात्तम् । युक्तारोह्या० आद्युदात्तञ्च

**गर्गर** पुंस्त्री गर्गेति शब्दं राति रा—क ट—षा० गरन्त्र । "य पीतवर्णोऽपि च पिच्छनाह्व पृष्ठेषु रेखामण्डलमणलङ्क । स गर्गरो पर्वरमादरणो जडश्च मीन कफवातकारी" राजनि० उक्ताकारगुणे मत्स्यभेदे स्त्रियां जातित्वात् ङीप् । २तद्वपगौ ३दधिमन्थनभाण्डे च शब्दार्थचि० "गर्गरोद्गारनिस्वनम्" हरिव० ६१ अ० । "नैषा मह्यं च गोतमुता न गर्गरो मध्यते नो दलन्ते" भा० शा० ७० अ० । "न ह्या समवर्त्तरसमध्येरं च गर्गरा." भा० शा० ६८ अ० ।

ह्वनीयादौतूत्पाद्य तेष्वेतदुभयं कर्त्तव्यमिति प्राप्ते आह" कर्कः। "लौकिके" १४सू०। 'एतौ स्थपतीष्टयवकीर्णिपशू लौकिकेऽग्नौ भवतः न होमविशिष्टपशू आधान प्रयोजयतः आध्यानं हि तदैव सम्पद्यते यदा दर्शपूर्णमासाङ्गं भवति। न चाधानं दर्शपूर्णमासाङ्गम् स्वकाले हि पुरुषसंस्कारकत्वेन तद्विहितमिति। अतो लौकिकाग्नावेवैतावनुष्ठेयौ लौकिकमेव गार्हपत्यस्थाने स्थापयित्वा तत आहवनीयादिस्थानेषु विहृत्य स्थपतीष्टयवकीर्णिपशू दर्शपूर्णमासवच्छ्रपयत् कर्त्तव्यौ। अत्र विशेषविधानार्थमाह" कर्कः। "भूमौ पशुपुरोडाशश्रपणम्" १५सू०। "अवकीर्णिनो गर्दभपशुयागे पशुपुरोडाशस्य श्रपणं भूमावेव कर्त्तव्यम् न तु कपालेषु" कर्कः। "अप्स्ववदानहोमः" १६सू०। "अवदानानां हृदयजिह्वाक्रोडादीनां होमोऽप्सु उदकेषु भवति नाग्नौ वचनात्। अवदानग्रहणादन्यदाघाराज्यभागहोमादिकमग्नावेव कार्य्यम्" कर्कः। "शिश्नात् प्राशित्रावदानम्" १७सू०। "गर्दभस्य शिश्नात् प्राशित्रावदानं कार्य्यम् वचनात्" कर्कः।

गर्दभशाक पु० गर्दभोगन्धो शाकेऽस्य। मध्यदेशप्रसिद्धे (वामनहाटि)वृक्षे टा०। २तत्रैवार्थे स्त्री गौरा० ङीष् रत्नमा०।

गर्दभशाखी स्त्री गर्दभो गन्धः शाखाया यस्याः गौरा० ङीष्। १भार्ग्याम् राजनि०।

गर्दभाण्ड पु० गर्दभं गन्धमर्हति अम-गतौ ड। पत्रकाण्डफलादिभिरश्वत्थाकारे १वृक्षभेदे (पाकुड) अमर। (पिप्पली) ख्याते २वृक्षे शारसुन्दरी।

गर्दभाह्वय न० गर्दभेति आह्वयो यस्य। १कुमुदे हेमच०।

गर्दभिका स्त्री "मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकावृतम्। रुजाकारी गर्दभिकाम् तां विद्यात् वातपित्तजाम्" माधवकरोक्ते रोगभेदे।

गर्दभी स्त्री गर्द-अभच् गौरा० ङीष्। अग्निप्रकृतिके १कीटभेदे सुश्रु०कीटशब्दे २०४८पृ० विवृतिः। स्वार्थे क। २गर्दभिकारोगे सञ्ज्ञाया कन्। ३अपराजितायाम्४श्वेतकण्टकार्य्यां ५कटभ्याञ्च राजनि०। गर्दभ+जातौ स्त्रियां ङीष्। ६गर्दभजातिस्त्रियाञ्च तद्दुग्धादिगुणाः "वल्यं वातश्वासहरं मधुराम्लं च गार्दभम्। पयो रूक्षं दीपनञ्च सुपथ्यं परिकीर्त्तितम्। गार्दभं दधि रूक्षोष्णं लघु दीपनमुच्यते। पाचनं मधुराम्लञ्च रुचिकृत् वातदोषहृत्। गार्दभं नवनीतं च कषायं कफवातहृत्। वह्निञ्च दीपनं शाके सपूर्णं मूत्रदोषकृत्" राजनि०।

गर्द्द लिप्सायां चुरा० उभ० सक० सेट्। गर्द्दयति ते अजगर्द्दत् त। गर्द्दयाम् बभूव आस चकार चक्रे। गर्द्धः गर्द्धा। गर्द्धनः। [२गर्द्धभाण्डक मे च शब्दच०।

गर्द्ध पु० गृध-घञ् अच् वा। १अतिशयस्पृहायां, हेमच०।

गर्द्धन त्रि० गृध-युच्। लुब्धे अमर।

गर्व गतौ भ्वा० पर० सक० सेट्। गर्वति अगर्वीत् जगर्व।

गर्व दर्पे अद० चुरा०आत्म० अक०सेट्। गर्वयते अजगर्वत। गर्व। गर्वितः। "तदपसारगर्वितकण्ठसारम्" रघु।

गर्व पु० गर्व-दर्पे भावे घञ्। अहङ्कारे अमरः।

गर्भ(र्व्भ) पु० गृ-भन् वा हिंसे भस्य व। भ्रूणे देहजन्मकारके शुक्रशोणितानुबन्धजन्ये १मांसपिण्डे, २शिशौ, ३कुक्षौ, ४नाटकसन्धिभेदे, ५पनसकण्टके मेदि० ६अपवरके, हेमच० "आद्यक्षणाच्चतुर्दश्या यावदाप्लवते जलम्। तावद् गर्भं विजानीयात्" प्रा०त० उक्ते आद्यक्षणचतुर्दश्यां, गङ्गाजलाप्लावनस्थाने, ७अन्ने, ८अग्नौ, ९पुत्रे च शब्दार्थचि०। गर्भस्य देहहेतुता कायशब्दे १९०८पृ० दर्शिता कश्चिदत्र विशेषोऽभिधीयते। तत्र भावप्र०

"कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः। गर्भः सञ्जायते नार्य्यां स जातो बाल उच्यते। गर्भः शुद्धोऽशुद्धश्च अशुद्धस्तु गर्भोऽशुद्धशुक्रशोणितयोरपि दम्पत्योर्भवति यत आह "दम्पत्योः कुष्ठबाहुल्यात् दुष्टशोणितशुक्रयोः। यदपत्यन्तयोर्जातं ज्ञेयं तदपि कुष्ठितमिति"। कुष्ठं सञ्जातं यस्य तत् कुष्ठितम्, अत्र तारकादित्वादितच् प्रत्ययः। यत्तु, "वातादिदुष्टरेतस प्रजोत्पादने न समर्थाः" इति सुश्रुतः। तत्र शुद्धप्रजोत्पादने न समर्था इति बोद्धव्यम्। रोगादिनाऽशुद्धास्तु वातादिदुष्टशुक्रा अपि प्रजा जनयन्ति जन्मान्धबधिरपङ्ग्वादिसम्भवात्। अतो स्त्रीपुंसयोर्योगे मकरध्वजवेगतः। मेढ्रयोन्यभिसङ्घर्षाच्छरीरोष्मानिलाहतः। पुंसः सर्वशरीरस्थं रेतो द्रावयतेऽथ तत्। वायुर्मेहनमार्गेण पातयत्यङ्गनाभगे। तत् संसृत्य व्यात्तमुख याति गर्भाशयं प्रति। तत्र शुक्रवदायातेनार्त्तवेन युतं भवेत्। गर्भाशयस्य स्वरूपमाह शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता। तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता। यथा रोहितमत्स्यस्य मुखं भवति रूपतः। तद्रूपाकारा तथारूपा गर्भशय्यां विदुर्बुधा। अयमर्थः गर्भशय्याया मुखं रोहितमत्स्यस्येव भवति यथा च रोहितमत्स्यस्य स्थितिर्भवेत् भवति तथा शिरःपादपकाशयत्वेषां गर्भशय्यायाः

स्थितिर्भवति रूपमपि तस्यैव भवति यथा रोहितस्य मुखं स्वल्पमायस्तु महानित्यर्थः। शुक्रार्त्तवसमाश्लेषोयदैव खलु जायते। जीवस्तदैव विशति युक्त शुक्रार्त्तवान्तरं। सूर्य्याग्नी सूर्य्यमणितोऽत्तुभयस्माद्युताद्यथा। वह्निः सञ्जायते जीवस्तथा शुक्रार्त्तवाद्युतात्। आत्माऽनादिरनन्तश्चाऽव्यक्तो वक्तुं न शक्यते। चिदानन्दैकरूपोऽयं मनसापि न गम्यते। एवं भूतोऽपि जगतो भाविन्या बलवत्तया। अविद्यया कृत कर्म्मणो गर्भं विशत्यसौ। गर्भं चतुर्विंशतितत्त्वमयम्। स एव वेत्ता रसनो द्रष्टा घ्राता स्पृशत्यसौ। श्रोता वक्ता च कर्त्ता च गन्ता रन्तोत्सृजत्यपि। दिने व्यतीते नियतं सङ्कुचत्यम्बुजं यथा। ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा। ऋतौ रजोदर्शनात् षोडशनिशात्मके काले योनिरत्र भगद्वारम्।

"बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ। यमावित्यभिधीयेते धर्म्मेतरपुरःसरौ। धर्म्मस्तदितरोऽधर्म्मस्तौ पुरःसरौ ययोः तेन यमौ धर्म्माधर्म्माभ्यां भवत इत्यर्थः। आधिक्ये रेतसः पुत्रः कन्या स्यादार्त्तवेऽधिके। नपुंसकं तयोः साम्ये यदेच्छा पारमेश्वरी। नन्वेवं सति कथं पुत्रोत्पत्तिः सदैवार्त्तवस्यैव बाहुल्यात् यत उक्तम् "आर्त्तवं चतुरञ्जलिप्रमाणं शुक्रं प्रसृतिमात्रमिति" वाग्भटेऽप्युक्तमात्रेयादिभि "मज्जा मेदोवसा मूत्रपित्तश्लेष्मशकृदसृक्। रसो जलं च देहेऽस्मिन्नेकैकाञ्जलिवर्द्धितम्। पृथक् च प्रसृत मोक्तमोजोमस्तिष्करेतसाम्। द्वावञ्जली तु स्तन्यस्य चत्वारो रजसस्तु ते। समधातोरिदं मानं विद्यात् वृद्धिक्षयावत" इति। नैव, यतो गर्भाशयस्यैव शुक्रमार्त्तवं च गर्भोत्पत्तिहेतुः शुक्रं कदाचिदत्यन्तहर्षवशाद्वृष्यादिशुक्रवर्द्धद्रव्यसेवनात् शुक्रबाहुल्यात् गर्भाशये बहु स्रवति कदाचिद्दैवनस्यादिना शुक्राल्पत्वादल्पमिति एवमार्त्तवमपीति न दोषः। सुश्रुतः पुनराह "वैलक्षण्याच्छरीराणामस्थायित्वात् तथैव च। दोषधातुमलानां तु परिमाणं न विद्यते"। वैलक्षण्यात् दीर्घह्रस्वत्वादिभेदेन साम्याभावात् अस्थायित्वात् ययोर्वर्णियत्तु भुक्तेरेकमात्रानवस्थानात्। एवं तामभिसङ्कल्प्य पुनर्माषाद्व्रजेदसौ" मासादूर्द्ध्वमिति शेषः। मासागमनेन गर्भद्वारविघट्टनात् गर्भच्युतिप्रसङ्गः स्यात्। केचित्तु पुनः पुष्पदर्शनेन गर्भाभावनिश्चये मासात् पूर्व गच्छेत् लब्धगर्भां तु नोपगच्छेदिति वदन्ति। तत्र परिहार्य्यपरिहारार्थं सद्योगृहीतगर्भाया लक्षणमाह शुक्रशोणितयोर्योनेराश्रावोऽन्न शमोद्भव। सक्थिसादः पिपासा च ग्लानिः स्फूर्त्तिर्भगे भवेत्। अथ तस्या एतोत्तरकालीनं लक्षणमाह स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा। अक्षिपक्ष्माणि चाप्यस्याः समील्यन्ते विशेषतः"।

"छर्दयेत् पथ्यभुक् चापि गन्धादुद्विजते शुभात्। प्रसेकं सदनं चैव गर्भिण्या लिङ्गमुच्यते। तत्र पुत्रगर्भवत्या लक्षणमाह पुत्रगर्भयुतायास्तु नार्य्या मासि द्वितीयके। गर्भो गर्भाशये लग्नः पिण्डाकारोऽपरं शृणु। पिण्डो वर्त्तुलाकृतिः मासि द्वितीयक इत्यस्य गर्भः पिण्डाकारो लग्नः इत्यनेनैवान्वयो न त्वग्रिमश्लोकेऽपि। दक्षिणाक्षिमहत्त्वं स्यात् प्राक्क्षीरं दक्षिणे स्तने। दक्षिणोरुः सुपुष्टः स्यात् प्रसन्नमुखवर्णता। पुन्नामधेय द्रव्येषु स्वप्नेष्वपि मनोरथः। आम्रादिफलमाप्नोति स्वप्नेषु कमलादि च। कन्यागर्भवतीगर्भे पेशी मासि द्वितीयके। पुत्रगर्भस्य लिङ्गानि विपरीतानि चेक्षते। पेशी दीर्घाकृतिः। नपुंसकं यदा गर्भं भवेद्गर्भोऽर्बुदाकृतिः। उन्नते भवतः पार्श्वे पुरस्तादुदरं महत्। अर्बुदं वर्त्तुलं फलार्द्धतुल्यम्।

"अपरा अपि गर्भप्रकृतीराह यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थि स्तत्र जायते। अनस्थि अत्र पदद्वये नञ् तेनाल्पको मलास्थिरित्यर्थः। ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत्। आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि। मासि मासि प्रवर्द्धेत स गर्भो गर्भलक्षण। फलं जायते तस्य वर्जितं पैतृकैर्गुणैः। गर्भलक्षणप्राप्तगर्भलक्षणः। पैतृकैर्गुणैः केशश्मश्रुलोमनखदन्तशिरास्नायुधमनीरेतःप्रभृतिभिः। सर्पवृश्चिककुष्माण्डाकृतयो विकृताश्च ये। गर्भास्ते योषितश्चैव ज्ञेयाः पापकृतो भृशम्। गर्भो वातप्रकोपेण दोहदे चापमानिते। भवेत् कुब्जः कुणिः पङ्गुर्मूकोमिन्मिन एव च। पुत्राणामाहाराचारचेष्टाभेदस्य हेतुमाह आहाराचारचेष्टाभिर्य्यादृशीभिः समन्वितौ। स्त्रीपुंसौ समुपेयातां तयो पुत्रोऽपि तादृशः। समुपेयाता संयोगं गच्छेताम्। अथ गर्भलक्षणमाह। गर्भाशयगतं शुक्रमार्त्तवं जीवसङ्क्रमम्। प्रकृतिः सविकारा च तद्रूपं गर्भसंज्ञितम्।

कालेन वर्द्धितो गर्भो यदाङ्गोपाङ्गसंयुतः। भवेत्तदा स मुनिभिः शरीरीति निगद्यते। अङ्गोपाङ्गयुत व्यक्ताङ्गोपाङ्गः। तस्य त्वङ्गान्युपाङ्गानि ज्ञात्वा शास्त्रतः। मस्तकादभिधीयन्ते शिष्याः शृणुत यत्नतः। आद्यमङ्गं शिरः प्रोक्तं तदुपाङ्गानि कुन्तलाः। तथान्तर्मस्तुलुङ्गं च ललाटं भ्रूयुगं तथा। नेत्रद्वयं तयोरन्तर्वर्त्तिनी द्वे कनीनिके। छदिद्वयं कृष्णगोलौ श्वेतभागौ च वर्त्मनी। अथाप्यपाङ्गौ शङ्खौ च कर्णौ तच्छष्कुलीद्वयम्। पालिद्वयं कपोलौ च नासिका च प्रकीर्त्तिता। ओष्ठाधरौ च सृक्किण्यौ तस्य तालुहनुद्वयम्। दन्ताश्च दन्तवेष्टाश्च रसना चिबुकं तथा। द्वितीयमङ्गं ग्रीवा तु यया मूर्द्धा विधार्य्यते। तृतीयं बाहुयुगलं तदुपाङ्गान्यथ ब्रुवे। तत्रोपरिगतौ स्कन्धौ प्रगण्डौ भवतस्तथा। कफोणियुगलं तद्वत् प्रकोष्ठयुगलं तथा। मणिबन्धौ ततो हस्तौ तयोरङ्गुलयो दश। नखाश्च दश ते ख्याता दश छेद्याः प्रकीर्त्तिता। चतुर्थमङ्गं वक्षस्तु तदुपाङ्गान्यथ ब्रुवे। स्तनौ पुंसस्तथा नार्य्या विशेषस्तु तयोरयम्। यौवनागमने नार्य्याः पीवरौ भवतः स्तनौ। गर्भवत्याः प्रसूतायास्तावेव क्षीरपूरितौ। हृदयं पुण्डरीकेण सदृशं स्यादधोमुखम्। जाग्रतस्तद्विकसति स्वपतस्तु निमीलति। आशयस्तत्तु जीवस्य चेतनास्थानमुत्तमम्। अतस्तस्मिंस्तमोव्याप्ते प्राणिनः प्रस्वपन्ति हि। चेतनास्थानमुत्तममिति अयमभिप्रायः। चेतनानामधिष्ठानं मनो देहश्च सेन्द्रियः। केशलोमनखाग्रान्नमलद्रव्यगुणैर्विना” इत्युक्तया चरकेण सकलं शरीरं चेतनास्थानमुक्तम्। तदपेक्षया हृदयं विशेषतश्चेतनास्थानमिति। कक्षयोर्मध्यस सन्धी जत्रुणी समुदाहृते। कक्षे उभे समाख्याते तयोः स्याताञ्च वङ्क्षणौ। उदरं पञ्चमस्याङ्गं पश्च पार्श्वद्वयं मतम्। पृष्ठवंशः पृष्ठं तु समस्तं सप्तमं स्मृतम्। उपाङ्गानि च कथ्यन्ते तानि जानीहि यत्नतः। शोणिताज्जायते प्लीहा वामतो हृदयादधः। रक्तवाहिशिराणां स मूलं ख्यातो महर्षिभिः। हृदयाद्वामतोऽधश्च फुप्फुसो रक्तफेनजः। अधो दक्षिणतश्चापि हृदयाद् यकृतः स्थितिः। तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम्। अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति। जलवाहिशिरामूलं तृष्णाच्छादनकं मतम्। क्लोम तिलकम्। एतत्तु वातरक्तजम्। अत्र वाग्भटः “रक्तादनिलसंयुक्तात्काकोयकमलोद्भव इति। मेदःशोणितयोः साराद्वृक्कयोर्युगलं भवेत्। तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः। वस्ताः सारांस्तयो व्यामा पुरामस्थाश्च छर्दिषि। अर्द्धव्यामेन स्त्रीणामि योनितोऽन्त्राणि निर्द्दिशेत्। उण्डुकं च कटी चापि त्रिकं वस्तिश्च वङ्क्षणौ। वस्तिरान्ना शरीरे स्यात् स्थानं तद्द वीर्य्यमूत्रयोः। स एव गर्भस्याधानं कुर्य्याद्गर्भाशये स्त्रियाः। शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता। यस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता। वृषणौ भवतः सारात् कफासृग्भ्यां च मेदसाम्। वीर्य्यवाहिशिराधारौ तौ मतौ पौरुषावहौ। गुदस्य मानं सर्व्वस्य सार्द्धं स्याच्चतुरङ्गुलम्। तत्र स्युर्वलयास्तिस्रः शङ्खावर्त्तनिभास्तु ताः। प्रवाहिणी भवेत्पूर्व्वा सार्द्धाङ्गुलमिता मता। उत्सर्ज्जनी तु तदधः सा सार्द्धाङ्गुलसम्मिता। तस्याधः संवरणी स्यादेकाङ्गुलसमा मता। अर्द्धाङ्गुलप्रमाणं तु गुदौष्ठञ्च मतम्। मध्योरुसङ्गस्य भागोऽयं पायुदेशे विनिर्म्मितः। पुंसः प्रोक्तौ स्मृतौ यौ तु तौ नितम्बौ च योषितः। तयोः कुकुन्दरे स्यातां सक्थिनी तदनन्तरम्। तदुपाङ्गानि च ब्रूमो जानुनी पिण्डिकाद्वयम्। जङ्घे द्वे घुण्टिके पार्ष्णी तले च प्रपदे तथा। पादाङ्गुल्यश्च दश तासां नखा दश”। अथेदं शरीरमपरेणापि येन येन समवायिकारणेनोत्पद्यते तानि व्याख्याय अथ दोषा प्रवक्ष्यन्ते धातवस्तदनन्तरम्। आहारादेर्गतिस्तस्य परिणामश्च वक्ष्यते। आर्त्तवं चाथ धातूनां मलास्तदुपधातवः। आशयाश्च कलाश्चापि मर्म्माण्यपि च सन्धयः। शिराश्च स्नायवश्चापि धमन्यः कण्डरास्तथा। अस्थीनि भूरिस्रोतांसि जालानि कूर्च्चाश्च रज्जवः। सेवन्यश्चाय सङ्घाताः सीमन्ताश्च तथा त्वचः। लोमानि लोमकूपाश्च देह एतन्मयो मतः”।

१०मेघस्य जलवर्षणयोग्यतासम्पादके निमित्तभेदे च च बृ०सं० २१ अ० उक्तो यथा

“दैवविदवहितचित्तो द्युनिशं यो गर्भलक्षणे भवति। तस्य मुनेरिव वाणी न भवति मिथ्याम्बुनिर्द्देशे। किं वाऽन्यत् परमन्यच्छास्त्रं ज्यायोऽस्ति यद्विदित्वैव। प्रध्वंसिन्यपि काले त्रिकालदर्शी कलौ भवति। केचिद्वदन्ति कार्त्तिकशुक्लान्तमतीत्य गर्भदिवसाः स्युः। न तु तन्मतं बहूनां, गर्गादीनां मतं वक्ष्ये। मार्गशिरःशुक्लप्रतिपत्प्रभृति क्षपाकरेऽषाढाम्। पूर्व्वां वा समुपगते गर्भाणां

तत्रत्वं ज्ञेयम्। यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत् स चन्द्रवशात्। पञ्चनवते दिनशते १९५ तत्रैव प्रसवमायाति। सितपक्षभवाः कृष्णे, शुक्ले कृष्णाद्युसम्भवा रात्रौ। नक्तंप्रभवाश्चाहनि सन्ध्याजाताश्च सन्ध्यायाम्। मृगशीर्षाद्या गर्भा मन्दफलाः पौषशुक्लजाताश्च। पौषस्य कृष्णपक्षेण निर्दिशेच्छ्रावणस्य सितम्। माघसितोत्था गर्भाः श्रावणकृष्णे प्रसूतिमायान्ति। माघस्य कृष्णपक्षेण निर्दिशेद्भाद्रपदशुक्लम्। फाल्गुनशुक्लसमुत्था भाद्रपदस्यासिते विनिर्देश्याः। तस्यैव कृष्णपक्षोद्भवास्तु ये तेऽश्वयुक्शुक्ले। चैत्रसितपक्षजाताः कृष्णेऽश्वयुजस्य वारिदा गर्भाः। चैत्रासितसम्भूताः कार्त्तिकशुक्लेऽभिवर्षन्ति। पूर्वोद्भूताः पश्चादपरोत्थाः प्रागभवन्ति जीमूताः। शेषास्वपि दिक्ष्वेवं विपर्ययो भवति वायोश्च। ह्लादिमृदूदक्शिवशक्रदिग्भवो मारुतो वियद्विमलम्। स्निग्धसितबहुलपरिवेषपरिवृतौ हिममयूखार्कौ। पृथुबहुलस्निग्धघनं घनसूचीक्षुरकलोहिताभ्रयुतम्। काकाण्डमेचकाभं वियद्विशुद्धेन्दुनक्षत्रम्। सुरचापमन्द्रगर्जितविद्युत्प्रतिसूर्यका शुभा सन्ध्या। शशिशिवशक्राशास्था शान्तरवाः पक्षिमृगसङ्घाः। विपुलाः प्रदक्षिणचराः स्निग्धमयूखा ग्रहा निरुपसर्गाः। तरवश्च निरुपसृष्टाङ्कुरा नरचतुष्पदा हृष्टाः। गर्भाणां पुष्टिकराः सर्वेषामेव योऽत्र तु विशेषः। स्वर्तुस्वभावजनितो गर्भविवृद्धौ तमभिधास्ये। पौषे समार्गशीर्षे सन्ध्यारागोऽम्बुदाः सपरिवेषाः। नात्यर्थं मृगशीर्षे शीतं पौषेऽतिहिमपातः। माघे प्रबलो वायुस्तुषारकलुषद्युती रविशशाङ्कौ। अतिशीतं सघनस्य च भानोरस्तोदयौ धन्यौ। फाल्गुनमासे रूक्षश्चण्डः पवनोऽभ्रसम्प्लवाः स्निग्धाः। परिवेषाश्चासकलाः कपिलस्ताम्रो रविश्च शुभः। पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः। घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे। मुक्तारजतनिकाशास्तमालनीलोत्पलाञ्जनाभासः। जलचरसत्त्वाकारा गर्भेषु घनाः प्रभूतजलाः। तीव्रदिवाकरकिरणाभितापिता मन्दमारुता जलदाः। रुषिता इव धाराभिर्विसृजन्त्यम्भः प्रसवकाले। गर्भोपघातलिङ्गान्युल्काशनिपांशुपातदिग्दाहाः। क्षितिकम्पखपुरकीलककेतुग्रहयुद्धनिर्घाताः। रुधिरादिवृष्टिवैकृतपरिघेन्द्रधनूंषि दर्शनं राहोः। इत्युत्पातैरेभिस्त्रिविधैश्चान्यैर्हतो गर्भः। स्वर्तुस्वभावजनितैः सामान्यैर्यैश्च लक्षणैर्वृद्धिः। गर्भाणां विपरीतैस्तैरेव विपर्ययो भवति। भाद्रपदाद्वयविश्वाम्बुदेवपैतामहेष्वथर्क्षेषु। सर्वेष्वृतुषु विवृद्धो गर्भो बहुतोयदो भवति। शतभिषगाश्लेषार्द्रास्वातिमघासंयुतः शुभो गर्भः। पुष्णाति बहून्दिवसान् हन्त्युत्पातैर्हतस्त्रिविधैः। मृगमासादिष्वष्टौ षट् षोडश विंशतिश्चतुर्युक्ता। विंशतिरथ दिवसत्रयमेकतमर्क्षेण पञ्चभ्यः। क्रूरग्रहसंयुक्ते करकाशनिमत्स्यवर्षदा गर्भाः। शशिनि रवौ वा शुभसंयुतेक्षिते भूरिवृष्टिकराः। गर्भसमयेऽतिवृष्टिर्गर्भाभावाय दुर्निमित्तकृता। द्रोणाष्टांशेऽभ्यधिके वृष्टे गर्भः स्रुतो भवति। गर्भः पुष्टः प्रसवे ग्रहोपघातादिभिर्यदि न वृष्टः। आत्मीयगर्भसमये करकामिश्रं ददात्यम्भः। काठिन्यं याति यथा चिरकालधृतं पयः पयस्विन्याः। कालातीतं तद्वत् सलिलं काठिन्यमुपयाति। पञ्चनिमित्तैः शतयोजनं तदर्धार्धमेकहान्यातः। वर्षति पञ्च समन्ताद्रूपेणैकेन यो गर्भः। द्रोणः पञ्चनिमित्ते गर्भे त्रीण्याढकानि पवनेन। षड् विद्युता नवाभ्रैः स्तनितेन द्वादश प्रसवे। पवनसलिलविद्युद्गर्जिताभ्रान्वितो यः स भवति बहुतोयः पञ्चरूपाभ्युपेतः। विसृजति यदि तोयं गर्भकालेऽतिभूरि प्रसवसमयमित्वा शीकराम्भः करोति"।

"गर्भोऽभवद्भूधरराजपत्न्याः" कुमा०। "नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी" रघु। "गर्भो जरायुणावृत उल्बं जहाति जन्मना" यजु० १९।७६। "यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्" गीता। कुक्षिश्च गर्भशायस्थानम्। तत्र "गर्भे यदि विपत्तिः स्यात् दशाहं सूतकी भवेत्" शु०त० "कुन्त्या गर्भेण धारित" भा०व० १९७अ०। "देहादुत्क्रमणं चास्मात् पुनर्गर्भे च सम्भवम्" मनुः। आधारे च्यमन्। ११ गर्भारम्भकाले "गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्" मनु। "तस्मात् गर्भाम्बिते शुभ्रे पतिसौभाग्यवर्द्धिनी" उ०त०। १२ अभ्यन्तरे "तासां मध्ये रावणगर्भगैः" स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि" "आविर्भूतकुशगर्भमुखं मृगाण्याम्" "निधानगर्भामिव सागराम्बराम्" रघु। "मत्स्या नाव मधुरभितगर्भाः" सा०द०। "नष्टो न दृश्यते यत्र धर्मो गर्भे स्तनायन" भा० शा० ४८ अ०। जलोत्पादकगर्भे "अष्टमासधृतं गर्भं भास्करस्य गभस्तिभिः। रसं सर्वं समुद्राणां द्यौः प्रसूते रसायनम्" रामा० कि० [illegible]। तस्य अष्टमासधृतत्वञ्च मनुनोक्त

यथा "षष्ठी भाषान् मधादिभ्यश्चोयं हरति नित्यशः" मनुः। गर्भोपपत्ते पुंसि "अस्यास्त्वामष्टमो गर्भो हन्ता, यां वहसेऽबुध!" भाग० १०।१।२४। "देवक्या जठरे गर्भं शेषाख्यं धाम मामकम्" भाग० १०।२।७। नाटकसन्धिभेदे च सा०द०उक्तो यथा "अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति" सन्धिं लक्षयित्वा "मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः। इति पञ्चास्य भेदाः स्युः" इति तं पञ्चधा विभज्य "फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन। गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः" तल्लक्षणमुक्त्वा तस्य गर्भसन्ध्यर्थत्वे युक्तिप्रदर्शनपूर्वकम् उदाहृतं यथा

"फलस्य गर्भीकरणाद्गर्भः। यथा रत्नावल्यां द्वितीयेऽङ्के "सुसङ्गता सहि! अदक्खिणा दाणिं सि तुमं, जा एवं भट्टिणा हत्थेण गहिदावि कोवं ण मुञ्चसि" इत्यादौ समुद्भेदः। पुनर्वासवदत्ताप्रवेशे ह्रासः। तृतीयेऽङ्के "तदार्त्तान्वेषणाय गतः कथं चिरयति वसन्तकः" इत्यन्वेषणम्। "विदू। ही ही भो भो कोसम्बीरज्जलम्भेणावि ण तारिसो पिअवअस्सस्स परितोसो जादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि" इत्यादौ समुद्भेदः। पुनरपि वासवदत्ताप्रत्यभिज्ञानात् ह्रासः। पुनः सागरिकायाः सङ्केतस्थानगमने अन्वेषणम्। पुनर्लतापाशकरणे समुद्भेदः।

"यत्र तत्त्व नोपाय उद्भेदो गर्भतोऽधिक" सा० द०। गर्भो जातोऽस्य तारका० इतच्। गर्भित जातगर्भे काव्यदोषभेदे च। दोषशब्दे दृश्यम्। सगर्भ्य।

गर्भक पु० गर्भे केशमध्ये कायति कै–क। १केशमध्यस्थे माल्ये अमरः। गर्भ+स्वार्थे कन्। २रात्रिद्वये न० हेमच०।

गर्भंकर पु० गर्भं करोति निष्पादयति सेवनेन कृ–ट। १पुत्रजीववृक्षे भावप्र०। २गर्भकारके त्रि०।

गर्भकार पु० गर्भं करोति कृ–ण्वुल्। १गर्भाधानकारके भर्त्रादौ। गर्भे मध्ये कारः स्तवनकर्मापि वैराजस्य यत्र। रथन्तरसोमयोर्मध्ये वैराजपाठरूपे २स्तोत्रभेदे न०। "गर्भकारत्वेव स्तुवीरन्नवैव स्तोत्रियासूपात्" आश्व० श्रौ० ८।५। "प्रवेदिति शेषः। रथन्तरस्याद्ये ततो वैराजेन ततो रथन्तरेण। अनेन गर्भकारत्वमुपपद्यते" नारा० वृ०। "इहवैराजाभ्यां चैवम्" ६सू०। "एतमेव गर्भकारमेवेत्यर्थः" नारा०वृ०।

गर्भकोष पु० गर्भस्य कोष आधार इव। गर्भाशये। "गर्भकोषपरासङ्गो योनिसंवृतिः। तस्मात् स्वयं मूढगर्भे यथोक्तांश्चाप्युपक्रमाः" सुश्रुतः।

गर्भगृह न० गर्भस्य मध्यस्य गृहम्। गृहमध्यभागे। "नानानगरविमानेषु तथा गर्भगृहेषु च" भा० व० ११७५०। "कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्षा बहिः सख्या" सा० द०। गर्भभवनादयोऽप्यत्र। "निर्गत्य गर्भभवनात्" मालतीमा०। [इचे रत्नमा०।

गर्भघातिनी स्त्री गर्भं हन्ति हन–णिनि। लाङ्गलिका०

गर्भच्युति स्त्री ६त०। गर्भस्रावे तत्प्रकारादि सुश्रुते उक्तं यथा

"ग्राम्यधर्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीडनधावनाभिघातविषमशयनासनोपवासवेगाभिघातातिरूक्षकटुतिक्तभोजनशोकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भपातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः फलमिव वृन्तबन्धनादभिघातविशेषैः। स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसङ्क्षोभमापादयति तस्य जठरसङ्क्षोभाद्वायुरपानो मूढः पार्श्ववस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं व्यापादयति तरुणं शोणितस्रावेण, तमेव कदाचिद्विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानमपानवैगुण्यसम्मोहितं गर्भं मूढगर्भमित्याचक्षते। तत्र स कीलः प्रतिखुरो बीजकः परिघ इति। तत्र ऊर्ध्वबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव स कीलः। निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः। यस्तु निर्गच्छत्येकशिरोभुजः स बीजकः। परिघ इव योनिमुखमावृत्य तिष्ठेत् स परिघ इति चतुर्विधो भवतीत्येके भाषन्ते तत्तु न सम्यक् कस्मात् स यदा विगुणानिलप्रपीडितोऽपत्यपथमनेकधा प्रतिपद्यते तदा सङ्ख्या हीयते। तत्र कश्चिद् द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते कश्चिदाभुग्नैकसक्थिरेकेन, कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यगागतः। कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते। अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना। कश्चिदाभुग्नशिरा बाहुद्वयेन। कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः। कश्चिदेकेन सक्थ्ना योनिमुखमभिप्रतिपद्यतेऽपरेण पायुमित्यष्टविधा मूढगर्भगतिरुद्दिष्टा समासेन। तत्र द्वावन्त्यावसाध्यौ मूढगर्भौ शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कल

श्वासकासभ्रमनिपीडितान् परिहरेत् । भवन्ति चात्र । कालस्य परिणामेन मुक्तं वृन्तात् यथा फलम् । पतत्ते स्वभावेन नान्यथा पतितं फलम् । एवं कालप्रकर्षेण मुक्तो नाडीनिबन्धनात् । गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते । कृमिवाताभिघातैस्तु तदेवोपद्रुतं फलम् । पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युतिः । आ चतुर्थात्ततो मासात्प्रस्रवेद्गर्भविच्युतिः । ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः । प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा । नीलोद्धतसिरा हन्ति सा गर्भं स च तां तथा । गर्भास्पन्दनमावीनां (गर्भवतीनाम्) प्रणाशः श्यावपाण्डुता । भवत्युच्छ्वासपूतित्वं शूलं चान्तर्गते शिशौ । मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः । गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः । वस्तमात्रविपन्नायाः कुक्षिः प्रस्पन्दते यदि । तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद्भिषक् ।"

गर्भविच्युतिः गर्भपतनादयोऽप्यत्र । [गाड़] त्रिका० ।

**गर्भण्ड** पु० गर्भस्याण्ड इव शक० । नाभिगुडके (नाभिर-

**गर्भद** पु० गर्भं ददाति सेवनेन दा—क । १पुत्रजीववृक्षे राजनि० । २गर्भसम्पादके औषधभेदे च ।

**गर्भदात्री** स्त्री गर्भं ददाति दा—तृच् ङीप् । तापसद्रुमसमानपत्राख्यायामपत्यदायामोषधिभेदे राजनि० । "अपत्यदा तु मधुरा शीतला पित्तदाहनुत् । नारीपुष्पादिदोषघ्नी श्रमनाशिनी । गर्भसम्भवदात्री च सेवनात् परिकीर्त्तिता" राजनि० ।

**गर्भदास** पु० गर्भात् गर्भमारभ्य दासः । गृहजातदासादुत्पन्ने दासभेदे । "शूद्रस्य दानं वा दर्शनाविरोधाच्चात्" कात्या०श्रौ०२२।१।११। कर्क० व्याख्यायां "शूद्रस्य दानं भवति दृश्यते हि दानं पुरुषमेधे । "सपुरुषमाचीदिश् मोक्षः" शत०ब्रा० १३।६।२।११ । "न च विरोधो गर्भदासस्य" कर्कः ।

**गर्भध** न० गर्भं दधाति धा—क । रेतसि । "आऽहमजानि गर्भधमा त्वमजासि गर्भधम्" यजु० २३।१९ । "गर्भध गर्भधारकं रेतः" वेददी० ।

**गर्भधारण** न० ६त० । अपत्योत्पादनार्थं शुक्रशोणितानुबन्धरूपगर्भग्रहणे । तद्धारणलिङ्गञ्च मिताक्षरायां दर्शितं यथा "गर्भधारणञ्च श्रमादिभिर्लिङ्गैरवगन्तव्यं तथाच श्रुतिः "सद्योगृहीतगर्भाया श्रमो ग्लानिः पिपासा' अवसन्ना निषदनं शुक्रशोणितयोरनुबन्धः स्फुरणञ्च योन्याः" गर्भशब्दे दर्शिते भावप्र० वाक्ये विवृतिः तद्धारणाय विधिः स्मा० त० दर्शितो यथा "पुत्रोत्पत्तौ पारस्करः "सा यदि गर्भं नादधीत निदिग्धिकायाः सिंह्याः श्वेतपुष्प्याया उपोष्य पुष्येण मूलमुद्धृत्य चतुर्थेऽहनि स्नातायां निशायामुदकेन पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीति "इयमोषधी त्रायमाणा सहमाना सरस्वती । अस्या अहं बृहत्याः पुत्र पितुरिव नाम जग्रभमिति" "सा परिणीता ऋतुकाले कृताभिगमना यदि गर्भं न धारयति तदा उपोष्य पुष्ये नक्षत्रे श्वेतकण्टकारिकाया मूलमुत्पाट्य चतुर्थेऽहनि ऋतुस्नातायाः पत्न्या रात्रावुदकेन दक्षिणनासापुटे प्रतिरियमोषधी त्रायमाणा, इति मन्त्रेण सिञ्चति नस्यं ददाति दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा प्राक्शिरःसुविष्टायाः इति । आयुर्वेदीयेऽपि । "पिप्पल्याः शृङ्गवेरस्य मरिचं नागकेशरम् । आज्येन सह भुञ्जीत सापि वन्ध्या प्रसूयते" । "गर्भधारणजं याऽपि न खेदं समवाप्स्यसि" भा० व० १२६ अ० ।

**गर्भनुद्** पु० गर्भं नुदति नुद—क्विप् । कलिकार्य्यां वृक्षे (विषलाङ्गला) भावप्र० ।

**गर्भपाकिन्** पु० गर्भस्य पाको पुष्टिः साध्यत्वेनास्त्यस्य इनि । षष्टिधान्ये (षेटेरा धान) हेमच० । यथा च तस्य गर्भपोषकत्वम् तथा गर्भपोषणशब्दे वक्ष्यते ।

**गर्भपात** पु० ६त० । गर्भस्रावे स तु पञ्चमादिमासस्यैव कठिनशरीरस्य भवति तत्प्रमाणं गर्भच्युतिशब्दे द्रष्टव्यम् ।

**गर्भपातक** पु० गर्भं पातयति सेवनात् पत—णिच्—ण्वुल् । रक्तशोभाञ्जने जटा० ।

**गर्भपातन** पु० गर्भं पातयति पाति—ल्यु । १रीठावृक्षे भावप्र० गौरा० ङीप् । २कलिकारीवृक्षे स्त्री राजनि० ।

**गर्भपातिनी** स्त्री गर्भं पातयति—पत—णिच्—णिनि ङीप् । विशल्यावृक्षे जटाधरः ।

**गर्भपोषण** न० ६त० । गर्भस्य पुष्टिसम्पादके विधौ स च सुश्रुते दर्शितः यथा "गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुचिरलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेन्मलिनविकृतहीनगात्राणि न स्पृशेद्दुर्गन्धदुर्दर्शनानि परिहरेदुद्वेजनीयाश्च कथाः, शुष्कं पर्युषितं कुथितं क्लिन्नं चान्नं नोपभुञ्जीत बहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयसङ्कटांश्च भारादुच्चैर्भाष्यादिकं परिहरेद्यानि च गर्भं व्यापादयन्ति

नचाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत नचायासयेच्छरीरं पूर्वोक्तानि च परिहरेत्। शयनासने मृद्वास्तरणे नात्युच्चमपाश्रयोपेतमसम्बाधं विदध्यात्। हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत् सामान्यमेतदा प्रसवात्। विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत। विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेच्चतुर्थे दध्ना पञ्चमे पयसा षष्ठे सर्पिषा चेत्येके। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं भोजयेत्। पञ्चमे क्षीरसर्पिःसंसृष्टं षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद्यवागूं वा। सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धम् एवमाप्याय्यते गर्भः। अष्टमे बदरोदकेन बलातिबलाशतपुष्पापललपयोदधिमस्तुतैललवणमदनफलमधुघृतमिश्रेणास्थापयेत् पुराणपुरीषशुद्ध्यर्थमनुलोमनार्थञ्च वायोः। ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेत् अनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति। अत ऊर्द्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेदाप्रसवकालात् एवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते" विशालपारि० तत्पोषणविधिर्मासभेदपूर्वको दर्शितो विस्तरभयान्नोक्तस्तत्रावसेय।

गर्भप्रसव पु० ६त०। गर्भस्य तद्युक्तस्त्रियो प्रथमप्रकाशनरूपे दर्शनयोग्यतापादनरूपकर्मभेदे तत्र कालश्च "नवमे दशमे मासि प्रबलैः सूतिमारुतैः। निःसार्य्यते बाण इव जन्तुश्छिद्रेण सज्वर"याज्ञ०उक्तः। तद्विधानं सुश्रुते दर्शितं यथा।

"नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वन्यग्रोधतिन्दुकभल्लातकनिर्मितं सर्वागारं यथासंख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्राग्द्वारं दक्षिणद्वारं वाष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम्। जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने। सशूले जघने नारी ज्ञेया सा तु प्रजायिनी। तत्रोपस्थितप्रसवायाः कटीपृष्ठं प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च। प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमाकण्ठात् पाययेत्। ततः कृतोपधाने मृदुविस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानामशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयुरिति। अथास्या विशिखान्तरमनुलोममनुसुखमभ्यज्याद्रूयाच्चैनामेका सुभगे!" प्रवाहयस्वेति न चाप्राप्तावी (अप्राप्तप्रसववेदनाम्) प्रवाहयस्व ततो विमुक्ते गर्भनाडीप्रबन्धे सशूलेषु श्रोणिवङ्क्षणबस्तिशिरःसु प्रवाहयेथाः शनैः शनैः। ततो गर्भनिर्गमे प्रगाढं, ततो गर्भे योनिमुखं प्रपन्ने गाढतरमा विशल्यभावात्। अकालप्रवाहणाद्बधिरं मूकं व्यस्तहनुं मूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकटं वा जनयति। तत्र प्रतिलोममनुलोमयेत्। गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेण पिण्डीतकेन वा। बध्नीयाद्धिरण्यपुष्पीमूलं हस्तपादयोः धारयेत् सुवर्चलां विशल्यां वा। अथ जातस्योल्वमपनीय मुखञ्च सैन्धवसर्पिषा विशोध्य घृताक्तं मूर्द्धि पिचुं दद्यात्ततो नाभिनाडीमष्टाङ्गुलमायम्य सूत्रेण बद्ध्वा छेदयेत्तत्सूत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग्बध्नीयात्। अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्म्मणि कृते मधुसर्पिरनन्तामाक्षीरसेन सुवर्णचूर्णमङ्गुल्यानामिकया लेहयेत्ततो बलातैलेनाभ्यज्य क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनं कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवञ्च। धमनीनां हृदिस्थानां विवृतत्वादनन्तरम्। चतूरात्रात्त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्त्तते। तस्मात् प्रथमेऽह्नि मधुसर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेद्द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च। ततः प्राङ्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसम्मितं द्विकालं पाययेत्"।

गर्भभर्मन् न० गर्भस्य शिशो भर्म भरणं भृ—भावे मनिन्। कुमारभृत्याकर्मणि तद्विधानादि सुश्रुतोक्तं कुमारभृत्याशब्दे दर्शितम्। 'कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि' रघु।

गर्भमास पु० गर्भस्य तदारम्भस्य मासः तत्सहितो मासः। १गर्भारम्भमासे २गर्भसहिते मासे च "यदि नाधीयात् तृतीये गर्भमासि" आश्व० श्र० ९।१।२। "गर्भसहितो मासः गर्भमास" इति नारा०। ३गर्भधारणक्षमे मासि च गर्भस्रावशब्दे दृश्यम्।

गर्भयोषा स्त्री गर्भार्था योषा। गर्भस्थापनीयायां स्त्रियाम् "इय गर्भेति नियत मन्त्रश गुह्यस्य वचनस्य च गर्भ-

योग्यकाल' तन्निमित्तेन नैमित्तिकं गमनं कार्य्यम् एवञ्चैतत् प्रत्यवायाच्चियम "ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः" इति स्मृते। ज्योतिषे "ज्येष्ठा मूला मघाश्लेषा रेवती कृत्तिकाश्विनी। उत्तरात्रितयं त्यक्त्वा पर्वर्क्षे प्रजेद्वती" विष्णु०"चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च। स्त्रीतैलमांससम्भोगी विण्मूत्रनरकं व्रजेत्" याज्ञ० "षोडशर्त्तु-निशाः स्त्रीणां तासु युग्मासु संविशेत्। अत्र षोडशाहो-रात्रात्मककालस्य सावनत्वात् पुंसवननामकरणयोरपि सावनगणनायायुक्तत्वाच्च सस्कारमात्रे सावनगणना। तथा व्यवहारश्च तथा च याज्ञवल्क्यः "गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा। षष्ठेऽष्टमे वा सीमन्तः प्रसवे जातकर्म च। अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः। षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम्। एवमेनः शमं याति बीजगर्भसमुद्भवम्"। चतुर्थे स्पन्दते ततः" इति वचनात् स्पन्दनात् पूर्वमासत्रय पुंसवनकालः। अत्र चतुर्थमासस्य सौरत्वे चान्द्रत्वे वा निषेकमासस्यापि तथात्वे तदाद्यन्तदिननिषेके सति च धिकरण्यकालयोगे स्पन्दनमनियतमापद्येत सावने तु नियत तेनात्र सावनगणना युक्ता शिष्टव्यवहारप्रसिद्धा च। "अहन्येकादशे नाम" इत्यत्रापि "अशौचव्यपगमे नामधेयमिति" विष्णुसूत्रात् सूतकोत्तरदिनपरमेकादश दिनपदम् सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता" सूर्यसिद्धान्तवचनेन सूतकस्य सावनदिनघटितत्वात् तदुत्तरदिनस्यापि तथात्वम्। अतो दिनमासवर्षगणना सावनेनेति। शुभाशुभविवेचनन्तु सौरेण ज्योतिःशास्त्रात्। अतएव पितामहः "विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः"। अत्र द्वितीयादियुग्मात् संस्कारपरिग्रहः। "गर्भाधाने सदा ग्राह्या धारा श्रीभरणीक्रमात्"इति। गोभिलः "दक्षिणेन पाणिना उपस्थमभिमृशेत्" विष्णुर्योनिं कल्पयत्वेतयर्चा "गर्भं धेहि सिनीवालीति च" समाप्त्यर्चो सम्भवत"। कुत्सितदेशस्य सव्येन पाणिना शौचदर्शनात् तदाश्रयाय दक्षिणेनेति। उपस्थ योनिं स्पृशेत् विष्णुरिति मन्त्रेण प्रथम,ततो "गर्भं धेहि सिनीवाल्यादि"मन्त्रेण च। "मन्त्रान्ते कर्मादिसन्निपात"इति न्यायात् पाठानन्तर स्पर्शं न तु भवदेवभट्टोक्तः स्पृशन् जपतीति। ऋचौ

समाप्यैव स्पर्शनं कुर्व्वत न मध्ये वामदेव्यजपः। देवल "सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता"। तेन गर्भाधानपुंसवनसीमन्तोन्नयनानि सकृदेव कर्त्तव्यानि। छन्दोगपरिशिष्टम् "विवाहादिकर्मगणोर छन्दो गर्भाधानं शुश्रुम यत्र चान्ते। विवाहादावेकमेवात्र कुर्य्यात् श्राद्धं नादौ कर्मणः कर्मणः स्यात्"। विवाहादिगर्भाधानान्तकर्मसु एकमेव श्राद्धं न तु प्रतिकर्मादौ, एकेनैव श्राद्धेन कृतेन सर्वाणि श्राद्धवन्तीति। अन्तशब्दोऽत्रावयवार्थः दशान्तः पट इति वत् समीपार्थे उपलक्षणं स्यात्। ततश्च विशेषणोपलक्षणसन्देहे विशेषणत्वेन ग्रहणं कार्य्यमित्युक्तत्वात्। यत्तु "निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च" इत्यनेन भविष्यपुराणे श्राद्धं कर्माङ्गत्वेन विहितं तच्छन्दोगेतरपरम्। अत एव भवदेवभट्टेनापि तथा लिखितम्। अत्र श्राद्धोत्तरगमनेऽपि न दोष उक्तं भविष्यपुराणात् "नित्ये नान्दीमुखश्राद्धे कृते दानाद्यवर्जनम्" इति वचनान्तराच्च"।

ज्यो०चि०पीयू०धा०विकारेषु विहितनिषद्धकालादिकमुक्तं यथा "गण्डान्तं त्रिविधं त्यजेन्निधनजन्मर्क्षे च मूलान्तकं दास्रं पौष्णमथोपरागदिवसं पातं तथा वैधृतिम्। पित्रोः श्राद्धदिनं दिवा च परिघाद्यार्द्धं स्वपत्नीगमे भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः पापभम्" ज्यो०चि० "गण्डान्तमिति। अत्र यदि दुष्टकालतिथ्यादिषु रजोदर्शनमभूत् तत्र चतुर्थदिनानन्तरं शान्तिकं विधेयं यदाह वशिष्ठ "प्रभूतदोषं यदि दृश्यते तत्पुष्पं तत शान्तिककर्म कार्य्यम्"विवर्ज्जयेदेव तदेकशय्यां यावन्न शुद्धो दर्शनमन्यमर्क्षे। ऐशानतो गोमयमण्डलेन परिस्तृतेऽग्नौ जुहुयात्तदूर्वाम्। युग्मां घृताक्ताञ्च सहस्रप्रमाणां गायत्रिकां साष्टसहस्रसंख्याम्। शतप्रमाणाऽथवाष्टसंख्यां शुभैर्यवैर्व्याहृतिभिस्तिलैश्च। ततः सुरान् भूमिसुरान् पितॄंश्च सन्तर्पयेत्सत्सुवर्णरत्नैरिति"। शान्तिकप्रकारस्तु शान्तिपद्धत्यादौ द्रष्टव्यः। एवं शान्तिकं विधाय गर्भाधानं विधेयम्। तत्र स्वपत्नीगमे स्वपत्नीगमने एतान् दोषान् त्यजेदिति सर्वत्र सम्बन्धः। एतान् कान्? त्रिविधं गण्डान्तं गण्डान्तलक्षणं रत्नमालायाम् "नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम्। नवपञ्चचतुर्थानां द्व्यन्तकाद्यैघटिकामितमिति" निधनं जन्मर्क्षात् सप्तमं नक्षत्रं, जन्मनक्षत्र

मूलम् अन्तक भरणीं दाक्षमश्विनीम् । पौष्णं रेवतीं मघाम् उपरागदिवसं ग्रहणदिनं, पात व्यतीपातम् महापातं च, वैधृति योगं, पित्रोर्मातापित्रोः श्राद्धदिनं, दिवा सूर्यास्तमनकाल परिघयोगस्य पूर्वार्द्धम् । तथोत्पातैर्दिव्यान्तरिक्षभौमैस्त्रिविधैरुत्पातैर्हतं दूषितं, जन्मर्क्षं जन्मलग्नाज्जन्मराशेर्वा मृत्युभवनमष्टमं लग्नं पापभं पापग्रहयुक्तं भं नक्षत्रं लग्नं वा इति" पी० धा० "भद्राषष्ठीपर्वरिक्ताश्च सन्ध्या भौमार्कार्कीनाद्यरात्रीश्चतस्रः । गर्भाधानं त्र्युत्तरेन्द्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वम्बुपे सत्" मु० चि० । "भद्रेति भद्रा प्रसिद्धा षष्ठी तिथिश्च पर्वाणि चतुर्दश्यष्टम्यमावास्या पूर्णिमा संक्रमणानि उक्तञ्च विष्णुपुराणे "चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव चेति" रिक्ताश्चतुर्थीनवमीचतुर्दश्यः, सन्ध्याः प्रातः सन्ध्यां सायम् सन्ध्याञ्च । भौमं मङ्गलवारम् अर्कम् आदित्यवारम् आर्किं शनैश्चरवारं, चतस्रः आद्यरात्रीः रजोदर्शनदिनमारभ्य दिनचतुष्टयं त्यजेदित्यर्थः । तदनन्तरमपि पुत्रार्थी रजोदर्शनात् विषमदिवसं त्यजेत् । उक्तञ्चाधानाध्याये वसिष्ठेन निषेधजातं "पौष्णद्वये पितृत्र्यभयाम्यसार्पविष्णुद्वये नैधनजन्मभेषु । उत्पातपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने । उपप्लवे वैधृतपातयोश्च विष्टौ दिवा चारिघपूर्वभागे । सन्ध्यासु पर्वस्वपि मातृपित्रोर्दिनेऽह्नि पत्नीगमनं विवर्ज्यम् । दिनेषु युग्मेषु च वक्ष्यमाणयोगे सुतार्थी स्वसतीमुपेयात् । दिनेष्वयुग्मेषु च कन्यकार्थी हित्वा च गण्डान्तविषघ्नभानामिति" वक्ष्यमाणयोगे पुंयोगे स्त्रीयोगे च । अत्र चन्द्रतारा श्रवणधनिष्ठयोर्न निषेधः कृतः । बार्हस्पत्यसंहितायां तयोर्विशेषतो विहितत्वात् । तद्वचनमग्रेव वक्ष्यते । ननु षोडशदिवसाभ्यन्तरवत् विहितत्वात्तिथ्यादिबाधकत्वः कथमेव भवति ? सत्यम् यद्गमामतुरोधेनाप्य इति विधिरेवोचित । अतएवोक्तं नारदेन "शुचिर्भूत्वा युग्मतिथावमलां कामयेत् स्त्रियम् । पुत्रार्थी पुरुषस्तूक्त्वा पौष्णमूलाहिदस्रभमिति" "सद्वा दर्शतिथि मूलभरणीभां पैत्रभञ्चेति" कामरूपोक्तेः । निम्बादय क्रमयेण कालविधाने उक्ता । "अष्टमीं पञ्चदशीं षष्ठीं चतुर्दशीमप्युभयत्र हित्वा । शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशाङ्कार्यसितेन्दुजानामिति" अत्र वारेषु चन्द्रबुधगुरुशुक्रवारा निषेककार्ये शुभा उक्ता । अर्कादयः सूर्यभौमशनिवारा निषिद्धाः । उक्तञ्च कालनिर्णये "रिक्ता पर्वाष्टमी षष्ठी दिवा जन्मत्रयं तथा । पापग्रहाणां वाराश्च त्याज्याश्चैषाम्प्रतौ गतिरिति" । अतएव बृहस्पतिसंहितायाम् "श्रेष्ठा गुरुभाणि इष्टानि स्युर्निषेकाख्यकर्मणीत्युक्तं "सोमबुधगुरुशुक्राणां वारा यथोदया शुभाः । तेषाञ्च दृष्टयश्चैव नेतरेषां कदाचनेति" अत्र केचिद्विदेके पुंवारा उत्तमाः स्त्रीवारौ मध्यमौ नपुंसकवारौ निषिद्धौ उक्तञ्च व्यासेन "पुरुषग्रहवारास्तुः शुभा सीमन्तकर्मणि । मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकाविति" अत्र सीमन्तग्रहणमुपलक्षणं गर्भाधानस्येत्याहुः । युक्तञ्चैतत् पुंस्त्रीवारेषु स्त्रीगमने पुरुषाः स्त्रियो वोत्पद्यन्ते इति तात्पर्यम् । नपुंसकवारगमने तु नपुंसकस्योत्पत्तिः स्यात् हिंसा कस्यचिदिष्टा भवेदिति नपुंसकबुधवारनिषेध उचितः । शनिनिषेधस्तु भयवादिसिद्ध एव दीर्घाचार्यमिश्रमाचाराज्ञानो बुधशन्योरेव निषेधोऽन्येषां ग्रहणमिति प्रतीमः । प्राच्यस्तु नैतत्सहन्ते तन्मते तु सूर्यभौमशनीनामेव निषेध । नारद "रजोदर्शनतोऽस्पृश्या नार्यो दिनचतुष्टयम् । तत्र शुद्धा क्रिया स्नेहाः सर्वेषांश्च विधि" । अस्यार्थवादमाह भरद्वाजः "प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति" । धर्मशास्त्रेऽपि "ऋतुः स्यात् चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला । पञ्चमेऽहनि योग्या स्याद्दैवे पित्र्ये च कर्मणि" । तस्मादेतावतो दोषांस्त्यक्त्वा स्त्रीगमनं हितमिति । ऋतुकालावधिमाह याज्ञवल्क्यः "षोडशर्तुर्निशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् । युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु" अतः षोडशदिनमध्ये गर्भाधानं विधेयम् तत्रैव गर्भसम्भवात्तत्र पाराः समीचीना प्रागुक्ता यथाशुभा नक्षत्राण्याह गर्भाधानमिति । उत्तरात्रयमृगहस्तानुराधारोहिणीस्वातिश्रवणधनिष्ठाशततारकाश्च गर्भाधाने सत् शुभदम् । उक्तञ्च बार्हस्पत्यसंहितायाम् "हरिहस्तानुराधाश्च स्वातीवासवपावकम् । उत्तरात्रितय सौम्य रोहिणी च शुभाः स्मृताः । आधाने मूलवार्णान्यमशुभं सममन्यमिति" एव विहितमघानं सति चन्द्रबले गर्भाधानार्थं सद्देश पत्नीगमनकार्यमित्याह "याज्ञवल्क्यः" । "एवं गच्छन् स्त्रियं

बालस्य तदाधारपात्रस्य च सीमन्तोन्नयनवत् संस्कारः "सीमन्तोन्नयनसंस्कारो गार्भपात्रसंस्कारः" इति श्रुते गर्भपात्रयोरेव संस्कार इति गार्भपात्र गर्भस्य उदरस्थस्य, पात्रस्य तदाधारस्त्रियश्च । सीमन्तोन्नयनपदमुपलक्षणार्थम् । यदि दैवात् गर्भाधानादिसंस्कारा यथाकाले न कृतास्तदा प्रसवकालोत्तर जातकर्माद्युत्तरसंस्कारकाले अङ्के बालकं निधाय संस्कारं कार्य्यं यथाह राजमार्त्तण्डे "या नार्य्यकृतसीमन्ता सूयते च कथञ्चन । अङ्के निधाय तं बालं पुनः संस्कारमर्हति" । तेन संस्कारेण च तदाधारे उत्पन्नानामपि संस्कारसिद्धिः "सकृच्च कृतसंस्कारा सीमन्ते न कुलस्त्रियः । यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्" राजमार्त्तण्डात् ।

लग्नभेदेन गर्भाधाने शुभाशुभं बृहज्जातके ४अ० निषेकाध्याये विस्तरेणोक्तं जातकपद्धतौ तु किञ्चित् सङ्क्षिप्योक्तं यथा "आधानलग्नात् सप्तमे याहशं कुरुते रतम् । करोति तादृक् पुरुषश्चतुर्णां च समन्विताम् । रवीन्दुशुक्रभौमाश्चेत् स्वांशे वाथ गुरौ तनौ । नवमे पञ्चमे वा स्यादपत्यं पुंस्त्वशालि तत् । बलिनौ स्वस्वकांशेऽर्कगुरू ओजपदस्थगौ । पुंसां, स्त्रीणां कुजेन्दू चेत् तदा गर्भस्य सम्भवः । भौमार्कौ सप्तमेऽर्कात् तौ रुजे पुंसः, स्त्रिया विधोः । भौमार्किमध्ये स्वर्येन्दू पुंस्त्रियोर्मृत्यवे क्रमात् । भौमार्क्यन्यतरेणार्कचन्द्रौ युक्तेक्षितौ क्रमात् । पुंस्त्रियोर्मृत्युदौ प्रोक्तौ प्राक् कृते प्राक्तनैर्बुधैः । लग्ने चेन्दौ पापमध्ये शुभदृष्टिविवर्जिते । सगर्भस्त्रीमृतिः स्याद्धि यथा यवनभाषितम् । दिवा सूर्य्यशुक्रौ, शनीन्दू च रात्रौ, ऽजवे तातमातृपक्षौ व्यत्ययस्तौ । तयो सोदरस्वसृसंज्ञौ क्रमात्तु तयोरोजयुग्मगौ सौख्यदौ । कललं कठिनं हस्ताद्यस्थित्वग्लोमचेतना । अशनोद्वेगसूतिश्च मासेशाश्च क्रमादमी । शुक्रारेज्यार्कचन्द्रार्किसौम्याधानेशचन्द्रदिवाकराः । मासेशे पीडिते गर्भरोगः पुष्टिश्च सद्बले । (प्रथममासि कललं शुक्रशोणितमिश्रणरूपं तत्र शुक्रोऽधिपः । द्वितीये काठिन्यं तदीशः कुजः । तृतीयमासि हस्ताद्युत्पत्तिः गुरुस्तदीशः । चतुर्थेऽस्थ्युत्पत्तिः सूर्य्यस्तदीशः । पञ्चममासि चर्मोत्पत्तिश्चन्द्रोऽधिपः । षष्ठे रोमोत्पत्तिः शनिरधीशः । सप्तमे चैतन्यं बुधोऽधिपः । अष्टमे मातृभुक्ताहारे भोक्तृहारेणाशनम्, तत्र गर्भाधानलग्नेशः स्वामी । नवमे उद्वेगः चन्द्रोऽधीशः । दशमे प्रसवः, सूर्य्यस्तदीशः आधानकाले उक्तमासेशे पीडिते तत्तन्मासि गर्भपातादि बलयुक्ते तत्तन्मासि पुष्टिः) । विषमर्क्षनवांशेषु गुरुचन्द्राङ्गभानुषु । पुञ्जन्म समभांशेषु, स्त्रियस्तेषु समांशकेषु । सूर्य्यस्थौ विषमेऽशे चेत् सबलौ पुञ्जनिप्रदौ । स्त्रियाः समांशे शुक्रेन्दू, कुजाद्युग्मांशके यमम् । भौमन्दग्रहदृष्टाश्चेत् पुंस्त्रीयुग्मं गर्भाशयात् । विषमर्क्षे शनिर्लग्नात् त्यक्त्वा त्वजन्मदः । इन्दुर्दृष्टे मषस्थितैरशुभैर्मूकजन्मदः । व्ययेऽर्केन्दू दक्षवामनेत्रनाशकरौ मतौ । शनिभांशे तनौ, मन्दे सप्तमेऽब्दत्रयात् सव । स्वांशे कर्कतनौ चन्द्रे द्यूने द्वादशवर्षतः । तत्संख्ये द्वादशांशे स्याच्चन्द्रः प्रसवे तत परम् । तत्तुल्यराशिसहिते चन्द्रे इति वदेत् सुधीः" आधानाध्याय० ।

**गर्भावक्रान्ति** स्त्री अव+क्रम–भावे क्तिन् ६त० । शरीरजीवस्य गर्भाशयप्रवेशरूपे गर्भावतारे तत्र सुश्रुते शारीरस्थाने ३अ० "अथातो गर्भावक्रान्तिं शारीरं व्याख्यास्याम" इत्युपक्रम्य दर्शितं तच्च वाक्यं कायशब्दे १९२१पृ० दर्शितम् ।

**गर्भाशय** पु० आशेतेऽत्र आ+शी–आधारे अच् ६त० । गर्भाधारस्थाने गर्भशय्यायाम् "पुरुषेभ्योऽधिकाश्चान्ये नारीणामाशयास्त्रय । एको गर्भाशयः प्रोक्तः पित्तपक्वाशयान्तरे" इति भावप्र० तस्य पित्तपक्वाशययोर्मध्यस्थत्वमुक्तम् "स्त्रीणां गर्भाशयोऽष्टम" । "ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते" "दैवसंयोगादक्षयोऽव्ययोऽचिन्त्य (आत्मा) भूतात्मना सहान्वक्षं सत्त्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाऽभिप्रेर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते" इति च सुश्रुतः । तदाधारावरकत्वात् २जरायौ अमर ।

**गर्भाष्टम** पु० गर्भात् गर्भकालात् अष्टमः । गर्भावधिके अष्टमे मासवर्षादौ । "गर्भाष्टमो द्वैमास" त्रिका० । "गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः" मनुः "उपरत गर्भादिति निर्द्देशेन गर्भाष्टमे इत्यत्रापि अवध्यर्थकपञ्चम्या "सह सुपेति" षा०समा० ।

**गर्भास्पन्दन** न० गर्भस्यास्पन्दनम् । "गर्भक्षये गर्भास्पन्दनमुन्नतकुक्षिता च" सुश्रुतोक्ते गर्भव्यापद्भेदे । "गर्भास्पन्दनमावीनां(गर्भिणीनां) प्रभावः स्यादपाकृता" सुश्रु० ।

**गर्भास्राव** पु० गर्भस्य स्रावः । गर्भपाते तच्छब्दे दृश्य० ।

**गर्भिणी** स्त्री गर्भोऽस्त्यस्याः इनि ङीप् । गर्भवत्यां सगर्भायां

**गर्व** मदे भ्वा० पर० सक० सेट्। गर्वति अगर्वीत्। जगर्व। गर्वित। गर्व।"खर्वै। गर्वभरूपूरिततनो।"ताराख्तव।

**गर्व** पु० गर्व—घञ्। अभिमाने,"ऐश्वर्य्यरूपतारुण्यकुलविद्यावलैरपि। इष्टलाभादिनान्येषामवज्ञा गर्व ईरित" इत्युक्ते २अवस्थाभेदे "गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः। "अवज्ञासविलासाङ्गदर्शनाऽविनयादिकृत्" सा० द० उक्ते ३व्यभिचारिभावभेदे। अमरे अहङ्कारपर्य्यायतोक्तिः ईषद्भेदमनादृत्यैव।

**गर्वाट** पु० गर्वेणाटति अट—अच् ३त०। द्वारपाले त्रिका०।

**गर्वित** त्रि० गर्व—कर्त्तरि क्त गर्वो जातोऽस्य तार० इतच् वा। १मत्ते २जातगर्वे "यूप तद्‌यसरगर्वि(र्भि)तलक्ष्मणम्" "प्रेमगर्वितविपक्षमत्सरात्" रघु।

**गर्ह** निन्दायां वा चुरा० पक्षे भ्वा० आत्म०सक०सेट्। गर्हयते गर्हते अजगर्हत अगर्हिष्ट। गर्हयाञ्चक्रे जगर्हे गर्हणा "न गर्हयेयुरस्मान् वै पाण्डवार्थाय कर्हिचित्"भा० आ० ५७३१ श्लो०। "गर्हयन्तोऽस्य साहसं"भा०व०१८।अ० पदव्यत्यय आर्षः। उपसर्गपूर्वकस्तु तदुद्योत्यार्थयुक्ते निन्दने। "विगर्हितं धर्म्मधनैर्निबर्हणम्" नैष०।

**गर्ह** कुत्सायां भ्वा० आ० सक० सेट्। गर्हते अगर्हिष्ट जगर्हे गर्हणम् गर्हितः गर्हा। "स एव धर्म्मो राज्ञां तु तद्वित् किन्तु गर्हणम्" भा० आ० ११८अ०। "केचिन्नीचं जगर्हिरे" भा० स०४१अ०। "न ह्यतस्यास्य किञ्चिन्न गर्हे बलवत्तरम्" र० २०६अ०। "अधमा च दशां प्राप्तो देशान् गर्हति वै भृशम्" २०८ अ०। आर्षः पदव्यत्ययः। "गर्हिताद्धस्य जगधि" मनुः।

**गर्हा** स्त्री गर्ह—अ। १निन्दायाम् "येन येनाचरेद्धर्म्मं तस्मिन् गर्हा न विद्यते" भा० अ० ६०५६ श्लो०। चुरा०गर्ह—भावे युच्। गर्हणाऽप्यत्र स्त्री।

**गर्ह्य** त्रि० गर्ह—ण्यत्। १निन्द्ये २अधमे अमरः।

**गर्ह्यवादिन्** त्रि० गर्ह्यं वदति वद—णिनि। कुत्सितवादिनि कद्वदे अमरः स्त्रियां ङीप्।

**गल** भक्षणे सक० स्रावे (गला)अक०भ्वा०पर०सेट्। गलति अगालीत्। "निर्गलिताम्बुगर्भम्"रघु।"गलित स्वराविरहितासनया" माघ "प्राक्पोकनिर्गलितनेत्रपयःप्रवाहान्" नैष०। "विपक्षे गलितादरौ" "पर्य्यागलदच्छविन्दुः" "सुपलाद्यगलत्तत" भट्टि। "प्रस्वेदान्तर्गलितार्द्रविन्दुभिः"। "विमाद्यमानो गलिताङ्कुरागै" रघु।

**गल** स्रावणे (गालान) चुरा० आत्म० सक० सेट्। गालयते अजीगलत गालयाञ्चक्रे। गालः। गालित। "पञ्चगोमूत्रगलितम्" चक्रदत्त।

**गल** पु० गल—भक्षे वा० करणे अच्। १कण्ठे (गला) अमरः। कर्त्तरि अच्। २सर्ज्जरसे (धुना) ३वाद्यभेदे, ४गडकमत्स्ये च शब्दरत्ना०। "गले गृहीत्वा क्षिप्तोऽस्मि" भा० आनु० १५४ अ०। अस्य स्वाङ्गत्वेऽपि क्रोडा० न ङीप्। छिन्नगला। बहुव्री० स्त्रियां ङीप। गली इत्यपि तत्रैव स्त्री।

**गलक** पु० गल—वा० वुन्। (गडइ) १मत्स्ये शब्दार्थचि०।

**गलकम्बल** पु० गले कम्बल इव। सास्नायां गवां गलस्थिते रोमशे मांसपिण्डे अमरः।

**गलगण्ड** पु०७त०। (गरगण्ड)। रोगभेदे। तल्लक्षणादि यथा "निबद्धं श्वयथुर्यस्य मुष्कवल्लम्बते गले। महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत्। निबद्धो दृढ़श्चलो वा। मुष्कवत् अण्डवत्। गले इति हनुमन्ययोरुपलक्षणम्। तथा च भोज "महान्त शोथं मल्प वा हनुमन्यागलाश्रयम्। मुष्कवल्लम्बमानं तु गलगण्डं विनिर्दिशेत्" सुश्रुतमाह वातः कफश्चापि गले प्रदुष्टो मन्ये तु संसृत्य तथैव मेदः। कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः। क्रमशः शनैः शनैः स्वलिङ्गैः वातकफमेदोलक्षणैः। तत्र वातिकमाह। तोदान्वितः कृष्णशिरावनद्धः श्यावोऽरुणो वा पवनात्मकस्तु। पारुष्ययुक्तश्चिरवृद्धपाको यदृच्छया पाकमियात् कदाचित्। वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः। चिरवृद्धपाकं चिरेण वृद्धिपाकश्च यस्य सः। श्लैष्मिकमाह स्थिरः सवर्णो गुरुरुग्रकण्डुः शीतो महांश्चापि कफात्मकस्तु। चिराच्च वृद्धिं भजतेऽचिराद्वा प्रपच्यते मन्दरुजः कदाचित्। माधुर्य्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगले प्रलेपः। कदाचित् प्रपच्यते वा पाकोऽपि चिराद्भवति। प्रलेपः श्लेष्मणा। मेदोजमाह स्निग्धो मृदुः पाण्डुरनिष्टगन्धो मेदोऽन्वितः कण्डुयुतोऽरुजश्च। प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः। स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेन शब्दं कुरुते च नित्यम्। देहक्षये कार्श्यं क्षयं, देहवृद्धौ वृद्धिं यातीत्यर्थः। असाध्यमाह "कृच्छ्रात् श्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्त्तम्।

**गलोद्य** न॰ गलेन त्वोद्य पृषो॰ ललोप । धान्यभेदे "शालि-षष्टिकनलपङ्कलतालोशशृङ्गाटकगन्धोड्रगौरीगैरिकशैव-लपद्मकपलप्रभृतिभिर्धान्याख्यपिष्टैः प्रदेहो घृतमिश्रः" सुश्रु॰ । [ यवे निगाले अमर ।

**गलोद्देश** पु॰ गलस्य उद्देश समीपम् । गलसमीपस्थेऽव-

**गलोद्भव** पु॰ गले अश्वगलदेशे उद्भवति उद्+भू-अच् । अश्वगलजाते रोचमानाख्ये रोमावर्त्तभेदे त्रिका॰ ।

**गलौघ** पु॰ गले ओघ इव । "तस्यैव (गलविद्रधेः) तुल्य खलु सर्वगस्य । शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता । कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्यतेऽसौ" सुश्रुतोक्ते कण्ठगतरोगभेदे ।

**गल्द** स्त्री गल-क्विप् गल+पृषो॰ वा तेन गला गलेन वा दी-यते दा-कर्मणि घञर्थे क । १वाचि निघ॰ । गल्द इति पाठान्तरम् । गलितं गल् धीयते अत्र धा-घञर्थे क पृषो॰ धस्य द । धमनीभेदे "आ त्वा विशन्त्विन्दव आ ग-ल्दा धमनीनाम्" । इमामृचमधिकृत्य गल्दा धमनयो भवन्ति गलनमासु धीयते" निरु॰ ६।२४ ।

**गल्भ** धार्ष्ट्ये (प्रागल्भ्ये) भ्वा॰ आ॰ सक॰ सेट् । गल्भते अगल्भिष्ट जगल्भे । "या कथञ्चन सखीवचनेन प्राग-ल्भि प्रियतम प्रजगल्भे" माघ । गल्भ+च्व्यर्थे क्यङ् गल्-भायते अगल्भायिष्ट ।

**गल्या** स्त्री गलानां कण्ठानां समूहः पाशा॰ यत् । १कण्ठ-समुदाये । गलो इहतृकाशस्तेया २समूहे शब्दार्थचि॰ ।

**गल्ल** पु॰ गल-ल तस्य नेत्त्वम् । (गाल) गण्डे । हेमच॰ ।

**गल्लक** पु॰ गलति क्विप् गल् त लाति स्वच्छ्यति ला-क तत स्वार्थे क । १चषके मद्यपानपात्रे हेमच॰ । २इन्द्रनीलमणौ त्रिका॰ । पृषो॰ वमध्यता इत्येके ।

**गल्लचातुरी** स्त्री गल्ले चातुरी यस्य, बहुत्वात् न कप् न वा ह्रस्वः । (गालबालिश) ख्याते उपधानभेदे जटा॰ ।

**गल्लर्क** पु॰ गलति गल-उन् गलुरर्को दीप्तिरस्य । सुसारे १मणिभेदे त्रिका॰ । तत्र "गल्लर्कस्तु सुसारवत् । अश्मसा-रस्त्विन्द्रनील" इत्युक्तौ अश्मसारशब्दोत्तर तकारात् गल्लर्कशब्दस्य न इन्द्रनीलार्थता शब्दकल्पद्रुमे तदर्थ तोक्तिः प्रामादिकी । २पद्मरागे मणौ च । "ससारगल्लर्क-सुवर्णरूप्यै" भा॰ द्रो॰ १६अ॰ । "ससार इन्द्रनील (अश्म-सारत्वात्) गल्लर्क पद्मराग" (अर्कदीप्तिकत्वात्) नील॰ ३चषकपात्रे हेमच॰ । रक्तवर्णसुरास्त्रेण सूर्यकर-तुल्यवर्णत्वात्तस्य तथात्वम् ।

**गल्ह** कुत्सने भ्वा॰ आ॰ सक॰ सेट् । गल्हते अगल्हिष्ट । जगल्हे ।

**गवची** स्त्री गां भूमिमञ्चति अनुच-क्विप् अवङादेशः ङीप् अचोऽल्लोपः पृषो॰ न दीर्घं । इन्द्रवारुण्याम् (राखालशसा) रत्नमाला ।

**गवय** पु स्त्री गुङ् शब्दे भावे अप् गव शब्दभेद याति या-क, गां तदवयव सादृश्येनायते अय-अच् वा । गलकम्बल-शून्ये गोसदृशे मृगभेदे अमर "ग्रामीणस्य प्रथमत-पश्यतो गवयादिकम् । सादृश्यधीर्गवादीनां या स्यात् सा करण मतम् । गवयादिपदानां तु शक्तिधीरुपमाफ-लम्" भाषा॰ । "दृष्ट कथञ्चिद् गवयैर्विविग्नैः" कुमा॰ । स्त्रियां योपधत्वेऽपि योपधप्रतिषेधे गवयहयादीनाम-प्रतिषेधात् ङीष् । अस्य मांसपाकविधिर्यथा । तैले सपा-चिते तप्ते हिङ्गुसैन्धवसंयुतम् । मांसं गवयसम्भूतं सुखिन्न भूरिवारिणा" । भावप्र॰ तद्गुणा उक्ता यथा "गवयो मधुरो हृद्य स्निग्धोष्णः कफपित्तल । विदा-ही गुरुविष्टम्भी विपाके विरसः सदा" । २वैवस्वतपुत्रे वानरभेदे । "पुत्रा वैवस्वतस्यासन् पञ्च कालान्तकोपमा । गयो गवाक्षो गवयः शरभो गन्धमादन" रामा॰ उत्त॰ ।

**गवराज** पु॰ गवेन शब्देन राजते राज-अच् । वृषे शब्दच॰

**गवल** पु स्त्री गुङ् शब्दे भावे अप् गव शब्दभेद लाति ला-क । महिषे हेमच॰ । "गवलाजवशस्तथा" ति॰त॰ । "गवलालिकुलाहिनिभाविसृजन्ति पयः पयोवाहा" ह॰-स॰ २२अ॰ । "नभो तरङ्गिगवलासितद्युति" माघ । स्त्रियां ङीष् ।

**गवल्गण** पु॰ सञ्जयपितरि सूतभेदे । "सञ्जयो मुनि-कल्पस्तु जज्ञे सूतो गवल्गणात्" भा॰ आ॰ ६३अ॰ ।

**गवाक्ष** पु॰ गवामक्षीव अक्षि-अच् समा॰ नित्यसच्, गाव ऊर्ध्वकरा जलानि वा अक्षुवन्ति व्याप्नुवन्ति एतमनेन वा अक्ष-व्याप्तौ अकर्त्तरि घञ् । वातायने (जानेला) अमर । "गवाक्षजालैरभिनिष्पतन्त्यः" भट्टि "उत्सृष्ट-लीलास्थितमा गवाक्षात्" "विलोलनेत्रभ्रमरैर्गवाक्षाः" कुमा॰ । "कुवलयितगवाक्षां लोचनैरङ्गनानाम्" रघु । २वैवस्वतपुत्रे वानरभेदे रामा॰ गवयशब्दे दृश्यम् । गां भूमिमश्नुते व्याप्नोति अण् गौरा॰ ङीष् सि॰ कौ॰ मुग्ध॰ मते ईप् । ३गोडुम्बायां (गोमुक) । अमरः । ङीषन्त ४इन्द्रवारुण्याम् (राखालशसा) ५माखोटे (पेचोड़ा) राजनि॰ । ६अपराजितायाम् रत्नमा॰ ।

**गवाची** स्त्री गवचीवत् किन्तु पूर्वाणो दीर्घः।(पाँकाल)मत्स्य-भेदे "गवाच्यजोर्ध्वकारी च गुर्वी श्लेष्मप्रकोपिणी" राजनि०

**गवादन** न० गोभिरद्यते अद्–कर्मणि ल्युट् अत्वङ्। १घासे अमरः। इन्द्रवारुण्यां स्त्री ङीप् शब्दच०। ३नीलापारि-जातायाम् स्त्री राजनि०। आधारे ल्युट् ङीप्। २गवां भक्षणाधारे पात्रे (डावा) स्त्री मेदि०।

**गवादि** पु० पा० गणसूत्रोक्ते हितार्थे यत्प्रत्ययप्रकृतिरूपे शब्दगणे स च "गो हविस् अक्षर विष बर्हिस् अष्टका स्खदा युग मेधा स्रुच् (नाभि नभञ्च) (शुन सम्प्रसारण वा च दीर्घत्वं तत्सन्नियोगेन च, तोदात्तत्वम्) ।(ऊधसो-ऽनङ् च) कूप खद दर खर असुर अध्वन् क्षर वेद बीज दीप्त। "गवादिभ्यो यत्" पा० हितादौ गव्यम्

**गवाधिका** स्त्री गवा किरणेनाधिकायति अधि–कै क। लाक्षायां त्रिका०। अत्र गवाधिकेति पाठ प्रामादिक

**गवानृत** न० गवि गोविषयेऽनृतम् अनङादेश। गोविषये मिथ्याकथने। "गवानृते पञ्चशत सहस्र पुरुषानृते" स्मृतिः।

**गवामयन** न०दशमाससाध्ये द्वादशमाससाध्ये च सत्रभेदे तद्विधानं ता० ब्रा० ४अध्यायादौ।

तत्र ताण्ड्य०ब्रा० ४अ० भाष्ये तस्य द्वैविध्यमुक्त्वा तदङ्गा-न्यहानि यथा कर्त्तव्यानि तथोक्ता तच्छन्दःपदस्तिभिर्निस-ङ्ग्रहाय स्मृतिमवतारयन् व्याचख्यौ यथा

"सोमानां दशरात्रस्य प्रोक्ता विष्टुतय क्रमात्। गवाम-यनिकानां च ता एवेत्यभिगम्यते। शतानि त्रीणि षष्टिश्च विषुवांश्च प्रत्येके। प्रोक्तानि गव्यसत्रस्य सुत्याहानि क्रमादिह। तानि सन्दृश्य वक्ष्यन्ते बुद्धिव्युत्पत्तिसिद्धये।

द्विविध गवामयन दशमाससाध्य द्वादशमाससाध्यञ्च तत्र द्वादशमासनिर्वर्त्त्यस्य प्रायणीयोऽतिरात्र प्रथममह-स्तच्चतुर्विंश उक्थ्य आरम्भणीय ते उभे अहनी अनु-ष्ठाय ज्योतिर्गौरायुर्गौरायुर्ज्योतिरित्यभिप्लविक षडह स चतुर्भिरावर्त्तनीय ततस्त्रिवृदादिस्तोमयुक्तसाध्य पृष्ठ्य षडह एव पञ्चभि षडहैरेको मास पूर्य्यते एवं मेवावर्त्तनेन पञ्च मासा सम्पाद्या तत्र षष्ठे मासादौ त्रयोऽभिप्लवाः षडहा कार्य्याः तत एक पृष्ठ्य षडहः ततोभिजिदेकमह त्रय स्वरसामान इत्येवमष्टाविंशत्य-हानि आद्याभ्यां प्रायणीयचतुर्विंशाभ्यां षष्ठमासपूरणम्। इत्थं पूर्वपक्षे अथोत्तरपक्षस्यान्यहानि सम्पाद्यानि। ततो विषुवमेकमहः सोऽस्य सत्रस्य प्रधानभूतः। सप्तमे

मासादौ त्रय स्वरसामान प्रतिलोमा कार्य्याः। ततो विश्वजिदावृत्त पृष्ठ्य षडहस्तथाभिगारम्भास्त्रिवृदुत्तमः ततस्त्रयोऽभिप्लवा षडहाः आवृत्ता एवमष्टावि-शत्यहानि स्यु अस्य च मासस्य महाव्रतातिरात्रौ च ततोभिधास्यमानौ पूरकौ स सप्तमो मास। तत पृष्ठ्यः षडह पूर्वोक्तावर्त्तनीरभिप्लविकैः प्रतिलोमक्रमेणानुष्ठितै-रष्टमोमास अनयावृत्त्या नवमदशमैकादशा अपि स-म्पाद्या द्वादशमासस्यादौ त्रयोभिप्लवा, षडहः, ततो गोरायुषी द्वे अहनी द्वादशाहस्य दशाहानि चेति त्रिंशाहानि स द्वादशो मास ततो महाव्रतमुपान्त्यमह तेन उदयनीयातिरात्रौ इत्यपि सप्तममासस्य पूरकाविति महदेतद्गवामयनसत्र विधास्यन् तन्नामनिर्वचनप्रदर्शनाया-दावाख्यायिकामाह" भा०

"गावो वा एतत् सत्रमासत तासा दशसु मासेषु शृङ्गा-ण्यजायन्त ता अब्रुवन्नरात्स्मोत्तिष्ठामोपशा मोऽप्यतेति ता उदतिष्ठन्" ता०ब्रा०४।१।१। "पुरा खलु गावः एतत् सम्वत्सरसत्रमासत अन्वतिष्ठन् आसचोदना अयरचोदना च तत्र लिङ्गमिति मीमांसका। तत्सत्रस्वरूपपूर्वोत्तरे चानुष्ठाने ये वर्त्तन्ते तदन्यैरनुष्ठितम् अत इदं गवामयनमित्याचक्षते तासां सत्रस्थितानां मध्ये कासा-ञ्चिद्गवां दशसु मासेषु माघेषु पश्चात्सोत्यादिना मासगणस्य मासभाव तेष्वनुष्ठितेषु शृङ्गाण्यजायन्त ता जातशृङ्गा अब्रुवन् परस्परमुक्तवत्य किमिति अरात्स्म समृद्धा अभूम अतोऽनयमुत्तिष्ठामसत्र समापयाम अरात्-स्मेति तदुक्त तस्माचष्टे। अोपशाः श्रा अभित शिर प्रदेशमुपेत्य शेरन्ते इत्योपशा शृङ्गाणि, अप्यत जा-तान्यभूवन्निति सम्बन्ध अप्यतेति जनी प्रादुर्भाव इत्यस्मात् लुङि बहुवचने "भन्त्रे घसह्वर" इत्यादिना च्ले-र्लुकि गमहनजनेत्युपधालोपे रूपम्। एवमुक्त्वा ता गावः सत्रादुदतिष्ठन्। ताभिरेव दशभिर्मासैः फलस्य प्राप्तेर्दशमा-सनिर्वर्त्त्यमपि गवामयनमस्तीत्युक्त भवति" भा०। द्वादशमा-सनिर्वर्त्त्यमप्यस्तीति दर्शयति। "तासान्त्वेवाब्रुवन्नासामहा एवेमौ द्वादशौ मासौ स सम्वत्सरमापयामेति तासान्द्वा-दशसु मासेषु शृङ्गाणि प्रावर्त्तन्त ता सर्वर्द्धमाप्नुवन् ता एतास्तूपरास्ताता सर्वान्मासान्प्रेरते सर्वं हि ता ऋद्धमाप्नुवन्" ता०ब्रा० २। "तयक्रो मेलक्षण-द्योतनार्थः तासामेव गवां मध्ये काश्चिदब्रुवन् किमि-त्युच्यते, यो द्वादशौ द्वादशसंख्यापूरकावेव मिलावेका-

दशद्वादशौ मासौ इमौ आसामह। एवं अनुष्ठायैव अनुष्ठाय प्रारब्धं सत्रं समाप्य समापयामेति व्यवहिता-न्वयेन समित्यस्य व्यवहितेन सम्बन्धः। तासां गवां जातानि शृङ्गाणि द्वादशसु मासु नासन् पूर्णेषु प्रावर्त्तन्त प्रापयन् इत्यभिप्रायः शृङ्गप्राप्तिलक्षणफले सिद्धेऽपि पुनरश्रद्धया यतो मासद्वयमन्वतिष्ठन् अतो जातानामपि शृङ्गाणां पुनः पतनमित्यभिप्रायः तथा चैतरेयकम् "अथ समापयिष्याम संवत्सरमित्यासत तासामश्रद्धया शृङ्गाणि प्राव-र्त्तन्तेति" एतास्तूपरा इति ता पतितशृङ्गा गावः सर्व-र्त्तुभवमन्नाद्यमदनीयमन्नं प्राप्नुवन् ता गावस्तूपराः शृङ्ग-हीना दृश्यन्ते तस्मात्ता सर्वान् द्वादश मासो मासान् प्रेरते प्रगच्छन्ति ईर गतौ शीतवातातपेषु सर्वदा पुष्टाङ्गा एव यथायथं गच्छन्ति शृङ्गिणो महिष्यादयस्तु कृशा भवन्ति तस्मादित्युक्तं कस्मादित्याह हि यस्मात्ता गावः सर्वमन्नाद्यमाप्नुवन् तस्मात् सर्वर्त्तुषु पुष्टाङ्गा भवन्ति तथा चैतरेयकम् "सर्वं त्वमसमन्वत तस्माद् ता सर्वभूतान्त-रस्तिष्ठन्तीति"। उक्तार्थं जानतः फलमाह" भा०। "सर्वमन्नाद्यमाप्नोति य एवं वेद" ता०ब्रा०२। अयमर्थः। तत्रैव दशमासनिर्वर्त्यं द्वादशमासनिर्वर्त्यं चेति द्विविधं गवामयनं प्रतिपादितं तयोर्ज्योतिष्टोमदर्शपूर्णमासादिवदे-तत्काम एतत्कुर्यादिति कामफलसम्बन्धफलविशेषाश्रवणा-द्विश्वजिन्न्यायेनान्यत्राम्नातस्य स्वर्गस्य कल्पनाया अन्याय्य-त्वाद्रात्रिसत्रन्यायेनार्थवादिकस्य समृद्धिफलस्य वाक्यशेषे श्रवणादश्रुताकाङ्क्षा रौय इति समृद्धिकामा एतत्सत्र-मासीरन्निति विधिरुन्नेतव्यः। तैत्तिरीयके समृद्धिफल-कत्व स्पष्टमाम्नातम् "य एवं विद्वान् संवत्सरमुपयान्त्या-प्नुवन्त्येवेति" भा०तै०,४।१ ४कण्डिकामारभ्य। ५अ०८ख० ८क०पर्यन्ते तद्विधानमुक्तं। तत्र सत्रे दीक्षाकालविधा-नार्थमेकाष्टकारम्भपक्षं निरस्य चैत्रशुक्लैकादश्यां दीक्षा-माह तत्रैव ५।८।१० कण्डिकादिषु

"चित्रापूर्णमासे दीक्षेरन्" ता०ब्रा०५।८।१०।"चित्रा-युक्तः पौर्णमासः चित्रापूर्णमासः तस्मिन् दीक्षेरन्" तदेतत् स्तौति" भा०।"चक्षुर्वा एतत् संवत्सरस्य यच्चित्रा-पूर्णमासो मुखतो वै चक्षुर्मुखत एव तत् संवत्सरस्य दीक्षन्ते तस्य न निर्यास्ति" ता०ब्रा०११। "चित्रापूर्ण-मास इति यत् एतत् संवत्सरस्य चक्षुर्वै जायमानस्य हि प्रथमं चक्षुर्जायते तस्मादपि चक्षुरेव प्रथममाविर्भवति अतश्च शाटङ्गादस्य चक्षुः उक्तक्रमेण मुखतो मुखप्रदेश-एव इत्यु, अतो मुखएव तत् संवत्सरमारभ्य गृहीत्वा दीक्षन्ते। य फाल्गुन उक्तः सोऽयत्र विद्यत इत्युक्तं भवति तस्य न निर्यास्ति कश्चिदपि दोषो न विद्यते" इत्थं चित्रापौर्णमास्यां दीक्षितव्यमित्युक्तम् अथ तस्मि-न्नेव मासे शुक्लैकादश्यां दीक्षितव्यमित्याह" भा० 'चतुरहे पुरस्तात् पौर्णमास्या दीक्षेरन्" ता० ब्रा०१२।"चैत्र्या पौर्णमास्याः पुरस्ताच्चतुरहे चतुर्णामह्नां समाहारश्चतुरह-स्तस्मिन्विद्यमाने गवामयनस्य दीक्षा कार्य्या एवं दीक्षणस्य गुणमाह"भा०"तेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्ट-कान्न छम्बट्कुर्वन्ति" ता० ब्रा०१३। "सर्वेषां सत्राणां द्वादश दीक्षा भवन्ति तत्र एकादशीप्रभृति द्वादशसु गतासु रात्रिषु त्रयोदशी रात्रिरष्टमी स्यात् एकाष्टका च बहु-लाष्टमीति अस्यामेकाष्टकेत्युपचारः तस्यां क्रयः सम्प-द्यते प्रथमे ह्युपसर्जने राजक्रयस्तस्मिन् दिने प्रातः-काले प्रायणीयाद्या यज्ञावयवाः प्रक्रम्यन्ते तेन प्रक्रमेण एकाष्टकां न छम्बट्कुर्वन्ति क्रियानुपयोगेन व्यर्थं न कुर्वन्ति अतएव एकाष्टकामारभ्य क्रतो गुणवानस्मिन् पक्षोऽन्तर्भ-वति इत्यर्थः। अन्येऽपि गुणा अस्मिन् पक्षे सन्तीत्याह" भा० "तेषां पूर्वपक्षे सुत्या सम्पद्यते पूर्वपक्षे मासाः सन्तिष्ठमाना यन्ति पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति तान् कल्याणी वागभिवदत्य-रात्सुरिमे सत्रिण इति ते राध्नुवन्ति" ता०ब्रा० १४। "तेषामेकादश्यां दीक्षमाणानां सुत्या सोमयागः पूर्वपक्षे सम्पद्यते सत्राणां सर्वेषां द्वादशोपसदः तस्मादष्टमीप्रभृति द्वादशसु गतासु त्रयोदशी शुक्लपक्षपञ्चमी तस्यां प्रथमो-ऽतिरात्र इति पूर्वपक्षे सुत्या प्रारभ्यत इत्यर्थः। त्रिवृता त्रिवृता ऽहोभिर्मासेषु पूर्वपक्षे एव सर्वे मासाः सन्ति-ष्ठमाना यन्ति वर्त्तन्ते एवं द्वादशसु मासेषु गतेषु पूर्वपक्ष एव सत्रादुत्तिष्ठन्ति तानुत्तिष्ठतः सत्रादुत्थानं कुर्वतो यज-मानाननु पश्चात् पशव ओषधयश्चोत्तिष्ठन्ति ऊर्ध्वं रोहन्ति तान् यजमानान् कल्याणी शोभना वाक् यशस्करी वाक् वदति किमिति इमे सत्रिणो यजमानाः अरात्सुः स-मृद्धा अभवन्निति तदनन्तरं सत्रिणो राध्नुवन्ति समृद्धा भवन्ति"।५अध्यायसमाप्तिपर्यन्ते तत्रैव विधानभेदा उक्ताः। "गवामयनेनेयु" कात्या०श्रौ०२४।५।२।"गवामयन या-ऽभिगम्युते" २४।४।४८। इदञ्च एकपद तेन गावा-मयनिकमित्यादौ ठक् पूर्वोचोद्दिष्ट। "गावामयनिके पृष्ठ्यषडहे प्रत्यहं द्वयम्" जैमिनीयन्यायमाला।

सोमपानौ" ऋ॰५।११।१। २कर्णे मुनौ च "यमिरत्रि भरद्वाजं गविष्ठिरम्" ऋ॰१०।१५०।५। "गविष्ठिर कण्वम्" भा॰।

गवीधुका स्त्री गवेधुका+पृषो॰। धान्यभेदे। "अथाङ्कति वै अर्त्तिमाय गवीधुकाय" तैत्ति॰ ५।४।३।१२।

गवो(वे)श्वर ६त॰ वा अलुक्। गोस्वामिनि अमर।

गवेङ्गित न॰गवामिङ्गितम् अलुक्। शुभाशुभसूचके गवां चेष्टाभेदे तच्च वृ॰ स॰ ६२ अ॰ उक्तं यथा।

"गावो दीनाः पार्थिवस्याशिवाय पादैर्भूमिं कुट्टयन्त्यश्च रोगान्। मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यः पत्युर्भीतास्तस्करानारुवन्त्य। अकारणे क्रोशति चेदनर्थं भयाय रात्रौ वृषभ शिवाय। भृशं निरुद्धो यदि मक्षिकाभिस्तदाशु वृष्टिं सरमात्मजैर्वा। आगच्छन्त्यो वेश्म बम्भारवेण संसेवन्त्यो गोष्ठवृद्ध्यै गवां गाः। आर्द्राङ्ग्यो वा हृष्टरोमण्यः प्रहृष्टा धन्या गावः स्युर्महिष्योऽपि चैवम्"। [ष॰। (गड्गडे) धान्यभेदे अमरः।

गवेडु स्त्री गवे दीयते दीङ् रक्षणे कु पृषो॰ दस्य ड॰ अलुक्

गवेधु पु॰गवे धीयते धाञ्-धारणे कु अलुक्स॰। (गड्गडे) १धान्यभेदे तस्या गवे धारणात्तथात्व यथोक्तम्

"अथ रुद्राय पशुपतये। रौद्रं गावेधुकं चरुं निर्वपति तदेनं रुद्र एव पशुपतिं पशुभ्य स्स्वदयति यद्गावेधुको भवति वास्तव्यो वा एष देवो वास्तव्या गवेधुका स्तस्माद्गावेधुको भवति" शत॰ ब्रा॰ ५।३।३।७।

"गवेधुका तु विद्वद्भिर्गवेधुः कथिता स्त्रियाम्। गवेधुः कटुका स्वाद्वी कार्श्यकृत् कफनाशिनी" भावप्र॰।

तेन शब्दक॰गवेधुशब्दस्य पुंस्त्वोक्ति प्रामादिकी।

गवेधुश्च सुश्रुते कुधान्यवर्गे उक्ता यथा

"कोरदूषकश्यामाकनीवारशान्तनुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकामरूकतोदपर्णीमुकुन्दकवेणुयवप्रभृतय कुधान्यविशेषा"

गवेन्द्र पु॰ गौरिन्द्र इव नित्यसद्रू। श्रेष्ठे गवि।

गवेरुक न॰ गां गोशोभामीरयति ईर-णा॰ उकन् अलुक्। गैरिके लिक॰। गैरिकेण गोर्भूम्यास्तथात्वम्।

गवेश पु॰ ६त॰ अलुक्। १गोस्वामिनि गोरक्षके तेन निर्वृत्तादि॰ संकाशा॰ पाठान्तरे ततोऽण्। गावेश तन्निर्वृत्तादौ त्रि॰। २इन्द्रे च गोपतिशब्दे दृश्यम्। पक्षेऽव्। गवीश उक्तार्थे दु।

गवेशकी स्त्री। गवामीश गोरक्ष तदामूत इव कायति कै–क गौरा॰ ङीष्। (गोरक्षचाकुलिया) लताभेदे शब्दच॰। गवेशकेति केचिदिमं टाबन्तमाहु।

गवेष अन्वेषणे, अद॰ चुरा॰ आत्म॰ सेट्। गवेषयते अजगवेषत। गवेषयाञ्चक्रे। गवेषित गवेषणं गवेषणा। "तीर्थे स्थितस्ततस्तत्राभिचचार गवेषयन्" भा॰व॰२६२ऋ॰। आर्षं पदव्यत्यय। तस्य भ्वादित्वं तङ्वत्त्वं च क्वचित् प्रयोगे दृश्यते "गवेषमाणं महिषीकुलं जलम्" रघु॰।

गवेष त्रि॰ गवेष+अच्। १अन्वेष्टरि भावे अच्। २अन्वेषणे पु॰। तेन निर्वृत्तादि संकाशा॰ अण्। गावेष तन्निर्वृत्तादौ त्रि॰।

गवेषणा स्त्री गवेष–भावे युच्। १अन्वेषणे अमरः। गोरुदकस्य वा एषणा। गोरुदकस्य वा२अन्वेषणे। इष–ल्यु ६त॰। ३गोरन्वेषके त्रि॰। गवेष–ल्यु। ४अन्वेष्टरि त्रि॰ "अग्निरिन्द्रो गवेषणो बन्धुश्चिद्भ्रो गवेषणः" ऋ॰ १। १३२।१। "अशीमः सत्वा गवेषण" ऋ॰ ७।२०।५। "गवेषणः गवामन्वेष्टा उदकान्वेष्टा। यजमानफलस्य मार्गयिता वा" भा॰। भाष्ये गवेष मार्गणे पूर्ववत् ल्यु इत्येव पाठः मुद्रितपुस्तके ल्युट् इति पाठ प्रामादिकस्तस्याकर्त्तर्य्येव विधानात् क्लीबत्वाच्च।

गवेषित त्रि॰ गवेष–क्त। १अन्वेषिते मार्गिते अमर॰।

गवेष्ठिन् न॰ दैत्यभेदे "यद्दुकर्णौ विरोधश्च गवेष्ठी दुन्दुभिस्तथा" हरिवं॰ २अ॰। [पयो॰ समाहारे।

गवैडक न॰गोश्च एडकश्च गवाश्वा॰ नि॰ क्लीवता च। गोमे-

गवोद्ध पु॰प्रशस्तः प्रशस्ता वा गौः "प्रशंसावचनैश्च" पा॰जातेः कर्म॰परनि॰अलुक्। १प्रशस्ते गवि।२प्रशस्तायां गोजातिस्त्रियाञ्च अस्य नियतलिङ्गत्वात् स्त्रियामपि तथात्वम्।

गव्य (आत्मनो गामिच्छति क्यच् "वान्तो यि प्रत्यये" पा॰ अव्) आत्मसम्बन्धित्वेन गोरिच्छायाम् अक॰भ्वा॰ पर॰ सेट्। गव्यति अगव्यीत् अगवीत् गव्या (गा)म् चकार" "गौरसि वीर! गव्यते" ऋ॰ ६।४५।८।२६।

गव्य त्रि॰गोर्विकार॰ गवि भव,गोर्हितं,गोरिद॰ वा यदंत यत् यादौ अव्।१गोसम्बन्धिनि, 'गव्यघृतके" जै॰ अधिकर॰ मा॰। २सरलमर्ध्यं मधुमच्च गव्यम्" कुमा॰ "संवत्सरं तु गव्येन पयसा पायसेन वा।" "गेन्दु गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत्" मनुः।२गोर्हितादौ च। गवि दूर्वौ नेत्रे वा साधु यत्। ३ज्यायां ४रागद्रव्ये च न॰ मेदि॰। ज्याया॰ शरक्षेपणसाधनत्वात् रागद्रव्यस्य च नेत्ररागजनकत्वात्तथात्वम्। गं विकारे ५गोरोचनाद्रव्ये स्त्री राजनि॰।तस्य गोर्विकारत्वात्तथात्वम् तत्र ज्यायाम्

"अश्वोपानिकमीयमानगव्यम्" माघ । समूहे पाशा॰ यत् । ६गोसमूहे, ७गव्यूतौ क्रोशयुगे च स्त्री हेमच॰ ।

गव्याग्री स्त्री गोरिदम् वा॰ अयट् गुडागमश्च यादौ अस् ङीप । गोरवयवे त्वगादौ । "गव्ययी त्वगभवति" ऋ॰ ८।७०।७ । "गव्ययी गोमयी त्वक्" भा॰ ।

गव्ययु त्रि॰ गामिच्छति गो+क्यच्—उन् यादौ वेदे दीर्घयलोपाभावौ । गोरिच्छावति "आ दिश्य इन्द्रयुर्गव्ययु" ऋ॰ ८।२६।६ । "गव्ययुर्गामिच्छन्" भा॰ ।

गव्यु त्रि॰गामिच्छति क्यच् उन् यादौ अस् दीर्घयलोपाभावौ । गामिच्छति । "अश्वयुर्गव्यू रथयुर्वसूयु ऋ॰ १।५१।१४ ।

गव्यूत न गव्यूति+पृषो॰ अदन्तादेशः । १क्रोशे २क्रोशयुगे च हेमच॰ ।

गव्यूति स्त्री गोर्यूतिः "गोर्यूतौ" पा॰ अच् । द्विसहस्रधनु-र्मिते १क्रोश हेमच॰ । २क्रोशद्वये अमर । "गव्या गव्यूतगव्यूती इति दीर्घपाठदर्शनात् शब्दकल्प॰ दीर्घा न्तगव्यूतिशब्दकल्पन प्रामादिकम् तत्र गव्यूतगव्यूती इत्यस्य द्विवचनान्ततया दीर्घान्तशब्दत्वाभावात् किन्तु यूतिरित्यस्य क्तिन्तया निपातनात् "ऊतियूति" इत्यादि पा॰ अक्तिन्तस्यैव ङीपो विधानेन ततो ङीपोऽसम्भवः॥

गह्व गहने अद॰ चुरा॰ उभ॰ सक॰ सेट् । गह्वयति ते अजगह्वत् त । गह्वन दुर्बोध दुष्प्रवेशो दुर्गमश्च ।

गहन न॰ गाह—ल्युट्—"लघ्न गह्वनयोरिति" पा॰ निर्देशात्, पृषो॰वा ह्रस्व गह—गहने ल्युट् वा । १वने अमर । तस्य दुर्गमत्वात् तथात्वम् । २निविडे त्रि॰ "जगाम गहन वनम्" देवीभा॰ ३गह्वरे ४दुःखे च न॰मेदि॰ । ५दुर्गमे ६दुर्बोधे ७दुष्प्रवेशे त्रि॰ । ८परमेश्वरे पु॰ । "करण कारण कर्त्ता विकर्त्ता गहनो गुहः" विष्णुस॰ । "स्वरूप सामर्थ्य चेष्टित वा तस्य ग्राह्य न शक्यते इति गहनः" भा॰ "गम्भीरो गहनो गुप्तः" विष्णुस॰ "दुष्प्रवेशत्वात् गहन अवस्थात्रयसाक्षित्वाद्वा गहन" भा॰ । "गहना कर्मणो गतिः" गीता । ९उदके निघ॰ गाहनात्तस्य तथात्वम् । १०अलङ्कारे स्त्री शब्दार्थचि॰ ।

गहादि न॰ चातुरर्थ्यो छप्रत्ययनिमित्ते पा॰ ग॰ उक्ते शब्दगणे स च गण

"गह अन्तस्थ सम विषम ( मध्य मध्य दिन च-रणे ) उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समान-ग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अव-स्यन्दन कामप्रस्थ खाडायन काठेरणि लावेरणि सौमित्रि शैशिरि आसुत् दैवशर्मि श्रौति आहिंसि आ-मित्रि व्याडि वैजि आध्यश्वि आनृशंसि शौङ्गि आग्नि शर्मि भौजि वाराटकि वाल्मीकि क्षेमवृद्धि आश्वत्थि औद्गाहमानि ऐकबिन्दवि दन्ताग्र हंस तत्त्वग्र उत्तर अनन्तर ( मुखपार्श्वतसोर्लोप ) ( जनपरयोः कुक् च ) (मध्य च) (देवस्य ) (वेणुकादिभ्यश्छण् । गहादिराकृतिगणः" । "गहादिभ्यश्च" पा॰ । गहीयः ।

गह्वर न॰ गह—कर्मणि भावे वा वा॰ष । १गाम्भीर्ये २दुष्प्रवेशे च तत आस्मादि॰ चातुरर्थ्यां र । गह्वर तद्युक्तादौ त्रि॰।

गह्वर न॰ गुह—वरच पृषो॰ नि॰ । १दम्भे अमर । २वने॰ ३निकुञ्जे पु॰ मेदि॰ । ४रोदने, हेमच॰। ५विषमस्थाने, ६अनेकार्थसङ्कुले च न॰ शब्दार्थचि॰ । "अथान्धकार गिरिगह्वरस्थम्" रघु । ७गुहायां न॰स्त्री स्त्रीत्वपक्षे ङीप् । "गौरीगुरोर्गह्वरमाविवेश" रघु । "गुहाहितं गह्वरेष्ठं पुराणम्" कठो॰ अक्षरशा॰॰ धनम् । "काट्याय च गह्वरेष्ठाय च" यजु॰१६।४।

गा गतौ सक॰ भ्वा॰ आ॰ अनिट् । गाते अगास्त जगे ।

गा स्तुतौ सक॰जन्मनि अक॰जुहो॰वैदिकोऽयं धातुः सार्वधातुके अभ्यासस्येत्वम् । जिगाति अगासीत् । जगौ । "सोमो जिगाति गातुवित्" ऋ॰ ३।६२।१२ । "नरिषु सधा यज्ञो जिगाति चेतन" १।१२।२। "क्षेषु क्षेषु प्रथमो जिगाति" १०।८।२ । इडादेशस्य इणादेशस्य च गाते रूप तत्तद्धातौ उक्तम् ।

गाङ्ग पु॰ गङ्गाया अपत्यम् शिवा॰ अण् । गङ्गापुत्रे १भीष्मे २कार्त्तिकेये च गङ्गापुत्रशब्दे दृश्यम् । गङ्गाया इदम् अण् ।३गङ्गासम्बन्धिनि सलिलादौ "गाङ्गमम्बु सित मम्बु यामुनम्" काव्यप्र॰ "गाङ्ग जल निर्मलम्" गङ्गास्तोत्रम् । "गाङ्ग यथैव सीर्यति" प्रा॰त॰। ४मेघ नि सृते सुश्रुतोक्ते जलभेदे तल्लक्षणादि अम्बुशब्दे ३१४॰ उक्तम् । ५स्वर्णे "य गर्भ सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्व पर्वते न्यस्त हिरण्य समपद्यत" भा॰ व॰ उक्तेस्तस्य तज्जातत्वात् तथात्वम् । अग्नि-रेत शब्दे चित्र॰ति । ६स्वर्णमाक्षिके धुस्तूरे अमर ७कशेरुणि शब्दार्थ॰ । ८नदीसम्बन्धिनि तटादौ त्रि॰ ।

गाङ्गट पु॰ गाङ्ग नदीतटमटति अट—अच् शक॰ । (चिङ्गिडि) १मत्स्यभेदे शब्दरत्ना॰। स्वार्थे क । तत्रैवार्थे शब्दर॰ । [गङ्गीय । (चिङ्गिड़ि) मत्स्यभेदे शब्दर॰ ।

**गाङ्गटेय** पु० गाङ्गे नदीतटे अटति अट–अच् पृषो० ।

**गाङ्गायनि** पु० गङ्गाया अपत्यम् तिका० फिञ् । १भीष्मे २कार्त्तिकेये च । प्रवरप्रवर्त्तके ३ऋषिभेदे च प्रव-राध्याय० ।

**गाङ्गेय** पु० गङ्गा+अपत्ये ढक् । १भीष्मे, २कार्त्तिकेये च । "स गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्ब पर्वते न्यस्तं हिरण्यं समपद्यत" इत्युक्ते० ३स्वर्णे, ४तन्नाम-नामके मुस्तके, ५कशेरुणि च शब्दार्थचि० । ६इक्षि-सम्भूते पु० त्रिका० । ७भद्रमुस्तके राजनि० ।

**गाङ्गेरुका** स्त्री गाङ्गं जलमीरयति क्षिपति ईर–कु स्वार्थे क गौरा० ङीष् । नागबलायाम् अमरः गोरक्ष तण्डुलायाम् शब्दार्थचि० ।

**गाङ्गेष्टी** स्त्री गाङ्गे नदीतटे तिष्ठति स्था–क अम्ब० ष-त्वम् अलुक् स० गौरा० ङीष् । (नटा) कटम्बरा-लतायाम् हारा० ।

**गाङ्ग्य** त्रि० गाङ्गे गङ्गाकूले भव यत् । गाङ्गसम्ब-न्धिनि । "छद कवो न गाङ्ग्य" ऋ०६।४५।३१ । "गा-ङ्ग्य गाङ्गकूले भव" भा० ।

**गाजर** न० गज–मदे घञ् "न कादे" पा० न कुत्वम् गाज मदं राति रा–क । १ग्टञ्जने २गर्ज्जरे (गाजोर) । मूलभेदे गार्ज्जरमित्यत्र भावप्र० पाठान्तरम् गर्ज रवन्दे सुषाद्युक्तम् ।

**गाडव** पु० गडुराकारोऽस्त्यस्य प्रज्ञा० अण् गडोर्भावो वा अण् । १गवेडुधान्ये त्रिका० २गडुभावे न० ।

**गाडिक** त्रि० गडिका+चतुरर्थ्यां सुतङ्ग० इञ् । गडिक-निर्वृत्तादौ ।

**गाडुल्य** न० गडुलस्य भावः ब्राह्म०ष्यञ् । गडुलभावे ।

**गाढ** न०गाह–क्त । १अतिशये दृढे । २तद्वति, ३अवगाढे, ४वेष्टिते च त्रि० । "तपस्विगाढां तमसा प्रापेति" रघु । "गाढकान्तदशनक्षतव्यथाम्" माघ । "सद्य कण्ठ-च्युतभुजलतापन्थिगाढोपगूढे" मेघ० ।

**गाढमुष्टि** पु० गाढोमुष्टिरस्य । खड्गे मेदि० ।

**गाढावटी** स्त्री चतुरङ्गक्रीडाङ्गे क्रीडाभेदे"नौकैका घटिका-यस्य विद्यते खेलने यदि । गाढावटीति विख्याता यद नश्य न इष्यति" ति०त० । [कारिभवादौ ।

**गाणकार्य्य** त्रि० गाणकारो भवः कुर्वादि० ण्य । गण-

**गाणगारि** पु०गणगारस्यापत्यम् इञ् । ऋषिभेदे । "सर्वे समानमाला सु गाणगारि" विश्वाद०धृतवाक्यम् । "पुनर्होमश्च गाणगारि" आश्व०श्रौ० २।१७।१८ । अत्रो

**गाणपत** त्रि० गणपतेरिदम् अश्वपत्या० अण् यकोऽपवाद । १गणपतिसम्बन्धिनि । "सारस्वतो गाणपत सौरश्च वैष्णव क्रमात्" ति० त० ।

**गाणपत्य** त्रि० गणपतेर्भाव० पत्यन्तात् यक् । गणपतिभावे "महादेवप्रसादेन गाणपत्यञ्च विन्दति" भा० व० ८२ अ० । "उमेशय रजनीमेका गाणपत्यमवाप्नुयात्" तत्राध्याये ।

**गाणिक** त्रि० गणं वेत्त्यधीते वा उक्था०ठक् । १गणस्थलादि पाठके २तद्वेत्तरि च । गणे गणपाठे साधु कथा०ठक् । ३गणस्थलकुशले त्रि० । [यञ् । वेश्यासमूहे हेम० ।

**गाणिक्य** न० गणिकानां समूहः गणिकाया यञ्" वार्त्ति०

**गाणिन** पु स्त्री गणिनोऽपत्यादि "इन्यस्यनपत्ये" पा० अपत्यार्थकेनो निषेधेऽपि गाथिविदथीत्यादिना इनो-नलोप० । १गणिनोऽपत्ये २तच्छात्रे च स्त्रियां ङीप् ।

**गाण्डव्य** पु० गण्डोरपत्यादि गर्गा० यञ् । गण्डोरपत्ये । यूनि यञन्तत्वात् फञ् । गाण्डव्यायन यूनि तदपत्ये लोहिता० स्त्रियां युवत्यामयुवत्याञ्च ष्फ पित्त्वात् ङीष् । गाण्डव्यायनी तदपत्यस्त्रीमात्रे ।

**गाण्ड(ण्डी)** स्त्री गण्डि–इञ् "गाण्डग्रजगात् सञ्ज्ञायाम्" पा० दीर्घनिर्द्देशात् नि० इद्धि० । अन्यौ । इदिकारान्त-त्वात् वा ङीप् । तत्रार्थे । "एष गाण्डीमयस्त्वाप:" भा० उ० ९७अ० ।

**गाण्डि(ण्डी)व** पु न० गाण्डिरस्त्यस्य संज्ञायाम् व । १अर्जु-नस्य धनुषि । तत्र धनुर्ब्रह्मणा निर्माय सोमाय दत्त सोमेन च वरुणाय, अग्निप्रार्थितेन च वरुणेनार्जुनाय दत्तम् तत्कथा भा०आ०२२५अ० ।

"तमभ्ययौद्रूमकेतु प्रतिगृह्य जलेश्वरम् । चतुर्थं लोक-पालानां देवदेवं सनातनम् । सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते । तत् प्रयच्छोभय शीघ्रं रथश्च कपि-लक्षणम् । कार्य्यञ्च सुमहत् पार्थो गाण्डीवेन करिष्यति । चक्रेण वासुदेवश्च तन्ममाद्य प्रदीयताम् । ददामीत्येव य-रुण पावक प्रत्यभाषत । तदद्भुत महावीर्य्यं यशःकीर्त्ति विवर्धनम् । सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथि च । सर्वायुधमहामात्र परसैन्यप्रधर्षणम् । एकं शतसहस्रेण सम्मितं राष्ट्रवर्धनम् । चित्रमुच्चावचैर्वर्णैः शोभितं श्लक्ष्ण-मव्रणम् । देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः । प्रादा-च्चैव धनूरत्नमक्षय्यौ च महेषुधी" । "एतद्दिव्यं धनु-

पिरगाथाश्च । "इतिहासश्च पुराणञ्च गाथाश्च नाराशंसीश्च" अथ० १५।६।४ । ६वाक्यमाले निघ०।

**गाथक** त्रि० गै—थकन् । गायके "कथाश्चिरलिगाथकै" भट्टिः।

**गाथपति** पु० ६त० डत्रापोरिति ह्रस्व० । वाक्पतौ रुद्रे । "गाथपतिं मेधपतिं रुद्रम्" ऋ० १।४३।४ ।

**गाथिन्** त्रि० गाथा स्तोत्रादि अस्त्यस्य इनि । गाथायुक्ते गीयमानसामयुक्ते "इन्द्रमिद्गाथिनः" १।७।१ । तस्यापत्यमण् गाथिविदथीत्यादिना अपत्येऽपि न टिलोपः गाथिन तदपत्ये तच्छात्रे च । स्त्रियां ङीप् ।

**गादि** पुस्त्री गदस्यापत्यं बाह्वा० इञ् । गदरूपयादवस्यापत्ये । [निर्दिष्टे ।

**गादित्य** त्रि० गदितेन निर्वृत्तादि प्रगद्या० ञ्य । गदितेन

**गाध** प्रतिष्ठायां अक०ग्रन्थने लिप्सायाञ्च सक० भ्वा० आत्म० सेट् । गाधते अगाधिष्ट । जगाधे । ऋदित् चङि अह्रस्व । अजगाधत्-त । गाध ।"अगाधत ततो व्योम "गाधितासे नभो भूय" भट्टिः ।

**गाध** पु० गाध—आधारे घञ् । १स्थाने, २लिप्सायां, च कर्मणि घञ् । ३तलस्पर्शे हेमच०।४तद्वति त्रि०।"सरित कुर्वती गाधाः" रघु । "अयोमन्हि गाधमुत प्रतिष्ठाम्" ऋ०५।४७।७ ।"अनागाधितगाधं च पातालतलमव्ययम्" भा०आ०२१अ०।

**गाधि** पु० गाध—इन् । चन्द्रवंश्ये कान्यकुब्जाधिपे, विश्वामित्रपितरि नृपभेदे । "कुशस्य चित्त्वय कान्तस्य कुशनाभस्य धीमत । जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः स पिता मम काकुत्स्थ । गाधि परमधार्मिक" रामा० बा०१।३४अ०। राम प्रति विश्वामित्रोक्तौ । "ऐलपुत्रानह वक्ष्ये" इत्युपक्रमे "कुशस्ता बभूवुर्हि चत्वारो देववर्चसः"। कुशिक कुशनाभश्च कुशाम्बो मूर्त्तिमांस्तथा" "कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमं विभुम् । लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान्" "पूर्णे वर्षसहस्रे वै तन्तु शक्रो ह्यपश्यत । अत्युग्रतपसं दृष्ट्वा सहस्राक्ष पुरन्दर । समर्थः पुत्रजनने स्वमेवांशमवासयत् । पुत्रत्वे कल्पयामास स देवेन्द्रः सुरोत्तमः । स गाधिरभवद्राजा मघवान् कौशिकः स्वयम् । पौरकुत्स्यभवद्भार्या गाधिस्तस्यामजायत" हरिव० २७अ० ।

**गाधिज** पु०गाधेर्जायते जन—ड । विश्वामित्रे ब्रह्मर्षौ तत्कथा हरिव० २७ अ० । "विश्वामित्रस्तु दायादः गाधेः कुशिकनन्दन । जन पुत्रस्तु तपोविद्याशमात्मकम् । प्राप्य ब्रह्मर्षिसमतां योऽयं ब्रह्मर्षितां गतः । अचीकशब्दे १४१४पृ० तदुत्पत्तिकथा । गाधिसुतादयोऽप्यत्र "ततोऽभ्यगात् गाधिसुतः क्षितीन्द्रम्" भट्टिः । "प्रजापतिसुतादासीत् कुशो नाम महीपतिः । कुशस्य पुत्रो बलवान् कुशनाभः सुधार्मिकः । कुशनाभसुतो ह्यासीत् गाधिरित्येव विश्रुतः" "गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः" रामा०बा०२१अ०।२विश्वरथादौ च ।

**गाधिन्** पु०गाधिनामके नृपे।"प्रीतमाख्यात मां प्राप्तं कौशिकं गाधिनः सुतम्" रामा०बा०१८अ०

**गाधिपुर** न० ६त० । कान्यकुब्जे महोदयाख्ये पुरे हेमच० । कान्यकुब्जशब्दे १८८६ पृ० कुशनाभशब्दे च दृश्यम्। गाधिनगरादयोऽप्यत्र ।

**गाधेय** पु० गाधेरपत्यम् ढक् । इत्यनुवृत्तौ "इतोऽनिञः" पा० ढक् । गाधिपुत्रे विश्वामित्रादौ । "विश्वामित्रस्तु गाधेयो राजा विश्वरथस्तथा । विश्वकृत् विश्वजिच्चैव तथा सत्यवती नृप ।" हरिव० २२ अ० । "गाधेयदिष्टं विरसं रसन्तम्" भट्टिः । तस्य कन्यायां २सत्यवत्यामृचीकपत्न्याम् स्त्री ङीप् । "उवाच भार्यां गाधेयी भर्त्तारं भार्गवर्षभम्" भा० आनु० ४अ०।

**गान** न०गै—भावे—ल्युट् । १गीतौ । गानं हि द्विविधं लौकिकं वैदिकञ्च । तत्र लौकिकगानस्य लक्षणादि गीतशब्दे वक्ष्यते वैदिकस्य लक्षणादि जै०९।२।२९ सूत्रभाष्यादौ उक्तं यथा

"अर्थैकत्वात् विकल्पः स्यात्" २९सू० । "सामवेदे सहस्रं गीत्युपायाः । आह, के इमे गीत्युपायाः नाम ?" । उच्यते,—गीतिर्नाम क्रिया, सा आभ्यन्तरप्रयत्नजनितस्वरविशेषाणामभिव्यञ्जिका, सा सामशब्दाभिलप्या, सा च नियतपरिमाणायामृचि गीयते, तत्सम्पादनार्थो ऋक्षु अक्षरविकारो विश्लेषो विकर्षणमभ्यासो विराम स्तोभ इत्येवमादयः सर्वे समधिगता समाम्नायन्ते । तेषु संशय,—किं समुच्चीयन्ते उत विकल्प्यन्ते ?—इति । किं तावन्नः प्रतिभाति, सर्वेषां समाम्नानात् सर्वाङ्गोपसंहारित्वाच्च प्रयोगवचनस्य, समुच्चीयेरन्निति एवं प्राप्ते ब्रूम, "अर्थैकत्वाद्विकल्पः स्यात्" इति । एकार्था हि गीत्युपायाः,—गीतिं कथं निर्वर्त्तयेमेति प्रयुज्यन्ते, तत्रान्यतरेण गीतौ निर्वृत्तायां नेतरे प्रयोगमर्हन्ति । तस्माद्विकल्प इति" । तत्र स्वराः चतुरक्षरादयः प्रवान्ता सप्त सामविधानब्रा०१।१। उक्ताः

12 वाच - IV

यथा "तद्योऽसौ क्रुष्टतमइव साम्नः स्वरस्तं देवा उपजीवन्ति येऽपरेषां प्रथमस्तं मनुष्या यो द्वितीयस्तं गन्धर्वाप्सरसो, यस्तृतीयस्तं पशवो, यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते, य पञ्चमस्तमसुररक्षांसि, योऽन्त्यस्तमोषधयो वनस्पतयो यश्चान्यज्जगत्, तस्मादाहु सामैवाद्यमिति साम ह्येषामुपजीवनं प्रायच्छत्। उपजीवनीयो भवति य एवं वेद तस्य ह वा एतस्य साम्नः क्रुष्टादीनि स्वरोमाणि लोमानि लोमानि। योऽह वै साम्न स्व य सुवर्णं वेद स्व च ह वै साम्न सुवर्णं च भवति स्वरो वाव साम्नः स्व तदेव सुवर्णम्"।

छान्दोग्ये च "का साम्नो गतिरिति स्वर इति हो वाच" "स्वर इति स्वरात्मकत्वात् साम्न, यो यदात्मक स तद्गतिस्तदाश्रयश्च भवतीति मृदाश्रय इव घटादि" भा०। सामसंहिताभाष्येऽपि तथैवोक्तं यथा

"साम शब्द-वाच्यस्य गानस्य स्वरूपमृगक्षरेषु क्रुष्टादिभिः सप्तभिः स्वरैः, अक्षरविकारादिभिश्च निष्पाद्यते। क्रुष्ट प्रथम द्वितीयस्तृतीयश्चतुर्थ पञ्चमः षष्ठ इत्येते सप्त स्वरा ते चावान्तरभेदैर्बहुधा भिन्ना। स्वरस्य साम-निष्पादकत्वं छान्दोग्योपनिषद् प्रथमे प्रपाठके प्रश्नोत्तराभ्यामामनन्ति"।

तत्राक्षरविकारविषये पूर्वोत्तरपक्षौ जै० ९।२।२२। सूत्रादिभाष्ययोर्दर्शितौ यथा

"सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्" सू०२२। "इदमाम्नायते,—'रथन्तरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायति कवतीषु रथन्तरं गायति, विराट्सु वामदेव्यम्" इति। तत्र सन्देह,—किमुत्तरावर्णवशेन गातव्य, किं योनिवर्णवशेन?। कथमुत्तरावर्णवशेन गीतं भवति? कथं वा योनिवर्णवशेन? इति। उच्यते, किञ्चिदुदाहरणं गृहीत्वा व्याख्यास्यामः,—यदा तावत् इडन्ताख्यमाई भवति इति योनौ यस्मिन् भागे आईभाव क्रियते। ततो योनिवर्णवशेन गीतं भवति, अथ भागान्तरे इडन्ताख्य इडा आईभाव क्रियते, तत उत्तरावर्णवशेन गीतं भवति। किं पुनरत्र कर्त्तव्यम्?—योनिवर्णवशेनेति। कथम्?। यावति भागे एकारस्य योनौ ईभाव कृतस्तं विचारयाम,—किं तत्र कृतमिति?—एकारो नोच्चारितः, ईकाराकारौ आगमितावपि। एवमुत्तरास्वपि तावत्येव भागे यो वर्णः, स न उच्चारयितव्य, ईकाराकारौ आगमयितव्यौ इति। एवं यद्योन्यां तदुत्तरयोर्गीतं भवति। तस्माद्योनिवर्णवशेन गातव्यमिति। अपि चैव गीतिर्भ मङ्क्ष्यति, इतरथा कश्चित् प्रगाथेषु यत्र मह्यतो गीति अन्येषु अक्षरेषु गीयते, तत्र व्यक्त प्रगाथानि यत्रोत्तराक्षरवशेन क्रियते, तस्माद्योन्यक्षरवशेन कर्त्तव्यमिति। अपि च कश्चित् क्रम उपलभ्यते यत्क्रमे आईभावभाग्वर्णं, अपि च कश्चिदुपलभ्यते, यत्र प्राकृत आगमो नैव क्रियते, तत्र स्वाध्यायकाले गानेन च कर्मकाल गानमविरुद्ध कर्त्तव्य, तस्मात् योन्यक्षरवशेन कर्त्तव्यमिति "सामप्रदेशे विकार" आईभावादि, "तदपेक्षः" योन्यपेक्ष, एतत् शास्त्रेण कृत,—'यद्योन्यां तदुत्तरयो' इति, यावति सामभागे योनौ आईभाव कृत, तावत्येवोत्तरासु कर्त्तव्य" भा०। "वर्णे तु बादरिर्यथाद्रव्य द्रव्यव्यतिरेकात्"२३सू०। "उत्तरावर्णवशेन कर्त्तव्य बादरिर्मन्यते स्म, न योनिभागवशेन। कुत?। योऽसौ प्रकृतौ आईभाव कृतः, भावो आगम, न च तत्र एकारलोप, किन्तर्हि? एकारो नाम आवर्णम् ईवर्णश्च आवर्णं स्वरम्, ईवर्णं विवृतम्, उभे अपि च दीर्घे, ताभ्यामसाधुभ्यां सन्ध्यक्षर साधु जन्यते। तत्र प्रकृतौ आकारेकारौ विश्लेषितौ, नापूर्वावानीतौ, गुणस्तु तयो कश्चिदपूर्व कृत। सर्वत्रात्र प्रभाव प्रत्यक्ष मद्यत्, तावति भागेऽन्यो वर्णो भवति, न सन्ध्यक्षर, तत् सन्ध्यक्षराभावे विश्लेषो न शक्य कर्त्तुम्। अन्यस्मिन् भागे यत् सन्ध्यक्षर भवति, तत् तद्याथाविश्लेष क्रियते एव, यद्योन्यान्तदुत्तरयो कृत भवति, योन्या हि संश्लिष्टयोर्विश्लेष कृत, इहापि संश्लिष्टयोर्विश्लेष, इतरथा व्यतिरिक्त कल्पित स्यात् अथ यदुक्तः,—गीति भङ्क्ष्यतीति, न भङ्क्ष्यतीति, विनाश कृत्वा अक्षर गायिष्यते। संश्लेषभावाभावयो विश्लेष, आगमौ नोपरोत्स्येते" भा०।

स्तोभविषये च तथैव तौ पक्षौ तत्रैव९।२।२४।२८सूत्रादौ दर्शितौ यथा

"स्तोभस्यैके द्रव्यान्तरे निवृत्तिमस्मत्"२४सू०। "कवतीषु रथन्तरं गायति, रथन्तरमुत्तरयोर्गायति यद् योन्यां तदुत्तरयोर्गायति' इति। ततोत्तरावर्णवशेन गातव्यमित्येतत् समधिगतम्। अथेदानीम् इद सन्दिह्यते,—किं स्तोभा प्रदिश्यन्ते न वा? इति। किं प्राप्तम्?—न प्रदिश्यन्ते इति। कुतः। गीतिर्हि

साम, न स्तोभा, या गीतिः, सा प्रदिश्यते, "यद्योन्यां तदुत्तरयोर्गायति" इति गायतिशब्दसम्बन्धात्। अपि च ऋक्शब्दार्थैरसम्बध्यमानः स्तोभोऽनर्थकः स्यात्, तस्मादपि न प्रदिश्येत। अपिच क्वचिद्भवति वचनम्,— "ऐन्द्राग्नमदष्टयसाम गायति" इति, तत्रानुपपत्तिर्भवेत् गीतकर्म ह्यैन्द्रो वाक्यशेषेभ्योऽवगम्यते। तस्य "तपति" इत्यनेन सम्बन्धो न स्यात्। तस्मात् स्तोभस्य ऋगन्तरे निवृत्तिः, यथा ऋगक्षराणामगीतित्वात् निवृत्तिरेव स्तोभाक्षराणामपीति" भा०। "सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात्"२५सू०। "नैतदस्ति,-स्तोभानां निवृत्तिरिति, सर्वातिदेशो हि भवति, ऋक्—स्तोभ-स्वर-कालाभ्यासविशिष्टाया गीतेः सामशब्दो वाचकः। कथमवगम्यते ?। तत्र प्रयोगात्, यदि स्तोभा निवर्त्तेरन्, तत्कृतो विशेषो नोपसंहृतः स्यात् तत्र शब्दो बाध्येत। तस्मात् स्तोभाः प्रदिश्येरन्। यत्तूक्तम्,- ऋक्शब्दार्थैः असम्बध्यमाना स्तोभा अनर्थका भवेयुः, अत्र ब्रूमः,—"लोकवत्" न अनर्थका भविष्यन्ति। तद्यथा, लोके गायनैरङ्गव्यञ्जकानि यानि नाम प्रक्षिप्यन्ते, तानि गीतिकालगणनार्थानि, नार्थसम्बन्धाय उच्चार्यन्ते, सुख ह्यक्षरैः गीतिकालः परिच्छिद्यते, तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्त्तेरन्निति" भा०। "अन्वयतश्चापि दर्शयति"२६सू०।"अन्वयतश्चापि स्तोभान् दर्शयति, "यत्राधिकानि पदानि निवर्त्तन्ते, "स्तोभा गेष्णावानुयन्ति" इति, "स्तोभा" स्तोभा एव "गेष्णा" स्वरा। तस्मादपि स्तोभा प्रदिश्यन्ते" भा०। "निवृत्तिर्वाऽर्थलोपात्"२७सू०।"वाशब्दात्पक्षो विनिवर्त्त्यते। 'निवृत्ति 'अग्निष्टपति' इत्येवञ्जातीयका, गीतकर्म ह्यैन्द्री वाक्यशेषे उपलभ्यते,न तेनैवञ्जातीयका स्तोभाः सम्बध्येरन्निति। अन्वयात्सम्बध्यन्ते लोकवदिति यदुक्तं, तत्परिहर्त्तव्यम्" भा०। "अन्वयो वार्थवादः स्यात्" २८सू०। "अन्यीयुर्वा एवञ्जातीयकाः स्तोभा, नहि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे, यत्र वाक्यशेषवचनं, सोऽर्थवाद" भा०।"अधिकञ्च विवर्णञ्च जैमिनिः स्तोभशब्दत्वात्" २६सू०। "अथ कः स्तोभो नाम, ? तस्य लक्षणं कर्त्तव्यम्, उच्यते,—य ऋगक्षरेभ्योऽधिको न च ते सवर्णः स स्तोभो नाम, ईदृशे हि लौकिका स्तोभशब्दमुपचरन्तीति,—तद्यथा देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितमिति, यदर्थवचनेभ्योऽधिकं विवर्णञ्च, तत् आलोचय एवंप्रकारो भवन्ति। लक्षणप्रयोजनं न वक्तव्यं, लक्षणकर्मणो हि तदेव प्रयोजनं, यल्लक्षितो भविष्यतीति। किमर्थमुभयं सूत्रितं ? नन्वन्यतरत् पर्याप्तम् अधिकमिति वा' इति। नेत्याह,— भवति हि किञ्चित् अधिकं न सवर्णं,—यथा अभ्यासः,- "तोयाई, तोयाई" इति, तथा किञ्चित् विवर्णं,नाधिकं,- यथा विकारः,—"ओग्नाइ" इति। तस्मादुभयं सूत्रयितव्यमिति" भा०।

विवृतञ्चैतत् सामसंहिताभाष्ये यथा

"समुच्चेया विकल्प्या वा विभिन्ना गीतिहेतवः। आद्यः प्रयोगपरूपादैकत्वाद्विकल्पनम्। छान्दोग्ये तवलकारादि शाखा-भेदेषु विलक्षणा गीति-हेतवोऽक्षरविकारादय आम्नायन्ते, ते सर्वे कर्मानुष्ठाने समुच्चेतव्याः, कुतः ? प्रयोगवचने सर्वेषां परिगृहीतत्वात्—— नैवम्, एकैक-शाखोक्तैरेवाक्षर-विकारादिभिरध्ययनकाले एव गीतिस्वरूपनिष्पत्तेः सन्निष्पत्तिलक्षणस्य प्रयोजनस्यैकत्वात्, प्रयोगवचनपरिगृहीता अपि व्रीहियव-वद् बृहद्रथन्तरवच्च विकल्प्यन्ते" इति। गीतिहेतुषु स्तोभस्यात्यन्तमप्रसिद्धत्वात्तल्लक्षणं तस्मिन्नेव पादे एकादशाधिकरणे चिन्तितम्——"स्तोभस्य लक्षणं नास्ति किं वास्ति न विवर्णता। आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत्। न तावद् विवर्णत्वं लक्षणम्, वर्णविकारस्य विपरीत-वर्णत्वेन स्तोभत्व प्रसङ्गात्, "अग्न आयाहि" (ऋ,१म,१द,१) इत्यस्यामृचि अकारस्य स्थाने ओकारं कृत्वा गायन्ति "ओग्नाइ" इति (गे०प्र१सा१)। अधिको वर्णः स्तोभ इत्युक्ते सति, अभ्यासेऽतिव्याप्तिः, "पिबासोममिन्द्रमन्दतुत्वा" इत्येतस्यामृचि दतुत्वेत्यक्षर-त्रय गानकाले त्रिरभ्यस्तम्। अतो विकाराभ्यासयोरतिव्याप्तेर्नास्तिलक्षणम्-इति चेद्—नैवम्, अधिकत्वे सत्यृग्विलक्षण-वर्णः स्तोभ" इति विशिष्टस्य तल्लक्षणत्वात्, लोकेऽपि सभायां विप्रलम्भकैरुच्यमानं प्रकृतार्थानन्वितं कालक्षेपमात्र-हेतुं शब्दराशिं स्तोभ इत्याचक्षते, तस्मादस्ति लक्षणम्" इति। अक्षर-विकार-स्तोभादिवत् वर्ण-लोपोऽपि क्वचिद् गीति-हेतुर्भवति, तल्लोपविषयश्च विचारो नवमाध्याये प्रथमपादस्याष्टादशाधिकरणेऽभिहित——१०"इरा गिरा विकल्पः स्यादुतैरैवाविशेषतः। आद्यमैरं बाध-पूर्वमिरायाविहितत्वतः। ज्योतिष्टोमे श्रूयते "यज्ञायज्ञीयेन स्तुवीत"-इति।

'यज्ञायज्ञा'-इत्यनेन शब्देन युक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयम्, तस्यामृचि गिराशब्दः पठ्यते 'यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे' इति। तत्र सामगा योनिगानमधीयानाः सर्वेऽपि गकारेण गायन्ति 'गायिरा गिरा'-इति, ब्राह्मणे तु गकार-लोप पूर्वक-माकार यकारादिकगानं विधीयते 'ऐरं कृत्वोद्गेयम्'-इति, गिरा-शब्दे गकारलोपात् इराशब्दो भवति, इरायाः सम्बन्धि गानम् ऐरम्, तादृशं कृत्वा प्रयोगकाले उद्गानं कर्त्तव्यमित्यर्थः। तत्र योनिगानब्राह्मणयोः समानबलत्वेन विशेषाभावात् विकल्पेन प्रयोक्तव्यम् इति प्राप्ते, ब्रूमः—"न गिरा गिरेति ब्रूयात्, यद् गिरा गिरेति ब्रूयाद् आत्मानमेव तदुद्गाता गिरेत्" इति गकार-सहित गाने बाधकश्रुत्या गकार-रहित-गिरापदं गेयत्वेन विधीयते, तत्पदादेरिकारस्य गानार्थमाकारो यकार इकारश्चेति त्रीन् वर्णान् प्रयुञ्जते, तत्र 'आयिरा'-इत्येव गातव्यम्" इति। तत्रैवोपरितनाधिकरणे कश्चिद् विशेषश्चिन्तितः—॥ "इरापदं न गेयं स्याद् गेयं वा गीत्युक्तितः। न गेयं गीयमानस्य स्थाने पाठात् प्रगीयते। ब्राह्मणेन निहित इराशब्दो न गातव्यः, कुतः? ऐरमिति शब्देन गीतेरनुक्तत्वात्, पाणिनीयेन 'विमुक्तादिभ्योऽण् [५,२,६१] इति सूत्रेणैराशब्दादण् प्रत्ययो मत्वर्थीयो विहितः, तथा सतीरापदोपेतं कृत्वेत्येतावानेवार्थो भवति, यदि प्रगीतेरापदसम्बन्धस्तद्धितेन विवक्ष्येत, तदानीमाकारो यकार इकारो रेफ आकारश्चैतैः पञ्चभिर्वर्णैर्निष्पन्नमायिरारूपं गीयमानैरा शब्द-प्रातिपदिकं भवति, तादृशात् प्रातिपदिकात् पाणिनीयेन 'वृद्धाच्छः [४,२,११४] इति सूत्रेण छप्रत्ययान्तरे सति, आयिरीयं कृत्वेति ब्राह्मणपाठो भवेत्, तस्मान्न गेयम् इति प्राप्ते, ब्रूमः—गीयमानस्य गिरा-पदस्य स्थाने इरापदं विधीयते-इतिपदमात्रस्य बाधः, गानन्तु न बाध्यते, किञ्च विमुक्तादिसूत्रेणाण्प्रत्ययेऽपि, पूर्वस्मात् 'मतौ छः सूक्त-साम्नोः [५,२,५९] इति सूत्रात् सामानुवृत्तेरैरं सामेत्यर्थो भवति, सामत्वं च गीतिसाध्यम्, यदा तु 'तस्य विकारः [४,३,१३४]'-इत्यर्थे अण्प्रत्ययः, तदानीमिराया विकार इति विस्पष्टैवोक्तगानं लभ्यते, तस्माद् गातव्यम्" इति। तत्रैव ऋगक्षराणां संस्कारकत्वं सामात्मकसाम्नो व्यवस्थाप्योक्तं यथा

यथोक्तऋगक्षराणां संस्कारकं गीत्यात्मकं यत् साम तदेतदेकैकं छन्दोगा एकैकस्यामृचि 'वेदसाम'नामके ग्रन्थेऽधीयन्त, ऊहनामके तु ग्रन्थे एकैकं साम त्र्यृचेऽधीयते सोऽयमूहग्रन्थः तस्मिन्नेव पादे प्रथमाधिकरणस्य द्वितीयवर्णके विचारितः—"ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथवाग्रिमः। वेदसामसमानत्वाद् विधिसार्थत्वतोऽन्तिमः। यस्मिन् ग्रन्थे सामगास्त्र्यृचे त्र्यृचे सामैकैकं गायन्ति सोऽयमूहग्रन्थो नित्यो न तु पुरुषेण निर्मितः, कुतः? अनध्यायवर्जनेन कर्त्तुरस्मरणेनाध्यापकानां वेदत्वप्रसिद्ध्या च वेदसामनामक-योनिग्रन्थ-सदृशत्वात्, इति चेत्—नैवम्, अपौरुषेयत्वे विधिवैयर्थ्य-प्रसङ्गात्—'यद्योन्यां तदुत्तरयोर्गायति'-इति विधीयते। अयमर्थः—अपौरुषेयत्वेन सम्प्रतिपन्ने वेदसामनामके ग्रन्थे 'कया नश्चित्र आ भुवत्' इत्येतस्यां योन्यामेकस्यामृचि यद् वामदेव्य-नामकं सामोपदिष्टं तदेवोत्तरयोर्ऋचोः 'कस्त्वा सत्यो मदानाम्' "अभी षु णः सखीनाम्" इत्येतयो द्वितीयतृतीययोर्गातव्यम्-इत्ययं विधिरूहग्रन्थस्य वेदत्वे व्यर्थः स्यात्, वेदसामवदध्ययनादेव तत् प्रसिद्धेः। उपरितनऋग्द्वये सामोहस्य पौरुषेयत्वेऽपि सामस्वरूपस्य तदाधारभूतानां तिसृणामृचां च वेदत्वादनध्याये वर्जनीयता, कर्त्तुरस्मरणं जीर्णकूपारामादिष्विव चिरकालव्यवधानादुपपन्नम्, अस्मरण-मूलिकैवाध्यापकानां वेदत्वप्रसिद्धिः यथा बह्वृचानामध्यापका महाव्रत-प्रयोग प्रतिपादकमाश्वलायन-निर्मितं कल्पसूत्रमारण्येऽधीयमानाः पञ्चममारण्यकमिति वेदत्वेन व्यवहरन्ति तद्वत्। न च तस्यापि वेदत्वमस्त्विति वाच्यम्, प्रथमारण्यकेन पुनरुक्तत्वात्, अर्थवादराहित्येन ब्राह्मणसादृश्याभावाच्च। तस्मात् पञ्चमारण्यकवदूहः पौरुषेयः, पौरुषेयस्य च न्यायमूलत्वात् यत्र वक्ष्यमाणन्याय विरोधस्तदप्रमाणम्"। अत्रेदं दिङ्मात्रमुदाह्रियते। "अग्न आयाहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि" सामप्रथमा ऋक्। तस्या अक्षरविकारादिभिरेव गानम्। यथा "ओग्नाइ आयाही३ वोइ(यि) तोया२इ तोया२इ गृणानो ह, व्यदा तोया२इ तोयाइ नाइ हो ताया सा इ वा औ हो वा होषि"। तत्र अग्न इत्यत्र आद्यस्य वर्णविकारे अकारस्य स्थाने ओकाररूपो विकारः। एवं ए इत्येकारस्थाने आइ इति विश्लेषणम्। आयाहि

इत्यत्र दीर्घता इति वर्णविकारः । यौ इत्यत्र वोइ (यि) विश्लेषणम् । त इत्यत्र तो इति विकारः । गे इत्यत्र एकारस्य आइ, इति विश्लेषे ताइ इति । तोयाइ तोयाइ इत्यभ्यासः । स्तोभानोह, इति हव्यदातय इत्यस्यैकदेशे विरामः । व्यदातये इत्यत्र त इत्यत्र एकारस्य ओ इति विकारे ये इत्यत्र आइ इति विश्लेषे च तोयाइ इति तस्य चाभ्यासः । नि इत्यत्र नायि इति वर्णविकारः । हो इत्यत्र विरामः । ता इति यथास्थितम् सत्सीत्यस्य स इत्यत्र विरामः दीर्घश्चाक्षरागमः वर्णविकारः । त्सि इत्यस्य स्थाने तुषाय इति तल्लोपविकारौ । बर्हिषि इत्यस्य ब इत्यत्र विरामो दीर्घश्च । औहो वा इति स्तोभः अगक्षराधिकत्वात् । र्हिषि इत्यत्र दीर्घरलोपौ अक्षरविकारश्च । एवमन्यत्राप्यूह्यम् । एवंक्रमेण अक्षरविकारादि तु नारदशिक्षाद्यनुसारेणोह्यम् । सामभेदाश्च रथन्तरादयः गानविशेषा एव यथाह सामस० भाष्ये

"यदुक्तं "गीतिषु सामाख्ये"ति" जै०सू० तदेव विशदीकर्त्तुं सप्तमाध्यायस्य द्वितीयपादे रथन्तरशब्दो निरूपितः "अतिदेशस्तु विनिषेतु कवतीषु रथन्तरम् । गायत्री त्वृग् गानयुक्ता शब्दार्थो गानमेव वा । इति चिन्ता गानयुक्ता स्यादित्यृक् प्रसिद्धितः । लाघवादतिदेशस्य योग्यत्वाच्चान्तिमो भवेत् । इदमाम्नायते—"कवतीषु रथन्तरं गायति"-इति, "कया नश्चित्र आभुवदित्याद्यास्तिस्र ऋचः कवत्यः, तासु वामदेव्यं सामाध्ययनतः प्राप्तम् तद्बाधित्वा रथन्तरं साम तास्वतिदिश्यते, तत्रातिदेशस्य स्वरूपं निर्णेतुं रथन्तरशब्दार्थश्चिन्त्यते । गानविशेषयुक्ता "अभि त्वा शूर नोनुम" इत्येषा ऋग् रथन्तरमित्युच्यते, कुतः ? अध्येतृ-प्रसिद्धेः रथन्तरं गीयतामिति केनचिदुक्ताः अध्येतारः स्वर-स्तोभविशेषयुक्तामृचमित्थमुच्चैः पठन्ति, न तु स्वरस्तोभमात्रम् तस्मात् गान-विशिष्टायामृच्येव रथन्तरशब्दार्थत्वमिति प्राप्ते, ब्रूमः स्वरादिविशेषात्मकं गीतिस्वरूपमृगक्षर-व्यतिरिक्तं यद् गानं तदेव रथन्तरशब्दार्थः, कुतः ? लाघवात्, किञ्च कवतीष्वृक्षु गानमतिदेष्टुं योग्यम् । नत्वृगन्तरद्वयोऽस्त्यतिदेशः, कयानोऽभित्वेत्यनयोरृचोर्युगपदाधाराधेयभावेन पठितुमशक्यत्वात् । तस्मात् गानविशेष एव रथन्तरशब्दार्थ इति । पुनरपि नवमाध्यायस्य द्वितीयपादे प्रथमाधिकरणस्य प्रथमवर्णके सामशब्दस्य गान-वाचित्वं स्थापितम्—"सामोक्ति-बृहदाद्युक्ती गीतायामृचि केवले । गाने वा गान एवेति सार्यते सप्तमोदितम् । सामान्यवाची सामशब्दो विशेषवाचिनो बृहद्रथन्तरादि-शब्दाश्च गानमात्रे वर्त्तन्ते, न तु गान-विशिष्टायामृचि इत्ययं नियमः सप्तमस्य द्वितीयपादे सिद्धः" । वेदगानग्रन्थे ऊहगानग्रन्थे चास्य विस्तरः । तद्भेदाश्च सामशब्दे वक्ष्यन्ते ।

गा—गतौ ल्युट् । १गमने । गा स्तुतौ ल्युट् । २स्तवने ।

**गानिन्** त्रि० गानमस्त्यस्य इनि । १गतियुक्ते । २गीतियुक्ते ३स्तुतियुक्ते च स्त्रियां ङीप् । ४वचायाम् स्त्री शब्दच० ।

**गान्तु** त्रि० गम–तुन् वृद्धिश्च । १गन्तरि २पथिके उज्ज्वल० ३गायके सि०कौ० वस्तुत तत्रापि पथिक इत्येव पाठः लिपिकरप्रमादात् गायक इति ।

**गान्त्री** स्त्री गन्त्र्येव गन्त्री+स्वार्थे अण् ङीप् । वृषवाह्ये शकटे रायमुकुट । "असुजिगमिनमीत्यादिना" सूत्रेण त्रन् वृद्धिश्च गान्त्रं शकटमित्युज्ज्वलदत्तोक्तेः क्लीबत्वमपि ।

[नदीभवे ।

**गान्दिक** त्रि० गन्दिकाया भव विश्वा० अण् । गन्दिका

**गान्दिनी** स्त्री काशिराजदुहितरि श्वफल्कभार्य्यायामक्रूरादिमातरि त्रिका० तस्या नामनिरुक्तिः हरिव०३५अ० उक्ता यथा "श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत । गान्दिनी नाम सा गां तु ददौ विप्रेषु नित्यशः । सा मातुरुदरस्था तु बहून् वर्षगणान् किल । निवसन्ती न वै जज्ञे गर्भस्थां तां पिताऽब्रवीत् । जायस्व शीघ्रं भद्रं ते किमर्थमिह तिष्ठसि । प्रोवाच चैनं गर्भस्था कन्या गाञ्च दिने दिने । यदि दद्यास्ततो जाये पितरं प्रत्युवाच ह । तथेत्युक्त्वा च तां चास्याः पिता काममपूरयत् । दाता यज्वा च वीरश्च श्रुतवानतिथिप्रियः । अक्रूरः सुषुवे तस्मात् श्वफल्काद्भूरिदक्षिणः । उपमद्गुस्तथा मद्गुर्मुदरश्चारिमेजयः । अविक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्द्दनः । धर्मभृद् यतिधर्मा च गृध्रभोजान्धकस्तथा । आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना" । गान्विनीति त्रिका० पाठान्तरम् । दर्शितनिरुक्तेर्दकारयुक्ततैव युक्ता । गां भूमिं दायति शोधयति दै–शिनि पृषो० । २गङ्गायां त्रिका० ।

**गान्दि(न्वि)नीसुत** पु० ६त० । १भीष्मे २कार्त्तिकेये त्रिका० ३अक्रूरादौ च । गान्दिनीनन्दने तक्रूरं

रात्रौ च दीप्यते। तरक्षोऽयम्म दंष्ट्रा च तथैव गिरिकच्छप। आज्यवृषोऽभिडालश्च छाग कृष्णोऽथ पिङ्गलः। येदा-मेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम्। तान्यप्यथा-गयगाराणि पिशिताशैः सुगाहवै" पिशाचोक्तौ।

**गिरिकण्टक** पु० गिरेः कण्टक इव भेदकत्वात्। वज्रे त्रिका०

**गिरिकदम्ब** पु० गिरौ भवः कदम्बः। धाराकदम्बे राजनि० स्वार्थे क। तत्रार्थे "देवदारुश्वधाहिङ्गुकुष्ठ गिरिकदम्बक" सुश्रुत।

**गिरिकदली** स्त्री ७त०। वज्रबीजायाम् वनरम्भायाम् राजनि० "गिरिरम्भा तु मधुरा हिमा बल्या च दुर्ज्जरा। तृष्णापित्तदाहशोषशमनी वीर्य्यकृद्गुरुः" राजनि०।

**गिरिकर्णिका** स्त्री गिरि कर्ण इव यस्याः कप् कापि अत इत्वम्। १पृथिव्यां त्रिका०। गिरेराखुमूषिकायाः कर्णं अस्त्यस्याः तदाकारपत्रत्वात् ठन्। २अपराजिता लतायां ३श्वेतकिणिहीवृक्षे च राजनि०।

**गिरिकर्णी** स्त्री गिरेराखुमूषिकायाः कर्ण इव कर्णं पत्रमस्याः ङीप्। १अपराजितालतायाम् अमरः। "त्रिफला गिरिकर्णी च हंसपादी च चित्रकम्" भावप्र०। २अश्वाखे शब्दच०। [गिरिशब्दे गिरिकाशब्दे च दृश्यम्।

**गिरिका** स्त्री गिरिरिव स्वार्थे क। बालमूषिकायाम् अमरः।

**गिरिकाण** त्रि० गिरिणा नेत्ररोगभेदेन काणः। नेत्ररोगभेदेन एकनेत्रहीने। अस्य ३त० प्रकृतिस्वरता।

**गिरिक्षित्** पु० गिरि वाचि क्षियति क्षि-वासे क्विप् अलुक्स०। स्तुतिरूपवाक्यस्थे परमेश्वरे "प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे" ऋ०१।१५४।३। "गिरिक्षिते गिरि वाचि, गिरिवदुन्नतप्रदेशे वा तिष्ठते" भा०।

**गिरिक्षिप** त्रि० गिरिं क्षिपति क्षिप-क। १गिरेरुत्क्षेपणसामर्थ्यवति २अक्रूरभ्रातरि पु० गान्दिनीजशब्दे दृश्यम्

**गिरिगुड** पु० गिरौ गुड इव। गेन्दुके (केन्द) हेमच०।

**गिरिचर** त्रि० गिरौ चरति चर-ट। १पर्वतचारिणि। "गिरिचर इव नागः प्राणसारं बिभर्त्ति" शकु०। स्त्रियां ङीप्। २चौरे तदोघे ३रुद्रभेदे पु० "नम उष्णीषिणे गिरिचराय" यजु० १६।२१। गिरिचरचौर आच्छन्याभावस्थाद्यपहर्त्तुं पर्वतादिविषमस्थानचरत्वात् तदधिपत्वाद्रुद्रोऽपि गिरिचर इत्युपचारः।

**गिरिज** न० गिरौ जायते जन-ड। १शैलजे शिलाजतुनि २लोहे ३अभ्रके च मेदि०। ४पैरके राजनि० ५मधुकवृक्षे ६गौरशाके पु० रत्नमा०।७हिमाद्रिजातायां पार्वत्यां स्त्री "आगतं शिवभक्तोभ्यो गतश्च गिरिजानने" यामलम्। "यद्वा यदा स गिरिजास्तनभागमागतम्" काशी० ६६ अ०। ८मातुलुङ्ग्या स्त्री मेदि० ६श्वेतबुह्याया रत्नमा०। १०क्षुद्रपाषाणभेदलतायां ११त्रायमाणलतायां १२कारीवृक्षे १३मल्लिकायां १४गिरिकदल्यां च स्त्री राजनि०। १५पर्वतजातमात्रे त्रि०। गिरि वाचि जायते जन-ड अलुक्स०। १६स्तुतिरूपवाक्यनिष्पन्ने च "मरुत्वते गिरिजा एवया मरुत्" ऋ०५।८७।१। गिरिजा वाचिनिष्पन्ना" भा०। पार्वत्या हिमालयरूपगिरेर्जन्मकथा शिवपुराणे १२अ० हिमालयस्य मेनकानाम्नी पत्नी बभूवेत्युक्ता "प्रकृतिरभवत्तस्या मेनायाः कन्यका शुभा" इत्युपक्रमे "तां पार्वतीत्याभिजनाश्च नामतो जुहाव तद्बन्धुजनः स्वभावत। माता निषिद्धा तपसे यदा तु सा ययावुमाख्यां भवभक्तिभाविनी"। कालिकापुराणे तु तस्याः कालीतिनाम तत्कथा ४१।४२अ० दृश्या। १७गङ्गायाञ्च स्त्री तस्या अपि तत उत्पत्तिकथा कालिकापु० ४७ अ० दृश्या।

**गिरिजातनय** पु० ६त०। कार्त्तिकेये तस्य च यथोत्पत्तिस्तथा कार्त्तिकेयशब्दे १९५६पृ० उक्तप्राया कालिकापु० ४७अ० विस्तरेण दृश्या। गिरिजानन्दनादयोऽप्यत्र।

**गिरिजापति** पु० ६त०। १शिवे, गिरिजेशादयोऽप्यत्र।

**गिरिजामल** न० गिरौ पर्वते मेघे धमरवे वा जायते जन-ड, तेषु अमलम्, तथाभूतञ्च तदमलञ्च, गिरिजायाः पार्वत्या बीजरूपं मलं वा। १अभ्रके तस्य यथा च पार्वतीबीजजातत्वं तथा अभ्रकशब्दे ३१५ पृ० उक्तम् भावप्र० तस्यान्यथोत्पत्तिभेदादिकमुक्तं यथा

"पुरा वधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम्। विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः। ते निपेतुर्घनध्वानाच्छिखरेषु महीभृताम्। तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम्। तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात्। गगनात् स्खलितं यस्माद् गगनञ्च ततो मतम्। विप्रक्षत्रियविट्शूद्रभेदात्तत् स्याच्चतुर्विधम्। क्रमेणैव सितं रक्तं पीतं कृष्णञ्च वर्णतः। प्रशस्यते सितन्तारे रक्तं तत्तु रसायने। पीतं हेमनि, कृष्णन्तु गदेषु द्रुतयेऽपि च। पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम्। मुञ्चत्यग्नौ विनिक्षिप्तं पिनाकन्दलसञ्चयम्। अज्ञानाद्भक्षणं तस्य महाकुष्ठप्रदायकम्। दर्दुरं त्वग्निनि क्षिप्तं कुरुते दर्दुरध्वनिम्। गोलकान् बहुशः कृत्वा स स्यान्मृत्यु

प्रदायकम् । नागन्तु नागवद्वह्नौ फुत्कारं परिमुञ्चति । तद्भक्षितमयश्चन्तु विदधाति भगन्दरम् । पत्रन्तु पत्रवत्तिष्ठेत्तच्चाग्नौ विलीनं प्रजेत् । सर्वाभ्रेषु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत् । अभ्रसत्त्वगुणोत्थ षड्रसस्य गुणाधिकम् । दक्षिणादिभव स्वल्पसत्त्वमल्पगुणप्रदम् । अभ्रं कषायं मधुरं सुशीतमायुष्करं धातुविवर्द्धनञ्च । हन्यात् त्रिदोषं व्रणमेहकुष्ठप्लीहोदरग्रन्थिविषक्रमींश्च । रोगान् हन्ति दृढयति वपुर्वीर्य्यवृद्धिं विधत्ते तारुण्याढ्यं रमयति शतं योषितां नित्यमेव । दीर्घायुष्कान् जनयति सुतान् विक्रमैः सिंहतुल्यान् मृत्योर्भीतिं हरति सततं सेव्यमानं मृताभ्रम्"। अभ्रशब्दे अनुक्तास्तद्गुणादिभेदा इहोक्ताः ।

गिरिज्वर पु० गिरिं ज्वरयति ज्वर-णिच्-अच् । वज्रे शब्दर० ।

गिरि(लि)त त्रि० गिल-क्त वा र । भक्षिते रायमुकु० ।

गिरित्र पु० गिरौ कैलासे स्थितस्त्रायते त्रै-क । रुद्रे । "शिवां गिरित्र तां कुरु" यजु० १६।३ ।

गिरिदुर्ग न० गिरिरेव दुर्गम् राज्ञां शत्रुभ्यो निःशङ्क-, तया वासस्थानम् । पर्वतरूपे तादृशे स्थाने (गड़) । "धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम् । सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् । एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते" । त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्त्ताश्रयाप्चराः" । त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरामराः" मनु । एषां मध्ये गिरिदुर्गं बहुगुणत्वात् विशिष्टं तस्य गुणाश्च दुरारोहत्व महाप्रदेशादल्पप्राणप्रेरितशिलादिना बहूनां सैन्यविनाशनमित्यादय" कुल्लू० "वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः" भा०वि० ५ अ० ।

गिरिधातु पु० ६त० । गैरिके उपधातुभेदे राजनि० ।

गिरिनगर न० दृ०स० कूर्मविभागे १४अ० दक्षिणस्यामुक्ते अथ दक्षिणेन लङ्केत्युपक्रमे "कावाजिनसौरिकीर्णतालिकटाः गिरिनगरमलयदर्दुरमहेन्द्रमालिन्द्यभरुकच्छा" इत्युक्ते देशभेदे । अस्य च संज्ञात्वेऽपि पूर्वपदस्थनिमित्तात् क्षुभ्नादित्वात् न णत्वम् ।

गिरिनद्यादि पु० वार्त्ति०ग० उक्ते पूर्वपदस्थनिमित्तात् वा णत्वनिमित्ते शब्दगणे स च गणः "गिरिनदी गिरिनख गिरिनद्ध गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्यमाण माषोण आर्गयण" आकृतिगणः । "गिरिनद्यादीनां वा" वार्त्ति० ।

गिरिनन्दिनी स्त्री ६त० । १हिमालयसुतायां पार्वत्यां २गङ्गायाञ्च, गिरेर्नन्दिनीव । ३नदीमात्रे सर्वां गिरिप्रभवत्वात्तथात्वम् "अभ्याप सरितो बह्वीः" इत्युपक्रमे "शुभाय गिरिनन्दिन्य" हरिवं० १२६अ० । "कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी" रसगङ्गाधर ।

गिरिनिम्ब पु० ७त० । महानिम्बवृक्षे राजनि० ।

गिरिपीलु पु० ६त० । (फालसा) इति वृक्षभेदे राजनि० ।

गिरिपुर न० कामरूपदेशान्तर्गते पुरभेदे कामरूपतन्त्रे ७०७ पृ० उदा० । [जतुनि राजनि० ।

गिरिपुष्पक न० गिरेः पुष्पमिव कायति कै-क । शिला-

गिरिप्रिया स्त्री गिरिः प्रियोऽस्याः । चमर्य्यां मृगभेदे राजनि । [उशाचाप" शत०ब्रा० ७।४।२।१८ ।

गिरिबुभ्रा स्त्री गिरिर्बुभ्र इव यस्याः । अपत्ये । गिरिबुभ्रा

गिरिभिद् पु० गिरिं भिनत्ति भिद्-क्विप् । १पाषाणभेदके वृक्षे भावप्र० । २इन्द्रे च । ३नद्यन्तरे । ४नदीभेदके "नद्यन्तरेऽसवो गिरिभित्" कात्या० श्रौ० २५।४।२३ । "गिरिं भित्त्वा या नद्यागता तदन्तरे असवो न भवति" कर्क ।

गिरिभू त्रि० गिरौ भवति भू-क्विप् । १पर्वतप्रभवे क्षुद्रपाषाणभेदे २पार्वत्यां ३गङ्गायां च स्त्री ६त० । ४पर्वतभूमौ स्त्री ।

गिरिमल्लिका स्त्री गिरौ मल्लीव स्वार्थे कन् । कुटजवृक्षे । अमर । [ उद्दालातयासम् ।

गिरिमान पु० गिरेरिव मानमस्य । गजे शब्दरत्ना० । तस्य

गिरिमाल पु० गिरौ माल इन्द्वोऽस्य । बाधके स्वनामख्याते वर्हिषयूपकाष्ठसाधने वृक्षभेदे "तैल्वको बाधको वा" कात्या० श्रौ० २१।३।८ । "यूपो भवति तैल्वकोऽभिधिश्च बाधको गिरिमालः" कर्क ।

गिरिमृद् स्त्री ६त० । १गैरिके (गेरिमाटि) त्रिका० । २पर्वतमृत्तिकायाञ्च ।

गिरिमृद्भव न० गिरेर्मृदो भवति भू-अच् । गैरिके राजनि०

गिरिसेद पु० गिरेर्भेद इव सारोऽस्य विट्खदिरे रत्नमा०

गिरियक पु० गिरिं याति या-क संज्ञायां कन् । गेन्दुके (केन्द) इति ख्याते हेमच० । [केन्दुके शब्दरत्ना० ।

गिरियाक पु० गिरिं याति-या क्विप् संज्ञायां कन् न ह्रस्वः ।

गिरिराज् पु० गिरिषु राजते राज-क्विप् ७त० । १पर्वतश्रेष्ठे "स तयाभिहितो राजन् नावधत् गिरिराडिव" भा०भी०

७८अ० । "गिरिराट्पादचारीव" भाग० ६।१२।२५ । २हिमाचले च ।

**गिरिराज** पु० ६त० । हिमालये । यथा च तस्य नगराजत्वं तथा अचलराजशब्दे ८२ पृ०उक्तम् ।"सोऽपि कापटिकस्तस्य गिरिराजस्य भाषितम्"। "गिरिराजाङ्गनासखः" काशी०। "गिरिराजराजसुताम्बितवामतनुम्" शिवस्तव ।

**गिरिवासिन्** त्रि० गिरिं वासयति सुरभीकरोति वासि—णिनि, गिरौ वसति वस—णिनि वा । हस्तिकन्दे वृक्षे राजनि० ।

**गिरिव्रज** न० गिरीणां पञ्चानां व्रजो यत्र । मगधदेशान्तर्गते जरासन्धपुरे "सोऽभिजनोऽस्य अण् । गैरिव्रज तद्देशवासिनि त्रि० बहुषु तस्य लुक् ।"गिरिव्रजा मगधपुण्ड्रमिथिलाश्च" ह०स०१०अ० ।
गिरिव्रजवर्णनं भा०स०२१अ०। यथा

"एष पार्थ ! महान् भाति पशुमान्नित्यमम्बुमान् । निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः । वैहारो १ विपुलः शैलो वराहः २ वृषभ ३ स्तथा । तथा ऋषिगिरि४स्तात । शुभाश्चैत्यक५पञ्चमाः । एते पञ्च महाशृङ्गाः पर्वताः शीतलद्रुमाः । रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम्" इत्युपक्रमे ।

"अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः । गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्जुन ।। वनराजीस्तु पश्येमा पिप्पलानां मनोरमाः । लोध्राणाञ्च शुभाः पार्थ ! गौतमौकःसमीपजाः । अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ । स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः । अपरिहार्या मेघानां मागधा मनुना कृताः । कौशिको मणिमांश्चैव चक्राते चाप्यनुग्रहम् । एवं प्राप्य पुरं रम्यं दुराधर्षं समन्ततः । अर्थसिद्धिं त्वनुपमां जरासन्धोऽभिमन्यते" ।

**गिरिश** पु० गिरौ शेते शी—बा० कोक्तेऽपि ड, गिरिरस्त्यस्य लोमा० श वा ।१शिवे अमरः ।"गिरिशमुपचचार प्रत्यहं सा सुकेशी" कुमा० । "गिरिशरमणी काचि ! सततम्" कालीस्तव ।"शिवेन वचसा त्वा गिरिशाच्छा वदामसि" यजु० १६।४ ।

**गिरिशन्त** पु० महादेवे । "गिरिशन्ताभिचाकशीहि" यजु० १६।२ । "गिरौ कैलासे स्थितः सन् सुखं प्राणिनां तनोति विस्तारयति, गिरिं वाचि स्थित सन् तनोतीति वा गिरौ—मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा वेददी० । शन्तं तन—बा० ड । गिरिं वाचीति पक्षे अलुक्स० ।

**गिरिशय** पु० गिरौ कैलासे शेते शी—अच् । महादेवे । "नमो गिरिशयाय च गिरिष्ठाय च" यजु० १६।९ ।

**गिरिशाल** पु० गिरिं शलति आश्रयत्वेन गच्छति शल—गतौ अण् उप० स० । सुश्रुतोक्ते प्रतुदे पक्षिभेदे । कपोतपारावतेत्युपक्रमे गिरिशालक्ष्वानदूषकेत्यादयः प्रतुदाः' सुश्रुत' ।

**गिरिशालिनी** स्त्री गिरिं वालमूषिकाकर्णं शलते श्लाघते स्वपत्रेण शल—श्लाघायां णिनि ङीप् । गिरिकर्णिकायामपराजितायाम् "पारिभद्रं पाटला च बकुलं गिरिशालिनी" वामनपु० । तत्तुल्यपत्रत्वेन गिरेः श्लाघनात् तस्यास्तथात्वम् ।

**गिरिशृङ्ग** पु० गिरेः शृङ्गमाकारेणास्त्यस्य अच् । १गणेशे शब्दरत्ना० शुण्डादण्डस्योत्तमने गिरिशृङ्गाकारत्वात् तस्य तथात्वम् । ६त०।२ पर्वतशिखरे न० ।

**गिरिषद्** पु० गिरौ सीदति सद—क्विप् षत्वम् । महादेवे ।

**गिरिष्ठा** स्त्री गिरौ तिष्ठति स्था क्विप् अम्ब० षत्वम् । १महादेवे २पर्वतस्थायिमात्रे त्रि० । "मृगो न भीमः कुचरो गिरिष्ठाः" ऋ०१।१५४।२ । "गिरिष्ठा गिरिस्थायी" निरु०

**गिरिसर्प** पु० नित्य ७त० । दर्वीकरसर्पभेदे सुश्रुत । अहिशब्दे ५८१ पृ० विवृतिः ।

**गिरिसार** पु० ६त० । १लौहे २रङ्गे धातुभेदे च "द्रोणाय प्रेषयामास गिरिसारमयीं शक्तिं" भा० भी० ५२अ० गिरिषु सारं चन्द्रादिष्वरभिद्रव्यवत्वात् श्रेष्ठ । २मलयपर्वते मेदिनिः ।

**गिरिसुत** पु० ६त० । १मैनाकपर्वते ।२पार्वत्याम् स्त्री । "अवतु वो गिरिसुता शशिभृतः प्रियतमा" उद्भट । "शम्भोः शिरसीन्दुकला वृषध्वजोऽक्षि च तृतीयमप्यूर्ध्वम् । शूलं धनुः पिनाकं वामार्धे वा गिरिसुतार्धम्" वृ०सं० ५८अ० ।

**गिरिस्रवा** स्त्री गिरेः स्रवति स्रु—अच् ५त० । पर्वतनद्याम् "गिरिस्रवाभिः सर्वाभिः पृष्ठतोऽनुगता शुभा" भा० आनु०१४अ० ।

**गिरिह्वा** स्त्री गिरिं वालमूषिकाकर्णं ह्वयति स्पर्द्धते तदाकारेण ह्वे—क । गिरिकर्णिकायाम् अपराजितायाम् तत्कर्णतुल्यपत्रत्वात्तस्यास्तथात्वम् ।"श्वेता गिरिह्वा किणिही सिता च" सुश्रु० । आ+ह्वे—क । गिर्याह्वा-

ज्ञोऽपि च दृश्यते। गीतज्ञो यदि गीतेन नाप्नोति परमं पदम्। रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते। गीतेन हरिणा रुद्धाः प्राप्नुवन्त्यपि पक्षिणः। वनादायान्ति फणिनः शिशवो न रुदन्ति च। हृदि चमत्कृतये किमतः परं फणिवरोऽन्ततरो यत पन्नगः। अपि सतां यदवाप मदालसा मधुरगीतवशीकृतशङ्कर। परमानन्दविवर्द्धनमभिमतफलं वशीकरणम्। सकलजनचित्तहरणं विसृष्टिवीजं परं गीतम्"। "शुद्धशालगसङ्कीर्णभेदाद्गीतं त्रिधा मतम्। यथा सान्यभवा सपाठकरं तत् पञ्चतानेश्वरं कैराते स्वरपक्षपाशविजया पञ्च त्रिभङ्गिजया। टेङ्कारवर्णसरं पुटौ द्विपदिका स्यात्। चर्चोमात्रकालम्बोद्रज्जकवर्त्तनीति कथिता शुद्धास्तु ते विंशतिः" सङ्गीतदा०। एलादीनामेतेषां विंशति सल्लक्षणानां प्रबन्धगीतानामङ्गानि षट् भवन्ति यथा "पदं तेनो विरुदश्च ताल पाठः स्वरस्तथा। एलादीनां षडङ्गानि कथितानि विरिञ्चिना। पौनरुक्त्यं न दोषाय गीते दोषोऽभिजायते। मौक्तोच्चारेण वर्णानां तथा चैव विसारणे। जिह्वान्यत्वे विसन्धौ च संयुक्ताक्षरमोचने। परिवर्त्तेऽक्षराणाञ्च ह्रस्वदीर्घव्यतिक्रमे"। शालगस्थं यथा "ध्रुवकोमण्ठकश्चैव प्रतिमण्ठोनिसारुकः। यासक प्रतिताभय तथाऽन्या चैकतालिका। रतिश्च झुम्बरि चेति शालगं सप्तमीरितम्"। सङ्कीर्णस्थं यथा "चैत्रोमङ्गलकस्तथा न गणिका चर्च्चातिनाटोत्सवी दोहा स्याद्धवलस्तथा गुरुवचो गीता च गोविन्दस्तथा। हेन्नोकोऽप्यथ कारिका त्रिपदिकेत्येतानि कामद्विषा पंचेमेय चतुर्द्दश प्रकटितान्यत्राभिधानानि क्रमात्" सङ्गीतदा०। अधिकम् उपोद्घाते १२७२ पृ० दृश्यम्। स्वार्थे क तत्रार्थे "काव्यालापाश्च ये केचित् गीतकान्यखिलानि च। शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मन" अग्निपु०। कर्म्मणि क्त। २शब्दिते मेदि०। ३स्तुते ४गानकर्म्मणि कृतगाने त्रि०। "गीता सुगीता कर्त्तव्या" गानार्थे उदा०।

गीतगोविन्द पु० गीतोगोविन्दोऽत्र। जयदेवकृते श्रीकृष्णचरितख्यापके द्वादशसर्गात्मके ग्रन्थभेदे। "यच्छृङ्गारविवेकतत्त्वमपि यत्काव्येषु लीलायितम् तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः। सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः" गीतगो०।

गीतप्रिय त्रि० गीतं प्रियमस्य। १गानरक्ते २महादेवे पु० ३कुमारानुगतमातृकाभेदे स्त्री। "गीतप्रिया च कल्याणी कद्रुरोमाऽमिताशना" भा० शल्य० ४६अ० मातृगणोक्तौ।

गीतमोदिन् त्रि० गीतेन मोदते मुद-णिनि। १गीतेनामोदकर्त्तरि स्त्रियां ङीप्। २किन्नरे पु० शब्दर०।

गीता स्त्री गै-कर्मणि क्त। १गुरुशिष्यकल्पनया आत्मविद्योपदेशात्मके कथाविशेषे सा च भगवद्गीतारामगीतादिभेदात् बहुधा किन्तु भगवद्गीतायामेव प्रसिद्ध। "गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्मात् विनिःसृतेति" श्रीधरस्वामिधृतवचनम्। प्रसिद्धगीतायास्तात्पर्य्यादि नीलकण्ठेन समर्थितं यथा

"भारते सर्ववेदार्थो, भारतार्थश्च कृत्स्नशः। गीतायामस्ति, तेनेयं सर्वशास्त्रमयी मता। कर्मोपास्तिज्ञानभेदैः शास्त्रं काण्डत्रयात्मकम् भक्तिस्तूपासनाकाण्डान्तर्गतीयान्नातिरिच्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते। इति श्रुत्यैव वेद्यस्य ह्युपास्यादन्यतेरिता। इयमष्टादशाध्यायी क्रमात् षट्कत्रिकेण हि। कर्मोपास्तिज्ञानकाण्डत्रितयात्मा निगद्यते"। मधुसूदनसरस्वतीभिस्तु गीतागूढार्थदीपिन्यां तत्प्रयोजनादिकं विस्तरेण दर्शितं यथा

सहेतुकस्य संसारस्यात्यन्तोपरमात्मकम्। परं निःश्रेयसं गीताशास्त्रस्योक्तं प्रयोजनम्। सच्चिदानन्दरूपं तत् पूर्णं विष्णोः परं पदम्। यत्प्राप्तये समारब्धाः वेदाः काण्डत्रयात्मकाः। कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात्। तद्रूपाष्टादशाध्यायी गीता काण्डत्रयात्मिका। एकमेकेन षट्केन काण्डमत्रोपलक्षयेत्। कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः। यतः समुच्चये नास्ति तयोरतिविरोधतः। भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्त्तिता। उभयानुगता सा हि सर्वविघ्नापनोदिनी। कर्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा। तत्र तु प्रथमे काण्डे कर्म्म तत्त्यागवर्त्मना। त्वंपदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते। द्वितीये भगवद्भक्तिनिष्ठावर्णनया ततः। भगवान् परमानन्दस्तत्पदार्थोऽवधार्य्यते। तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम्। एवमप्यत्र काण्डानां संबन्धोऽस्ति परस्परम्। प्रत्यध्यायं विशेषन्तु तत्र तत्रैव वक्ष्यते। मुक्तिसाधनपर्वेदं शास्त्रार्थत्वेन कथ्यते। निष्कामकर्मानुष्ठानं त्यागात् काम्यनिषिद्धयोः। तत्रापि परमो धर्मो जपस्तुत्यादिकं हरेः। क्षीणपापस्य चित्तस्य विवेके योग्यता यदा। नित्यानित्यविवेकस्तु जायते सुदृढस्तदा। इहामुत्रार्थ

भेदे च। स्वार्थे क। गीतिका १गीतौ गाने।

गीथा स्त्री गै-थक्। वाचि। "एष उ वा उद्गीथः प्राणो वा उत् प्राणेन हीदं सर्वमुत्तब्धं, वागेव गीथा उच्च गीथा चेति स उद्गीथः" शत० ब्रा० १४।४।१।२५। "वागेव गीथा उद्गीथाभिव्यक्तिरूपा गायते शब्दार्थत्वात्" भा०

गीरथ पु० गीः रथ इवास्य। १जीवे त्रिका०। २जीवात्मनि शब्दार्थचि०।

गीर्ण त्रि० गॄ-निगरणे शब्दे कर्म्मणि क्त। १वर्णिते २स्तुते ३गिलिते च अमरः। [अमरः।

गीर्णि स्त्री गॄ-भावे क्तिन्। १स्तुतौ २वर्णने ३गिलने च

गीर्देवी स्त्री गिरोऽधिष्ठात्री देवी। १सरस्वत्याम् शब्दरत्ना०।

गीर्पति पु० ६त० अहरा० वा र। १बृहस्पतौ। २पण्डिते च पक्षे पर्य्यगौ गीष्पति गीःपतिशब्दावप्यत्र अमरः।

गीर्वा(र्वा)ण पु० गीरेव बाणः शस्त्रं साधनत्वादस्य। १देवे सुरे। अन्तःस्थमध्यत्वे गिरः स्तुतिरूपा वनुते व-याचने अण् "पूर्वपदात् संज्ञायामग" पा० णत्वम् उप० स०। देवानां स्तुतिप्रियत्वात् तथात्वमिति भेदः।

गीर्वा(र्वा)णकुसुम न० गीर्वा(र्वा)णप्रियं कुसुमम्। देवकुसुमे लवङ्गे राजनि०। गीर्वाणपुष्पादयोऽप्यत्र।

गीर्लता स्त्री गीरिव विस्तीर्णा लता। महाज्योतिष्मतीलतायाम् राजनि०।

गीर्वत् त्रि० गीरस्त्यस्य मतुप् "छन्दसीरः" पा० मस्य वः। वाक्ययुक्ते छन्दोयुक्ते लोके न वः। गीर्मत् इति।

गु ध्वनौ अव्यक्तशब्दे भ्वा० आत्म० अक० अनिट्। यङन्ते च गोष्ट। जुगुवे। "उपो येनस्य जोगुवान" ऋ० १।६१।१४। गुङ् अव्यक्ते शब्दे अस्मात् यङलुकि पदव्यत्ययेन शानच् भा०। "विप्रास्तद्वाचः जोगुवे" ऋ० ५।६४।२। "जोगुवे शब्दयामीति" भा० पूर्व्ववत् पदव्यत्ययः।

गु विष्ठोत्सर्गे तुदा० कुटा० पर० अक० अनिट्। गुवति अगुत ऊदित् क्त तस्य न "हुग्वोर्दीर्घः" पा० दीर्घः गूनः।

गुग्ग(ल्ग)लु पु० गुज-क्विप् गुक् व्याधिः ततो गुडति रक्षति गुड-कु वा डलयोरैकत्वम्। स्वनामख्याते वृक्षभेदे, अमरः। भरतस्तु कुम्भमद्दमप्याह स्म। २रक्तशोभाञ्जनवृक्षे शब्दच०।

"श्रीवासकरसगुग्गुलुभल्लातककुन्दुरूकसर्जरसैः" "तालाकुन्दुरगुग्गुलुगन्धदुकूलकपित्थबिल्वमध्यानि" वृ० स० ५७अ०। तस्य पर्य्यायादि भावप्र० उक्तं यथा

"गुग्गुलुर्देवधूपश्च जटायुः कौशिकः पुरः। कुम्भो लुलूखलकं क्लीबे महिषाक्षः पलङ्कषः। महिषाक्षो महानीलः २कुमुदः ३पद्म ४इत्यपि। हिरण्य ५पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः। भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः। महानीलस्तु विज्ञेयः स्वनामसमलक्षणः। कुमुदः कुमुदाभः स्यात् पद्मो माणिक्यसन्निभः। हिरण्याख्यस्तु हेमाभः पञ्चानां लिङ्गमीरितम्। महिषाक्षो महानीलो गजेन्द्राणां हितावुभौ। हयानां कुमुदः पद्मः स्वस्थ्यारोग्यकरौ परौ। विशेषेण मनुष्याणां कनकः परिकीर्त्तितः। कदाचिन्महिषाक्षश्च मतः कैश्चिन्नृणामपि। गुग्गुलुर्विशदस्तिक्तो वीर्य्योष्णः पित्तलः सरः। कषायः कटुकः पाके कटू रूक्षो लघुः परः। भग्नसन्धानकृद् वृष्यः सूक्ष्मः स्वर्य्यो रसायनम्। दीपनः पिच्छिलो बल्यः कफवातव्रणापची। मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान्। पिडकाग्रन्थिशोफार्शो गण्डमालाकृमीन् जयेत्। माधुर्य्याच्छमयेद्वातं कषायत्वाच्च पित्तहा। तिक्तत्वात् कफजित्तेन गुग्गुलुः सर्व्वदोषहा। स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः। स्निग्धः काञ्चनसङ्काशः पक्वजम्बूफलोपमः। नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः। शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतिवर्णकः। पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्य्यवर्ज्जितः। अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम्। मद्यं रोषं त्यजेत् सम्यग्गुणार्थी पुरसेवकः" पुरः गुग्गुलुः।

अस्य स्थानविशेषे जन्मादिकथनं यथा "जायन्ते पुरपादपा मरुभुवि ग्रीष्मेऽर्कसन्तापिताः शीतर्त्तौ शिशिरेऽपि गुग्गुलुरसं मुञ्चन्ति ते पञ्चधा। हेमाभं महिषाक्षिसन्निभमपरं स्यात् पद्मरागोपमं भृङ्गाभं कुमुदद्युतिश्च विविधा ग्राह्या परीक्षा तत। वह्नौ ज्वलन्ति तपने विलयं प्रयान्ति क्षिप्यन्ति कोष्णसलिले पयससमानाः। ग्राह्याः शुभाः परिहरेच्चिरकालजातान् वह्नाद्यवर्णसमपूयविगन्धवर्णानिति" प्रयोगामृतम्। अस्य वह्निपु० उत्पत्तिस्थानमुक्तम् यथा

"गोरोचना या मङ्गल्या सञ्जाता सर्वकामिका। गुग्गुलुस्तु ततो जातो गोमूत्राच्छुभदर्शनः"।

गुग्गुलुक त्रि० गुग्गुलु पण्यमस्य किशरा० ष्ठन्। गुग्गुलुविक्रेतरि स्त्रियां षित्त्वात् ङीष्।

गुग्गुलुगन्धि पु० स्त्री गुग्गुलोर्गन्धो लेशोऽस्य अल्पार्थे ग

वातनिलपित्तकृत् । सुरभि सुखदा पथ्या सुखशोधन पाचका" भावप्र० ।

**गुडत्वचा** स्त्री गुड इव मधुरा त्वचा यस्याः ।१गुडत्वचि(दारचिनि) ख्याते पदार्थे २राजभोग्ये(जयत्री)म० शब्दच० ।

**गुडदारु** न० गुडप्रधान दारु शाक०त० । इक्षौ त्रिका० ।

**गुडधेनु** स्त्री दानार्थं गुडनिर्मिते धेनुभेदे । तद्विधिश्च हेमा०दा० यथा "प्रथमा गुडधेनुः स्यात् घृतधेनुस्तथाऽपरा । तिलधेनुस्तृतीया तु चतुर्थी जलसंज्ञिता । क्षीरधेनुश्च विख्याता मधुधेनुस्तथाऽपरा । सप्तमी शर्कराधेनुर्दधिधेनुस्तथाऽष्टमी । रसधेनुर्नवमी स्याद्दशमी स्यात् स्वरूपतः" इत्युपक्रमे "एतासां तु विधानञ्च समाचक्ष्व जगत्पते ।। किंरूपं केन मन्त्रेण दातव्या तदिहोच्यताम् । मत्स्य उवाच । गुडधेनुविधानस्य यद्रूपमिह यत्फलम् । तदिदानीं प्रवक्ष्यामि सर्वपापविनाशनम् । कृष्णाजिनं चतुर्हस्तं प्रागग्रीवं विन्यसेद्भुवि । गोमयेनोपलिप्तायां दर्भानास्तीर्य सर्वतः । लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत् । प्राङ्मुखीं स्थापयेद्धेनुमुदक्पादां सवत्सकाम्" । एणकाजिनं कृष्णाजिनं प्राङ्मुखीं प्राक्शिरसमित्यर्थः । "तदुत्तरेण वत्सोऽपि तथैव परिकल्पनीयः । "उत्तमा गुडधेनुः स्यात् सदा भारचतुष्टयम् । वत्सस्त्वारेण कुर्वीत भाराभ्यां मध्यमा स्मृता । अर्द्धभारेण वत्सः स्यात् निजवित्तानुसारतः" । निजवित्तानुसारत इति द्व्युत्तममध्यमादिकल्पना निजवित्तानुसारतः कर्त्तव्येत्यर्थः । "धेनुवत्सौ घृतास्यौ तौ सितसूक्ष्माम्बरावृतौ । शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ । सितसूत्रसिरालौ तौ सितकम्बलकम्बलौ । ताम्रककुद्पृष्ठौ तौ सितचामररोमकौ"। ककुद्म ककुत्प्रदेशः । "विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ । क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ । सुवर्णशृङ्गाभरणौ राजतखुरसंयुतौ । नानाफलमयैर्दन्तैर्घ्राणगन्धकरण्डकौ" । अत्र च सारतः परिमाणतश्च फलविशेष इति यथाशक्ति सुवर्णशृङ्गादिकमवधेयम् । "इत्येवं रचयित्वा तु धूपदीपैरथार्च्चयेत्" । "विधान[illegible] [illegible]नना सर्वासामिह पठ्यते" । सर्वासामन्यधेनूनां [illegible]न्यस । तथा "एतदेव विधानं [illegible] एव [illegible] ।। मन्त्रावाहनसंयुक्ताः सदा [illegible] प्रदातव्या भुक्तिमुक्तिफलप्रदा । [illegible] दा शुभा । अयने विषुवे

पुण्ये व्यतीपातेऽथ वा पुनः । गुडधेन्वादयो देया उपरागादिपर्वसु" मत्स्यपु० । अत्र घृतादिधेनुद्रव्यपरिमाणमपि गुडधेनुक्रमेण । "विधानमेतद्धेनूनां सर्वासामपि पठ्यते" इत्यतिदेशात् "कुम्भाः स्युः सर्वधेनूनामितरासान्तु राशयः" इति तु भारचतुष्टयादिपरिमितस्य द्रवद्रव्यस्य कुम्भाधारतयावस्थापनम्" हेमाद्रिदानखण्डम् ।

अन्यत् क्षीरधेनुशब्दे २२७२ पृ० दर्शितरीत्या कार्य्यम्" "धेनुवत्सौ तदा तौ तु सितसूक्ष्माम्बरावृतौ । शुक्तिकर्णाविक्षुपादौ शुभमुक्ताफलेक्षणौ । सितसूत्रसिरालौ तु सितकम्बलकम्बलौ । ताम्रककुदपृष्ठौ तु सितचामररोमकौ । विद्रुमभ्रूयुगयुतौ नवनीतस्तनान्वितौ । क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ । इत्येवं रचयित्वा तु धूपदीपैः समर्च्चयेत्" पद्मपु० ।

**गुडपाक** पु० ६त० । गुडस्य पाके वैद्यकोक्ते औषधपाकभेदे तत्पाकप्रकारः चक्रदत्तेनोक्तो यथा "तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः । क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यते । यदा दर्व्वीविलेपः स्याद्यावद्वा तन्तुलोभवेत् । एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः" । "सुखमर्द्दः सुखस्पर्शो गुडः पाकमुपागतः । पीडितो भजते तन्तु गन्धवर्णरसान्वितम्" ।

**गुडपिप्पलीघृत** न० चक्रदत्तोक्ते औषधभेदे ।

"सपिप्पलीगुडं सर्पिः पचेत् क्षीरचतुर्गुणे । विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्" ।

**गुडपुष्प** पु० गुड इव मधुरं पुष्पमस्य । मधूकवृक्षे (मौल) (महुया) अमर ।

**गुडफल** पु० गुड इव मधुरं फलमस्य । पीलुवृक्षे अमर ।

**गुडभल्लातक** पु० गुडेन पक्वं भल्लातकम् । पाकविशेषेण गुडपक्वे भल्लातकादिरूपे औषधभेदे चक्र० तत्पाको यथा "भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् । पादशेषे रसे तस्मिन् पचेद्गुडतुलां भिषक् । भल्लातकसहस्राणि छित्त्वा तत्रैव दापयेत् । सिद्धेऽस्मिंस्त्रिफलाव्योषभार्गीतुल्यसैन्धवम् । कर्षांशसंमितं दद्यात् त्रिजातमनोहरम् । खादेदग्निबलापेक्षी प्रातरुत्थाय मानव ।। कुष्ठार्शःकामलामेहश्वासकासोदुम्बराम्लता । हन्यात् शोफोदरं कासक्रिमिरोगभगन्दरान् । गुडभल्लातकोऽयं श्रेष्ठः सर्वार्शोविकारिणाम्" । प्रकारान्तरं यथा "दशमूल्यमृता भार्गी शठी चित्रक शठी । भल्लातकसहस्रञ्च पलाशं क्वाथयेद् बुधः । पादशेषे जलद्रोणे रसे तस्मिन्

विपाचयेत् । दत्त्वा गुडतुलामेकां लेहीभूतं समुद्धरेत् । माक्षिकं पिप्पलीतैलं मात्रयैकञ्च दापयेत् । कुष्ठं कुष्ठमाल त्वगेशामर्दांश्चन्तथा । कासं कासमुदावर्त्तं पाण्डुत्वं शोथमेव च । नाशयेद्वह्निसादञ्च गुडभल्लातक स्मृत" ।

**गुडभा** स्त्री गुड इव भाति भा—क । यावनालशर्करायाम् । राजनि० । [ (कनूकानटे । शब्दच० ।

**गुडमूल** पु० गुड इव मधुरं मूलमस्य । सुकुमारियवाके

**गुडल** न० गुड कारणतया लाति ला—क । १गौड्याम् मदिरायां शब्दच० । २गुडोत्पन्ने त्रि० ।

**गुडवीज** पु० गुड इव मधुरं वीजमस्य ।।मसूरे राजनि० ।

**गुडशर्करा** स्त्री गुडजाता शर्करा । गुडजातशर्करायाम् त्रिका० ।

**गुडशिग्रु** पु०गुड इव मधुरः शिग्रुः । रक्तशोभाञ्जने शब्दच०

**गुडा** स्त्री गु—ड किञ्च । १स्नुहीवृक्षे २वटिकायां गुटिकायां मेदि० । ३उषीर्यां राजनि० ।

**गुडाका** स्त्री गुडि वेष्टने बा० आकन् उपधालोपश्च । १आलस्ये २निद्रायाञ्च ।

**गुडाकेश** पु० गुडा स्नुहीव क्लेशा यस्य उज्ज्व० गुडाकाया निद्राया आलस्यस्य वा ईशः । २गुडावत्केशयुक्ते अर्ज्जुने । "गुडाकेश अर्ज्जुनः" उज्ज्वल० । ३जितालस्ये "एवमुक्त्वा हृषीकेशं गुडाकेश परन्तपः" गीता । "गुडाकेशो जितालस्यः" मधुसूदन ४शिवे जटा० ।

**गुडाचल** पु० दानार्थं कल्पिते गुडनिर्मिते मेरुरूपे पर्वते "प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचल । गुडाचलस्तृतीयस्तु" पद्मपु० दश मेरूक्तौ । गुडपर्वतादयोऽप्यत्र । तद्विधि हेमा० दा० ब्रह्मपु० ।

"पुलस्त्य उवाच । "अथातः सम्प्रवक्ष्यामि गुडपर्वतमुत्तमम् । यत्प्रदानान्नरः स्वर्गमाप्नोति सुरपूजितम् । उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः । त्रिभिर्भारैः कनिष्ठः स्यात्तदर्द्धेनाल्पवित्तवान्" । भार, परिमाणार्थो व्याख्यात. । "तद्वदामन्त्रणं पूजां हैमवृक्षसुरार्चनम् । विष्कम्भपर्वतांस्तद्वत् सरांसि वनदेवताः । होम जागरण तद्वल्लोकपालाधिवासनम् । धान्यपर्वतवत् कुर्य्यादिमं मन्त्रमुदीरयेत् । यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्दनः । सामवेदस्तु वेदानां महादेवस्तु योगिनाम् । प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा । तथा रसानां प्रवरः सदैवेक्षुरसो मतः । मम तस्मात् परां लक्ष्मीं ददस्व गुडपर्वत ।। यस्मात् सौभाग्यदायिन्या भ्राता त्वं गुडपर्वत ।। निवासश्चापि पार्वत्यास्तस्मान्मां पाहि सर्वदा । अनेन विधिना यस्तु दद्यात् गुडमयं गिरिम् । पूज्यमानः स गन्धर्वैर्गौरीलोके महीयते । पुनः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् । आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजित" इति पद्मपुराणोक्तो गुडपर्वतदानविधिः । "श्रीभगवानुवाच । अतः परं प्रवक्ष्यामि गुडपर्वतमुत्तमम् । सर्वपापहरं पुण्यं सौभाग्यजननं परम् । पुष्टिदं शान्तिदञ्चैव सुखदं दिव्यभोगदम् । भारैस्तु दशभिः कुर्य्याद्यथाशक्त्यापि वा भवेत् । पूर्ववत् मण्डपं कृत्वा सर्वोपकरणानि च"। पूर्ववदिति, ब्रह्माण्डपुराणोक्तधान्यपर्वतवदित्यर्थः । लोकपालसमोपेतं तथा काञ्चनवृक्षिणम् । मुक्ताफलविचित्राङ्गं वस्त्रालङ्कृतविग्रहम् । प्रवालकलतोपेतं इक्षुखण्डोपवेणुकम् । नितम्बं राजतन्तस्य मेखलाकारसंस्कृतम् । कुर्य्यात्ताम्रमयं स्कन्धं नानाधातुविभूषितम् । कृत्वा तमीदृशं शैलं सर्वधान्यसमावृतम् । सर्वौषधिसमोपेतं सरत्नं समहाद्रुमम् । कल्पयित्वा विधानेन सवितानं विचक्षणः । कुण्डमेकं ततः कृत्वा चतुःकोणं स्वलङ्कृतम् । नियोक्तव्यास्तत्र विप्रास्ते ब्राह्मणा शंसितव्रताः । पञ्चमो गुरुरत्नोक्तस्तान् सर्वान् पूजयेत्ततः । पूजितास्ते यथान्यायं होमं कुर्य्युरतन्द्रिताः । लोकपालान् ग्रहांश्चैव ब्रह्मादींश्च विधानतः । स्वलिङ्गोक्तैश्च मन्त्रैश्च होमयेयुर्द्विजोत्तमाः । महाव्याहृतिभिश्चैव अयुतं तत्र होमयेत् । आचार्य्य सह विप्रैश्च मौनेन सुसमाहित । ब्रह्मघोषरतस्तस्मिन् कारयित्वा महोत्सवम् । एवं विधिं तदा कृत्वा पूर्वेद्युः श्रद्धयान्वित । दद्यात्तं माघमासस्य तृतीयायां विशेषत । चैत्रस्य वा विधानेन तृतीयायां प्रदापयेत् । अन्येष्वपि च कालेषु ग्रहणादिषु कारयेत् । त्वं रसानां वरो नित्यं देवानाञ्च सदा प्रिय । सुखं प्रयच्छ मे नित्यं नमस्ते पर्वतोत्तम ।। यावत्तु सागरा नद्यो यावच्चन्द्रार्कतारकाः । तावन्मे त्वं सुखं यच्छ सौभाग्यमतुलं तथा । एवं सम्पूजयित्वा तं ब्राह्मणाना निवेदयेत् । आचार्य्यं पूजयेत् पश्चाद्धीनान्ब्राह्मणानपि । विसृज्य ब्राह्मणांस्तांस्तु कृत्वा चैव प्रदक्षिणम् । तस्मिन् दिने च भोक्तव्यं मधुरं क्षारवर्ज्जितम् । अनन्नालेपनश्चैव कृतकृत्यो भवेन्नर । तस्मादेवमिदं दानं फलमुत्तममिष्यता । गतिश्च शाश्वती लोके सौभाग्यं रूपमेव च । अनेन विधिना चैव दातव्यो

विपाचयेत् । द्रवा गुडतुलामेकां लेह्यीभूतं समुद्धरेत् । माषिकं पिप्पलीतैलं मारुवकस्य दापयेत् । कुडवं कुडवं-मात्र तनेशार्मरिचन्तथा । कर्षं कासमुदावर्सं पाण्डुत्वं शोथमेव च । नाशयेदग्निसादञ्च गुडभल्लातक स्मृत" ।

**गुडभा** स्त्री गुड इव भाति भा–क । यावनालशर्करायाम् । राजनि० । [ (कनूकामटे । शब्दच० ।

**गुड़मूल** पु० गुड इव मधुरं मूलमस्य । क्षुद्रमारिषशाके

**गुडल** न० गुड आस्वततया लाति ला–क । १गौडग्रां मदिरायां शब्दच० । २गुडोत्पन्ने त्रि० ।

**गुडवीज** पु० गुड इव मधुरं वीजमस्य ।।मसूरे राजनि० ।

**गुडशर्करा** स्त्री गुडजाता शर्करा । गुडजातशर्करायाम् त्रिका० ।

**गुडप्रिय** पु०गुड इव मधुर प्रियः । रक्तशोभाञ्जने शब्दच०

**गुडा** स्त्री गु–ड किच । १स्नुहीवृक्षे २वटिकायां गुटिकायां मेदि० । ३वमीर्या राजनि० ।

**गुडाका** स्त्री गुडि वेष्टने वा० आकन् उपधालोपश्च । १आलस्ये २निद्रायाञ्च ।

**गुड़ाकेश** पु० गुडा स्नुहीव क्षेशा यस्य उज्ज्व० गुडाकाया निद्राया आलस्यस्य वा ईशः । २गुडाकसुकेशयुक्ते अर्जुने । "गुडाकेश अर्जुन." उज्ज्वल० । २जितालस्ये "एवमुक्ता हृषीकेशं गुडाकेश परन्तपः" गीता । "गुडाकेशो जितालस्य" मधुसूदन ३शिवे जटा० ।

**गुडाचल** पु० दानार्थं कल्पिते गुडनिर्मिते मेरुरूपे पर्वते "प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचल । गुडाचलस्तृतीयस्तु" मत्स्यपु० दश मेरुक्तौ । गुडपर्वतादयोऽप्यत्र । तद्विधि हेमा० दा० मत्स्यपु० ।

"ईश्वर उवाच । "अथातः सम्प्रवक्ष्यामि गुडपर्वतमुत्तमम् । यत्प्रदानान्नरः स्वर्गमाप्नोति सुरपूजितम् । उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः । त्रिभिर्भारैः कनिष्ठः स्यात्तदर्द्धेनाल्पवित्तवान्" । भार, परिभाषायां व्याख्यात । "तद्वदामन्त्रणं पूजाहेमवृक्षसुरार्चनम् । विष्कम्भपर्वतांस्तद्वत् सरांसि वनदेवताः । होम जागरणं तद्वल्लोकपालाधिवासनम् । धान्यपर्वतवत् कुर्यादिमं मन्त्रमुदीरयेत् । यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्दनः । सामवेदस्तु वेदानां महादेवस्तु योगिनाम् । प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा । तथा रसानां प्रवरः सदैवेक्षुरसो मत । मम तस्मात् परा लक्ष्मीं

ददस्व गुडपर्वत । । यस्मात् सौभाग्यदायिन्या भ्राता त्व गुडपर्वत । । निवासश्चापि पार्वत्यास्तस्मान्मां पाहि सर्वदा । अनेन विधिना यस्तु दद्यात् गुडमय गिरिम् । पूज्यमान स गन्धर्वैर्गौरीलोके महीयते । पुनः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् । आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजितः" इति पद्मपुराणोक्तो गुड़पर्वत दानविधि । "श्रीभगवानुवाच । अत पर प्रवक्ष्यामि गुडपर्वतमुत्तमम् । सर्वपापहरं पुण्यं सौभाग्यजननं परम् । पुष्टिदं शान्तिदञ्चैव सुखदं दिव्यभोगदम् । भारैर्वा दशभि कुर्य्याद्यथाशक्त्यापि वा भवेत् । पूर्ववत् मण्डप कृत्वा सर्वोपकरणानि च" । पूर्ववदिति, ब्रह्माण्डपुराणोक्तधान्यपर्वतवदित्यर्थः । लोकपालसमोपेत तथा काञ्चनवृक्षिणम् । मुक्ताफलविचित्राङ्ग यक्षालङ्कृतविग्रहम् । प्रवालकलतोपेतं रत्नखण्डोपवेणुकम् । नितम्बं राजतन्तस्य मेखलाकारसंस्थितम् । कुर्य्यात्ताम्रमय स्कन्धं नानाधातुविभूषितम् । कृत्वा तथेदृश शैलं सर्वधान्यसमावृतम् । सर्वौषधिसमोपेत सत्वक्कं समसाद्रुमम् । कल्पयित्वा विधानेन सवितानं विचक्षणैः । कुशध्वमेक तत कृत्वा चतुःकोण स्वलङ्कृतम् । नियोक्तव्यास्तत्र विप्रास्ते आम्नायाः यवितव्रताः । पञ्चमो गुरुरत्नोक्तस्तान् सर्वान् पूजयेत्ततः । पूजितास्ते यथान्यायं होम कुर्य्युरतन्द्रिताः । लोकपालान् ग्रहांश्चैव ब्रह्मादींश्च विधानत । स्वलिङ्गोक्तैश्च मन्त्रैश्च होमयेयुर्द्विजोत्तमाः । महाव्याहृतिभिश्चैव अयुत तत्र होमयेत् । आचार्य्य सह विप्रैस्तु मौनेन सुसमाहित । ब्रह्मघोषरतस्तस्मिन् कारयित्वा महोत्सवम् । एव विधि तदा कृत्वा पूर्वेद्युश्चद्धयान्वित । दद्यात्तं माघमासस्य तृतीयायां विशेषत । चैत्रस्य वा विधानेन तृतीयायां प्रदापयेत् । अन्येष्वपि च कालेषु अष्टम्यादिषु कारयेत् । त्व रसानां यतो नित्य देवानाञ्च सदा प्रिय । सुख प्रयच्छ मे नित्य नमस्ते पर्वतोत्तम ! । यावन्तू सागरा नद्यो यावच्चन्द्रार्कतारका । तावन्मे त्व सुख यच्छ सौभाग्यमतुलं तथा । एव सम्पूजयित्वा त ब्राह्मणानां निवेदयेत् । आचार्य्य पूजयेत्-यावाद्दीनान्यव्रणपरानपि । विसृज्य ब्राह्मणांस्तांस्तु कृत्वा चैव प्रदक्षिणम् । तस्मिन् दिने च भोक्तव्यं मधुरं चारवर्ज्जितम् । अमन्नावेपनञ्चैव कृतकृत्यो भवेन्नर । तस्मादेवमिदं दानं फलमुत्तममिच्छता । गतिञ्च शाश्वतीं लोके सौभाग्यं रूपमेव च । अनेन विधिना चैव दातव्यो

गुडपर्वतः । विधिद्वारस्तु कर्त्तव्य येव पूर्ववदाचरेत् । दानमेतत् प्रयत्नं स्यात् जोषा राजन् विशेषतः । सौभाग्यराज्यकामस्य सर्वस्यापि विधीयते । पूर्वोक्तञ्च फलं प्राप्य शतशक्यो हि जायते” इति मत्स्यपुरा- णोक्ते गुडपर्वतदानविधि” ।

**गुडादि** पु० पा० गण० उक्ते साध्वर्थे ठञ्निमित्ते शब्दगणे स च गण “गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु संग्राम संघात संक्राम संवाह प्रवास निवास उपवास” “गुडादिभ्यष्ठञ्” पा० गुडाय साधु गौडिक इक्षु ।

**गुडापूप** पु० गुडेन मिश्रित अपूपः । गुडमिश्रिते पिष्टके “तदस्मिन्नन्नं प्रायेण संज्ञायाम्” पा० कन् टाप् । गुडापूपिका पौर्णमास्यां सि०कौ० ।

**गुडाशय** पु० गुड इव मधुररसमाश्रेतेऽस्मिन् आ+शी आधारे अच् कृत० । आखोटवृक्षे (आखरोट)राजनि० ।

**गुडगुडायन** न० “इयाति मारुत स्थेषा कुक्षिपार्श्वान्तर- स्थित । सनिदन करोत्याशु ध्यान गुडगुडायनम्” इत्युक्तोक्ते से प्रवृद्धवायुजनिते शब्दभेदे ।

**गुडु(डू)ची** स्त्री गुड-रक्षणे बा० उ(ऊ)चट् ङीप । स्वनामख्यातायां लतायाम् । तस्या उत्पत्तिगुणादिक भावप्र० उक्त यथा

“हते तस्मिन् सुरारातौ रावणे बलगर्विते । देवराज सहस्राक्ष परितुष्टोऽसि राघवे । तत्र ये वानरा केचिद्राक्षसैर्निहता रणे । तानिन्द्रो जीवयामास संसिच्यामृतदृष्टिभि । ततो येषु प्रदेशेषु कपिगात्रात् परिच्युताः । पीयूषविन्दव पेतुस्तेभ्यो जाता गुडू- चिका । गुडूची मधुपर्णी स्यादमृताऽमृतवल्लरी । छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च । जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली । चक्रलक्षणिका धीरा विशल्या च रसायनी । चन्द्रहासी वयस्या च मण्डली देवनिर्मिता । गुडूची कटुका तिक्ता स्वादु पाका रसायनी । संग्राहिणी कषायोष्णा लघ्वी बल्याऽग्निदीपनी । दोषत्रयामतृड्दाहमेहकासांश्च पाण्डु ताम् । कामलाकुष्ठवातास्रज्वरक्रिमिवमीन् हरेत् । प्रमे- हश्वासकासार्शः कृच्छ्रहृद्रोगवातनुत् ।” ततृत्सत्वगुणा

“अमृतायाः शत चूर्णं मापसा परिशोधितम् । पृथक् षोडश भागाः स्यु गुडमाक्षिकसर्पिषाम् । यथाग्नि भक्षयेदेतन्नरो हितमिताशन । नास्य कश्चित् भवेद्व्याधिर्न जरा पलितं न च । न ज्वरा विषमा नैव मेहो नानिलरक्तकम् । न च नेत्रगता रोगा परमेतद्रसायनम् । मेधाकर त्रिदोषघ्न प्रयोगा दस्य बुद्धिमान् । जीवेद्वर्षशत साग्र यथैवादितिजा स्तथेति” । तत् पत्रगुणा

“गुडूचीपत्रमाग्नेयं सर्वज्वरहर लघु । कषाय कटुतिक्तञ्च स्वादुपाक रसायनम् । बल्यमुष्णञ्च संग्राहि हन्याद्दोषत्रय तृषाम् । दाहप्रमेह वातासृक्कामलाकुष्ठपाण्डुता” ।

“गुडूची कटुका लघ्वी स्वादुपाका रसायनी । संग्रा- हिणी कषायोष्णा बल्या तिक्ताग्निदीपिनी । कामला कुष्ठवातास्रज्वरपित्तक्रिमीन् जयेत् । घृतेन वात सगुडा- विबन्ध पित्त सिताढ्या मधुना कफञ्च । वातासमेरण्डक तैलमिश्रा शुण्ठ्यामवात शमयेद्गुडूची” वैद्यकम् ।

**गुडूच्यादि** पु० “गुडूची निम्बधन्याक पद्मक चन्दनानि च । एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपन । हृल्ला- सारोचकच्छर्दिपिपासादाहनाशन” इति चक्रद०सोक्ते गुडूच्यादिद्रव्यगणे । “आरग्वधादिगुडूच्यादिरित्यादिना सुश्रुते उक्ते तिक्तवर्गे उक्त तिक्तशब्दे दृश्यम् ।

**गुडूच्यादिकषाय** पु० “गुडूचीपर्पटधान्यशुण्ठीपिप्पल्यष्ट ... । पाठाभूनिम्बकुटजचन्दनोशीरपद्मकै । कषाय शीतल पेयो ज्वरातीसारशान्तये । हृल्लासारोचक- च्छर्दिपिपासादाहनाशन” चक्रदत्तोक्ते पाचनभेदे ।

**गुडूच्यादिघृत** न० “गुडूच्या क्वाथकल्काभ्या त्रिफलाया द्रवस्य च । मृद्वीकाया बलायाश्च सिद्धा स्नेहा ज्वरा- न्तिहा” चक्रदत्तोक्ते घृतभेदे ।

**गुडूच्यादितैल** न० “गुडूचीक्वाथदुग्धाभ्या तैलं लाक्षारसेन च । सिद्धमभ्यक्तमात्रं स्यात् सर्वात् वातरक्तनुत्” चक्रदत्तोक्ते तैलभेदे ।

**गुडेर** पु० गुडि-एरक् नलोपश्च । १गुडके(गुली)वर्त्तुलाकारे पदार्थे उज्ज्वल०२ग्रासे हेमच०। स्वार्थे क । तत्रार्थे ।

**गुडोद्भवा** स्त्री उद्भवत्यस्मात् उद्+भू-अपादाने अप् गुड उद्भवोऽस्या । १शर्करायाम् राजनि० । २गुड- जातमात्रे त्रि०

**गुण** आमन्त्रणे चुरा० उभ० सक० सेट् । गुणयति-ते अजुगुणत्-त । “गुणयाल्यमङ् गुणकेन हन्यात्” । “विषमे गच्छे व्येके गुणक स्यात्तः समेऽर्द्धिते वर्ग” “गुणय पृथगवा गुणित समेत” लीला० । “वर्गेण वर्ग गुणयेत् भजेत्” बीजग०

गुण पु० गुण–भावे कर्त्तरि वा अच्। १धनुर्गुणे मौर्व्याम् धनुराकर्षणरज्जौ, २रज्जुमात्रे, "गुणवन्तोऽपि सीदन्ति न गच्छन्तो यदि। सगुणोऽपि पूर्णकुम्भो यथा कूपे निमज्जति" उद्भटः। ३शौर्य्यादिधर्म्मे, राज्ञां ४सन्धिविग्रहादिषु षट्सु साधनेषु, "षड्गुणाः शक्तयस्तिस्रः" अमरः। "षाड्गुण्यमुपयुञ्जते" इति माघ। ५सामविद्यादिषु, "गुणा गुणानुबन्धित्वात्" रघु। सांख्यमते पुरुषस्य भोगोपकरणभूतत्वात् तद्धर्म्मगोपयोगित्वाच्च सत्वरजस्तमआदिषु ६पदार्थेषु। "प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्म्मसु" गीता। ७अप्रधाने, "सर्वौ कृत्यौसद्गुणे" भर्तृहरिः। तद्गुणसंविज्ञानबहुव्रीहिः। न्यायमते ८रूपादिषु चतुर्विंशतिपदार्थेषु "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" भाष्योक्ते द्रव्यनामाश्रिते द्रव्यभिन्ने उपाध्यायपायना-समानाधिकरण्ये सिद्धरूपे ९वस्तुधर्म्मे, "अदेङ्गुणः" पा० परिभाषिते १०अकारे ११एकारे १२ओकारे च "दुषणा-तोरिशान्ताद्दोषसम्प्रत्यये गुण" उद्भटः। अलङ्कारोक्तेषु १३माधुर्य्यादिषु, "तद्दोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" काव्यप्र०। "निर्दोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्" सा० द०। १४आवृत्तौ, "विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः" मनु। १५उत्कर्षे। १६विशेषणे "समासतद्धितकृता यत्किञ्चिदुपदर्शकम्। प्रधानगुणभावे च तत्र दृष्टो विपर्ययः" साकाङ्क्षावयवभेदे, पराकाङ्क्षानुषङ्गकम्। क्रियाप्रधानमेकार्थं सगुणं वाक्यमुच्यते" हरिः। सगुणं सविशेषणं क्रियान्वयिकारकादिविशेषणसहितमित्यर्थः। १७अप्रधानधर्म्मभेदे तेजोबलशौर्य्यैश्वर्य्यवैराग्यादिगक्कादौ स हि परार्थत्वादप्रधानभूतः "उपैश्वर्यज्ञाद्यन्यत् दृष्टोऽप्यान्तरैरपि। बाधक सर्वसिद्धान्ते द्रव्यादन्यो गुणः स्मृतः" इत्युक्तलक्षणे १८धर्म्मभेदे च देशकालसमादिषु चतुर्दश १९धर्म्मभेदेषु ते च "देशकालवयः१ दार्ढ्यं२ सर्वक्लेशसहिष्णुता३। सर्वविद्यानता४ दाक्ष्य५ मोज६ सहतन्त्रता७। अविसंवादिता८ शौर्य९ भक्तिमत्व१०कृतज्ञता११। शरणागतवात्सल्य१२ममर्षित्व१३मचापलम्१४। एते चतुर्दशगुणा प्रोक्ता शास्त्रेषु सूरिभि"रित्युक्ता। "दया सर्वभूतेषु१, क्षान्ति२रनसूया३ शौचम्४ अनायास५ मङ्गलम्६ अकार्पण्यम्७ अस्पृहा८ इति" २०गौतमोक्तधर्म्मभेदे। २१सूदे२२इन्द्रिये २३त्यागे२४शब्दाम् मेदि०। टोकान्तरमें २५विद्यादौ शमदमसाधने २६विवेकवैराग्यमुमुक्षादौ च। "प्रशान्तदोषाय गुणान्विताय" वेदान्तसा०। प्रधाननिर्वाहके २७अङ्गे। "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" जैमि०। तिथिनक्षत्रवारादिसाधन पुण्यपापयोः प्रधानगुणभावेन सातन्त्र्येण न ते क्षमा" "शब्दास्तु तदुपस्थानसम्पादेये गुणो भवेत्" मट्टका०। २८शाब्दस्याटिवस्तुधर्मे च। "लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता" काव्यप्र०। २९वस्तुधर्म्ममात्रे "गुणः प्रधानसंस्कारः प्रधानं प्रतिपद्यते" काव्यप्र०। "अतो गुणान्तराधानं प्रतियत्न" शि०कौ०। "गन्धः स्पर्शो रसो रूपं शब्दश्चेति गुणाः स्मृताः। तत्र गन्धस्य वक्ष्यामि विस्तराभिहितान् गुणान्" भा० शा० १८४अ०। गन्धरूपगुणस्य "गुणादिर्निर्गुणक्रियः" इत्युक्ते प्रसिद्धगुणशून्यत्वात् धर्म्ममात्रपरता "निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुतौ गुणशब्दस्य धर्म्ममात्रपरत्वम्। "ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरन्ति श्रुतयः" भाग०१०।८७अ०।

३०दूर्वायाम् स्त्री राजनि०. तस्या बहुतन्तुमत्त्वात्तथात्वम्। वर्णोत्पत्त्यनन्तरभाविषु शिक्षोक्तेषु ३१विवारादिषु बाह्यप्रयत्नेषु पु० "वर्णाभिव्यक्त्यनन्तरभाविनस्तु आन्तरतम्यपरीक्षोपयुक्ताः कण्ठविवरविकासादेः प्रवर्त्तिभागावच्छिन्नस्य कार्य्यस्य जनका यत्ना गुणशब्देनोच्यन्ते" शब्देन्दुशेखरः। बाह्यप्रयत्नाश्च एकादशधा विवारसंवारश्वासनादघोषाघोषाल्पप्राणमहाप्राणा उदात्तादयश्च त्रयः स्वराः। "स्थानेऽन्तरतमः" पा०। "तुल्यास्यप्रयत्नं सवर्णमिति" पा०। "सादृश्यस्य स्थानतो गुणतः प्रमाणतश्च" तत्र गुणतः (बाह्यप्रयत्नात्) यथा। नादवतो घोषवतो महाप्राणस्य संवृतकण्ठस्य हकारस्य सदृशस्तादृश एव घकार"। सुश्रुतोक्ते ३२अष्टविधवीर्य्ये च। "केचिदाहुरष्टविधं वीर्य्यम् उष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्च" सुश्रुते विभज्य 'वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः" इति तेषां गुणत्वमुक्तम्। गुण–करणे अच्। ३३गुणिते। "आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा। षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः" चाण०। वैद्यकोक्तद्रव्यगुणाश्च भावप्र० गुणपदे दृश्यास्तत्रकरटे

मनु०। "जुगूहे दक्षिणे पार्श्वे" भा०वि० २३५ श्लो०। "गूहन्ति मेघा इव रश्मिवन्तम्" भा०भी० ७६२श्लो०। "आकारो गूहितं यस्य" भा० द्रो० ४४७ श्लो०। "अगूहदस्तज्ञायमितीङ्गितस्तया" कुमा०। णिच् गूहयति ते अजूगुहत् त। "न देवामपि स्तुत सुमति न जुगुक्षत" ऋ० ८।१।१७। क्विप् युट् गुहौ गुहः। "विश्वायुरग्ने, गुहा गुह गा" ऋ० १।६७।२।

अप+अपनयने "अपागूहन्नमृतां मर्त्येभ्य" ऋ० १०।१७।२। "अपागूहन् अपनीतवन्त" भा०। संवरणे च। "आत्मानमप्र गूहया" अथ० ४।२०।५।

अव+सम्यगवरणे। "यूपशकलमवगूहति" शत० ब्रा० ३।७।१।२२। "उष्णीष उद्धृत्य पुरस्तादवगूहति" ५।३।५।२३। [ ३।२।१।१५।

उद्+उत्क्षिप्य संवरणे। "नीविमुद्गूहते" शत० ब्रा०

उप+आलिङ्गने "गाढं चोपजुगूहैनम्" भट्टि "छायाच्छलेनोपजुगूह लक्ष्मीः" रघु। "उपगूढानि सवेपथूनि च" कुमा०। "तरङ्गहस्तैरुपगूहतीव" रघु आश्लेषणे च। "कच्चित् कराभ्यामुपगूढनालम्" रघुः।

नि+अतिशयसंवरणे। "देवात्मशक्तिं स्वगुणैर्निगूढाम्" श्वेता०उप०। समादिपूर्वस्य तत्तदुपसर्गद्योत्यार्थयुतसंवरणे

**गुह** पु० गूहति देवसेनाम् गुह—क। १ कार्त्तिकेये "सैनापत्येन देवानामभिषिक्तो गुहस्तदा" भा०व० २८ अ०। "अथैनमभ्ययुः सर्वा देवसेनाः सहस्रशः। अस्माकं त्वं पतिरिति ब्रुवाणाः सर्वतो दिश" भा०व० २२८ अ०। "गुहोऽपि येषां प्रथमाप्तजन्मनाम्" कुमा० तस्य देवसेनारक्षकत्वेन सेनापतित्वात् तथात्वम्। भा०आनु० ८५ अ० गुहनामनिरुक्तिरन्यथोक्ता यथा "स्कन्नत्वात् स्कन्दनामाय गुहावासाद्गुहोऽभवत्"। अत्र पक्षे गुहा आवासत्वेनास्त्यस्य अच्। २अश्वे पुंस्त्री शब्दरत्ना०एतदाशयेन "यत्राश्वा विशयोनयः" कुमा०उक्तम्। देवखातरूपविलोत्पन्नत्वात्तथात्वम्। ३परमेश्वरे न "करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" विष्णुस०। "गूहति संवृणोति स्वरूपं माययेति गुहः" भा० "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति गीतोक्तेस्तस्य स्वमायया स्वात्मरूपसंवरणात्तथात्वम्। गुहारूपमायाहृदयाद्याश्रयत्वात् वा तथात्वम्। गुहाशयशब्दे दृश्यम्। रामायणप्रसिद्धे शृङ्गवेरपुराधीशे चण्डालजातीये ४रामसित्रे च पु०। "आससाद महावीरः शृङ्गवेरपुरं प्रति" इत्युपक्रमे "यत्र राजा गुहो नाम रामस्यात्मसमः सखा। निषादजात्यो बलवान् स्थपतिश्चेति विश्रुतः" इत्यादिना "सह सौमित्रिणा रामः समागच्छत् गुहेन स" इत्यन्तेन रामा० अयोध्याकाण्डे तत्सख्यमुक्तम्। ५सिंहपुच्छीलतायाम् (चाकुलिया) ६पर्वतादिगह्वरे स्त्री मेदि०। तस्य सर्वसत्त्वसंवारकत्वात् तथात्वम्। "गुहानिबद्धप्रतिशब्ददीर्घम्" "प्रतिस्वनेनास्य गुहागतेन" रघु ७शालपर्ण्याम् (शालपाणि) राजनि० अमरटीकायाम् ८देवखाते,१०हृदये च स्त्री शब्दार्थचि०। हृदयस्य गुहातुल्यत्वात् तथात्वम् यथाह शत० ब्रा० ११।२।६।५। "तस्मादिदं गुहा हृदयम्"। "गुहा प्रविष्टौ सुकृतस्य लोके" श्रुतिः ११मायायां च। "यो वेद निहितं गुहायां परमे व्योमन्" श्रुतिः "गुहाहितं गह्वरेष्ठं पुराणम्" "आत्मा गुहायां निहितः" श्रुतिः। इमा०आद्युदात्त। १२गुहाधिष्ठातृदेवतायाम् स्त्री। "गुहाभ्यः किरातम्" यजु० ३०।१७। पुरुषमेधे। १३बुद्धौ। गुह—भावे भिदा० अङ्। १४संवरणे स्त्री। गुह+अश्मा० अस्त्यर्थे र। गुहर तद्युक्ते त्रि०। [दृश्यम्।

**गुहराज** पु० वृ०सं० ५५।अ० उक्तिते प्रासादभेदे प्रासादशब्दे

**गुहलु** पु० गोत्रप्रवर्त्तके ऋषिभेदे ततो गर्गा० अपत्ये यञ्। गौहलव्य तद्गोत्रापत्ये पुंस्त्री।

**गुहषष्ठी** स्त्री गुहप्रिया षष्ठी तज्जन्मदिनत्वात् शाक० त०। "येयं मार्गशिरे मासि षष्ठी भरतसत्तम।। पुण्या पापहरा धन्या शिवा शान्ता गुहप्रिया" ति० त० भविष्योक्ते मार्गशुक्लषष्ठीतिथौ। इयं वारभेदादियोगेन चम्पेति कीर्त्यते यथाह नि० सि० ब्रह्मा० पु० "मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता। रविवारेण संयुक्ता सा चम्पेतीह कीर्त्तिता" "विशाखाभौमयोगेन सा चम्पेतीह कीर्त्यते" इति मदनरत्ने पाठः। गुहस्य षष्ठ्यां कृतार्थतोक्ता भा०व०२२४अ० "तस्मिन् कुण्डे प्रतिपदि कामिन्या स्वाहया तदा। तत् स्कन्नं तेजसा तत्र संवृतं जनयत् सुतम्" इत्युपक्रमे "द्वितीयायामिति व्यक्तस्तृतीयायां शिशुर्बभौ। अङ्गप्रत्यङ्गसम्भूतश्चतुर्थ्यामभवद्गुहः" इत्युक्ता २२८अ० "तदा तदाश्रया लक्ष्मीः स्वयं देवी शरीरिणम्। श्रीजुष्टः पञ्चमीं स्कन्दस्तस्मात् श्रीपञ्चमी स्मृता। षष्ठ्यां कृतार्थोऽभूद्यस्मात् तस्मात् षष्ठी महातिथिः" उक्तम्। इयमेव स्कन्दषष्ठीति नि० सि० उक्तम्। ति० त० तु चैत्रशुक्लषष्ठ्या

एव स्कन्दषष्ठीत्व व्यवस्थापितं तच्च स्कन्दषष्ठीशब्दे वक्ष्यते। देशभेदाद्व्यवस्था

**गुहाचर** न० गुह्यन्ते शास्त्रैकगम्यमानपदार्था अस्याम् गुह–घञर्थे क गुहा बुद्धिस्तत्र चरति विषयतया चर–ट। १ब्रह्मणि।

"मनसैवानुद्रष्टव्यम्" इति श्रुतौ तस्य मनोवृत्तिमात्रवेद्यत्वात्तथात्वम्। "आविः सन्निहितं गुहाचरं नाम महत् पदमत्रैतत् समर्पितम्" माण्डू० उ०।

"आविः प्रकाशं सन्निहितं रागाद्युपाधिभिश्चरति भ्राजतीति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते। दर्शनश्रवणमननविज्ञानाद्युपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्वप्राणिनाम्। यदेतदाविर्भूतं ब्रह्म सन्निहितं सम्यक् स्थितं हृदि तद् गुहाचरं नाम गुहायाञ्चरतीति दर्शनश्रवणादिप्रकारैर्गुहाचरमिति प्रख्यातम्" भा०

**गुहावदरी** स्त्री गुहा गुह्या वदरीव। (शालपाण) रत्ने वैद्यकम्।

**गुहाशय** पु स्त्री–गुहायां गर्त्ते शेते शी–अच्। १मूषिके शब्दार्थचि० २सिंहादिषु जन्तुषु भावप्र०यथा "सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा। बभ्रुजम्बुकमार्जार इत्याद्याः स्युर्गुहाशयाः"। तन्मांसगुणा भाव०प्र० उक्ता यथा "गुहाशया वातहरा गुरूष्णा मधुराश्च ते। स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारिणाम्"। स्त्रियान्तूभयत्र जातित्वेऽपि योपधत्वात् टाप्। गुहायां हृदि शेते। ३परमात्मनि। "एष हि यो वेद गुहाशयं प्रभुम्" भा० आश्व०४०अ०। "सर्वभूतगुहाशय" श्वेता०उ०। "गुहायां बुद्धौ शेते इति सर्वभूतगुहाशय" भा०। व्यापकत्वे हृदयेषु शायिनि ४प्राणे "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिता सप्त सप्त" मुण्डक०उ०

**गुहाहित** पु० गुहायां बुद्धौ हृदये वा आहितः। हृदिस्थे बुद्ध्यारूढे परमात्मनि। "गुहाहितं गह्वरेष्ठं पुराणम्" कठ०उ०

**गुहिन** न गुह–बा० इनन्। वने शब्दरत्ना०

**गुहिल** न० गुह–गुणा० इलच् किच्च। १धने उज्ज्वल०द०। गुहा+काशा०चतुरर्थ्यां इल। २गुहासन्निकृष्टदेशादौ त्रि०

**गुहेर** त्रि गुह–एरक्। १गोप्तरि २लोहकारे सि०कौ०।

**गुह्य** त्रि० गुह–भावादौ–क्यप् काशिका। १गोपने २गोप्ये अमरः "गुह्यातिगुह्यगोप्ता त्वम्" अपचमापनमन्त्र। ३उपस्थे क्लीव शिश्ने न०। गुहामर्हति दण्डादि०यत्। ४कमठे पु०स्त्री स्त्रियां योपधत्वात् टाप्। ५दम्भे पु० मेदि०। "गुह्यो गभीरो गहनः" विष्णुस० उक्ते ६विष्णौ पु० "गूहितुं योग्यं गुह्यं वेदरहस्यं तद्वेद्यत्वात् तखपया गुह्यो विष्णुः गुहायां हृदाकाशे निहित इति वा गुह्य" भा०।

**गुह्यक** पु० गूहन्ति रक्षन्ति निधिं गुह–ण्वुल् पृषो० यगागम। "निधिं गूहन्ति ये यक्षास्ते स्युर्गुह्यकसंज्ञकाः" इति व्याडिः। गुह्यं कुत्सितं कायति कै-शब्दे क गुह्यं गोपनीयं कं सुखं येषामिति वा अनयोः पक्षयोः "शंसिदुहिगुहिभ्योवेति" काशिकावचनात् गुहेः क्यप्। १देवयोनिभेदे तल्लोकप्राप्तिकर्मभेदा काशी० ख० उक्ता यथा "गुह्यकानामयं लोकस्तेते गुह्यका स्मृता" "न्यायेनोपार्ज्य वित्तानि गूहयन्ति च ये भुवि। स्वमार्गगा धनाध्यक्ष शूद्रप्राया कुटुम्बिन। अविभज्य च भोक्तारः क्रोधासूयाविवर्जिता। न तिथिं नैव वारञ्च संक्रान्त्यादि न पर्व च। नाधर्मञ्च न धर्मञ्च विदन्त्येते सदात्मसाः। एकमेव हि जानन्ति कुलपूज्योऽहि यो द्विज। तस्मै ता संप्रयच्छन्ति मन्यन्ते तद्वचः स्फुटम्। सत्कविभाजोप्यलापि तेन पुण्येन गुह्यकाः। भुञ्जते स्वर्गसौख्यानि देवत्वमस्तुतोभयाः"। २पक्वान्नभेदे तत्पाकप्रकारो यथा "समितां सर्पिषा भृष्टां सिताद्राक्षादिसंभृताम्। एलालवङ्गकर्पूरमरीचपरिवासिताम्। क्षिपत्वान्तु समितासम्पुटे वेष्ट्य घृते पचेत्। तत खण्डे न्यसेत् पक्वं गुह्यकोऽयमुदाहृतः। गुह्यको बृंहणो हृद्यो हृद्य पित्तानिलापह मधुरोऽतिगुरुः पाके किञ्चित् सन्धानकृत्सर" पाकरा०

**गुह्यकाली** स्त्री नित्यकर्म०। विश्वसारतन्त्रोक्ते देवीमूर्त्तिकालीभेदे तन्मन्त्रादुक्तं तत्र यथा "अथ वक्ष्ये महेशानि! विद्यां सर्वफलप्रदाम्। चतुर्वर्गप्रदां साक्षात् महापातकनाशिनीम्। सर्वसिद्धिप्रदां नित्यां भक्तिमुक्तिप्रदायिनीम्। गुह्यकालीं महाविद्यां त्रैलोक्ये चातिदुर्लभाम्। इन्द्रादि(र)युक्तं वर्गाद्यं रतिबिन्दुविभूषितम् (क्रीं)। त्रिगुणञ्च ततः कृत्वा द्वैयाक्षरं समुद्धरेत्। षष्ठस्वर समायुक्तं बिन्दुनादकलान्वितम् (हू)। द्विगुणञ्च ततः कृत्वा द्वैयवर्णं समुद्धरेत्। वामाक्षिवह्निसंयुक्तं नादबिन्दुकलायुतम् (ह्रीं)। तद्द्वयं कालिके चोक्त्वाः चायथा दक्षिणे वदेत्। स्वप्नबीज तत पश्चात् त्रैलोक्यमोहिनी

त्वियम्"। अथ वेति गुह्ये फाल्गुने। दक्षिणे फाल्गुने"षा

गुह्यकेश्वर पु० ६त०। कुवेरे।

गुह्यगुरु पु० कर्म०। शिवे महादेवे त्रिका०

गुह्यदीपक पु० स्वयं गुह्यं सन् दीपयति दीपि-ण्वुल्। गुह्यदीप इव कायति कै-क वा। खद्योते (जोनाकी-पोका) शब्दमा०। [अच्। मूले राजनि०

गुह्यनिष्यन्द पु० गुह्यात् उपस्थात् निष्यन्दते नि+स्यन्द

गुह्यपुष्प पु० गुह्यं गुप्तं पुष्पमस्य। अश्वत्थवृक्षे राजनि०

गुह्यभाषित न० गुह्यं गुप्तं भाषितम्। १मन्त्रे जटाध० २गुप्तवाक्ये च।

गुह्यमय पु० गुह्यप्रचुरः प्राचुर्य्ये मयट्। कार्त्तिकेये "आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि। श्रूयते भगवान् देवो सर्वगुह्यमयो गुहः" भा०आ०१२७अ०

गुह्यबीज पु० गुह्यं बीजमस्य। भूतृणे राजनि०

गुह्याष्टक न० भारभूत्यादितीर्थाष्टके। तत्र यथा "भारभूत्याषाढिडिण्डिमुण्डाकुल्यमरपुष्कराः। प्रभासनैमिषौ चेति गुह्याष्टकमिदं जगे" इति स्कान्द० प०।

गू विष्ठात्यागे तुदा० कुटा०पर०अक०सेट्। गुवति अगुवीत् जुगाव। कोदित् गून। गूथम्।

गू स्त्री गच्छत्यपानेन देहात् गम-कू टिलोपश्च। १विष्ठाया, २मले च। गूधातो क्विप्प्रत्ययान्ततकथनं पुंलिङ्गता-कथनञ्च प्रामादिकम्।

गूढ त्रि० गुह-क्त। १गुप्ते २संवृते च अमरमेदिन्यौ। "कामिनीकुचकलशवत् गूढं चमत्करोति" सा०द० "गूढाकारेङ्गितस्य च" रघु।

गूढचारिन् त्रि०गूढः सन् चरति चर-ट। १गुप्तीभूयचारिणि गुप्तचरणञ्च चौर्य्यशङ्काहेतु यथोक्तं याज्ञवल्क्येन "अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः। द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः। परद्रव्यगृहाणाञ्च पृच्छका गूढचारिणः। निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः। गृहीतः शङ्कया चौर्य्ये नात्मानं चेद्विशोधयेत्। दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत्"।

गूढज पु० गूढ-गुप्तः सन् जायते जन-ड। पुत्रभेदे "गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतो मतः" याज्ञ०। गूढोत्पन्नशब्दे विवृतिः।

गूढनीड पुंस्त्री गूढं नीडं वासस्थानं यस्य। खञ्जनखगे शब्दमाला तस्य वासस्थानं हि केनापि न दृष्टपूर्वम् स्त्रियां जातित्वात् ङीष्। [जनि०।

गूढपत्र पु० गूढं पत्रमस्य। १अङ्कोठे, २करीरे च रा

गूढपथ पु० गूढः पन्था यस्य अच् समा०। १अन्तःकरणे शब्दार्थचि०कर्म०। २गुप्ते मार्गे च

गूढपाद् पुंस्त्री गूढः पादोऽस्य हस्तो०। १सर्पे अमरः

गूढपाद पुंस्त्री गूढः पादोऽस्य। १सर्पे शब्दरत्ना० "मही-धरमिव श्वेतं गूढपादैर्विभीषणैः" भा० कर्ण० ३१ अ०। स्त्रियां जातित्वात् ङीपि पादः पदादेशे गूढ-पदी। २गुप्तपादमात्रे त्रि० "उपानद्गूढपादश्च" हितो०।

गूढपुरुष पु०कर्म०। गुप्तचरे, प्रणिधौ अमरः। [राजनि०।

गूढपुष्पक पु० गूढानि संवृतानि पुष्पाण्यस्य। बकुलवृक्षे।

गूढफल पु०गूढं यथा तथा फलति अच्। बदरे शब्दार्थचि०

गूढमार्ग पु०नि०कर्म०। भूमेरन्तर्गते सुरङ्गाख्ये पथि हेमच०

गूढमैथुन पुंस्त्री गूढं केनाप्यदृष्टं मैथुनं यस्य। काके। स्त्रियां जातित्वात् ङीप्।

गूढवर्चस् पुंस्त्री गूढं वर्चोऽस्य। भेके त्रिका०।

गूढवल्लिका स्त्री कर्म०। अङ्कोठवृक्षे राजनि०।

गूढव्यङ्ग्या स्त्री गूढं काव्यार्थभावनापरिपक्वबुद्धिमात्रवेद्यम् व्यङ्ग्यं यत्र। लक्षणाभेदे "व्यङ्ग्यस्य गूढागूढत्वात् द्विधा स्यात् फललक्षणा" सा०द०। यथा "उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्। विदधदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां शतम्"

गूढसाक्षिन् पु० कर्म०। 'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। यः श्राव्यते तदा गूढं गूढसाक्षी स उच्यते" नारदोक्ते साक्षिभेदे।

गूढाङ्ग पुंस्त्री गूढान्यङ्गान्यस्य। कच्छपे राजनि० स्त्रियां जातित्वात् ङीष् २गुप्तदेहमात्रे त्रि० तत्र स्त्रियां स्वाङ्गत्वात् वा ङीष्। [भिन्नत्वात् वा ङीप्।

गूढाङ्घ्रि पुंस्त्री गूढः अङ्घ्रिरस्य। सर्पे राजनि० स्त्रिया-

गूढोत्पन्न पु० गूढं यथा तथोत्पन्नः। "उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्न-स्तस्य स्याद्यस्य तल्पजः" इति मनूक्ते पुत्रभेदे। "यस्य गृहे अवस्थितायां भार्य्यायां यः पुत्र उत्पद्यते सजातीयोऽयं भवतीति ज्ञातोऽपि कस्मात् पुरुषविशेषाज्जातोऽभावितिः न ज्ञायते स गृहे अप्रकाशोत्पन्नस्तस्य पुत्रः स्याद्यदीयायां भार्य्यायां जातः" कुल्लू०। "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" याज्ञ०उक्ते.

सजातीयत्वनिश्चयो यत्र तस्य पुत्रता। स च पुत्रषट्कमध्यवर्त्तित्वात् बन्धुदायहर यथाह मनु “औरस क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च दायादबान्धवाश्च षट्” ।

गूढात्मन् पु० गूढ आत्मा कर्म०। परमात्मनि। “भवेद्वर्णागमात् हंस सिंहो वर्णविपर्ययात्। गूढोत्मा वर्णविकृतेर्वर्णलोपे पृषोदर” व्या० का०। “एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते” श्रुति तस्य सर्वान्तर्यामित्वेन स्थितावपि अविदुषामगम्यत्वात् गूढत्वम्।

गूथ पु०न०। गू-थक् कर्म्मणि०। विष्ठायाम् अमर।

गूथलक्ष पु स्त्री गूथे रक्तः आसक्तः रक्ष कः। (गुयेशालिक) प्रसिद्धे खगे शब्दच०। स्त्रियां जातित्वात् ङीष्।

गून त्रि०गू-क्त तस्य न। कृतविष्ठोत्सर्गे अमर। [गूरणम्

गूर उद्यमे चुरा०आत्म० सक० सेट्। गूरयते अजुगूरत।

गूर वधे गतौ च दिवा० आत्म० सक० सेट्। गूर्य्यते अगूरिष्ट। जुगूरे ईदित् गूर्ण

गूर्त्त(र्ण) त्रि० गूरी उद्यमे क्त ईदित्वात् नेट् वेदे निष्ठानत्वाभाव। उद्युक्ते “प्रहोता गूर्त्तमना उराणा” ऋ०६।६३।४ “इदमित्था रौद्रं गूर्त्तवचा” ऋ० १०।६१।१।१प्रशस्ते च “दूरो गूर्त्तश्रवः दर्शोणम्” ऋ० १।६१।५ ‘गूर्त्तश्रवसम् प्रशस्यान्नम्’भा०। लोके निष्ठातस्य नत्वे गूर्ण इत्येव।

गूर्त्ति स्त्री० गृणन्ति स्तुवन्ति गृ—कर्त्तरि क्तिच् “बहुलं छन्दसि” पा०उत्वम्। १स्तोतरि “गूर्त्तयो नेमानिषु” ऋ १।५६।। “गूर्त्तय स्तोतार”भा०। भावे क्तिन्। २स्तुतौ स्त्री “शिशुं न यज्ञैः स्वदयन्त गूर्त्तिभि” ऋ०८।१२।१ “गूर्त्तिभि स्तुतिभि’ भा० लोके तु गीर्णिरित्येव।

गूर्द्द स्तुतौ सक०चु०उभ० सेट्। गूर्द्दयति ते अजुगूर्द्दत्त। ‘गूर्द्दयति स्तुतिकर्म्मा’ निघ०“स गूर्द्दय स्थविरम्’ ऋ० ७।१८।१ “गूर्द्दय स्तुहि’ भा क्रीडार्थे गुर्द्दवत्।

गूवाक पु गुवाक+पृषो०। गुवाकशब्दार्थे पूगवृक्षे राजनि०

गृधणा स्त्री मयूरपिच्छचन्द्रे शब्दच०।

गृ सेके भ्वा पर०सक०अनिट्। गरति अगार्षीत्। जगार।

गृज ध्वनौ भ्वा० पर० अक० सेट् गर्जति। अगर्जीत् जगर्ज ‘गर्ज गर्ज क्षण मूढ।” देवीमा०“गर्जन् हरि साम्भसि शैलकुञ्जे’ भट्टि। भावे गृज्यते। अगर्जि

गृञ्ज ध्वनौ भ्वा०पर०अक० सेट् इदित्। गृञ्जति अगृञ्जीत्। जगृञ्ज गृञ्जनम्। भावे गृञ्ज्यते अगृञ्जि

गृञ्जन पु० गृञ्जति रोगभेदनाशाय ध्वनति गृजि-कर्त्तरि ल्यु। १मूलभेदे मेदि० २रक्तलशुने राजनि०। “गृञ्जनं पित्तलं ग्राही तीक्ष्णोष्णो रोगनाशन। गन्धाकृतिगुणैस्तुल्यं लशुनस्य पलाण्डुना” इत्युक्तलक्षणे (सलगम) प्रसिद्धे ३ मूलभेदे पु०। “कटुष्णं कफवातघ्नं गृञ्जनं गुल्मनाशनम्। रुचिकृत् दीपनं हृद्यं दुर्गन्धि परिकीर्त्तितम् इत्युक्तगुणे (लशुन) ख्याते ४मूलभेदे न० “लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च” अभक्ष्ये मनु। (गाजर) इति ख्याते ५मूलभेदे च ६विषदिग्धपशुमांसे न० मेदि० स्वार्थे क। तत्रार्थे। “शोभाञ्जनं कोविदारस्तथा गृञ्जनकादय” भा०आनु०८१ अ०. अभक्ष्यीयोक्तौ।

गृञ्जिम पु० यदुवंश्ये शूरस्य पुत्रे वसुदेवभ्रातृभेदे। “मरिषयां जज्ञिरे शूरात् भोज्याया पुरुषा दश। वसुदेवो महाबाहु” इत्युपक्रमे “अनाधृष्टि कनवको वत्सवानथ गृञ्जिम” हरिव० ३८अ०।

गृणीषणि पु० गृ—अच् गृणि स्तोत्र तस्येच्छा इष—भावे भा०कनिन् ६त०। स्तोत्रेच्छायाम् “देव देव वोऽवसे इन्द्रमिन्द्रं गृणीषणि’ ऋ०८।१२।१८ “गृणीषणि स्तोत्रेच्छायाम्” भा। [ङीष्।

गृञ्जीव पु स्त्री स्थूलमृद्गवाते हेम० स्त्रियां जातित्वात्

गृत्स पु० गृध्यति अनेन गृध—स। १कामदेवे उज्ज्वलद० २स्तोतरि ३स्तुत्ये च त्रि० माघव “गृत्स कवि विश्वविदमभूरम्” ऋ० २।१८।१ “गृत्स गृणन्तम्” भा “‘गृत्सो राजा वरुणश्च एतम्’ ऋ० ७।८७।५ गृत्स स्तुत्य ” भा। ४मेधाविनि त्रि० निघ०। अग्निस्तृणानिदस्तु”ऋ०७।४।२ “गृत्सो मेधावी”भा०। ५विषयाभिलाषुके त्रि ६रुद्रभेदे पु० “गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नम “यजु०१६।२५ [ष्टा०इव्यम्।

गृत्सपति पु ६त०। रुद्रभेदे गृत्सशब्दे दृश्यम्

गृत्समति पु० ब्रह्मस्पतिवंश्ये सुहोत्रपुत्रभेदे अपि “सुहोत्रस्य सुतत्रयम्” “काशकश्च महासत्त्वस्तथा गृत्समतिश्च य” हरिव० ३२ अ०।

गृत्समद पु० शौनकगोत्रप्रवरे शुनहोत्रस्य १पुत्रभेदे शुनहोत्रस्य दायादास्त्रय परमधार्म्मिका। काश शाल् मय इति तो तथा गृत्समद प्रभु’ हरिव०२९ अ० “शुनकाना गृत्समदेति त्रिप्रवर वा भार्गवशौनहोत्र गार्त्समदेति” आश्व०श्रौ० १२।१०।१२ ‘आर्ष्टिषेणस्य

ऽनाम शक्रस्य दयित सखा" भा० आनु० १८ अ०। स च ऋग्वेदिना तर्पणीयर्षिभेदः "अथर्षिपय शत-र्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भ-रद्वाजोवसिष्ठ" इति आश्व० गृह्य० सू० ३।४।२ "वीतहव्यो महाराज। ब्रह्मवादित्वमेव च। तस्य गृत्समद पुत्रो रूपेणेन्द्र इवापर। शक्रस्त्वमिति यो दैत्यैर्निगृहीत बभूव ह। ऋग्वेदे वर्त्तते चाग्र्या श्रुतिर्यस्य महात्मनः। यत्र गृत्समदो ब्रह्मन् ब्राह्मणैः स महीयते। स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्" आनु० ३० अ० उक्ते २वीतहव्यपुत्रे ऋषिभेदे च।

गृध लिप्सायां दिवा० पर० सक० सेट्। गृध्यति इरित् अगृ-धत्–अगर्धीत्। जगर्ध। गर्धित्वा-गृद्ध्वा गृद्धः।

गृध्नु त्रि० गृध–क्नु। १अभिलाषुके २कामे पु० उणादि०।

गृधू स्त्री गृध–कू। १गुदे २कुत्सिते ३अपाने च संक्षिप्तसा०

गृध्नु त्रि० गृध–क्नु। लुब्धे अमरः "अगृध्नुराददे सोऽर्थान्" रघुः "चातकस्तोयगृध्नुः" मेघदू० "मा ते गृध्नुरभि-शस्तातिहायच्छिद्राणि गात्राणि" अथ० ११६।२०

गृध्य त्रि० गृध–कर्मणि क्यप्। १अभिकाङ्क्षणीये "गृध्यमर्थ-मपाप्यर्थि" भट्टि। भावे क्यप्। २लिप्सायां न०। ततो ऽस्त्यर्थे इनि। गृध्यिन् लिप्सायति त्रि०। "नेमा क्षियुर्नेते वाचां क्रव्यदा मांसगृध्यिनः" भा० आनु० ७२ अ०। स्त्रियां ङीप्।

गृध्र पु स्त्री गृध–क्रन्। (शकुनि) पक्षिभेदे राजनि०। "या समभ्यागिनीयत चरन्ति गृध्रादयो मूर्ध्नि गृहोर्द्धभागे" शकुनशास्त्रम्। "क्रोशकगृध्रप्रभृतिभिरनिष्टविहगैः परित्यक्ते" वृ० स० ४८ अ०। गृध्रस्येदम् गार्ध्रं गृध्रसम्ब-न्धिनि त्रि० गार्ध्रपत्रशब्दे २५८५पृ०दृश्यम्। "गृध्रच्छाये वर्त्तमानौ" २पक्षिमात्रे च "तौ सीतान्वेषिणौ गृध्र (जटायुषम) लूनपक्षमपश्यताम्" रघु। ३लुब्धे त्रि० "अन्यत्र क्षियते गर्द्धयजगृध्रा प्रचारिण" भा०द्रो०७ अ०। गृध्रपक्षिजातिश्च श्येनीजाता यथाह "श्येनी श्येनांश्च गृध्रांश्च तथोलूकानजायत" रामा०। गृध्रीशब्दे दृश्यम्। स्त्रियां ङीप्।

गृध्रकूट पु० गृध्रप्रधानं कूटमस्य। मगधदेशस्थपर्वतभेदे। "गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षित" (हृदय) भा०शा० ४६ अ०। "चरणाद्रि समारभ्य गृध्रकूटान्तकं शिवे!। तावत् कीकटदेशः स्यात्तदन्तर्मगधो भवेत्" शक्ति० सङ्ग० २०७ पट०

गृध्रनखी स्त्री गृध्रस्य नखस्तदाकारोऽस्त्यस्याः अच् गौरा० ङीप्। (कुलियाखाडा) १कुलिकवृक्षे रत्नमा०। २कोलिवृन्ते बदर्याम् त्रिका० "करमर्द्दत्रिकण्ठकसौवीरकशतावरी गृध्रनख्यश्चेति कण्टकसंज्ञः। रक्तपित्तहरो ह्येतौ शर्कराकृच्छ्रनाशकौ। सर्वमेहहरौ चैव शुक्रदोषविनाशनौ" सुश्रुते तस्याः कण्टकसञ्ज्ञत्वमुक्ता गुणा उक्ताः।

गृध्रपत्रा स्त्री गृध्र इव सूक्ष्मं पत्रं यस्याः। सूक्ष्मपत्राह्वे राजनि०। गृध्रस्य पत्रं पत्रं पक्षोऽस्य। गृध्रपक्षि पक्षयुतपक्षे २वाणभेदे। गृध्रवाजादयोऽप्यत्र "शतेन गृध्रवाजानां शराणां नतपर्वणाम्" भा० शल्य० ७ अ०। "येऽन्ये स्कन्दस्य सैनिकाः इत्युपक्रमे "कह्लारकोकनदो गृध्रपत्रश्च जम्बुकः" भा०श०४६ अ०। उक्ते २स्कन्दसैन्यभेदे।

गृध्रयातु पु० गृध्ररूपेण याति या–तुन्। गृध्ररूपे राक्षसभेदे। "सुपर्णयातुमुत गृध्रयातुम्" ऋ०७। १०४।२२।

गृध्रराज पु० ६त०गृध्रो राजेवेति वा उपमितस०। गरुडानुजे जटायुपक्षिणि। "निर्बिभेद सुतीक्ष्णाग्रैर्गृध्रराज शिलाशितैः" रामा०आर०। गृध्रपत्यादयोऽप्यत्र।

गृध्रवट पु० गृध्रोपलक्षितो वटोऽत्र स्थाने। तीर्थभेदे "ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमत। स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम्। ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम्। इतरेषां तु वर्णानां सर्वपापं प्रणश्यति" भा०व०८४ अ०

गृध्रसी स्त्री गृध्रमपि स्यति सो–क गौरा०ङीप् ६त०। वात-रोगभेदे यथाह सुश्रुत "पार्ष्णिं प्रत्यङ्गुलीनां तु कण्डरा यानिलार्दिता। सक्थ्नः क्षेपं निगृह्णीयाद् गृध्रसीति हि सा स्मृता"। माधवकरोऽप्याह। "स्फिक्पूर्वा कटिपृष्ठजानुजङ्घापदं क्रमात्। गृध्रसीस्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः। वाताद्वात कफात्तन्द्रा गौरवारोचकान्विता"। भावप्रकाशे विस्तरेणोक्तम् यथा "स्फिक्पूर्वा कटिपृष्ठजानुजङ्घापदं क्रमात्। गृध्रसीस्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः। वातद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः। वातजायां भवेत्तोदो देहस्यातीव वक्रता। जानुजङ्घोरुसन्धीनां स्फुरणं स्तब्धता भृशम्। कफे वह्निमार्दवम्। तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च। गृध्रसी वातात् कैवल्यात् स्फिगादिपर्यन्तं स्तम्भतोदैर्गृह्णाति। क्रमात् इतिक्रमात् तत्र यदा यथा

इत्युक्तास्तत्र यस्य पुंस यत्र ग्रामादौ वर्गो गरुडादि स्यात्तद्वर्गसंख्यां द्विगुणां विधाय कृत्वा परस्य ग्रामस्य वर्ग संख्यया आद्यां च कृत्वा गजैरष्टभि शेषितमवशिष्टन्ता काकिण्योस्तेया पुंस । एवं ग्रामस्यापि स्ववर्गसंख्यां द्विगुणां कृत्वा परस्य पुंसः वर्गसंख्यया युक्तां च कृत्वा गजभक्तावशिष्टा ग्रामस्य काकिण्यो भवन्ति एवमनयो पुरुषग्रामयो काकिण्यःस्युः । तत्र तद्विवरत पुरुषकाकिणीनां ग्रामकाकिणीनां विवरमन्तरं तस्मिन् क्रियमाणे यस्य ग्रामस्य दातृत्वात् पुंसः काकिण्याधिक्ये पुंसोऽद्रव्यहानि । ग्रामस्य प्रतिपक्षीत्वादित्यर्थः । यथा । नीलकण्ठस्य वर्गः सर्पः तत्संख्या ५ द्विगुणा १० चरणाद्रेर्वर्गः सिंहस्तत्संख्यया २ युक्ता १२ गजभक्तशेष ५ नीलकण्ठस्य काकिणय । एवं ग्रामवर्गसंख्या २ द्विगुणा ६ नीलकण्ठवर्गः ५ संख्यया युक्ता ११ अष्टभक्तावशेष ३ ग्रामस्य काकिण्य द्वयोरन्तरे शेष २ नीलकण्ठस्य दातृत्वात् स्वद्रव्यहानिरित्यर्थः । उक्तञ्च "स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत् । अष्टभिस्तु हरेद्भागं योऽधिक स ऋणी भवेत्" इति । इतोऽन्यथाह कश्चित् पञ्चशिल्पसार-टदा "अकारादिषु वर्गेषु दिक्षु प्रागादिषु क्रमात् । गृध्रमार्जारसिंहाश्वसर्पाखुगजमेषकाः । दिग्वर्गाणां मिथ योनि स्ववर्गात्पञ्चमो रिपु । रिपुवर्गं परित्यज्य शेषवर्गाः शुभप्रदा । साध्यवर्गं पुर स्थाप्य पृष्ठत साधक न्यसेत् । विभजेदष्टभि शेषं साधकस्य धन स्मृतम् । व्यत्ययेनागतं शेषं साधकस्य ऋणं स्मृतम् । धनाधिकं स्वल्पऋणं सर्वसम्पत्प्रदं स्मृतम्" इति । गृध्रोऽत्र गरुडः गरुडसर्पयोर्महावैरसत्त्वात् साध्य इत्यर्थः । साध्यो वासयोग्यो ग्रामादिस्तस्य वर्गः वर्गसंख्या पुर संस्थाप्य साधकस्य नीलकण्ठादे वर्गसंख्यां पृष्ठतो न्यसेत् । एवं विशिष्टोऽङ्कोऽष्टभिर्भक्त शेष साधकस्य ऋणं स्यात् । यथा साध्यवर्गसंख्या १पुरःस्थापिता साधकस्य ५वर्गसंख्या च पृष्ठत स्थापितस् ५१ एतास्मिन्पश्चाद्यत् अष्टभक्तावशिष्ट साध्यस्य ५धन साधकस्य साध्यस्य च संख्या विपरीतस्थापित१५ अष्टभक्तं शेषं साधकस्य १ऋण स्यात् । अथ द्वारनिवेशनमाह । अथेति । द्विजादिराशिमतां पुंसां क्रमेण पूर्वतः प्राच्यादिदिक्चतुष्टये द्वारं हितं यथा द्विजराशय कर्कवृश्चिकमीनास्तेषां पूर्वदिशि । वैश्यराशयो वृषकन्यामकरास्तेषां दक्षिणदिशि । शूद्रराशयो मिथुनतुलाकुम्भास्तेषां पश्चिमदिशि नृपराशयो मेषसिंहधनुर्धरास्तेषामुत्तरदिशि द्वारनिवेश इत्यर्थः" पीयु० धा०

अत्रेदं बोध्यम् "शेषाङ्केन फलं बोध्यं शेषाभावे तु हारकात् । अङ्कादेव फलं बोध्यमिति तन्त्रविदां मतम्" ज्यो० त० वचनादङ्काभावे हारकाङ्कात् फलनिर्णय । राशिविशेषस्य ग्रामादिस्थानविशेषे निवासनिषेधमाह । "गोसिंहनक्रमिथुनं निवसेन्न मध्ये ग्रामस्य पूर्वककुभोऽलिहयाङ्गनाश्च । कर्कौ धनुस्तुलभमेषघटाश्च तद्वद्वर्गाः स्वपञ्चमपरा बलिनः स्युरैन्द्र्याः" मु० चि० "वस्तुमिष्टस्य ग्रामस्य वस्तुविभागवन्नवधा विभागं कृत्वा मध्ये मध्यमविभागे गोसिंहनक्रमिथुनं समाहारद्वन्द्व न निवसेत् वृषसिंहमकरमिथुनराशिमन्तः पुरुषा न वसेयु । अथ पूर्वककुभ० पूर्वदिशातोऽष्टदिक्षु अलिवृश्चिकः तदा दिराशिमन्त पुरुषा न वसेयुं । यथा । पूर्वस्यां वृश्चिक आग्नेय्यां हयो मीन०, दक्षिणस्यां कन्या, नैरृत्यां कर्क पश्चिमायां धनु । वायव्यां तुला उत्तरस्यां मेष ऐशान्यां कुम्भ न वसेदित्यर्थः । अथ वर्गाः । अकचटतपयशवर्गाः अष्टौ ऐन्द्र्याः पूर्वदिशमारभ्य अष्टदिक्षु बलिन । यथा अवर्गः पूर्वस्याम् । कवर्ग आग्नेय्याम् । चवर्गो दक्षिणस्याम् टवर्गो नैरृत्याम् । तवर्ग पश्चिमायाम् पवर्गो वायव्याम् । यवर्ग उत्तरस्याम् । शवर्ग ऐशान्यां बलीत्यर्थः । कीदृशा वर्गाः स्वपञ्चमपरा स्वस्मात् पञ्चम परः शत्रुर्येषां ते । यस्य अवर्ग पूर्वस्यां बली तेन स्वपञ्चमपश्चिमायां द्वारं निवासो वा न विधेय एवं कवर्गादीनामाग्नेय्यादिप्रदिक्षु बलित्वं तत् पञ्चमस्य रिपुत्वञ्च ज्ञेयम्" । पी० धा०

तत्र गृहयोग्यभूमिपरीक्षा विश्वकर्मणोक्ता यथा "अथातः सम्प्रवक्ष्यामि लोकानां हितकाम्यया । श्वेता रक्ता तथा पीता कृष्णा वर्णानुपूर्वशः । सुगन्धा ब्राह्मणी भूमी रक्तगन्धा तु क्षत्रिणी । मधुगन्धा भवेद्वैश्या मद्यगन्धा च शूद्रिणी । मधुरा ब्राह्मणी भूमि कषाया क्षत्रियान्विता । अम्ला वैश्या भवेद्भूमिस्तिक्ता शूद्रा प्रकीर्त्तिता । चतुरस्रा द्विपाकारा सिंहा वृषभरूपिणी । वृत्तं च भद्रपीठं च त्रिशूलं लिङ्गसन्निभम् । प्रासादध्वजकुम्भादिदेवानामपि दुर्लभम् । त्रिकोणां शकटाकारां शूर्पव्यजनसन्निभाम् । मुरजाकारसदृशीं सर्पमण्डूकरूपिणीम् । खराजगरबकाभां वक्रां चिपिटरूपिणीम् । उद्गराभां तथा उलूककाकसर्पनिभां तथा ।

शूकरोष्ट्राजसदृशीं धनु परशुरूपभाम्। कङ्कालशवशाकारां दुर्गन्धां च विवर्जयेत्। मनोरमाऽत्र या भूमि परीक्षेत्तां प्रयत्नतः। द्वितीया हटभूमिश्च निम्ना चोत्तरपूर्वके। गम्भीरा ब्राह्मणी भूमिर्न्नृपाणां तद्रमाश्रिता। वैश्यानां समभूमिश्च शूद्राणां विकटा स्मृता। सर्वेषां चैव वर्णानां समभूमिः शुभावहा। शुक्लवर्णा च सर्वेषां शुभा भूमिरुदाहृता। कुशकाशयुता ब्राह्मी दूर्वा न्नृपतिवल्लभा। फलपुष्पयुता वैश्या शूद्राणां तृणसंयुता। नदीपाताश्रितां तद्वत् महापाषाणसंयुताम्। छगनाभा महाघोरैर्वायुना वापि पीड़िताम्। भल्लभल्लकसंयुक्तां मध्ये विकटरूपिणीम्। श्वशृगालनिभां कृष्णां टङ्किते परिवारिताम्। चैत्यश्मशानवल्मीकधूर्त्तालिकेषु वर्त्तिनीम्। चतुष्पथस्य हाटस्य देवमन्त्रिनिवासत। अदूरस्थां श्वभ्रगर्त्तयुक्तांश्चैव विवर्जयेत्” भूमिभेदे फलानि तत्रैव“सुवर्णगन्धा सुरसा धनधान्य शुभावहा। व्यत्यये व्यत्ययफला तत्र कार्यं परीक्षणम्। चतुरस्रा महाधन्या द्विपाभा धनदायिनी। सिंहाभा सद्गुणन्यूना वृषाभा पशुवृद्धिदा। वृत्ता सद्वृत्तदा भूमिर्भद्रपीठनिभा तथा। त्रिशूलरूपा वीराणां सदृशनिर्भयसौख्यदा। लिङ्गाभा लिङ्गिना श्रेष्ठा प्रासादध्वजसन्निभा। पदोन्नति प्रकुरुते कुम्भाभा धनवर्द्धिनी। त्रिकोणशकटाकारा शूर्पव्यजनसन्निभा। क्रमेण सुतसौख्यार्थधर्महानिकरी स्मृता। मुरजा वंशहा सर्पभवल्काभा भयावहा। नैका खरानुकारा च मृत्युदाऽजगराश्रिता। चिपिटा पौरुषैर्हीना वक्राकारा तथैव च। काकोलूकनिभा दद्यात् शोकभयप्रदा। सर्पाभा पुत्रपौत्रघ्नी वज्राभा वधहानिदा। शूकरोष्ट्राजसदृशी धनु परशुरूपिणी। कुचेलान्मलिनान् मूर्खान् महाघ्नान् जनयेत् सुतान्। कङ्कालशवशाकारा मृतपुत्रा धनार्त्तिदा। दुर्गन्धां पापिनीं दुष्टप्रजां भूमिं परित्यजेत्। मनोरमा सुतप्रदा हृद्या धनप्रदा मता। सुतार्थदा तथाप्युदक्पूर्वादिकप्लवा मही। गम्भीरगन्धा जनयेत् पुत्रान् गम्भीरमनसः समान्। सद्गन्धा मदान्वितान् कुर्यात् सदा सौभाग्यदायिनी। विकटा शूद्रजातीना तथा दुर्गमवासिनाम्। शुभदा न परेषां च तस्कराणां शुभावहा। सुवर्णवर्णा स्यान् वर्णान् वर्णानामाधिप सदा। शुक्लवर्णा च सर्वेषां पुत्रपौत्रप्रवर्द्धिनी। कुशकाशान्विता ब्रह्मवर्चसान् कुरुते सुतान्। दूर्वान्विता वीरजनि फलाढ्या धनपुत्रदा। नदीपाताश्रिता मूर्खान् कृपणत्वांस्तथैव च। दरिद्रानश्ममध्यस्था गर्त्तान्तस्था कृपायुतान्। विवरा पशुपुत्रार्त्तिदायिनी सौख्यहारिणी। वक्रातिवक्रा जनयेत् पुत्रान् विद्याविहीनकान्। शूर्पमार्जारशुगुडनिभा भीतिसुतार्तिदा। सुघना सुघनान् पुत्रान् जनयेद्घातकान्। घोराघोरप्रदा वायुपीडिता वायुभीतिदा। भल्लभल्लकसंयुक्ता पशुहानिप्रदा सदा। विकटा विकटान् पुत्रान् श्वशृगालनिभा तथा। ददाति कृष्णा परुषा दुर्मुखान् जनयेत् सुतान्। गृहस्वामिनश्चैव वल्मीके विपद् स्मृता। धूर्त्तालयसमीपे तु पुत्रस्य मरणं ध्रुवम्। चतुष्पथे त्वकीर्त्तिः स्यादुद्वेगो देवसद्मनि। धर्मार्थहानिश्च सचिवे श्वभ्रे विपद् उत्कटा। गर्त्ते या तु पिपासा स्यात् कूर्माभे धननाशनम्। दशहस्तादिपर्यन्तं पीडन्ते पुरवासिन। चैत्यश्मशानदेवानां गृहाणि परिवर्जयेत्। निखनेद्धस्तमात्रेण पुनस्तेनैव पूरयेत्। पांशुनाधिकमध्योनाः श्रेष्ठमध्याधमा क्रमात्। जलेनापूरयेत् श्वभ्रं शीघ्रं गत्वा शतं पदम्। तथैवागम्य वीक्षेत न क्षीणं सलिलं शुभा। अरत्निमात्रे श्वभ्रे वा घृतलिप्ते च सर्वत। कृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम्। ज्वालयेद्भूपरीक्षार्थं सम्पूर्णं सर्वदिङ्मुखम्। दीप्ता पूर्वादि गृह्णीयाद्वर्णानामनुपूर्वशः। हलाकृष्टे तथोद्देशे सर्वबीजानि वापयेत्। त्रिपञ्चसप्तरात्रेण समरोहन्ति तान्यपि। उप्तबीजा त्रिरात्रेण शाड्वरा शोभना मही। मध्यमा पञ्चरात्रेण सप्तरात्रेण निन्दिता। तिलान्वा वापयेत्तत्र अमांशापि च सर्षपान्। अथ वा सर्वधान्यानि वापयेच्च समन्तत। यत्र नैव प्ररोहन्ति तां प्रयत्नेन वर्जयेत्। व्रीहय शालयो मुद्गा गोधूमा सर्षपास्तिलाः। यवाश्चौषधयः सप्त सर्वबीजानि चैव हि। सुवर्णताम्रपुष्पाणि श्वभ्रमध्यगतानि च। यस्य नास्ति वनायान्ति च भूमिस्तु शोभना। पांशवो रेणुतां नीता निरीक्ष्या वाम्लरिक्षणा। अधोमध्योर्द्ध्वगा यत्र गतिस्तुल्यफलप्रदा”।

भूमेः पूर्वादिदिक्प्लवफलं तत्रैवोक्तम् “चतुरस्रां समां शुद्धां भूमिं कृत्वा प्रयत्नत। तस्मिन् दिक्साधनं कार्यं हस्तमध्ये गत दिशि। पूर्वप्लवे भवेल्लक्ष्मीराग्नेय्यां शोकमादिशेत्। याम्यां याति यमद्वारं नैर्ऋते च महाभयम्। पश्चिमे कलहं कुर्याद्वायव्यां मृत्युमादिशेत्। उत्तरे धनवृद्धिः स्यादीशाने रत्नसञ्चयम्। दिङ्मूढे कुलनाशः क्षयके दारिद्र्यमादिशेत्”।

उक्ते आयामविस्तारभेदेन ध्वजाद्यायास्तत्फलं वर्णादिभेदेन ध्वजादीनां विधिनिषेधौ चाह तत्रैव "विस्तारेण हतं दैर्घ्यं विभजेदष्टभिस्ततः। यच्छेषं स भवेदायो ध्वजाद्यास्ते सुरेश्वर। ध्वजो धूमो हरिः श्वा गौः खरेभौ वायसोऽष्टम। पूर्वादिदिक्षु चाष्टानां ध्वजादीनां भवस्थितिः। स्वस्थानात् पञ्चमे स्थाने वैरत्वं च भङ्ग-ङ्गवेत्। विषमाय शुभं प्रोक्तं समाये शोकदुःखदं। स्वस्थानगा बलिष्ठाः स्युर्नैवान्यस्थानगाः शुभाः। ध्वजः सिंहे तौ च गजे वृषे गवि शुभप्रदाः। वृषो न पूजितोऽन्यत्र ध्वजः सर्वत्र पूजितः। वृषसिंहगजाश्चैव कुण्डे कर्कटकीटयोः। द्विपः पुनः प्रयोक्तव्यो वापीकूपसरःसु च। मृगेन्द्रमासने दद्याच्छयनेषु गजं पुनः। वृषं भोजनपात्रेषु छत्रादिषु पुनर्ध्वजम्। अग्निवेश्मसु सर्वेषु, गृहे वह्न्युपजीविनाम्। धूमं नियोजयेत् केचित् श्वानं म्लेच्छादिजातिषु। खरो वैश्यगृहे शस्तो ध्वाङ्क्षः शेषकुटीषु च। वृषसिंहगजाश्चापि प्रासादपुरवेश्मसु। गजाये वा ध्वजाये वा गजानां सदनं शुभम्। अश्वालयं ध्वजाये च खराये वृषभेऽपि वा। उष्ट्राणां मन्दिरं कार्यं गजाये वा वृषध्वजे। पशुसद्म वृषाये च ध्वजाये वा शुभप्रदम्। शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः। अमत्रच्छत्रवस्त्राणां वृषाये वा ध्वजेऽपि वा। पादुकोपानहौ कार्ये सिंहायेऽथवा वा ध्वजे। स्वर्णरौप्यादिधातूनामन्येषां तु ध्वजः स्मृतः। ब्राह्मणे तु ध्वजः श्रेष्ठः प्रतीच्यां कारयेन्मुखम्। सिंहश्च भूभृतां शस्त उदीच्यां च मुखं शुभम्। विशां वृषः प्राग्वदनः शूद्राणां दक्षिणे गजः। सर्वेषामेव जातीनां ध्वजः श्रेष्ठतमो मतः। ध्वजाये क्षत्रियविशो प्रशस्तो गुरुरब्रवीत्। सिंहाये सर्वथा त्याज्यो ब्राह्मणेन वृषस्तथा। सिंहाये शुनि चाये च ध्वस्तायाश्च प्रजायते। धूम्राये पूर्णसिद्धिः स्याद्वृषभायः पशुप्रदः। गजाये सम्पदा वृद्धिः शेषाया शोकदुःखदाः"। तथा च ध्वजाद्या आया यत्र स्युस्तद्दिङ्मुखद्वाराणि स्युरिति फलितार्थं "प्रत्यग्ध्वजे द्वारमथोत्तरे पूर्वं हरावुदक् स्यात् द्विरदे च याम्यम्" इति श्रीपत्युक्तेः "सर्वद्वार इह ध्वजो वरुणदिग्द्वारं च हित्वा हरिः प्राग्द्वारो वृषभो गजो यमसुरेशाशास्वसौ स्याच्छुभः" महेश्वरोक्तेश्च। "पश्चादुदक्पूर्वयमे द्विजादितः" मु०चि० ब्राह्मणादिवर्णभेदेन द्वारनिवेशनमुक्तम् द्विजादितः ब्राह्मणादिवर्णभेदेन पश्चादादि दिक्षु गृहद्वारं स्यात्। यथा ब्राह्मणस्य पश्चान्मुखं गृहद्वारं क्षत्रियस्योदग्दिशि वैश्यस्य पूर्वस्यां, शूद्रस्य यमे दक्षिणस्याम् इत्यर्थः। उक्तञ्च श्रीपतिना "ध्वजे प्रतीच्यां मुखमग्रजानामुदङ्मुखं भूमिभृतां च सिंहे। विशो वृषे प्राग्वदनं गजे तु शूद्रस्य याम्याननमामनन्तीति"। टोडरानन्दे अयम् "ध्वजे पराश्च विप्राणां राज्ञां सिंहेऽप्युदङ्मुखम्। गजे शूद्रस्य याम्यास्यं विशः पूर्वमुखं वृषे इति॥" पी०धा० गृहाणामायवारांशादिकं तत्फलञ्च विश्व० उक्तं यथा "पिण्डे नवाङ्काङ्गगजैरग्निनागाष्टसागरैः। नागैश्च गुणिते भक्ते क्रमादेते पदार्थकाः। नागाद्रिनवसूर्यार्क्षतिथ्यृक्षभानुभिः। आयो वारोऽंशको द्रव्यमृणमृक्षन्तिथिर्युतिः। आयुश्चाथ गृहेशर्क्षगृहभैक्यं मृतिप्रदम्। सपूर्णा शुभदा प्रोक्ता ह्यसंपूर्णास्त्वनिष्टदा"। अस्यार्थः। इष्टगृहदीर्घं १७हस्ताः विस्तारः ७हस्ताः। "तथायते तद्भुजकोटिघात लीला०उक्तदिशा क्षेत्रफलम् २०३ इदं पिण्डं नवधा स्थापितम् यथाक्रमम् नवाद्यङ्कैर्गुणिते नागाद्यङ्कैर्हृते आयादयः स्युः। यथा २०३ पिण्डे ९ गुणिते १८२७। ८भक्ते शेषाङ्कात् ३ आयः सिंहाख्यः। ९हत १८२७। ७भक्ते शेषं ७ तेन वारः शनिः। ६गुण १२१८। ९भक्ते ३शेषं अंशकः (नवांशकः)। ८गुण १६२४। १२भक्ते ४धनम्। ३गुण ६०९। ८भक्ते शेषं १ऋणम्। ८गुण १६२४। २७ भक्ते शेषं ४नक्षत्रं रोहिणी। ८गुण १६२४। १५भक्ते। शेषं ४चतुर्थी तिथिः। ४गुण ८१२। २७भक्ते शेषं २प्रीतिर्योगः। ८गुण १६२४। १२०भक्ते शेषं ६४वर्षाणि आयुः। आयादीनां प्रयोजनं पी०धा० दर्शितं यथा अथैषामायादीनां प्रयोजनमुच्यते। आयस्य तावत् "विषमायः शुभादेव समायः शोकदुःखदः" इति वशिष्ठोक्तम्। "शराणां च सूर्यारवारराश्यंशा सदा वह्निभयप्रदाः। शेषग्रहाणां वारांशाः कर्त्तुरिष्टार्थसिद्धिदाः" इति यथा गणितेनागतो भौमवारः सोऽपि भिन्द्य तद्राशी मेषवृश्चिकौ भिन्द्यौ एवमन्येष्वपि राशिषु तथा शशिन्द्या "गृहस्यागतभं यत्तु तद्द्विराश्यात्मकं यदि। तच्छशांशवशात्तत्र ज्ञातव्यं सर्वदा गृहमिति" तथा च कृत्तिका द्विराश्यात्मिका तत्रैकांशो मेषे। अन्येऽपि द्व्यंशादिके शेषे मिथुनमन्यथा वृषः। पुनर्वसावप्यंशकत्रयं यावन्मिथुनमन्यथा कर्कः। एवमुत्तराफाल्गुन्यादिषु द्विराश्यात्मकेषूहनीय वि-

वृद्धिः। न तु नि यन्दिग्धे ष्वेकराशात्मकेषु अश्विन्यादिषु।
धनर्णयोश्च फलम् "धनाधिकं गृहं द्रव्यं निर्द्धनाय ऋणाधिकमिति"। नक्षत्रस्य फलम् "विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदा। निधनाख्या तारका तु सर्वथा निधनप्रदा। विवर्ज्य तारकास्त्वेतास्त्रिर्माणमशुभप्रदम्। कुर्वन्नामतो मोहाद्दुःखभाग्व्याधिभाग्भवेत्। अत्र गृहस्य नक्षत्राद्गणनं यत्र स्य नक्षत्रमवशिष्टतारका विपत्तारात्मिका स्युर्येत्तदानिष्टास्तद्दिने गृहारम्भं न कुर्यात् अन्यस्मिन् दिने शुभताराश्च गृहारम्भं कुर्यादित्यर्थः इति केचित्। अपरे तु गृहकर्त्तुर्नामनक्षत्राद्गृहनक्षत्रगणनं नवभक्तमवशिष्टं विपत्तारादिकं स्यात्तद्गृहमनिष्टमन्यथा शुभमिति यदाह कश्यपः "दत्ते दुःख यती यर्क्षं पञ्चमर्क्षं यत् क्षयम्। आयुःक्षयं सप्तमर्क्षं कर्त्तुर्भाद्यदि सप्तममिति वास्तुशास्त्रेऽपि "गृहभात् स्वामिभं गण्यं भक्तं च नवभिः पुनः। यच्छेषं सा भवेत्तारा सप्तपञ्चत्रिकाऽधमेति" प्राहुः। यदा तु गृहकर्त्तुर्गृहस्य चैकं नक्षत्रं स्यात्तदा तच्छुभमशुभं वेति निर्णयमाह। वसिष्ठः "गृहस्य तत्पतेस्त्वेकं धिष्ण्यं चेन्निधनादमिति" निधनं मरणम्। राश्यैक्येऽप्य दोषः न तु भिन्न राशित्वे तद्वाक्यस्य विवाहप्रकरणोक्तत्वात्। केचिदत्रापि प्रयोजनमुक्तं तदुक्तं व्यवहारसमुच्चये "त्रिभिस्त्रिभिर्वैश्वर्क्षं कृत्तिकाद्यै रुक्केदपत्यांनिधनानि शोकम्। शत्रोर्भयं राजभयं च मृत्युं सुखं प्रवासञ्च नव प्रभेदा" इति। गृहभवनाद्राशिस्थानेऽपि प्रयोजनमाह स एव। (विश्वकर्म्मा) राशिकूटादिकमित्यादि (तद्वाक्यमनुपद दृश्यम्) वास्तुशास्त्रे कृत्तिकादिषु द्विराशिषु भेषु राशिनिर्णयो यथा "अश्विन्यादित्रयं मेषे सिंहे प्रोक्तं मघात्रयम्। मूलादित्रितयं चापे शेषेषु नव राशयः" इति। शेषेषु भेषु रोहिण्यादिषु नव राशयो ज्ञेयाः। यथा रोहिणीमृगयोर्वृषः। आर्द्रापुनर्वस्वोर्मिथुनम्। पुष्याश्लेषयोः कर्कः। एवं हस्तादिके स्वात्यादिद्विके च कन्यामकराद्याराशयः "स्युरित्यर्थं अत्र च पञ्चो वास्तुशास्त्रे नवांशादुक्तेरुक्तः। अत्र राशिकूटे नाडीवेधो न दोषाय। उक्तं च ज्योतिश्चिन्तामणौ "सेव्यसेवकयोश्चैव गृहतत्स्वामिनोरपि। परस्पर मित्रयोश्चैकनाडी प्रशस्यते" इति। तिथिप्रयोजन तिथ्यानयनप्रकारान्तरं च वास्तुशास्त्रे "प्रकाश्य क्षेत्रफलं त्रिघ्नं त्रिंशाप्तशेषकम्। तिथ्यः प्रतिपदाद्याः स्यु-

र्दर्शे रिक्तां च वर्जयेदिति"। तुल्यन्यायत्वाच्छुभाशुभप्रकरणोक्तं नेष्टयोगवर्जनं च योगानां, प्रयोजनं स्पष्टमेव आयुषः प्रयोजनं तावत्कालं गृहस्थितिरिति। पौष्णा द्यायादिफलं विश्वकर्मवास्तुशास्त्रे "धिष्ण्ये च वसुभिर्भक्ते व्ययः स्याच्छेषकाङ्कके। धनाधिकं गृहं द्रव्यं निर्द्धनाय ऋणाधिकम्। व्ययान्विते क्षेत्रफले शुभाद्यंशाश्च युते। त्रिभिः शेषे क्रमादिन्द्रयमभूमिपांशकाः। इन्द्रांशे पदवीवृद्धिर्गृहसौख्यं प्रजायते। यमांशे मरणं दुःखं रोगशोकमनेकधा। राजांशे धनधान्यानि पुत्रवृद्धिश्च जायते। राशिकूटादिकं सर्वं दम्पत्योरिव चिन्तयेत्। भे स्वे द्विद्वादशे नूनं त्रिकोणे त्वनपत्यता। षट्काष्टके मैत्रं स्यादन्यथे मध्यमं स्मृतम्। (अन्यथे द्वादशद्वितीयादौ) दूरस्थिते इष्टलाभः स्त्रीलाभश्च तथैव च। जन्मतृतीये च तथा धनधान्यागमो भवेत्। दशमैकादशे चन्द्रे धनायुर्भद्रप्रदः। चतुर्थाष्टमरिपुःफस्थो मृत्युपुत्रविनाशदः। त्रिकोणेऽप्यनपत्यं स्यात् केचिद् मन्त्रगृहे शुभम्। वदन्ति चन्द्रे तु नयोर्मैत्र्यमत स्मृतम्। अश्विन्यादित्रयम् इत्यादिकम् (अनुपदमुक्तम्)। सूर्यारवारराशयो यदा वह्निभयप्रदा। शेषग्रहाणां वाराश्च कर्त्तुरिष्टार्थसिद्धिदा। गृहस्थापनभं यत्तु तद्धि राशात्मकं यदि। तदंशोवशात्तस्य सा तस्य सर्वदा गृहम्। विपत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदा। निधनाख्या तु या तारा सर्वथा निधनप्रदा। विवर्ज्य तारकास्त्वेतास्त्रिर्माणमशुभप्रदम्। प्रत्यरितारा भयदा निरर्थकं तु शुभौ। निधनाख्या तु या तारा स्त्रीहन्त्री प्रदर्शयेत्। कुर्वन्नामतो मोहाद्दुःखभाग्व्याधिभाग्भवेत्। तिथौ रिक्ते दरिद्रत्वं दर्शे गर्भनिपातनम्। कुयोगे धनधान्यादिनाशः पातश्च मृत्युदः। वैधृतौ सर्वनाशाय नक्षत्रैक्ये तथैव च। आयुर्विहीने गेहे तु दुर्भगत्वं प्रजायते। नाडीवेधो न शुभदस्तारा रोगभयप्रदा। गणवैरे पुत्रहानिर्द्धनहानिस्तथैव च। योनौ कलिर्भङ्गात् च यमांशे मरणं ध्रुवम्। नक्षत्रैक्ये स्वामिमृत्युः सर्वे सर्वनाशनम्। पापवारे दरिद्रत्वं शिशूनां मरणं तथा। केचिच्छनिं प्रशंसन्ति चौरभीतिस्तु जायते"। आयादिकचिन्ताया मर्यादा दिग्भेदेन स्थूलभेदनिर्माणश्चाह विश्वकर्मा "एकादशकराद्धूर्द्ध्वं यावद्द्वात्रिंशद्धस्तकम्। तावदायादिकं चिन्त्यं तदूर्द्ध्वं नैव चिन्तयेत्। आय-

व्ययौ मासशुद्धिं जीर्णे चिन्तयेद्गृहे । शिलान्यास प्रकुर्वीत मध्ये तस्य विधानतः । ऐशान्यां देवतागेहं पूर्वस्यां स्नानमन्दिरम् । आग्नेय्यां पाकसदनं शयनं दक्षिणे न्यसेत् । शस्त्रगेहञ्च नैरृत्यां पश्चिमे भोजनालयम् । वायव्यां धान्यसदनं भाण्डारागारमुत्तरे । आग्नेयीपूर्वयोर्मध्ये दधिमन्थनमन्दिरम् । अग्निप्रेतेशयोर्मध्ये आज्यगेहं प्रशस्यते । याम्यनैरृतयोर्मध्ये पुरीषत्यागमन्दिरम् । नैरृत्यम्बुपयोर्मध्ये विद्याभ्यासस्य मन्दिरम् । पश्चिमानिलयोर्मध्ये रोदनार्थं गृहं स्मृतम् । वायव्योत्तरयोर्मध्ये रतिगेहं प्रशस्यते । उत्तरेशानयोर्मध्ये औषधार्थञ्च कारयेत् । ईशानपूर्वयोर्मध्ये शेषं सर्वगृहं स्मृतम् । नैरृत्यां सूतिकागेहं नृपाणां गेहमिष्यते । आसन्नप्रसवे मासि कुर्य्याच्चैव विशेषतः । तद्वत् प्रसवकाले स्यादिति शास्त्रेषु निश्चितम् । मासे तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने । प्रसूतिसम्भवे काले गृहारम्भणमिष्यते" ।

अलिन्दभेदेन गृहनामभेदान् तत्फलमलिन्दशब्दार्थञ्चाह तत्रैव "गुरोरधो लघु स्थाप्यः पुरस्तादूर्द्ध्वगं न्यसेत् । गुरुभिः पश्चिमे पूर्व्यं सर्व्वलघ्ववधिर्विधिः । स्यादलिन्दं लघुस्थाने नालिन्दं गुरुसाश्रितम् । प्रदक्षिणैर्गृहद्वारादलिन्दैर्दशषड्विधैः १६ । ध्रुवसंज्ञं १ गृहं स्याद्य धनधान्यसुखप्रदम् । धन्यं २ धान्यप्रदं नृणां जयः ३ स्याद्विजयप्रदम् । नन्दं ४ स्त्रीहानिदं नूनं खरं ५ सम्पद्विनाशनम् । पुत्त्रपौत्रप्रदं कान्तं ६ श्रीप्रदं स्यान्मनोरमम् ७ । सुमुखं ८ भोगदं नूनं दुर्मुखं ९ विमुखप्रदम् । सर्व्वदुःखप्रदं क्रूरं १० विपक्षं ११ शत्रुभीतिदम् । धनदं १२ धनदं गेहं क्षयं १३ सर्व्वक्षयावहम् । आक्रन्दं १४ शोकजननं विपुलं श्रीयशःप्रदम् । विपुलं १५ नामसदृशं धनदं विजयाभिधम् १६ । प्रदक्षिणं सम्मुखाद्दलिन्दं विद्यात् लघुस्थानसमाश्रितं च । गृहस्य पूर्व्वादिगतेऽप्यलिन्दे त्वेवं भवेयुर्दश षट् क्रमेण भेदाः १६ । भवेत् पुनः शुभालिन्दयुतं कापाटसंज्ञकम् । विस्तारात् द्विगुणं गेहं गृहस्वामिविनाशनम् । निरर्थकं तद्गर्भं स्यात्क्षय वा राजसम्भवम् । केचिदलिन्दं द्वारं तु प्रवदन्ति मनीषिणः । केचिदलिन्दं शालां केचिच्चालिन्दकं च तत् । गृहाद्बहिश्च ये कोणा गृहस्यान्तर्गताश्च ये । तेषां कोणीकृतं तिर्य्यग्गेहं चालिन्दसंज्ञकम् । स्तम्भहीनं गृहाद्बाह्यं यन्निर्गतं कोणनिर्मितम् । मध्यादूर्द्ध्वं तत्र गेहं शाला लिन्दसंज्ञकम् । यत्रालिन्दं च तत्रैव द्वारमार्गं प्रशस्यते । अलिन्दद्वारहीनं च गृहं कोटीसमं स्मृतम् । यत्रालिन्दं तत्र शाला तत्र द्वारं च शोभनम् । शालालिन्दद्वारहीनं न गृहं कारयेद्बुधः" अयमर्थः ।

"प्रस्तारे तु लघुं न्यस्य प्रथमस्य गुरोरधः । यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम् । ऊने दद्याद्गुरूनेव यावत् सर्व्वलघुर्भवेत्" इ०र०उक्तरीत्या चतुर्द्वाररूपचतुर्गुरु-प्रकल्पनेन प्रस्तारे लघु द्वारं प्रकल्प्य षोडश भेदाः स्वरूपतो दर्श्यन्ते यथा

१ | ऽऽऽऽ ऊर्द्ध्वमुखम् ध्रुवं शुभदम् ।
२ | ।ऽऽऽ प्राङ्मुखं धान्यं शुभम् ।
३ | ऽ।ऽऽ दक्षिणद्वारम् जयं शुभदम् ।
४ | ।।ऽऽ प्राग्दक्षिणद्वारम् नन्दमशुभदम् ।
५ | ऽऽ।ऽ पश्चिमद्वारं खरमशुभदम् ।
६ | ।ऽ।ऽ प्राक्पश्चिममुखम् कान्तं शुभदम् ।
७ | ऽ।।ऽ दक्षिणपश्चिमास्यम् मनोरमं शुभदम् ।
८ | ।।।ऽ प्राग्दक्षिणपश्चिमास्यं सुमुखं शुभदम् ।
९ | ऽऽऽ। उत्तरास्यम्—दुर्मुखमशुभदम् ।
१० | ।ऽऽ। पूर्व्वोत्तरद्वारम्—उग्रमशुभदम् ।
११ | ऽ।ऽ। दक्षिणोत्तरास्यम् विपक्षमशुभदम् ।
१२ | ।।ऽ। प्राग्दक्षिणादिगास्यम् धनदं शुभदम् ।
१३ | ।ऽ।। पश्चिमोत्तरास्यम् क्षयमशुभदम् ।
१४ | ।ऽ।। पूर्व्वपश्चिमोत्तरास्यम् आक्रन्दमशुभदम् ।
१५ | ऽ।।। दक्षिणपश्चिमोत्तरद्वारम् विपुलं शुभदम् ।
१६ | ।।।। चतुर्दिग्द्वारम् विजयं सर्व्वत्र शुभदम् ।

दिग्भेदेनैकशालादिनिर्म्माणप्रकारं तत्राह

"यद्दास्तुनि च विस्तारः सैवोच्छ्राय शुभः स्मृतः । एकशालो गृहं कार्य्यो विस्ताराद्द्विगुणोच्छ्रयः । चतुःशालगृहस्यैवमुच्छ्रायो व्याससम्मितः । विस्ताराद्द्विगुणं दैर्घ्यमेकशालेषु शस्यते । विस्तीर्णं यद्भवेद्गेहं तदूर्द्ध्वं त्वेकशालके । द्विशाले द्विगुणं प्रोक्तं त्रिशाले त्रिगुणं तथा । चतुःशाले पञ्चगुणं तदूर्द्ध्वं नैव कारयेत् । शिखा दैव त्रिभागे तु गृहं चोत्तमसंज्ञकम् । एकं नागेन्द्रसंयुक्तौ द्वे च दक्षिणपश्चिमे । त्रिशालं पूर्व्वतोहीनं कार्य्यं वा सौख्यवर्ज्जितम् । ऊर्द्ध्वभागत्रयं त्यक्त्वा अधोभागद्वयं तथा । मध्ये नाभिं विजानीयादिति प्राह पराशरः । पूर्व्वादिषु चतुर्द्दिक्षु वासमेकादयोऽम्बुधाः । विस्तारस्याथ दैर्घ्यस्य तथैवैकैकसंयुताः । वासं वातादिकोणेषु ध्रुव

गेव सेवने भ्वा०आ०सक०सेट्। गेवते अगेविष्ट। ऋदित् अजिगेवत्। जिगेवे। [जिगेवे ऋदित् अजिगेवत्। गेष्ण'।

गेष अन्वेषणे भ्वा० आत्म० सक० सेट्। गेषते अगेषिष्ट।

गेष्ण पु० गेष–बा० न। १पर्वणि सन्धौ (गांट) २अवयवभेदे "तस्यर्क् च साम च गेष्णौ" छा०उ० "तस्य ऋक् च साम च गेष्णौ पृथिव्याद्यृक्लक्षणे पर्वणी" भा० "तस्य यद्रूप मनुष्य तद्रूप यौ गेष्णौ तावस्य गेष्णौ" छा०उ०

गेष्णु त्रि गै–इष्णुच्। गायने सि०कौ०

गेह न० गो गणेशो गन्धर्वो वा ईह ईप्सितो यत्र। गृहे। "आमयोयानि गेहानि" "एतान्यपि सता गेहे नोच्छिद्यन्ते कदाचन" मनुः। "त्यक्त्वा गेह झटिति यमुना मञ्जुकुञ्ज जगाम" पदाङ्क दू० "गेहदाहेऽग्नये" क्षामवते पुरोडाश "कात्या०श्रौ०२५।४।२६। "यजमानस्य निवास गृहदाहेऽग्निगृहदाहे वा क्षामवत्क्षामाग्निमुद्दिश्य पुरोडाश निर्वाप्य इत्यर्थः" कर्क।

स्वामिभेदादिना गेहाना नामभेदा हेमचन्द्रेण दर्शिता यथा

"प्रासादो देवभूपाना हर्म्यन्तु धनिना रटहम्। मठाव सथ्यावसथा च्छात्रव्रतिवेश्मनि। पर्णशालोटजश्चैव विहारो जिनसद्मनि। गर्भागारे भवरको वासौक शयनास्पदम्। भाण्डागार तु कोपः स्याच्चन्द्रशाला शिरोगृहम्। कुप्यशाला तु सन्धानी कायमानो तृणौकसि। होत्रीयन्तु हविर्गेह प्राग्वश प्राग् हविर्गृहात्। आयर्वण शान्तिगृहमास्थानगृहमिन्द्रकम्। तैलिशाला यन्त्रगृहमरिष्ट सूतिकागृहम्। सूदशाला रसवती पाकस्थान महानसम्। हस्तिशाला तु चतुर वाजिशाला तु मन्दुरा। सन्दानिनी तु गोशाला चित्रशाला तु जाल्मनी। कुम्भशाला पाकपुटी तन्तुशाला तु गर्त्तिका। नापितशाला वपनी शिल्पा खरकुटी च सा। आवेशन शिल्पिशाला सत्रशाला प्रतिश्रय। आश्रमस्तु मुनिस्थानमुपघ्नस्त्वन्तिकाश्रयः, प्रपा पानीयशाला स्यादापा तु मदिरागृहम्। पक्कण शवरावासो घोषस्त्वाभीरपल्लिका। पण्यशाला निषद्याट्टो हट्टा विपणिरापण। वेश्याश्रय पुर' वेशो मण्डपस्तु जनाश्रय"। ततोऽस्त्यर्थे इनि। गेहिन् मतुप मस्य व। गेहवत् गृहस्वामिनि स्त्रियां ङीप्। गेह गेहकार्य साध्यतयाऽस्त्यस्या इनि ङीप्। भार्यायाम् "गेहिनी गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ" इति मखे। चेतसा कातरेण" नैष०।

गेहेक्ष्वेडिन् त्रि० गेहे एव क्ष्वेडते क्ष्वेड–इनि पात्रे० स०। स्वगृहासक्ते युद्धादावनासक्ते कापुरुषे। युक्तारोह्यादित्वात् अस्य आद्युदात्तता।

गेहेदाहिन् त्रि० गेहे दहति दह–इनि पात्रे०स०। कापुरुषे एव गेहेविजितन् गेहेव्याड गेहेमेहिन् गेहेदृप्त गेहेघृष्ट इत्येतेऽपि पात्रे०स०। कापुरुषे आद्युदात्तता च

गेहेशूर पु० गृहएव शूर पात्रेसमितादि स०। कापुरुषे युक्तारोह्या० आद्युदात्तता [अमर।

गेहोपवन न० गेहसमीपस्थमुपवनम्। गृहसन्निकृष्टोपवने

गेह्य त्रि०गेहे भव गेहाय हित वा यत्। १गेहभवे २गेहहिते च। "यस्मै धायुरदधा मर्त्यायाभक्त चिद्भजते गेह्यम्" ऋ० ३।२०।७

गै गाने भ्वा०पर०सक०अनिट्। गायति। अगासीत्। जगौ जगतु। गीयते गेय गान गीता गीत गीति। गायक गायन गाथा गातुम्। गापयति जिगीषति। "यशोऽपि तावत् प्रभवामि गातुम्" नैष० "गेये केन विनीत वाम्" ? रघु। "तत्र स्म गाथा गायन्ति वाग्मा परमवल्गुना" भा०व० १७८२ "गीतशो यदि गीतेन नाप्नोति परम पदम्" याज्ञ "जयोदारण वाप्नोर्गापयामास किन्नरान्" रघु।

अनु+पश्चाद्गाने। अनुगायति "काचिदञ्चितपञ्चमरागम्"

अभि+आभिमुख्येन समन्ताद्वा गाने "राजधानीषु राज्ञां च सभास्वेवाभ्यगायताम्" रामा० आ०

अव+निन्दने अवगीतम्।

उत+उच्चैर्गाने। "उद्गास्यतामिच्छति किन्नराणाम्" कुमा०। "उद्गीयमान वनदेवताभि" रघु।

उप+समीपगाने। "शिष्यप्रशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम" शङ्करदिग्विजय। आधिक्येन गाने च "निवृत्ततर्षैरुपगीयमानात्" भाग [गनेष्वपि" मनु।

नि+निश्चयेन गाने। "तथा च श्रुतयो बह्व्यो निगीताश्च

परि+समन्ततो गाने। "तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः" भाग १।१।१७ "ऋषिभि परिगीतानि छन्दोभिश्च पृथक् पृथक्" गीता

प्र+प्रकर्षेण गाने। "यावत् कीर्त्तिर्मनुष्यस्य पृथक् लोके प्रगीयते" भा०उद्यो० ११८४

वि+निन्दने। "मृगया न विगीयते नृपै" "विगीयसे(केतक!) मन्मथदेहदाहिना" नैष० विविधगाने च। [गायकै।

सम्+सम्यग्गाने। "सङ्गीयमानत्रिपुरावदानः" "सङ्गीयमानचरितं सखीभि हर-

गैर त्रि॰ गिरौ भव अण्। १पर्वतभवे स्त्रियां ङीप्। सा च (विषलाङ्गला) २लाङ्गलीवृक्षे रत्नमा॰ (गेरिमाटि) ३उपधातुभेदे न॰ शब्दार्थचि॰।

गैरकंबूल न॰ नीलकण्ठताजकोक्ते वर्षलग्नकालिक षष्ठयोगभेदे तल्लक्षणादि तत्रोक्तं यथा
"यस्याधिकारः स्वर्क्षादि शुभोऽथाऽप्यशुभोऽपि वा। केनापि इत्थशालं स शून्याध्वग इष्यते। लग्नकार्येशयोरित्थशाले शून्याध्वग शशी। उच्चादिपदशून्यत्वात् नेत्थशालोऽस्ति केनचित्। यद्यन्यर्क्षं प्रविश्यैव स्वभोच्चस्येत्थशालयात्। गैरकंबूलमेतत्तु पदोनेनाशुभ स्मृतम्। उदा॰। निपृष्टे सुखमिति प्रश्ने सिंहलग्न रवि क्रिये। घटार्धे, वृषभ॰ कुम्भे भौमोऽर्कै रविमित्रयो। इत्थशालोऽस्ति तत्रेन्दु कन्याया चरमेऽशके। स्वर्क्षादिपदहीनश्च नेत्थशालोऽस्ति केनचित्। स्वर्क्षोक्षगेन शशिनाऽभ्यर्क्षस्थेनेत्थशालकृत्। गैरकंबूल मन्येन षष्ठायालाभदायकम्"। इत्यो॰ गैरकंबूलमप्यत्र

गैरायण पुंस्त्री गिरेर्गोत्रापत्यम् अश्वा॰ फञ्। गिरिगोत्रापत्ये।

गैरिक न॰ गिरौ भवम् ठञ्। (गेरिमाटि) उपधातुभेदे तद्गुणादि भावप्र॰ उक्तं यथा। "गैरिकं रक्तधातुश्च गैरेयं गिरिजं तथा। सुवर्णगैरिकं त्वन्यत् ततो रक्ततरं हि तत्। गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम्। चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम्" [राजनि॰।

गैरिकाक्ष पु॰ गैरिकमिवाक्षि पुष्पमस्य। जलमधुके वृक्षे।

गैरेय न॰ गिरौ भवम् ढक्। शिलाजतुनि अमर। (गेरिमाटी) ख्याते उपधातुभेदे भावप्र॰।

गो पुंस्त्री गच्छत्यनेन गम—करणे डो। १स्वनामख्याते पशुभेदे तस्य यागसाधनत्वात् स्तोगव्याश्च दानद्वारा स्वर्गगतिसाधनत्वाच्च तथात्वम्। गतिसाधनतया तस्य तथार्थत्वयोगेन यौगिकत्वेऽपि योगरूढत्वम्। एतेन दर्पणकृता "व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे गौः शेते इत्यत्रापि लक्षणा स्यात् "गमेर्डो" इति व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात्" इति यदुक्तं तत् प्रामादिकमेव गमेर्डोः इत्व्याद्विप्रत्ययस्य कर्त्तृवाचकत्वानियमात् "ताभ्यामन्यत्रोणादय पा॰सूत्रे उणादीनां उपादानसम्प्रदानभिन्नार्थत्वनियमात् अत्र करणार्थकडोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि गतिसाधनस्य रूपयोग्यतायाः सत्त्वात् फलोपधायकत्वनियमे यागासनचयनादीनामपि गतिशयनादिविरमकाले तच्छब्दवाच्यतानुपपत्तेः। गम्यते ज्ञायते अनेन करणे, शीघ्रं गच्छति कर्त्तरि वा डो। २रश्मौ किरणे तस्य शीघ्रगामित्वात् चाक्षुषज्ञानहेतुत्वाच्च तथात्वम् सूर्यादिकिरणसम्पर्कं विना चाक्षुषज्ञानासम्भवात् रश्मेर्ज्ञानसाधनत्वात् तथात्वम्। ३वज्रे ४हीरके तस्यापि कठिनद्रव्येऽपि गतिमत्त्वात् तथात्वम्। कर्मणि डो। ५स्वर्गे कर्मिभिर्गम्यमानत्वात् तस्य तथात्वम् मेदि॰। ६चन्द्रे विश्व कर्मिभिस्तल्लोकगमनात्तस्य तथात्वम् ७सूर्ये ८गोमेधयज्ञे भानुदीक्षित। सूर्यस्य शीघ्रगतिकत्वात् अर्चिरादिष्वधिष्ठातृतया आतिवाहिकत्वात् तथात्वम्। "संवत्सरादादित्यमादित्याच्चन्द्रमसम्" छा॰उ॰। आतिवाहिकशब्दे ६५१पृ॰दृश्यम् ९ऋषभनामौषधे राजनि॰। तस्य गोनामकत्वात् तथात्वम्। करणे डो। १०नेत्रे स्त्री तस्य चाक्षुषज्ञानसाधनत्वात् तथात्वम्। कर्त्तरि डो। ११वाणे स्त्री तस्य शीघ्रगतिकत्वात् तथात्वम्। कर्मणि डो। १२दिशि स्त्री दिशां पलायनकाले गम्यमानत्वात्तथात्वम्। १३वाचि स्त्री तस्याः ज्ञानहेतुत्वात् तथात्वम्। आधारे डो। १४भुवि स्त्री तस्याः गमनाधारत्वात् तथात्वम् १५जले च स्त्रीव॰प॰ केचित् तस्य निम्नगतित्वात् १६पशुमात्रे अमर १७मातरि १८लोमनि भानुदीक्षित॰। १९[illegible] २०नवसंख्यायाम् गोभूमेर्नवखण्डात्मकत्वात् आकाशे सदागतिमद्ग्रहाणां नवत्वाद्वा तत्संख्यासाम्यात् तथात्वम्। २१युक्तस्य भार्यायां गविजातशब्दे २५६१ पृ॰दृश्यम्। ज्ञानहेतुत्वात् २२इन्द्रिये गोचरः। पदाभ्यासितस्योपसर्जनस्य समा॰ह्रस्व शीतगु॰ शबलगु। अस्य उत्तरपदस्थत्वे तत्पुरुषे अच् समा॰। पुंसि परमगव स्त्रियां षित्त्वात् ङीप् दुग्धगवी गो पुरीषे मयट्। गोमय (गोबर) ख्याते पदार्थे न॰ गौर्विद्यतेऽस्य इनि गोमिन्। मतुप्। गोमत् गोविशिष्टे गोस्वामिनि च त्रि॰ स्त्रियां ङीप्। गो स्थाने गोष्ठच् गोगोष्ठ गोस्थाने न॰। गोमांसगुणा भावप्र॰उक्ता यथा "गोमांसं तु गुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम्। हृद्यं वातहरं बल्यमपथ्यं पीनसप्रणुत्। गोरिदं यत् "वान्तोयि प्रत्यये" पा॰ अवादेशः। गव्य गोदुग्धादौ भावप्र॰ तद्गुणाद्युक्तं यथा
"गव्यं दुग्धं विशेषेण मधुरं रसपाकयोः। शीतलं स्तन्यकृत् स्निग्धं वातपित्तास्रनाशनम्। दोषधातुमल-

दिक्रमेण तद्धाविजनेषु आर्षे प्रयोगे क्वचित् एकार्थेऽपि लुक्। "लोक विक्रुष्टमुपनेश्यति गोकुलं च" भा० २।८।१२ 'गोकुल गोकुलवासिजनम्' श्रीधर'

**गोकुलिक** त्रि०गोर्नेतस्य कुल बन्धनमव। १केकरे। गवि पङ्कसग्नया कुलिकः जडइव। २पङ्कसग्नग्वुपेचके च मेदि०।

**गोकृत** न०१त०। १गोमये २गवा चरिते त्रि०।

**गोघोडक** पु स्त्री गवि क्रोड इव कायति कै-क। सुश्रुतोक्ते प्रतुदन्वगभेदे कपोतादिगणे "कुलिङ्गगोघोडकेत्यादयः" "प्रतुदा" इत्युक्त सुश्रुतेन।

**गोखा** स्त्री गा भूमि खनयनया खन-ड। नखे पाठान्तरे क्रोडादिषु पाठात् स्वाङ्गत्वेऽप्युपसर्जनत्वे न ङीप्

**गोखु(क्षु)र** पु०गो पृथिव्या खु(क्षु)र इव। स्वनामख्याते क्षुपभेदे। तत्पर्यायगुणाद्युक्तं भावप्र०

"गोक्षुरः क्षुरकोऽपि स्यात् त्रिकण्टः स्वादुकण्टकः। गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि। स्थूल कथाद्‌ दृष्टा च तथा स्वादिक्षुगन्धिका। गोक्षुरः शीतलः स्वादुर्बलकृद् वस्तिशोधनः। मधुरो दीपनो वृष्य पुष्टिदश्चाश्मरीहरः। प्रमेहश्वासकासार्शः कृच्छ्रहृद्रोग वातनुत्"।

स च मधुपञ्चमूलान्तर्गतोदशमूलान्तर्गतश्च यथाह तत्रैव 'शालपर्णी पृश्निपर्णी वार्त्ताकी कण्टकारिका। गोक्षुर पञ्चभिरेतै कनिष्ठ पञ्चमूलकम्। पञ्चमूल लघु स्वादु बल्यम्पित्तानिलापहम्। नात्युष्ण दृष्टण ग्राहि ज्वर श्वासाश्मरीप्रणुत्" "उभाभ्या पञ्चमूलाभ्यां दशमूलमुदाहृतम्। दशमूल त्रिदोषघ्न श्वासकासशिरोरुज। तन्द्राशोथज्वरानाहपार्श्वपीडाऽरुचीर्हरेत्।"

गोक्षुरि इकारान्तोऽपि तत्रार्थे शब्दर०पृषो०साधु।

**गोगोयुग** न०गवोर्द्वित्वम् गो+द्वित्वे गोयुगच्। गवोर्द्वित्वे।

**गोगोष्ठ** न० गो स्थानम् गो+स्थाने गोष्ठच्। गवा स्थाने।

**गोगृष्टि** स्त्री गौर्गृष्टि जात्या समासे परनिपातः। सकृत्प्रसूतायां गवि सि०कौ०।

**गोग्रन्थि** पु० गोजातो ग्रन्थिः। १करीषे। गोर्ग्रन्थिर्दल। २ग स्थाने। ३गोर्ग्रन्थिरिव। गोजिह्विकौषधौ मेदि०।

**गोघ्न** त्रि० गां हन्ति हन-क ६त०। गोहन्तरि। तद्‌व्रत मनुना दर्शितं यथा

"उपपातकसंयुक्तो गोघ्नोमास यवान् पिबेत्। कृतवापोऽवसेद्गोष्ठे चर्मणा तेन संवृत। चतुर्थकालमश्नीयाद

दक्षारलवण मितम्। गोमूत्रेण चरेत् स्नान द्वौ मासौ नियतेन्द्रिय। दिवानुगच्छेत्तागास्तु तिष्ठन्नूर्ध्वं रज पिबेत्। शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासन वसेत्। तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्। आसीनासु तथासीनो नियतो वीतमत्सरः। आतुरामभिशस्तां च चौरव्याघ्रादिभिर्भयै। पतितां पङ्कसग्नां वा सर्वोपायैर्विमोचयेत्। उष्णे वर्षति शीते वा मारुते वाति वा भृशम्। न कुर्वीतात्मनस्त्राण गोरकृत्वा तु शक्तितः। आत्मनो यदि वान्येषां गृहे क्षेत्रे खलेऽथवा। भक्षयन्तीं न कथयेत् पिबन्त चैव वत्सकम्। अनेन विधिना यस्तु गोघ्नोगामनुगच्छति। स गोहत्याकृत पाप त्रिभिर्मासैर्व्यपोहति। वृषभैकादशा गाश्च दद्यात् सुचरितव्रत। अविद्यमाने सर्वस्व वेदविद्भ्यो निवेदयेत्।" "गोघ्नवत् विहित कल्पश्चान्द्रायणमथापि वा' प्रा०त० स्मृतिः। गौर्हन्यतेऽस्मै सम्प्रदाने क। २अतिथिभेदे तस्यागमने हि मधुपर्कार्थं गोहनन विहितम् 'महोक्ष वा महाज वा श्रोत्रियाय प्रकल्पयेत्' इति स्मृते कलौ तु तन्निषेध 'मधुपर्के पशोर्वध' इत्यादिना कलिवर्ज्येषु तस्योक्ते।

**गोघृत** न०गो पृथिव्या घृतमिव यस्य पोषकत्वात्। १वृष्टिजले त्रिका०। ६त०। २गव्ये घृते च

**गोचन्दन** न०गोशीर्षाख्य चन्दनम् शा०त०। गोशीर्षाख्ये चन्दने 'गोचन्दनमोक्तिकामपुकमालिकामधु। तुरङ्ग मिति सर्वेण नैव सौभाग्यमिलता" इत्युक्त

**गोचर** पु० गावः इन्द्रियाणि चरन्त्यस्मिन् चि०अच्। १इन्द्रियवेद्ये रूपरसादौ विषये। एकैकेन्द्रियविषयाश्च शब्दादयस्तत्र श्रोत्रस्य शब्दो विषय, एव त्वच स्पर्श, नेत्रस्य रूपम्, जिह्वाया रस, घ्राणस्य गन्ध। २ज्ञानमात्रविषयेऽपि 'सद्‌सत्त्वमगोचरोदरी' नैष० 'अवाङ्मनसगोचरम्" वेदा०सा० गोचरत्व ज्ञाननिरूपिता विषयता सा च स्वरूपसम्बन्धविशेष। कर्त्तरि अच्। ३भूमिचरे त्रि० गावश्चरन्त्यस्मिन् घच्। ४गवां प्रचाररवनादौ, "उपारता पश्चिमरात्रिगोचरात्" किरा० ५गन्तव्यदेशे "इन्द्रियाणि हयानाहुर्विषयास्तेषु गोचरान्" कठोप० ६देशमात्रे, "नानमस्ति समस्तस्य जन्तोर्विषयगोचरे" देवीमा० ७गगने व्योमगतिमता चराचरा चर भावे अच्। गतिभेदे च "गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचका" ज्यो० तन्निमित्ततया-

खेटाः राशिसन्धिगता यदा । एवमृक्षे फलं दद्यु-र्भक्तौ तद्विपरीतमिति" राशिचक्रस्य नक्षत्राणामुपलक्षणम् । वशिष्ठोऽपि "भगणान्त्यगताः धिष्ण्यान्तगताश्च गगनचराः । दद्युः परभवनफलं प्राग्भवनफलं च वक्रिता यतः" इति । अस्यार्थः अत्र नक्षत्रं तस्य सन्धि एकस्मान्निर्गमापरत्र संक्रमश्च सन्धिरेवं राशिसन्धिश्च । तत्र सन्धिमानम् । "रेवत्याद्यश्विनोऽष्टौ वा षोडश वा संख्यया क्रमात् । मध्यौ संक्रमणेऽर्कादेर्मासेऽस्त्यादिनिन्दिताः" इति विवाहप्रकरणे वक्ष्यति पक्ष्यतु । संक्रमणकाल एव सन्धिकाल, सर्वेषां ग्रहाणाम् "पश्चिमबिम्बं चक्रभुक्तिभक्तम्"इत्यादिना भास्करोक्तत्वात् । तदेतदस्माभिः संक्रान्तिप्रकरणे सप्रपञ्चं निरूपित तत एवावधार्यम् । तत्र सूर्यादिग्रहाः रेवत्यन्तिमपादोक्त घटिकोपलक्षिते नक्षत्रान्ते राश्यन्ते वा स्थिता स्त्रिमिस्वितस्य नक्षत्रस्य राशेर्वा फलं प्रयच्छन्ति वक्रिणस्तु पूर्वोक्तलक्षणोपलक्षिते नक्षत्रादौ राश्यादौ वा स्थिता भुक्तस्य नक्षत्रस्य राशेर्वा फलं ददति । तत्र भौमाद्याः पञ्च वक्रातिचारयोः प्राग्राशिफलं दिशन्ति दिनानि प्रयच्छन्तीत्याह वशिष्ठः "दशदिनं पञ्चदिनं त्रिपक्षमतिचारवक्रयोर्दद्यु । भौमाद्याः पश्चादिनं प्राग्राशिफलञ्च पञ्च मासांश्चेति" भौमाद्याः सगत्या यावता कालेन राशिं जहति ततोऽल्पेन न्यूनाधिकभावेन स चारः यदा चारसमये राशिं जहाति सोऽतिचार, वक्र प्रसिद्धमेव । अथ वामवेध शुभपक्षे चन्द्रबलस्योपयोगात्तदनुसरादिमाह । दुष्टोऽपि स्वजन्मराशेः सकाशादनिष्टस्थानस्थितोऽपि खेटो विपरीतवेधात् वामवेधाच्च शुभफलदाता । अयमर्थः येषु षडादशमरतीयैकादशेषु स्थित सूर्यः शुभफलदाता तद्भिन्नान्यष्टौ स्थानान्यशुभान्येव तत्र द्वादशचतुर्थनवमपञ्चमाख्येष्वनिष्टस्थानेषु स्थित सूर्यस्तदैवानिष्टफलदः स्याद्यदा प्राक् पठितैः क्रमेण षष्ठादिस्थानस्थितैः शनिवर्जितैः खेटैर्न विद्ध यदा तु विद्धस्तदा शुभफलदोऽपि षष्ठादिस्थाने शुभदो नैव स्यात् । अन्येषु स्थानेषु प्रथमद्वितीयसप्ताष्टमेषु स्थितः सूर्योऽनिष्टफलद एव । एवं चन्द्रबुधयो मध्येव विद्धस्थानानीति क्रमवेधवामवेधौ स्याताम् । भौमस्य तु भौमस्येव शुभानीतराण्यशुभान्येव तत्र नवपञ्चमद्वादशस्थानस्थितभौमस्याशुभस्य क्रमेण षष्ठैकादशतृतीयस्थानस्थैर्ग्रहैर्वामवेधेन शुभत्वमेव । अन्येष्वशुभस्थानस्थितोऽशुभदश्च भौमः । एवं शनिराहुकेतवोऽप्येवा शुरेवमेवेति । तत्र तु प्रथमषष्ठस्थानस्थो गुरुरशुभ एव । शुक्रस्य तु नवस्थानानां शुभत्वात्तद्व्यतिरेकाणि त्रीणि षष्ठसप्तमदशमस्थानान्यशुभानि तान्यपि क्रमेण द्वादशद्वितीयचतुर्थस्थानस्थग्रहवामवेधेन शुभत्वमेव । अन्येषां तूत्तरपठितत्वात् स्थानानां शुभत्वादेव न वामवेधविचारार्हत्वमिति परिष्कृतोऽयं यदाह काश्यप "अपि विद्धो ग्रहः क्वचिद्ददाति शुभं फलम् । वामवेधविधानेन त्वशुभोऽपि शुभप्रदः । अतस्माद्द्विविधं शुभ विचार्यैव फलं वदेत्"इति । वशिष्ठोऽपि "वधसमन्वित खचराणां व्यतिगत्यशुभफल विशिष्टम् । अन्यत्र वेधविषमादपि शुभाख्ये शुभप्रदाः सततमिति" अत्रयवेधो वामवेध । द्विकोण इति । सिते शुक्रपक्षेऽसचन्द्रो द्विकोणे द्वितीयनवमपञ्चमस्थानेषु स्थितः शुभद अन्यापि क्रमेण षष्ठाष्टमचतुर्थस्थानस्थितैर्बुधवर्जितैर्ग्रहैर्नाविद्ध इत्यपि ध्येयं उक्तञ्च नारदेन "शुक्रपक्षे शुभश्चन्द्रो द्वितीयनवपञ्चगः । रिपुमृत्युचतुःस्थैर्न विद्धो वि गगनेचरैरिति" यदि विध्यते तदाऽशुभफलद एव (२) अथ द्विविधवेधे मतद्वयमुपन्यस्याह सजन्मेति । इह द्विविधवेधविधानस्ये नारदादयः । स्वजन्मराशेः सकाशाद्द्विविधं वेध क्रामिकं वामिकं चाहुः । तथा चोभयमपि नारदेन जल्पत इत्युक्तम् । अथ कश्यपादिमतमुच्यते । स पुनर्द्विविधोऽपि वेधाश्च शार्थित राशितोज्ञेयः यथा सूर्यो जन्मराशेः सकाशात् षष्ठस्थित शुभः स सूर्यं स्वाक्रान्तराशितो द्वादशस्थानस्थितैः शनिवर्जितैर्ग्रहैर्न विद्धः तथा सूर्यो जन्मराशिद्वादशस्थोऽपि नेष्टः स सूर्यं स्वाक्रान्तराशिषष्ठस्थिते शनिवर्जितैर्ग्रहैर्विद्धस्तदा शुभफलद इत्यर्थः । अथैतस्यैव द्विविधवेधस्य देशविशेषविषयत्वमुच्यते । हिमाद्रिविन्ध्ययोर्मध्ये पर्वतौ मध्ये शशिशेषावस्थिता प्रसिद्धौ तयोरन्तरालवर्तिन्येव देशे स द्विविधोऽपि वेधोऽन्वेयः न सर्वदेशेषु हिमाद्रिविन्ध्यान्तरालवहिर्भूतसर्वदेशेषु द्विविधोऽपि वेधदोषो नास्तीति कश्यपस्य मुनेरभिप्रायम् । जन्मनक्षत्रादौ स्थानभेदे पञ्चफलमाह जन्मार्क इत्यादि । "यस्य नक्षत्रगतौ राहुर्यसते चन्द्रभास्करौ । तज्जातानां भवेत्पीडा ये नराः शान्तिवर्जिताः ।" भार्गवीये विशेषोऽपि "यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते । राज्यभङ्गं सुहृन्नाशं मरणं चात्र निर्दिशेदिति" राज्यस्य नक्षत्रे अभिषेकनक्षत्रे यदा

कदाचिद्राहुभुज्यमाननक्षत्रस्योपरागनक्षत्रत्वेनैकमेव तदा-य सन्दिग्धफलनिर्देशः यदा तु नक्षत्रभेदस्तदोपरज्यमाननक्षत्रेऽप्येव फलनिर्देश एव राशिभेदेऽप्युपरज्यमानराशिभेदेष्वप्येवम् । यतोऽस्मन्मते राहोर्दिग्देशकालावरणादिभेदात् ग्रहणत्वमेव नास्ति । तदुक्तं सिद्धान्तशिरोमणौ "दिग्देशकालावरणादिभेदान्न च्छादको राहुरिति ब्रुवन्ति"। एतदुपपत्तिर्भास्करेण स्वपदौरेव निरूपिता विश्वरूपेण तोडरानन्दे राहुचारविचारे प्रपञ्चिता परन्तु राहुसाहित्यं विना ग्रहणानयनस्य शरस्थितिमाश्रित्य स्वच्छानयनविशिष्टत्वाभ्युपकरत्वादिति साहित्यविपर्ययेण राहोरुपरक्तत्वमुच्यते। अत एवोक्तं वराहेण "तस्मिन् काले सान्निध्यमस्य तेनोपचर्यते राहुः । याम्योत्तरा शशिगतिर्गणितेऽप्युपचर्यते तेनेति"५ । अथ जन्मादिराशिफलमुच्यते जनिभमिति । पञ्चम्यास्तसिल् जन्मराशेरारभ्य द्वादशसु राशिषु ग्रहणे सति क्रमादनुक्रमेण घातादिफलं भवति यथा जन्मराशौ ग्रहणे सति घातः शरीरपीडा, द्वितीयराशौ सति द्रव्यनाशः, तृतीयराशौ श्रीर्लक्ष्मीः, चतुर्थराशौ शरीरपीडा, पञ्चमराशौ चिन्ता पुत्रादीनां, षष्ठे राशौ सौख्यं, सप्तमराशौ कलत्रदौस्थ्यं स्त्रीमरणं, अष्टमराशौ मृत्युर्मरणं, नवमराशौ माननाशः, दशमराशौ सुखम्, एकादशराशौ लाभः, द्वादशराशौ मृत्युः अत्र स्तन इति केचित् द्रव्यस्वेत्यपरे, इदं च फलं षण्मासपर्यन्तमनुक्तमपि ध्येयं तदुत्तरं हि ग्रहणान्तरसम्भवनात् यथोक्तं दैवज्ञमनोहरे "घातं हानिमथ श्रियं जननिभाद्दुःखं च चिन्तां क्रमात् सौख्यं दारवियोजनं च कुरुते व्याधिं च मानक्षयम् । सिद्धिं लाभमपायमर्कशशिनो नक्षत्रमध्ये ग्रह इति" कश्चित्तु "स्थानान्त्र यं शुभमध्यमाधमा" इत्युक्तम् । दैवज्ञमनोहरे "पापाच्चतीयोऽष्टमगश्चतुर्थस्तथायगस्त्र शुभदः सराशिः । नवांशधीसप्तमगश्च विद्धि पूज्यो द्विषट्को दशमाद्यगश्च" इति अत्र पाश्चे पापराशितोगणनोक्ता "त्रिषड्दशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः । द्विसप्तनन्देषु च मध्यमं स्याच्छेषेष्वनिष्टं मुनयो वदन्तीति" अत्राप्यपेक्षायां स्वजन्मराशेरित्याध्याहार्यमेव । अथाशुभसूचकग्रहणप्रतीकारमाह तदशुभेति तत्र सूर्यचन्द्रयोर्ग्रहणस्य सम्बन्धि यदशुभं दुष्टफलं तस्य ध्वस्त्यै नाशाय जप स्वर्णगो-

दानं जपो गायत्र्यादीनां मन्त्राणां स्वर्णं प्रसिद्धं गौः प्रसिद्धा भूमिर्वा उपलक्षणत्वादन्येषां रूप्यादीनां यथा शक्त्या दानं कार्यमिति शेषः उक्तं च दैवज्ञमनोहरे "सुवर्णनिर्मितं नागं सतिलं ताम्रभाजनम् । सदक्षिणं सवस्त्रं च श्रोत्रियाय निवेदयेत् । सौवर्णं राजतं वापि बिम्बं कृत्वा स्वशक्तितः । भवेदुपगतक्लेश छिद्रे विधाय कल्पयेत् । दानमन्त्रः । तमोमय ! महाभीम ! सोमसूर्यविमर्दन ! । हेमनाग ! प्रदानेन मम शान्तिप्रदो भव"। स्कन्दपुराणे गोदानं भूमिदानं च स्वर्णदानं विशेषतः । ग्रहणे क्लेशनाशाय दैवज्ञाय निवेदयेत्" । किञ्चात्र देशविशेषः पात्रविशेषो द्रव्यविशेषश्च नापेक्ष्य इत्याह व्यासः "सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः । सर्वं भूमिः कुरुक्षेत्रं ग्रहणे चन्द्रसूर्ययोरिति"। तत्र स्नानदानादिकं कस्मिन् काले कर्त्तव्यमित्याह "ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयत" इति तस्मिन् काले जपादिकमपि विधेयम् "सूर्येन्दुग्रहणं यावत्तावत् कुर्याज्जपादिकमिति" शिवरहस्योक्तेः आदित्यस्तोत्रपुराणमपि अत्र जन्मनक्षत्रजन्मराश्योर्ग्रहणे शान्तिमाह वशिष्ठः "यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः । द्रव्यमन्त्रविधानेन तस्य दोषापनुत्तये । उपरागस्नानविधिं सम्यग्वक्ष्ये समासतः । मण्डलं चतुरस्रं तु गोमयेन विलेपयेत् । तद्बहिरैशानदिग्भागे वर्णकैः समलङ्कृते । स्थापयेच्चतुरः कुम्भांस्तत्र तान् सागरात्मकान् । सर्ववेदात्मकान् कृत्वा सर्वतीर्थात्मकान् शुभान् । पञ्चधान्यरसायुक्तसर्वौषधिसमन्वितान् । मृत्तिकाहेमरत्नेन दग्धगुग्गुलचन्दनैः । पञ्चगव्याक्षतैर्जलिस्फटिकैः सर्वपावनैः" । इत्युपक्रमे "तिलहोमं व्याहृतिभिः सहस्रमष्टसंयुतम् । एवं कृत्वा प्रयत्नेन स्नानकर्म समाचरेत् । आमन्त्र्य नवभिर्मन्त्रैः कुम्भान् रुकलसपूर्वकान् । एतानेव ततो मन्त्रान् वर्णयेच्चैव संलिखेत् । कट्ठः शिरसि तु बद्ध्वा वार्त्तिकैर्दमन्त्रकैः । समन्विते कुम्भजलैः स्नाप्य नीराजयेत्ततः । दध्याज्यमध्ये विमेक्ष्य शुक्लमाल्याम्बरः शुचिः । अग्निमुखो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः । योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः । सहस्रनयनश्चन्द्रग्रहपीडां व्यपोहतु । यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः । यमश्चन्द्रोपरागस्य ग्रहपीडां व्यपोहतु । रक्षोगणाधिप

ज्वालात् प्रलयानलसन्निभः । चन्द्रस्य पार्श्वे कायस्य रक्षःपीडां व्यपोहतु ३ । नागपाशधरो देवः सदा मकरवाहनः । वरुणोऽम्बुपतिश्चान्द्रग्रहपीडां व्यपोहतु ४ । प्राणरूपो हि लोकानां वायुः कृष्णमृगप्रियः । वायुश्चन्द्रोपरागस्थ पीडनं मे व्यपोहतु ५ । योऽसौ निधिपतिर्देव खड्गशूलगदाधरः । चन्द्रोपरागकलुषां पीडां चापि व्यपोहतु ६ । योऽसाविन्दुधरो रुद्र पिनाकी वृषवाहनः । चन्द्रोपरागपीडां स नाशयेत् सङ्कटं तथा । ७ त्रैलोक्ये यानि भूतानि चराणि स्थावराणि च । ब्रह्मविष्ण्वर्कयुक्तानि तानि पापं दहन्तु मे ८ । आवाहनोक्षेपनोक्तमन्त्रैरेव च मन्त्रकाः । अर्चयित्वा पितॄन् देवान् गोभूस्वर्णाम्बरादिभिः । अनेन विधिना यस्तु ग्रहस्नानं समाचरेत् । तदास्य ग्रहपीडा स्यान्न बन्धुधनक्षयः । परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभम् । सूर्यग्रहेऽप्येवमेव सूर्यनाम्ना विधीयते ।" अत्र यद्यपि जन्मराशौ ग्रहणस्य दृष्टत्वम् तत्र च दोषात्तस्मात् प्रतिमादानयागन्त्रकर्त्तव्यता प्रतीयते तथापि प्राग्विलिखितवचनेषु विरुद्धफलाभिधाना देवास्य जन्मराशावपि ग्रहणे शान्तिर्विधेया । उभयाभिधानेन शान्त्यभिधानात् उक्तं च मत्स्यपुराणे "यस्य राशिं समासाद्य भवेद्ग्रहणसम्भवः । तस्य शान्तिं प्रवक्ष्यामि मन्त्रौषधिविधानतः" । इति अतो जन्मक्ष जन्मराशिव्यतिरिक्ते विरुद्धे ग्रहणे शान्तिर्न विधेया वचनाभावात् किन्तु स्वविभवरूप दानादिरूप विधेयमिति तात्पर्यं । सूर्यग्रहेऽप्येवमेवेति योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मत । सहस्रनयनः सूर्यग्रहपीडां व्यपोहतु" इत्युक्तादिना चन्द्रपदस्थाने सूर्यपदं पूर्वमन्त्रश्लोकेषु प्रयोज्यमित्यर्थः । अथेदं ग्रहण स्थानविशेषेणारिष्टजनकमित्युक्तं तत्र ग्रहणं न दृश्यमित्याह सो मोऽस्यमिति उक्तं च "जन्मर्क्षाष्टरिष्फाङ्कदयमस्थे निशाकरे । दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि चेति" जन्मर्क्षं जन्मनक्षत्र निधनं वधतारा सप्तमी । अत्र दृष्ट इति पदश्रवणात् दुष्टस्थानावस्थितो राहुर्दृष्टः सन्नरिष्टजनकः यदा तु मेघाद्यावरणेन गृहमध्यावस्थित्या वा चक्षुष्मतोऽपि पुंसो राहुदर्शनाभावस्तदाऽरिष्टं नास्ति एव चान्धस्य तत्र कुत्राप्यवस्थितस्य स्पर्शाद्बहिर्गन्तुमशक्नुवतो ज्वरातुरादेः सर्वारिष्ट स्नानादि च नास्ति इति तेषामाशयः । अत्रेदं चिन्त्यते किमिदं ग्रहण दर्शनेन स्नानाद्यधिकारसम्पादकम् ? उत मेघाद्यावरणे नादृष्टमपि ? कुतः सन्देहः ? उभयथा वचनोपलब्धेः यथा हि दृष्टविषयः "सर्वेषामेव वर्णानां सूतकं राहुदर्शने । सचेलं तु भवेत् स्नानं सूतकान्नं विवर्जयेदिति" । षट्त्रिंशन्मते "सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेदिति" । शृत पक्व शृत पाके" पा० इति निपातनात् यद्यपि तस्मिन् सूत्रे "क्षीरहविषोरेवेति" महाभाष्यकृतोक्तं तथापि महाकविप्रयोगादन्यस्मिन्नपि द्रव्ये ओदनादौ पाकसामान्यात् वृत्तिः । विष्णुः "राहुदर्शनदत्तं हि आब्रह्माचन्द्रतारकमिति" । शातातप "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने" इति एवमादीनि वचांसि दर्शनपदघटितान्युपलभ्यन्ते अन्यथापि भविष्ये "ग्रहणे संक्रमे चापि न स्नायाद्यदि मानवः । सप्तजन्मानि कुष्ठी स्याद् दुःखभागी च जायते" इति विष्णुपुराणेऽपि "चन्द्रसूर्यग्रहे स्नायात् सूतके मृतकेऽपि च । अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दतीति" एवमादीनि दर्शनपदानाक्रान्तानि वचांस्युपलभ्यन्ते । तत्र दर्शनवादिन आहुः दर्शनपदानाक्रान्तेषु वचनेषु ग्रहणस्य निमित्तत्वं प्रतिपाद्यते । "ग्रहणे संक्रमे चापीति" निमित्तसप्तम्युपलम्भात् । ज्ञानमेव च ग्रहण स्नानदानादिकं प्रति निमित्तं भवति तज्ज्ञानापेक्षायां च राहुदर्शनपदोपेतवचनालोचनेन चाक्षुषज्ञानस्यैव निमित्तत्वं यतश्चाक्षुष एव ज्ञाने दर्शनशब्दस्य ज्योतिःशास्त्रीयज्ञाने तु लक्षणापत्तिः । एव इति मेघाच्छन्नग्रहणदिवसजातचन्द्रग्रहण रात्रिभवेषु सूर्यग्रहणेषु न स्नानदानाद्यधिकारः तस्माद्ग्रहणं दृष्टा स्नानदानादिकं विधेयमित्यर्थ सम्पन्नो भवति, नैतत्सहृदयहृदयङ्गम यतो वचनेषु राहुदर्शनग्रहणपदयोः समानार्थकता नास्ति कथम् "अप्रत्यक्षरूपाः कालस्य मूर्त्तयो भगणाश्रिताः । शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः ।" इति सूर्यसिद्धान्ते चन्द्रादिग्रहपातानामदृश्यतोक्ता पातो राहुश्च पर्यायः । उक्तञ्च तत्रैव "दक्षिणोत्तरयोरेवं पातो राहुः स्वरंहसा । विक्षिपत्येष विक्षेपचन्द्रादीनामपक्रमादिति" केशवार्केणाप्युक्तम् "पर्वान्तेषु तु राहुपातयोर्नामनी विदधुरेव तान्त्रिका" इति । अतो राहुदर्शनमेव गगनकुसुमायमानम् । ननु ग्रहणे सूर्यचन्द्रयोराच्छादको राहुर्दृश्यत एव अतएव "राहुग्रस्ते निशाकरे" इत्यादि पुराणोक्तिः साधीयसीति चेत्

"भानोर्भार्द्धे महीच्छाया तत्तुल्येऽर्कसमेऽपि वा । शशा- ङ्कपाते ग्रहणं कियद्भागाधिकोनके" इत्युपक्रम्य "छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत् । भूच्छायां प्राङ्मुखश्- चन्द्रो विशत्यस्य भवेदसाविति" । अतो भूच्छायाऽस्य चन्द्रस्य छादको भवेदित्यर्थः इति सूर्य्यसिद्धान्ते स्पष्ट एव छाद्यच्छादकभावोऽभिहितः पुराणेन सह विरोध परिहारस्तु "दिग्देशकालावरणादिभेदान्न छादको राहु- रिति ब्रुवन्ति । यन्मायिनः केवलगोलविद्यास्तत्संहिता- वेदपुराणवाक्यमिति" पूर्व्वपक्षं विधाय "राहुः कुभामण्डल- गः शशाङ्कं शशाङ्कगश्छादयतीनबिम्बम् । तमोमयः शम्भुवरप्रदानात् सर्व्वागमानामविरुद्धमेतदिति" भास्क- राचार्य्यैरेवोक्तः "तस्मिन् काले सान्निध्यमस्य तेनोपचर्य्यते राहुरिति" वराहेण चोक्तम् तस्माद्राहुदर्शनं तु नास्त्येव भवन्ति दर्शनं चाक्षुषमेवोच्यते नान्यत् एवं सति राहो- र्दर्शनं राहुदर्शनमिति तत्पुरुषोऽनुपपन्नः । यदि तु समीपलक्षणदर्शनमङ्गीकृत्य तदर्थः क्रियते । तदापि यस्य स्वरूपमेवानुपपन्नं तस्य समीपे तु सुतरामिति वाचैरभ्येतदुच्यते । तस्माद्दर्शनशब्देनोपरागो ल- क्ष्यते राहुदर्शनं राहूपरागस्तस्मिन् राहुदर्शने इति । अयमर्थः । राहुर्नाम पातः तस्य सम्बन्धेन दर्शनमुपराग इति । न च राहुरेव लक्षणयोपरागपरस्तस्य दर्शनमिति पूर्व्वपक्षाभिमतार्थसिद्धिरिति वाच्यं लक्षणा त्वर्थान्तरान्तरा- लाभे सति वक्तव्या । "अत्यन्तादर्शनं राहोस्तथा चात्यन्त- दर्शने । प्रजापीडा विनिर्द्दिष्टा व्याधिदुर्भिक्षतस्करैरिति" विष्णुधर्म्मोत्तरादिवाक्येषु पदान्तरार्थविधानाद्राहुदर्शने- नोपरागो लक्ष्यते । इदं च राहोः पातनामकग्रहस्य प्रति छेदान्तरमसीत्यतो राहुदर्शनग्रहणयोः समानार्थ- कता नास्तीत्येव सिद्धमिति । प्रागुक्तानां सर्व्ववचसां ग्रहणे स्नानादिस्त्वेव वाक्यार्थं फलितो भवति । किन्तु ग्र- हणे चाक्षुषमेव दर्शनं निमित्तं विवक्षितं चेत्तदा "नेक्षेतोद्य- न्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्ये नभसो गतम्" इत्युक्तोपरक्तसूर्य्यदर्शननिषेधो नोप- पद्येत नन्वयं निषेधः सूर्य्योपरागदर्शनं एव न चन्द्रोप- राग इति चेन्न "नाश्नीयाद्राहुतारकाम्" इत्यत्र राहु- नामग्रहणादुभयविचन्द्रोपरागद्वयविषयकोपसंहारस्य युक्त- त्वात् अथाग्रे रजस्वलापतितादर्शनस्य तु दोषा- धिक्यसूचनार्थं यथा श्राद्धे कुशीनामां ब्राह्मणानामा- मन्त्रणे उक्ते अन्येषां निषिद्धत्वादेव कुण्डगोलकब्राह्मणा

नामनामग्रहणे सिद्धे पुनर्निषेधो दोषाधिक्यार्थमेव । "भा- स्करालोकनाश्लीलपरिवादादि वर्जयेदिति" इति- वाक्यस्य तूद्यदस्तगास्यादित्यदर्शनपरतया व्याख्यानस्य युक्तत्वात् । केचित्तु दर्शनादर्शनविषयकयोर्विध्योस्तुल्य- बलत्वात्कदाचित्स्नायादिति व्याचख्युः तच्चिन्त्यं "जन्म- सप्ताष्टरिःफाङ्कत्यादिना सामान्यतो निषिद्धस्योपरक्त- दर्शनस्य पुनर्निषेधात् प्रागुक्तदिशा राहुदर्शनपदस्य राहूपरागलक्षकत्वेन तुल्यबलत्वाभावाच्च तस्मादुपर- क्तयोः सूर्य्यचन्द्रमसोर्यस्य कस्यापि दर्शननिषेधसत्त्वात् ग्रहणे स्नानदानाद्युक्तसज्ज्ञानं च ज्योतिःशास्त्रैक- देशगणितग्रन्थेभ्यो बुद्ध्वा तस्मिन् काले स्नानदानादि विधेयमिति सिद्धान्तः । अतएव मेघाद्याच्छन्नेऽप्युपरागे स्नानादिकं विधेयमेव ननु गणितग्रन्थाधीनमुपरागज्ञान- मेव चेत् स्नानादिप्रयोजकं तदा रात्रौ सूर्य्यग्रहणस्य जायमानत्वात्तदापि स्नानादिकं स्यात् । सत्यमेवैतत् वचनात्तथा न क्रियते । तदुक्तं निगमे "सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहो यदि । तत्र स्नानं न कुर्व्वीत दद्याद्दानं न च क्वचिदिति" । अतएव तादृशे ग्रहणे दृष्टेऽपि दौष्ट्यं नास्तीत्यपि सूच्यते । न चैतदुभागे प्रतिषेधादित्यधिकरणेन पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्यादिवाक्यवन्नित्यानुवाद इति वाच्यं विधि- शेषत्वाभावात् यथा पृथिव्यामग्निश्चेतव्य इति न निषेध विधिरस्ति तत्र नान्तरिक्षे न दिवीति दृष्टान्तो निषेध विधेः शेषस्तथात्र सूर्य्यग्रहो यदा रात्राविति तद्वाक्यस्य विधेः शेष इति । किञ्चैवं ब्रुवतस्तव मतेऽनर्थकमेव वाक्य- स्यापत्तेरत्युक्तम् अतएवाह जाबालिः "संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः । चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचर" इति । ग्रस्तग्रासमनपर्य्यन्तं दर्शन- गोचरत्वात्तावान् कालः पुण्यकालो भवतीति कामधेनौ व्याचख्यौ तदुक्तं विश्वरूपनिर्णये "दिवा चन्द्रग्रहो रात्रौ सूर्य्यपर्व्व न पुण्यदम् । सन्धिस्थे पुण्यकृद्यैव यावद्दर्शन- गोचर" इति । अन्ये तु मेघावृते तदनावृते चोपरागे गणितागतस्थितिघटिकाः पुण्यकाल इत्याहुः । दर्शने त्वे- वविधे निर्णये भुजस्थादुपरिस्थितत्वमेव विवक्षितं तदाह वशिष्ठ स्वसिद्धान्ते "सूर्य्यस्यादर्शनं रात्रिर्दिनं तद्दर्शना- त्मकम् । भुजस्थादुपरि च स्थितोऽर्को दर्शनं स्मृतमिति" एवं इत्युपलक्षणं चन्द्रादिग्रहणानाम् । आकाशप- देश समन्तान्मण्डल इव यत्र भाति स प्रदेशो भुजचन्द्र-

वाच्य अतएव विष्णुधर्मोत्तरे "अहोरात्रं न भोक्तव्यं सूर्य्यचन्द्रग्रहो यदा। मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति।" पक्षान्तरे भृगुः "अस्तगौ ग्रस्तमन्तौ रवीन्दू प्राप्नुतो यदि। तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः" इत्यनयोर्वाक्ययोर्दर्शनोदयशब्दौ भुक्तत्वोपरिस्थितत्वे प्रमाणकौ अन्यथा मेघाद्यावरणेन परदिनेऽपि दर्शनाभावे उपवासः प्रसज्येत तथा यत्र स्पर्शकाले ग्रहणं दृष्ट्वा स्नानं विहितं तत्रान्तरा मेघावरणात् सूर्य्यचन्द्रयोर्दर्शनाभावो दिवसद्वयं त्रयं वा स्यात्तत्राप्युपवासप्रसङ्गः। न च सर्वे शिष्टास्तथाऽऽचरन्ति। तथाहुर्गार्ग्यमप्युपेत्य शास्त्रीयज्ञानपरतैव व्याख्या कर्त्तव्या। तस्याश्च रत्यां पूर्वोक्तरीत्या च मेघानावृतेऽप्युपरागे तत्र दृष्टैव प्रशस्तचक्षुषा अन्धेन च गन्तुमशक्नुवद्भिर्द्वारैव स्नानदानादिकं विधेयमिति फलितोऽर्थः। अतएव भागवते रविग्रहे कुरुक्षेत्रे स्नानाद्यर्थं मिलितानां पाण्डवीयलोकानां मध्ये धृतराष्ट्रोऽपि परिगणित इति शिष्टाचारोऽप्यस्ति। एवञ्च सत्यरिष्टजनकत्वाभावेऽपि ग्रहणदर्शननिषेधः किं पुनररिष्टजनकत्वे। तस्माज्जन्मसप्ताष्टेत्यादिपद्यं निर्मूलत्वाद्युक्तायुक्तत्वाच्चोपेक्ष्यं प्रत्यक्षोपलभ्यमानपवित्रमत्स्यपुराणादिवाक्येषु दर्शनपदाभावाच्च। अतएव मूले परे इति पदं प्रयुक्तम्। शान्तिस्तु दर्शनाभावेऽपि विधातुमुचिता यतोऽरिष्टयोगानां स्वरूपसतामेवारिष्टजनकत्वमस्ति अन्यथा ग्रहवेधस्योत्पातादिसूचितारिष्टनिवृत्तिहेतुः शान्तिर्दर्शनाभावे न विधीयेत इत्यलमतिप्रसक्तानुप्रसक्तेन (६)। पी धा। अधिकमुपरागशब्दे १२८५ पृ० द्रष्टव्यम्। "अथ चन्द्रबले विशेषमनुष्टुभाह पापान्त इति शुभोऽपि शुभफलदोऽपि चन्द्रः पापान्तः पापयुग् द्यूने पापद्वयमध्यवर्ती पापग्रहयुक्तः पापद्यूने सप्तमस्थाने वर्त्तमानश्चेत् स्यात्तदा असन् अशुभ एव यदात्वशुभोऽप्यशुभफलदातापि चन्द्रः शुभांशे सौम्यग्रहनवांशे स्यादथवाऽधिमित्रस्य नवांशे स्यात्तथा गुरुणा बृहस्पतिना दृष्टः सन् शुभफलदाता भवेत् यदाह राजमार्त्तण्डः "पापग्रहेण संयुक्तः पापकामित्रवर्गस्थितः। पापद्वयमध्यगतः शुभोऽप्यशुभदः शशी। अनिष्टस्थानसंस्थोऽपि भवेच्छुभकरः शशी। सौम्यभागाधिमित्रांशे गुरुणा वापि वीक्षितः" इति (७)। अथ चन्द्रबलस्य विधानान्तरमनुष्टुभाह। सितेति सितादौ शुक्लपक्षप्रतिपदि समीचीने चन्द्रे सति सम्पूर्णः शुक्लपक्षः शुभः असितादौ कृष्णपक्षप्रतिपदि दुष्टे चन्द्रे सति सम्पूर्णः कृष्णपक्षः शुभः व्यत्यासे च पूर्वोक्तादर्थाद्वैपरीत्ये द्वावपि पक्षावनिष्टौ यदा शुक्लपक्षप्रतिपदि चन्द्रो दुष्टश्चेत्तदा सकलशुक्लपक्षोऽनिष्टः। यदा कृष्णपक्षप्रतिपदि चन्द्रः शुभश्चेत्तदा सम्पूर्णः कृष्णपक्षोऽनिष्टः इति उक्तञ्च रत्नमालायां "वलक्षपक्षादिगते हिमांशौ शुभे शुभं पक्षमुदाहरन्ति। सितेतरादावशुभे च पक्षाविन्दावनिष्टौ भवतोऽन्यथा तौ" कश्यपोऽपि "शुक्लादीन्दुः शुभो यस्य तत्पक्षस्तस्य शोभनः। कृष्णादीन्दौ त्वशुभदे शुभस्तद्व्यत्ययेऽन्यथेति" इदमेतावदवगन्तव्यं चन्द्रबले तु सङ्कटे निराकृत्यात्राश्रयणकर्त्तव्ये तात्कालिचन्द्रबलाभावे चाद्यनान्ययेत्यर्थः (८)। अथ ग्रहाणां दौष्ट्यपरिहारपूर्वकं तुष्टिसम्पादनाय नवरत्नसमुदायधारणं शालिन्याह वज्रं शुक्रे इति। अत्रैका सुवर्णमुद्रिका कृत्वा तत्र दशभागे पद्माकारे नवधा विभक्ते प्रागादिक्रमेण नवरत्नानि दृढं निधेयानि तत्र प्रागिति पद्मस्यान्तमध्यम पद्मभौ चेयस्यमलोपे अत प्रागादिदिक्षु इत्ययमर्थो जातः तत्र शुक्रप्रीतये पूर्वस्यां दिशि वज्रं हीरकं निधेयम्। एवं चन्द्रप्रीत्यर्थं शोभनमुक्ताफलमाग्नेय्यां, भौमप्रीत्यर्थं प्रवालं दक्षिणस्याम् अगौ राहुप्रीत्यर्थं गोमेदं नैरृत्याम्। आर्कौ शनिप्रीतये शोभननीलं पश्चिमायाम्। केतुप्रीतये वैदूर्यं वायव्याम्। गुरुप्रीतये पुष्पकं पुष्परागम् उत्तरस्याम्। बुधप्रीतये पाचिं गारुत्मतम् ईशान्यां सूर्य्यप्रीतये माणिक्यं मध्यमकोष्ठे इति (९)।

अथ सति द्रव्यसामर्थ्ये नवरत्नसमुदायधारणस्य शक्यत्वात्तदुक्तं दानीमसति द्रव्यसामर्थ्ये यद्ग्रहकृतं दौष्ट्यं तद्ग्रहरत्नधारणमिन्द्रवज्रयाह माणिक्येति। सूर्य्यप्रीत्यर्थं माणिक्यं धार्य्यम्। एवं चन्द्रस्य मुक्ताफलम्। भौमस्य विद्रुमम्। बुधस्य गारुत्मतं गारुडं पाचिः। गुरोः पुष्पकं पुष्परागः। शुक्रस्य वज्रम्। शनेर्नीलं राहोर्गोमेदं (वहु निया इति) काश्यकुलभावाच्च केतोर्वैदूर्यमित्यर्कतोऽर्कादीनां ग्रहाणां रत्नानि धार्य्याणि स्युः। तत्र यद्ग्रहकृतं दौष्ट्यं तस्य ग्रहस्य तुष्ट्यै तद्रत्नं धार्य्यमित्यर्थः यदाह कश्यपः "सूर्य्यादीनां च सन्तुष्ट्यै माणिक्यं मौक्तिकं तथा। सुविद्रुमं मरकतं पुष्परागं च वज्रकम्। नीलगोमेदवैदूर्यं धार्यं खखेटकक्रमात्"। अथोक्तस्य सर्वे सुवर्णमित्यधिमश्लोकेन सम्बन्धः (१०) अथ महामूल्यरत्नधारणे यस्य सामर्थ्याभावस्तदर्थमस्य

गुडञ्च लवणं सतिलं काञ्चनं क्रमादिति” अत्र सतिल मिति विशेषणं काञ्चनपदस्य न लवणपदस्य तेन वध-तारायां सतिलं काञ्चनं देयम्। उक्तञ्च दीपिकायाम् “प्रत्यरौ लवणन्दद्याच्छाकन्दद्यात्त्रिजन्मसु। विपत्तारे गुडन्दद्याद्विधने तिलकाञ्चनमिति” अथ द्वितीयः परि-हार उच्यते। नक्षत्रादिमपर्य्याये प्रथमावृत्तौ विपत्प्रत्य रिर्नैधन्यश्च तृतीयापञ्चमीसप्तम्यस्तारा सर्वा अपि सामान्यत षष्टिघटिकात्मिका अपि न शुभदाः स्युः अथ द्वितीये पर्य्याये द्वितीयावृत्तौ विपत्प्रत्यरिनैधनानामादिमान्त्यतृतीयकाः अंशा न शुभदाः विपत्तारायां प्रथमविंशतिघटिकास्त्याज्याः। इतरा चत्वारिंश-च्छुभा। प्रत्यरितारायां मध्यमा विंशतिघटिकास्त्या ज्यास्तदुभयतो विंशतिर्विंशतिर्घटिकाः शुभा। वध-तारायामन्तिमा विंशतिघटिकास्त्याज्या आद्याश्चत्वारिंश च्छुभा इति नवीना व्याकर्षते। कोष्ठांश्च शब्देन नक्षत्रचतुर्थांशमाह। तथाच आदिमान्त्यतृती-यकाश्च क्रमेण निषिद्धा इतरे शुभाः। अथ तृतीये पर्य्याये तृतीयावृत्तौ विपत्प्रत्यरिनैधनाख्याः सर्वे षष्टिघटिकात्मका अपि शुभाः शोभनफलदा मताः। तथा च जगन्मोहने गुरुरित्युक्त्वा पठितं “पर्य्याये प्रथमे वर्ज्या विपत्प्रत्यरिनैधनाः। द्वितीये त्वंशका वर्ज्यास्तृतीये सर्वशः शुभाः” द्वितीये पर्य्याये अंशकाना-ह स एव। “आद्यांशो विपदि त्याज्यः प्रत्यरौ चरमोऽशुभः। वधे त्याज्यस्तृतीयोऽंश शेषा अंशास्तु शोभना” इति। अंशो नक्षत्रचतुर्थांश उच्यते। किमत्र प्रमाणमिति चेत् उच्यते। “जन्मर्क्षाद्दशमर्क्षं स्यात् सांघातर्क्षन्तु षोडशम्। अष्टादश सामुदायं त्रयोविंशं विनाशनम्। मानसं पञ्चविंशर्क्षं नाचरेच्छुभमेषु तु” इति नारदोक्तवैनाशि-काख्यत्रयोविंशस्य दुष्टत्वम्। तदपवादमाह स एव “वैनाशिकाख्ये नक्षत्रे षष्टांशीत्यंशकं विना। शेषांशा शुभदा प्रोक्ता जन्मनीन्दुगतांशकाः।” इति। अत्र वैनाशिक प्रत्यरिवधनक्षत्रस्य चरमांशस्यानिष्टता प्राप्ता षष्टांशीत्यं शकं विनेत्यनेन व्याख्यते इत्यत एकत्र दृष्टः शास्त्रार्थोऽन्य-त्रापि विनियुज्यत इति न्यायादत्रापि नैव व्याख्येति न नवीनमतञ्च प्रायोऽप्रमाणकत्वात् १२। अथ चन्द्रावस्था-वर्ज्जाति तल्लक्षणोपायमप्याह षष्टिघ्नमिति। अत्र चन्द्रस्य राशौ राशौ द्वादश अवस्थाः सन्ति यदाह नारदः “चन्द्रस्य द्वादशावस्था राशौ राशौ यथा-क्रमात्। यात्रोद्वाहादिके कार्य्ये उक्ता तुल्यफलप्रदा” तत्राश्विनीमारभ्य गतभानि षष्ट्या गुणयानि वर्त्तमान नक्षत्रभुक्तघटीयुक्तानि कार्य्याणि। तानि पुनर्युगैर्वह्नि-राहतानि शराब्धि ४५ हृत् पञ्चचत्वारिंशता भाज्यानि। यल्लब्धमागत गतावस्थास्ताः शेषे वर्त्तमानावस्था तत्र लब्धाङ्कस्यापि द्वादशाधिक्ये द्वादशभिर्भागे प्रवासा-द्यवस्था चन्द्रस्य गता स्युः। ता अवस्था मेषराशेः पुष्य प्रवासादिकास्ता वृषराशिस्थे चन्द्रे नष्टादिकाः स्युः। एवं मिथुनादिदशराशिषु मृतादिकाद्यव-स्थाः क्रमेण भवन्तीत्यर्थः। यदाह नारदः “षष्टिघ्नं चन्द्रनक्षत्रं तत्कालघटिकान्वितम्। वेदघ्नमिषु ४५ वेदाप्त-मवस्था भानु१२भाजिता।” इति। अत्रोपपत्तिः एकैक-स्मिन् राशौ द्वादशद्वादशावस्थाः सन्ति, सामान्यतो न-क्षत्रभोग षष्टिघटिकात्मक इत्येवं सति राशिभोग-घटिकाः पञ्चाशदधिकशत भवन्ति। तत्र त्रैरा-शिक यद्येताभिः१५०घटीभिर्द्वादशावस्था लभ्यन्ते तदे-ष्टघटीभिः किमिति तत्रैकः कल्प्यः गुणकाको विकारामापन्नो द्वादशानामपवर्त्ते १२५भाजको जातः१२ अनयोर्गुणकभाजकयोस्त्रिभिरपवर्त्ते गुणकश्च-त्वार ४ भाजक पञ्चचत्वारिंशत् ४५ तत्कालघ-टीयोगस्तु न्यायप्राप्त एव। तथा द्वादशभागोऽपि न-ष्टाधिकस्य निष्प्रयोजनत्वात् अस्तेदमवधार्यम् यद्यपि नक्षत्राणां घटीन्यूनाधिकभावः सम्भवति तथापि षष्टिघटिकात्मकेन व्यवहारः कार्य्यः। विद्यमानन-क्षत्र भुक्तं तु स्वभोग ज्ञात्वा षष्टिघटिकात्मकं कृत्वा तत्र योज्यम्। यथा यदि स्वभोगेन षष्टिघटिका लभ्यन्ते तदेष्टघटीभिः किमिति त्रैराशिकेनेष्टघटीनां षष्टि-गुणत्वात् नक्षत्रभोगो भाजक इति १४। अथ द्वाद-शावस्थानामानि सफलान्युपजात्याह प्रवासना-शाविति। स्पष्टार्थमिदं पद्यम्। उक्तञ्च कश्यपेन “प्रवासनष्टा च मृता जया हास्या रतिर्मुदा। सुप्ता भुक्ता ज्वरा कम्पा सुस्थितिर्नामसन्निभा” इति। मुदा। “षिद्भिदादिभ्योऽङ्”पा॰अङ् ततटाप् १५।अथ पद्यार्था वैफल्यपरिहारार्थं सौषधजलस्नानं दक्षिणाव प्राह्न व-शिष्ठोक्तेनाह। लाजाकुष्ठमिति। लाजा भृष्टयावकाः इति केचित् वस्तुतस्तु श्रोषधीवाहचर्य्याल्लाजापदेन लज्जावती गृह्यते। कुष्ठं प्रसिद्धम्। वचा “वरि याग इति” कान्यकुब्जभाषायामाह। प्रियङ्गुः

रालं । वचो मुरा, सिद्धार्थाः सर्षपाः (शिरषा) इति महाराष्ट्राः (सरिषा) इति कान्यकुब्जाः । निशे हरिद्राद्वय दारु देवदारुः पुङ्खा शरपुङ्खा । लोध्रं प्रसिद्धं एतैरौषधैर्युतानि गङ्गादिजलानि तैः कृत्वा स्नानं दुष्टग्रहकृतपीडानाशकं स्यात् । उक्तञ्च दीपिकायाम् "सिद्धार्थलोध्ररजनीद्वयकुष्ठधान्यं स्नानकं सफलिनी सवचा च मांसी । स्नानं कुरु ग्रहगणप्रशमाय नित्यं सर्वे रविप्रमुखाः सुखदीभवन्ति ।" दैवज्ञमनोहरेऽपि "सप्रियङ्गुरजनीद्वयमांसी कुष्ठलाजसितसर्षपखण्डैः । वारिभिः सकृतकैः सलोध्रैः स्नानमत्ति निखिलग्रहपीडामिति" वारिभिस्तीर्थोदकैः रत्नमालायां तु प्रत्येकं ग्रहाणामौषधभेदस्नानमुक्तं यथा ।

रवे—"मनःशिलैलासुरदारुकुङ्कुमैरुशीरयष्टीमधुपद्मकान्वितैः । सताम्रपुष्पैर्विषमे स्थिते रवौ शुभावहं स्नानमुदाहृतं बुधैः" ।

चन्द्रस्य—"पञ्चगव्यगजदानविमिश्रैः शङ्खशुक्तिकुमुदस्फटिकैश्च । शीतरश्मिकृतवैकृतहन्तृ स्नानमेतदुदितं नृपतीनाम्" ।

कुजस्य—"बिल्वचन्दनबलारुणपुष्पैर्हिङ्गुकल्कफलिनीबकुलैश्च । स्नानमङ्गिरिह मांसियुताभिर्भौमदोषविनिवारणमाहुः" ।

बुधस्य—"गोमयाक्षतफलैः ससरोजैः क्षौद्रशुक्तिमधुमूलहेमभिः । स्नानमुक्तमिदमत्र भूभृतां बोधनाशुभविनाशन बुधे" ।

गुरोः—"मालतीकुसुमयुक्तसर्षपैः पल्लवैश्च मदयन्तिकोद्भवैः । क्षिप्रमम्बु मधुकेन च स्फुटं वैकृतं गुरुकृतं विनिघ्नन्ति" ।

शुक्रस्य—"एलया च शिलया समन्वितैर्वारिभिः समूलकुङ्कुमैः । स्नानतो भृगुसुतोपपादितं दुःखमेति विलयं न संशयः" ।

शनेः—"असिततिलाञ्जनलोध्रबलाभिः शतकुसुमाघनलाजयुताभिः । रवितनये कथितं विषमस्थे दुरितहृदाप्लवनं मुनिमुख्यैः" ।

राहुकेत्वोः—"लोध्रमभ्रतिलपत्रकमुस्ताहस्तिदानमृगनाभिपयोभिः । स्नानमार्त्तिमिह हन्ति राहोः साजमूत्रमिदमेव च केतोः" । राहुकथितद्रव्यमजमूत्रसहितं केत्वर्थं स्यात् । अतएवोक्तं दीपिकायाम् "प्रयोज्यमौषधस्नानं ग्रहविप्रसुरार्चनम् । ग्रहानुद्दिश्य होमो वा ग्रहाणां प्रीतिमिच्छता" तत्र ग्रहपूजाहोमौ वशिष्ठसंहितायां सङ्कृता पवस्येनोक्तौ तौ तत एवावगन्तव्यौ इत्यलमतिविस्तरेण । अथ रवेरिति । रविमारभ्य दक्षिणा उच्यन्ते । तत्र सूर्यप्रीत्यर्थं धेनुर्गौः । चन्द्रप्रीत्यर्थं कम्बु शङ्खः । कम्बु इति नपुंसकलिङ्गम् पृथक्पदम् "शङ्खः स्यात्कम्बुरस्त्रियाम्" इत्यमरोक्तेः । मङ्गलप्रीत्यर्थमरुण आरक्तो वृषः । बुधप्रीत्यर्थं कनकं सुवर्णम् । गुरुप्रीत्यर्थं पीताम्बरं तच्च यथाविभवं कार्पासं कौषजं च । शुक्रप्रीत्यर्थं श्वेतो घोटकः । शनिप्रीत्यर्थमसिता श्यामवर्णा गौः । राहुप्रीत्यर्थं महाऽसिर्लौहमयस्तु खड्गः । केतुप्रीत्यर्थमजः छागो दक्षिणेत्यर्थः । यदाह वशिष्ठः "धेनुं शङ्खं रक्तवृषं हेम पीताम्बरद्वयम् । श्वेताश्वं कृष्णधेनुञ्च कृष्णलोहमजं क्रमात् । स्वर्णेन वा समीकृत्य दातव्या दक्षिणा ततः । आचार्याय जापकेभ्यो ब्राह्मणेभ्योऽथ शक्तितः" इति । अत्र प्रत्येकं दानमन्त्रास्तत्रैवोक्ताः ग्रन्थभूयस्त्वभयान्न लिख्यन्ते । "एवं यः कुरुते सम्यक् ग्रहयज्ञं नृपोत्तमः । सर्वान् कामानवाप्नोति शुभस्थानफलं लभेत्" नृपोत्तम इत्युपलक्षणम् । तेन यः कश्चिदुपद्रुतोऽपि कुर्य्यात् तत्र च विभवानुरूपाणि ग्रहदानानि प्रोक्तानि कैश्चित् यथा ।

रवेः—"कौसुम्भवस्त्रं गुडहेमताम्रमाणिक्यगोधूमसुवर्णवत्सम् । सवत्सगोदानमतिप्रणीतं दुष्टाय सूर्याय मसूरिकाश्च" ।

चन्द्रस्य—"घृतकलश सितवस्त्रं दधिशङ्खं चैव मौक्तिकसुवर्णौ । रजतञ्च प्रदद्याच्चन्द्रारिष्टोपशमनाय" ।

कुजस्य—"प्रवालगोधूममसूरिकाश्च वृषश्च ताम्रः करवीरपुष्पम् । आरक्तवस्त्रं गुडहेमताम्रं दुष्टाय भौमाय सचन्दनं हि" ।

बुधस्य—"नीलं वस्त्रं स्वर्णदानं बुधाय रत्नं पाची दासिका हेमसर्पिः । कांस्यं दन्तः कुञ्जरश्चाथ मेषो रौप्यं सर्वं पुष्पजात्यादिकञ्च ।

गुरोः—"अश्वं सुवर्णं शुकपीतवस्त्रं सपीतधान्यं लवणं सपुष्पम् । सशर्करं तद्रजनीप्रयुक्तं दुष्टाय शान्त्यै गुरवे प्रदेयम्" रजनी हरिद्रा ।

शुक्रस्य—"चित्रवस्त्रमपि दानवार्चिते दुष्टगे मुनिवरैः परिगीतम् । तण्डुलं घृतसुवर्णरूप्यकं वज्रकं परिमलो धवलोऽश्वः" ।

शनेः—"नीलकं महिषं कृष्णं वस्त्रं लोहं सदक्षिणम् । दद्याच्च दक्षिणायुक्तं शनिदोषप्रशान्तये" ।

राहौ—"राहोर्दानं बुधैर्मेषो गोमेदं बोडकम्बलौ। सुवर्णं नागरूपञ्च सतिलं ताम्रभाजनम्"
केतौ—"केतौ वैदूर्य्यमलं तैलं मृगमदस्तथा। जपोर्णे छागयुक्ता दद्यात् क्लेशापनुत्तये"।
पञ्चमं संहिताप्रदीपे "भानुस्ताम्बूलदानादपहरति नृणां वैकृतं वासरोत्थं सोमः श्रीखण्डदानादवनितनयो भोजनात् पुष्पदानात्। सौम्यः शक्रस्य मन्त्री हरिहर नमनात् भार्गवः शुभ्रवस्त्रैस्तैलस्नानात् प्रभाते दिनकरतनयो ब्रह्मनत्या परौ चेति"। ब्रह्मा ब्राह्मणः। परौ राहुकेतू १६। अथ सूर्य्यादयो ग्रहा गन्तव्यराशेः प्राक् कियद्भिर्दिनैः फलं दद्युरित्येतदुपजात्याह सूर्य्येति। सूर्य्यादयो ग्रहा गन्तव्यराशेर्निर्गमिष्यन्तराशे पुरस्तात् पूर्व्वमेवैतद्वक्ष्यमाणदिवसघटीमासान् अत्र "कालाध्वनोरत्यन्तसंयोगे" इति पा॰ द्वितीया ततो गन्तव्यैव तावन्तं कालं फलदाः स्युः तद्यथा। सूर्य्यो गन्तव्यराशे प्राक् पञ्चपञ्चान् पञ्च दिवसान् फलदः। एवमारो भौमोऽष्ट दिवसान् पूर्वं फलदः, बुधः सप्त दिवसान्, शुक्रोऽपि सप्त दिवसान्, विधुश्चन्द्रः त्रिनाडीर्घटिकात्रयमेव प्राक् फलदः, राहुर्गन्तव्यराशे प्राक् त्रिमासं फलद एव शनिः षण्मासान्। गुरुर्द्विमासान् पूर्वं फलद इत्यर्थः। उक्तञ्च "सूर्यं पञ्चदिनं शशी त्रिघटिकं भौमोऽष्ट वै वासरान् सप्ताहानि भृगुं सतोमतनयो, मासद्वयं वै गुरुः। षण्मासान् पुरतोऽपि सूर्य्यतनयो राहुश्च मासत्रय, केतुश्चैव ददाति भाविसकलं गन्तव्यराशेः फलमिति"। जगन्मोहने त्वेवमुक्तम् "आदित्यादिग्रहा दद्युर्लग्ने वा गोचरेऽपि वा। सप्तविंशति २७ भागोर्द्ध्वं पर्राशिफलं स्फुटमिति १७। अथ प्रसङ्गाद्दानग्रहणभङ्गयात्राकर्त्तव्येषु सत्सु तिथ्यादिविषयकदुष्टयोगसद्भावे तद्दोषनिवारणार्थं दानशालिन्याह। दुष्ट इति। दुष्टे व्यतीपातादिरूपे योगे सति हेम सुवर्णं यथाशक्ति राजा दद्यात्। च पुनश्चन्द्रे दुष्टे विद्धिताम्यस्थानस्थिते शङ्खं दद्यात्। तिथ्यर्द्धे करणे भद्राख्ये दुष्टे धान्यं दद्यात्। तिथौ दुष्टे चतुर्थ्यादिरूपे तण्डुलान् दद्यात्। वारे दुष्टेऽनुपचयरूपे रत्नं प्रवालमुक्तादि दद्यात्। भे राशौ दुष्टे क्रूरग्रहाधिष्ठितत्वादिदोषसहिते सति गां दद्यात्। नाड्यां घटिकायां दुर्मुहूर्त्तादिना दुष्टायां सत्यां हेम सुवर्णं दद्यात् च पुनस्तारायां दुष्टायां विपत्प्रत्यरिवधरूपायां सिन्धूत्थं लवणं दद्यात्। एवं दुष्टताराया प्रत्येकं विशिष्य दानमुक्तमिदानीं तदशक्तौ लवणमेव देयमिति पुनरुक्तिपरिहारः। उक्तञ्च दीपिकायाम् "योगस्य हेम, करणस्य च धान्यमिन्दोः शङ्खञ्च, तण्डुलमणी तिथिवारयोश्च। ताराबलाय लवणान्यथ गां च राशेर्द्याद्द्विजाय कनकं शुचि नाडिकायामिति" १८ अथात्र गोचरप्रसङ्गात् सूर्य्यादयो ग्रहा राश्यन्तरगताः सन्तः कदा शुभाशुभफलदातारो भवन्ति तथा चान्द्रमासाधिकरणकरविवारादौ स्वजन्मनक्षत्रप्रवेशे सति फलविशेषं च षष्ठन्तिलकादर्शेनाह राश्यादिगाविति। रविकुजौ सूर्यभङ्गुलौ राश्यादिगौ राशिप्रथमद्र्यंशमध्यस्थितौ सन्तौ फलदौ निखिलफलदातारौ। अवशिष्टांशेष्वीषदीषत् फलदौ। एवं सितेज्यौ शुक्रबृहस्पती मध्ये मध्यगतांशद्वये निखिलफलदातारावन्यत्रेषदीषत्। शशिसुतो बुधः सदा त्रिषु द्रेष्काणेषु निखिलफलदाता। अन्त्यमन्दौ चन्द्रशनैश्चरौ चरमद्र्यंशे निखिलफलदातारावन्यत्रेषदीषत्। उक्तञ्च वसिष्ठेन "भवनादिगतौ फलदौ रविभौमौ मध्यगौ च गुरुशुक्रौ। अन्त्यगतौ शशिरविजौ सदैव फलदः शशाङ्कसुतः"। वराहेणापि "दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ। रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालमिति" रुधिरो भौमः। चाद्येति। यस्मिन् मासे स्वीयजन्मनक्षत्रप्रवेशे सूर्यादिवारा येषु स्युः तदा तस्मिन् मासेऽध्वादीनि फलानि वाच्यानि तद्यथा। रविवारे जन्मनक्षत्रप्रवेशे सति तस्मिन् मासे अध्वा मार्गोऽटनमिति यावत्, फलं तस्य पुंसो भवेत्। एवं चन्द्रवारे जन्मनक्षत्रप्रवेशे अन्नं भक्ष्यं तत्प्राप्तिः स्यादित्यर्थः। एवं भौमवारे वह्निभयं भवेत्। बुधवारे सन्मतिः। सती समीचीना धर्मयुक्ता बुद्धिर्भवेत्। गुरुवारे वस्त्रप्राप्तिर्भवेत्। भृगुवारे सौख्यं भवेत्। शनिवारे दुःखप्राप्तिः स्यादित्यर्थः। उक्तञ्च ज्योतिषरत्नसंग्रहे वामनेन "अध्वा भोजनमग्निभीः सुमतिता वस्त्रं सुखं चासुखं मासे मासि फलं भवेज्जननभे सूर्यादिवारे स्थिते" इति अत्र "मासास्तथा च तिथयस्तुहिनांशुमानादिति" भास्कराचार्यवाक्याच्चान्द्र शुक्लप्रतिपदादि दर्शान्तो मासो ग्राह्य इति विवेकः" १९ पी॰धा॰। अष्टवर्गशुभाशुभ एव गोचरशुद्धे र्गरीयस्ता तज्ज्ञानम् अष्टवर्गशब्दे ५२१ पृ॰ उक्तम्

**गोचर्मन्** न॰ ६त॰। १गवां चर्मणि, गोचर्म च क्षमने आसनतया विहितम् यथाह समयाचारतन्त्रे २पटले "नेपासनं तु वस्त्रार्थमाक्षटौ व्याघ्रचर्म च। शान्तौ मृगाजिनं शस्तं मोक्षार्थं व्याघ्रचर्म च। गोचर्म क्षमने देवि! मोहने वाजिचर्म च"। "सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम्। दश तान्येव गोचर्म ब्राह्मणेभ्यो ददाति य" इति २वृहस्पत्युक्ते 'दशहस्तेन वंशेन दशवंशान् समन्ततः। पञ्च चाभ्यधिकान् दद्यादेतद्गोचर्म चोच्यते" इति ३वशिष्ठोक्ते च भूमानभेदे "अपि गोचर्ममात्रेण भूमिदानेन पूयते" भा॰ आनु॰ ६२अ॰।

**गोचर्मवसन** पु॰ गोचर्म वसनमस्य। महादेवे "गोपालिर्गोपतिर्ग्रामो गोचर्मवसनो हरः" भा॰आनु॰ १७अ॰ शिवसहस्रनामोक्तौ

**गोचारक** त्रि॰ गां चारयति घासादौ चर–णिच्–ण्वुल्। गोरक्षके (राखाल)

**गोचारिन्** त्रि॰ गौरिव चरति चर–णिनि। तपस्विभेदे "गोचारिणोऽथाश्मकुट्टादन्तोलूखलिकास्तथा। मरीचिपाः फेनपाश्च तथैव मृगचारिणः" भा॰आनु॰ १४अ॰

**गोची** स्त्री गां भूमिं अञ्चति अन्च–क्विप् ङीप् नलोपे अल्लोप। गवाचीशब्दार्थे १मत्स्यभेदे। गां प्रियस्तुतिरूपां वाचं अञ्चति अन्च+क्विप् ङीप्। २इन्द्राणीपत्न्यां शब्दार्थचि॰

**गोच्छाल** पु॰गां भूमिमाच्छादयति छद–णिच्–अण् पृषो॰। भूकदम्बे (चाकुलिया)। रत्नमाला

**गोज** पु॰ "नृपायां नृपसंसर्गात् प्रमादाद्गूढजातकः। सोऽपि क्षत्रिय एव स्यादभिषेके च वर्जितः। अभिषेकं विना चायं गोज इत्यभिधीयते। सर्वे च राजवत्तस्य शस्यते पदवन्दनम्" इत्युशनसोक्ते सङ्कीर्णजातिभेदे अस्य राजशब्देन समासे राजदन्तादित्वात् पूर्वनिपात इत्थे एकवद्भावश्च। "गोदुग्धप्रभवं किं वा छागदुग्धसमुद्भवम्। भवेत् गोजं त्रिदोषघ्नं रोचनं बलवर्द्धनम्। वह्निदीप्तिकरं हृद्यं सद्यस्तृप्तिकरं लघु। अतीसारेऽग्निमान्द्ये च ज्वरे जीर्णे प्रशस्यते"। भावप्र॰ उक्ते तक्रभेदे २गोछागदुग्धविकारभेदे न॰। ३गोजात मात्रे त्रि॰। गोजोमिकाद्रक्षे स्त्री राजनि॰।

**गोजर** पु॰ गोषु मध्ये जरः जीर्णः। वृद्धबलीवर्दे "नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम्" भाग॰३।३०।१४। "गोजरं वृद्धबलीवर्दम्" श्रीधर

**गोजल** न॰गवि जातं जलम्। गोमूत्रे राजनि॰।

**गोजा** त्रि॰ गवि पृथिव्यां ब्रीह्यादिरूपेण जायते विट् आत्त्वम्। ब्रीह्यादिषु। ऋ॰४।४०।५।उद्रा॰। २गोजोमिकाद्रक्षे राजनि॰। ३सुरभ्यां जाते च

**गोजागरिक** न॰ गवि स्वर्गे जागरः आगमनतात्पर्यमस्य ठन्। १मङ्गले मङ्गलस्य स्वर्गसाधनाय प्रबोधनतया तथात्वम्। गवि भूमौ जागरिकं प्रहरीव अस्त्ररूपकण्टकधारित्वात्। २कण्टकारद्रक्षे। गोषु ब्रीह्यादिषु जागरोऽस्त्यस्य ठन्। ३भक्ष्यकारके त्रि॰शब्दार्थचि॰

**गोजात** पु॰ गवि जात। १गोनामकपुत्रस्यपत्नीजाते २सुरभीजाते घृतादौ ३स्वर्गजाते त्रि॰"शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उप ये यज्ञियासः"। ऋ॰७ ३५।१५

**गोजापर्णी** स्त्री गोजा दुग्धफेन इव शुभ्रत्वात् पर्णमस्य गौरा॰ङीष्। दुग्धफेनाद्रक्षे राजनि॰।

**गोजित्** पु॰ गां भूमिं जयति जि–क्विप्। नृपे बलेन पृथिवीजयित्वात्तस्य तथात्वम्। ऋ॰१।१०६।१। ८।५८।१०

**गोजिह्वा** स्त्री गोर्जिह्वेव। (गोजिया) लताभेदे। स्वार्थे क। तत्रैवार्थे अमरः। "गोजिह्वा गोजिका गोजी दार्विका खरपर्णिनी। गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत्। हृद्या प्रमेहकासास्रव्रणज्वरहरी लघुः। कोमला तुवरी तिक्ता स्वादुपाकरसा स्मृता" भावप्र॰ तद्गुणा उक्ताः।

**गोजि(जी)** स्त्री गोजिह्वा पृषो॰। गोजिह्वाख्ये लताभेदे भावप्र॰ वा ङीप्। "गोजी च पिष्टा सह तालपत्र्या" "सर्षपफेनशाकगोजीकाकोडुम्बरिका" इति च सुश्रुत

**गोजिरा** स्त्री गौर्भूमिः तत्स्थशस्यादि जीर्य्यतेऽनया जॄ–क ६त॰। शस्यादिजारिकायाम् "गोजिरया रंहमाणः पुरन्ध्या" ऋ॰८। ११०।२ [कुमारपुत्रकौ भरत

**गोञ्ज** पु॰ गोष्ठ+पृषो॰। (गेंड) इति ख्याते नाभौ प्रह-

**गोडिम्ब** पु॰ गोर्भूमेर्डिम्ब इव। शृगालजम्ब्वां शब्दार्थचि॰।

**गोडुम्बा** स्त्री गां भूमिं तुम्बति अर्द्दति तुबि–क पृ॰। (गोडुम्ब) १गवादन्यां (तरमुज) २शीर्णवृन्ते पु॰ मेदि॰। स्वार्थे क। गोडुम्बिका गवादन्याम् रत्नमाला

**गोणी** स्त्री गुण–घञ् नि॰ गुण गो,ण+आवपनेऽर्थे ङीप्। भारधारे (गुण) ख्याते १आवपनपात्रे २छिद्रवस्त्रे, ३वाप्यां, ४छिन्नपोतके मानभेदे, ५द्रोणीपरिमाणे च। "गोणी स्यावपनं चेत्" इत्यपदा॰ पा॰ सू॰ सि॰कौ॰। तस्य छिन्नपोताभेदा भावप्र॰ उक्ता यथा

इत्युक्तम् "शाण्डिल्यः काश्यपश्चैव वात्स्यः सावर्णकस्तथा। भरद्वाजो गौतमश्च सौकालीनस्तथापरः। कलमपश्चाग्निवेश्यश्च कृष्णात्रेयवशिष्ठकौ। विश्वामित्रः कुशिकश्च कौशिकश्च तथापरः। घृतकौशिकमौद्गल्यौ व्याघ्रव्याघ्रः पराशरः। बौधायनस्तथाऽत्रिश्च वासुकीरौहितस्तथा। वैयाघ्रपद्यकश्चैव जामदग्न्यस्तथापरः। चतुर्विंशति गोत्राणां कथिता पूर्वपण्डितैः"। "सौकालीनकमौद्गल्यौ पराशरबृहस्पती। काश्यपो विष्णुकौशिकौ कात्यायनात्रेयकाण्वकाः। कृष्णात्रेय साङ्कृतिश्च कौण्डिल्यो गर्गसञ्ज्ञकः। आङ्गिरस इति ख्यात आलम्बायनसंज्ञितः। मध्यजैमिनिसञ्ज्ञाख्या शाण्डिल्यो वत्सएव च। सावर्ण्यालम्बायनवैयाघ्रपद्या घृतकौशिकः। शक्तिः कात्यायनश्चैव वासुकिर्गौतमस्तथा। शुनकः सौपायनश्च मुनयो गोत्रकारिणः। एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते"। सर्वे द्विचत्वारिंशद्गोत्रकाराः। "अपत्यं पौत्रप्रभृति गोत्रम्" पा० १२ उक्ते पौत्रप्रभृतौ अपत्यत्वेन विवक्षिते यथेत्र न० तस्यायमाशयः— प्रवराध्यायप्रसिद्धं लोके गोत्रमिह तु तदप्रसिद्धस्याऽपि सञ्ज्ञार्थमिदम् पौत्रादेरप्यपत्यत्वाव्यभिचारादपत्यपदस्यापत्यत्वेन विवक्षितमित्यर्थः तेन पौत्रादेस्तत्त्वेन विवक्षायामेव गोत्रत्वम्। पौत्रापत्यशब्दयोः सम्बन्धिकतया यदीयपौत्रादि तं प्रत्येव तस्य गोत्रत्वम् इति। अस्य प्रयोजनं तु "एकोगोत्रे" पा० नियमार्थं तथाहि गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यम् औपगवः। गार्ग्यः। नाडायनः। "गोत्रे स्वैकोन सङ्ख्यानां प्रत्ययानाम्परम्परा। यद्वा स्वन्यूनसङ्ख्येभ्योऽभिष्टोत्पत्तिः प्रसज्यते। अपत्याभिन्नरेव स्यात्तत्प्रायामपीति च। मतभेदेन तत्रान्ये सूत्रमेतत्तथोत्तरम्" सि० कौ० अयमर्थः पितुरेवापत्यमिति पक्षे हि उपगोस्तृतीये वाच्ये औपगवादिः स्यात्। चतुर्थे त्वजीवद्ध्येऽब् स्ततश्चेत्र औपगवे फक्। इत्यमित्र् फको० परम्परया मूलाच्छततमे गोत्रे एकोनशतप्रत्यया स्युः। पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगोरणा इष्टे सिद्धेऽपि अथान्तादिञपि स्यात् चतुर्थे फगिति तत्र फगिञा परम्परया शततमे गोत्रेऽष्टनवतिरनिष्टप्रत्यया स्युः। अतो नियमार्थमिदं सूत्रम्"। इति गोत्रापत्ये अनेकप्रत्यया पा० विहिता विस्तरभयान्नोक्ता। गोत्रान्तरे जातस्यापि दानादितो गोत्रान्तरत्वं स्मृतिविहितं यथा "गोत्ररिक्थे जनयितुर्न भजेत् दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा" मनुः। अयमाशयः दानात् जनयितुः स्वत्वे निवृत्ते द्वादशविधपुत्रान्तर्गतत्वेन दत्तदाकीनां पुत्रनिधित्वेन विधानात् विधानेन संस्कारादिना च गृहीतुः पुत्रत्वे तद्गोत्रत्वम्। दत्तकन्यायान्तु वचनादेव पितृगोत्रापहारेण पतिगोत्रप्राप्तिः तथा च उ० त० व्यवस्थापितं यथा

"तदानीं गोत्रापहारमाह लघुहारीतः। "स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे। पतिगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया"। पाणिग्रहणादपि पितृगोत्रापहारमाह श्राद्धविवेके बृहस्पतिः। "पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः। भर्त्तुर्गोत्रेण नारीणां देयं पिण्डोदकं ततः"। यत्तु सपिण्डनस्य गोत्रापहारित्वप्रतिपादकवचनम्। "स्थितायान्तु भार्यायां सपिण्डीकरणान्तिकम्। पैतृकं भजते गोत्रमूर्द्धन्तु पतिपैतृकम्" इति कात्यायनीयं तत् शास्त्रान्तरीय शिष्टव्यवहाराभावात्। अतएव "अनुमन्त्रिता गुरुं गोत्रेणाभिवादयेत" इति गोभिलोक्तसप्तपदीगमनानन्तरं पत्युरभिवादनं तत् पतिगोत्रेण कर्त्तव्यमिति भट्टनारायणैरुक्तम् एतेन पितृगोत्रेणेति सरलाभवदेवभट्टाभ्यामुक्तं हेयम्। श्राद्धे गोत्रोल्लेखे विशेष श्रा० त० प्रचेताः "गोत्रसम्बन्धनामानि पितॄणां परिकल्पयन्"। सामगानां श्राद्धादकर्मभेदे तस्य विभक्तिविशेषान्ततामाह तत्रैव गोभिलः "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि। गोत्रस्तु तर्पणे प्रोक्तः एवं कर्त्ता न मुह्यति" शाखाभेदेन प्रेततर्पणे तु विशेषः ब्रह्मपु० उक्तः। "अमुकामुकगोत्रस्तु प्रेतस्तृप्यत्विदं जपन्"। "स्नात्वा सचेलमाचम्य सिञ्चेयुरुदकं जले। गोत्रनामानुवादादि तर्पयामीति चोत्तरम्" छन्दोगविषयं गोभिलवाक्यम् "विपक्षगोत्रं दयितेन लम्भिता" किरा० "स्फुटमिन्द्रताद्य मयि गोत्रभिदा" माघ०। "गोत्रविस्खलितमूचुरङ्गना" रघु। "अरसि स्मर! मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम्" कुमा०। "गोत्रभिदोऽप्यमर्षम्" रघु। गोत्रं करोति कृ—णिनि। गोत्रकारिन् गोत्रप्रवर्त्तके ऋषिभेदे। "सप्तैव गोत्रकारिणः" बौधा०। तच्च गोत्रकर्त्तृ तत्रार्थे "तपस्विनो ब्रह्मविदो गोत्रकर्त्तार एव च" भा० आनु० ४ अ०। गां भूमिं त्रायते त्रै—क। १२ मेघे निरु०। गोत्रभिच्छब्दे दृश्यम्।

**गोत्रकीला** स्त्री गोत्रः पर्वतः कीलः इव विष्टम्भकत्वात् यस्याः । पृथिव्यां हेमच०

**गोत्रज** पु० स्त्री गोत्रे समाने वंशे जायते जन–ड । एकगोत्रोत्पन्ने "तत्सुतो गोत्रजो बन्धुः" याज्ञ० । यद्यपि गोत्रोत्पन्नमात्रेऽस्य प्रवृत्तिस्तथापि व्यशौचप्रकरणे "दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके । त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः" व्यासवाक्ये गोत्रजपदं पारिभाषिकं यथाह वृहन्मनुः "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु निवर्त्तेताचतुर्दशात् । जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रजा मताः" इति "गोत्रजा निवृत्तसमानोदकभावाः शु०त०रघु० । वस्तुतः गोत्रजपदस्य गोत्रोत्पन्नमात्रार्थकत्वेऽपि सामान्यविशेषन्यायेन सपिण्डादेर्विशेषाभिधानात्तद्भिन्नपरत्वम् अत एव "तत्सुतो गोत्रजो बन्धुरित्यत्र याज्ञ०वचने गोत्रजपदेन पितामह्यादेर्ग्रहणमिति तद्व्याख्याने च मिता० "गोत्रजाः सपिण्डाः पितामह्यादयः समानगोत्राः" इत्युक्तम् ।

**गोत्रभाग** पु० गोत्राणामेकगोत्रजातानां भागः । गोत्रजातानां परस्परविभागे "गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः । तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः । तृतीयः पञ्चमश्चैव सप्तमोवापि यो भवेत् । जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् । यं परम्परया मौला सामन्ताः स्वामिनं विदुः । तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही । भुक्तिस्त्रैपुरुषी सिध्येदपरेषां न संशयः । अभिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति । अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् । सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते । विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च । सुदीर्घेणापि कालेन तेषां सिध्यति तत्तु न" वृहस्पति गोत्रसाधारणं द्रव्यमिति शेषः विवाह्यो जामाता

**गोत्रभिद्** पु० गोत्रं पर्वतं मेघं वा भिनत्ति भिद–क्विप् । इन्द्रे इन्द्रस्य वज्रेण मेघभेदनात् पर्वतपक्षशातनाद्वा तथात्वम् । "पुरन्दरो गोत्रभिद्वाज्रबाहुः" यजु० २०।३८ गोभूमिस्तां त्रायन्ते गोत्रा मेघाः तान् इन्द्रार्थं भिनत्ति गोत्रान् गिरीन् वा भिनत्ति" वेददी० । तस्य गिरिपक्षभेदनकथा पौराणिकी अनुसन्धेया । यथा "ततोऽद्रयो जातपक्षा विष्णोरेव तु मायया । प्रस्थिता मेदिनीं त्यक्त्वा यथापूर्वं निवेशिता । तत्स्थान-

भ्रष्टराष्ट्रान्तु पातयामास जलार्णवे । प्रक्षिप्ता पर्वताः सर्वे निमग्नाश्च यथा गजाः । ततासुरेभ्यः सहसा आविपत्य सुराश्रयम् । तच्छ्रुत्वैवासुराः सर्वं चक्रुरुद्योगमुत्तमम्" इत्युपक्रमे "धरण्यान्तु गिरीन् स्थाप्य स्वेषु स्थानेषु गोपतिः । चिच्छेद पविना पक्षान् सर्वेषां भुवि चारिणाम् । एकः सपक्षो मैनाकः सुरैस्तत्समये कृतः" वह्नि पु० । "पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः" इति तदनुसारेण रघौ वर्णितम् । गोत्रं नाम भिनत्ति । २नामभेदके एकनामोच्चारणकाले अन्यनामोच्चारके च । "तदयुक्तमङ्ग तव विश्वसृजा न कृतं यदीक्षणसहस्रतयम् । प्रकटीकृता जगति येन खलु स्फुटमिन्द्रतामयि गोत्रभिदा" माघ । "गोत्रभिदा पर्वतभिदा नामभेदिना च" मल्लि ।

**गोत्रवृक्ष** पु० गोत्रभवो नगजातो वृक्षः । धन्वनवृक्षे भावप्र० ।

**गोत्रस्खलन** न० गोत्रे नामनि स्खलनम् । अन्यस्य नामग्रहणेच्छया अन्यस्य नामग्रहणरूपे रागहेतुके स्खलने । "अगाद गोत्रस्खलने च का न तम्"(नलम्) नैष० । "गोत्रस्खलने भ्रान्तिं मानिनि ! जानीहि केवलां मेऽत्र । व्याख्यानतोविशेषप्रतिपत्तिः पाणिनीय इव" उद्भट । भावे क्त "गोत्रस्खलितमप्यत न० "उत गोत्रस्खलितेषु बन्धनम्" कुमा० [व्यादिषोपष्वेन तै–क । २भूमौ अमर ।

**गोत्रा** स्त्री गवां समूहः त्र । १गोसमूहे गां त्रायते त्र- ।

**गोत्रादि** पु "तिङोगोत्रादीनि कुत्सनाभीक्ष्ण्ययो" पा० तिङन्तात् परस्य अनुदात्ततानिमित्ते शब्दगणे तद्गणश्च पा०ग०सूत्रे उक्तो यथा "गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्यायन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ वानाम" ।

**गोत्व** न० गोर्भावः त्व । गोशब्दप्रवृत्तिनिमित्ते गवेतरावृत्तौ सकलगोव्यक्तिस्थे जातिभेदे । तल्लक्षणन्तु गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्तित्वम् । सत्ताद्रव्यत्वादिजाते सकलगोव्यक्तिवृत्तित्वात् तद्वारणाय सत्यन्तम् निवेशः गगनादेर्गवेतरावृत्तित्वात् विशेष्यदलम् । वृत्तिताद्यस्य समवायेन ग्राह्या तेन गवेतरघटादौ कालिकसम्बन्धेन गोत्वस्य सत्त्वेऽपि नासम्भवः न वा गवेतरासमवेतस्य गगनादेः कालिकेन सकलगोव्यक्तिवृत्तित्वादतिव्याप्तिः । तस्याश्च जाते गोपदप्रवृत्तिनिमित्तत्वमुक्तं काव्य० प्र० वाक्यपदीये "गौः स्वरूपेण न गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौः" यतो गोत्वरूपजात्यादेव गोर्गोपद

वाच्यता अतो गोत्वस्य गोपदप्रवृत्तिनिमित्तत्वम्। तद्व्यञ्जकञ्च गलकम्बलादिमत्त्वरूपश्चाकारभेदः तस्याभविशेषस्यैव जातिव्यञ्जकत्वात्। तत्र गोपद गोत्वे शक्तं व्यक्तेर्भानमनुमानात् तुल्यवित्तिवेद्यत्वाद्वेति मीमांसकामन्यन्ते अनुमानञ्च गामानयेत्यादौ गोत्वानयनमिति शाब्दबोधात् परम् गोत्वकर्मकानयन गोकर्मकानयन विनाऽनुपपन्नमिति व्यतिरेकव्याप्तिपक्षधर्मतामूलम्। गोत्वविशिष्टे शक्तमिति तु नैयायिका व्यक्तिमात्रस्य शक्यत्वे व्यक्तीनामानन्त्यात् व्यभिचार। अतद्व्यावृत्तिरूपोऽपोहो वा गोपदशक्य इति तु बौद्धा

**गोद** पु॰ गां नेत्रं दायति शोधयति दै—क। १मस्तकस्थे मस्तिष्के हेम॰ मस्तिष्कस्य नेत्रप्रकाशहेतुत्वात् तथात्वम्। गां ददाति दा—क। २गोदातरि त्रि॰। "अन्नदस्तु प्रिय पुष्टो गोदोऽश्वस्य विष्टपम्" मनु॰। गोदावर्य्याः समीपस्थे देशभेदे पु॰ तत्र चातुरर्थिकः अण्। गोद तद्देशादूरभवादौ त्रि॰ जनपदे तु तस्या॰तस्य लुप्। गोदो जनपद "विशेषणानाञ्चाजातेः" पा॰। युक्तवदस्य विशेषणानामपि तल्लिङ्गवचने न तु जाते। गोदौ रमणीयौ" सि॰कौ॰

**गोदत्र** न॰ गोद त्रायते त्रै—क। मस्तिष्कावरके चर्मादौ

**गोदन्त** न॰गोर्दन्त इवावयवोऽस्य हृत॰। हरिताले राजनि॰

**गोदा** स्त्री गां स्वर्गं ददाति स्नानेन दा—क। गोदावरीनद्याम् हेम॰। "नेदोऽथ गोदोत्तरतश्च यावत्"सु॰चि॰।

**गोदान** न॰ गावो केशलोमानि वा दीयन्ते खण्ड्यन्तेऽत्र। आधारे ल्युट्। १केशान्ताख्ये द्विजाति संस्कारभेदे केशान्तशब्दे २२५०पृ॰ दृश्यम्। "अथास्य गोदानविधेरनन्तरम्" रघु॰। तच्च "एवेन गोदानम्" आश्व॰गृ॰१।१८।१। इत्यादिसूत्रजा तेन निरूपितम्। "चूडोपनयनगोदानविवाहाः" आश्व॰गृ॰। गवि पृथिव्यां दीयते निधीयते स्नाप काले दा—कर्म्मणि ल्युट्। २दक्षिणकर्णसमीपस्थे शिरःप्रदेशे। "अपरेण दक्षिणाग्निम् दक्षिणं गोदानमुन्दति" कात्या॰ श्रौ॰ ५।२।१४। "दक्षिणं गोदानं पितार्थ्योनसोमाभावः" कात्या॰ श्रौ॰ ७।२।९। "अपङ्क्तिर्गवि पृथिव्यां दीयते इति गोदानं शिरसोदक्षिण प्रदेश पितार्थं कङ्कतादिना तत्स्थाने केशान् पिञ्जटान् कृत्वा उन्दति क्लेदयति अङ्कुराङ्कं करोति इमामाप॰ इत्यादि मन्त्रेण" कर्क॰। ६त॰। गो॰ सुरभ्या रूपस्य वा ३दाने। गोप्रशंसापूर्वकं तद्दानप्रकारो हेमाद्रि॰दा॰ उक्तो यथा

भविष्यत् पुराणे। ब्रह्मोवाच "आदित्यदुहिता गौर्हि पृथ्वीयं परिकीर्त्तिता। श्रेयोऽर्थं सर्वलोकानाममृतघ्ना क्रतुसिद्धये। ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्। एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति। गोभ्यो यज्ञाः प्रवर्त्तन्ते गोभ्योदेवाः समुत्थिताः। गोभ्यो वेदाः समुत्कीर्णाः सषडङ्गपदक्रमाः। शृङ्गमूले गवां नित्यं ब्रह्मविष्णू समाश्रितौ। शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च। शिरोमध्ये महादेवः सर्वभूतमयः स्थितः। ललाटाग्रे स्थिता देवी नासावंशे च षण्मुख॰। कम्बलाश्वतरौ नागौ नासापुटसमाश्रितौ। कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ। दन्तेषु वायवः सर्वे जिह्वायां वरुणः स्थितः। सरस्वती च हुङ्कारे यमयक्षौ च गण्डयोः। सन्ध्याद्वयं तथोष्ठाभ्यां ग्रीवायामिन्द्र आश्रितः। रक्षांसि ककुदेशे तु साध्याश्चोरसि संस्थिताः। चतुष्पात् सकलो धर्मः स्वयं जङ्घासु संस्थितः। खुरमध्ये तु गन्धर्वाः खुराग्रेषु च पन्नगाः। खुराणां पश्चिमाग्रेषु गणाश्चाप्सरसां स्थिताः। रुद्राश्चैकादश पृष्ठे वसवः सर्वसन्धिषु। श्रोणीतटस्थाः पितरः सोमो लाङ्गूलमाश्रितः। आदित्यरश्मयो बाले पिण्डीभूता व्यवस्थिता॰। साक्षाद्गङ्गा च गोमूत्रे गोमये यमुना स्थिता। क्षीरे सरस्वती देवी नर्मदा दधिसंस्थिता। हुताशनः स्वयं सर्पिर्ब्राह्मणानां गुरु॰ परः। अष्टाविंशतिदेवानां कोट्यो रोमसु संस्थिताः। उदरे पृथिवी ज्ञेया सशैलवनकानना। चत्वारः सागराः पूर्णा गवां ये तु पयोधराः। एतद्धि कथितं सर्वं यथा गोषु प्रतिष्ठितम्। जगद्वै देवशार्दूल! सदेवासुरमानवम्"। स्कान्दपुराणे "तृणानि खादन्ति वसन्त्यरण्ये पिबन्ति तोयान्यपरिग्रहाणि। दुह्यन्ति वाहन्ति पुनन्ति पापं गवां रसैर्जीवति जीवलोकः। दृष्टास्तु गावः शमयन्ति पापं दत्तास्तु गावस्त्रिदिवं नयन्ति। संरक्षिताश्चोपनयन्ति वित्तं गोभिर्न तुल्यं धनमस्ति किञ्चित्। यच्च समश्नाति ददाति नित्यं पापक्षतिं मित्रविवर्द्धनं च। स एव चार्थं परिभुज्यते च गोभिर्न तुल्यं धनमस्ति किञ्चित्। तृणानि गुल्मानि वने चरित्वा पीत्वापि तोयान्यमृतं स्रवन्ति। यद्गोमयाद्याश्च पुनन्ति लोकान् गोभिर्न तुल्यं धनमस्ति किञ्चित्"। हारीतः "बहुचोराय यो गां वै ब्राह्मणायोपपादयेत्। उत्तारयेत्स चात्मानं सप्त सप्त कुलानि च"।

देवल "सुशीलां लक्षणवतीं युवतीं वत्ससंयुताम्। बहुदुग्धवतीं स्निग्धां धेनुं दद्याद्विचक्षणः"। वेदव्यास 'यथात्मविक्रयं कृत्वा गां क्रीत्वा संप्रयच्छति। आत्मविक्रयतुल्यास्ता शाश्वती इति कौशिकः"। तथा सर्वामेध्यवर्जयित्वा तु यो वै गां सम्प्रयच्छति। यावती स्वर्गमेदुर्गावः स तावत् फलमश्नुते"। तावदिति पूर्वोक्त तावद्गोरोमसम्मितं वत्सरं स्वर्गफलमित्यर्थः। "यो वै द्यूते धनं जित्वा क्रीत्वा गाः सम्प्रयच्छति। स दिव्यमयुतं शक्रवर्षाणां फलमश्नुते"। 'अन्तर्जाता, सुक्रयज्ञानलब्धा प्राणक्रीता निर्जिताश्चौकजाश्च। कष्टोत्सृष्टा पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ता"। अन्तर्जाता गर्भिण्य इति भारतपद्मप्रकाशकारः। सुक्रयलब्धा यथामूल्यक्रयप्राप्ताः ज्ञानलब्धा प्रतिग्रहलब्धा प्राणक्रीता भृतिलब्धाः निर्जिता युद्धादिना, ओकजा गृहजाता, कष्टोत्सृष्टा पोषणाभ्यागता अतिव्याध्यादिकष्टाक्रान्ता सती स्वामिना या त्यक्ता स्वयं च पोषणं कृत्वा लब्धा। "कृशा दुष्टा दुर्बला व्याधिता च न दातव्या या च मूल्यैरदत्तैः। क्लेशैर्विप्रं या फलैः संयुनक्ति तस्यावीर्याश्चाफलाश्चापि लोकाः"। मूल्यैरदत्तैः क्रीतेति शेषः। तथा। "न कृशां पापवत्सां वा वन्ध्यां रोगान्वितां तथा। न व्यङ्गामपरिश्रान्तां दद्याद्गां ब्राह्मणाय वै। योऽदद्यात्तापयुक्तार्थां जीर्णाङ्गीं तुच्छ निष्फलाम्। तमः संप्रविशेद्दाता द्विजं क्लेशेन योजयन्"। ब्रह्मपुराणे "पीतोदकां जग्धतृणां दुग्धदोहां निरिन्द्रियाम्। उत्क्रान्तामङ्गहीनाञ्च स्रुतवत्सां महागमाम्। केशवालपुरीषास्थिभक्ष्यादां वह्निमीं खलाम्। घटेत यमसद्मस्थित्य प्रणयितस्तमीम्। न दद्याद्ब्राह्मणेभ्यश्च उद्दीप इष्यमन्यथा"। पीतोदकां जग्धतृणामिति, वृद्धत्वोपलक्षणपरम्। दुग्धदोहां, सकोषस्तनपायिनीं, महागर्भाम् बहुभक्षां, घटेत बाल्यावस्थैव या गर्भिणी। विश्वामित्र "नैकशृङ्गाञ्च निःशृङ्गां स्फुटिताक्षीं चलत्खुराम्। न दद्यात् स्त्रियमीस्त्रैव गां शुभामेव दापयेत्"। महाभारते "अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान्। अर्बुदानि दशैकञ्च सराष्ट्रोऽभ्यपतद्दिवम्। दत्त्वा शतसहस्रन्तु गवां राजा प्रसेनजित्। सवत्सानां महातेजा गतो लोकाननुत्तमान्"। तथा। "प्रासादा यत्र सौवर्णाः शय्या रत्नोज्ज्वलास्तथा। वराश्चाप्सरसो यत्र तत्र गच्छन्ति गोप्रदाः। गोप्रदो नरकस्यैति पयः पीत्वाम्बु जञ्जलम्। विमानेनार्कवर्णेन दिवि राजन्! विराजते। तस्मात्स्वेषा सुश्रोण्यस्य शतशोऽवरयोषितः। रमयन्ति विमानस्थं दिव्याभरणभूषिताः। वेणूनां वल्लकीनाञ्च नूपुराणाञ्च निःस्वनैः। हासैश्च हरिणाक्षीणां सुप्तः सन् प्रतिबुध्यते। यावन्ति रोमाणि भवन्ति धेन्वास्तावन्ति वर्षाणि महीयते सः। स्वर्गाच्च्युतश्चापि ततस्तु लोके कुले समुत्पत्स्यति गोमतां सः"। विष्णुः "गोप्रदानेन स्वर्गमाप्नोति दशधेनुप्रदो गोलोक शतप्रदश्च ब्रह्मलोकम्"। जाबाल "होमार्थमग्निहोत्रस्य योगान्दद्याद्दयान्विताम्। त्रिविस्तपूर्णा पृथिवी तेन दत्ता न संशयः"। याज्ञवल्क्य "यथाकथञ्चिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा। अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते"। अङ्गिरा "गौरेकस्यैव दातव्या श्रोत्रियस्य विशेषतः। सा हि तारयते पूर्वान् सप्त सप्त च सप्त च"। नन्दिपुराणे "अपात्रे सा तु गौर्दत्ता दातारं नरकं नयेत्। कुलैकविंशत्या युक्तं ग्रहीतारञ्च तारयेत्। विधिना च यः दत्ता पात्रे धेनुं सदक्षिणा। तदा तारयते जन्तून् कुलानामयुते शते। पात्राच्छ्रोत्रियाः शुद्धा उद्वाहाग्निहोत्रिणः। देवताश्च तथा तुष्टा गोदानं ह्येतदुत्तमम्"। महाभारते "हविष्काले सीदति चाग्निमान्यम् कन्यार्थं च होमहेतोः प्रसूत्याम्। गुर्वर्थं वा बालसंवृद्धये वा धेनुन्दद्याद्देशकाले विशिष्टे"। प्रसूत्यां सोमयागे। तथा "न वधार्थं प्रदातव्या न कीनाशे न नास्तिके। गोजीवे न च दातव्या तथा गौः पुरुषर्षभ!"। कीनाशो हलवाहकः। आत्रेय "सीदते बहुभृत्याय श्रोत्रियायाऽऽहिताग्नये। अतिथिप्रियाय दान्ताय देया धेनुर्गुणान्विता। अकुलीनाय मूर्खाय लुब्धाय पिशुनाय च। हव्यकव्यव्यपेताय गौर्न देया कथञ्चन"। अथ दानविधिः। विश्वामित्र "प्राङ्मुखीं गामवस्थाप्य सवत्सां तां सुपूजिताम्। पुच्छदेशे तु दाता वै स्नातो भक्तिमान् भवेत्। उदङ्मुखस्तु विप्र स्नात्वामलकचर्चित। ताम्रपात्रं करे कृत्वा कनकेन समन्वितम्। निक्षिप्य पुच्छं तस्मिंस्तु हस्तादिग्धं प्रमृज्य च। सतिलं विप्रपाणिन्तु प्रावयन्तु निधापयेत्। सतिलं सकुशञ्चापि गृहीत्वा दानमाचरेत्। अनेनैव तु मन्त्रेण पात्रहस्ते जलं क्षि-

मेत् । यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा । अनुव्रज्य तु तां धेनुं ब्राह्मणेन समन्विताम् । गोमतीन्तु ततो विद्वान् जपेत प्रयतः शुचिः । उद्दिश्याथ वासुदेवं प्रीयतामिति चानघ ॥ पात्रं भर्मास्य संस्थित्वा तोयमप्सु विनिक्षिपेत् । जलशायी ब्रह्मपिता पद्मनाभः सनातनः । अनन्तभोगशयनः प्रीयतां परमः पिता" । गोमतीमाह यमः "गावः सुरभयो नित्यं गावो गुग्गुलगन्धिकाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् । अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्वभूतानां रक्षन्ति च वहन्ति च । हविषा मन्त्रपूतेन तर्पयन्त्यमरान्दिवि । ऋषीणामग्निहोतॄणां गावो होमप्रतिष्ठिकाः । सर्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः सर्वस्य लोकस्य गावो धन्याः शुभावहाः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति" । अन्यापि गोमती, महाभारतोक्ता तिलधेनुदाने दर्शिता । "ततस्नानयोर्विकल्पानुष्ठानमिति । सर्वगोदानसाधारणं मन्त्रमाह वशिष्ठः । "घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्त्तास्ता मे सन्तु सदा गृहे । घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् । घृतं मे सर्व्वतश्चैव घृतं मे मनसि स्थितम् । गावो ममाग्रतो नित्यं गावः पृष्ठत एव च । गावो मे सर्व्वतश्चैव गवां मध्ये वसाम्यहम्" । "इत्याचम्य जपन् सायं प्रातश्च पुरुषः सदा । यदह्ना कुरुते पापं तस्मात् स परिमुच्यते"। दक्षिणा चात्र सुवर्णम् यदाह वशिष्ठः "सुवर्णं दक्षिणामाहुर्गोप्रदाने महाफले । सुवर्णं परमं ह्यायुर्दक्षिणार्थे न संशयः । गोप्रदानं तारयते सप्त पूर्व्वान् नरांस्तथा । सुवर्णं दक्षिणां दत्त्वा तावद्द्विगुणमुच्यते । सुवर्णं परमं दानं सुवर्णं दक्षिणा परा । सुवर्णं पावनं प्राहुः परिमाणं परन्तथा" अत्र सुवर्णशब्दस्य हिरण्यपर्यायत्वे यथाशक्त्यनुष्ठानम् । अपरे त्वाहुः सकृदुच्चरितसुवर्णशब्दावगतपरिमाणार्थपरित्यागानुपपत्तेः सुवर्णशब्दस्य प्राहुरित्यादिक्रियाकर्मभूततया द्वितीयान्तत्वेन लिङ्गविशेषानवधारणाच्च परिमाणार्थत्वेन न्याय्येति । एवं च सत्यनियतानुष्ठानप्रसङ्गः तथा परिमाणपरन्त्वथेत्येतदपि समञ्जसं स्यात्" । वर्णभेदेन गोदानफलादि तत्रोक्तं यथा

"कृष्णाङ्गान्ददते यस्तु पट्टच्छन्नां स्वलङ्कृताम् । घण्टामालाकुलां कृत्वा पुष्पैश्चाप्यलङ्कृताम् । विधिवच्च द्विजातिभ्यो यमलोकं न पश्यति । आयुरारोग्यमैश्वर्यं दाता कामांश्च मानवान् । श्वेताङ्गान्ददते यस्तु दिव्यरत्नैरलङ्कृताम् । घण्टामालाकुलां कृत्वा पुष्पैश्चाप्यलङ्कृताम् । सुखे धूपं प्रदातव्यो घृतेनास्यञ्च पूरयेत् । सुवर्णशृङ्गाभरणा तथा रौप्यखुरा शुभा । पट्टच्छन्ना शुभा चैव दातव्या ध्यानयोगिने । यस्तु दद्याच्च गां श्वेतां तस्य पुण्यफलं शृणु । जन्मप्रभृति यत् पापं मातृकं पैतृकं च यत् । कुलोद्भवस्य धूर्त्तस्य तत्क्षणादेव नश्यति । गान्ददानीह इत्येव वाचा पूयेत सर्व्वशः । पिता पितामहश्चैव तथैव प्रपितामहः । नरकस्थाः प्रमुच्यन्ते सोमलोकं व्रजन्ति ते । गौरीं चैव प्रयच्छेत्तु यस्तु गां वै नरः शुचिः । अहोरात्रोषितश्चैव कृतशौचो नरः सदा । स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् । घण्टामालाकुलां चैव गन्धपुष्पैरलङ्कृताम् । कृतपञ्चावरेत् प्राज्ञो सुखे धूपं प्रदापयेत् । भक्ष्यभोज्यान्नपानेन ब्राह्मणान् भोजयेत् पुमान् । गान्ददानीह इत्येव वाचा पूयेत सर्व्वशः । मातृकं पैतृकं चैव यच्चान्यद्दुष्कृतं भवेत् । पापञ्च तस्य तत् सर्व्वं दहत्यग्निरिवेन्धनम् । वर्षकोटिसहस्रन्तु पुमान् स दिवि मोदते । दासीदासैरलङ्कारैः स्तूयते सर्व्वजन्तुभिः । अरोगश्चैव जायेत तेजस्वी च भवेन्नरः । नीलवर्णाञ्च गान्दद्याद्धोगभी शीलगुणान्विताम् । स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् । पट्टच्छन्नां शुभां सौम्यां घण्टादामैरलङ्कृताम् । पञ्चरत्नैश्च छत्रैश्च गलवेष्टनशोभिताम् । रुद्रस्य प्रमुखे देया विष्णोश्च ब्रह्मणश्च ह । गा ददानीह इत्येव वाचा पूयेत सर्व्वशः । पिता पितामहश्चैव तथैव प्रपितामहः । नरकस्थाः प्रमुच्यन्ते नीलां गां ददते तु यः । वर्षकोटिसहस्राणि लोके तिष्ठति वारुणे । दधिक्षीरवहा नद्यो वर्त्तन्ते सर्व्वतः सदा । घृतशैलाः प्रपद्यन्ते नवनीतस्य पर्व्वताः । कृषिभागी बहुधनो दुर्भिक्षञ्च न पश्यति" ।

सवर्णवत्ससहितायाः कपिलादिकाया गोर्दानविधिश्चात्रैव महाभारते ।

"समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।

सुव्रतां वस्त्रसम्पन्ना ब्रह्मलोके महीयते”। समान-वत्सां समानवर्णवत्साम्। “रोहिणीं तुल्यवत्सां च धेनुं दद्यात्पयस्विनीम्। सुव्रतां वस्त्रसंवीतां इन्द्रलोके महीयते। समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतां सोमलोके महीयते”। शबलां कर्वुराम्। “समानवत्सां कृष्णान्तु धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतामग्निलोके महीयते। वातरेणुसवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां वायुलोके महीयते। समानवत्सां धूम्रान्तु धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंयुक्तां यमलोके महीयते। अपां फेनसवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां वारुणं लोकमश्नुते। अपां, गोः। कामदोहनां अनायासदोहाम्। “हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां कौवेरं लोकमाप्नुयात्”। पलालधूमवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां पितृलोके महीयते। सवत्सां पीवरीं दत्त्वा शितिकण्ठीमलङ्कृताम्। वैश्वदेवमसम्बाधं स्थानं श्रेष्ठं प्रपद्यते। शितिकण्ठीं कृष्णगलाम्। “समानवत्सां गौरीन्तु धेनुं दत्त्वा पयस्विनीम्। सुव्रतां वस्त्रसंवीतां वसूनां लोकमश्नुते। सुव्रता सुखदोह्या। “पाण्डुकम्बलवर्णान्तु सवत्सां कामदोहनाम्। प्रदाय वस्त्रसंवीतां साध्यानां लोकमश्नुते। वत्सोपपन्नां नीलाङ्गीं सर्व्वरत्नसमन्विताम्। गन्धर्व्वाप्सरसां लोकान् दत्त्वा प्राप्नोति मानवः। गोप्रदानरतो याति भित्त्वा जलदसञ्चयान्। विमानेनार्कवर्णेन दिवि राजन्! विराजते। तत्रैनं वेशाः सुश्रोण्यः सहस्रं वरयोषितः। रमयन्ति नरश्रेष्ठ गोप्रदानरतन्नरम्”।

दैवतोद्देशेन गोदानविधिस्तत्रैव लिङ्गपुराणे

“वेदिदक्षिणदिग्भागे धेनुः कार्य्या उदङ्मुखी। प्राङ्मुखश्च वत्सश्च कृत्वा ब्राह्मणं च उदङ्मुखम्। प्राङ्मुखो यजमानस्तु पूजयेद्ब्राह्मणं ततः। कोऽदादिति च मन्त्रेण गृह्णीयाद्ब्राह्मणः स्वयम्”। देवोऽत्र महेश्वरः। “एवंविधानतो दत्त्वा याति दाता शिवालयम्। तत्र भुक्त्वाक्षयान् भोगानन्ते अश्नोति शाश्वतम्”। देवीपुराणे “नीलां वा यदि वा श्वेतां पाटलां कपिलामपि। सदुग्धां सवत्साञ्चैव सुखदोह्यां तथा नृप”। “आदाय विधिवद्देवीं पूजयेच्छुभपङ्कजैः। धूपन्तु यक्षनिर्य्यासमगुरुचन्दनम्। दत्त्वा तु मन्त्रपूर्व्वन्तु नैवेद्यमुपकल्पयेत्। पायसं घृतसंयुक्तं प्राशयेत्तु तथा तु ताम्। द्विजाय शिवभक्ताय सवत्साङ्गां निवेदयेत्। सहेमवस्त्रकांस्यां च महापुण्यमवाप्नुयात्। यावत्तद्रोमसंख्यानं तावद्देव्याः पुरे वसेत्। इहैव गतपापोऽसौ जायते नृपसत्तम॥” विष्णुधर्म्मे “मान्धाता उवाच। ब्राह्मणः प्रीणनार्थाय केशवस्य शिवस्य च। यानि दानानि देयानि तान्याचक्ष्व द्विजोत्तम॥ येन येन विधानेन दानं पुंसः सुखावहम्। ऐहिकामुष्मिकाभिश्च करोति न विहन्यते। वशिष्ठ उवाच। गोदानमादौ वक्ष्यामि प्रत्यक्षक्रमयोगतः। “येन चैव विधानेन धेनुं नाधिकविस्तरम्। पुण्यन्दिनमथासाद्य स्नात्वाऽऽतर्प्य पितॄंस्तथा। कृतोपवासः सम्प्राश्य पञ्चगव्यं नरेश्वर॥ घृतक्षीराभिषेकञ्च कृत्वा विष्णोः शिवस्य च। तमभ्यर्च्य यथान्यायं पुष्पादिभिरलङ्कृताम्। उदङ्मुखीं प्राङ्मुखीं वा गृष्टिं कृत्वा पयस्विनीम्”। गृष्टिः सकृत्प्रसूतेत्यर्थः। “सपुच्छां वस्त्रसंवीतां सितयज्ञोपवीतिनीम्। स्वर्णशृङ्गीं रौप्यखुरां सुवर्णोपरिसंस्थिताम्। शक्तितो दक्षिणायुक्तां ब्राह्मणाय निवेदयेत्। गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्। प्रदक्षिणं ततः कृत्वा धेनुं द्विजवरश्च ताम्। इमां नः प्रतिगृह्णीष्व धेनुर्दत्ता मया तव। स मे पापापनोदाय गोविन्दः प्रीयतामिति”। वह्निपुराणे तु अयमधिको मन्त्रः। “या धेनुः काश्यपस्यासीदत्रेर्वा गोतमस्य च। सामिकामफला देवी इह लोके परत्र चेति। एवमुच्चार्य्य तं विप्र गोविन्दं नृप! कल्पयेत्। चतुष्पदेषु गच्छन्तं पदाम्बुजौ नराधिप॥ अनेन विधिना धेनुं यो विप्राय प्रयच्छति। सर्व्वकामसमृद्धात्मा विष्णुलोकं स गच्छति। सप्तावरान् सप्तपरानात्मानञ्चैव मानवः। सप्तजन्मकृतात् पापान्मोचयत्यवनीपते॥ पदे पदेऽश्वमेधस्य गोसवस्य च मानव। फलमाप्नोति राजेन्द्र दत्त्वायेशगौ हरिः। सर्व्वकामदुघा सम्यक् सर्व्वकालेषु पार्थिव॥ भवत्येषा पञ्चरा यावदिन्द्राश्चतुर्द्दश। सर्व्वेषामेव पापानां कृतानामविजानता। प्रायश्चित्तमिदं प्रोक्तमनुतापोपबृंहितम्। सर्व्वेषामेव देवानामेकजन्मानुगं फलम्। स्फाटिकक्षितिगौरीणां सप्तजन्मानुगं फलम्। ब्राह्मणे क्षत्त्रिये वैश्ये शूद्रे चान्ये च मानवे। लोकाः कामदुघाः प्राप्ता दत्त्वैतद्विधिना नृप॥ गोभ्योऽ-

धिक स्वर्गति नापरमस्ति किञ्चिद्गुदानम् पवित्रमिति शास्त्रविदो वदन्ति । ता सम्पद सुरसदन समीह- मानैर्देया सदैव विधिना द्विजपुङ्गवेभ्यः ।"

"अतः परन्तु गोदानं कीर्त्तयिष्यामि तेऽनघ ! । गावो- ऽधिकास्तपस्विभ्यो यस्मात् सर्वेभ्य एव च । तस्मान्महे- श्वरो देवस्तपस्ताभि सहास्थितः । ब्रह्मलोके वस- न्त्येता सोमेन सह भारत ! । यान्ता ब्रह्मर्षय सिद्धा प्रार्थयन्ति परां गतिम् । पयसा हविषा दध्ना शकृता चाथ चर्मणा । अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत ! । नासा शीतातपौ स्याता सदैताः कर्म कुर्वते । न वर्षविषय वापि दुःखमासा भवत्युत । ब्राह्मणैः सहिता यान्ति तस्मात् पारमकं पदम् । एकं गोब्रा- ह्मणं तस्मात् प्रवदन्ति मनीषिणः । रन्तिदेवस्य यज्ञे ता पशुत्वेनोपकल्पिता । अतश्चर्मण्वती राजन् । गोचर्मभ्यः प्रवर्त्तिता । पशुत्वाञ्च विनिर्मुक्ता प्रदाना- योपकल्पिता । ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ! । निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पा- र्थिव ! । गवा सहस्रद प्रेत्य नरक न प्रपद्यते । सर्वत्र विजयश्चापि लभते मनुजाधिप ! । अमृतं वै गवा क्षीरमित्याह त्रिदशाधिप । तस्माद्ददाति यो धेनुममृत स प्रयच्छति । अग्नीनामव्ययं ह्येतद्धौम्य वेदविदो विदुः । तस्माद्ददाति यो धेनु स हौम्यं सम्प्र- यच्छति । स्वर्गो वा मूर्त्तिमानेष, वृषभ यो गवा पतिम् । विप्रे गुणयुते दद्यात् स वै स्वर्गे महीयते । प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ ! । तस्माद्ददाति यो धेनु प्राणानेष प्रयच्छति । गाव शरण्या भूतानामिति वेदविदो विदुः । तस्माद्ददाति यो धेनु शरण स प्रयच्छति । न वधार्थं प्रदातव्या न कीनाशे न नास्तिके । गोजीविने न दातव्या तथा गौर्भरतर्षभ ! । ददत् स तादृशाना वै नरो गां पापकर्मणाम् । अक्षय नरक यातीत्येवमाहुर्मनीषिणः । न कृशा पापवत्सां वा वन्ध्या रोगान्वितां तथा । न व्यङ्गा न परिश्रान्ता दद्याद्गा ब्राह्मणाय च । दशगोसहस्रदो हि शक्रेण सह मोदते । अक्षयान् लभते लोकान्नर शतसहस्रद ॥ भा॰आनु॰ ६६ अ॰

**गोदारण** न॰ गा भूमि दारयति दृ—णिच्—ल्यु । १ला- ङ्गले अमर । २कुद्दाले हेमच॰।

**गोदावरी** गा स्वर्गं ददाति स्नानात् दा—वनिप् ङीप् रश्चान्तादेश । स्वनामख्याते नदीभेदे सा च नदी दक्षिणस्यां दण्डकारण्यसमीपस्था यथाह "स तस्य शर- भङ्ग स दण्डकारण्यमाश्रित । नदीं गोदावरीं रम्या- माश्रित्य न्यवसत्तदा" भा॰व॰२७६अ॰ । "ततो गोदा- वरीं प्राप्य नित्यं सिद्धनिषेविताम् । गवामयमवाप्नोति वासुकेर्लोकमुत्तमम् भा॰व॰८५अ॰। "गङ्गे ! च यमुने ! चैव गोदावरि ! सरस्वति ! । नर्म्मदे । सिन्धु । कावेरि ! जलेऽस्मिन् सन्निधिं कुरु"। जले तीर्थावाहनमन्त्र ।

**गोदुग्ध** न॰ ६त॰ । गो क्षीरे । भावप्र॰ तद्गुणा उक्तास्त्र माक्य गोशब्दे दर्शितम् । वर्णभेदेन गोदुग्धस्य गुणास्त- त्रैव "कृष्णाया गोर्भवं दुग्ध वातहारि गुणाधिकम् । पीताया हरते पित्त तथा वातहर भवेत् । श्लेष्मलं गुरु शुक्लाया रक्तायाश्चापि वातहृत् । बालवत्सविव- त्सानां गवां दुग्धं त्रिदोषकृत् । वष्कयिण्यास्त्रिदोषघ्नं तर्पणं बलकृत् पयः । जाङ्गलानूपशैलेषु चरन्तीनां यथो- त्तरम् । पयो गुरुतरं स्नेहो यथाहार प्रवर्त्तते । स्वल्पान्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम् । तत्तु बल्यं परं हृद्य स्वस्थानां गुणदायकम् । पलालतृणका- र्पासबीजज रोगिणो हितम्" राजनि॰॥ "गवा प्रत्यूषसि क्षीरं गुरु विष्टम्भि दुर्जरम् । तस्मादभ्युदिते सूर्ये यामं यामार्द्धमेव वा । समुत्तार्य पयोपाद्यं तत् पथ्यं दीपनं लघु । विवत्साबालवत्सानां पयो दोष- समीरितम् । यस्तु यत्सैकवर्णायाश्चश्वेतकृष्णायोरपि" दशाहाद्वा मासपर्यादा आईच्छङ्गी च या भवेत् । तासां गवां हित क्षीरं शृत वाऽशृतमेव वा । गवां सितानां वातघ्नं कृष्णाना पित्तनाशनम् । श्लेष्मघ्नं रक्तवर्णानां मीनं हन्ति कपिलापयः" राजनि॰ ।

**गोदुग्धदा** स्त्री गोदुग्ध ददाति सम्पादयति दा—क । चणिकातृणे राजनि॰ । तद्भोजनाद्गोदुग्धवृद्धे- रस्यास्तथात्वम् ।

**गोदुह्** त्रि॰गा दोग्धि दुह—क्विप् ६त॰। १गोदोहके(दोयाल) "चिर निदध्यौ दुहत स गोदुह" माघ । १गोपे च "चेतोऽस्माक गुणवद्गुणं गोदुहा देहमेतत्" उद्भट॰ दुह—क । गोदुहोऽप्यत्र पु॰ ।

**गोदोह** पु॰ भावे घञ् । ६त॰। "१गोदोहने ।" "रुद्रायतने भूमौ गोदोहात् कोटिहोमाञ्च" बृ॰स॰ १६अ॰। कर्मणि घञ् । "अकर्मकधातुभिर्योगे देश कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञ इति वाच्यम् वार्त्ति॰ अस्यार्थ

मासमास्तो गोदोहमास्तो इत्यादौ सर्वेषामकर्मकधातूनां व्याप्तिगर्भितस्वार्थपरतायां तात्पर्यग्राहकमिदं वार्त्तिक यथाह हरिः

"कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते। अतएव कर्मभिर्युक्तो धातवोऽपरकर्मकाः। तस्य कर्मणि भावे च निमित्तत्वाय कल्पते" इति। अस्याय भावः मासमास्ते गोदोहमास्ते इत्यादौ धातोरेव सम्बन्धपूर्वकासनादौ आसनादिकरणक सम्बन्धे वा निरूढलक्षणाया व्यापकत्वेनसकर्मकम्। तत्र धातोरव्याप्यर्थक त्वाया प्रधानक्रियाया अकर्मकत्वात् दुहादिषु पाठाभावाच्च गौणकर्मण्यपि लकारासम्भवेन भाव एव लकारत्वेन मासमास्यते इत्येव प्रयोग। द्वितीयार्थलक्षणादानु प्रधानक्रियाया सकर्मकतया कालादेव तत्कर्मत्वेन उपलक्ष्मतेऽत्र लकारत्वेन मास आस्यते गोदोह आस्यते इति प्रयोग इति विवेक। अत्र कालेऽनभिधानात् क्तयोगे न तेभ्य इति द्योतितमिति मनोरमायां स्पष्टम्। २गोदुग्धे च "हौ गोदोहोद्भवं घृतम्" अमर। आधारे घञ्। ३गोदोहनकाले च तत्कालस्य मुहूर्त्ताष्टमभागात्मकः यथाह था॰त॰ विष्णु पु॰ "ततो गोदोहमात्रं वै कालं तिष्ठेत् गृहाङ्गने। अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया" गोदोहनकालस्य मुहूर्त्ताष्टमभागात्मकः "आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम्। मुहूर्त्तस्याष्टमं भागमुद्वीक्षेतातिथिर्भवेत्" मार्क॰ पु॰ एकवाक्यत्वात्" था॰ त॰ रघु॰।

गोदोहन न॰ भावे ल्युट् ६त॰। १गोर्दोहने। आधारे ल्युट्। २गोदोहनकाले। "न ह्यतेऽवस्थानमपि गोदोहनं क्वचित्" भाग॰१।१९।३९। आधारे ल्युट् ङीप्। गोदोहनी गोदोहनाधारपात्रे गार्ग्याम् स्त्री जटाधर।

गोद्रव पु॰ द्रवति द्रु—अच् ६त॰। गोमूत्रे राजनि॰।

गोधन न॰ गवां धन समूहः। १गोसमूहे गौरेव धनमस्य। २गोरूपधनवति त्रि॰। गौरेव धनम्। ३गोरूपे धने न॰। "अद्यैव किं चिरेण स व्रजामः सह गोधनैः" हरिव॰ ६६अ॰ "गोधनेषु प्रतोलीषु नरद्वारस्थलेषु च। अपस्करदोषेषु परिस्थिताश्च शोभनाः" भा॰वि॰३७अ॰ धन—रवे भावे अप् गोर्धनमस्य रव इव रवोऽस्य। ४स्थूलाग्रबाणे पु॰ शब्दक॰ हरिव॰ मूल दृश्यम्।

गोधर पु॰ गां पृथिवीं विष्टम्भकतया धरति धर—अच्। महीधरे पर्वते शब्दार्थचि॰

गोधर्म्म पु॰ गोरिव धर्मः। मैथुनेऽविचाररूपे गोधर्मे धर्मे "गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः (दीर्घतमाः) भा॰आ॰१०४अ॰ उतथ्यशब्दे १०७५पृ॰ दृश्यम्।

गोधा कौटिल्ये कण्ड्वादेराकृतिगणत्वात् नामधातु पर॰ अक॰ सेट्। गोधायति अगोधायीत्।

गोधा स्त्री गुध्यते वेष्ट्यते बाहुरनया करणे घञ्। धनुर्गुणाघातवारणाय प्रकोष्ठे १बध्यमाने चर्मणि। "बद्धगोधाङ्गुलित्रवान्" भा॰ व॰ १७अ॰ "गोधाङ्गुलित्रभुजा गाण्डीवभृद्योमा रथाटवी" माघ। "तलघटघटाशब्दो गोधाघातादभूत्तयोः" भा॰ द्रो॰ १२८अ॰। कर्त्तरि अच्। (गोसाप) इति ख्याते २सर्पभेदे स्त्री अमर "श्वाविधं शल्यकं गोधा खड्गकूर्मशशास्तथा। भक्ष्यान् पञ्चनखेषु" इत्यनुद्यैकतोदत "मनुना तस्याः पञ्चनखेषु भक्ष्यतयाऽभिहितम्। तन्मांसगुणादि भावप्र॰उक्तं यथा "गोधामांसमुष्णं वीर्य्ये वाता॰ बलं ... स्निग्धं तक्तोयाभ्यां कालितां सूक्ष्मविहितां वम्। तद्वेदु वेसवाराद्यैः प्रोक्तो वा विधानतः। विपाके मधुरा गोधा वातपित्तप्रणाशिनी। कषाया कटुका प्रोक्ता कफघ्नी बलवर्द्धिनी।" सा तु स्थलजलभेदाद्द्विधा। स्वार्थे क। अल्पार्थे। गोधाया अपत्यम् वा ढक्। गौधेर मद्य शुभ्रा॰ ढक्। गौधेय उदीचा॰ मते आरक्। गौधार तदपत्ये पुंस्त्री ढकि स्त्रीत्वे ङीप् इति भेद।

गोधापदी स्त्री गोधाया इव पादौ मूलमस्याः पादत्वात् जातित्वाद्वा कुम्भपद्या॰ ङीषि पद्भाव। (गोयालिया) लताभेदे। स्वार्थे क। अल्पार्थे रत्नमाला।

गोधायस् त्रि॰ गां दधाति धा—बा॰ असुन् ६त॰। गोधारके "गोधायस वि धनसैरदर्दः" ऋ॰१०।६९।७।

गोधावीणाका स्त्री गोधाया चर्मणा नद्धा वीणा स्वार्थे क। स्वगोधाचर्मनद्धवीणायाम्। "गोधावीणाका काण्डवीणाश्च पत्नीवादयन्त्युपगायन्ति" कात्या॰श्रौ॰ १३।३।१७

गोधास्कन्ध पु॰ गोधेव स्कन्धोऽस्य। विट्खदिरे। राजनि॰

गोधि पु॰ गोभिर्नेत्रैः धीयते यस्मिन् आधारे इन्। १ललाटे अमरः गुध—इन्। २गोधायां सर्पभेदे शब्दचि॰ गोधि—स्वार्थे क, गोधेव क अत इत्त्वं वा। गोधिका (गोसाप) गोधायाम् अमर।

गोधिकापुत्र पु॰६त॰। १गोधायाम्बके सर्पात् गोधायामुत्पन्ने (सोना गोसाप) इति ख्याते २सर्पभेदे पु॰ स्त्री शब्दार्थचि॰।

गोधिनी स्त्री गुध–णिनि । वृहतीभेदे राजनि०।

गोधुम पु० गुध–बा० उम । गोधूमे शब्दच० ।

गोधूम त्रि० गुध–ऊम। १नागरङ्गे २व्रीहिभेदे च (गोहुम) च मेदिनि तद्भेदादि भावप्र०उक्तं यथा“गोधूमः सुम-नोऽपि स्यात् त्रिविधः स च कीर्त्तितः । महागोधूम इत्याख्यः पश्चाद्देशात् समागतः । मधूली तु ततः कि-ञ्चिदल्पा सा मध्यदेशजा । निःशूको दीर्घगोधूमः क-चिन्नन्दीमुखाभिधः । गोधूमो मधुरः शीतो वातपित्त-हरो गुरुः । कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत् सरः । जीवनो वृंहणो वर्ण्यो रुच्यो मैर्यस्थिरत्वकृत् । कफप्रदः नवीनो न च पुराणः पुराणयवगोधूम-क्षौद्रजाङ्गलमांसभुगिति” वाग्भटेन वसन्ते उक्तत्वात् ।. मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः । शुक्रला वृंहणी पथ्या तद्वन्नन्दीमुखा स्मृता” तस्य कृतान्नशब्दे २१८१पृ० पाकविशेषो दृश्यः ।

गोधूमक पुस्त्री गोधूम इव कं शिरोऽस्य। राजिमत् सर्प-भेदे अहिशब्दे ५८१ पृ० सुश्रुतवाक्यं दृश्यम् ।

गोधूमचूर्ण ६त०। (मयदा) इति ख्याते पदार्थे “शुष्कगो-धूमचूर्णेन किञ्चित् पुष्टां तु रोटिकाम्” भाव०प्र०। कृता-न्नशब्दे दृश्यम् ।

गोधूमसम्भव न० सम्भवत्यस्मात् सम्+भू–अपादाने अप् गोधूमः सम्भवोऽस्य । सौवीरे काञ्जिकभेदे राजनि०।

गोधूमसार पु०६त०। (गोहमेरपालो) इति ख्याते गोधूमस्य सारांशे तत्करणप्रकारः पाकराजेश्वरे “निस्तुषान् गोधूमांस्तद्दूखले कण्डयित्वा सायङ्काले मृत्तिकादिपात्रे जले मग्नान् कृत्वा परदिने प्रभातसमये उपरिस्थं जलं क्रमेण दूरीकृत्याऽधःस्थं सारभागमेव शुष्कं कृत्वा पात्रान्तरे स्थापयेदिति” । [गोधोमिकाया राजनि०।

गोधूमी स्त्री गां धूमयति धूम+णिच्–अण् गौरा० ङीष् ।

गोधूलि स्त्री गवां खुरोत्थितो धूलिरत्र काले। गवां प्रचार-देशात् गृहागमनकाले गोखुरोद्धृतधूलियुक्ते समयभेदे सर्वं कार्यं यथा “सन्ध्यातपारुणितपश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । एवं गवां खुरपुटो-द्धूलितैरजोभिर्गोधूलिरेव कथितो भगणेन योगः” पी० धा० धृतवाक्योक्त उपयमशब्दे १२७५।७६पृ० अस्य विहितिर्यथा“तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः । अपां गोधूलियोगे वा स्त्रीकार्यं गमनं चरेत् । प्राच्या-मूर्ध्वं प्रतीच्यास्तु गोधूलिं वर्जयेन्नृप । दक्षिणे चाभि-जिन्नैवमुत्तरे च निशां तथा” । ज्यो० त० वराहः गोरजस्तु शब्दोऽप्यत्र उपयमशब्दे २५७५।७६पृ० उदा०

गोधेनु स्त्री गौर्धेनुः जात्या समासे परनिपातः । दुग्धवत्यां सवत्सायां गवि

गोधेर त्रि० गुध–एरच् । गोप्तरि उणादिकोष

गोध्र पु० गां भूमिं धरति धृ–मूलवि० क । महीधरे पर्वते

गोनन्दी स्त्री गवि जले नन्दति नन्द–अच् गौरा०ङीष् । १सारसपक्षिणि हारा० स्कन्दस्य २गणभेदे पु० “प्रियक-श्चैव नन्दश्च गोनन्दश्च प्रतापवान्” भा०शल्य०४६अ०

गोनर्द पु० गवि जले नर्दति नर्द–अच्। १सारसखगे मेदि० गवा जलेन नर्दति । २कैवर्त्तीमुस्तके न० मेदि० । गवा वाचा नर्दते अच्। ३देशभेदे पु० स च कूर्मविभागे वृ०सं० १४ अ०दक्षिणस्यामुक्तः “अथ दक्षिणेन लङ्का” इत्युपक्रमे “दशपुरगोनर्दकेरलाः” । सोऽभिजनोऽस्य अण् । गौनर्द तद्देशवासिनि बहुषु अणो लुक् । तद्देशवासिषु ब० व० । गोनर्दनीचम्बुद्रान् वैदेहका-त्यानय स्मृगति” वृ०सं० ८अ० ।

“तद्राजेऽपि अण् । गौनर्द तस्य पे “काश्मीरराजो गोनर्दोदरदाधिपतिर्नृपः” काश्मीर राजो गोनर्द कद्रूपाधिपतिस्तथा” हरि०८१अ० बहुषु तस्य लुप् । गवि इवे नर्दते नर्द–अच् । ४महादेवे पु० “गोनर्दो गोप्रभायश्च गोवृषेश्वरवाहनः” भा०शा०२८६अ०। दक्षकृत शिवस्तुतौ । गोनर्दे देशे भव “एङ प्राचां देशे” पा० वृद्धसंज्ञत्वात् छः । गोनर्दीय तद्देशभवे त्रि०प्राचोऽन्यमते अण् । गौनर्द तत्रार्थे त्रि० ।

गोनर्दीय पु० गोनर्दे देशे भवः एङादित्वेन वृद्धसंज्ञत्वात् छ। पतञ्जलिमुनौ हेमच० । तस्य गोनर्ददेशोद्भवकथा वृहत् कथायां दृश्या शरवोपोढातेऽभाभि दिङ्मात्रमुक्ता ।

गोन(ना)स पु०स्त्री०गोरिव नासा अस्य वा नसादेशः। मण्डलि सर्पभेदे (गोखुराखाप) अमरः स्त्रियां जातित्वात् ङीष्। दीर्घमध्य इति हेमचन्द्रः । अहिशब्दे ५१८पृ०सुश्रुतवाक्य दृश्यम् । गोनसस्तुदाकरोऽस्त्यास्य अच् गौरा० ङीष् । २ओषधिभेदे स्त्री । सुश्रुते गवादनादि तस्य १९६१ पृ० उक्तम् । दीर्घमध्यश्च श्वेकान्तमणौ हेमच०। [मिनि च

गोनाथ पु० ६त० । १वृषे राजनि० । २भूमिनाथे ३गोस्वा-

गोनाय पु० गां नयति नी–अण् । १गोपे शब्दार्थचि० “तदाधा गोनायोऽश्वनायः पुरुषनायः” इति छा०उप० “गोनायः गोपालकः” भा० ।०

**गोनिष्यन्द** पु० गोर्निष्यन्दते निस्यन्द–अच् ५ त०। गोमूत्रे राजनि०। तस्य गोतो निष्यन्दमानत्वात्तथात्वम्।

**गोप** पु०स्त्री गां भूमिं वा पाति रक्षति पा–क। (गोयाला) १जातिभेदे स्त्रियां ङीप्। "व्याधाञ्छाकुनिकान्" गोपान् मनु। "मणिबन्ध्यां तन्तुवायात् गोपजातेश्च सम्भवः" पराशर "सच्छूद्रौ गोपनापितौ" इत्युक्ते तस्य सच्छूद्रत्वम्। २ग्रामाधिकृते ३भूरक्षके, च पु०। ४गोष्ठाध्यक्षे च मेदि०। गोरक्षकमात्रे च। "गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनु। "नन्दगोपगृहे जाता यशोदा गर्भसम्भवा" देवी भा०। "गोपवधूटी दुकूलचौराय" भाषा० "तद्वत् तापसानिव गोपांश्च वनचारिणः" भा० व० १२ अ०।

गोपयति गुप–अच्। ६रक्षके। "सर्वे देवा भुवनस्यास्य गोपाः" भा० आनु० १० अ०। कर्मणि चिकर्म्मण्युपपदे गुप–अण्। भूगोपादि तत्पुरुषस्तु पालके। "दिव्यास्त्रविन्महातेजाः कर्णो वैकर्त्तनो वृषः। सेनागोपश्च कथम्" भा० कर्ण ८ अ०। "पुरगोपे वृकोदरे" भा० आ० २०१अ०। स्त्रियां षषान्तत्वात् ईप्। गुरुषो० गौरा ङीष् पा०। "शान्ति गोप्यो जगुर्गुणान्" रघु। ७ उपकारके त्रि० शब्दर०। गां जलं पिबति पा–क। ८ बोले शब्दार्थचि०।

**गोपक** त्रि० गोप वा स्वार्थे क गुप–ण्वुल्। १गोपे २बहुग्रामाध्यक्षे। ३रक्षके टाप् स्त्रियां ङीप्। ततः शिवा० अपत्ये अण्। गौपिकः गोपिकापत्ये पुंस्त्री।

**गोपकन्या** स्त्री गोपस्य कन्येव प्रियतया। १शारिवौषधौ राजनि०। ६त०। गोपजातिकन्यायां च "पश्चीगोपकन्याश्च रात्रौ सकाश्य कामवित्" नाम दामोदरेत्येव गोपकन्यास्तदाऽब्रुवन्" हरिवं०७७ अ०।

**गोपकर्कटिका** स्त्री गोपप्रिया कर्कटिका शाक० त०। (राखालशसा) ख्याते वृक्षे राजनि०।

**गोपघोण्टा** स्त्री० गोपप्रिया घोण्टा शा० त०। "बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत्। घटव्यामेव सा घोण्टा गोपघोण्टेति कीर्त्तिता" शब्दर० उक्ते १वृक्षे। २इन्द्रिकोशी, रत्नमा०। ३विकङ्कतवृक्षे (बैँची) राजनि०।

**गोपति** पु० ६त०। गवां पशूनां पत्यौ १शिवे, २वृषे (षाण्ड) "रक्षसां वधमापन्न सिंहानामिव गोपतिम्" रामा०। भूमिपतौ ३नृपे ४श्रीकृष्णे, किरणपतौ ५सूर्ये, ६स्वर्गपतौ शक्रे, मेदिनि। ७ऋषभनामौषधौ राजनि०। "गोपालिर्गोपतिर्यामो गोचर्मवसनो हरः" भा० आनु० १७अ० शिवसहस्रनामोक्तौ। "उत्तरो गोपतिर्गोप्ता" विष्णुस० "गवां पालनात् गोपवेशधारणात् गोर्महीतस्याः पालनाद्वा गोपतिः" भा० "छित्वेन निहतं गोष्ठे गोः सत्तृषेव गोपतिम्" कि०४।२२। गोस्वामिनि च हारा०। "शुवा यस्मिन् गोपतौ स्यात् वशी" रघु०८।११ "गोपतौ गवां गवाशिषन् यजमाने" वेददी०। सूर्यस्य किरणपतित्वात् तथात्वम् "मार्त्तण्डो गोपतिः श्रीमान् कृतघ्नश्च प्रतापवान्"। आदित्यहृदयम् "तपसाराध्य वरदं देवं गोपतिमीश्वरम्" भा० आ० १७१ अ० सूर्यकन्यातपतीविवाहोक्तौ" ८असुरभेदे "गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना" हरिवं० १६१ अ०।

तस्य भावः त्व–गोपतित्व पत्यन्तत्वात् यत्। गोपत्य गोपतिभावे न० "येनांशेन हृता गावः कश्यपेन महात्मना। स तेनांशेन जगतीं गत्वा गोपत्यमेष्यति" हरिवं० ५६ अ०।

**गोपथ** पु० अथर्ववेदीयब्राह्मणभेदे।

**गोप(ष्प)द** न० गो पदं पदस्थापनयोग्यस्थानम्। "गोष्पदं सेवितासेवितप्रमाणेषु" पा० उक्तार्थे सुट्। गवामसेविते वनादौ। १गोसेविते गोर्गतिगोचरे स्थाने २गोपदमात्रप्रमाणे क्षेत्रे न० तद्भिन्नार्थे न सुट्। ४गोक्षुरके।

**गोपदल** पु० गोपदं गोचरणन्यासयोग्यं स्थानं तदाकारं वा लाति ला–क। गुवाकवृक्षे तस्य गोचरणन्यासयोग्यस्थानव्यत्वात् तदाकारमूलकाण्डत्वाद्वा तथात्वम्।

**गोपन** न० गुप–गोपने रक्षणे भावे ल्युट्। १अपह्नवे ज्ञातस्य कर्मणोऽप्रकाशने २रक्षणे च "सैन्येन महता युक्तं भरद्वाजस्य गोपने" भा० भी० ५२अ०। "शान्त्या महाभारणे गोपने च" भा० आनु० ४६ अ०। चु०गुप–दीप्तौ भावे ल्युट्। ३दीप्तौ। गुप्य–ईर्ष्याकुलत्वयोः भावे ल्युट्। ४ईर्ष्यायाम् ५व्याकुलत्वे च। चु०गुप दीप्तौ भावे युच् गोपना ६दीप्तौ स्त्री।

**गोपनीय** त्रि० गुप–गोपने रक्षणे वा कर्मणि अनीयर्। १अप्रकाश्ये २रक्षणीये च। "गोपनीयमिदं दुःखमिति मे निश्चिता मतिः" भा० शान्ति० १४६ अ०। "गोपनीयं प्रयत्नेन न वाच्यं यस्य कस्यचित्" तन्त्रसा०

**गोपव(व)धू** स्त्री ६त० गोपस्य वधूरिव प्रियत्वात्।

१शारिवौषधौ भावप्र० २गोपजातिस्त्रियां "गोपवधूटी दुकूलचौराय" भाग०। "प्रहर्तिमगमन् किल यस्य गोपवध्व" भाग०।१।८।१८। अत्र शुकट् बभूवत्वस्य चर्य्यवादित्वमाह स्म शब्दाल्पविद्ययेति वस्तुप्रत्तोरूपप्रत्ययेन निष्पन्नत्वादिति। वस्तुत उपप्रत्ययस्याकित्वात्ललोपाभावप्रसङ्ग'। किन्तु "वङ्गोपव" उणा० उप्रत्यये धत्वान्तादेशेन सिद्धत्वेन अन्तरङ्गत्वशान्तिरमेव न्याय।

**गोपभद्र** न० गोपे भद्रमिव। १शालूके शब्दर० गोपे भद्रा। २काश्मीरीवृक्षस्त्री राजनि०। स्वार्थे कन्। ३गम्भारीवृक्षे रत्नमाला शालूकादीनां गोपप्रियत्वात् तथात्वम्।

**गोपरस** पु० गां जलं पिबति पा—क गोपः रसोऽस्य। बोले शब्दरत्ना०।

**गोपराष्ट्र** पु० ब०व०गोपप्रधानं राष्ट्रं शा०त०। भारतवर्षस्थे आभीरप्रधाने जनपदभेदे। "अत ऊर्द्ध्वं जनपदान्निबोध गदतो मम" इत्युपक्रमे "अश्मकाः पांशुराष्ट्राश्च गोपराष्ट्राः करीतयः" भा० भी० ९अ०।

**गोपरिचर्य्या** स्त्री ६त०। गोसेवायां तत्प्रकारो हेमा०दा० उक्तस्तत्रादौ ब्रह्मपुराणे

"वन्दनीयाश्च पूज्याश्च गावः सेव्यास्तु नित्यशः। तथा। "गवाङ्गोष्ठे स्थितानान्तु यः करोति प्रदक्षिणम्। प्रदक्षिणीकृतं तेन जगत् सदसदात्मकम्।" विष्णुः "गावः पवित्रा माङ्गल्या गवि लोकाः प्रतिष्ठिताः। गावो वितन्वते यज्ञान् गावः सर्वाघसूदनाः। गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना। षडङ्गमेतत्परमं माङ्गल्यं सर्वदा गवाम्। शृङ्गोदकं गवां पुण्यं सर्वाघविनिसूदनम्। गवां कण्डूयनञ्चैव सर्वकल्मषनाशनम्। गवां ग्रासप्रदानेन स्वर्गलोके महीयते।" पद्मपुराणे "सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव।। नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च भूयो भूयो नमो नमः। मन्त्रस्य स्मरणादेव गोदानफलभाग्भवेत्"। आदित्यपुराणे "लवणं च यथाशक्त्या गवां ये वै ददयुत। तेषां पुण्यकृता लोका, गवां लोकं व्रजन्ति ते। योऽग्रं भक्त्या किञ्चिदप्राश्य दद्याद्गोभ्यो नित्यं गोव्रती सत्यवादी। शान्तो वृद्धो गोसहस्रस्य पुण्यं संवत्सरेणाप्नुयाद्धर्मशील"। देवीपुराणे "गोपालको गवां गोष्ठे यस्तु धूमं न कारयेत्। मक्षिकाकीटनरके मक्षिकाभिः स भक्ष्यते। वत्सवृद्धान्तु गां यस्तु दुग्ध्वा पिबते नरः। वाहि-

ताऽस्थाचिरं तिष्ठेत् क्षुधार्त्तो वै नराधम"। महाभारते "गोकुलस्य तृषार्त्तस्य जलान्ते वसुधाधिप। उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम्। सत्वा गवार्थे शरणं शीत-वात-श्रम महत्। आसप्तमं तारयति कुलं भरतसत्तम!"। ब्रह्मपुराणे "सदोषा गौर्गृहे जाता परिपाल्या सदा स्वयम्। दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रः सुसंयतः। अनाथानां गवां यत्नात्कार्यस्तु शिशिरे मठः। पुण्यार्थं यत्र दीयन्ते तृण-तोये स्थानानि च"। हारीतः "द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत्। चतुर्थे त्रिस्तनञ्चैव यथान्यायं यथा बलम्"। ब्रह्मपुराणे "आषाढ्यां कार्त्तिक्याञ्च पौष्यां माघ्यां च सर्वदा। न दुह्यीयाद्गवां क्षीरं सर्वं वत्साय निक्षिपेत्। न पर्यस्तान्वाहयेच्चैव न गां भारेण पीडयेत्। युगादिषु युगान्तेषु षडशीतिमुखेषु च। दक्षिणोत्तरगे सूर्ये तथा विषुवतोर्द्वयोः। सङ्क्रान्तिषु च सर्वासु ग्रहणे चन्द्रसूर्ययोः। पञ्चदश्याञ्चतुर्दश्यां द्वादश्यामष्टमीषु च। उपचारो गवां कार्यो मासि मासि यथाक्रमम्। लवणस्य तु चत्वारि पलान्यष्टौ घृतस्य च। परकीयस्य दुग्धस्य तथा देयानि षोडश। शालिशतं शीतलस्यापि जलस्य च पलानि च। आदौ विचार्य पयसः परिमाणं बलं रुचिम्। आकस्मिकन्तु दातव्यं पुण्यार्थन्तु गवाह्निकम्। प्रभाते लवणं यत्र दीयते च ततो जलम्। ततस्तृणानि भोज्यञ्च पेषणं मासवर्जितम्। निशि दीपः सततञ्चैव दिव्या पौराणिकी कथा। एवं कृते महीं पूर्णां रत्नैर्दत्त्वा भवेत् फलम्। गोप्रदानासु यत्पुण्यं गवां संरक्षणाद्भवेत्। मनुष्यैस्तु पतोयाद्यैर्गावः पाल्याः प्रयत्नतः। देयाः पूज्याश्च पोष्याश्च प्रतिपाल्याश्च सर्वदा"। तथा "तृणोदकाद्येषु वनेषु मत्ता क्रीडन्तु गावः सहसा सवत्साः। क्षीरं प्रयच्छन्तु सुखं स्वपन्तु शीतातपव्याधिभयैर्विमुक्ताः। इमं मन्त्रं स शुद्धात्मा जपेन्नित्यं समाहितः। गच्छन् तिष्ठन् जपन् जिघ्रन् भुञ्जन् क्रीडन् प्रसृतस्खलन्। महाभयेषु सर्वेषु समेषु विषमेषु च। प्रयाणकाले च तथा श्रोतव्यमभयप्रदम्"। तथा "ग्रासपानादिकं देयं निशि दीपः सुभास्वरः। इतिहासपुराणानां व्याख्यानं सोपमोषणम्। अन्नसृष्टैर्यथाशक्त्या परिचर्या यथाक्रमम्। ताडनाक्रोशखेदाश्च स्वप्नेऽपि न कदाचन। तासां मूत्रपुरीषे तु नोद्वेग

**गोपाली** स्त्री गोपालशब्दादर्शोऽस्त्यत्र अच् गौरा० ङीप् । १गोपालकर्कट्याम् राजनि०। गोपालस्य पत्नी ङीप् । २गोपपत्न्याम् । गां पालयति पालि-अण् ङीप् सुग्ध० । ३गोपालयित्र्यां ४कुमारानुचरे मातृभेदे च "अक्षजाता च गोपाली बृहदम्बालिका तथा" भा० श० ४७ अ० ।

**गोपाष्टमी** स्त्री गोपप्रियाष्टमी । कार्त्तिकस्य शुक्लाष्टम्याम् । 'शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः । तद्दिने वासुदेवोऽभूत् गोपः पूर्वं स वत्सपः । तत्र कुर्य्यात् गवां पूजां गोग्रासं गोप्रदक्षिणम् । गवानुगमनं कार्य्यं सर्वान् कामानभीप्सता" कूर्मपु०।

**गोपिका** स्त्री गोपायति गुप-ण्वुल् । १गोपालयित्र्याम् गोप्येव स्वार्थे क ह्रस्व । २गोपपत्न्याम् । [ त्रिका० ।

**गोपित्त** न० गोः पित्तमिव । गोरोचनाख्ये गन्धद्रव्यभेदे

**गोपिन्** स्त्री गोपायति गुप-णिनि। १रक्षितरि स्त्रियां ङीप् सा च २श्यामालतायाम् शब्दच०। अतिशयेन गोपी इष्ठन् टिलोपः । गोपिष्ठ गोप्तृतमे त्रि०। "कामचारस्य वा कामाथाय गोपिष्ठो गोपायादिति वा" शत० ब्रा० २।२।३।२ "गोपिष्ठः गोपायितृतमः" भाष्यम् ।

**गोपिल** त्रि० गुप-इलच् । गोप्तरि ततश्चतुरर्थ्यां षञ् । गौपलेय गुपिलनिर्वृत्तादौ त्रि०।

**गोपी** स्त्री गोपजाति स्त्री जातौ ङीप् । १गोपजातिस्त्रियाम् । वृन्दावनस्थगोप्यश्च श्रुतिदेवमुनिकन्यारूपा यथा पद्मपु० पाता० "गोप्यस्तु श्रुतयो ज्ञेया ऋधिका गोपकन्यका । देवकन्याश्च राजेन्द्र ! न मानुष्य कथञ्चन"। तत्र श्रेष्ठा राधाचन्द्रावलीविशाखाललितादयः । मूलम् उज्ज्वलमणौ दृश्यम् । "इत्येव दर्शयन्त्यस्ताश्चैव गोप्योऽयचेतसः" भाग० १०।१।२२ । स्क० प्रभा० ख० तु चन्द्ररूपकृष्णस्य कलारूपता तासामुक्ता यथा । "ततो गोप्यो महादेवि ! आद्याया षोडश स्मृता । तासां नामानि ते वक्ष्ये तानि श्लोकमना शृणु । लम्बिनी चन्द्रिका कान्ता क्रूरा शान्ता महोदया । भीषणी नन्दिनी शोका सुपूर्णा विमलाऽक्षया । शुभदा शोभना पुण्या हंस-स्यता कलाः क्रमात् । हंसएव मन कृष्णः परमात्मा जनार्द्दन । तस्यैता, शक्तयो देवि ! षोडशैव प्रकीर्त्तिता चन्द्ररूपी तत कृष्णः कलारूपास्तु ता स्मृता सपूर्णमण्डला तासां मालिनी षोडशी कला । प्रतिपत्तिथिमारभ्य विहरत्यासु चन्द्रमाः । षोडशैव कला यास्तु गोपीरूपा वरानने । एकैकशस्ता संभिन्ना सहस्रेण पृथक् पृथक्" । गोपायति गुप-अच् गौरा० ङीप् । २रक्षिकायां स्त्रियाम् "गीताभि गोप्या कलमं व्रज व्रज" माघ । स्वार्थे क । गोपिका तत्रार्थे "सहासमालोकयति स्म गोपिका" माघ ।

**गोपीगीता** स्त्री भाग० १०स्क० उक्तायां गोपीभिः कृतकृष्णस्तुतौ सा च "जयति तेऽधिकं जन्मना व्रज" इत्याद्येकत्रिंशत्तमाध्यायस्था ।

**गोपीजनवल्लभ** पु० गोप्येव जनस्तस्य वल्लभः । श्रीकृष्णे "गोपीजनवल्लभाय स्वाहा" तन्त्रसारे तन्मन्त्र । गोपीभर्त्रादयोऽप्यत्र "गोपीभर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी" पदाङ्कदूतम् ।

**गोपीत** पु० स्त्री गौर्गोरोचनेव पीत । खञ्जनभेदे । वृ० स० ४५ अ० "पीतो गोपीत इति क्लेशकरः खञ्जनोदृष्टः" तस्य दर्शने क्लेशकारितोक्ता ।

**गोपीथ** न० पा-भावे थक्-"गोपीथेत्यादि" पा०नि० गोः सोमस्य पीथ । सोमपाने। "प्रति त्व चारुमध्वरं गोपीथाय प्रहूयसे" ऋ०१।१९।१ । "गोपीथाय सोमपानाय" भा० । गावः पिबन्त्यस्मिन् आधारे थक् । २तीर्थे गोर्जलावतरणे सोपाने तीर्थस्य जलावतरणसोपानत्वात्तथात्वम् । "गोपीथ तीर्थमाख्यातम्" उणादि वृ० । गुप-भावे थक् नि० । ३रक्षणे पु० "गोपीथाय जगत्सृष्टेः काले स्वस्वांश्युतात्मकः" भाग० ४।२२।५० । "जगत्सृष्टेर्गोपीथाय रक्षणाय' श्रीधर । "अजातयत्, पृतना गोपीथाय मधुद्विष" भाग० १।१०।२६ । "गोपीथाय रक्षणाय" श्रीधर । गोपीथाय हित यत् । गोपीथ्य तत्र हिते त्रि० "अश्विना इत्या गोपीथ्याय हि दधाथ तत् पुरुरवो यशोज" ऋ० १०।९५।११ ।

**गोपुच्छ** पु० गौ पुच्छ इव पुच्छो यस्य । १गोलाङ्गूलाख्ये वानरे हेमच० "सर्ववानरगोपुच्छा यस्याद्या भजन्ति वै" (च सुग्रीवम्) शा०प० २८।अ० । "गोपुच्छैर्हरिभिर्मर्कटकुलैर्निभिर्मर्द्दितम्" (आश्रमम्) भाग० ३।२१।४२ । "गोपुच्छशालावृकमर्कटाश्च" भाग० ८।२।१७ । गोपुच्छाकारत्वात् २हारभेदे अमर । ६त० । ३गोलाङ्गूले न० । "गोपुच्छस्ये वल्मीकगेऽथ वा दर्शन भुजङ्गस्य" वृ० स ९५ अ० । तत शर्करा० स्वार्थे अण् । गोपुच्छ तत्रार्थे त्रि० ।

**गोपुटा** स्त्री गोरिव पुटमस्याः । स्थूलैलायाम् राजनि० ।

पा॰ आर्षे प्रयोगे पा स्तुस्य । "सा सतेव महाबाल पुत्र गोमतितीरजम्" भा॰ पि॰ २७ अ॰ । न तु कृष्णान्त शब्दान्तरम् केषाञ्चित् तथा कल्पनं तु प्रामादिकम् । गौस्तदस्त्यि अस्याम् मतुप् ङीप् (भागाइ) ख्यातायां १ नद्याम् "भोजनं यत्र तत्रापि शयनं हट्ट मन्दिरे । मरणं गोमतीतीरे" उद्भट ।

गोमतल्लिका स्त्री प्रशस्ता गौः (जाति) "प्रशंसा वचनैश्च" पा॰ नित्यस॰ परलि॰ । प्रशस्ते गवि पुंस्यपि स्त्रीत्वमेव । "प्रशंसावचनैश्चेति" पा॰सूत्रे वचनग्रहणं रूढमात्रशब्दपरिग्रहार्थं तेन ये यौगिका प्रशस्तशोभनादयः ये च विशेषवचनाः शुचिशाब्दादयः ये च गौणा इत्यत्र सिंहोमाणवक इत्यादौ प्रशंसां बोधयन्ति ते सर्वे व्युदस्यन्ते" सिद्धा॰ । प्रशंसावचनरूढशब्दाश्चामरे पठिता यथा "मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनययः शुभावहो विधि" । गोमचर्चिकाप्यत्रार्थे स्त्री ।

गोमत न॰ गवां मतम् । गव्यूतौ शब्दार्थ॰ ।

गोमत्स्य पु॰ गौरिव स्थूलो मत्स्यः । सुश्रुतोक्ते नादेये मत्स्यभेदे । "तत्र नादेया रोहितपाठीनपाटला राजीवर्मि गोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्र प्रभृतयः"

गोमथ त्रि॰ गां दुग्ध मथति मथ–अण् ६त॰ । गोदुहे गोपे । तत इत्वर्थ्यां कुमुदा॰ ठक् । गौमथिक तत्सन्निकृष्टदेशादौ त्रि॰ ।

गोमन्त पु॰ सह्यपर्वतविवरस्थे पर्वतभेदे । "ततस्तु गता गमिष्याम सह्यस्य विवरं गिरिम् । गोमन्तमिति विख्यात नैकशृङ्गविभूषितम्" हरिवं॰ ९६अ॰ । तद्वर्णनञ्च "एव वय जरासन्धाद्भीत क्षतत्रिक्रियपा । सामर्थ्य चात्र सम्बन्धाद् गोमन्त समुपाश्रिता । त्रियोजनायत सर्पत्रिस्कन्ध योजनादधि । योजनान्ते शतद्वार वीर विक्रमतोरणम्" भा स १२ अ॰ ।

"तद्गच्छ कृष्ण । शैलेन्द्र गोमन्त तु नगोत्तमम्" तत्रैव । जरासन्धेन तत्र कृष्णयुद्धकथा तत्पर्वतदाहकथा च हरिवं॰९९अ॰इत्यादौ । "मथुरापूर्वे हिमवद्गोमन्तचित्रकूटस्था" वृ॰ स॰ १६ अ॰ ।

गोमन्द पु॰ पर्वतभेदे । "क्रौञ्चद्वीपे महाक्रौञ्चो गिरीरत्नचयाकर । सम्पूज्यते महाराज । चातुर्वर्ण्येन नित्यदा । गोमन्दः पर्वतो राजन् ! सुमहान् सर्वधातुक ।

यत्र नित्य निवसति श्रीमान् कमललोचनः" भा॰ भी॰ १२अ॰ ।

गोमय पुन॰ गो पुरीष गो+मयट् अर्द्धर्चादि । (गोबर) १गो पुरीषे तद्गुणादि गोशब्दे २६८१पृ॰ दृश्यम् । "अथास्त जीर्णदेहाया सन्ध्यायाय विगत । रागाच्छाया प्रसूताया न गोर्गोमयमाहरेत्" शङ्खार्णवि॰ स्मृति । गोमयस्य श्रेष्ठताकारणम् ।

"शत १०० वर्षसहस्राणां तपस्तप्त सुदुष्करम् । गोभि पूर्वं विसृष्टाभिर्गच्छेम श्रेष्ठतामिति । अस्मत्पुरीषस्नानेन जन पूयेत सर्वदा । शकृता च पवित्रार्थं कुर्वीरन् देवमानुषा । ताभ्यो वर ददौ ब्रह्मा तपसोऽन्ते स्वय प्रभु । एव भवत्विति विभुर्लोकांस्तारयतेति च" । तत्र लक्ष्म्या वासो यथा गोलक्ष्मीसंवादे "अवश्य मानना कार्या तवास्माभिर्यशस्विनि । । शकृन्मूत्रे निवस त्व पुण्यमेतद्धि न शुभे । । श्रीरुवाच । दिष्ट्या प्रसादो युष्माभि कृतो मेऽनुग्रहात्मकः । एव भवतु भद्र व पूजितास्मि सुखप्रदा ।" इति भा॰ शा॰ दानधर्मे उक्तम् । "गोमय यमुना साक्षात् गोमूत्र च सरस्वती" काशीख॰ । "गोमयाद् वृश्चिको जायते" शास्त्रकारप्रवाद "दग्धाङ्गना गोमयगोमुखानि" माघ । "शुचि देश विविक्त च गोमयेनोपलेपयेत्" मनु । २तदात्मके त्रि॰ स्त्रियां ङीप ।

गोमयच्छत्र न॰ गोमये तदाधारस्थाने छत्रमिव । "शमीन्त्र" (छातिया) । त्रि॰ स्वल्पार्थे ङीप् स्वार्थे क । गोमयच्छत्रिकापि तत्रार्थे स्त्री हारा ।

गोमयप्रिय न॰ गोमय प्रियमस्य साधनत्वात् । भूतृणे त्रिलोक्ये रत्नमाला ।

गोमयोत्था स्त्री गोमयादुत्तिष्ठति उद्+स्था–क टाप् । (गुबरियापोका) कीटभेदे हेमच॰ ।

गोमयोद्भव त्रि गोमयादुद्भवति उद्+भू-अच् । १गोमयजाते २आरग्वधे (सोंदाल) वृक्षे च पु शब्दर॰ ।

गोमहिषदा स्त्री कुमारानुचरे मातृभेदे । "शृणु मातृगणान् राजन् । कुमारानुचरानिमान्" इत्युपक्रमे "यशोदा गोमहिषदा गोविषाणी च भारत ।" भा॰श॰४७अ॰ ।

गोमांस न॰ ६त । गवां मांसे तद्गुणादि गोशब्दे २६८१पृ॰ उक्त "गोमांसभक्षणे प्राजापत्य चरेत्" सुमन्तुः तच्चा ज्ञानत , ज्ञानतस्तद्भक्षणे चान्द्रायण यथाह शातातप "अगम्यागमने चैव मद्यगोमांसभक्षणे । शुद्ध्यै चान्द्रा

स्वाकारत्वात् टङ्किमालयात् भूमौ गह्वरापतनगुहाया स्त्री ङीप् ।

**गोमूत्र** न॰ ६त॰ । (चोना) इति ख्याते गोर्मूत्रे गोशब्दे २६८१ पृ॰ तद्गुणाद्युक्तम् । "शुद्धिर्विजानता कार्य्या गोमूत्रेणोदकेन वा ।" "गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा" "गोमूत्रेण चरेत् स्नानं द्वौ मासौ नियतेन्द्रियः" मनु ।

**गोमूत्रिका** स्त्री गोमूत्रस्येव गतिरस्त्यत्र ठन् । चित्रालङ्कारभेदे तल्लक्षणमलङ्कारशब्दे ३९० पृ॰ दृश्यम् । सा च पादार्द्धश्लोकविपरीतभेदाच्चतुर्विधा । दिङ्मात्रमुदाह्रियते"

म।द।ने।वि।क।सा।द्वा।न।वा।धा।नो।ध्य।वि।णा।द्वि।भि।
व।द।पे।द्वि।क।स।द्वा।म।यु।ध।मा।ध्य।यि।णा।चि।भि।

माघे १९ स॰ ४६ श्लोके तल्लक्षणान्तरं मल्लिनाथोक्तं यथा "वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः" ।

षोडशकोष्ठद्वये पङ्क्तिद्वये द्वयं द्वयं क्रमेण विलिख्य एकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरिति तदुद्धारः । गोमूत्रप्रचार प्रकारे स्त्री॰ कन् टापि अत इत्वम् । गोमूत्रतुल्ये वक्रसरलभावे २प्रचारादौ । "गोमूत्रिकाप्रचारेषु" दशकु॰ 'गोमूत्रतुल्यवक्रसरलप्रचारेषु' (ताम्बुडु) ख्याते ३वृक्षभेदे स्त्री राजनि॰ ।

**गोमृग** पु॰स्त्री गवाकृतिर्मृगः । गवये तस्य गवाकृतित्वात् तथात्वम् । "अश्वतूपरो गोमृगस्ते प्राजापत्याः" यजु॰ २४।१। स्त्रियां जातित्वात् ङीष् ।

**गोमेद** पु॰ गौरिव मेदति मिद-अच् । १मणिभेदे २द्वीपभेदे तन्नामनिरुक्तिर्यथा "गोमेदे गोपतिर्नाम राजाभूल्लोकविश्रुतः । याज्योऽभूद्यज्ञिकस्तासामासीत्तस्यामी मतो मुने । स तेषु हरियज्ञाय प्रसृतेषु महान् गुरून् । यते,त गोतम कोपादगमत् सोऽगमत् स्वयम् । यज्ञवाटेऽस्य तागावो दग्धाः कोपाग्निना मुने । तन्मेदसा मही व्याप्ता गोमेदः स ततोऽभवदिति" युक्तिकल्पतरुः । ३प्लक्षद्वीपस्थे वर्णचलभेदे "तद्वर्षोपक्रमे मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्वताः । तत्रैव तेषां नामान्यभिधाय "गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा । सोमकः सुमना शैलो वैभ्राजश्चैव सप्तमः" विष्णु पु॰ । स्वार्थे क । मणिभेदे तस्य परीक्षादि युक्तिकल्पतरावुक्तं यथा "हिमालये वा सिन्धौ वा गोमेदमणिसम्भवः । स्वच्छकान्तिर्गुरु स्निग्धो वर्णाढ्यो दीप्तिमानपि । पवक्व॰ पिञ्जरो धन्यो गोमेद इति कीर्त्तितः । चतुर्द्धा जातिभेदस्तु गोमेदेऽपि प्रकाश्यते । अ श्रुप॰ शुक्लवर्णः स्यात् क्षत्रियो रक्त उच्यते । आपीतो वैश्यजातिस्तु शूद्रस्त्वानील उच्यते । छाया चतुर्विधा श्वेता रक्ता पीताऽसिता तथा । गुरुप्रभाश्च सितवर्णरूपः स्निग्धो मृदुर्नीतिमपाण्डुरागः । स्वच्छस्तु गोमेदमणिर्धृतोऽयं करोति लक्ष्मीं धनधान्यवृद्धिम् । वर्णैर्विरूपोऽतिखरोऽम्यमान स्नेहोपलिप्तो मलिन खरोऽपि । करोति गोमेदमणिर्विनाशं सम्पत्तिभोगे बलवीर्यरागैः । ये दोषा हीरके प्रोक्ता गोमेदमणावपि । परीक्षा वङ्कित कार्य्या शाणे वा रत्नकोविदैः ॥ स्फटिकैश्च कुर्वन्ति गोमेदगतिरूपकम् । शुद्धस्य गोमेदमणेस्तु मूल्य सुवर्णतो द्वैगुण्यमाहुरेके । अन्ये तथा विद्रुमतुल्यमूल्य तथा परे माषरतुल्यमाहुः । चतुर्विभागानपि धारण परिसम्मतम्" । अत्र सत्कालुष्यशोधक यथाह सुश्रुत "तत्र (जले) सप्त कालुष्यप्रसादनानि भवन्ति तद्यथा कतकगोमेदकविसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति" । स्वार्थे क । द्वीपभेदे । "शाक तत शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च । द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति" सि॰ शि॰ ।

**गोमेदसन्निभ** पु॰ गोमेदेन तुल्यमित्यस॰ । दुग्धपाषाणे राजनि॰ ।

**गोमेध** पु॰ मेध-वधे आधारे घञ् ६त॰ । गोसवाख्ये यज्ञभेदे गोसवशब्दे विवृतिः "गवां मेधमवाप्नोति अप्सरोभिश्च मोदते" भा॰ आनु॰ १०६ अ॰ ।

**गोऽम्भस्** न॰ ६त॰ । गोमूत्रे राजनि॰ ।

**गोयज्ञ** पु॰ गवा कृतो यज्ञः । १गोसवयज्ञे तच्छब्दे विवृतिः । गा उद्दिश्य यज्ञः । २श्रीकृष्णेन गोपानां हितार्थं वृन्दावने प्रवर्त्तिते गोवर्द्धनगिरियज्ञप्रवर्त्तिते गवां अर्चनोत्सवकारके ३व्यापारभेदे तत्कथा हरिवं॰ ७२ अ॰ । "शरद्येव समायातां प्राप्तायां प्रावृषः क्षये । नील॰ चन्द्रार्कवर्णैश्च रचितं बहुभिर्दिनैः । फलैः प्रवालेन समभिच्छादयनोपगम् । नवमाकारविटप कलावरणमण्डितम् । वियातमूर्वविततं पवनाभोगवाटिकम् । अर्चयागोगिरि देवं शारदैव उपवेशितः । वानतवैविंप्रायैश्च बर्हापीडैश्च दर्पितैः । वराटाभिश्च प्रवर्ष्माभि पुष्पैः यार्तिकालया । विराव गावः पुण्यां

गिरियज्ञः प्रवर्त्त्यताम्। पूज्यतां त्रिदशैः यज्ञो गिरि-यज्ञाभिरिज्यताम्। गोयज्ञं कारयिष्यामि बलादेव न संशयः"। एवं श्रीकृष्णेनोक्ते गोपवाक्यं यथा "यत्त्वयाऽभिहितं वाक्यं गिरियज्ञं प्रति प्रभो। कथ्यतां क्रियते यज्ञो येनाभिमतं सङ्गोदये। स्थितं गवामङ्गलार्थं। श्रीमान् गिरिमहस्त्वयम्। त्वत्प्रणीतोऽद्य गोपानां गवां हेतोः प्रवर्त्त्यताम्। भाजनान्युपकल्प्यन्तां पयसः पेशलानि च। कुम्भाश्च विनिवेश्यन्ताम् उदपानेषु शोभनाः। पूर्य्यन्तां पयसा नद्यो द्रोण्यश्च विपुलायताः। भक्ष्यं भोज्यञ्च पेयञ्च तत्सर्व्वमुपनीयताम्। भाजनानि च मांसस्य न्यस्यन्तामोदनस्य च। त्रिरात्रञ्चैव सन्दोहः सर्व्वघोषस्य गृह्यताम्। विशस्यन्ताञ्च पशवो भोज्या ये महिषादयः। प्रवर्त्त्यताञ्च यज्ञोऽयं सर्व्वगोपसमङ्कुलः। आनन्दजननो घोषो महान् मुदितगोकुलः। तूर्य्यप्रणादघोषैश्च वृषभाणाञ्च गर्ज्जितैः। वत्सानाञ्च रवैश्चैव गोपानां हर्षवर्द्धनः। दधिह्रदं घृतावर्त्तं पयःकुल्यासमाकुलम्। मांसराशिप्रकृत्याढ्यं प्रकाशौदनपर्वतम्। स प्रावर्त्तत यज्ञः स गिरेर्गोभिः समाकुलः। तुष्टगोपगणाकीर्णो गोपनारीमनोहरः। अथाधिरूढपर्य्यन्ते पर्य्याप्ते यज्ञविधौ। यज्ञे गिरेस्तथा सौम्ये चक्रुर्गोपा द्विजैः सह। यजनान्ते तदन्नन्तु तत्पयो दधि चोत्तमम्। मांसञ्च मायया कृष्णो गिरिर्भूत्वा समश्नुते। तर्पिताश्चापि विप्राग्र्यास्तुष्टाः सम्पूर्णभोजनाः। उत्तस्थुः प्रीतमनसः स्वस्ति वाच्य यथासुखम्। भुक्त्वा चावभृथे कृष्णः पयः पीत्वा च कामतः। सन्तुष्टोऽस्मीति दिव्येन रूपेण प्रजहास वै। तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम्। गिरिमूर्द्धि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः। भगवानपि तेनैव रूपेणाच्छादितः प्रभुः। सह तैः प्रणतो गोपैर्ववन्दात्मानमात्मना। तमूचुर्विस्मिता गोपा देवं गिरिवरे स्थितम्। भगवंस्त्वद्वशे युक्ता दासाः किं कुर्म्म? किङ्कराः। स उवाच ततो गोपान् गिरिप्रभवया गिरा। अद्य प्रभृति वाच्योऽहं गोषु यद्यस्ति वो दया। अहं वः प्रथमो देवः सर्व्वकामकरः शुभः। मम प्रभावाच्च गवामयुतान्युपभोक्ष्यथ। शिवश्च वो भविष्यामि मद्भक्तानां वने वने। रंस्येऽहं सह युष्माभिर्यथा दिवि गतस्तथा। ये चेमे प्रथिता गोपा नन्दगोपपुरोगमाः। एषां प्रीतः प्रदास्यामि गोपानां विपुलं धनम्। पर्य्याप्नुवन्तु क्षिप्रं मां गावो वत्ससमाकुलाः। एवं मम परा प्रीतिर्भविष्यति न संशयः" ७४ अ०।

गोयान न० गवा युक्तं यानम्। गवारूढे याने (गगड) "गोयानेनागतस्तूर्णं पादाभ्यां शुभचारिणा" सुश्रुत गोयाने मैथुननिषेधमाह मनु "मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः। गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्"।

गोयूति स्त्री "गोर्यूतौ छन्दसि" पा०अध्वपरिमाणे वार्त्ति० छन्दोऽध्वपरिमाणभिन्ने न वान्तादेशः। गोगतौ।

गोरक्ष पु० गा रक्षति सेवनात् रक्ष–अण् उप० स० (चाकुलिया) १मताभेदे २नागरङ्गे मे'द०। ३वृषभनामौषधौ हेम०। ४गोपालके त्रि०। भावे घञ्। ५गोरक्षणे च। "कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्" मनुः।

गोरक्षक त्रि० गा रक्षति रक्ष–ण्वुल् ६त०। (राखाल) गोपालके "गोरक्षकान् वाणिजकान् तथा कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्" मनु।

गोरक्षकर्कटी स्त्री कर्म०। क्षुद्रकर्कट्याम् (राखालकाकुड) भावप्र०। [ २गोधूमे च जटा०।

गोरक्षजम्बू स्त्री गोरक्षे गोपे जम्बूरिव। १घोण्टाफले

गोरक्षतण्डुली स्त्री गोरक्षं तण्डुलो बीजं यस्याः। (गोरक्षचाकुलिया) क्षुपभेदे रत्नमाला।

गोरक्षतुम्बी स्त्री गोरक्षी तुम्बी। कुम्भाकारतुम्ब्याम् राजनि०

गोरक्षदुग्धा स्त्री गोरक्षं गोपोषकं दुग्धं निर्य्यासोऽस्याः। मालवप्रसिद्धे क्षुपभेदे गोरक्षीक्षुपे राजनि०।

गोरक्षी स्त्री० गां रक्षति रक्ष–अण् ङीप् उप०स०। मालवप्रसिद्धे क्षुपभेदे राजनि०। [ मेदि०।

गोरङ्कु पुंस्त्री गवा वाचा रङ्कुरिव। पक्षिभेदे नग्नके

गोरट पु० गवि रटति रट–अच्। दुष्खदिरे राजनि० तस्य गो प्रीणनाय रटनात् तथात्वम्।

गोरण न० गुर–भावे ल्युट्। उद्योजने उद्यमे अमर०।

गोरथ पु०मगधदेशस्थे पर्व्वतभेदे।"अतीत्य गङ्गां शोणञ्च त्रयस्ते प्राङ्मुखास्तदा। कुशचीरच्छदा जग्मुर्मागधं क्षेत्रमच्युत। ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमम्। गोरथं गिरिमासाद्य ददृशुर्मागधं (जरासन्धपुरम्) पुरम्"। भा० स० १९ अ०।

गोरस पु०६त०। १गोदुग्धे २दध्नि ३तक्रे च हेम०। "व

वृषणः सिरातनक्रोडः। स्थूलसिराचितगण्डस्थलस्थानः सेहते यश्च। मार्जाराक्ष कपिलः करटो वा न शुभदो द्विजस्येष्टः। कृष्णोष्ठतालुजिह्वः श्वसनो यूथस्य घातकरः। स्थूलशकृन्मणिशृङ्गः सितोदरः कृष्णसारवर्णश्च। गृहजातोऽपि त्याज्यो यूथविनाशावहो वृषभः। श्यामकपुष्पचिताङ्गो भस्मारुणसन्निभो विडालाक्षः। विप्राणामपि न शुभं करोति वृषभः परिगृहीतः। ये चोद्धरन्ति पादान् पङ्कादिव योजिताः कृशग्रीवाः। कातरनयना हीनाश्च पृष्ठतस्ते न भारसहाः। मृदुसंहतताम्रोष्ठास्तनुस्फिजस्ताम्रतालुजिह्वाश्च। तनुह्रस्वोच्चश्रवणाः सुकुक्षयः स्पृष्टजङ्घाश्च। आताम्रसंहतखुरा व्यूढोरस्का बृहत्ककुदयुक्ताः। स्निग्धश्लक्ष्णतनुत्वग्रोमाणस्ताम्रतनुशृङ्गाः। तनुभूस्पृग्वालधयो रक्तान्तविलोचना महोच्छ्वासाः। सिंहस्कन्धास्तन्वल्पकम्बलाः पूजिताः सुगताः। वामावर्तैर्वामे दक्षिणपार्श्वे च दक्षिणावर्तैः। शुभदा भवन्त्यनडुहो जङ्घाभिश्चैणकनिभाभिः। वैदूर्य्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्रवर्त्माणः। पार्ष्णिभिरस्फुटिताभिः शस्ताः सर्वेऽपि भारवहाः। घ्राणोद्देशे शबलो मार्जारमुखश्च सितश्च दक्षिणतः। कमलोत्पललाक्षाभः सुवालधिर्वाजितुल्यजवः। लम्बैर्वृषणैर्मेषोदरश्च संक्षिप्तवङ्क्षणक्रोडः। ज्ञेयो भाराध्वसहो जवेऽश्वतुल्यश्च शस्तफलः। सितवर्णः पिङ्गाक्षस्ताम्रविषाणेक्षणो महावक्त्रः। हंसो नाम शुभफलो यूथस्य विवर्धनः प्रोक्तः। भूस्पृग्वालधिराताम्रवङ्क्षणो रक्तदृक् ककुद्मी च। कल्माषश्च स्वामिनमचिरात् कुरुते पतिं लक्ष्म्याः। यो वा सितैकचरणो यथेष्टवर्णश्च सोऽपि शस्तफलः। मिश्रफलोऽपि ग्राह्यो यदि नैकान्तप्रशस्तोऽस्ति" ६१अ०।

**गोलत्तिका** स्त्री गवि भूमौ लत्तिकेव। वनचरपशुस्त्रीभेदे "रोहित् कण्डूणाची गोलत्तिका तेऽप्सरसाम्" यजु० २४।३७। "रोहित् कण्डूणाची वनचरी गोलत्तिकापि" वेददी०। [तदपत्ये पु० स्त्री।

**गोलन्द** पु० ऋषिभेदे तस्यापत्यम् गर्गा० यञ्। गौलन्द्य

**गोलयन्त्र** न० सि० शि० उक्ते यन्त्रभेदे।

"अपवृत्तगरविचिह्नं क्षितिजे धृत्वा कुजेन समलग्ने। नाडीवृत्ते बिन्दुं कृत्वा धृत्वाथ जलसमं क्षितिजम्। रविचिह्नस्य छाया पतति कुमध्ये यथा तथा विधृते। उडुगोले कुजबिन्द्वोर्मध्ये नाड्यो द्युजाताः स्युः"।

"यथोक्तविधिना खगोलान्तर्भगोलं बद्ध्वा तत्र क्रान्तिवृत्ते मेषादेरारभ्य रविभुक्तराशिभागाद्यं दत्त्वा तदग्रे तच्चिह्नं तदपवृत्तग रविचिह्नमुच्यते। भगोलं चालयित्वा रविचिह्नं क्षितिजे धार्य्यम्। तथा धृते सति क्षितिजप्राच्यां विषुवन्मण्डले यत्र लग्नं तत्र खटिकया बिन्दुः कार्य्यः। तत्र क्षितिजवृत्तं जलसमं यथा भवति तथा गोलयन्त्रं स्थिरं कृत्वा भगोलस्तथा चाल्यो यथा रविचिह्नस्य छाया भगर्भे पतति। तथा कृते सति विषुवद्वृत्ते क्षितिजबिन्द्वोर्मध्ये यावत्यो घटिकास्तावत्यस्तस्मिन् काले दिनगता ज्ञेयाः। अपवृत्ते मेषादेरारभ्य प्राक्क्षितिजपर्य्यन्तं यद्राशिभागाद्यं तल्लग्नं ज्ञेयम्" प्रमिताक्षरा।

**गोलवण** न० गवे देयं परिमितं लवणम्। यावद्गवे लवणं दीयते तावन्मिते लवणे। "गोबललवणयोः" पा० प्रमाणे गम्ये एतयोः परतः पूर्वं तत्पुरुषे प्रकृतिस्वरता।

**गोला** स्त्री गां वक्रभूमिम् आधारत्वेन लाति ला—क। १गोदावरीनद्याम्। गां वाचं लाति। २सख्याम्, ३कुनट्याम्। गां दीप्तिं जलं वा लाति। ४पत्राञ्जने, ५मणिके, ६मण्डले, ७बालक्रीडनके ८दुर्गायाञ्च मेदि०।

**गोलाक्ष** पु० ऋषिभेदे तस्य गोत्रापत्यम् अश्वा० फञ्। गौलाक्षायण तद्गोत्रापत्ये पुंस्त्री।

**गोलाङ्गूल** पु० स्त्री गोर्लाङ्गूलमिव लाङ्गूलमस्य। १वानरभेदे त्रिका०। स च कश्यपपत्न्यां क्रोधाया कन्यायां हरिनाम्न्यां जातः यथाह भा०आ० ६६अ० "नव क्रोधवशा नारी प्रजज्ञे क्रोधसम्भवा। मृगी च मृगमन्दा च हरी भद्रमना अपि" इत्युपक्रमे "हर्य्याश्च हरयोऽपत्यं वानराश्च तरस्विनः। गोलाङ्गूलाश्च भद्रं ते हर्य्याः पुत्रान् प्रचक्षते"। २कृष्णवानरे राजनि०। तल्लक्षणञ्च काशी ख० ३अ०। "गोलाङ्गूला रक्तमुखा नीलाङ्गा यूथनायकाः।"

**गोलाध्याय** पु० गोलस्वरूपादिप्रतिपादके भास्करीये ग्रन्थभेदे।

**गोलास** पु० गां भूमिं लासयति प्रकाशयति लस—णिच् अण् उप० स०। शिलीन्ध्रे हारा०।

**गोलिह** पु० गोभिर्लिह्यते लिह घञर्थे क। १वर्त्तिकायां २घण्टापाटलौ (घण्टापारुलि) च जटा०। [पारुलि] अमरः।

**गोलीढ** पु० गोभिर्लिह्यते लिह-क्त। घण्टापाटलौ (घण्टा-

**गोलोक** पु० वैकुण्ठोर्द्ध्वस्थे स्थानभेदे तत्स्थानमाहात्म्यादि ब्रह्मवै० पु० उक्तं यथा

"निराधारश्च वैकुण्ठो ब्रह्माण्डानां परोवर। तदूपरञ्चापि गोलोकः पञ्चाशत्कोटियोजनात्। ऊर्द्ध्वे निराश्रयश्चापि रत्नसारविनिर्म्मितः। सप्तद्वार सप्तसार परिखासप्तसंयुतः। लक्षप्राकारयुक्तश्च नद्या विरजया युतः। वेष्टितो रत्नशैलेन शतशृङ्गेण चारुणा। योजनायुतमानञ्च यस्यैक शृङ्गमुज्ज्वलम्। शतकोटियोजनश्च शैलश्चोच्छ्रित एव च। दैर्घ्यं तस्य शतगुणं प्रस्थे च लक्षयोजनम्। योजनायुतविस्तीर्णस्तत्रैव रासमण्डलः। अमूल्यरत्ननिर्म्माणो वर्त्तुलश्चन्द्रबिम्बवत्। पारिजातवनेनैव पुष्पितेन च वेष्टितः। कल्पवृक्षसहस्रेण पुष्पोद्यानशतेन च। नानाविधैः पुष्पवृक्षैः पुष्पितेन च चारुणा। त्रिकोटिरत्नाभरणैर्गोपीलक्षैश्च रक्षितः। रत्नप्रदीपयुक्तश्च रत्नतल्पसमन्वितः। नानाभोगसमायुक्तो मधुवापीशतैर्वृतः। पीयूषवापीयुक्तश्च कामभङ्गसमन्वितः। गोलोकस्य च संस्थानं वर्णने वा विशारद। न कोऽपि वेद विद्वान् वा वेदविद्वान् महेश्वर!"।

**गोलोमिका** स्त्री गो लोमेव लोमान्यस्य ङीप् ततः स्वार्थे के ह्रस्वो ह्रस्वः। (पाथुरी) (गोधूमा) इति च ख्यातायां १प्रस्तरिण्याम्। २क्रोष्टुकपुच्छायाञ्च। राजनि०।

**गोलोमी** स्त्री गोर्लोमेव लोम लोमवद्दल यस्याः ङीप्। १श्वेतदूर्व्वायाम्। गोलोमेव जाता अण् ङीप्। २वचायाम्। गवा वाचा लोमयति अनुकूलयति लोमन्+नामधातु–अच् गौरा० ङीप्। ३वेश्यायां हेमच०। ४गोलोमिकाशब्दे राजनि०।

**गोवतस** पु० कर्म०। गवां वत्से तत्नामह्रादयोऽमृतम् भ्रत शब्दे दृश्यम्। [ (नेक्कडेवाव) राजनि०।

**गोवत्सादिन्** पु० गोवत्समत्ति अद–णिनि ६त०। वृके

**गोवन्दनी** स्त्री गवि भूमौ वन्द्यते वन्द–कर्म्मणि ल्युट् ङीप्। १प्रियङ्गौ,अमरः २पीतदण्डोत्पले रत्नमाला।

**गोवर** न० गोषु ध्रियते धृ–बा०अच्। "गोष्ठाङ्गर्गोक्षुरक्षुण्णशुष्कचूर्णितगोमयम्। गोवरं तत्समाख्यातं वरिष्ठं रससाधने" भावप्र० उक्ते शुष्कगोमयचूर्णे (गेटा)

**गोवर्द्धन** न० वृध–णिच् भावे ल्युट् ६त०। १गवां वर्द्धने। करणे ल्युट्। २गिरियज्ञभेदे तत्प्रकारो गोयज्ञशब्दे दृश्यः वृध–णिच्–कर्त्तरि ल्यु ६त०। ३वृन्दावनस्थे पर्व्वतभेदे पु० तस्य पूजाकालो हरिभक्तिविलासे १६वि० उक्तो

यथा "प्रातर्गोवर्द्धनं पूज्य द्यूतञ्चैव समाचरेत्। भूषणीयास्तथा गावः पूज्याश्च दोहवाहनाः। श्रीकृष्णदासवर्य्योऽयं श्रीगोवर्द्धनभूधर। शुक्लप्रतिपदि प्रात कार्त्तिकेऽस्त्रेऽत्र वैष्णवैः"। "प्रातर्गोवर्द्धनं पूज्य रात्रौ जागरणं चरेत्" इति क्वचित् पाठ। तस्मात्तदिदं कर्म्म गोवर्द्धनप्राधान्येन गोप्राधान्येन च ख्यातमप्येकमेव ज्ञेयम्। तत्र दिननिर्णयमाह देवलः "प्रतिपद्दर्शसंयोगे क्रीडनन्तु गवां मतम्। परविद्धासु यः कुर्य्यात् पुत्रदारधनक्षयः"। निर्णयामृतधृत पुराणान्तरवचनम् "या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप!। पूजामात्रेण वर्द्धन्ते प्रजा गावो महीपते!"। ततः प्रातर्गोवर्द्धनं पूज्येति पूर्व्वाह्णतात्पर्य्यकं द्वितीयासर्गस्तु सर्व्वथा निषिद्ध तद्यथा "नन्दाया दर्शने रक्षा बलिदानं दशासु च। भद्रायां गोकुलक्रीडा देशनाशाय जायते"। पुराणसमुच्चये तु सम्भावितचन्द्रोदयो द्वितीयासंयोगः [illegible] निषिध्यते "गवां क्रीडा दिने यत्र रात्रौ दृश्येत चन्द्रमा। सोमो राजा पशून् हन्ति सुरभी पूजकांस्तथा"। तदुदयसम्भावनञ्च निर्णयामृते निर्णीतं यथा "प्रतिपद्यापराह्णिकत्रिमुहूर्त्तव्यापिन्यां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते तदुक्तमग्न्याधानविषये छन्दोगातातमेन" द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी। अग्न्याधानञ्चतुर्द्दश्यां परतः सोमदर्शनादिति"। अपराह्णश्च पञ्चधा विभक्तस्याह्नश्चतुर्थो भाग। ततश्च यत्र प्रतिपदि पराह्णत्रिमुहूर्त्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भावनमिति। अन्यदा तूत्तरैव प्रतिपत्तत्र गृहीता तथैवोक्तं पुराणसमुच्चये 'वर्द्धमानतिथौ नन्दा यदा सार्द्धत्रियामिका। द्वितीया वृद्धिगामित्वादुत्तरा तत्र चोच्यते"। किञ्च। यदा पूर्णप्रतिपत् परत्र निष्क्रामति तदाप्युत्तरैव कार्य्या यथोक्तं भविष्योत्तरे "यथा द्वादशभिर्मासैर्मासो वृद्धो मलिम्लुच। तथैवाष्टोरात्रवृद्धा तिथि प्रोक्तो मलिम्लुच। यथा मलिम्लुचः पूर्व्वं त्याज्योग्राह्यस्तथा परः। त्याज्या तिथिस्तथा पूर्व्वा ग्राह्या चैव तथोत्तरेति" निर्णयामृतमतम् किन्तु वृद्धकौन्यायेन भूतैव मन्तु शक्यते। मद्ददत्रापि देवलादिवचनप्रामाण्यमस्तीति। अथ गोवर्द्धनपूजाविधि। तत्रैव पाद्मे "मथुरायास्तथान्यत्र कृत्वा गोवर्द्धनं गिरिम्। गोमयेन महास्थूलं तत्र पूज्यो गिरिर्यथा। मथुरायां तथा साक्षात् कृत्वा चैव प्रदक्षिणम्। वैष्णवं धाम संप्राप्य

मोदते हरिसन्निधौ"। पूजामन्त्र'। "गोवर्द्धन! धराधार! गोकुलत्राणकारक!। विष्णुबाहुकृतोच्छ्रायो गवां कोटिप्रदो भव" गोपूजामन्त्र स्कान्दे तत्रैव "लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता। घृतं वहति यज्ञार्थं मम पापं व्यपोहतु। अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः। गावो मे पार्श्वतः सन्तु गवां मध्ये वसाम्यहम्"। अथ तत्र गोक्रीडा तत्रैव "क्रोधापयेद्वापयेच्च गोमहिष्यादिकं ततः। इयान् कर्णापयेन्नोपैः क्षिप्रत्युक्तिवादनात्"। पाद्मे च तत्रैव "महिषादेस्तथा भूपा क्रीडनं चारणन्तथा"। तन्माहात्म्यञ्च तत्रैव "एष गोवर्द्धनो गावः पूजनीया विधानतः। गोवर्द्धनमखोऽस्य कृष्णसन्तोषकारकः"। "गोवर्द्धनस्याप्रतिरम्यकारि" माघ।

**गोवर्द्धनधर** पु० गोवर्द्धनं वृन्दावनस्थपर्वतभेदं धरति धर–अच् ६त०। श्रीकृष्णे नन्दनन्दने तस्य तद्धारणकथा हरि० ७५अ० यथा

"गवां तत् कदनं दृष्ट्वा दुर्दिनागमजं महत्। गोपांश्च भग्ननिधनान् कृष्णः कोपं समादधे। स चिन्तयित्वा सरक्तो दृष्टोपायो भवेनि च। आत्मानमात्मना वाक्यमिदं मूचे प्रियंवद। अद्याहमिमसुत्पाद्य सकाननवनं गिरिम्। कल्पयेयं गवां स्थानं वर्षत्राणाय दुर्द्धरम्। अयं धृतो मया शैलः पृथ्वीगृहमिवापरम्। त्रास्यन्ते सव्रजा गावो मद्वश्याश्च भविष्यन्ति। एवं सञ्चिन्तयित्वा तु कृष्णः सत्यपराक्रमः। बाह्वोर्बलं दर्शयिष्यन् समीपे तं महीधरम्। दोर्भ्यामुत्पाटयामास कृष्णो गिरिरिवापरः। स धृतः सङ्गतो मेघैर्गिरिः सव्येन पाणिना। गृहभावङ्गतस्तत्र गृहाकारेण वर्ष्मणा"। "धृत गोवर्द्धनं दृष्ट्वा परित्रातञ्च गोकुलम्। कृष्णस्य दर्शनं शक्रो रोचयामास विस्मितः" हरि० ७६ अ०।

**गोवर्द्धनधारिन्** पु० गोवर्द्धनं नगं धारयति धारि–णिनि। नन्दनन्दने श्रीकृष्णे। [ वन्ध्यायां गवि।

**गोवशा** स्त्री वशा वन्ध्या गौः जात्या समासे परनि०।

**गोवाट** न० ६त०। गोशालायां गोष्ठे "सार्गलद्वारगोवाटमध्ये गोस्थानसङ्कुलम्" हरिवं० ६१। "गोवाटेषु च ये दृष्टा परिष्टत्तार्गलेषु च। सर्वे गोष्ठाग्निषु गता व्ययमव्ययवर्चस" हरिवं० ६५ अ०।

**गोवास** पु० वस आधारे घञ्। ६त०। गवां वासस्थाने गोष्ठे "निवेशनमथा जग्मुर्जराशस्य धीमतः। गोवासमिव वीक्षन्तः सिंहा हैमवता यथा" भा स० २० अ०।

**गोवासदासन** पु० प्राच्ये देशभेदे तत्र भव "एङ् प्राचां देशे" पा० एङादेर्वृद्धसंज्ञत्वात् छ। गोवासदासनीय तत्र भवे त्रि० तद्राजे पु० "गोवासदासनीयानां वसातीनाञ्च भारत!। प्राच्यानां वाटधानानां भोजानाञ्चाभिमानिनाम्" भा० व० २३अ०।

**गोवासन** पु० गा वासयति वस–णिच्–ल्यु ६त०। गवां वासयितरि ब्राह्मणभेदे। "गोवासना ब्राह्मणाश्च दासनीयाश्च सर्वतः। प्रीत्यर्थं ते महाराज। धर्मराज्ञो महात्मनः" भा० स० ५१अ०।

**गोविकर्त्त** पु० गां विकृन्तति वि+कृत–अण् उप० स०। १गोघातके २कर्षके हालिके च। "रौद्रीयजमानस्याचावापगोविकर्त्तगृहेभ्यो गवेधुकाम्" कात्या० श्रौ० १५।३।१२। अप्रहृतां गां भूमिं विकृन्तति गोविकर्त्तः कर्षुकः गोहिंसको व्याधो वा। "अक्षावापस्य गृहेभ्यो गोविकर्त्तस्य च गवेधुका सम्भृत्य" शत० ब्रा० ५।३।१।१०। "गोविकर्त्तं मृगयासहायभूतो गोहिंसको व्याध" भा०।

**गोविकर्त्तृ** पु० त्रि० गां विकृन्तति वि+कृत–तृच् ६त०। पाकाद्यर्थं गोघातके। "आरालिको गोविकर्त्ता सूपकर्त्ता नियोधक। आसं युधिष्ठिरस्याहम्" भा० वि० २अ०। "नियोधकः बाहुयुद्धकारी।

**गोवितत** पु० गावो वितता अत्र। गोभूयिष्ठे अश्वमेधयज्ञे "याजयामास तं कण्वो विधिवद्भूरिदक्षिणम्। श्रीमान् गोविततं नाम वाजिमेधमवाप सः" भा० आ० ७४अ०। गोविनतोऽप्यत्र। "गोविनतेन शतानीक शत० ब्रा० १३।५।४।१६। "आदाय सत्त्वा दशमास्यमश्वं शतानीको गोविनतेन" शत०ब्रा० १३।५।४।२। "गोविनतो नाम वक्ष्यमाणस्तोमविशेषोऽश्वमेध" भा०। तत्स्तोमभेदा "षट्त्रिंशाः पवमाना, त्रिवृदभ्यावर्तं चतुश्चत्वारिंशाः पवमाना एकविंशान्याज्यानि त्रिणवान्युक्थान्येकविंशानि पृष्ठानि षट्त्रिंशाः पवमानास्त्रयस्त्रिंशमभ्यावर्तमग्निष्टोमसामादेकविंशान्युक्थान्येकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धि" ता० ब्रा० उक्ता।

**गोविदांपति** पु० गां वेदवाणीं विदन्ति गोविदः वेदज्ञास्तेषां पतिः अलुक्स०। परमेश्वरे "अनिरुद्धः सुरानन्दो गोविन्दो गोविदांपतिः" विष्णु स०।

क। २गोगतिस्थाने ३गोष्ठे च पु० "न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे" "नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा"। "कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा" मनु।

**गोव्रत** न० गोहत्यानिमित्तं गोषु व्रतम्। १गोहत्यानिमित्ते गोषु व्रतभेदे तच्च व्रतं विष्णूक्तं यथा। "मासमेकं कृतवापनो गवानुगमनं कुर्य्यात् आसीनास्वासीत स्थितासु स्थितः स्यात् अवसन्नाश्चोद्धरेत् भयेभ्यश्च रक्षेत् तासां शीतादिकमनिवार्य्य नात्मनः कुर्य्यात् गोमूत्रेण स्नायात् गोरसैश्च वर्त्तेत एतद् गोव्रतं गोघ्ने कुर्य्यात्" पराशरस्तु सापवादं तत्र विशेषमाह "गवां संरक्षणार्थाय न दुष्येद्रोधबन्धयोः। तद्वधन्तु न तं विद्यात् कामाकामकृतन्तथा। अङ्गुष्ठमात्रस्थूलो वा बाहुमात्रः प्रमाणतः। आर्द्रस्तु सपलाशश्च दण्ड इत्यभिधीयते। दण्डादूर्द्ध्वं यदन्येन प्रहरेद्वा निपातयेत्। प्रायश्चित्तं चरेत् प्रोक्तं द्विगुणं गोव्रतञ्चरेत्। रोधबन्धनयोक्त्राणि घातनञ्च चतुर्विधम्। एकपादञ्चरेद्रोधे द्विपादं बन्धने चरेत्। योक्त्रेषु पादहीनं स्याच्चरेत् सर्वं निपातने। गोचारे च गृहे वापि दुर्गेष्वपि समेष्वपि। नदीष्वपि समुद्रेषु खातेऽप्यथ दरीमुखे। दग्धदेशे स्थिता गावस्तस्मिन्नरोध उच्यते। योक्त्रदामकडोरैश्च घण्टाभरणभूषणैः। गृहे वापि वने वापि बद्धा स्याद्गौर्मृता यदि। तदेव बन्धनं विद्यात् कामाकामकृतञ्च तम्। हले वा शकटे पङ्क्तौ भारे वा पीडितो नरैः। गोपतिर्मृत्युमाप्नोति योक्त्रे भवति तद्वधः। मत्तप्रमत्तोन्मत्तश्चेतनो वाप्यचेतनः। कामाकामकृतक्रोधाद्दण्डैर्हन्यादथोपलैः। प्रहता वा मृता वापि तद्धि हेतुर्निपातने। मूर्च्छितः पतितो वापि दण्डेनाभिहतः स तु। उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशैव वा (पदानि)। ग्रासं वा यदि गृह्णीयात्तोयं वापि पिबेद् यदि। पूर्वव्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते। पिण्डस्थे पादमेकन्तु द्वौ पादौ गर्भसम्मिते। पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्। पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च। त्रिपादे तु शिखावर्जं सशिखन्तु निपातने। पादे वस्त्रयुगञ्चैव द्विपादे कांस्यभाजनम्। पादोने गोद्वयं दद्याच्चतुर्थे गोद्वयं स्मृतम्। निष्पन्नसर्वगात्रन्तु दृश्यते वा सचेतनम्। अङ्गप्रत्यङ्गसम्पूर्णे द्विगुणं गोव्रतं चरेत्। पाषाणेनैव दण्डेन गावो येनाभिघातिताः। शृङ्गभङ्गे चरेत् पादं द्वौ पादौ नेत्रपातने। लाङ्गूले कृच्छ्रपादन्तु द्वौ पादावस्थिभञ्जने। त्रिपादञ्चैव कर्णे तु चरेत् सर्वं निपातने। शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च। यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते। व्रणभङ्गे च कर्त्तव्यः स्नेहाभ्यङ्गस्तु पाणिना। यवसञ्चापहर्त्तव्यो यावद्दृढबलो भवेत्। यावत्सम्पूर्णसर्वाङ्गस्तावत्तं पोषयेन्नरः। गोमेव ब्राह्मणस्याग्रे नमस्कृत्य विसर्जयेत्। यद्यसम्पूर्णसर्वाङ्गो हीनदेहो भवेत्तदा। गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिर्दिशेत्। काष्ठलोष्टकपाषाणैः शस्त्रेणोपहतो बलात्। व्यापादयति यो गान्तु तस्य शुद्धिं विनिर्दिशेत्। चरेत् सान्तपनं काष्ठे, प्राजापत्यन्तु लोष्टके। तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चैवातिकृच्छ्रकम्। पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः। तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश। प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम्। तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः। अन्यत्राङ्कनलक्ष्मभ्यां वाहने दोहने तथा। सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः। अतिदाहेऽतिवाहे च नासिकाभेदने तथा। नदीपर्वतसञ्चारे प्रायश्चित्तं विनिर्दिशेत्। अतिदाहे चरेत् पादं द्वौ पादौ वाहने चरेत्। नासिके पादहीनन्तु चरेत् सर्वं निपातने। दहनात्तु विपद्येत अनड्वान् यदि यन्त्रितः। उक्तं पराशरेणैव ह्येकपादं यथाविधि। रोधबन्धनयोक्त्राणि भारः प्रहरणं तथा। दुर्गप्रेरणयोक्त्राणि निमित्तानि वधस्य षट्। बन्धपाशसुगुप्ताङ्गो म्रियते यदि गोपशुः। भवने तस्य नाथस्य पापं कृच्छ्रार्द्धमर्हति। न नारिकेलैर्न च शाणबालैर्न चापि मौञ्जैर्न च वल्कशृङ्खलैः। एतैस्तु गावो न निबन्धनीया बद्धा तु तिष्ठेत् परशुं गृहीत्वा। कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम्। पाशलग्नाग्निदग्धेषु प्रायश्चित्तं न विद्यते। यदि तत्र भवेत् मृत्युः प्रायश्चित्तं कथं भवेत्?। जपित्वा पावनीं देवीं मुच्यते तत्र किल्विषात्। प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन्। गवाशनेषु विक्रीणंस्ततः प्राप्नोति गोवधम्। आराधितस्तु यः कश्चिद्भिन्नकक्षो यदा भवेत्। श्रवणं हृदयं भिन्नं मग्नो वा कूपसङ्कटे। कूपादुत्क्रमणे चैव भग्नो वा ग्रीवापादयोः। स एव म्रियते, तत्र त्रीन् पादांस्तु समाचरेत्। कूपखाते तटीबन्धे नदीबन्धे प्रपासु च। पानीयेषु विपन्नानां प्राय

कौ० । पक्षे नैकवद्भाव॰ न क्लीबता च । गवि अश्वे च । पक्षे एकवद्भाव अवङ् च । तत्रार्थे न० ।

**गोष(स)खि** पु॰गौ॰ सखाऽस्य वेदे वा षत्वम् । १गोसहायके "स्तोता मे गोषखा स्यात्" ऋ० ८।१४।१। "यस्मिन्निन्द्र सोमं पिबति गोसखावम्" ऋ० ५।२७।४। ६त० अच् समा० न षत्वम् । २गो सहाये

**गोषड्गव** न० गवां षट्कम् गो+षड्गवच् । गोषट्के एव छागषड्गवादयश्छागादिषट्के न० ।

**गोषणि(सनि)** त्रि० गां सनोति ददाति सन–दाने इन् सवनादिषु पाठात् न नित्यं षत्वम् किन्तु पूर्व्वपदात् वा षत्वम् । १गोदातरि "यस्ते अश्वसनिर्भक्षोयोगोसनिस्तस्य" यजु० ८।१२। पक्षे षत्वम् । "गोषणि धियमश्व वाजसासुत" ऋ० ६।५३।१०।

**गोषद्** त्रि०गवि वाचि सीदन्ति सद–क्विप् पूर्व्वपदात् षत्वम् । स्वल्पज्ञाक्ये । गोषदितिशब्दोऽस्त्यत्राध्यायेऽनुवाके वा गोषदा० वुन् । गोषदक गोषच्छब्दयुक्ते अध्याये अनुवाके च पु० । अच् । गोपद तत्रार्थे त्रि० ।

**गोषदादि** पु० अध्यायानुवाकयोः "गोषदादिभ्यो वुन्" पा० मत्वर्थे वुन्प्रत्यय निमित्ते शब्दगणे । स च गणः पा०ग० सू० उक्तो यथा गोषद् इषेत्वा मातरिश्वन् देवस्त्वा देवीराप शश्वास्या अदेवा देवीधिय॰ रक्षोहणं युञ्जान अञ्जन प्रभूत प्रतूर्त्त कृशानु गोषद" ।

**गोषन्** त्रि० गां सनोति सन–विच् ६त० "सनोतेरन" पा० मान्तस्य नित्यषत्वनिषेधेऽपि पूर्वपदात् वा षत्वम् । गोदातरि "शशामि गोषणो नपात्" ऋ० ४।३२।२२ ।

**गोषा** त्रि० गां सनोति सन–विट् डा । सनोतेरन" पा० षत्वम् । गोदातरि "गोषा इन्द्रोनृषामसि" सि० कौ० धृता श्रुतिः "इत्था गृणन्तो महिनस्य शर्म्मन् दिवि ष्याम पार्य्ये गोषतमाः" ऋ० ६।३३।५। अत्र "घरूपेत्यादि" पा० सू० गोषाशब्दस्य तमपि परे ह्रस्वः ।

**गोषा(सा)ति** स्त्री सो–भावे–क्तिन् ऊतियूतीत्यादिना नि०, सन–भावे क्तिन् डा वा ६त० षत्वम् । १गोलाभे २गोदाने च "गोषाता यस्य ते गिर" ऋ० ८।८४,७। "गोषातौ गवां लाभे" भा० सप्तम्या डाच् एव सुत्तरत । गवां सातिर्लाभोऽस्य । ३लब्धगौ लब्धपशुके त्रि० "यत्र गोषाता धृषितेषु खादिषु" ऋ० १०।३८।१। गोषातौ लब्धपशुके" भा० ।

**गोषादी** स्त्री गां सादयति सद–णिच्–अण् उ० स० षत्वं गौरा० ङीष् । पक्षिभेदे । "गोषादी देवानां पत्नीभ्य" यजु० २४।२४। ।

**गोषेधा** स्त्री गोरिव सेध उत्सेधोयस्या पूर्वपदात् षत्वम् । दुर्लक्षणायां स्त्रियाम् । "विश्वपदीं इषदती गोषेधा विधमासत" अथ० ११।१८।४। [ जुगोष्ट ।

**गोष्ट** सघाते भ्वा० आत्म० अक० सेट् । गोष्टते अगोष्टिष्ट ।

**गोष्टोम** पु० गोषत्त स्तोमोऽत्र । उक्थसस्ये अङ्गमन्त्रात्मके १स्तोमभेदे । २तदुपलक्षिते एकाहसाध्ये यागभेदे च "स एतान् स्तोमानपश्यत् ज्योतिर्गौरायुरितीमे वै लोका एते लोका अयमेव ज्योतिरयमध्यमो गौरसावुत्तम आयुः" ता० ब्रा० ४।१।७।

"स पूर्व्वोक्तः प्रजापति एतान् स्तोमान् स्तोमशब्देन त्रिवृदादिस्तोमवन्त्यहानि लक्ष्यन्ते । तानि ज्योतिर्गौरायुरिति एतन्नामकान्यपश्यत् । तत्र ज्योतिरग्निष्टोमसस्य, गौरायुषी ते उक्थसस्ये० ज्योतिष इयं स्तोमक्लृप्तिः । त्रिवृद्बहिष्पवमान पञ्चदशान्याज्यानि पञ्चदशो माध्यन्दिनः पवमान सप्तदशानि पृष्ठ्यानि सप्तदश आर्भव एकविंशोऽग्निष्टोमसामेति । अथ गोष्टोमस्य, पञ्चदशोबहिष्पवमान त्रिवृदाज्यानि सप्तदशमाध्यन्दिनं सवनमेकविंशं तृतीयसवनम् । अथायुष्टोमस्य त्रिवृद्बहिष्पवमान पञ्चदशान्याज्यानि सप्तदशमाध्यन्दिन सवनमेकविंश तृतीयसवनमिति । एते उक्ता॰ स्तोमा इमे लोका वै भूरादिका खलु, क कतमोलोक इति बुभुत्सायामाह अयमेव लोकोज्योति, अयमध्यमोऽन्तरिक्षलोको गौः असावुत्तमस्तृतीय स्वर्लोक आयु, स्तोमत्रयस्य लोकत्रयेण सह सख्यासाम्यात् तस्मादेता एतै॰ त्रिभि स्तोमै साधनैस्त्रीन् लोकान् प्राजनयदिति शेष अथैतान् विधत्ते" भा० ।

"यदेते स्तोमा भवन्तीमानेव लोकान् प्रजनयन्त्येषु लोकेषु प्रतितिष्ठन्ति" ता० ब्रा० ८ । "यद्देषोऽतिरात्रो भवतीति वाक्यपदेतत्सर्वं व्याख्येयम् । अभिप्लवषडहस्योत्तर त्र्यह विधातुमाह" भा० "स एतन्त्र्यह पुन प्रायुङ्क्त तेन षडहेन षट्क्रतून् प्राजनयत्" ता०ब्रा०६ ।"स प्रजापतिरेत पूर्व्वोक्त त्र्यह पुन प्रयुक्तवान् । गौरायुर्ज्योतिरिति क्रमोऽत्रावगन्तव्य । तथा आपस्तम्ब "ज्योतिष्टोममग्निष्टोम रथन्तरसामानङ्गासुक्थ इहद्बृहत्सामानमायुरसुक्थ रथन्तरसामान ज्योतिष्टोम इहत्सामानमिति । तेन षडहेन, षट् क्रतून् यसन्ता-

णेन प्राजनयत् स्वदेशान् । अयार्थपादानुगुण्याय पूर्व-शिष्टेन मन्त्रेण प्रयुज्य इमयुत्तर मन्त्रं विधत्ते" भा० । "तद्देव पदृशो भवन्ति पशूनेव प्रजनयन्ति प्रत्युत्पत्ति तष्ठन्ति" त० ब्रा० १० ।

गोष्ठ न० गावस्तिष्ठन्त्यत्र घञर्थे क पत्वम् । गवां स्थाने अमर । "गोष्ठेषु गाष्ठीजनमगच्छनासमान्" माघ । गोष्ठी बहुजना कर्तृतया नास्य अच् । २गोष्ठीकर्त्तव्ये श्राद्धभेदे न० "पितृन् स्वर्गमिवेयेव पाप्य गोष्ठे तु तदुच्यते" मनुः 'गोष्ठे गोष्ठीश्राद्धे "गोष्ठ्यां शुद्ध्यर्थं मष्टमम्' इति विश्वामित्रेण द्वादशविधश्राद्धगणनाया गोष्ठश्राद्धस्य विधानात्" कुल्लू० ।

गोष्ठपति पु० ६त० । गो स्थानाध्यक्षे अमर ।

गोष्ठश्व पु० गोष्ठे श्वा अचतुरेत्यादि अच् सम० । १गोष्ठस्थे शुनि तत्तुल्ये पराश्रमके खादके व्यिस्ता २परद्वेषरि च त्रिका । पष्ठीसमासे तु न अच् समा० । गोष्ठश्वा इत्येव

गोष्ठागार न० ६त० । गोष्ठस्य सभाया बहुजनस्थानस्याग रम् । बहुजनागारे गङ्गे हारा० ।

गोष्ठाध्यक्ष पु० ६० । गोष्ठपतौ ।

गोष्ठान न० गो स्थान नेरे पूर्वपदात् पत्वम् । १गवां स्थाने गोष्ठे । "व्रज गच्छ गोष्ठानम्" यजु० १।२५ । लोके तु गोस्थानमित्येव । "गोष्ठं गोस्थानकम्" अमर ।

गोष्ठा(पा)ष्टमी स्त्री "कार्त्तिके शुक्लपक्षे तु स्मृता गोष्ठा(पा)ष्टमी बुधैः । तद्दिने वासुदेवोऽभूत् गोपः पूर्वन्तु वत्सप" इत्युक्तायामष्टम्याम् गोपाष्टमीशब्दे दृश्यम् ।

गोष्ठि स्त्री गावो वाच्यस्तिष्ठन्त्यत्र स्था-बा० कि ६त० पत्वम् । १गोष्ठीशब्दार्थे २परस्परसलापे च । "आलस्य मदमोहौ च चापलं गोष्ठिरेव च । स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च । एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः" भा० उ० १५३२ श्लो० ।

गोष्ठी स्त्री गावोऽनेकार्था वाचस्तिष्ठन्ति अत्र स्था-घञर्थे क । ६त० अम्बाम्बेति पत्वम्' गौरा० ङीष । १सभायां परिषदि । "तत्र गोष्ठीषु रथ्यासु सिद्धप्रव्रजितेषु च । भा० वि० ६ । २परस्परालापे "गोष्ठीसुखमनुभवन्त स्तिष्ठन्ति" हितो० । ३पोष्यवर्गे च । "विप गोष्ठी दरिद्रस्य" चाणक्य । ४समूहे गोष्ठशब्दे उदा० । सभायाम् अस्य पुस्त्वमपि । "स गोष्ठ्यवान् पर्वतच्छिद्रोधान् गोष्ठान् कुर्वीणां निरदिशमाला । भा० व० १७७ अ० ।

गोष्ठीपति पु० ६त० । १बहुपोष्यवर्गपालके २सभापतौ च ।

गोष्ठेक्ष्वेडिन् पु० गोष्ठे क्ष्वेडते क्ष्विड-णिनि पात्रे समि सि० । गालभे । युक्तारोह्या० आद्युदात्तताथ । एवं गोष्ठेगर्दभ गोष्ठेपटु गोष्ठेपण्डित गोष्ठेशूर गोष्ठेविजित इत्येतेऽपि पात्रेसमिता सि० । सभाप्रगल्भे सभाकुशले । पूर्ववत् आद्युदात्तत्वेणाम् ।

गोष्ठेशय पु० गोष्ठे गोस्थाने शेते शी-अच् अलुक् स० । गोरक्षार्थं गोष्ठशयनकारके । "पञ्चगव्यं पिबेत् गोघ्नो मासमासीत संयतः । गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति" याज्ञ० ।

गोष्ठ्य त्रि० गोष्ठे भव यत् । १गोष्ठे भवे । २रुद्रभेदे पु० । "नमो गृह्याय च गोष्ठ्याय च" यजु० १६।४४ ।

गोष्पद न० गो पदम्, गाव पद्यते यस्मिन् देशे वा 'गोष्पद सेवितासेवितप्रमाणेषु' पा० सेविताद्यो सुट् । गो पदजाते १गर्त्ते, २गोपदप्रमाणे च । ३गोभि सेवितदेशे ४तद्देसेविते प्रमादौ च । "बाहुभ्यां सागरं तीर्त्वा लङ्घितं गोष्पदं यथा" रामा० ल० ६८४ । "भीष्मद्रोणार्णवं तीर्त्वा कर्णपातालम् (बडवानल) समन्वम् । मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम् भा० श ७अ० । ५प्रभासक्षेत्रस्थे तीर्थभेदे । तदुत्पत्त्यादि स्क० पु० प्रभा०' इय सरस्वती पुण्या सर्वत्रैव हि विद्यते । पञ्चस्रोता प्रभासे तु दुष्प्रापा त्रिदशैरपि । तस्या यत्पञ्चम स्रोतो म्यङ्कुमत्यास्तटानि च । तस्य मध्ये स्थितं तीर्थं गोष्पदेति च विश्रुतम्" "पापिनां छिद्रि तीर्थमाद्या दृष्ट गया यता । तदाप्रभृति गोष्पदं नाम कलौ ख्यातं धरातले । यदा क्षीरोदमथनात् प्रसृता लोकमातर । तदा देवि । समन्तात् ता गतास्तीर्थं सप्तधौ । पद तत्र निमग्न च नन्दिन्याश्च शिलातले । शिलां सुराङ्कितां द्दष्ट्वा वासुदेवाङ्कितां तथा" इत्युपक्रमे देवान् प्रति नन्दिनीवाक्यम् । "दृष्ट मम पद देवा । शिलास्य विराजते । गगनाक्रमभूमिस्थ चन्द्रबिम्बमिवा परम् । अद्य प्रभृति भो देवा । त्रैलोक्ये सचराचरे । गोष्पद नाम विख्यात लोके ख्याति गमिष्यति" ।

गोस पु० गां सनु स्यति सो-क । १बोले २उषःकाले ३विभाते मेदि० ।

गोसङ्ख्य पु० गा सचष्टे सम्+चक्ष-अच् । गोपे । अमर । "गोसङ्ख्य आस कुरुसत्तमानाम्" । "तेषां गोसङ्ख्य आस वै तन्तिपालेति मां विदु ' इति च भा० वि० १०अ० ।

**गोसत्र** पु॰ गोभिः कृतं सत्रम्। गवामयनाख्ये सत्रभेदे "गावो वा एतत् सत्रमासत" तां॰ब्रा॰ ४,१,१, गवामयनशब्दे विवृतिः।

**गोसदृक्ष** पुंस्त्री गौः सदृक्षः। गोतुल्ये गवये हेम॰। २जात्यादिना गोतुल्ये त्रि॰। गोसदृशादयोऽप्यत्रार्थे।

**गोसनि** पु॰ गाः सनोति सन–इण् इन॰ पूर्वपदात् वा षत्वे प्राप्ते सनोतेरनः न षत्वम्। गोदातरि गोषणिशब्दे उदा॰ दृश्यम्। "गोसनिं वाचमुदेयम्" अथ॰३।२०।१०।

**गोसम्प्रदाय** त्रि॰ गाः सम्प्रददाति सम्+प्र+दा–"आतोऽनुपसर्गे" पा॰ अनुपसर्गेत्युक्तेः न क किन्तु अण्। गोसम्प्रदातरि।

**गोसम्भवा** स्त्री गौरिव सम्भवो लोमादिरूपाकारो यस्याः। १श्वेतदूर्वायां राजनि॰। २गोजाते त्रि॰।

**गोसर्ग** पु॰ गावः सृज्यन्तेऽत्र काले सृज–आधारे घञ्। गवां वनगमनाय मोचनकाले सूर्य्यस्य किरणानां त्यागकाले १प्रातःकाले "गोसर्गे चार्द्धरात्रे च तथा मध्यन्दिनेषु च" सुश्रु॰। [ख्याते गोधाख्ये जन्तौ।

**गोसर्प** पुंस्त्री गौरिव चतुश्चरणवत्त्वात् सर्पः। (गोसाप)

**गोसव** पु॰ गौः सूयते हिंस्यतेऽत्र सू–हिंसायाम् आधारे अप् पूर्वपदात् वा न षत्वम्। गोसत्राख्ये यज्ञभेदे "स्वर्जिता गोसवेन वा" हेमा॰ दा॰ लिङ्गपु॰। तत्कर्त्तव्यता च कात्या॰ श्रौ॰ २२,११,२ सूत्रादौ उक्ता यथा "ऋषभगोसवौ" १सू॰ "ऋषभो गोसवश्च क्रतू भवतः" कर्क "पूर्वो राज्ञः" २सू॰ "पूर्व ऋषभसञ्ज्ञको राज्ञः" कर्क "दक्षिणा ऋषभसहस्रं द्वादश वा शतम्" ५सू॰ "विकल्पेन ऋषभमुख्यं ऋषभाणां सहस्रं, द्वादशाधिकं शतं वा" (दक्षिणा) कर्क। "उक्थ्यो गोसवोऽयुतदक्षिणः" ६सू॰। गोसवसञ्ज्ञः क्रतुरुक्थ्यसञ्ज्ञो भवति अयुतदक्षिणश्च" कर्क। "वैश्यस्य इत्येके" ७सू॰ मन्यन्ते। "सर्वेषामित्यपरे" ८सू॰। स्वाराज्यकामो विशो यं पुरस्कुर्वीरन् स एतेन यजेत" ९सू॰ "राज्ञा सहिता विश प्रजाः सर्वे पुरुषा यं पुरस्कुर्वीरन् मुख्यत्वेनाङ्गीकुर्वीरन् स गोसवेन यजेत"। "आस्थण्डिलेऽभिषिच्यते" १०सू॰। "प्रतिदुराहवनीयस्य दक्षिणतः" ११सू॰। "स्थितः आगान्तुकत्वादन्ते। आहवनीयात् दक्षिणस्यां स्थण्डिले उपविष्टो यजमानः प्रतिदुहाभरोपणेन दुग्धेनाभिषिच्यते "सस्यपतिरित्येनं ब्रूयुः "गोसवयाजिनं जनाः" कर्क। "वैश्यस्तोमदक्षिणालिङ्गो मरुत्स्तोमोऽगणयज्ञो भ्रातृव्या सस्तीना वा" १२सू॰। वैश्यस्तोमदक्षिणाया यानि लिङ्गानि तान्यत्रापि भवन्ति" कर्क। गां स्वर्गं सुनोति क्विप् षत्वम्। "दातृ स्वर्गदातरि" "तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः" तिलदानमन्त्र।

**गोशस्** पु॰ गवि जले शसति शस–वा॰ क्विच् ७त॰। बोले रायसकुट।

**गोसहस्र** न॰ गवां सहस्रं दातव्यतया यत्र। तुलापुरुषादिषोडशमहादानान्तर्गते पञ्चमे महादानभेदे "अथातः सम्प्रवक्ष्यामि महादानानुकीर्त्तनम्"। "यत्तत् षोडशधा प्रोक्तं वासुदेवेन भूतले" इति चोपक्रम्य "कल्पपादपदानञ्च गोसहस्रं च पञ्चमम्" इत्युक्त्वा तद्दानप्रकार हेमा॰ दा॰ मत्स्य पु॰ उक्तो यथा

"मत्स्य उवाच। अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम्। गोसहस्रप्रदानाख्यं सर्वपापहरं परम्। पुण्यां तिथिमथासाद्य युगमन्वन्तरादिकम्। पयोव्रतस्त्रिरात्रं स्यादेकरात्रमथापि वा। लोकेशावाहनं कुर्य्यात् तुलापुरुषदानवत्। पुण्याहवाचनं कुर्य्याद्धोमं कार्य्यस्तथैव च। ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्। वृषं लक्षणसंयुक्तं वेदिमध्येऽधिवासयेत्। गोसहस्राद्विनिष्क्रम्य गवां दशकमेव"। पयोव्रतस्त्रिरात्रमिति दानदिनात् पूर्वं त्रिरात्रं पयोव्रतः स्यादित्यर्थः, अत्रादिशब्देन देशकाल–हस्तिश्राद्ध–ग्रहादिपूजा–गुरुर्त्विग्वरण–मधुपर्कदान–कुण्डवेदिवितान–चक्रलेखनपताकादीनि मत्स्यपुराणोक्ततुलापुरुषदाने विहितानि दृष्टान्ते। वृष लक्षण संयुक्त, वृषलक्षणानि, "उन्नतस्कन्धककुदम् ऋज्वलाङ्गूलकम्बलम्" इत्यादीनि वृषोत्सर्गप्रकरणे मत्स्यपुराणोक्तान्येव वेदितव्यानि, गोसहस्राद्विनिष्क्रम्येति दशोत्तरगोसहस्रादिति वेदितव्यम्, अग्रे दशाधिकगोसहस्रविनियोगदर्शनात्। यद्यपि गवां दशकमित्यत्र गोमात्रमिति तथापि उत्तरत्र "ऋत्विग्भ्यो धेनुमेकैकां दशकाद्विनिवेदयेदिति" धेनुसंशब्दनात्, पुराणान्तरे "गोसहस्राद्विनिष्क्रम्य सवत्सं दशकं गवामिति" श्रवणाच्च धेनुदशकमेवाधिवासनीयम्। इतरत्र पुनर्नावश्यं धेनुरूपत्वादर। "गोसहस्रं बहिः कुर्य्याद्वस्त्रमाल्यविभूषितम्। सुवर्णशृङ्गाभरणं रौप्यपादसमन्वितम्। अन्तः प्रवेश्य दशकं वस्त्रमाल्यैस्तु पूजयेत्। सुवर्णघण्टिकायुक्तं ताम्रदोहनिकान्वितम्। सुवर्णतिलकोपेतं हेमपट्टैरलङ्कृतम्। कौशेयवस्त्रसंवीतं माल्यगन्ध-

समन्वितम्। हेमरत्नयुतैः शृङ्गैश्चामरैश्चापि शोभितम्। पादुकोपानच्छत्रभाजनासनसंयुतम्। "दशसौवर्णिके शृङ्गे, खुरा, पञ्चपञ्चाशता"। पञ्चाशत्पलमितोऽटोऽत्र मक्ष्यन्त तथाभिधानात् वणिटकादौ सुवर्णशब्दोऽत्र षोडशमाषपरिमितहिरण्यवचनः, महेन्द्रोरित्सुवर्णशब्दस्यात्र परिमाणपरित्यागानुपपत्ते। पादुके काष्ठमय्यौ, चर्मकृते उपानहाविति भेदः। "गवां दशकमध्ये स्यात् कास्यो नन्दिकेश्वरः। कौशेयवस्त्रसंवीतो नानाभरणभूषितः। लवणद्रोणशिखरे माल्येक्षुफलसंयुतः। कुर्यात् पञ्चशतादूर्द्ध सर्वमेतदशेषतः। शक्तितः फलवाद्यस्त्रसमन्वितं यावदेव तु। गोशते वै दशांशेन सर्वमेतत् प्रकल्पयेत्"। लवणद्रोणशिखरे, लवणद्रोणोपरीत्यर्थः। नन्दिकेश्वरस्वरूपं ललितविस्तरात् "अर्द्धस्त्रिनेत्रो द्विभुजः सौम्यास्यो नन्दिकेश्वरः। वामे तु शूलमन्यहस्ते चाक्षमालासमन्वितः" इति अर्द्ध इति, अशयानानुपविष्ट इत्यर्थः। पञ्चशतादूर्द्ध पञ्चसहस्रमितं यावदिति, आभरणनन्दिकेश्वरविषयमेतत् ज्ञातव्यम्। गोशते वै दशांशेनेति गोशते देये गामेकामेकस्य दशम वेदिमध्येऽधिवासयेत्। पञ्चशतादूर्द्ध पञ्चशतत्रय यावदिति आभरणनन्दिकेश्वरत्वमादिक कुर्यादित्यर्थः। "पुण्य कालमथासाद्य गीतमङ्गलनिःस्वनैः। सर्वौषध्युदकस्नानस्नापितो वेदिपुङ्गवैः। इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः"। अत्रापि पूर्ववत् पूर्वेद्युरधिवासनं विधाय द्वितीयदिवसे ब्राह्मणवाचनानन्तरमग्नि स्थण्डिलेषु ऋत्विगुपवेशनादि पूर्णाहुतिपर्यन्तं कर्मशेषं गुरु समापयेत्। ततः पुण्यकालम् ध्यात्वानुकूललग्नशुद्धिकोटिलक्षणमासाद्य कुण्डसमीपस्थितकलशोदकेन ब्राह्मणैः स्नापितः शुक्लमाल्याम्बरधरो यजमानो वक्ष्यमाणमन्त्रानुदीरयेत्। "नमो वो विश्वमूर्त्तिभ्यो विश्वमातृभ्य एव च। लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः। गवामङ्गेषु तिष्ठन्ति भुवनान्येकविंशतिः। ब्रह्मादयस्तथा देवा रोहिण्यः पान्तु मातरः। गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः। गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम्। यस्मात् त्वं वृषरूपेण धर्म एव सनातन। अष्टमूर्त्तेरधिष्ठानमतः पाहि सनातन। इत्यामन्त्र्य तु यो दद्याद्गुरवे नन्दिकेश्वरम्। सर्वोपकरणोपेतं गोयुगञ्च विचक्षणः। ऋत्विग्भ्यो धेनुमेकैकां दशकादिनिवेदयेत्। गवां च शतमप्येकं तदर्द्धं चाथ विंशतिम्"। दश पञ्चाथवा दद्यादन्येभ्यस्तदनुज्ञया"। दानवाक्यमत्र तुलापुरुषवद्वेदितव्यम्, एते च शतप्रभृति पञ्चपर्य्यन्ता विकल्पा ऋत्विग्विषया तदानन्तर्य्यात्, ततश्चायमर्थः सिद्धो भवति गोदशकमध्यान्नन्दिकेश्वरयुतं गोयुगं गुरवे प्रतिपाद्य शेषाणामष्टानामेकैकामेकैकस्मा ऋत्विजे दद्यात्, तथा गोसहस्रमध्यात् शतद्वयं गुरवे प्रदाय एकैकं शतमृत्विग्भ्यो दद्यात्, अथ वा शतं गुरवे पञ्चाशतं पञ्चाशतमृत्विग्भ्य, अथ वा चत्वारिंशत गुरवे विंशतिं विंशतिमृत्विग्भ्य। विंशतिं, वा गुरवे दश दशर्त्विग्भ्य, दश वा गुरवे पञ्च पञ्चर्त्विग्भ्यो दद्यात् शेषा गास्तदनुज्ञया अन्येभ्योऽपि दद्यात्। दक्षिणाञ्च पूर्ववदेव दद्यात् "चतुर्दक्षिणाञ्च सुवर्णं दापयेत्" इति वचनात् यथाशक्ति सुवर्णं वा। तत पूर्ववदेव पुण्याहवाचन देवतापूजन विसर्जनादि कुर्य्यात्। "नैका बहुभ्यो दातव्या यतो दोषकरी भवेत्। बह्वयश्चैकस्य दातव्या श्रीमतारोग्यवृद्धये। पयोव्रत पुनस्तिष्ठेदेकाहं गोसहस्रदः"। इदञ्च पयोव्रतानुष्ठान, प्रकरणेषु "अयञ्च भक्ष्यमिष्यते" इति वचनात्। "श्रावयेत् शृणुयाद्वापि महादानानुकीर्त्तनम्। तद्दिनं ब्रह्मचारी स्याद्यदीच्छेद्विपुलां श्रियम्"। आथर्वणगोपथब्राह्मणे "अथातो गोसहस्रविधिर्गोष्ठ उदकान्ते शुचौ देशे शास्त्रमित्यग्निमुपसमाधाय अन्वारभ्याय जुहुयात्, आ गावस्त्वेनाद्य जुहुयात्, महामीञ्शीणामिन्द्वर सौम्यस्य सहस्र तस्या पयसि अर्पयित्वा गाव इति, एवमुभय स्रुवेण जुहुयात् पश्चादग्नेः क्षीरोदकपूर्णं कलसमश्वस्थापाशिवगागावेनेति दश गा स्नापयेत् तरमाणोऽन्या सम्भ्युक्ष्य सहस्र, तस्याः स्नानोदकेनेमिन्द्र वर्द्धय क्षत्रिय म इति, राजानमभिषिच्येमा आप इति, षड्भिर्यवोक्षमञ्जनाभ्यञ्जनानुलेपन कृत्वा सहस्रतमीं प्रथमामलङ्कृत्य गावो भगवतित्वं प्रजापती हृदयपाशादिति च पर्य्यासयेत् प्रियमथानन्द्य त्वा हिरण्यमक्षय इति सहस्रतमीमालभ्य जपेत् मया गावः पतिना सुपर्धमिति मन्त्रेणानेनार्धं दत्त्वा सहस्रतमीं पुनरप समुद्धृ भूमिहा प्रतिमन्त्रास्त्विति जपेत् सहस्र, तस्या पृष्ठतो व्रजन्तु सर्वा प्रदक्षिणीकृत्य नमस्कृत्य सविमाच्य ब्राह्मणेभ्यो निवेद्य दश गा दक्षिणा कर्णे सहस्रतमीं वस्त्रयुग्मञ्च तदपि। सप्तजन्मार्जितं पापं पुरुषैः सप्तभिः कृतम्। तत्क्षणात् विधिनानेन नाशयेद्गोमदो नरः। सर्वेषामिह दानानां फलं यत् परिकीर्त्तितम्।

तदवाप्नोति विप्रेभ्यो गोसहस्रप्रदो नर । अश्वमेध हयोत्सर्गं गोसहस्रप्रदस्तु य । ददात्योधाय दत्वाग्रं पितरस्तर्पयन्ति हि । तस्मादनेन विधिना गोसहस्रन्तु यो नर । प्रदद्यात् स विशुद्धात्मा याति तत् परमं पदमिति" । मत्स्यपुराणे "अनेन विधिना यस्तु गोसहस्रप्रदो भवेत् । सर्वपापविनिर्मुक्त सिद्धचारणसेवित । विमानेनार्कवर्णेन किङ्किणीजालमालिना । सर्वेषां लोकपालानां लोके संपूज्यते सुरै । मन्वन्तरं तिष्ठेद्राजराजो भवेत् पुन । अश्वमेधशतं कुर्याच्छिवध्यानपरायण । वैष्णव लोकमास्थाय ततो मुच्येत बन्धनात् । पितरश्चाभिनन्दन्ति गोसहस्रप्रदं शुभम् । अपि स्यात्स कुलेऽस्माकं पुत्रो दौहित्र एव च । गोसहस्रप्रदो भूत्वा नरकादुद्धरिष्यति । स यस्तत्कर्मकरो वा स्यादपि द्रष्टा तथैव च । संसारसागराद्स्मादस्मान् सन्तारयिष्यति । इति पठति य एतद्गो-सहस्रप्रदानं सुरभुवनमुपेयात्स चरेद्वापि मर्त्यो । अनुभवति सुखं वा वाच्यमानो निकामम् प्रहतकलुषदेहः सोऽपि यातीन्द्रलोकम्" ।

अन्यपुराणोक्तसद्विधिस्तत्रैव दृश्यः । ६त० । २गवां सहस्रे च । गोसहस्रं तद्दानफलं विद्यतेऽस्य अच् । गौरा० ङीप् । ३सोमवारयुतायाम् ४सङ्क्रमवारयुतायां वा । अमावास्यायाम् स्त्री । जाह्नवीस्नाने तस्यास्तथात्वगुणजनकत्वमुक्तं ति० त० व्यासेन "अमायाश्चां भवेद्वारो यदि भूमिसुतस्य च । गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी । सिनीवाली कुहूर्वापि यदि सोमदिने भवेत् । गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम्" ।

**गोसाद** त्रि० गां सादयति सद्—णिच अण् उप० स० । गोपालके गोसारथौ "गौ सदसादिसारथिषु" पा० पूर्व्वपदप्रकृतिस्वर ।

**गोसादिन्** त्रि० गां सादयति सद्—णिच्—णिनि ६त० । गोसारथौ । गोसादवत् पूर्व्वपदे प्रकृतिस्वरः ।

**गोसारथि** पु० ६त० । गोपालके सारथौ गोसादवत् पूर्व्वपदे प्रकृतिस्वरः ।

**गोस्तन** पु०गो' स्तन इव गुच्छो यस्य । १चतुर्यष्टिकहारे अमरः । ६त०। २गो स्तने च "करीरपनसास्थि गोस्तनाकाराणि" "सुदन्त गोस्तनाकार सर्वभूतगुणोद्भवम्" सुश्रु० ।

**गोस्तना(नी)** स्त्री गो स्तनइव फलमस्याः स्वाङ्गत्वात् वा ङीप् । १कपिलद्राक्षायामसर टावन्त गो' स्तनादव स्तना अस्या' ङीप् । २कुमारानुचरमातृभेदे । "शृणु मातृगणान् राजन् । कुमारानुचरानिमान्" इत्युपक्रमे" प्रभावती विशालाक्षी पालिता गोस्तनी तथा" भा० श० ४७अ० ।

**गोस्तोम** पु० गोनामक स्तोम पूर्व्वपदात् वा णत्वाभाव । एकाहसाध्ये अग्निष्टोमाङ्गे यज्ञभेदे । "गोस्तोमभूमिस्तोमवतस्तातसवामास्" आश्व० श्रौ० ८।५।२। "गोस्तोमो भूमिस्तोमोवनस्पतिसव इति त्रयः एकाहा कर्त्तव्या' नारा० वृ० । गोष्टोमशब्दे विवृतिः ।

**गोस्थान** न० ६त० । गोष्ठे अमर "मध्ये गोस्थानसङ्कुलम्" हरिव० ६१अ० । स्वार्थे क । तत्रार्थे ।

**गोस्वामिन्** ६त०। गवां स्वामिनि।"तावत् भूयो वा गोस्वामिने दत्त्वा" कात्या० श्रौ० । १५।६।१२। "गोस्वाम्यनुमते भृत्य स स्यात् पालेऽभृते भृति" मनु । "प्राजापत्य चरेत् कृच्छ्रं गोस्वामी व्रतमुत्तमम्" पराशरः । गवामिन्द्रियाणां स्वामी । २जितेन्द्रिये यतीनामुपाधिभेदे । वोपदेवगोस्वामी रूपगोस्वामी ।

**गोह** पु० गुह्यतेऽत्र गुह—घञ् बा० ऊत्वाभाव । गेहे "अद्रिमौषिजस्य गोहे" ऋ० ४,२१,६। 'गुहा यदीमौषिजस्य गोहे" ७ "विदद्गौरस्य गवयस्य गोहे" ८ "गोहे गृहे" भाष्यम् । तस्यादूरभवोदेश सुवास्वा० अण् । गौह गेहादूरभवे त्रि० स्त्रियां ङीप् ।

**गोहत्या** स्त्री ६त० । गोहनने । प्राणवियोगफलक व्यापारो हननम् यथाह दक्षिपु० "स्यात् प्राणवियोगफलकव्यापारो हननं स्मृतम् । रागात् द्वेषात् प्रमादाद्वा स्वत परत एव वा" । हत्याया ज्ञानाज्ञानकृतत्व च प्रा० त० न्यरूपि यथा
"अथ ज्ञानकृतादिनिरूपणम् । तत्र गोवधस्य बुद्धिपूर्वकत्व तदा भवति,यदि गां ज्ञात्वा एतां हन्मीति इच्छया हन्ति, तदा कामनाद्वारैव ज्ञानस्य प्रवृत्त्यङ्गत्वात्, तदभावे त्वबुद्धिपूर्व्वकत्वम् । अतएव प्रवृत्त्यङ्गज्ञानस्य कामनाव्यभिचाराभावादेव 'कृच्छ्रास्तु चतुर कुर्य्यात् गोवधे बुद्धिपूर्वके । अमत्या च द्वय कार्य्यम्, इति विश्वामित्रवचने ज्ञानाज्ञानाभ्यां द्वैविध्यमुक्तम् अन्यत्र कामाकामाभ्यामित्युक्तम् यथा बृहस्पति "कामाकामकृत त्वेव महापाप द्विधा मतम् । पुरूपापेक्षया चैव निष्कृतिर्द्विविधा स्मृता" । इत्यस्य गवयादिभ्रमेण योगोवधस्तत्र वधस्य न ज्ञानकृतत्व गोत्वेनाज्ञानात् । गोत्वेन गां जानन्नप्यन्योद्देशेन प्रहारादिना यदि हन्ति

तदापि न स्नानकृतत्व तद्विषयकदृष्टमनेकाङ्गपद्धाराभावात्"। तत्र साक्षात् परम्पराकृतव्यापारभेद मिता० उक्तो यथा "साक्षात्कर्तृ निमित्तिनोश्च भेदस्तेनैव दर्शित 'पाषाणैर्लगुडैर्वापि शस्त्रेणान्येन वा बलात्। निपातयन्ति ये गास्तु कृत्स्न कुर्युर्व्रतं हि ते। तथैव बालजस्त्रेणसपार्श्वयोत्रादिमोटनैरिति"। एतदुक्तम्भवति। पाषाणलगुडादिभिर्योत्रादिमोटनादिना वा ये गा निपातयन्ति। ते साक्षाद्धन्तारस्तेष्वेव कृत्स्न प्रायश्चित्तम्। ये तु व्यवहित रोधबन्धादिव्यापारयोगिनस्ते निमित्तिन स्तेषां न कृत्स्नव्रतसम्बन्ध किन्तु तदवयवैरेव पादद्विपादादिभिरिति तत्रावरोधादीना व्यवहितव्यापारत्वाविशेषेऽपि वचनात् कचित्पाद कचिद्द्विपाद पादोन कचिदिति" युक्तम्।

तथा गोवध प्रायश्चित्त स्वामिभेदाद्भिन्न प्रा०त० उक्त यथा तत्र ब्राह्मणस्वामिकस्य गोर्वधे मानव प्रायश्चित्त तच्च गोव्रतशब्दे दर्शित तत्र सप्तदश धेनव तन्मूल्य वा। क्षत्रियस्वामिकस्य गोर्वधे देवलोक्त तच्च तत्रैवोक्त यथा "गोघ्न षण्मासान् तच्चर्मणा परिवृतो गोग्रासाहारो गोव्रती यवागो गोभिरभिसञ्चरन् विमुच्यते"। गोग्रासाहारो गोग्रासाहर्त्ता "कर्मण्यण्" इति साधु। षण्मासयावकभक्षण द्वात्रिंशत्प्राजापत्यतुल्य दक्षिणा च विशेषानुपदेशाद् यथाशक्ति देयेति। एतज्ज्ञानादज्ञानात्तदर्द्ध स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयपरत्वे पाद। वैश्यस्वामिनो गोवधे तु शातातप "पञ्चगव्येन गोघाती मासेकेन विशुध्यति। गोमतीञ्च जपेद्विद्वान् गवा गोष्ठे च सवसेत्'। पञ्चगव्यमाह शातातप "गोशकृत् द्विगुण, मूत्र सर्पिर्दद्याच्चतुर्गुणम्। क्षीरमष्टगुणञ्चैव पञ्चगव्ये तथा दधि" तथाऽष्टगुणम्। यम "आहृत्य प्रणवेनैव उत्थाप्य प्रणवेन च। प्रणवेन समालोड्य प्रणवेनैव तत्पिबेत्। उत्थाप्य मिश्रीकृत्य। "मन्त्राभ्याने मिताक्षराया षट्त्रिंशन्मतम् जपहोमादि यत्किञ्चित् कृच्छ्रोक्त सम्भवेन्न चेत्। सर्व व्याहृतिभि कुर्यात् गायत्र्या प्रणवेन च'। गवा गोष्ठ इति अत्र ऋकतुल्ववत् नातकालिकर्म सम्यगवबोधाय। गोमती जपवर्जितम् सपञ्चगव्यपान प्राजापत्यपञ्चकतुल्यम्। एतदज्ञानकृते ज्ञानकृते तु द्वैगुण्यम्। स्त्रीशूद्रबालवृद्धानामर्द्धम् एकस्योभयधर्मपरत्वे पाद।

शूद्रस्वामिनो गोर्वधे तु विश्वामित्र "कृच्छ्रास्तु चत्वार कुर्यात् गोवधे बुद्धिपूर्वके। अमत्या च द्वयं कार्य्यं तदर्द्धं बालवृद्धयो। स्त्रीशूद्रयोरेवमेतद्वधे चैव न संशय:"। कृच्छ्रान् प्राजापत्यानि। तच्चतुष्टयाशक्तौ धनस्तोमेनव द्वादश कार्षापणा वा। एतज्ज्ञानकृते अज्ञाने तदर्द्धं स्त्रीशूद्रबालवृद्धानामर्द्धम्। एकस्योभयधर्मपरत्वे पाद। प्रा०त०रघु०। स्वामिकृतविशेषस्तु प्रायश्चित्तविवेकानुसारादूह्य।

गर्भिण्यादौ तु विशेषमाह बृहस्पति "गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रताम्। रोधादिना घातयित्वा द्विगुण गोव्रतञ्चरेत्"। गर्भिणीवधे तु विशेषमाह वृद्धयम "गवा निपतने चैव गर्भमाशो यदा भवेत्। एकैकश चरेत् कृच्छ्र यथापूर्व तथा परम्"। कृच्छ्रपद व्रतपरम् द्विगुण गोव्रतमित्येकवाक्यत्वात् "पादमुत्पन्नमात्रे तु द्वौ पादौ गात्रसम्भिते। पादोन व्रतमाचष्टे हत्वा गर्भमचेतनम्। अङ्गप्रत्यङ्गसम्पन्ने गर्भे चेत समन्विते। द्विगुण गोव्रत कुर्य्यात् प्रायश्चित्त विशुद्धये"। मध्यमवचन भवदेवेन व्याख्यातम् यथा "यदि लगुडाद्यभिघातेन गौर्म्रियते गर्भमात्रपातो भवति तदोत्पन्नगर्भमात्रपाते यथोक्तप्रायश्चित्तपादाचरणम्। गात्रावयवोत्पत्तौ प्रायश्चित्तपादद्वय सकलगात्रसम्पत्तौ चैतन्याभावे प्रायश्चित्तपादत्रयम्। अथार्त्तैतन्ययुक्तगर्भघाते कृत्स्नमेव प्रायश्चित्तमूहनीयम्"। मिताक्षरादौ तु गर्भिणीवधे यदा गर्भोऽपि निहतो भवति तदा प्रतिनिमित्त नैमित्तिकमावर्त्तत इति न्यायादविशेषेण द्विगुणव्रतप्राप्तौ षट्त्रिंशन्मते विशेषोक्त: 'पादमुत्पन्नमात्रे तु द्वौ पादौ दृढता गते। पादोन व्रतमुद्दिष्ट हत्वा गर्भमचेतनम्। अङ्गप्रत्यङ्गसम्पूर्णे गर्भे चेत समन्विते। द्विगुण गोव्रत कुर्य्यादेषा गोघ्नस्य निष्कृति"। दोग्ध्रीं बहुक्षीराम्। वृद्धहारीत "अतिवृद्धामतिकृशामतिबालाञ्च रोगिणीम्। हत्वा पूर्वविधानेन चरेदर्द्धं व्रत द्विज"। पूर्वविधानेन समाद्युक्तत्रैमासिकादिना अतिवृद्धा ह्यस्यच्छेदनासमर्था अतिकृशा कृशत्वेन दोहनवाहनायोग्या अतिबाला पर्यपर्यन्त बाला तदतिक्रान्ता द्विवर्षीया। तथा च बृहदङ्गिरा: 'वर्षमात्रा तु बाला स्यादतिबाला द्विवार्षिकी। अतःपरन्तु सा गौ स्यात्तरुणी दन्तजन्मनि"। अतएव पठ्यते द्विपादस्तु द्विहायने' इति सर्व्व। 'व्यापन्नाना बहूनाञ्च बन्धने रोधनेऽपि वा। भिषङ्मिथ्योपचारे च द्विगुण गोव्रतञ्चरेत्। एकप्रयत्ने निष्पन्ने बहूना गवा वधे प्रायश्चित्तगौरवमुक्त न तु तन्मता पापभेदाभावात्

तेऽपि मोच्याः । यथोक्तञ्च पालोदण्डनीयः । दैवराजपरिप्लुता गजादिग्रावपातात् शिलादिदर्शनाद्वा पलायिताः पशवो यदि क्षेत्रे चरन्ति तदा न दोष इत्यर्थः ।

रात्रकालानरक्षणे तु मनुः "दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे । योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात्" । "दिवा पशूनां पालहस्तन्यस्तानां योगक्षेमविषये दोषे जाते पालकस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्पितानां स्वामिनां दोषः । अन्यथा यदि रात्रावपि पालहस्तगता भवन्ति तदा दोषे उत्पन्ने पाल एव गर्हणीयतां प्राप्नोति" इति कुल्लूकभट्टः । स्मृतिसागरे बृहदङ्गिराः "अनागतस्य पालेन त्यागतस्य च रक्षकः । रात्रावपि यदाप्तोऽस्ति तदा स्वामी न दोषभाक्" । ननु दण्डप्रकरणोक्तमनुवचनं प्रायश्चित्ते कथमिति चेन्न । "दण्डवत् प्रायश्चित्तानि भवन्तीति" श्रुतेः तथा व्यवहाराच्च । एवञ्च "यत्रापवर्त्तते युग्यं वैगुण्यं प्राजकस्य च । तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विगुणं दमः" इति मनुवचने "यत्र सारथेरकौशलात् यानमन्यथा गच्छति तत्र हिंसायामनुचितसारथिनियोगात् स्वामी द्विगुणं दण्डं दाप्यः स्यादिति" कुल्लूकभट्टव्याख्यानदर्शनात् अयोग्यपालकसमर्पणे स्वामिनो दोषात्तस्यैव प्रायश्चित्तमुक्तम् । 'यावत् सस्यं विनश्येत्तु क्षेत्री तावत् फलं लभेत् । पालस्ताड्योऽथ गोस्वामी पूर्वोक्तं दण्डमर्हति" याज्ञवल्क्यवचने गवादिदोषेण यावत् सस्यं विनश्यति तावदेव धान्यकाम् प्राप्य पालकस्ताड्यः पालकस्तस्य स्वामी पूर्वोक्तदण्डादिमर्हतीति दर्शनाच्च । गोवधप्रायश्चित्ते पालकद्व्यासमाने स्वामिना द्रव्यं दत्त्वा प्रायश्चित्तं कारयितव्यं कर्त्तव्यं वा । स्वेच्छपालके स्वयं कर्त्तव्यम् । सशिखवपनमित्यत्र नैमित्तिकेन सशिखवपनेन "सदा बद्धशिखेन तु" इत्यस्य "गायत्र्या तु शिखां बद्धा नैर्ऋत्यां ब्रह्मरन्ध्रतः । जुटिकान्तु ततो बद्धा ततः कर्म समाचरेत्" इति ब्रह्मपुराणोक्तस्य च नित्यस्य बाधेन दोषाय कल्पनमेव सोमस्य बाधवत् गोदोहेन चमसस्य बाधवच्च । "शिरस्य वपनं कार्यं शास्त्रामात् ब्रह्मचारिणा" । इति कात्यायनकृतछन्दोगपरिशिष्टेऽप्येवम् । यत्तदेकन्तु त्रिगुणत्वात् तत्पारस्करीये पयुं प्रशिरसमिति सूत्रेऽपि सर्वार्थे तद्व्याख्यात्रा हरिहरेणापि परिवर्ततो भावेनोप्तशिरसं मुण्डितशिरसमिति व्याख्यातम् । न च

"पतत् मूर्ध्निपलाशश्च दशनैरपिरोहतैः । कुशाः काशा विराजन्ते वटवः सामगा इव" इति विष्णुपुराणीये सामगा इति विशेषणसामर्थ्यात् मुण्डितत्वमिति प्राप्य प्रागुक्तवचनात् सर्व्वथा अशिरोवपनप्राप्तौ विध्यन्तरकल्पनाप्रसङ्ग एव । शूद्रवाणरयोरौपम्यन्तु हरिवंशप्रचोदितत्वेनाप्युक्तं तयो शुभ्रवेत्त्वञ्च भव्यत्वेन गायकत्वेनेति शेषः । एवं प्राचीनावीतित्यादिना "सदोपवीतिना भाव्यम्" इत्यस्यापि बाध इति प्रपञ्चादुक्तम् । ब्राह्मणस्य विशेषणेति ब्राह्मणस्य गवानुगमनं सङ्ग्रहम् । एतेनापाद्यकृतगोवधे प्राजापत्यं करणीयमिति यत्नेतिकर्त्तव्यतापि प्राजापत्यत्वेनेति पवित्रधर्म्ये हलायुधः । वृषभो गौश्च दक्षिणा । ब्राह्मणभोजनं विधेयमिति यत्रापार्थे "गर्भाधानादिकार्येषु ब्राह्मणान् भोजयेदिह" । प्राजापत्यद्वयापत्तौ धेनुद्वयं तदशक्तौ षट् कार्षापणाः । एवञ्च धेनुमूल्यं पञ्च कार्षापणाः गोमूल्यमेकं कार्षापणः । शूद्रमार्जारप्रभृतिभिस्तु इतिकर्त्तव्यतायां विशेषो नास्ति । एतच्च शूद्रस्वामिकेतरवधविषयम् शूद्रस्वामिकस्याप्रमाणात् आख्याह्वेभे यत्किञ्चिद्विषयकत्वद्वृष्ट्यन्तम् निबन्धनिर्मन्यस्यापित्वे नापाद्यकृतवधे तदधिकस्यानुक्तत्वात् परं न मूल्यं लक्ष्यह्वयं युक्ततमस्मानः । अतएव एतद्विषय एव स्मृतिसागरसारे बृहदङ्गिराः 'अरक्षिते तु शृङ्गादौ हते व्याघ्रादिभक्षिते । प्राजापत्यमाचरेत् स्वामी रक्षिते नास्ति दूषणम्" । अताड्यं पालकत्वतार्थं नास्ति दूषणमिति यदि प्रमत्ता गौर्निवारयन्तं पालकमतिक्रम्य गर्त्तकान्तारादौ म्रियते तदा नेत्यर्थः । अन्यत्र कल्येव पालके सम्यक्पालनाभावेन कूपादौ पतितामृतौ मरणे प्रायश्चित्तमाह विष्णुः 'पल्वलौषधकूपाग्निश्वापदादिनिपातने । अभ्यो द्रुमपर्वतादैर्हते पादोनमाचरेत् । अपालने तु कृच्छ्रं स्यात् शून्यागाराद्युपप्लवे" । पादोनं प्राजापत्यमेव उत्तरवचने कृच्छ्रश्रवणात् । तथा "पादयाप्रासके देयोऽपगुर्वे स्वामिन्यरक्षिते" । अप्राप्तके अप्राप्तदस्यावस्थे त्रिहायणपर्य्यन्ते इति यावत् । एवम्भूते पशौ अरक्षिते श्वभ्रपातादिना मृते सति स्वामिना प्राजापत्यपादः करणीयः । अत्र पादमात्रप्रायश्चित्तत्वात् वाक्यत्वादिना नानुमतः । ततश्चाप्राप्तदस्यावस्थवत्सामाविमनिमित्तकवधजन्यपापक्षयकाम इति प्रयोक्तव्यम्" व्यातिदेशिकी गोहत्या बहुविधा यथा "शातिमुत्पाद्य । विप्रहत्यां गोहत्यां किंपिप्राप्ति तिरश्चीम् । क

वा कृष्णामगम्या वा को वा सन्ध्याविहीनकः । पतेच्च नरकं सर्वं यत पैतृपितामहः । यम उवाच, गामाश्रम प्रकुर्वन्तं पिबन्तं यो निवारयेत् । याति गोविप्रयोर्मध्ये गोहत्यांशं लभेत् स । दण्डैर्गां ताडयन् मूढो यो विप्रो वृषवाहकः । दिने दिने गवां हत्यां लभते नात्र संशयः । ददाति गोभ्य उच्छिष्टं भोजयेद्वृषवाहकम् । भोजयेद् वृषवाहान्नं स गोहत्यां लभेद्ध्रुवम् । वृषलीपति याजयेद्यो भुङ्क्तेऽन्नं तस्य यो नरः । गोहत्याशतक सोऽपि लभते नात्र संशयः । पादं ददाति वह्नौ यो गाश्च पादेन ताडयेत् । गृहं विशेदधौताङ्घ्रिः स्नात्वा गोवधमाप्नुयात् । यो भुङ्क्ते स्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च । सूर्योदये च द्विर्भोजी स गोहत्यां लभेत् ध्रुवम् । अवीरान्नञ्च यो भुङ्क्ते योनिजीवी च ब्राह्मणः । यस्त्रिसन्ध्याविहीनश्च स गोहत्यां लभेद्ध्रुवम् । पितॄंश्च पर्वकाले च तिथिकाले च देवताः । न सेवतेऽतिथिं योऽपि स गोहत्यां लभेद्ध्रुवम् । स्वभर्त्तरि च कृष्णे वा भेदबुद्धिं करोति या । कटूक्त्या ताडयेत् कान्तं सा गोहत्यां लभेद्ध्रुवम् । गोमार्गं खननं कृत्वा ददाति शस्यमेव च । तडागे च तदूर्द्ध्वे वा स गोहत्यां लभेद्ध्रुवम् । प्रायश्चित्तं गोवधस्य यः करोति व्यतिक्रमः । अर्थलोभादथाज्ञानात् स गोहत्यां लभेद्ध्रुवम् । राजके दैवके यत्नात् गोस्वामी गां न पालयेत् । दुःखं ददाति यो मूढो गोहत्यां लभते ध्रुवम् । प्राणिनं लङ्घयेत् यो हि देवार्च्चामनलं जलम् । नैवेद्यं पुष्पमन्नञ्च स गोहत्यां लभेद्ध्रुवम् । शश्वन्नास्तीति यो वादी मिथ्यावादी प्रतारकः । देवद्वेषी गुरुद्वेषी स गोहत्यां लभेद्ध्रुवम् । देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति । न सम्भ्रमान्नमेत् यो हि स गोहत्यां लभेद्ध्रुवम् । न ददात्याशिषं कोपात् प्रणताय च यो द्विजः । विद्यार्थिने च विद्याञ्च स गोहत्यां लभेद्ध्रुवम्" ब्रह्मवै० पु० प्रकृतिख०, २७अ० । "उन्मत्तोपकरो विप्रो गोवधस्य व्रतं चरेत्" प्रा० त० उक्ते उन्मत्तोपोऽपि धार्मिकः गोवधः ।

**गोहन्** त्रि० गां हन्ति हन–क्विप् ६त० । १गोहन्तरि मेघस्य ध्वनिभेदके २रुद्रे पु० । "आ रे गोहा नृहा वधो वः" ऋ० ७।५६।१७ । "गोहा गवां मेघस्थसलिलानां भेदकः" भा० ।

**गोहन** त्रि० गुहू–संवरणे ल्यु उत्वाभावश्छान्दसः । संवरके "समाने अहन् त्रिरवद्य गोहनः" ऋ० १।२४।७ "गुहू संवरणे नन्द्यादित्वात् ल्यु" उदुपधाया गोहः पा० प्राप्तस्य उत्वस्याभावश्छान्दसः" भा० ।

**गोहमुख** पु० भारतवर्षस्थे पर्वतभेदे । भागवतोक्तगोकामुख पर्वतस्य विष्णु पु० गोहमुखेति नाम । गोकामुखशब्दे दृश्यम् । [वृक्षे त्रिका० ।

**गोहरितकी** स्त्री गो हरितकीव हितकारित्वात् । चिञ्च-

**गोहल** न० हल–विलेखे क्विप् त लाति ला–क गोहलं । गोमये हारा० ।

**गोहालिया** स्त्री गवा ह्लादे विलेखे शाक घा० च । (गोयालिया) ख्याते लताभेदे "पीत गोयालियामूल तिलदध्याज्यसंयुतम् । निपष्ठमत्र कथितं प्रवर्त्तयति शङ्कर ।" इति गारुडे १८०अ० ।

**गोहित** पु० गवां हितं यस्मात् ५ब० । १बिल्वे, २घोषालतायाञ्च । ३गोहितकारके त्रि० । ४विष्णौ पु० "गोहितो गोपतिर्गोप्ता" विष्णुस० । "गोभ्यो हितो गोहितः, गोर्भूमेर्भारावतारणेच्छया शरीरग्रहणं कुर्वन् गोहितोवा" भाष्यम् । [मूले हेमच० ।

**गोहिर** न० गुह–बा०इरच् ऊपो० उत्वाभाव । पाद-

**गोह्य** त्रि० गुह–वा ण्यत् अच्चेत्र उत्वस्य नियमनात् लोपयम् । १गुह्ये २अप्रकाश्ये ३संवरणीये च ।

**गौकक्ष्य** पु स्त्री गोकक्षर्षेर्गोत्रापत्यं गर्गा० यञ् । गोकक्षर्षिगोत्रापत्ये । तस्य छात्र कण्वा० अण् यलोप । गौकक्ष तच्छात्रे गौकक्ष्यस्यापत्यं तिका० फिञ् । गौकक्ष्यायणि तदपत्ये पु स्त्री । स्त्रियां क्रौड्यादि० ष्यञ् । गौकक्ष्या गोकक्षगोत्रस्त्रियाम् । बहुत्वे "यञञोश्च" पा० यञो लुक् । गोकक्षास्तद्गोत्रापत्येषु ।

**गौग्गुलव** त्रि० गुग्गुलौ भव० अण् । गुग्गुलुभवे धूपादौ स्त्रियां शार्ङ्गरवा० ङीन् ।

**गौच्य** पु० गोच्या हिमालयपत्न्या अपत्यम् 'ठकि प्राप्ते बा० यत् । हिमालयपुत्रे मैनाके शब्दार्थचि० ।

**गौञ्जिक** पु० गुञ्जा तुलामानभेद तदुपलक्ष्य शोधनस्य ठक् । स्वर्णकारे त्रिका० ।

**गौड** पु० "वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे ।। गौडदेश समाख्यात सर्वविद्याविशारद" स्कन्दपु० उक्ते १देशे २तद्देशस्थे जने ब०व० । "सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः । पञ्च गौडा इति ख्याताविन्ध्यस्योत्तरवासिनः" स्कन्दपु०दशुक्तेषु विप्र-

र्व्वतोत्तरभागवासिषु ३ब्राह्मणभेदेषु च । स्वार्थे क तत्रार्थे । “अथ पूर्व्वस्याम्” इत्युपक्रमे “उदयगिरि भद्रगौडकपौण्ड्रोत्कलकाशिमेकलाम्बष्ठा” वृ०स०१४अ० कूर्म्मविभागे पूर्व्वस्यदेशोक्तौ । “अस्ति गौडविषये कौशाम्बी नाम नगरी” हितो० । “गौडोराष्ट्रमनुत्तम निरुपमा तत्रापि राढा पुरी” प्रबोधच० “सर्व्व सिद्धगुरुर्व्वर्ज्यं कविश्च गौडगुर्जरे” मुहू० चि० । गुडस्य विकार अण् । ४गुडविकारे खण्डासवादौ त्रि० “गुडस्य त्वन्नमद्यस्य पीत्वा गौड सुरासवम्” भा० व० ४४अ० । “नानास्वादरसानाञ्च खाद्यपानानां तथैव च । भोजनानि सुपूर्णानि गौडानि च सहस्रश” रामा० बा० ५२ स्रो० । “गौडमच्छमनल्पं वा पानकं गुरु मूत्रलम्” सुश्रुत । ५मदिराभेदे स्त्री “गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमै” मनु । “गौडीं माध्वीं सुरां पैष्टीं पीत्वा विप्र समाचरेत् । तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमात्” हह-स्पतिः । ६काव्यरीतिभेदे स्त्री “पदसङ्घटना रीति रङ्गसंस्थाविशेषवत् । उपकर्त्री रसादीनां सा पुन स्याच्चतुर्विधा । वैदर्भी चाथ गौडी च पाञ्चाली ला-टिका तथा” विभज्य “ओजःप्रकाशकैर्व्वर्णैर्बन्ध आडम्बर पुन । समासबहुला गौडी” सा० द० तल्लक्षणमुक्त यथा “चञ्चद्भुजभ्रमितचण्डगदाभिघात-सञ्चूर्णितोरु-युगलस्य सुयोधनस्य । स्त्यानावनद्धघनशोणितशोण पाणिरुत्तंसयिष्यति कचांस्तव देवि । भीम” वेणीस० । यथा च गौडजनप्रियत्वात् गौडै प्रयुज्यमानत्वाच्च गौडीसंज्ञां लभते । गौड+छ । गौडीया अत्रार्थे । “बहुतरसमासयुक्तामहाप्राणाक्षरा च गौडीया । रीति-रनुप्रासमहिमपरतन्त्रा स्तोकवाक्या च” पुरुषोत्तम । ७रागिणीभेदे स्त्री सङ्गीतदा० । पुरशब्दे परे समासे अस्य “अरिष्टगौडपूर्व्वम्” पा० अन्तोदात्तता । गौडपुरम् ।

**गौडपाद** पु० माण्डूक्योपनिषदि तदर्थकश्लोककारके वेदान्तिपण्डितभेदे । ते च “बहिः प्रज्ञो विभुर्विश्वोह्यन्तः प्रज्ञस्तु तैजसः” इत्यादय “दुर्द्दर्शमतिगम्भीरमजं साम्यं विशारदम् । बुद्धा पदमनानात्वं नमस्कुर्मो यथाबलम्” इत्यन्ता यत श्लोकाः ।

**गौडवास्तुक** पुन० “तदेव च सदपत्र रक्तं चेत् गौडवास्तुकम्” इत्युक्तलक्षणे वास्तुकभेदे । (चिल्लीशाक) राजनि० ।

**गौडिक** त्रि० गुडे साधु गुडा० ठक् । १इक्षौ । गौड गुड़विकारः साधनतयाऽस्त्यस्य ठन् । २गुडविकारसाध्ये मद्यभेदे । “इ हृषा गौडिका भद्रा गुरवोऽनिलनाशना” “मधुमासोदद्भवा वा पिबेद्वाप्यथ गौडिकम्” इति च सुश्रु०

**गौण** त्रि० गुणमधिकृत्य प्रवृत्ता गौणी तत आगतः अण् । १सादृश्यलक्षणलक्ष्यसम्बन्धरूपया गौण्या लक्षणया प्रवृत्ते शब्दे “गौणश्चेन्नात्मशब्दात्” शा० सू० । २अमुख्ये च । “यदाऽऽगामिक्रियामुख्यकालस्याप्यन्तरा भवेत् । गौणकालत्वमिच्छन्ति केचित् प्राग्नकर्म्मणि” उद्वा०त हरिहरपद्धति । “एवमागामियागीय मुख्यकालादनन्तर । सकालादुत्तरो गौणः काल सर्व्वस्य कर्म्मण” छन्दोग० । “तदा गौणसमन्तस्य नामानन्तेति विश्रुतम्” भा० शा० १८२ अ० । “बहूनि मम नामानि कीर्त्तितानि महर्षिभिः । गौणानि तत्र नामानि कर्म्मजानि च कानि चित्” ३४२ अ० । स्त्रियां ङीप् । “गौणश्रुते” शा० सू० । ( गौणी व्युत्पत्ति ) गुण सादृश्यमधिकृत्य प्रवृत्ता अण् ङीप् । ३सादृश्यमूलकलक्षणाभेदे स्त्री । “सादृश्यात्तु मता गौणी-स्वाच्च पोडशभेदिता” सा०द० । “सादृश्येतरसम्बन्धेऽपि इत्तेर्गौणत्वमिच्छन्ति । “अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद् इत्तेरिष्टा तु गौणता” काव्य प्र० ।

गुणोऽप्रधानमेव स्वार्थे प्रज्ञा० अण् । ४अप्रधाने कर्मादौ । “गौणे कर्म्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्” व्या० का० । गौणस्य भाव ष्यञ् गौण्य न०, त्व गौणत्व न०, तल् गौणता स्त्री, अप्रधानत्वे “नयाभादेः स्वोऽन्तेगौण्येऽणीयसः” मुग्ध० । “इत्तेरिष्टा तु गौणता” काव्यप्र० गौणत्वञ्च प्रसिद्धवस्तुभेदस्यैव यथाह शा०भा० “प्रसिद्धवस्तुभेदस्य गौणत्वस्याप्रसिद्धेः । यस्य हि प्रसिद्धो वस्तुभेदः यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ् मुख्योऽन्यः प्रसिद्धः । ततश्चान्य पुरुष० प्रायिकैः क्रौर्य्यशौर्य्यादिभिः सिंहगुणैः सम्पन्नः प्रसिद्धः तस्य पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतः नाप्रसिद्धवस्तुभेदस्य” ।

**गौणचान्द्र** पु० । “चान्द्रोऽपि द्विविधः प्रोक्तो गौणमुख्यप्रभेदत । गौणः कृष्णप्रतिपदः पौर्णमास्यन्तरीरितः” मलर० उक्ते कृष्णपदादिपौर्णमास्यन्ते चान्द्रे मासे तत्र व्यवस्था नि० सि० उक्ता यथा

**गौराश्व** पु॰ गौरोऽश्वोऽस्य । १नृपभेदे । “अलर्कः कक्षसेनश्च गयो गौराश्व एव च” भा॰स॰ ८ अ॰ । यमसभ्योक्तौ २श्वेतवाहने श्वेताश्वे अर्जुने च ।

**गौरास्य** पुंस्त्री गौरमास्यं यस्य । गौरमुखे कृष्णदेहे वानरभेदे राजनि॰ । स्त्रियां जातित्वेऽपि योपधत्वात् न ङीष् किन्तु टाप् ।

**गौराहिक** पुंस्त्री गौर शुभ्र अहि॰ कर्म॰ सज्ञायां कन् । सुश्रुतोक्ते निर्विषे सर्पभेदे “गौराहिकवृक्षेशय” इति सुश्रु॰ अहिशब्दे दृश्यम् ।

**गौरि** पु॰ गौरस्यापत्यम् इञ् । आङ्गिरसे ऋषिभेद “गौरेराङ्गिरसस्य साम” श्रुति ।

**गौरिक** त्रि॰ गौरवर्णोऽस्त्यस्य ठन् । १श्वेतवर्णयुक्ते २श्वेतसर्षपे पु॰ “यवाह्वगौरिकोन्मिश्रैः पादलेप प्रशस्यते” सुश्रुत ।

**गौरिमत्** त्रि॰ गौरीं मन्यते मन+क्विप् ६त॰ ङ्यापोरिति सज्ञायां ह्रस्व । १गौरीनामयुक्ते गौरीतीर्थे तत्रस्थे २नदीभेदे स्त्री शार्ङ्गर॰ङीन् । (भोगवत् गौरीमत्) संज्ञायाम्” तद्गणसूत्रोक्तेः सज्ञायामेव ङीन् अन्यत्र ङीप् ।

**गौरिल** पु॰ गौरवर्णोऽस्त्यस्य मा॰ इलच् । १सिद्धार्थे श्वेत सर्षपे २लौहचूर्णे च मेदि॰ ।

**गौरिवीति** पु॰ गौर्य्यां वेटनापि वीति विग्रहगतिरस्य “ङ्यापोरिति’ संज्ञायां ह्रस्व । शक्तिसुनिपुत्रे ऋषिभेदे । “गौरवीति शाक्त्य आलमिवाह” शत॰ब्रा॰१२।८।३।७। “स्तोमसामा गौरवीतेरयर्द्धन ’ ऋ॰५।२९।११। गौरिवीते रेतन्नामकस्य मन्त्रद्रष्टु ” भा॰ । गौरिवीतिना दृष्ट साम अण् । गौरिवीत तद्दृष्टे सामभेदे “तृतीयसवमाश्विहिष्णो निःपरिविष्टवतीषु गौरिवीतेन” कात्या॰ श्रौ॰ २५।१२।६। “गौरिवीत नाम सामभेदस्तेन स्तुवीरन्” कर्क ।

**गौरिसक्थ** पु॰ गौर्य्या इव सक्थि यस्य षच् समा॰ ह्रस्व सुषामा॰ षत्वम् । गौरीतुल्यसक्थियुक्ते ।

**गौरी** स्त्री गौर+गौरा॰ ङीष् । १गौरवर्णायां स्त्रियाम् “कपोलभित्तीरिव लोध्रगौरीः” माघः । २हिमालयसुतायां कालीनाम्न्या मेनकाकन्यायां तस्याः प्राक् कृष्णवर्णत्वेन जातत्वेऽपि पश्चात् पीताङ्गत्वात् तथात्व कालिकापुराणमध्ये २०१५ पृ॰ ४५ अ॰ तन्मूल दृश्यम् । पुराणान्तरे “योगाग्निदग्धदेहा सा पुनर्जाता हिमालये । शङ्खेन्दुकुन्दधवला ततो गौरीति सा स्मृताः” इत्युक्तम् तत्तु कल्पान्तरविषयम् । “अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी” स्मृत्युक्तायां ३अष्टवर्षायां स्त्रियाम् । ४हरिद्रायां ५दारुहरिद्रायाम् ६गोरोचनायां ७वरुणपत्न्याञ्च । ८प्रियङ्गुवृक्षे ९पृथिव्यां १०नदीभेदे च मेदि॰ “लेभे प्रसेनजिज्जायां गौरी नाम पतिव्रताम् । अभिशप्ता तु सा भर्त्रा नदी वै बाहुदाऽभवत्” हरिवं॰ १२ अ॰ ११उक्तायां सूर्य्यवंश्यप्रसेनजिज्जायायाम् तस्याएव बाहुदानदीरूपत्वोक्तेः नदीविशेष बाहुदानदीपर इति बोध्यम् । १२मुद्गशक्तिभेदे हेम॰ । १३मञ्जिष्ठायां १४श्वेतदूर्वायां १५मल्लिकायां १६तुलस्यां १७सुवर्णकदल्याम् १८आकाशमांस्याञ्च राजनि॰ । सर्व्वासामासां शुभ्रपीतरक्तविशुद्धपत्रपुष्पादियुक्तत्वात्तथात्वम् १९रागिणीभेदे सङ्गीतदामो॰ । २०वाचि निघण्टुः । “गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्” ऋ॰१।१६४।४०। “गौरी गेरणशीला शब्दब्रह्मात्मिका च वाक् मिमाय । मिमन्ति प्रतिष्ठार्थे धातु । प्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन निष्पादयन्ती । एकपदी अव्याकृतत्वेनैकप्रतिष्ठानैकरूपावात्मना । द्विपदी सुपतिङ भेदेन पदद्वयवती । चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन । अष्टापदी आमन्त्रितसहितसुप्विभक्तिभिरष्टभेदेनाष्टापदी । नवपदी नवसु पदेषु भवन्ती बभूवुषी पश्चाद्वर्णविधाभिव्यक्तिसमेयुषी परमे व्योमन् उत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरानेकाकारेण व्याप्ताऽनेकध्वनिप्रकारा भवतीत्यर्थ ” भा॰ । निरु॰ ११।४। व्याख्यान्तर दृश्यम् । गौरीरिति सुलोपाभाव श्छान्दस । “सोमो गौरी अधिश्रित ” ऋ॰ ९।१।१२।३। गौरी गौर्य्याम् मध्यमायां वाचि” भा॰ “सुपां सुलुक्” पा॰ सप्तम्या लुक् । “ईदूतौ च सप्तम्यर्थे” पा॰ तस्य प्रगृह्यसञ्ज्ञत्वात् न यणादेश , भा॰ । २१दीप्तिमत्यां स्त्रियां निरु॰ । “गौरी रोचते ज्वलतिकर्म्मणः । अय पीतोवा गौरोवर्णः एतस्मादेव प्रशस्यो भवति तस्या एषा भवति” “गौरीर्मिमाय सलिलानि” श्रुति मधिकृत्य उक्तनिरुक्तिः । पार्वतीरूपा गौरी च माघशुक्लचतुर्थ्यां पूज्या यथाह ति॰ भविष्योत्त॰ पु॰ माघशुक्लमधिकृत्य “चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता । सौभाग्यमतुलं कुर्यात्”

**गौरीकान्त** पु॰ ६त॰ महादेवे गौरीनाथादयोऽप्यत्र ।

**गौरीगुरु** पु॰६त॰। पार्वतीपितरि हिमालये “गौरीगुरोर्ग-

राजनीतिशास्त्रप्रणेता यथाह” भा॰ शा॰ ५८अ॰। “विशालाक्षश्च भगवान् काव्यश्चैव महातपाः। सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः। भारद्वाजश्च भगवांस्तथा गौरशिरा मुनिः। राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः”

**गौरसर्षप** पु॰कर्म॰। १श्वेतसर्षपे (श्वेतसरिषा) रत्नमाला। तद्गुणा भावप्र॰ उक्ता यथा “गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते। सर्षपस्तु रसे पाके कटुः स्निग्धः सतिक्तकः। तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः। रक्षोहरो जयेत् कण्डूं कुष्ठकोष्ठकृमिग्रहान्। यथा रक्तस्तथा गौरः किन्तु गौरो वरो मतः”। स च क्षौमशोधकः यथाह मनुः “श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः” द्रव्यशुद्धौ। “सगौरसर्षपैः क्षौरं” “गौरसर्षपकल्केन साज्येन साधितस्य च” याज्ञ॰। २राजसर्षपत्रयमिते परिमाणे च। “त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः। ता राजसर्षपास्तिस्रस्ते त्रयो गौरसर्षपः” मनुः।

**गौरसुवर्ण** पु॰ गौरः श्वेतः सुवर्णोऽस्य। चित्रकूटप्रसिद्धे पत्रशाकभेदे “गौरसुवर्णं शिशिरं कफपित्तज्वरघ्नं तु। दाहारुचिभ्रान्तिरक्तश्रमघ्नं पथ्यमेव च” राजनि॰ तद्गुणा उक्ताः।

**गौरा** स्त्री गौर+गौरादिगणे वर्णवाचिनएव गौरशब्दस्य ग्रहणात् विशुद्धार्थपरत्वे टाप्। विशुद्धायाम् स्त्रियाम् हिरूपकोषः। तदर्थपरतायामेव टाबन्तता वर्णपरत्वे तु ङीबन्ततेत्याकारे स्थितम्।

**गौराङ्ग** पु गौरः श्वेतः पीतः वाऽङ्गमस्य। १विष्णौ “श्वेतो रक्तस्तथा पीत इदानीं कृष्णतां गतः” भाग १०स्क॰ तस्य युगावतारे श्वेताङ्गत्वात् पीताङ्गत्वाच्च तथात्वम्। गौरं विशुद्धमङ्गमस्य। विशुद्धकान्तियुक्ते नन्दनन्दने २श्रीकृष्णे च ‘गौराङ्ग गौरदोर्भाङ्ग पठेत् स्तोत्र कृताञ्जलिः। नन्दगोपसुतं चैव नमस्यामि गदाग्रजम्” ब्रह्मयामलम्। “गौराङ्गो नाटगम्भीर स्वनामामृतलालसः” कृष्णयामलम्। ३नवद्वीपस्थशचीपुत्रे इति वैष्णवाः। ते हि तत् परतयैव यामलवाक्यद्वयं व्याचख्युः ४गौरवर्णदेहके त्रि स्त्रियां ङीप्। गौराङ्गताहेतुरौषधञ्च गरु॰ पु॰ १८४ अ॰ यथा “कुष्माण्डमालयारस्तु वगोमूत्रम तण्डुलः। जलपिष्टा हरिद्रा च सिद्धा मन्दानलेन हि। माहिषेण पुरीषेण वेष्टिता दध्न॥ ध्रुवा उद्वर्त्तनं कुर्य्यादङ्गगौरत्वसाधनम्”।

**गौराजाजी** स्त्री कर्म॰। श्वेतजीरके राजनि॰।

**गौरादि** पु॰ “षिद्गौरादिभ्यश्च” पा॰ उक्ते ङीष्निमित्ते शब्दगणभेदे स च गणः पा॰ ग॰ सू॰ उक्तो यथा “गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य पुट द्रुण द्रुण द्रोण हरिण काकण पटर उणक आमलक कुवल विम्ब बदर कर्कर तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुज पाण्डश आढक आनन्द आश्वत्थ सृपाट आपच्चिक शष्कुल सूर्म्म शूर्प सूच यूष यूथ सूप मेथ वल्लक धातक सल्लक मालक मालत साल्वक वेतस वृस अतस उभय भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनडुह अनड्वाह एषण (करणे) देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि गौतम पारक अयःस्थूण भौरिकि भौलिकि भौलिङ्गि यान मेथ आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन पोतन पातन पानठ आस्तरण अधिकरण अधिकार आग्रहायणी प्रत्यवरोहिणी सेचन सुमङ्गल (संज्ञायाम्) अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड षण्ड ऊर्द गुर्द शम सूद आर्द ह्रद पाण्ड भाण्ड लोहाण्ड कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् सोम सौधर्म रोहिणी (नक्षत्रे) रेवती (नक्षत्रे) विकल निष्फल पुष्कल कटी (श्रोणिवचने)। पिप्पल्यादयश्च। पिप्पली हरितकी कोशातकी शमी वरी शरी पृथिवी क्रोष्टृ मातामही पितामही आकृतिगणः”। गौरशब्दस्य लोपधभिन्नवर्णवाचित्वेऽपि प्रातिपदिकस्वरेणोत्सर्गतः कृष्णेतिवदन्तोदात्ततया अन्यतो ङीषित्यस्याप्रवृत्तेर्गणे पाठः।

“उपाद् द्व्यजजिनमगौरादयः” पा॰ उपात् परस्य द्व्यजन्तादेरन्तोदात्ततया पर्युदस्ते शब्दगणे स च गणः पा॰ ग॰ उक्तो यथा “गौर तैष तैल लेट लोट जिह्वा कृष्णा कन्या गुध कल्पपाद।” उपगौरः।

**गौरार्द्रक** न॰ नित्यकर्म॰। स्थावरविषभेदे हेमच॰।

**गौरावस्कन्दिन्** पु॰ गुरोरिव गौरव गुरुपत्नीरूप कलत्रं तदास्कन्दति आ+स्कन्द–णिनि वेदे पृषो॰ वर्णविपर्ययः। अहल्याजारे शक्रे इन्द्रागच्छेत्युपक्रमे “गौरावस्कन्दिन्नहल्यायै जारेति” शत॰ ब्रा॰ ३।३।४।१८।

**गौराश्व** पु० गौरोऽश्वोऽस्य । १नृपभेदे । “अलर्कः कक्षसेनश्च गयो गौराश्व एव च” भा०स० ८ अ० । यमसंख्योक्तौ २श्वेतशाङ्कने श्वेताश्वे अर्जुने च ।

**गौरास्य** पुंस्त्री गौरमास्यं यस्य । गौरमुखे कृष्णदेहे वानरभेदे राजनि० । स्त्रियां जातित्वेऽपि योपधत्वात् न ङीष् किन्तु टाप् ।

**गौराहिक** पुंस्त्री गौर शुभ्र अहि कर्म० संज्ञायां कन् । सुश्रुतोक्ते निर्विषे सर्पभेदे “गौराहिकवृक्षेशय” इति सुश्रु० अहिगणे दृश्यम् ।

**गौरि** पु० गौरस्यापत्यम् इञ् । आङ्गिरसे ऋषिभेदे “गौरेराङ्गिरसस्य साम” श्रुतिः ।

**गौरिक** त्रि० गौरवर्णोऽस्त्यस्य ठन् । १श्वेतवर्णयुक्ते २श्वेतसर्षपे पु० “यथाह्न गौरिकोन्मिश्रे पादलेपः प्रशस्यते” सुश्रुत ।

**गौरिमत्** त्रि० गौरीं मन्यते मन+क्विप् ६त० ङ्यापोरिति संज्ञायां ह्रस्वः । १गौरीनामयुक्ते गौरीतीर्थे तत्रस्थे २नदीभेदे स्त्री शार्ङ्ग०र०ङीन् । (भोगवत् गौरीमत्) संज्ञायाम्” तत्रत्यसूत्रोक्तेः संज्ञायामेव ङीन् अन्यत्र ङीप् ।

**गौरिल** पु० गौरवर्णोऽस्त्यस्य बा०इलच् । १सिद्धार्थे श्वेतसर्षपे २लौहचूर्णे च मेदि० ।

**गौरिवीति** पु० गौर्यां वेदवाचि वीतिः विशेषगतिरस्य “ङ्यापोरिति” संज्ञायां ह्रस्व । शक्तिमुनिपुत्रे ऋषिभेदे । “गौरवीति शाक्त्य ऋषमिवाह” शत०ब्रा०१२।८।३।७। “सोमसामा गौरवीतेरवर्द्धन” ऋ०५।२९।११। गौरिवीतेरेतन्नामकस्य मन्त्रद्रष्टु” भा० । गौरिवीतिना दृष्टं साम अण् । गौरिवीत तद्दृष्टे सामभेदे “तृतीयसवनाग्निहिष्णो श्रिंप्रयिष्वतीषु गौरिवीतेन” कात्या० श्रौ० २५।१३।६।“गौरिवीत नाम सामभेदस्तेन स्तुवीरन्” कर्क ।

**गौरिषक्थ** पु० गौर्या इव सक्थि अस्य षच् समा० ह्रस्व सुषामा० षत्वम् । गौरीतुल्यसक्थियुक्ते ।

**गौरी** स्त्री गौर+गौरा० ङीष् । १गौरवर्णायां स्त्रियाम् “कपोलभित्तीरिव लोध्रगौरी” माघ । २हिमालयसुतायां कालीनाम्न्या मेनकाकन्यायां तस्याः प्राक् कृष्णवर्णत्वेन जातत्वेऽपि पश्चात् पीताङ्गत्वात् तथात्वं कालिकापुराणशब्दे २०१५ पृ० ४५ अ० तन्मूलं दृश्यम् । पुराणान्तरे “योगाग्निदग्धदेहा सा पुनर्जाता हिमालये । शङ्खेन्दुकुन्दधवला ततो गौरीति सा स्मृता” इत्युक्तम् कल्पान्तरविषयम् । “अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी” स्मृत्युक्तायां ३अष्टवर्षायां स्त्रियाम् । ४हरिद्रायां ५दारुहरिद्रायाम् ६गोरोचनायां ७वरुणपत्न्याञ्च । ८प्रियङ्गुवृक्षे ९पृथिव्यां १०नदीभेदे च मेदि० “लेभे प्रसेनजिद्भार्यां गौरीं नाम पतिव्रताम् । अभिशस्ता तु सा भर्त्रा नदी सै बाहुदाऽभवत्” हरिवं० १२ अ० ११उक्तायां सूर्य्यवंश्यप्रसेनजिद्भार्य्यायाम् तस्या एव बाहुदानदीरूपत्वोक्तेः नदीविशेषबाहुदानदीपर इति बोध्यम् । १२बुद्धशक्तिभेदे हेम० । १३मञ्जिष्ठायां १४श्वेतदूर्वायां १५मल्लिकायां १६तुलस्यां १७सुवर्णकदल्याम् १८आकाशमांस्याञ्च राजनि० । तस्याः सर्वासां शुभ्रपीतरक्तविशुद्धपत्रपुष्पादियुक्तत्वात्तथात्वम् १९रागिणीभेदे सङ्गीतदामो० । २०वाचि निघण्टुः । “गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्” ऋ०१।१६४।४०। “गौरी गरणशीला शब्दब्रह्मात्मिका च वाक् मिमाय । मिमीते प्रतिष्ठार्थे धातुः । प्रतिष्ठितानि घटादिद्रव्याणि तद्वती तत्तद्वाचकत्वेन निष्पादयन्ती । एकपदी अव्याकृतत्वेनैकप्रतिष्ठानैकरूपावात्मना । द्विपदी सुप्तिङ्भेदेन पदद्वयवती । चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन । अष्टापदी आमन्त्रितसहितसप्तविभक्तिभिरष्टभेदेनाष्टापदी । नवपदी नवसु पदेषु भवन्ती बभूवुषी पश्चाद्व्यक्तविधाभिव्यक्तिमेयुषी परमे व्योमन् उत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरानेकाकारेण व्याप्ताऽनेकध्वनिप्रकारा भवतीत्यर्थ” भा० । निरु०११।४। व्याख्यानान्तरं दृश्यम् । गौरीरिति सुलोपाभाव छान्दस । “सोमो गौरी अधिश्रित” ऋ०९।१।१२।३। गौरी गौर्य्याम् मध्यमायां वाचि” भा० “सुपां सुलुक्” पा० सप्तम्या लुक् । “ईदूतौ च सप्तम्यर्थे” पा० तस्य प्रगृह्यसंज्ञत्वात् न यणादेश , भा०। २१दीप्तिमत्यां क्रियायां निरु० । “गौरी रोचते ज्वलतिकर्म्मणः । अयं पीतोवा गौरोवर्णः एतस्मादेव प्रशस्तो भवति तस्या एषा भवति” “गौरीर्मिमाय सलिलानि” श्रुति मधिकृत्य उक्तनिरुक्तिः । पार्वतीरूपा गौरी च माघशुक्लचतुर्थ्यां पूज्या यथाह ति० भविष्योत्त० पु० माघशुक्लमधिकृत्य “चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता । सौभाग्यमतुलं कुर्यात्”

**गौरीकान्त** पु० ६त० महादेवे गौरीनाथादयोऽप्यत्र ।

**गौरीगुरु** पु०६त०। पार्वतीपितरि हिमालये “गौरीगुरोर्ग-

ष्टरमाविवेश" रघु "अग्निमग्निदमयाय गौरीगुरो" किरा० गौरीपितादयोऽप्यत्र ।

**गौरीज** न० गौर्यारजसो जायते जन—ड । १अभ्रके राजनि० अभ्रकशब्दे २।।पु० दृश्यम् । २कार्त्तिकेये पु० ।

**गौरीतक्रम्** न० गौर्या निर्मितं तक्रम् । "लवण मरिच जिरा जीरा नारङ्गजं स्वच्छम् । पलाशुपर्णान्वित तक्र धूपनेन दर्ध्वाकृता । गौर्येदं विहितं तक्रं सर्वदोषनिवर्हणम्" शब्दार्थचि० उक्ते तक्रभेदे

**गौरीपट्ट** पु० गौर्याः पट्टमिव स्थानम् । शिवलिङ्गस्य गौर्याः पूजास्थाने शिवलिङ्गशब्दे विवृति०

**गौरीपुत्र** पु० ६त० । कार्त्तिके गौरीतनयादयोऽप्यत्र [राजनि०

**गौरीपुष्प** पु० गौरी हरिद्रे । पीत पुष्पमस्य । प्रियङ्गुवृक्षे

**गौरीमन्त्र** पु० मन्त्रसारोक्ते गौर्या मन्त्रभेदे तदुद्धारश्च "ह्रीं गौरि । रुद्रदयिते । योगेश्वरि । सवर्म (हुँ) फट् । द्विठान्त षोडशवर्णोऽयं मन्त्रः सद्भिरुदीरितः"

**गौरीललित** न० गौरी हरिद्रेव ललितम् पीतवर्णत्वात् । हरिताले राजनि० ।

**गौरीशिखर** न० गौर्यास्तप स्थानं शिखरम् । स्वनामख्याते पर्वतभेदरूपे तीर्थभेदे "प्रजासु पश्चात् प्रथितं तदाख्यया जगाम गौरी शिखरं शिखण्डिमत्" कुमा०

**गौरीसुत** पु० ६त० । १अष्टवर्षोढाजतनये शब्दार्थचि० । २कार्त्तिकेये च । [ठक् । गुरुपत्नीगामिनि ।

**गौरुतल्पिक** पु० गुरुतल्पं गुरुपत्नीं गच्छति परदारा०

**गौलक्षणिक** त्रि० गोलक्षणं वेत्ति तद्ग्रन्थमधीते वा "विद्यालक्षणकल्पान्ताच्च" वार्त्ति० ठक् । १गोलक्षणवेत्तरि २तद्ग्रन्थाध्येतरि च ।

**गौलन्द्य** पुस्त्री गोलन्दगोत्रापत्य गर्गा० यञ् । गोलन्दर्षिगोत्रापत्ये स्त्रियां जातित्वात् ङीप् यलोप । गोलन्दी तदपत्यस्त्रियाम् । गौलन्द्यस्य छात्राः कण्वा० अण् यलोप । गौलन्दाश्छात्रेषु ।

**गौलाङ्कायन** पुस्त्री गोलाङ्कस्य गोत्रापत्यम् अश्वा० फञ् । गोलाङ्कर्षेर्गोत्रापत्ये स्त्रियां जातित्वात् ङीप् ।

**गौलिक** पु० गुडे साधु ठक् डस्य ल । मुष्ककवृक्षे राजनि०

**गौलोमन** त्रि० गोलोमेव शर्करा० अण् । गोलोमसदृशे स्त्रियां ङीप् ।

**गौल्मिक** पु० गुल्मे रक्षणार्थस्थानभेदे नियुक्तः ठक् । गुल्मरूपरक्षणार्थस्थाननियुक्ते यामिके सेनाभेदे "तत्रैव गुल्मे समेत्य ययामास मध्यगौल्मिकान्" "त्यक्त्वा द्वाराणि च द्वाःस्थास्तथा गुल्मानि गौल्मिकाः" भा०शा० दश० [राजनि० ।

**गौल्य** न० गुडस्य भाव ष्यञ् डस्य ल । माधुर्ये मधुररसे

**गौशतिक** त्रि० गोशतमस्यास्ति "एकगोपूर्वात्" पा० शत सहस्रादिव्यपकृष्टात् ठञ् । गोशतस्वामिनि स्त्रियां ङीप् ।

**गौष्ठ** त्रि० गोष्ठ्यां भव पलद्या० अण् । गोष्ठभवे स्त्रियां ङीप् । स्वार्थे अण् ङीप् गौष्ठीत्यपि गोष्ठ्याम् । तन्मन्त्रेत्र पलद्यादिषु पाठ इत्यन्ये ।

**गौष्ठीन** न० पूर्वं भूत गोष्ठ खञ् । भूतपूर्वगोष्ठे । "तामु वाच स गौष्ठीने वने स्त्रीप समीपगे" भट्टि

**गौसहस्रिक** त्रि० गोसहस्रमस्त्यस्य गौशतिकवत् ठञ् । गोसहस्रस्वामिनि ।

**गौह्लव्य** पुस्त्री गुह्लोर्ऋषेर्गोत्रापत्यम् गर्गा०यञ् । गुह्लुगोत्रापत्ये स्त्रियां ङीप् लोहिता० स्वार्थे ष्फ । गौह्लव्यायनी ।

**ग्धि** स्त्री अद्—क्तिन् वेदे घसादेश उपधालोपश्च तस्य जग्धिभावो न स्यामित्यत्वम् । भक्षणे । "सग्धिश्च मे" सि० कौ० धृता श्रुति ।

**ग्ना** स्त्री गम—बा० ना डिच्च । स्त्रीमात्रे "ग्नास्त्वा कृन्तन्नपसो ऽतन्वत वयित्र्यो वयन्" ता०ब्रा०१।८।६। "गच्छन्ति पुमांसमेना इति ग्ना स्त्रियः" भा० "मेना ग्ना इति स्त्रीणा स्त्रियस्त्यायतेरपत्रपणकर्मणः । मेना मानयन्त्येनाम् । ग्ना गच्छन्त्येना" निरु० । २देवपत्न्याम् । "आ ग्ना अग्न इहावसे होत्राम्" ऋ०१।२२।१० ग्ना देवपत्नी भा० । ग्ना अस्त्यस्य मतुप मस्य व । ग्नावत् सपत्नीके । "अभि यज्ञं गृणीहि नो ग्नावो नेष्ट" ऋ० १।१५।३। "सद-सस्पतेः" सहुद्धौ विसर्ग भा० । ३वाचि निघ० । "तव ग्नावो मित्रमह सजात्यम्" ऋ० २।१।५। ग्ना स्तुतियाचस्ता सन्तीति मतुप् । "छन्दांसि वै ग्नाः इति श्रुते ४वेदे च वेदस्य वाग्विशेषत्वात्तथात्वम् । "नराशंसो ग्नास्पतिर्नो अव्याः" ऋ० २।३८।१० ग्नास्पतिर्देवपत्नीनां पतिश्छन्दसां पतिर्वा" भा० "ग्नास्पतिरित्यत्र बा० षष्ठ्याः अलुक् । सान्त वा शब्दान्तरम् अतएव निघण्टौ ग्ना इति विसर्गान्त पठितम् ।

**ग्मा** स्त्री गम्यतेऽत्र गम—बा० डा । पृथिव्यां निघ० ।

**ग्रथ** कुटिलीकरणे भ्वा० आत्म०, इदित् सक० सेट् । ग्रन्थते अग्रन्थिष्ट जग्रन्थे ।

**ग्रथन** न० ग्रन्थ—भा० ल्युट्, नलोप । (गाँथा) । ग्रन्थने

"दोषस्थिरत्वात् ग्रथनाच्च" सुश्रुतः। "ग्रथनश्च विदर्भश्च सम्पुटो रोधनं तथा। योगः पल्लव इत्येते विन्यासाः षट्सु कर्म्मसु"। "मन्त्रेणान्तरितान् कृत्वा साध्यवर्णान् यथाविधि। ग्रथनं तद्विजानीयात् प्रशस्तं शान्तिकर्म्मणि" २तन्त्रसारोक्ते मन्त्रेणान्तरितसाध्यवर्णविन्यासभेदे च।

**ग्रथित** त्रि॰ ग्रन्थ—सन्दर्भे क्त नलोपः। सूत्रादिना कृतसन्दर्भे माल्यादौ "पर्य्यायग्रथिताक्षसूत्रवलया" प्रबो॰। "यथास्य रत्नग्रथितोत्तरीयम्" "कुसुमैर्ग्रथितामपार्थिवैः" (स्रजम्) रघु। "तच्छ्रुत्वैककूटमद्यापि ग्रथितं सुदृढं मुने" भा॰आ॰ १अ॰। "वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव" माघ। २क्लान्ते ३हिंसिते च मेदि॰।

**ग्रथिन्** त्रि॰ग्रन्थ—बा॰इनि किच्च नलोपः। जल्पके। "व्यक्तून् ग्रथिनो मृध्रवाच" ऋ॰ ७।६।३। "ग्रथिनो जल्पकान्" भा॰।

**ग्रथुन** पु॰ ग्रन्थ—बा॰ उनन्। स्तबके। "ग्रन्थात्तु नौस्तमित्युक्ता ग्रथून स्तबक उच्यते। कपुष्टिकाभिन केशा मूर्द्ध्नि पश्चात् कपुष्टिका" भट्टनारायणधृतवाक्यम् "पश्चात् पतिरवस्थाय युग्मन्तमौडुम्बर ग्रन्थात्तु ग्रथूनावध्नाति" गोभिलसूत्रम्।

**ग्रन्थ** संदर्भे वा चु॰उभ॰पक्षे क्र्या॰ प॰सक॰सेट्। ग्रन्थयति—ते ग्रथ्नाति अजग्रन्थत् अग्रन्थीत्। ग्रन्थयामास बभूव चकार चक्रे। जग्रन्थ जग्रथतुः—जग्रन्थतुः। जग्रन्थिथ जग्रथिथ इत्येके। अस्य कविकल्पद्रुमे भ्वा॰ गणे च परस्मैपदिष्वेव क्र्यादिकस्य पाठः। चिच्चि तु उभयपदिता। भारद्वाजीयास्तु पठन्ति "चिग्रन्थिग्रन्थिब्रू-आत्मनेपदाकर्मकाणामात्मनेपदेषूपसंख्यानम्" ग्रन्थि ग्रन्थ्योराद्वर्णीयत्वात् णिजभावपक्षे ग्रहणम्। ग्रन्थति ग्रन्थम्। ग्रन्थति मेखलान्देवदत्तः। ग्रन्थते ग्रन्थ॰। अग्रन्थिष्ट। ग्रन्थते। अग्रन्थिष्ट। इति भारद्वाजीयमते आत्म॰। तेनोभयपदता। सि॰कौ॰पक्षे भ्वा॰दित्वमपि तेन ग्रन्थति इत्यादि क्र्यादिकयोस्तु ग्रथ्नीते। ग्रथ्नीते सि॰कौ॰। एतच्च कर्म कर्त्तरि न तु कर्त्तरि इत्यन्ये

उद्+उत्तोल्य ग्रथने। "केशपक्षान् उद्ग्रथ्नन्तरान्" आश्व॰श्रौ॰१०।८।८ "सतामतान्तैरुद्ग्रथितैः स केशैः" रघु। "माल्यानि तस्योद्ग्रथितानि मर्त्ते" भा॰ स॰ ११२ अ॰ "रश्मीव ग्रथितमुद्ग्रथयन्ति सन्तः" भाग॰ ४।२२।२७।

**ग्रन्थ** पु॰ ग्रन्थ—सन्दर्भे भावे घञ्। १गुम्फने। कर्म्मणि घञ्। २शास्त्रे "ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया" नैष॰। "ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात्" भा॰ आ॰ १अ॰। ३धने ४द्वात्रिंशदक्षरपरिमितानुष्टुप् छन्दस्के श्लोके हेम॰।

**ग्रन्थकार** स्त्री ग्रन्थं करोति कृ अण् उप॰ स॰। ग्रन्थकारके (शाकल्यम्) "तस्मात्त्वं भगवांस्तुष्टो ग्रन्थकारो भविष्यति" भा॰ आनु॰ २८७ अ॰। कृ—क्विप् ६त॰। ग्रन्थकृदप्यत्र। "ग्रन्थकृल्लोकविख्यातो भवितास्यजरामरः" भा॰ आनु॰ १४अ॰। "ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत् परामृशति" काव्यप्र॰। तृच्। ग्रन्थकर्तृ ण्वुल् ग्रन्थकारक अत्रार्थे त्रि॰। तृचि स्त्रियां ङीप्।

**ग्रन्थकुटी** स्त्री ग्रन्थस्य कुटीव। लेख्यस्थाने त्रिका॰।

**ग्रन्थन** न॰ ग्रन्थ—भावे ल्युट्। (गाँथा) सन्दर्भे गुम्फने हेमच॰। चु॰ ग्रन्थ—युच्। ग्रन्थनाऽप्यत्र स्त्री।

**ग्रन्थसन्धि** पु॰ ६त॰। ग्रन्थस्य सन्धौ। तन्नामानि च कतिचित् त्रिका॰पठितानि। "सर्गो वर्गः परिच्छेदोद्घाताध्यायाङ्कसंग्रहाः। उच्छ्वासः परिवर्त्तश्च पटलः काण्डमस्त्रियाम्। स्थानं प्रकरणं पर्व्वाह्निकञ्च ग्रन्थसन्धय"। उपक्रमे गुरुवादीत्युक्तेः अन्यदपि ग्रन्थसन्धिनाम भवतीति सूचितम्। तेन कुसुमाञ्जलौ स्तबक, काव्यप्र॰उल्लासः,। वेदे प्रपाठकब्राह्मणानुवाकादय।

**ग्रन्थि** पु॰ ग्रन्थ—सन्दर्भे भावे करणादौ वा यथायथं सर्व्वधातुभ्य, इन् नित्स्वरः, "खनिकष्यज्यसीत्यादिना इर्वा स्वरे भेदः। १वंशादिपर्व्वणि (गाँट) अमरः। २काण्डसन्धौ ३भङ्गुरतायाम् ४हिंतावल्ल्यां ५पिप्पल्यां राजनि॰। ६बन्धने ७रोगभेदे मेदि॰। ८मायापाशे "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः" तैत्ति॰ उप॰। ग्रथि—कौटिल्ये भावे इन्। ९कौटिल्ये। कर्त्तरि इन्। १०ग्रन्थिपर्णवृक्षे मेदि॰। रोगभेद निदानादि सुश्रुते दर्शितं यथा "अथातो ग्रन्थ्यपच्यर्बुदगलगण्डानां निदानं व्याख्यास्यामः। वातादयो मांसमसृक्प्रदुष्टाः सन्दूष्य मेदश्च कफानुविद्धम्। वृत्तोन्नतं विग्रथितन्तु शोफं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः। आयस्यते व्यायतन एति तोदं प्रत्यस्यते कृत्यत एति भेदम्। कृष्णोऽमृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम्। दन्दह्यते धूप्यति चातिमात्रं प्रपच्यते प्रज्वलतीव चापि। रक्तः सपीतोऽप्यथ वापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम्। शीतो

३पाते च । उपरागशब्दे विवृतिः । ४असुरभेदे पु० "दृष्ट्वा तद्बलमाहात्म्यं सेनानीर्ग्रसनोऽसुरः" । "तम मत्यक्तं जगतामजय्यं चक्रं पपात ग्रसनस्य कण्ठे" । "द्विधा तु कृत्वा ग्रसनस्य कण्ठं तद्रक्तधारारुणघोरनाभि" इति च मत्स्यपु० ।

ग्रसिष्ठ त्रि० अतिशयेन ग्रसिता ग्रसितृ+इष्ठन् तृचो लोपे इटोऽसिद्धि । ग्रसितृतमे "भोगमानत्वादिद्ग ग्रसिष्ठ श्रो ग्रसीरजीग" ऋ०१।१६२।७। "ग्रसिष्ठं ग्रसितृतम" भा०

ग्रसिष्णु त्रि० ग्रस-इष्णुच् । १ग्रसनशीले "अत्ता चराचरग्रहणात्" शा० सू० न्यायात् २परब्रह्मणि च । "भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च" गीता ।

ग्रस्त त्रि० ग्रस-कर्मणि क्त उदित्वात् क्त्वो वेट्कत्वेन इडभावः । १भक्षिते लुप्तवर्णपदे २अस्पष्टोच्चारितशब्दे न० अमरः ।

ग्रस्तृ त्रि० ग्रस+तृच् ताच्छील्ये इडभाव । भक्षके । "सिंहिकासुषुवे राहुम्" "ग्रस्तारं चैव चन्द्रस्य सूर्यस्य च महाप्रभम्" हरिवं०२२६ अ० ।

ग्रस्तास्त पु० ग्रस्त एवास्तः । अदृष्टमोक्षे ग्रासोत्तरमस्तंगते सूर्ये चन्द्रे च । उपरागशब्दे ११९५ पृ० विवृतिः ।

ग्रस्तोदय पु० ग्रस्तस्य उदय । ग्रासोत्तरं रविचन्द्रयोरुदये "ग्रस्तास्तादौ विशेषमाह गुरुः "ग्रस्तास्ते त्रिदिनं पूर्वं पश्चात् ग्रस्तोदये तथा । खण्डग्रासे च त्रिदिनं निषेधे सप्त सप्त चेति" । कश्यपस्तु "ग्रस्तोदये परे दोषो ग्रस्तास्तेऽर्वाक् शशीनयोः । द्युनिशार्द्धेतूभयं तत्र खण्डाखण्डव्यवस्थया" इत्याह ।

ग्रस्य त्रि० ग्रस-कर्मणि वा० यत् । ग्रसनीये "यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्" भा०उ०३९अ० । ण्यत् । ग्रास्य तदर्थे त्रि० ।

ग्रह हस्तव्यापारभेदे स्वीकारे ज्ञाने च क्र्या० उभ०सक०सेट् । गृह्णाति गृह्णीते । गृह्णीयात् गृह्णीत । गृह्णातु गृह्णाम । अगृह्णात् अगृह्णीत । अग्रहीत् अस्य इटो दीर्घः । अग्रहीषाम् । अग्रहीष्ट । जग्राह जगृहतुः जग्रहिथ जगृहिव । जगृहे जगृहिषे । ग्रहीता ग्रहीष्यति ग्रहीषीष्ट ग्रहीष्यते ते । ग्रहीतव्यं ग्रहणीयम् ग्राह्यम् पदास्वैरिबाह्यापक्ष्येषु गृह्यम् । छन्दसि प्रतिगृह्यम् अपिगृह्यम् लोके तु प्रतिग्राह्यम् अपिग्राह्यम् । जलचरे च ग्राहः । ज्योतिषि अच् ग्रहः । गृहीत गृहीतिः । ग्रहणम् अप् ग्रहः । उद्ग्राहः ग्लौ संग्राहः सञ्चये संगृह्य । गृहीतम् । गृहीत्वा प्रतिगृह्य । ज्ञाने "हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम् । ग्रहीतुकामादरिणा शयेन" नैष० । "गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः" भाषा० । हस्तव्यापारे "गृहाण शस्त्रं यदि सर्ग एष ते" "तौ जगृहतुः पादान् राजा राज्ञी च मागधी" रघुः । "दश गृहान् गृह्णाति" श्रुतिः स्वीकारश्च स्वत्वापादनव्यापारः सेवनादिना स्वायत्तीकरणञ्च तत्राद्ये "तत्र किञ्चिन्न गृह्णीयात् प्राणैः कण्ठगतैरपि" प्रा०त० गङ्गामा० द्वितीये "शरच्छ्रीद न गृह्णीयात् गृह्णीयात् मार्गपौषयोः" नीति कर्मणि गृह्यते अग्राहि अग्राहिषाताम् अग्रहीषाताम् । अग्राहिष्यते अग्रहीष्यते । णिच् ग्राहयति ते अजीग्रहत् त । सन् जिघृक्षति ते । यङ् जरीगृह्यते । यङ्लुक् जरी(रि)गृहीति जर्गृहीति जरी(रि)गर्ढि जर्गर्ढि मुग्ध०" सि०कौ० जागृहीति जागर्ढि । ज्ञानसामान्यार्थत्वे णिचि प्रयोज्यस्य कर्मत्वं "शिष्यं वेदं ग्राहयतीति । गृह्णातेर्ज्ञानार्थकत्वेऽपि कर्मत्वम् मुग्धबो० "अजीगृहत् जनको धनुर्जयम्" भट्टिः । "अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक" कुमा० अस्मन्मते अज्ञानीयत्वेन विवाहयत्वेन च बोधयानाद्यर्थकत्वात् नानुपपत्तिः । मुग्धबो० द्विकर्मकमध्ये पाठात् "अग्राह यज्वनो भोज्यम्" उदा० पा० मते न द्विकर्मकतेति भेदः । वेदे हस्य भकारः । "इमामगृभ्णन् रशनामृतस्य" श्रुतिः । आर्षेऽपि क्वचित् हस्य भः गृभीतशब्दे उदा० ।

अति+अतिक्रम्य वर्त्तने "अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः" पा० "अतिक्रम्य ग्रहोऽतिग्रहः चारित्र्यतोऽतिगृह्यते चारित्रं चान्यानतिक्रम्य वर्त्तते इत्यर्थः" सि० कौ० "तदेतानतिग्राह्यान् ददृशुस्तानत्यगृह्णत" शत०ब्रा० ४।५।४।२

अनु+आनुकूल्यकरणे "वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम्" भा० वि० ८८६श्लो० ।

सम्+अनु+बन्धनादिना आनुकूल्ये "अवमुच्य किरीटं च केशान् समनुगृह्य च । उदतिष्ठज्जरासन्धः" भा०स०८८५श्लो० ।

अप+सन्ततधारातो विच्छिद्य पृथक्कृत्य ग्रहणे "अपगृह्य पुनरिन्द्राय" कात्या० श्रौ० ८।६।२ "अपगृह्य सन्ततधारातो विच्छिद्य पृथक्कृत्वा पुनस्तस्या एव धाराया गृह्णाति" कर्क० अपसारणे च "अथैक

जेय क्षितिपतिस्तदा" भा० आनु० ६६अ० । विशेषेण ग्रहणे "न विगृह्णाति वैषम्यम्" भाग० ३।२२।२४ श्लो० । "अविगृह्य गतादिभ्यो यथा यामादिकर्मभिः" हरि विशेषणगृह अव्ययीभाव । विगृह्णो देह । "रक्तप्रसाधितभुवः क्षतविग्रहाश्च" वेणी० यत्नविधवृत्तिस्फुटीकरणवचनभेदे "वृत्त्यर्थविवरणं विग्रहः" सि०कौ० "समस्या विग्रहस्य वा" शब्दश०प्र० ।

सम्+सञ्चये नानास्थानपठितस्य एकत्र समावेशार्थे शब्दभेदे "संग्रहेऽस्तमुपागते" वाक्यपदीयम् । सङ्कोचने "संगृह्णती कौशिकमुत्तरीयम्" भा०आ० १५६०२ श्लो० एकत्रीकरणे "संगृह्य तत्समं रत्नैर्निर्ममे स्त्रियमुत्तमाम्" ८५५९ श्लो० सम्यक्ग्रहणे "औषधानि च सर्वाणि मूलानि च फलानि च । चतुर्विधांश्च वैद्यान् वै संगृह्णीयाद्विशेषतः" भा०शा० २६५४ श्लो० । स्तुतौ सम्याक्सञ्चये द्रव्यसंग्रह" सि०कौ०

ग्रह आदाने वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । ग्राहयति ते ग्रहति । अजिग्रहत् त अग्रहीत् अग्राहीत् ।

ग्रह पु० ग्रह—अच् । १नवसु सूर्यादिषु । २बालारिष्टकारेषु स्कन्दग्रहादिषु भावे अप् । ३अनुग्रहे, ४निर्बन्धे, "अवश्यभव्येष्वनवग्रहग्रहा" नैष० ५आदाने ग्रहणे, ६रणोद्यमे, ७अस्त्रत्वे, ८चन्द्रसूर्ययोग्रासे च "तदा सम्भाव्यते ग्रह" इति ज्योतिषम् "एकराशं परित्यज्य कुर्यात् पाणिग्रहं ग्रहे" ज्योति० सूर्यादयश्च "सूर्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः" । एषां गतिभेदाः खगगतिशब्दे २४१२पृ०दर्शिता । राहुकेत्वोर्यथा ग्रहत्वं पौ०धा० व्यवस्थापितं तच्च केतुशब्दे २२२४ पृ०उक्तम् । शा०ति० १पटले "लोकानग्नीन् स्वरान् धातून् मुनीन् द्वीपान् ग्रहानपि । समिवं सप्तसङ्ख्याता सप्त जिह्वा हविर्भुजः" इत्यनेन ग्रहाणां यत् सप्तत्वमुक्तं तत् वराहमताभिप्रायेण । तच्च १२११पृ० उपरागशब्दे अस्फुटत्वाद्विशेषादित्याद्युक्तम् । अन्यमताभिप्रायेण ग्रहाणां नवत्वं ६पटले शा०ति०उक्तं यथा "नव वर्गाः सकृत्पन्ना नवरत्नेश्वरा ग्रहाः । अर्केन्दुरक्तगुरुभृगुमन्दाहिकेतवः । माणिक्यं मौक्तिकं चारु विद्रुमं गारुडं पद्म । पुष्पराग लसद्वज्रं नीलं गोमेदकं शुभम् । वैदूर्यं नव रत्नानि" ।

स्कन्दग्रहादीनां नवानां लक्षणविभागः सुश्रुते उक्तो यथा "अथातो नवग्रहाकृतिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ बालग्रहाणां विज्ञानं साधनञ्चाप्यनन्तरम् । उत्पत्तिं कारणञ्चैव सुश्रुतैकमनाः शृणु ॥ स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार२ एव च । शकुनी३ रेवती४ चैव पूतना५ चान्धपूतना६ ॥ पूतना शीतनामा७ च तथैव मुखमण्डिका८ । नवमो नैगमेयश्च९ यः पितृग्रहसंज्ञितः ॥ धात्रीमात्रोः प्राक्प्रदिष्टापचाराच्छौचभ्रष्टान्मङ्गलाचारहीनान् । त्रस्तान् हृष्टांस्तर्जितान् क्रन्दितान् वा पूजाहेतोर्हिंस्युरेते कुमारान् ॥ ऐश्वर्यस्थास्ते न शक्या विशन्तो देहं द्रष्टुं मानुषैर्विश्वरूपाः । आप्तं वाक्यं तत्समीक्ष्याभिधास्ये लिङ्गान्येषां यानि देहे भवन्ति ॥ शूनाक्षः क्षतजसगन्धिकः स्तनद्विड्वक्रग्रीवो हतचलितैकपक्ष्मनेत्रः । उद्विग्नः सुललितचक्षुरस्त्ररोदी स्कन्दार्त्तो भवति च गाढमुष्टिवर्चाः १ ॥ निःसंज्ञो भवति पुनर्भवेत् ससंज्ञः संरब्धः करचरणैश्च नृत्यतीव । विण्मूत्रे सृजति विनद्य जृम्भमाणः फेनञ्च प्रसृजति तत्सखाभिपन्नः २ ॥ स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्रावित्रणपरिपीडितः समन्तात् । स्फोटैश्च प्रचिततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या ३ ॥ रक्तास्यो हरितमलोऽतिपाण्डुदेहः श्यावो वा ज्वरमुखपाकवेदनार्त्तः । रेवत्या व्यथिततनुश्च कर्णनासं मृद्नाति ध्रुवमभिपीडितः कुमारः ४ ॥ स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ विड्भिन्नं सृजति च काकतुल्यगन्धिः । छर्द्यार्त्तो हृषिततनूरुहः कुमारस्तृष्णालुर्भवति च पूतनागृहीतः ५ ॥ यो द्वेष्टि स्तनमतिसारकासहिक्काच्छर्दीभिर्ज्वरसहिताभिरर्द्यमानः । दुर्वर्णः सततमधः शयोऽम्लगन्धिस्तं ब्रूयुर्भिषजोऽन्धपूतनार्त्तम् ६ ॥ उद्विग्नो भृशमतिवेपते प्ररुद्यात् संलीनः स्वपिति च यस्य चान्त्रकूजः । विस्राङ्गो भृशमतिसार्य्यते च यस्तं जानीयाद्भिषगिह शीतपूतनार्त्तम् ७ ॥ म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो बह्वाशी कलुषसिरावृतोदरो यः । सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरिह वक्त्रमण्डिकार्त्तः ८ ॥ यः फेनं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः । ज्वर्य्येत प्रततमथो वसासगन्धिर्ध्वस्तो भवति स नैगमेयजुष्टः ९ ॥ प्रसक्तो यः स्तनद्वेषी मुह्यते चापि मन्मुहुः । तं बालमचिराद्घ्नन्ति ग्रहाः सम्पूर्णलक्षणाः ॥ विपरीतमतः साध्यं चिकित्सितं दर्शितम् । गृहे पुरा-

ऽश्वविषाभ्यज्य बालं शुचौ शुचि ॥ सर्षपान् प्रकिरेत्तेणं तैलैर्दीपञ्च कारयेत् । सदोषग्निहितस्यापि लुड्याद्धव्यवाहनम् ॥ सर्वगन्धौषधीबीजैर्गन्धमाल्यैरलङ्कृतम् । अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति सञ्चरन् ॥ नमः स्कन्दाय देवाय ग्रहाधिपतये नमः । शिरसा त्वाभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम् ॥ निरुजो निर्विकारश्च शिशुर्मे जायतां ध्रुवम्"॥

स्तोत्पत्तिकमन्यग्रहभेदा भा॰व॰२२९अ॰उक्ता यथा

"यावत् षोड़श वर्षाणि भवन्ति तरुणाः प्रजाः । प्रबाधन्त मनुष्याणां तावद्रूपैः पृथग्विधैः । अहञ्च व प्रवक्ष्यामि रौद्रमाज्ञानमव्ययम् । परमं तेन सहिता ह्युष्व मत्सुत्य पूजिताः । मार्कण्डेय उवाच । तत शरीरात् स्कन्दस्य पुरुषः पावकप्रभः । भोक्तुं प्रजा स मर्त्त्यानां निष्पपात महाबल । अपतत् सहसा भूमौ विसञ्ज्ञोऽथ क्षुधार्दितः । स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः । स्कन्दापस्मारमित्याहुर्ग्रहं न द्विजसत्तमाः ॥ विनता तु महारौद्री कथ्यते शकुनीग्रहः । पूतना राक्षसीं प्राहुस्तं विद्यात् पूतनाग्रहम् । कष्टा दारुणरूपेण घोररूपा निशाचरी । पिशाची दारुणाकारा कथ्यते शीतपूतना । गर्भान् सा मानुषीणान्तु हरते घोरदर्शना । अदिति रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः । सोऽपि बालान्महाघोरो बाधते वै महाग्रहः । दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम् । अत्यर्थं शिशुमांसेन सम्प्रहृष्टा दुरासदा । कुमाराश्च कुमार्य्यश्च ये प्रोक्ताः स्कन्दसम्भवाः । तेऽपि गर्भभुजः सर्वे कौरव्य ! सुमहाग्रहाः । तासामेव तु पत्नीनां पतयस्ते प्रकीर्त्तिताः । अज्ञायमाना गृह्णन्ति बालकान् रौद्रकर्म्मिणः । गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ॥ शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून् भुवि । सरमा नाम या माता शुनां देवी जनाधिप ॥ सापि गर्भान् समादत्ते मानुषीणां सदैव हि । पादपानाञ्च या माता करञ्जनिलया हि सा । वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी । करञ्जे तां नमस्यन्ति तस्मात् पुत्रार्थिनो नराः । इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः । द्विपञ्चरात्रं (१०) तिष्ठन्ति सततं सूतिकागृहे । कद्रूः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशत्यथ । भुङ्क्ते सा तत्र त गर्भं सा तु नागं प्रसूयते । गन्धर्वाणाञ्च या माता सा गर्भं गृह्य गच्छति । ततो विलीनगर्भा सा मानुषी भुवि दृश्यते । या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा । उपविष्टं ततो गर्भं कथयन्ति मनीषिणः । लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता । लोहितायनिरित्येव कदम्बे सा हि पूज्यते । पुरुषेषु यथा रुद्रस्तथार्य्या प्रमदास्वपि । आर्य्या माता कुमारस्य पृथक्कामार्थमिज्यते । एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः । यावत् षोडश वर्षाणि अशिवास्ते शिवास्ततः । ये च मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः । सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः । तेषां प्रशमनं कार्य्यं स्नानं धूपमथाञ्जनम् । बलिकर्मोपहारश्च स्कन्दस्येज्या विशेषतः । एवमभ्यर्चिताः सर्वे प्रयच्छन्ति शुभं नृणाम् । आयुर्वीर्य्यञ्च राजेन्द्र ! सम्यक्पूजानमस्कृताः । ऊर्द्धन्तु षोडशाद्वर्षाद्ये भवन्ति ग्रहा नृणाम् । तानहं सम्प्रवक्ष्यामि नमस्कृत्य महेश्वरम् । यः पश्यति नरो देवान् जाग्रद्वा शयितोऽपि वा । उन्माद्यति स तु क्षिप्रं तन्तु देवग्रहं विदुः । आसीनश्च शयानश्च यः पश्यति नरः पितॄन् । उन्माद्यति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः । अवमन्यति यः सिद्धान् क्रुद्धाश्चापि शपन्ति यम् । उन्माद्यति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः । उपाघ्राति च यो गन्धान् रसांश्चापि पृथग्विधान् । उन्माद्यति स तु क्षिप्रं स ज्ञेयो राक्षसग्रहः । गन्धर्वाश्चापि यं दिव्याः संस्पृशन्ति नरं भुवि । उन्माद्यति स तु क्षिप्रं ग्रहो गान्धर्व एव सः । अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं प्रति । उन्माद्यति स तु क्षिप्रं ग्रहः पैशाच एव सः । आविशन्ति च यं यक्षाः पुरुषं कालपर्य्यये । उन्माद्यति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः । यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः । उन्माद्यति स तु क्षिप्रं साधनं तस्य शास्त्रतः । वैक्लव्याच्च भयाच्चैव घोराणां चापि दर्शनात् । उन्माद्यति स तु क्षिप्रं साम्यं तस्य तु साधनम् । कश्चित् क्रीडितुकामो वै भोक्तुकामस्तथाऽपरः । अभिकामयतेत्यन्यस्त्रिविधो ग्रहः । यावत् सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम् । अतःपरं देहिनान्तु ग्रहतुल्यो भवेज्ज्वरः । अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् । आस्तिकं श्रद्दधानञ्च वर्जयन्ति सदा ग्रहाः । इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्त्तितः । न स्पृशन्ति ग्रहा भक्तान्नरान्देवे महेश्वरे"।

करणायानुपात । यदि त्रिज्यातुल्यया कोटिज्ययाद्य भोग्यखण्डं शरद्विदस्रतुल्यं लभ्यते तदेष्टया किमित्यत्र कोटिज्यायां शरद्विदस्रा २२५ गुणस्त्रिज्या हरः । फलं तात्कालिकं स्फुटभोग्यखण्डं तेन केन्द्रगतिर्गुणनीया शरद्विदस्रैर्भाज्या । अत्र शरद्विदस्रमितयोर्गुणकभाजकयोस्तुल्यत्वान्नाशे कृते केन्द्रगते कोटिज्या गुणस्त्रिज्या हरः स्यात् । फलमद्यतनकेन्द्रदोर्ज्ययोरन्तरं भवति । तत्फलकरणार्थं स्वपरिधिना गुण्यं भागैः ३६० भाज्यम् । पूर्व्वं किल गुणकः कोटिज्या सा यावत् परिधिना गुण्यते भागैः ३६० ह्रियते तावत् कोटिफलं जायते इत्युपपन्नं कोटौ फलघ्नी स्फुटकेन्द्रभुक्तिरित्यादि । एवमद्यतनश्वस्तनग्रहफलयोरन्तरं तद्गते फलं कर्क्यादिकेन्द्रे ग्रहणफलस्यापचीयमानत्वात् तुलादौ धनफलस्योपचीयमानत्वाद्धनम् । मकरादौ तु धनफलस्यापचीयमानत्वान्मेषादावृणफलस्योपचीयमानत्वादृणमित्युपपन्नम्” प्रमिता० ।

ग्रहगन्ध पु० ६त० । ग्रहयज्ञशब्दे वक्ष्यमाणे सूर्य्यादुद्देशेन देये रक्तचन्दनादौ ।

ग्रहचिन्तक पु० ग्रहान् शुभाशुभदायकतया चिन्तयति चिन्ति–ण्वुल् ६त० । दैवज्ञे सांवत्सरिके । “वक्तव्यमिष्ट जगतोऽशुभं वा शास्त्रोपदेशाद् ग्रहचिन्तकेन” वृ० स० २४अ० ।

ग्रहण न० ग्रह–भावे ल्युट् । १स्वीकारे २ज्ञाने । ३आदरे ४उपरागे चन्द्रसूर्य्ययो राहुणा ग्रसने करणे ल्युट् । ५करे मेदि० । ६इन्द्रिये राजनि० । ७शब्दे जटा० । तत्र करस्य ग्रहणसाधनत्वात् इन्द्रियाणां शब्दस्य च ज्ञानसाधनत्वात् तथात्वम् । उपरागस्य यथा राहुकृतत्वं तथा उपरागशब्दे १२११पृ० उक्तम् ।

“चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते” सम्वत्सरप्रदीपः । तत्रातुरस्यापि स्नानमाह “आदित्यकिरणैः पूतं पुनः पूतञ्च वह्निना । अत, व्याध्यातुरः स्नायात् ग्रहणेऽप्युष्णवारिणा” व्यासः । तत्र सर्वजलस्य गाङ्गतुल्यतामाह व्यासः “सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजाः । सर्वं गङ्गासमं तोयं ग्रहणे नात्र संशयः” । तत्र श्राद्धस्यावश्यकर्त्तव्यतामाह शाता० । “सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु तत् श्राद्धं पङ्के गौरिव सीदति” । तत्राभावेन श्राद्धमाह प्रचेताः “आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा । आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव हि” । आमश्राद्धेऽपि विशेषो योगिनीतन्त्रे “निरग्नेरामश्राद्धे तु अन्नं न चालयेत् क्वचित् । इष्टौ तु चालयेदन्नं संक्रमे ग्रहणेषु च” । ग्रहणश्राद्धादिकं मलमासेऽपि कार्यं यथाह कालमा० स्मृतिः “चन्द्रसूर्य्यग्रहे स्नानं श्राद्धदानजपादिकम् । कार्य्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा” । तत्र दीक्षायां नैव कालादिशुद्ध्यपेक्षा “सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः । मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत्” सारसंग्रह । तत्र वारभेदे गुणाधिक्यम् “चन्द्रग्रहश्चन्द्रवारे रवौ सूर्य्यग्रहस्तथा । चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम् । अन्यस्माद्ग्रहणात् कोटिगुणमत्र फलं लभेत् गरु०पु० । अत्र पुरश्चरणप्रकारः “अथ वान्यप्रकारेण पुरश्चरणमिष्यते । ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः । नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः । यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः । ग्रहणादि विमोक्षान्तं जपेन्मन्त्रं समाहितः । अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् । तदन्ते महतीं पूजां कुर्य्याद्ब्राह्मणतर्पणम् । ततो मन्त्रप्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत् । एवञ्च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति” । ति०त० पुरश्चरणच० । तत्र स्नानस्यावश्यकर्त्तव्यतामाह वृहद्वशिष्ठः “संक्रमे ग्रहणे चैव न स्नायाद्यस्तु मानवः । सप्तजन्मसु कुष्ठी स्याद् दुःखभागी च सर्वदा” अत्राशौचेऽपि शाङ्गस्नानमात्रं कार्य्यं यथाह स्मृतिः । “सूतके मृतके चैव न दोषो राहुदर्शने । स्नानमात्रन्तु कर्त्तव्यं दानश्राद्धविवर्जितम्” । अत्र मृताशौचं नास्ति यथोक्तम् “चन्द्रसूर्य्यग्रहे चैव मृतानां पिण्डकर्म्मणि । महातीर्थे तु संप्राप्ते मृतदोषो न विद्यते” भविष्यपु० ।

तत्र ज्ञाने “भार्य्यात्वसंपादकं ग्रहणं विवाहः” उद्वा०त० रघु० । “सतएव सतां परार्थता ग्रहणानां हि यथा यथार्थता” नैष० । आदाने “पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्” उ० त० स्मृतिः । “आचारधूमग्रहणात् बभूव” रघु “स बाहुयतसुटास्य कृत्वांस ग्रहणं रणे” हरिव० ४८अ० । अर्थवद्ग्रहणेनानर्थकस्य” “अनिनसनुग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति” व्या० परिभाषा ।

ग्रहणक न०ग्रह्यतेऽनेन ग्रह–करणे ल्युट् तत स्वार्थे क । ग्राहके शास्त्रे । “ह्रकारादीनामपि ग्रहणकशास्त्रत्वात्

सर्वदा सर्वस्मिन् काले निशि दिने च बली। अन्ये परे रविगुरुसिता अह्नि दिने बलिनः। क्रूराः पापा ग्राः सुक्काः बहुलपक्षे, कृष्णपक्षेऽपि क्रूरो बलवान् भवति यवनेश्वरः 'मासे तु शुक्ले प्रतिपत्प्रवृत्ते पूर्वं शशी मध्यबलो दशाहे। श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैस्तु दृष्टो बलवान् सदैवेति'' सितगता शुक्लपक्षे स्थिता सौम्या बलिनः। द्व्ययनेति द्वे अयने प्रमाणं यस्य द्व्ययनं तत् वर्षं स्ववर्षे आत्मीयवर्षे, यो गृहो यत्र वर्षेऽधिपतिः स तत्र बलवान् स्वदिवसे आत्मीयवासरे स्वहोरायां कालहोरायाम्। तथा स्वमासे यस्मिन् मासे योऽधिपतिः स तत्र बली द्व्ययनदिवसहोरामासानां ये अधिपतयस्तैर्गृहैः कालबलोपेतैर्भवितव्यम्। ते कालबलोपेता इत्यर्थः केचिद्द्व्ययनदिवसहोरामासपैरिति पठन्ति अन्ये अब्दहस्समहोरामासपैरिति पठन्ति य एवामपरः पाठः एतेषु कालेषु सर्वे एव बलिनो भवन्ति एतत् गृहाणां कालवीर्यम्। एतेषामन्यतमेन संयुक्तः कालबलसम्पन्नो भवति। शकुबुगुशुचराद्या इति शादयो वर्णाः आद्या येषाम् ते शकाराद्यः शनैश्चरः सर्वेभ्यो बलहीनः कुकाराद्यः कुजः भौमः शनैश्चराद्बलवान्। बुकाराद्यो बुधः स भौमाद्बलवान् गुकाराद्यो गुरुः स बुधाद्बली, शुकाराद्यः शुक्रः स जीवाद्बली चकाराद्यश्चन्द्रः स शुक्राद्बली रकाराद्यो रविः स चन्द्राद्बलीति। एतद्ग्रहाणां नैसर्गिकबलम्। यवनेश्वरेणापि स्वल्पजातके उक्तम् ''मन्दारसौम्यवाक्पतिसितचन्द्रार्का यथोत्तरं बलिनः। नैसर्गिकबलमेतद्बलसाम्ये स्यादधिकचिन्तेति''। यदा ग्रहाणां गृहयोर्वा बलसाम्यं भवति तदा बलाधिक्यम् अधिकवीर्यवत्ता चिन्तेति। अत्राचार्येण च तु षष्ठाःरस्य फलं नोक्तं तच्चान्यशास्त्राल्लिख्यते तथा च सारावल्याम् ''उच्चबलेन समेतः परां विभूतिं खगः प्रसाधयति। स्वत्रिकोणगतः पुंसां साचिव्यं बलपतित्वं वा। स्वर्क्षबलेन च सहितः प्रमुदितधनधान्यसम्पदाक्रान्तम्। मित्रवर्गसंयुक्तो जनयति कीर्त्यान्वितं पुरुषम्। तेजांसि नमति कुरुते सुस्थिरविभवं स्वपाक्षबद्धधनम्। स्वनवांशकबलयुक्तं करोति पुरुषं प्रसिद्धं च''। स्वल्पजातकेऽप्युक्तम् ''बलवान्मित्रस्वगृहोच्चनवांशकेष्वीक्षितः शुभैश्चापि। चन्द्रः स्त्रीक्षेत्रे पुरुषक्षेत्रोपगाः शेषा'' इति तत्र शुभबलादिफलं तावत् ''शुभदर्शनबलसहितं पुरुषं कुर्यात्सुनामिवं ख्यातम्। सुभगं प्रधानमखिलं बहुपदेशं च सौख्यं च। पुंस्त्रीभवनबलेन च करोति जनपूजितं कलाकुशलम्। पुरुषं प्रसन्नचित्तं कस्य परलोकभीतस्य'' चाशाबलसमवेतो नयति स्वदिशं नभश्चरः पुरुषम्। स न्या यस्त्रविभूषणवाहनसौख्यान्यतः कुरुते। कश्चिद्राज्यं कश्चित्पूजां कश्चिद्द्रव्यं क च यशः। ददाति विहगश्चित्रं चेष्टावीर्यसमन्वितः। बलिनस्तु सदावीर्याः शुभा राज्यप्रदा खगाः। पापा व्यसनदाः पुंसां कुर्वन्ति च इत्थं टनम्। स्वस्य शरीरसमागमसुखमाह्वबलयबलेन विदधाति। शुभमहत्त्वं विहगेन्द्रो राज्यं च विनिर्जितारातिम्। रात्रिदिवाबलपूर्णैर्मृगलाभेन शौर्यपरिहृद्धा। नश्चिनयति सत्पथं भुङ्क्ते लक्ष्मीं नभश्चरैः पुरुषः। द्विगुणं द्विगुणं दद्युर्वर्षा पमास दबलहोरेशाः। कुर्युर्द्व्यया सौख्यं स्वदशासु धनं च कीर्तिं च। पक्षबला द्रुपनाथं वराम्बरहास्तसम्पदं दद्युः। स्त्रीकनकभूमिलाभं कीर्तिं च यथाद्रुमबलतराम्। सकलबलभारभरिता निर्मलकरजालभासुरा सततम्। राज्यं खगा विदध्युः सौख्यं च मनोरथातीतम्। अथ चारसौम्यशुभगोचरता सुहृदास्तेजस्विनः कृतविदो द्विजदेवभक्ता। सद्रत्नमाल्यजनभूषणवियासं सौम्यग्रहैर्युते पुरुषा भवन्ति। लुब्धाः कुकर्मनिरता निजकार्यनिष्ठा पापान्विताः सकलहाश्च तमोऽभिभूता। क्रूराः शठा वधरता मलिना कृतघ्ना पापग्रहैर्युते पिशुनाः कुरूपा। पुरार्थेषु गृहेन्द्रैर्मैत्रीं सग्रामकाङ्क्षिणो बलिनः। निःस्नेहा सुकठोरा क्रूरा मुखीश्च जायन्ते। शुभसभवनस्थितेषु च सदस्य सग्रामभीरवः पुरुषाः। जलकुसुमवस्त्रनिरता सौम्याः कलहे सहयुक्ता इति'' एतत्सर्वं सुगमम्'' भट्टोत्पल। ताजकोक्तद्वादशवर्गवत् च पञ्चवर्गीयाब्दे द्वादशद्वादशवर्गीयाब्दे च सज्ञाने। [होड़ेयम देवे गुह्योद्गमादौ द्रव्ये।

ग्रहवह्नि पु॰ चतुर्थ्यर्थे ६त॰। गृह्यकर्मणि पच्यमाने गन्धे।

ग्रहभक्ति स्त्री ६त॰। गृहाणां विभागक्रमे देशपुरुषद्रव्यादिभेदे सा च बृ॰स॰ १६अ॰ उक्ता यथा

रवेः—''प्राङ्नर्मदार्धशोणोड्रवङ्गसुह्माः कलिङ्गवाह्लीकाः। शकयवनमगधशबरप्राग्ज्योतिषचीनकाम्बोजाः। मेकलकिराताटविका बहिरन्तःशैलजाः पुलिन्दाश्च। द्रविडानां प्रागर्धं दक्षिणकूलं च यमुनायाः। चम्पोदुम्बरकौशाम्बिचेदिविन्ध्याटवीकलिङ्गाश्च। पुण्ड्रा गोलाङ्गूलश्रीपर्वतवर्धमानाश्च। इक्षुमती त्यथ तस्करपारतकान्तारगोपबीजानाम्। तुषधान्यकटुकतरुकनकदहनविषसम-

बधत्वं स्यात्" सि० कौ०। शब्देन्दुशेखरे तु ग्रहणके-त्यत्र गाहकेति पाठः।

ग्रह(हि)णी स्त्री गृह्णाति रोगिणो देहम् ग्रह—ल्युट् ङीप्। १पित्तधराख्ये कलाभेदे २तदाश्रिते रोगभेदे प्रवाहिकायां च तद्रोगस्याननिदानाद्युक्तं सुश्रुते यथा "दुष्यति ग्रहणी जन्तोरग्निसादनहेतुभिः। अति-सारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः। भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत्। तस्मात्कार्यः परी-हारस्त्वतीसारे विरिक्तवत्। यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा। षष्ठी पित्तधरा नाम या कला परिकी-र्त्तिता। पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता। ग्रहण्या बलमग्निर्हि स चापि ग्रहणीश्रितः। तस्मात् संदूषिते वह्नौ ग्रहणी सम्प्रदुष्यति। एकशः सर्वशश्चैव दोषैरत्यर्थमूर्च्छितैः। सा दुष्टा बहुशो भुक्तमाममेव विमु-ञ्चति। पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम्। ग्रहणी रोगमाहुस्तमायुर्वेदविदो जनाः। तस्योत्पत्तौ विदाहश्च सदनालस्यतृट्क्लमाः। बलक्षयोऽरुचिः कासः कर्णक्ष्वेडा-न्त्रकूजनम्। अथ जाते भवेज्जन्तुः शूनपादकरः कृशः। पर्वरुग्लौल्यतृट्छर्दिज्वरारोचकदाहवान्। उद्गिरे-च्छुक्ततिक्ताम्ललोहधूमामगन्धिकम्। प्रसेकमुखवैरस्यतम-कारुचिपीडितः। वाताच्छूलाधिके पायुहृत्पार्श्वोदरम-स्तकैः। पित्तात्सदाहैर्गुरुभिः कफाच्चाभिन्नवर्चसः। दोषवर्णैर्नखैस्तद्विण्मूत्रनयनाननैः। हृत्पाण्डूदरगुल्मा-र्शःप्लीहाशङ्की च मानवः"।

"नानाविधद्रव्यचौरो जायते ग्रहणीयुतः" शाता०। तस्याः कर्मभेदविपाकतोक्ता। तस्या महारोगत्वमदाद्यशब्दे उक्तम् "वृद्धस्य ग्रहणीरोगो नाष्टाहीत्वा निवर्त्तते" वैद्य०।

ग्रहणीहर न० ग्रहणीं हरति हृ—अच्। १लवङ्गे शब्दच० २ग्रहणीहारके औषधादौ त्रि०।

ग्रहदक्षिणा स्त्री० ग्रहाणां ग्रहोद्देशेन देया दक्षिणा। ग्रहो-द्देशेन ग्रहयज्ञे देयधेन्वादिदक्षिणायाम् ग्रहयज्ञशब्दे विवृतिः।

ग्रहदान न०६त०। ग्रहोद्देशेन तदशुभशान्त्यै दानम्। ग्रहा-शुभनिवारणार्थं देये द्रव्यभेदे गोचरशब्दे ग्रहगोचर-शब्दे ग्रहविप्रशब्दे च तद्विवृतिः।

ग्रहदृष्टि स्त्री। ६त०। ग्रहाणां स्वस्थानापेक्षया स्थान-भेदेषु दर्शनभेदे सा च बृहज्जातके तट्टीकायां चोक्ता यथा "त्रिदशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभि-वृद्धितः। रविजामरेज्यरुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिकाः" बृहज्जा०। "यस्मिन् स्थाने खेटाः स्थितास्तस्मात्त्रिदशादीनि स्थानानि चरणाभि-वृद्धितः पादवृद्ध्यावलोकयन्ति खेटो यस्मिन् राशौ व्यवस्थितः तस्मात्तृतीयगः खेटो दशमगतश्च तौ तृतीयदशमराशौ च पादेन चतुर्भागदृष्ट्यावलोक-यति एवं त्रिकोणस्थौ नवपञ्चमस्थानगतावर्द्धदृष्ट्या, चतुरस्रेऽष्टमचतुर्थे अष्टमचतुर्थस्थानस्थौ पादहीनदृष्ट्या सप्तमगे खेटे परिपूर्णदृष्ट्या। चरणाभिवृद्धित इत्यना-भिशब्दो वीप्सां द्योतयति चरणचरणवृद्ध्या पादपादवृ-द्ध्येत्यर्थः। यावत्पाददृष्ट्या पश्यन्ति तावत् फलं प्रयच्छन्ति तथा च स्वल्पजातके "दशमतृतीये नवमपञ्चमे चतुर्था-ष्टमे कलत्रं च। पश्यन्ति पादवृद्ध्या फलानि चैव प्रय-च्छन्ति"। यथैव खेटा उक्तस्थानानि पश्यन्तीति तथा च सारावल्याम् "पश्यति सदा खगाश्चरणवृद्धितः सर्वे। त्रिदशत्रिकोणचतुरस्रसप्तमगतान् फलं क्रमेणैव। पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः। चतुरस्रं भूमिसुतः सितार्कबुधहिमकरा कलत्रं च"। तथा यवनेश्वरः "द्वौ पश्चिमौ ११।१२। प्रथमद्वितीय सस्थानराशेः परिहृत्य राशिम्। शेषान् खगः पश्यति सर्वकालमिष्टेषु चैषां विहिता दृगिष्टा। आविमभे दृष्टि-फलं समस्तं सपादहीनं चतुरस्रयोश्च। त्रिकोणयोर्दृष्टि-फलार्द्धमाहुस्त्रिकयुक्तसे दशमे च पादम्"। रविजा-मरेज्यरुधिरा इति। किलेत्यागमसूचने चरणाभि-वृद्धित इत्यनुवर्त्तते एते रविजाद्याश्चरणाभिवृद्धितः पादोपचयाद्वीक्षणे दर्शने क्रमशोऽधिकफलप्रदा भवन्ति रविजः सौरिः स दर्शने पादफलप्रदः, अमरेज्यो बृह-स्पतिरर्द्धफलप्रदः रुधिरोऽङ्गारकः स पादहीनफलप्रदः। अपरेऽर्कचन्द्रबुधशुक्रास्ते वीक्षणे समफलप्रदाः। एतन्नैसर्गिकं ग्रहाणां दृष्टिफलम्। स्थानवशादेतेषां यथास्वं दृष्टिफलमूह्यम् एवमेके व्याचक्षते। अपरे तु आहुः स्थानफलमेतत् तेन त्रिदशादिस्थानगतान् ग्रह-राशीन् पश्यन्तो रविजादयो दर्शनेऽधिकफलप्रदा भवन्ति तद्यथा तृतीयदशमस्थान् ग्रहान् राशीन् वा शनैश्चरः पश्यन्नन्येभ्यो ग्रहेभ्योऽधिकफलप्रदो भवति परिपूर्णं पश्यतीत्यर्थः। एवं त्रिकोणस्थान् जीवः, चतु-रस्रगान् भौमः, सप्तमस्थान् परे सूर्यचन्द्रबुधशुक्राः। एतच्च बहुतराचार्याणां मतम्। तथा च भगवान्

गर्गः "दुश्चिक्यं दशमान् सौरिस्त्रिकोणस्थान् बृह-स्पतिः। चतुर्थाष्टमगान् भौमः शेषाः सप्तमसंस्थितान्। भवन्ति शेषग्रहाः निरयप्राधिकफला खगाः"। भट्टो० वराहमते राहोर्ग्रहत्वाभावेन न तस्य दृष्टिरुक्ता। ज्यो० त० कल्पलतायां तु तद्दृष्टिरुक्ता यथा

"दशमे च तृतीये च पाददृष्टिरुदाहृता। अर्द्धदृष्टिश्च नवमे पञ्चमे परिकीर्त्तिता। चतुर्थे ऽष्टमे चैव पादोना परिकीर्त्तिता। सप्तमे परिपूर्णा च फलमेवं प्रकल्पयेत्। तृतीयदशमानार्किः पश्यन् पूर्णफलप्रदः। त्रिकोणगान् गुरुश्चैव चतुर्थाष्टमगान् कुजः। शुक्रसप्तमगान्ये पूर्ण-दृष्टिः ६०सुरारेर्गुणमन्मथराशौ दृष्टिपादत्रयार्द्धं ४५। मङ्गलरिपुचतुर्थेऽष्टमे चार्द्धदृष्टिः ३०स्थितिभवनमुपान्त्य मेव दृश्यं हि राहो०"।

सर्वकर्मोपयोगिनैसर्गिकग्रहदृष्टिचक्रम्।

| स्थान | र | च | म | बु | बृ | शु | श | रा |
|---|---|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० | ० | ० |
| २ | ० | ० | ० | ० | ० | ० | ० | ४५ |
| ३ | १५ | १५ | १५ | १५ | १५ | १५ | ६० | ३० |
| ४ | ४५ | ४५ | ६० | ४५ | ४५ | ४५ | ४५ | ३० |
| ५ | ३० | ३० | ३० | ३० | ६० | ३० | ३० | ६० |
| ६ | ० | ० | ० | ० | ० | ० | ० | ३० |
| ७ | ६० | ६० | ६० | ६० | ६० | ६० | ६० | ६० |
| ८ | ४५ | ४५ | ६० | ४५ | ४५ | ४५ | ४५ | ३० |
| ९ | ३० | ३० | ३० | ३० | ६० | ३० | ३० | ६० |
| १० | १५ | १५ | १५ | १५ | १५ | १५ | ६० | ४५ |
| ११ | ० | ० | ० | ० | ० | ० | ० | ० |
| १२ | ० | ० | ० | ० | ० | ० | ० | ६० |

तात्कालिकदृष्टिस्तु दृष्टृदृश्यग्रहयोर्द्दृक्खेटराश्योर्या वतुपदं पञ्चाध्यमाजतोऽक्षवत् कल्पनीया

दर्शास्तु विशेष तत्र पञ्चादिशेषे ये भुजा उक्ता यत्र न तथा किन्तु दर्शितचक्रानुसारेण स्थानभेदे भुजाः कल्प-नीया इति। नैसर्गिकतात्कालिकमित्रादिक तु ग्रहशब्दे २१५४पृ० उक्तम्। तदनुसारेण मित्रादिदृष्टिरपि भौमवर्षप्रतापश्चैव तु वर्षप्रवेशफलोदयोगिनी कल्पविशेष दृष्टिरुक्ता यथा "दृष्टि स्यात्त्र्यदशमे नवपञ्चमे प्रत्यक्ष स्नेहदा पादोना ४५ऽभिमतकार्यसाधनकरी मैत्रापकाशो-क्ता। गुप्तस्नेहकरी तृतीयभवने कार्यस्य संसिद्धिदा-त्र मोषी ४०कथिता तृतीयभवने पद्भागाः दृष्टिर्मता॥

इति पादमिताऽथ चतुर्थदशमे गुप्तारिभावा स्मृताऽ न्योन्य सप्तमे तथैकभवने प्रत्यक्षवैराऽखिला६०। इष्ट दृक्त्वितय शुभावहमिदं कार्येषु विघ्नप्रदं सप्ता-माद्यमिदं त्यज दर्शी स्युर्द्वादशानां गतिरे।

वर्षप्रवेशोपयोगिग्रहदृष्टिचक्रम्।

| स्थान | र | च | म | बु | बृ | शु | श | |
|---|---|---|---|---|---|---|---|---|
| १ | ६० | ६० | ६० | ६० | ६० | ६० | ६० | प्रत्यक्षवैरा |
| २ | ० | ० | ० | ० | ० | ० | ० | |
| ३ | ४० | ४० | ४० | ४० | ४० | ४० | ४० | गुप्तस्नेहा |
| ४ | १५ | १५ | १५ | १५ | १५ | १५ | १५ | गुप्तारिः |
| ५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | प्रत्यक्षमित्रा |
| ६ | ० | ० | ० | ० | ० | ० | ० | ० |
| ७ | ६० | ६० | ६० | ६० | ६० | ६० | ६० | प्रत्यक्षवैरा |
| ८ | ० | ० | ० | ० | ० | ० | ० | ० |
| ९ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | प्रत्यक्षस्नेहा |
| १० | १५ | १५ | १५ | १५ | १५ | १५ | १५ | गुप्तारि |
| ११ | १० | १० | १० | १० | १० | १० | १० | गुप्तमित्रा |
| १२ | ० | ० | ० | ० | ० | ० | ० | |

तात्कालिकस्फुटदृष्टिस्तु

"अपास्य पश्य निजदृश्यखेटादेकादिशेषे भुजलिप्तिका स्युः। शून्य स्वखेदाक्षियोऽङ्गवेदा च परिभ्र शरवे-दसङ्ख्या। तिथ्यभ्रचन्द्राग्नियदभ्रतर्का शेषांशयातैष्यविशेष घातात्। लब्धैः शराभैरधिकाऽगतंत्ये स्वर्णं भुजैता स्फुटदृष्टिलिप्ता" नी०ता०उक्तया दिशा ज्ञानेया।

**ग्रहदेवता** स्त्री ६त०। सूर्यादिग्रहाणामधिष्ठातृरुद्रादि-देवभेदे सा च ग्रहयज्ञशब्दे दर्शिता ग्रहाधिदेवतादशो-ऽप्यत्र। [वक्ष्यमाणे गुग्गुलप्रभृतौ धूपे।

**ग्रहधूप** पु० ग्रहाणां ग्रहोद्देशेन धूपः। ग्रहयज्ञशब्दे

**ग्रहनायक** पु०६त०। १सूर्ये २अर्कवृक्षे ३शनौ च शब्दरत्ना०

**ग्रहनाश** पु० ग्रह मनवन्तं नाशयति नश-णिच्-अण् उप० स०। शाकद्रुमे (शोतियान्) मनूर०।

**ग्रहनाशन** पु० ग्रहं मनवन्त नाशयति नश-णिच्-ल्यु शाकद्रुमे रत्नमा०।

**ग्रहनेमि** पु०ग्रहाणां ग्रहकक्षाणां नेमिरिव। चन्द्रे शब्दच० तस्य च ग्रहकक्षाध स्थितत्वेन नेमितुल्यत्वात् तथात्वम्।

**ग्रहपति** पु० ६त०। १सूर्ये २अर्कवृक्षे अमरः। ३चन्द्रे च। "तत्र पितीर्यं ते राज्यं व्योमृषा ग्रहपतेरिव" भा० शा० १६८ अ०।

दद्याद्गुरुर्वा येन तुष्यति । स्वमन्त्रेणैव दातव्याः सर्वाः सर्वत्र दक्षिणाः' ।

द्रव्यदानमन्त्राः तत्र कपिलायाः—"कपिले! सर्वभूतानां पूजनीयासि रोहिणि! । सर्वदेवमयी यस्मादतः शान्तिं प्रयच्छ मे" ।

शङ्खस्य—"पुण्यस्त्वं शङ्ख! पुण्यानां मङ्गलानाञ्च मङ्गलम् । विष्णुना विधृतश्चासि ततः शान्तिं प्रयच्छ मे" ।

वृषस्य—"धर्म्मस्त्वं वृषरूपेण जगदानन्दकारक! । अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे" ।

हेम्न—"हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे" ।

पीतवस्त्रस्य—"पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् । प्रदानात्तस्य मे विष्णो! ह्यतः शान्तिं प्रयच्छ मे" ।

अश्वस्य—"विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः । चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे" ।

धेनोः—"यस्मात्त्वं पृथिवी सर्वा धेनुः केशवसन्निभा । सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे" ।

अयसः—"यस्मादायसकर्म्माणि तवाधीनानि सर्वदा । लाङ्गलाद्यायुधादीनि तस्माच्छान्तिं प्रयच्छ मे" ।

छागस्य—"यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थितः । यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे" ।

गोः—"गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च" ।

शय्यायाः—"यस्मादशून्यं शयनं केशवस्य च सर्वदा । शय्या ममाप्यशून्याऽस्तु दत्ता जन्मनि जन्मनि" ।

रत्नानाम्—"यथा रत्नेषु सर्वेषु सर्वे देवाः प्रतिष्ठिताः । तथा रत्नानि यच्छन्तु रत्नदानेन मे सुराः" ।

भूमेः—"यथा भूमिप्रदानस्य कलां नार्हन्ति षोडशीम् । दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवत्विह" ।

"एवं सम्पूजयेद्भक्त्या वित्तशाठ्येन वर्जितः । रत्नकाञ्चनवस्त्रौघैर्धूपमाल्यानुलेपनैः । अनेन विधिना यस्तु ग्रहपूजां समाचरेत् । सर्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते । यस्तु पीडाकरो नित्यमल्पवित्तस्य वा ग्रहः । तन्तु यत्नेन सम्पूज्य शेषानप्यर्चयेद् बुधः । ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः । यथा बाणप्रहाराणां कवचं वारणं भवेत् । तद्वद्दैवोपघातानां शान्तिर्भवति वारणम् । तस्मान्न दक्षिणाहीनं कर्त्तव्यं भूतिमिच्छता । सम्पूर्णया दक्षिणया यस्मादेकोऽपि तृप्यति । सदैवायुतहोमोऽयं नवग्रहमखे स्थितः । विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्म्मसु । निर्विघ्नार्थं मुनिश्रेष्ठ! तथोद्वेगाद्भुतेषु च । कथितोऽयुतहोमोऽयं लक्षहोममतः शृणु" ।

लक्षहोम—"सर्वकामाप्तये यस्माल्लक्षहोमं विदुर्बुधाः । पितॄणां वल्लभं साक्षाद्भुक्तिमुक्तिफलप्रदम् । ग्रहताराबलं लब्ध्वा कृत्वा ब्राह्मणवाचनम्" ।

मण्डप—"गृहस्योत्तरपूर्वेण मण्डपं कारयेद् बुधः । रुद्रायतनभूमौ वा चतुरस्रमुदङ्मुखम् । दशहस्तमथाष्टौ वा हस्तान् कुर्य्याद्विधानतः । प्रागुदक्प्लवनां भूमिं कारयेद् यत्नतो बुधः । प्रागुत्तरं समासाद्य प्रदेशं मण्डपस्य तु । शोभनं कारयेत् कुण्डं यथावल्लक्षणान्वितम् । चतुरस्रं समन्तात् तु योनिवक्त्रं समेखलम् । चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता । प्रागुदक्प्लवना कार्या सर्वतः समवस्थिता । शान्त्यर्थं सर्वलोकानां नवग्रहमखः स्मृतः । मानहीनाधिकं कुण्डमनेकभयदायकम् । यस्मात्तस्मात् सुसम्पूर्णं शान्तिकुण्डं विधीयते" ।

विस्तरभयात् कोटिहोमो नोक्तः तत्रैवाध्यायशेषे दृश्यः ।

अत्र याज्ञवल्क्येन ग्रहाणां मन्त्रान्तरमुक्तं यथा "आ कृष्णेन, इमन्देवा, अग्निर्मूर्द्धा दिवः ककुत् । उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्त्तिताः । बृहस्पतेऽतिदयस्तथैवान्नात्परिस्रुतः । शन्नोदेवीस्तथा, काण्डात्केतुं कृण्वन्निमास्तथा" ।

विधानपा० विष्णुधर्म्मोत्तरवाक्यादन्ये मन्त्रा उक्ताः हेमाद्रिशान्तिकाण्डे विधानमालादौ चापरे मन्त्रा उक्ता एव विप्रतिपत्तौ शाखिभेदाद्व्यवस्था । शाखिभेदान्मन्त्रभेदाश्च मत्कृततुलादानादिपद्धतौ दृश्याः । तत्पत्रीकानि च विवरणपत्रे वक्तव्यानि तानि च तत्र द्रष्टव्यानि । क्वचित् मत्स्यपुराणवाक्यान्मन्त्रभेदस्तु शाखिभेदात् व्यवस्थाप्यः ।

तत्र ग्रहयज्ञे ग्रहाणां पूजनाय स्फटिकादिमूर्त्तिकरणं तदभावे पटे लेखनं तदभावे मण्डले वर्णकाद्याकारलेखनं वा कृत्वा पूजादिकं कार्यं यथाह याज्ञ० स्मृ० "सूर्य्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः" याज्ञ० । "एते सूर्य्यादयो नव ग्रहाः पूज्या इत्युक्ते किं कृत्वेत्याह" मिता० "ताम्रकात् स्फाटिकाद्रक्तचन्दनात् स्वर्णकादुभौ ।

रक्तताद्यथः सोमात्कालात् कार्या ग्रहाः क्रमात् । स्वर्णवर्णे पटे लेख्या गन्धैर्मण्डलकेषु वा" मात्स्य०। "रक्तादीनां सूर्यादीनामादिभिर्यथाक्रमन्तृतीयादग्रलाभे स्वर्णवर्णे पटे लेख्याः मण्डलेषु वा गन्धैरक्तचन्दनादिभिर्यथावर्णं लेख्या इत्यन्वयः । द्विभुजत्वादिविशेषस्तु मत्स्यपुराणोक्तो द्रष्टव्यः तद्यथा "पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंस्थोऽपि द्विभुजः स्यात् सदा रविः । श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्त्तव्यो वरदः शशी । रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः । पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः । देवदैत्यगुरू तद्वत् पीतश्वेतौ चतुर्भुजौ । दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू । इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्त्तव्योऽर्कसुतः सदा । करालवदनः खड्गचर्मशूली वरप्रदः । नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते । धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः । सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः । स्वाङ्गुलेनोच्छ्रिता सर्वे शतमष्टोत्तरं सदेति" ।

"यथावर्णं प्रदेयानि वासांसि कुसुमानि च । गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः । कर्त्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम्" याज्ञ०। "यथावर्णं यस्य ग्रहस्य यो वर्णस्तद्वर्णानि वस्त्रगन्धपुष्पाणि देयानि" मिता० ।

मण्डले ग्रहलेख्याकारस्तु

"वर्त्तुलो भास्करः कार्योऽर्द्धचन्द्रो निशाकरः । अङ्गारकस्त्रिकोणस्तु बुधश्चापाकृतिस्तथा । पद्माकृतिः गुरुः कार्यश्चतुःकोणस्तु भार्गवः । सर्पाकृतिः शनिः कार्यो राहुस्तु मकराकृतिः । खड्गाकृतिस्तथा केतुः कार्य्यो ग्रहमण्डलपूजने" शान्तिदीपिकोक्तः ।

ग्रहध्यानं मत्स्यपुराणोक्तमपि ग्रहयागतत्त्वोक्तमण्डले मानभेदयोक्तजन्मभूम्याद्युक्तगुणं ध्यानं प्रदर्श्यते ।

सूर्य्यस्य "क्षत्रियं काश्यपं रक्तं कालिङ्गं द्वादशाङ्गुलम् । पद्महस्तद्वयं पूर्वास्यं सप्ताश्ववाहनम् । शिवाधिदैवतं सूर्यं वह्निप्रत्यधिदैवतम्" ।

सोमस्य "सामुद्रं वैश्यमात्रेयं हस्तमात्रं सिताम्बरम् । श्वेतं द्विबाहुं वरदं दक्षिणं सगदेतरम् । दशाश्वश्वेतपद्मस्थं विचिन्त्योमाधिदैवतम् । अप्प्रत्यधिदैवञ्च चतुरस्रमाङ्कयेत् तथा" ।

मङ्गलस्य "आवन्त्यं क्षत्रियं रक्तं मेषस्थं चतुरङ्गुलम् । चारक्तमाल्यवसनं भारद्वाजं चतुर्भुजम् । दक्षिणोर्द्धक्रमाच्छक्तिवराभयगदाकरम् । आदित्याभिमुखं देवं तद्वदेव समालिखेत् । स्कन्दाधिदैवतं ध्यायेत् क्षितिप्रत्यधिदैवतम्" ।

बुधस्य "मागधं दाक्षमात्रेयं वैश्यं पीतं चतुर्भुजम् । वामोर्द्धक्रमतश्चर्मगदावरदखड्गिनम् । सुर्य्यास्यं सिंहस्थं सौम्यं पीतवस्त्रं तथाङ्कयेत् । नारायणाधिदैवञ्च विष्णुप्रत्यधिदैवतम्" ।

बृहस्पतेः "सिन्धुमाङ्गिरसं पीतं वैश्यञ्च षडङ्गुलम् । ध्यात्वा पीताम्बरं जीवं सुपद्मस्थं चतुर्भुजम् । दक्षोर्द्धशरदक्षरकादण्डमाङ्कयेत् । ब्रह्माधिदैवं सर्वाख्यमिन्द्रप्रत्यधिदैवतम्" ।

शुक्रस्य "शुक्रं भोजकटं विप्रं भार्गवञ्च नवाङ्गुलम् । पद्मस्थमाङ्कयेत् सर्वशुक्लं श्वेतं चतुर्भुजम् । गदाक्षवरदरकोदण्डहस्तं सिताम्बरम् । शक्राधिदैवतं ध्यायेत् शचीप्रत्यधिदैवतम्" ।

शनेः "सौराष्ट्रं काश्यपं शूद्रं कृष्णांशं चतुरङ्गुलम् । कृष्णलम्बाम्बरं गृध्रगतं शौरिं चतुर्भुजम् । तद्वाच वरशूलधनुर्बाणं समालिखेत् । यमाधिदैवतं प्रजापतिप्रत्यधिदैवतम्" ।

राहोः "राहुं मलयजं शूद्रं पैठीनं द्वादशाङ्गुलम् । कृष्णं कृष्णाम्बरं सिंहासनं ध्यात्वा तदाङ्कयेत् । चतुर्बाहुं खड्गवरशूलचर्मकरं तथा । कालाधिदैवं सर्वांश्च सर्पप्रत्यधिदैवतम्" ।

केतूनाम् "कौशद्वीपं केतुगणं जैमिनीयं षडङ्गुलम् । धूम्रगृध्रगतं धूम्रमाङ्कयेद्विकृताननम् । सर्वांश्च धूम्रवर्णान् वरदं गदिनं तथा । चित्रगुप्ताधिदैवञ्च ब्रह्मप्रत्यधिदैवतम्" ।

अत्र चन्द्रस्य चतुरस्रत्वं राहोर्मण्डलत्वं केतोः कौशद्वीपत्वञ्च पुराणान्तरानुसारेण मत्स्यभाषजन्मभूम्यादिबोधकवचनेन विरोधभिया विकल्प आश्रयणीयः व्यवहारभेदात् "व्यवस्थित इति बोध्यम् । एवं माहनेऽपि विकल्पः । मत्कृततुलादानादिपद्धतौ एतेषां मध्ये केषाञ्चिदन्यथाङ्कनस्य दर्शितत्वात्" ।

अधिदेवादीनां ध्यानमुक्तं विष्णुधर्मोत्तरे ।

शिवस्य "वृषस्थो वृषारूढः प्रतिमा त्रिलोचन । कपाल-शूलखट्वाङ्गी चन्द्रमौलि सदाशिव" ।

उमायाः "अक्षसूत्र च कमल दर्पण च कमण्डलुम् । उमा बिभर्ति हस्तेषु पूजिता त्रिदशैरपि" ।

स्कन्दस्य "कुमार षण्मुख कार्य्य शिखण्डकविभूषण । रक्ताम्बरोदेशो मयूरवरवाहन । कुक्कुटस तथा घण्टा तस्य दक्षिणहस्तयोः । पताका वैजयन्त्याख्या शक्ति कार्य्या च वामयो" ।

विष्णो "विष्णु कौमोदकीपद्मशङ्खचक्रधर क्रमात् । प्रदक्षिण दक्षिणाध करादारभ्य नित्यश" ।

ब्रह्मण "पद्मासनस्थो जटिलो ब्रह्मा कार्य्यश्चतुर्भुज । अक्षमाला स्रुव बिभ्रत् पुस्तक च कमण्डलुम् । वाम-कृष्णाजिन तस्य पार्श्वे हंसस्तथैव च" ।

शक्रस्य "चतुर्दन्तगजारूढो वज्री कुलिशभृत्करः । शची-पतिः प्रकर्त्तव्यो नानाभरणभूषित" ।

यमस्य "दण्डपाशोद्यम कार्य्योदण्डहस्तोविजानता । रक्त दृक् पाशहस्तश्च महामहिषवाहनः" ।

कालस्य "काल करालवदनो नीलाङ्गश्च विभीषण । पाश-हस्तोदण्डहस्त कार्य्यो रुधिरकरोमवान्" ।

चित्रगुप्तस्य "अपीच्यवेश स्वाकार द्विभुज सौम्यदर्शनः । दक्षिणे लेखनीं चित्रगुप्तो वामेऽस्य पत्रकम् । पिङ्गल-स्मश्रुकेशान्त पीनाङ्गजठरोऽरुणः" । "पिङ्गाक्षमलितयो-ऽरुण:" इति वा पाठः ।

प्रत्यधिदेवानां तत्राग्नेः "छागस्थ सामगलोऽग्नि सप्तार्चि शक्तिधारक । चिह्नित चामरेणास्य करमग्र प्रकल्पयेत्" ।

जलस्य "आप स्त्रीरूपधारिण्य श्वेता मकरवाहना । रत्नाल्य पाशकलसी मुक्ताभरणभूषिता" ।

क्षितेः "शुक्लवर्णा मही कार्या दिव्याभरणभूषिता । चतु-र्भुजा सौम्यवपुश्चण्डांशुसदृशाम्बरा । रत्नपात्र शस्यपात्र पात्रमोषधिसंयुतम् । पद्म करे च कर्त्तव्य भुवो यादवनन्दन । । दिग्गजानां चतुर्णां सा कार्य्या पृष्ठगता तथा" । विष्णोरिन्द्रस्य च लक्षणमुक्तम् ।

शच्याः "वामे शच्या करे कार्य्या सौम्यसन्तानमञ्जरी । वरदा दक्षिणे कार्य्या द्विभुजा च तथा शची" ।

प्रजापतेः "यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्भुजः । अक्ष स्रुच स्रुव बिभ्रत् कुण्डिकाञ्च प्रजापतिः" । अक्ष अक्षमालाम् । कुण्डिकां कमण्डलुम् ।

सर्पाणां "अक्षसूत्रधराः सर्पा कुण्डिकाद्यभूषणाः । एकभोगास्त्रिभोगा वा सर्वे कार्य्याश्च भीषणाः" ।

ब्रह्मलक्षण प्रागुक्तम् ।

अथ विनायकादिपञ्चलोकपाललक्षणानि विष्णुधर्मोत्तरे विनायकस्य "चतुर्भुजस्त्रिनेत्रश्च कर्त्तव्योऽस्य गजानन । नागयज्ञोपवीतश्च शशाङ्ककृतशेखर । दण्ड दक्षकरे दद्यात् द्वितीये चाक्षसूत्रकम् । तृतीये परशु दद्या-च्चतुर्थे मोदक तथा" ।

दुर्गाया. "शक्ति बाण तथा शूल खड्ग चक्र च दक्षिणे । चन्द्रबिम्बमथो वामे खेटमूर्द्ध्वे कपालकम् । शुक टङ्क च बिभ्राणा सिंहारूढोरुदिग्भुजा । एषा देवी समु-द्दिष्टा दुर्गा दुर्गार्त्तिहारिणी"

वायोः "धावद्धरिणपृष्ठस्थो ध्वजधारी समीरण । वरदा-नकरो धूम्रवर्णः कार्य्यो विजानता" ।

आकाशस्य "नीलोत्पलाभ गगन तद्वर्णाम्बरधारि च । चन्द्रार्कहस्त कर्त्तव्य द्विभुज सौम्यदर्शनम्" ।

अश्विनोः "पीतपद्मसवर्णाभौ पद्मपत्रसमाम्बरौ । द्विभुजौ देवभिषजौ कर्त्तव्यौ रूपसयुतौ । तयोरोषधय कार्य्या दिव्या दक्षिणहस्तयो । वामयोः पुस्तके कार्य्ये दर्शनीया स्तथाद्विजा. (खगा) । एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव । । नारीयुग प्रकर्त्तव्य सुरूप चारुदर्श-नम्"

ग्रहाणां वर्णगोलादिलक्षणध्यानानि यागतत्त्वो-क्तानि पूर्वदर्शितान्येव

विनायकादीनां मण्डले स्थापनस्थानमुक्त रुद्रकल्पे विष्णुध०यथा

"राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम् । गणेश-दुर्गा वायुश्च, राहुकेत्वोश्च दक्षिणे । आकाशमश्विनौ चेति पञ्च तान् स्थापयेद् द्विजः" ।

धूपादौ विशेषः हेमाद्रौ स्क०पु० "रवे कुन्दुरक धूप शशिनस्तु घृताक्षतम् । भौमे सर्जरस चैव अगुरुञ्च बुधे तथा । सिन्धुज गुरवे दद्यात् शुक्रे बिल्वागुरु स्मृतम् । गुग्गुलुर्मन्दवारे तु लाक्षा राहोश्च केतवे" । कुन्दुरक शल्लकीनिर्यास बिल्वागुरु बिल्वफलनिर्याससहितमगुरु ।

गन्धभेदस्तत्रैव "दिवाकरकुजाभ्यां तु दापयेद्रक्तचन्द-नम् । चन्द्रे गन्ध भार्गवे च सितचूर्ण प्रदापयेत् । कुङ्कुमेन च सयुक्त चन्दन जीवसौम्ययोः । अगुरु चापि कस्तूरी राहुकेत्वर्कजेषु च" ।

विधानमालादौ अन्यविधा गन्धधूपा. पुष्पभेदाश्चोक्तास्ते

च विवरणपत्ते द्रष्टव्याः तत्र धूपस्य चतुर्विधगन्ध उक्तः स च "कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु। कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसमम्" इत्युक्तः गुरोर्देयाद्यधूपस्तत्रोक्तः स च "हेमाद्रौ व्रतखण्डे" षड्भागकुष्ठं द्विगुणो गुडश्च लाक्षात्रयं पञ्च नखस्य भागाः हरीतकी सर्जरसं समांशं भागैकमेकं त्रिलवं शिलाजम्। घनस्य चत्वारि पुरस्य चैको धूपोदशाङ्गः कथितो मुनीन्द्रैः" रत्नानि तु ग्रहशब्दे शान्दा० हृष० उक्तानि द्रष्टव्यानि। "अभावे सितपुष्पाणि चन्दनं च विलेपनम्। एतेषां गुग्गुलुर्धूपो नैवेद्यं घृतपायसम्"।

गृहमखकुण्डलेखनप्रकारः—उभयतो हस्तमिते गृहवेदिमध्यस्थले पूर्वपश्चिमाग्रायतस्रो दक्षिणोत्तराग्राश्च चतस्रो रेखाः कुर्यात् तथा करणे चतुरङ्गुलदीर्घविस्ताराणि समान्तरालानि नव खण्डानि सम्पद्यन्ते तत्र विवरणपत्ते वक्ष्यमाणप्रकारेण सूर्यादीनां वर्त्तुलाद्याकारं कुर्यात्। ग्रहमखे च स्व स्व स्थापनम् स्वस्थानेऽधिदेवानां स्वदक्षिणे प्रत्यधिदेवानां सूर्याभिमुखतया सर्वेषां स्थापनम् विनायकादिस्थापनञ्च मार्गस्य स्थानेष्विति विवेकः।

होमे समिद्द्रव्यप्रत्यादिक विभागपारि० स्कन्दपु० "प्रादेशमात्रा अर्कस्य समिधश्चार्कसम्भवाः। दधिमध्वाज्यसंयुक्ताः प्रतिदेवञ्च होमयेत्। पालाशीश्चैव सोमाय। खादिरीर्लोहिताय च। अपामार्गीर्बुधायेति अश्वत्थीश्च बृहस्पते। औदुम्बरीश्च शुक्राय मन्दाय च शमीमयीः। दूर्वांराहोः कुशान् केतोर्होमकर्मसु शस्यते"। समिल्लक्षणं चिन्तामणौ "समिधां लक्षणं वक्ष्ये संख्या तासां तथैव च। विशीर्णा विदला हृस्वा वक्रा सशुषिरा कृशा। अतिस्थूलातिदीर्घा च समिधः कार्यनाशिकाः। विशीर्णाऽऽयुःक्षयकरी विदला पुत्रनाशिनी। शुषिरा व्याधिजननी कृशा च रिपुवर्द्धिनी। दीर्घा विदेशगमनी स्थूला चात्मविनाशिनी। अकृशा सममाऽस्थूला साद्रा च सुखदायिनी। प्रादेशमात्राधिका न्यूना समित् स्यात् सर्वकर्मसु"। अर्कादीनां फलं होमसंख्या च तत्रैव दर्शिता यथा "अर्को नाशयति व्याधिं पलाशः सर्वकामदः। खदिरश्चार्थलाभाय अपामार्गश्च दर्शनं। अश्वत्थः सर्वकामाय शान्त्या औदुम्बरस्तथा। शमी शमयते पापं दूर्वाऽऽयुष्यविवर्द्धिनी। कुशास्तु सर्वकामानां रक्षार्थं रक्षका विदुः। अष्टोत्तरं तु सहस्रं शतमष्टाधिकं तु वा। अष्टाविंशतिसंख्या वा एकैकस्य तु होमयेत्। देवानामपि सर्वेषामुपांशु परमार्थवित्। स्वेन स्वेनैव मन्त्रेण होतव्या समिधः पृथक्। होतव्यं च घृताभ्यक्तं चरुभक्षादिकं पुनः। मन्त्रैर्दशाहुतीर्दद्याद्धोमं व्याहृतिभिस्ततः" अयुताद्विहोमप्रक्रमात् व्याहृतिभिरयुतादिहोम।

गृहाणां जन्मभूम्यादिज्ञानावश्यकतामाह स्कन्दपु० "जन्मभूर्गोत्रमग्निश्च वर्णस्थाने मुखानि च। योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः" अत्र शान्तिकाले तेषां जन्मभूम्यादिज्ञानमपेक्षितं तच्च विशेषेण ध्याने दर्शितमपि शङ्कार्थमिहोच्यते। तत्र रव्यादीनां जन्मभूम्यादयो यथा तत्रैव

जन्मभूः—"रविर्मद्रोऽर्क कलिङ्गेषु यमुनायाञ्च चन्द्रमाः। अङ्गारकस्त्ववन्त्यां वै मगधेषु हिमांशुजः। सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा। शनैश्चरश्च सौराष्ट्रे राहुर्वर्वरके पुरे। अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः। यस्य यस्य च यद्गोत्रं तत्ते वक्ष्याम्यतः परम्"।

ग्रहगोत्रम्—"आदित्यः काश्यपे गोत्रे आत्रेयश्चन्द्रमा भवेत्। भारद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः। शक्रपूज्योऽङ्गिरोगोत्रः शुक्रोवै भार्गवस्तथा। शनिः काश्यप एवाथ राहुः पैठिनसिस्तथा। केतवो जैमिनीयाश्च ग्रहाग्निस्तदनन्तरम्"।

ग्रहवह्नि—"आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते। धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः। गुरौ चैव शिखी नाम शुक्रे भवति हाटकः। शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः" इति। इत्यमेव होमकाले तत्तदग्निनाम कृत्वा जुहुयात्।

अथैषां वर्णं स च द्विधा चित्रादिगतिरूपभेदात् तत्र रूपे तत्रैव "भास्कराङ्गारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ। सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ। कृष्णः शनैश्चरस्तद्वत् राहुश्चैवाथ केतवः"। विप्रादिवर्णस्तु। 'ब्राह्मणौ शुक्रवागीशौ क्षत्रियौ भौमभास्करौ। चन्द्रो वैश्यो बुध, शूद्रा मन्दाराहुश्च केतवः"। स्थानं तत्रैव "मध्ये तु भास्करं विद्यात् क्षमिनं पूर्वदक्षिणे। दक्षिणे लोहितं विद्यात् बुधं पूर्वोत्तरेण तु। उत्तरे तु गुरुं विद्यात् पूर्वतो भार्गवं न्यसेत्। पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे। पश्चिमोत्तरतः केतुः स्थाप्या वै शुक्लतण्डुलैः इति"।

सुत्र स्कान्दे “शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ। प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखा”। अत्र प्राङ्मुखौ ऊर्द्ध्वदृष्टी, उदङ्मुखौ वामदृष्टी, प्रत्यङ्मुखोऽधोदृष्टिः, दक्षिणतोमुखा दक्षिणदृष्टय इति व्याख्येयम् “आदित्याभिमुखाः सर्वे” इत्यनेन सर्वेषां सूर्य्याभिमुखत्वोक्तेः इति विधानपारिजातादयः। “वर्णरूपगुणैर्युक्तान् आहूयावाहयेत्तु तानिति” स्कान्दोक्तेरावाहनसमयेऽपि वर्णभूम्यादिकीर्त्तनपूर्व्वकमावाहनकार्य्यमेवमन्येऽपि होमकाले तथास्मरणमिति बोध्यम् “चित्राच च “अजाक्षीरेण संसिक्ता यवाश्च तिलतण्डुलाः। अजाकर्णस्य रक्तेन रक्ताश्चलाद्यसंस्मिता” दीपिकोक्तम् प्रयोगो मत्कृततुलादानादिपद्धतौ द्रष्टव्यः।

सूर्य्यादिग्रहाणां जन्मभूम्यादिज्ञापकविवरणपत्रम्।

| जन्मभूम्यादि | सूर्य्यस्य | चन्द्रस्य | भौमस्य | बुधस्य | जीवस्य | शुक्रस्य | शनेः | राहोः | केतोः |
|---|---|---|---|---|---|---|---|---|---|
| जन्मभूमि | कलिङ्ग | यमुना | अवन्ति | मगधः | सैन्धवः | भोजकट | सौराष्ट्र | वर्व्वरक | अन्तर्वेदी |
| गोत्रम् | कश्यप | अत्रि | भरद्वाज | अत्रि | अङ्गिरा | भृगु | कश्यप | पैठिनसि | जैमिनिः |
| अग्नि | कपिल | पिङ्गल | धूमकेतु | जाठर | शिखी | हाटकः | महातेजा | हुताशनः | हुताशन |
| विप्रादिवर्णः | क्षत्रिय | वैश्य | क्षत्रिय | वैश्य | विप्र | विप्र | शूद्र | शूद्र | शूद्र |
| रूपात्मकवर्णः | रक्त | शुक्ल | रक्तः | पीत | पीत | शुक्ल | कृष्णः | कृष्ण | चित्रम् |
| मण्डले स्थानम् | मध्यम् | पूर्व्वदक्षिण | दक्षिणः | पूर्व्वोत्तर | उत्तर | पूर्व्वः | पश्चिम; | दक्षिणपश्चिमः | पश्चिमोत्तरः |
| मुखम् (सर्वे सूर्य्याभिमुखा) | ऊर्द्ध्वदृष्टि | अधोदृष्टि | दक्षिणदृष्टिः | वामदृष्टिः | वामदृष्टिः | ऊर्द्ध्वदृष्टि | अधोदृष्टिः | दक्षिणदृष्टिः | दक्षिणदृष्टिः |
| मण्डले आकार | वर्त्तुल | अर्द्धचन्द्रः | त्रिकोण | चाप | पद्मम् | चतुष्कोण | सर्प | मकरः | खड्गः |
| उभयतोऽङ्कुश मण्डलकोष्ठेषु स्थानम् | ४।व्या० १२प० | ८ व्या० २४प० | ४।व्या० १२प० | २।व्या० ६प० | ४व्या० १२प० | ३व्या० ९प० | ४व्या० १२प० | ४व्या० १२प० | ६व्या० १८प० |
| वाहनम् | सप्ताश्वरथ | दशाश्वरथ | मेष | सिंह | हस्ती | हय | उष्ट्र | सिंह | उष्ट्र |
| मूर्त्तिद्रव्यम् | ताम्रम् | स्फटिकम् | श्वेतचन्दनम् | स्वर्णम् | स्वर्णम् | रजतम् | लौहम् | सीसम् | कांस्यम् |
| गन्धभेदा द्विधा | रक्तचन्दनम् | श्वेतचन्दनम् | रक्तचन्दनम् | कुङ्कुमम् | कुङ्कुमम् | श्वेतचन्दनम् | कस्तूरी | कस्तूरी | कस्तूरी |
| मतान्तरे | तत् | तत् | तत् | तत् | चन्दनम् | तत् | वा | कृष्णागुरु | वा |
| पुष्पभेदा | करवीरम् | कुमुदं | जवा | चम्पकम् | पद्मम् | जाति | मल्लिका | कुन्दम् | मल्लिका |
| धूपभेदाः | गुग्गुलु | घृताक्तयवधूपः | सर्ज्जरसाक्तविल्वकम् | पीतागुरुसिल्हकम् | दशाङ्गम् | साक्षचन्दनागुरु | पद्मकाष्ठम् | यवधूप | मधुमिश्रगुडत्वचम् |
| मतान्तरे | कुन्दुरकम् | घृताक्षतम् | सर्ज्जरसः | पीतागुरु | सिल्हजम् | विल्वागुरु | गुग्गुलु | लाक्षा | लाक्षा |
| फलम् | द्राक्षा | इक्षु | पूगम् | नागरङ्गम् | जम्बीरम् | बीजपूरम् | जातिफलम् | नारिकेलम् | दाडिमम् |
| वस्त्रम् | रक्तम् | श्वेतम् | रक्तम् | पीतम् | पीतम् | श्वेतम् | कृष्णम् | कृष्णम् | चित्रम् |
| रत्नानि | माणिक्यम् | मुक्ता | प्रवालम् | मारकतम् | पुष्परागम् | हीरकम् | नीलकम् | गोमेदकम् | वैदूर्य्यम् |
| बलिभेदाः | गुडौदन | घृतपायसम् | यावकम् | क्षीरषष्टिकम् | दध्योदन | घृतौदन | कृसरम् | आजमांसम् | चित्रान्नम् |
| समिधः | अर्क | पलाश | खदिर | अपामार्गः | अश्वत्थ | उडुम्बर | शमी | दूर्व्वात्रयम् | कुशत्रयम् |
| दक्षिणा | कपिलाधेनु | शङ्ख | रक्तवृष | स्वर्णम् | पीतवस्त्रे | श्वेताश्व | कृष्णाधेनु | खड्गः | छाग |
| जपसंख्या | ६००० | १०००० | ७००० | १७००० | १९००० | २०००० | १९००० | १८००० | ७००० |
| अधिदेवता | शिव | उमा | स्कन्दः | नारायण | ब्रह्मा | शक्र | यम | काल | चित्रगुप्तः |
| प्रत्यधिदेवता | अग्नि | जलम् | क्षितिः | विष्णुः | इन्द्रः | शची | प्रजापति | सर्प | ब्रह्मा |

विति समागमलक्षणैकदेशसद्भावात् समागमाख्यं युद्धम्। द्वावपि यदौ खलौ सूक्ष्मबिम्बौ विध्वस्तौ द्वावपि पराजयलक्षणाक्रान्तौ स्यातां तदा क्रमेण कूटविग्रह-सञ्ज्ञकौ युद्धभेदौ स्याताम्। अथोत्सर्गतः शुक्रस्य जय-लक्षणाक्रान्तत्वमस्तीति वदन् समागमे शशाङ्केनेति प्राक् प्रतिज्ञातसमागमे उक्तप्रकारमतिदिशति' रङ्ग०।

"उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी। शशाङ्केनैवमेतेषां कुर्यात् संयोगसाधनम्" सू०सि०।

"इतरग्रहापेक्षयोदक्स्थो दक्षिणदिक्स्थो वोभयदिशीत्यर्थः। शुक्रः प्रायश उत्सर्गतो जयलक्षणाक्रान्तत्वेन जयी। कदाचित् पराजयलक्षणाक्रान्तो भवतीति तात्पर्यार्थः। एतेषां भौमादिपञ्चताराणां चन्द्रेण सह संयोगसाधनं युतिसाधनमेवमुक्तरीत्या गणकः कुर्यात्। अत्र विशेषार्थकम्। 'अथवान्या स्फुटौ खेटौ विधाय शीतगोर्युतौ' इत्यर्धं क्वचित् पुस्तके दृश्यते न सर्वत्रेति क्षिप्तत्वात्तदुपेक्षितम् अधिकारस्यापूर्णश्लोकत्वापत्तेश्च। एतदुक्तग्रन्थयोगे नतिसंस्कारनिषेधस्य सिद्धत्वस्यायुक्तत्वमिति तदनुक्तौ स्पष्टग्रहणोक्तरीत्या साधारण्येन सर्वत्र तं द्विशेषोक्तेरवैसिद्धेरिति ध्येयम्। ननु ग्रहाणां दूरान्तरेण सदोर्ध्वाधरान्तरसद्भावात् परस्परं योगासम्भवेन कथं युतिः सङ्गतेत्यत आह" रङ्ग०।

"भावाभावाय लोकानां कल्पनेयं प्रदर्शिता। स्वमार्गगाः प्रयान्त्येते दूरमन्योन्यमाश्रिताः" सू०सि०।

"एते ग्रहाः स्वमार्गगाः स्वस्वकक्षास्था अन्योन्यमाश्रिता युतकालऊर्ध्वाधरान्तराभावेन संयुक्ताः सन्तः प्रयान्ति गच्छन्ति इति दूरं दूरान्तरेण दर्शनादियं ग्रहयुतिकल्पना कल्पनात्मिकाऽवास्तवी प्रदर्शिता प्रौढग्रन्थेन कथिता। नन्ववस्तुभूता किमर्थमुक्तेत्यत प्रयोजनमाह भावाभावायेति। लोकानां भूस्थप्राणिनां भावः शुभफलमभावोऽशुभफलं तस्मै शुभाशुभफलादेशायावस्तुभूतापि युतिरुक्तेति भावः" रङ्ग०।

युद्धभेदास्तत्फलविशेषाः समागमजयादिफलभेदाश्च वृ० स० १७अ० उक्ता यथा

"युद्धं यथा यदा वा भविष्यदादिश्यते त्रिकालज्ञैः। तद्विज्ञानं करणे मया कृतं सूर्यसिद्धान्तात्। वियति चरतां ग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम्। अतिदूराद्दृग्विषये समतामिव सम्प्रयातानाम्। आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनासव्यैः। युद्धं चतुष्प्रकारं पराशराद्यैर्मुनिभिरुक्तम्। भेदे वृष्टिविनाशो भेदः सुहृदां महाकुलानां च। उल्लेखे शस्त्रभयं मन्त्रिविरोधः प्रियान्नत्वम्। अंशुविरोधे युद्धानि भूभृतां शस्त्ररुक्क्षुदवमर्दाः। युद्धे चाप्यपसव्ये भवन्ति युद्धानि भूपानाम्। रविराक्रन्दो मध्ये पौरः पूर्वेऽपरे स्थितो यायी। पौरा बुधगुरुरविजा नित्यं शीतांशुराक्रन्दः। केतुकुजराहुशुक्रा यायिन एते हता घ्नन्ति। आक्रन्दयायिपौरान् जयिनो जयदाः स्ववर्गस्य। पौरे पौरेण हते पौराः पौरान् नृपान् विनिघ्नन्ति। एवं याय्याक्रन्दौ नागरयायिग्रहाश्चैव। दक्षिणदिक्स्थः परुषो वेपथुरप्राप्य सन्निवृत्तोऽणुः। अधिरूढो विकृतो निष्प्रभो विवर्णश्च यः स जितः। उक्तविपरीतलक्षणसम्पन्नो जयगतो विनिर्दिष्टः। विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्तः। द्वावपि मयूखयुक्तौ विपुलौ स्निग्धौ समागमे भवतः। तत्रान्योन्यं प्रीतिर्विपरीतावात्मपक्षघ्नौ। युद्धं समागमो वा यद्यव्यक्तौ तु लक्षणैर्भवतः। भुवि भूभृतामपि तथा फलमव्यक्तं विनिर्देश्यम्"।

कुजजयस्य "गुरुणा जितेऽवनिसुते बाह्लीका यायिनोऽग्निवार्त्ताश्च। शशिजेन शूरसेनाः कलिङ्गशाल्वाश्च पीड्यन्ते। सौरेणारे विजिते जयन्ति पौराः प्रजाश्च सीदन्ति। कोष्ठागारम्लेच्छक्षत्रियतापाश्च शुक्रजिते"।

बुधजयस्य 'भौमेन हते शशिजे वृक्षसरित्तापसाश्मकनरेन्द्राः। उत्तरदिक्स्थाः क्रतुदीक्षिताश्च सन्तापमायान्ति। गुरुणा बुधे तु विजिते म्लेच्छशूद्रचौरार्थयुक्तपौरजनाः। त्रैगर्तपार्वतीयाः पीड्यन्ते कम्पते च मही। रविजेन बुधे ध्वस्ते नाविकयोधाब्जसधनगर्भिण्यः। भृगुणा जितेऽग्निकोपः सस्याम्बुदयायिविध्वंसः"।

जीवजयस्य "जीवे शुक्राभिहते कुलूतगान्धारकैकया मद्राः। साल्वा वत्सा वङ्गा गावः सस्यानि नश्यन्ति। भौमेन हते जीवे मध्यो देशो नरेश्वरा गावः। सौरेण चार्जुनायनवसातियौधेयशिबिविप्राः। शशितनयेनापि जिते बृहस्पतौ म्लेच्छसत्यशस्त्रभृतः। उपयान्ति मध्यदेशश्च नाशं यच्च भक्तिफलम्'।

शुक्रजयस्य "शुक्रे बृहस्पतिहते यायी श्रेष्ठो विनाशमुपयाति। ब्रह्मक्षत्रविरोधः सलिलं च न वासवस्त्यजति। कोशलकलिङ्गवङ्गा वत्सा मत्स्याश्च मध्यदेशयुताः। महतीं व्रजन्ति पीडां सपुंसकाः शूरसे-

नाय। कुजविजिते भयुतमर्थे बलमुख्यवधो नरेन्द्रसंग्रामा। सौम्येन पार्वतीया क्षीरविनाशोऽल्पवृष्टिश्च। रविजेन सिते विजिते गणमुख्याः शस्त्रजीविनः क्षत्रम्। जलजाश्च निपीड्यन्ते सामान्यं भक्तिफलमन्यत्"।

शनिजयस्य "असिते सितेन निहतेऽर्घविवृद्धिरहिदंष्ट्रिविहङ्गमानिना पीडा। शिखिजेन टङ्कणान्ध्रोड्रकाशिबाह्लीकदेशानाम्। सौम्येन पराभूते मन्देऽङ्गवणिग्विहङ्गपशुनागाः। सन्ताप्यन्ते गुरुणा स्त्रीबहुला माहिषकशकाश्च"।

अथ विशेषोऽभिहितो ग्रहाणां कुजबुधवागीशसितासितानाम्। फल तु वाच्यं नृपभक्तितोऽन्यद् यथा तथा घ्नन्ति हता स्वभक्तीः"।

"नीचोपगतेऽरिस्थे हतेऽथ पराजिते वा जीवे भृगौ सत विधौ प्रतिकर्महोमः" ज्यो॰ त॰। उपनयनगते तत्कालस्य मर्त्यतो निर्देश्या। षड्विधपञ्चविधमर्दोऽयोऽप्यत्र, तत्र च चन्द्रस्वाम्यचेष्टे बलाबले विशेष न तुल्यम् बृह॰ सं॰ १८ अ॰ यथा

"भानां यथासम्भवमुत्तरेण यातो ग्रहाणां यदि वा शशाङ्कः। प्रदक्षिणं तच्छुभकृन्नराणां याम्येन यातो न शिवः शशाङ्कः। चन्द्रमा यदि कुजात् प्रयात्युदक् पार्वतीयबलमालिनां जयः। क्षत्रिया मुदिताः स-यायिनो भूरिधान्यसहिता वसुन्धरा। उत्तरतः शशितनयस्य शशाङ्कः पौरजयाय सुभिक्षकरश्च। शस्य-चयं कुरुते जयहार्दि कोषचयं च नराधिपतीनाम्। बृहस्पतेरुत्तरगे शशाङ्के पौरद्विजक्षत्रियपण्डितानाम्। धर्मस्य देशस्य च मध्यमस्य वृद्धिः सुभिक्षं मुदिताः प्रजाश्च। भार्गवस्य यदि यात्युदक् शशी कोषयुक्तगज वाजिवृद्धिदः। यायिनां च विजयो धनुष्मतां सस्य-सम्पदपि चोत्तमा तदा। रविजस्य शशी प्रदक्षिणं कुर्वीतोत्तरभूभृतां जयः। शकवाह्लीकसिन्धुपह्लवा मुदिता यवनैः समन्विताः। येषामुदग्गच्छति भग्रहाणां प्रालेयरश्मिर्निरुपद्रवश्च। तद्द्रव्यपौरेतरभक्तिदेशान् पुष्णाति याम्येन निहन्ति तानि। शशिनि फलमुदक्स्थे यद्ग्रहस्योपदिष्टं भवति तदपसव्ये सर्वमेव प्रतीपम्। इति शशिसमवायाः कीर्तिता भग्रहाणां न खलु भवति युद्धं सार्धमिन्दोर्ग्रहैः"।

ग्रहयुद्धभ न॰ ग्रहयोर्युद्धं यत्र तादृशं भम्। ग्रहयुद्धा-धिकरणे नक्षत्रे उपनयनान्ते उदा॰।

ग्रहवर्षादिफल न॰ ६त॰। ।वर्षादिग्रहस्वामिकवर्षमास-फलभेदे। ज्यो॰। एतद्बोधकवाक्यं च तत्र ह॰ सं॰ २० अध्यायात्मक यथा

रवे—"सर्वत्र भूर्विरलशस्ययुता वनानि दैत्याहिभयविपुटद्रुम-मालतानि। स्यन्दन्ति नैव च पयः प्रचुरं स्रवन्त्यो रुग्-भेषजानि न तथातिबलान्वितानि। तीक्ष्णं तपत्यदितिज शिशिरेऽपि काले नात्यम्बुदा जलमुचो चलशैलकाशाः। नष्टप्रभर्क्षगणशीतकर नभश्च सीदन्ति तापसकुलानि सगोकुलानि। हस्त्यश्वपत्तिमदथालबलैरुपेता धन्वाससा-सिशरशक्तिधराश्चरन्ति। घ्नन्तो नृपा भुवि नृपानुचरैश्च देशान् संवत्सरे दिनकरस्य दिनेऽथ मासे'।

विधो—"व्याप्तं नभः प्रचलिताञ्जनसन्निकाशैर्व्योमाञ्जनानिलगज-च्छविभिः पयोदैः। गां पूरयद्भिरनिलाभमनोहरद्भि-रुत्कण्ठकेन गुरुणा ध्वनितेन चाशाः। तोयानि पद्म-कुमुदोत्पलवन्त्यतीव फुल्लद्रुमाण्युपवनान्यलिनादितानि। गावः प्रभूतपयसो नयनाभिरामा रामा रतैरविरतं रमयन्ति रामान्। गोधूमशालियवधान्यवरेक्षुवाटा भू-पाल्यते नृपतिभिर्नगराकराढ्या। चित्याङ्किता क्रतुवरे-ष्टिविघुष्टनादा संवत्सरे शिशिरगोरभिसम्प्रवृत्ते"।

कुजस्य—"वातोद्धतश्चरति वह्निरतिप्रचण्डो ग्रामान् वनानि नगराणि च सन्दिधक्षुः। हाहेति दस्युगणपातहता रटन्ति निःस्वीकृता विपशवो भुवि मर्त्यसङ्घाः। अभ्यु-न्नता वियति संहतमूर्तयोऽपि मुञ्चन्ति न क्वचिदपः प्रचुरं पयोदाः। सीमन्ति प्रजातमपि शोषमुपैति सस्यं निष्पन्नमप्यवनयादपरे हरन्ति। भूपा न सम्यगभिपा-लनसक्तचित्ताः पित्तोत्थरुक्प्रचुरता भुजगप्रकोपः। एवंविधैरुपहता भवति प्रजेयं संवत्सरेऽवनिसुतस्य विपन्नसस्या'।

बुधस्य—"मायेन्द्रजालकुहकाकरनागराढ्या गान्धर्वलेख्यगणि-तास्त्रविदां च वृद्धिः। पिप्रीषया नृपतयोऽद्भुतदर्श-नानि दित्सन्ति तुष्टिजननानि परस्परेभ्यः। वार्त्ता जगत्यवितथाऽविकला त्रयी च सम्यक् चरत्यपि मनोरिव दण्डनीतिः। अध्यध्वर अभिनिविष्टधियोऽत्र केचित् आन्वीक्षिकीषु च परं पदमीहमानाः। हास्यप्रदूत-कविबालनपुंसकानां युक्तिज्ञसेतुजलपर्वतवासिनां च। हार्दिं करोति मृगलाञ्छनजः शकेऽब्दे मासेऽथ वा प्रचुरतां भुवि चौषधीनाम्"।

गुरोः—"ध्वनिरुच्चरितोऽध्वरे द्युगामी विदधौ यज्ञ-सुमां मनांसि भिन्दन्। विचरत्यनिशं द्विजोत्तमानां

कुदशामन्दकरो ऽध्वरांशभाजाम् । क्षितिरक्षणबद्धलक्ष-नेकद्विपपत्त्यश्वघनोरुगोकुलाढ्या । क्षितिपैरभियाचनप्र-हृष्टा द्विजवरस्वर्पितजना तदा विभाति । विविधैर्विवदत्सु तैः पयोदैर्हतभूमि पयसाभिवर्षिताङ्गैः । सुरराजगुरौ शुभे ऽत्र वर्षे बहुसस्या क्षितिरल्पमर्घयुक्ता” ।

शुक्रे।—“शालीक्षुमत्यपि धरा धरणीधराभधाराधरोज्झित-पयःपरिपूर्णवप्रा । श्रीमत्सरोरुहततामलतडागकीर्णा योषेव भात्यभिनवाभरणोज्ज्वलाङ्गी । क्षत्रं क्षितौ क्षपितभूरिविपक्षमुग्रमुद्घुष्टनैकजयशब्दविराविताशम् । सम्हृष्टशिष्टजनदुष्टविनष्टवर्गा गां पालयन्त्यवनिपा नगराकराढ्याम् । पेपीयते मधु मधौ सह कामिनीभिर्जेगीयते श्रवणहारि सवेणुवीणम् । बोभुज्यतेऽतिथिसुहृत्स्वजनैः सहान्नमब्दे सितस्य मदनस्य जयावघोषे” ।

शनेः—“उद्भ्रान्तदस्युगणभूरिरणाकुलानि राष्ट्राण्यनेकपशुवित्तविनाकृतानि । रोरूयमाणहतबन्धुजनैर्जनैश्च रोगोत्तमाकुलकुलानि बुभुक्षया च । वातोद्धताम्बुधरवर्जितमन्तरिक्षम् आरुग्णनैकविटपं च धरातलं, द्यौः । नष्टार्कचन्द्रकिरणातिरजोऽवनद्धा, तोयाशयाश्च विजला सरितोऽपि तन्व्यः । जातानि क्वचिदतोयतया विनाशम् गच्छन्ति पुष्टिमपराणि जलोक्षितानि । सस्यानि मन्दमभिवर्षति वृत्रशत्रौ वर्षे दिवाकरसुतस्य सदा प्रवृत्ते” ।

“क्षयुरपटुमयूखो नीचगोऽन्यैर्जितो वा न सकलफलदाता पुष्टिदोऽतोऽन्यथा वा । यदशुभमशुभेऽब्दे मासजं तस्य वृद्धिः शुभफलमपि चैवं वाच्यमन्योऽन्यतायाम्” ।

**ग्रहवह्नि** पु० ६त० । ग्रहयज्ञे ग्रहोद्देशेन होमाऽधिकरणे वह्निभेदे स च ग्रहयज्ञशब्दे २७६२पृ० दर्शित ।

**ग्रहविप्र** पु० ६त० । ग्रहोद्देश्यकदानग्रहणेन पतिते विप्रभेदे (देवल) “तस्य ग्रहदानोद्देश्यता च ग्रहयामले ६पटले उक्ता यथा

“तुलादानस्य यो दद्याद् ग्रहविप्राय सुन्दरि । आपन्मुक्तो भवेत् सोऽपि भुवि सन्नोदते सुखम् । सुवर्णस्य तुलां दद्याद् ग्रहविप्राय यः प्रिये ।। तस्य तुष्टः सुरगुरुः पुष्टिं करोति च । यस्तु रौप्यतुलादानं दद्यात् ग्रहद्विजाय च । सन्तुष्टस्तस्य शुक्रः स्यात् स स्यात् दीर्घजीवितम् । ग्रहद्विजाय यो दद्यात्तुलां ताम्रस्य पार्वति ।। सन्तुष्टो मङ्गलस्तस्य दीर्घायुर्नं करोति हि । यो दद्यात् ग्रहविप्राय पित्तलस्य तुलां प्रिये ।। तस्य तुष्टो बुधः कुर्यादायुःपुष्टिं शरीरजम् । ग्रहविप्राय सीसस्य तुलां यस्तु प्रयच्छति । प्रीतः शनैश्चरस्तस्य विपुलायुः प्रयच्छति । लौहस्य तुलां दद्याद् ग्रहविप्राय यः प्रिये ।। तस्यायु राहुः सुप्रीतः सौभाग्याद्युप्रयच्छति । यः खर्परतुलां दद्याद् ग्रहविप्राय सुन्दरि । सन्तुष्टो भगवान् केतुस्तस्यायुर्वर्द्धयेत् सुखम् । तुलां ताम्रस्य यो दद्याद् ग्रहविप्राय सुन्दरि ।। आदित्यस्तस्य सम्प्रीतो दीर्घायु परियच्छति । ग्रहविप्राय यो दद्यात् तुलां कांस्यस्य सुन्दरि ।। सन्तुष्टस्तस्य शीतांशुर्विभूत्यायुः प्रयच्छति” ।

**ग्रहशृङ्गाटक** न० बृ० स० २०अ० उक्ते ग्रहयोगभेदे यथा “यस्यां दिशि दृश्यन्ते विशन्ति ताराग्रहा रवि सर्वे । भवति भयं दिशि तस्यामायुधकोपक्षुधातङ्कैः । चक्रधनुःशृङ्गाटकदण्डपुरप्रासवज्रसंस्थानाः । क्षुद्वृष्टिकरा लोके समराय च मानवेन्द्राणाम् । यस्मिन् र्क्षे दृश्या ग्रहमाला दिनकरे दिगन्तगते । तन्नाम्नो भवति नृप परचक्रोपद्रवश्च महान् । यस्मिन् र्क्षे कुर्युः समागमं तन्नामान् ग्रहा हन्युः । अविभेदिनः परस्परमममलमयूखा विशालास्तेषाम् । ग्रहसंवर्तसमागमसम्मोहसमाजसन्निपाताख्याः । कोशश्चेत्येतेषामभिधास्ये लक्षणं सफलम् । एकर्क्षे चत्वारः सह पौरैर्यायिनोऽथ वा पञ्च । संवर्तो नाम भवेच्छिखिराहुयुतः स सम्मोहः । पौरः पौरसमेतो यायी सह यायिना समाजाख्यः । समलोऽवसङ्गमेऽन्यो यद्यागच्छेत्तदा कोशः । उदितपश्चादेकः प्राक् चान्यो यदि स सन्निपाताख्यः । अविकृततनवः स्निग्धा विपुलाश्च समागमे धन्याः । संवर्तसमागमाख्यौ सम्मोहकोशौ भयदौ प्रजानाम् । समाजसंज्ञः सुसमः प्रदिष्टो वैराज्यकोपः खलु सन्निपाते” ।

**ग्रहसमागम** पु० ६त० । चन्द्रेण सह भौमादिपञ्चग्रहयोगभेदे । ग्रहयुतिशब्दे ग्रहशृङ्गाटकशब्दे च विवृतिः

**ग्रहादि** पु० पा० उक्ते कर्त्तरि णिनिप्रत्ययनिमित्ते धातुगणभेदे स च गणः णिन्यन्तया पा० ग० सू० उक्तो यथा ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री सम्मर्दी (रक्षश्रुवपशां नौ) निरक्षी निश्रावी निवापी निशायी (याचृव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्) अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी (अच आमचित्तकर्त्तृकाणाम्) अकारी अहारी अविनायी विशायी विषायी (अभिभावी भूते) अपराधी उपरोधी परिभवी परिभावी इति ग्रहादिराकृतिगणः”

**ग्रह्य** पु॰ ग्रह कर्मणि पात्रभेदएव स्वार्थे यत्। कर्मणि पात्र- रूपे यज्ञिये पात्रभेदे। "आग्राकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा" यजु॰ ४।२४। "ग्रह एव ग्रह्य शुक्रपदमैन्द्रवायवादिग्रहाणामुपलक्षणम्" वेददी॰।

**ग्राभ** पु॰ ग्रह—ग वेदे हस्य भ। ग्राहके। "आ तू न इन्द्र! क्षुमन्तं चित्रं ग्राभं सङ्गृभाय" ऋ॰ ८।८१।१। "ग्राभं ग्राहकम्" भा॰।

**ग्राम** पु॰ ग्रस—मन् आदन्तादेश। "विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा इति" "तथा शूद्रजनप्राया कृषिकृत्कणी- वला। क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसञ्ज्ञिका" इति- चोक्तलक्षणे विप्रादीनां १वासस्थाने, "धनुः शतं परि- णाहो ग्रामात् क्षेत्रान्तरं भवेत्" याज्ञ॰। "ग्रामेष्वा- त्मविसृष्टेषु" रघु। "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्य- जेत्" हितोप॰ "यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि। तथा स्वराणां सन्दोहो ग्राम इत्यभिधी- यते" इत्युक्ते २स्वरसङ्घभेदे, "षड्जग्रामो भवेदादौ मध्यमग्रामएव च। गान्धारग्राम इत्येतत् ग्रामत्रय- मुदाहृतम्" "नन्द्यावर्त्तोऽथ जीमूतः सुभद्रो ग्रामका- स्त्रयः। षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः" मल्लिनाथधृतवाक्यम् तेषाञ्च सप्तस्वरविशेषयोगात् एकवि- शतिमूर्च्छनाहेतुत्वं यथोक्तं तत्रैव "क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छनोच्यते ग्रामस्था एताः सप्त सप्त च"। "ग्रामत्रयेऽपि प्रत्येकं सप्त सप्त मू- र्च्छना इत्येकविंशतिमूर्च्छना भवन्तीति" मल्लि॰। अधिकं सङ्गीतदामोदरे दृश्यम्। "स्फुटीभवद्ग्रामविशेषमूर्च्छनाम्" माघ। किञ्चिच्छब्दपूर्वकस्य ३तत्र्यसमाते च यथा गङ्गाग्राम अर्धग्राम इत्यादि। "गङ्गाकरकरग्राम" कविकल्पद्रुम। ४जनपदे च "यस्याश्वास प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथास" ऋ॰ २।१२।७। "ग्रसन्तेऽत्र ग्रामा जनपदा" भा॰। स्वार्थे क तेष्वर्थे "टीयन्तां ग्रामकाः केचित्" भा॰ उद्यो॰ १४६६ श्लो॰। स्वल्पार्थे टी ततः स्वार्थे क ग्रामटिका स्वल्पग्रामे स्त्री "स्वर्ग ग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः" सा॰ द॰। ५ग्रामवासि कर्षकादिजने ६ग्रामषड्ये सङ्घते ग्रामसे- टमथ। ७तत्सम्बन्धिनि ग्राम्यधर्मे च।

**ग्रामकाम** त्रि॰ ग्रामं स्वकीयत्वेन कामयते कम—णिङ अण् उप॰ स॰। आत्मसम्बन्धितया ग्रामस्य कामुके। "यवाग्वा ग्रामकाम" कात्या॰श्रौ॰ ४।१५।२२। "उपहव्यो ग्रामकामस्य" २२।८।७। "दीर्घव्याधिग्रामकामप्रजाकाम- पशुकामानां वा" २२।६।१७।

**ग्रामकुक्कुट** पुंस्त्री ७त॰। ग्राम्ये कुक्कुटभेदे "क्रव्यविङ्- प्लव हंस चक्राङ्ग ग्रामकुक्कुटम्" "छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्। पलाण्डुं गृञ्जनं चैव मत्या- जग्ध्वा पतेत् द्विजः" इति मनुना तन्मांसभक्षणं निषि- द्धम् स्त्रियां जातित्वात् ङीष्।

**ग्रामकुमार** त्रि॰ ग्रामेषु मध्ये कुमारः सुन्दरः। ग्राम- सुन्दरे। तस्य भाव मनोज्ञा॰ वुञ्। ग्रामकुमारक तद्भावे न॰।

**ग्रामकुलाल** पु॰ ग्रामे कुलाल। ग्राम्ये कुलाले कुम्भकारे "ग्रामः शिल्पिनि" पा॰ अस्य वा प्रकृतिस्वरता ग्राम शब्दस्य आद्युदात्त। एवं ग्रामनापितादिषु वा आद्यु- दात्तता। ततः मनोज्ञा॰ भावे वुञ्। ग्रामकुलालक तद्भावे न॰ [ ङारा॰ स्त्रियां जातित्वात् ङीष्।

**ग्रामकूट** पुंस्त्री ग्रामस्य कूट इव प्रधानत्वात्। शूद्रे

**ग्रामक्रोड** पुंस्त्री ग्रामे क्रोड। ग्राम्यशूकरे स्त्रियां जाति- त्वात् ङीष्। "स दोग्ध्रीं धेनुतत्त्वञ्च ग्रामक्रोडीं दुधु- क्षति" काशीख॰ १६ अ॰। ग्रामशूकरादयोऽप्यत्र पुंस्त्री॰।

**ग्रामगृह्य** त्रि॰ ग्रह—बाह्यार्थे कर्म ५त॰। १ग्रामबाह्ये स्त्रियां टाप् सा च २ग्रामबाह्यसेनायाम्। [तथात्वम्।

**ग्रामगेय** न॰ ग्रामे गेयम्। सामभेदे तस्य ग्रामे गेयत्वात्

**ग्रामगोदुह्** पु॰ ७त॰। ग्राम्ये गोपे "ग्रामः शिल्पिनि" पा॰ वा अस्य प्रकृतिस्वरत्व प्राप्त शुक्लारोहन्ना- द्यादुदात्तता।

**ग्रामघात** पु॰ ६त॰। ग्रामस्य द्रव्यहरणेन हननप्राये व्या- पारे। "ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने। शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः" मनु॰। "ग्रामघाते ग्रामलुण्ठने" कुल्लू॰। २ग्रामस्थितजनहनने च। "कृगोऽसकृद्ग्रामघातमाचरे" ह॰ स॰ ३॰अ॰। "एकस्थाने रुधन्दीप्त सप्ताहाद् ग्रामघातकृत्" ८६ अ॰।

**ग्रामघातिन्** पुंस्त्री ग्रामार्थं तत्रस्थलोकभक्षणार्थं हन्ति पशून् हन—णिनि। ग्रामस्थबहुलोकपोषणार्थं पशु- घातके। "ग्रामघाती च कौन्तेय! मांसस्य परिविक्र- यी" भा॰ शा॰ २४ अ॰ प्रायश्चित्तीयोपाख्याने।

**ग्रामघोषिन्** पु॰ ग्रामे लपके घोषोऽस्यास्ति इनि। शक्रन्दने

**ग्रामान्त** न० ६त०। ग्रामसमीपे उपशल्ये "नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा" "कृतवापनो निवसेत् ग्रामान्ते गोव्रजेऽपि वा" मनुः। ग्रामान्ते भव: छश्च स्वार्थ्य। ग्रामान्तीय ग्रामसमीपभवे त्रि० "पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः" मनुः।

**ग्रामिक** पु० ग्रामे तद्रक्षणे नियुक्त ठञ्। ग्रामरक्षणाय नियुक्ते ग्रामाध्यक्षे "ग्रामे दोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम्। शंसेत् ग्रामदशेशाय दशेशो विंशतीशिने" मनुः। "यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः। अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात्" मनुना तद्वृत्तिरुक्ता। "ग्रामेयान् कुलदोषांश्च ग्रामिकः प्रतिभावयेत्" "यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्नीयात्" भा०शा० ८७अ०। तस्य भावः पुरोहि० यक्। ग्रामिक्य तद्भावे न०।

**ग्रामिन्** त्रि० ग्राम: स्वामित्वेन आधारत्वेन वाऽस्त्यस्य इनि। १ग्रामस्वामिनि २ग्रामवासिनि च। ३ग्राम्यधर्मयुक्ते मैथुनयुक्ते च। "आसुरी मेढ्मर्वाग्द्वाव्यवाये ग्रामिणां रतिः" भाग० ४।२९।१४। स्त्रियां ङीप्। सा च ४नीलीवृक्षे स्त्री जटा०।

**ग्रामीण** पुस्त्री ग्रामे भवः खञ्। १कुक्कुरे, २काके, मेदि० ३ग्राम्यशूकरे च राजनि०। ४ग्रामोद्भवे त्रि०। "ग्रामीणस्य प्रथमतः पश्यतोगवयादिकम्" भाषा०। "ग्रामीणवध्वस्तमलक्षिता जनैः" माघ। ५नीलिकौषधौ, मेदि० ६पालङ्क्यशाके च स्त्री राजनि०।

**ग्रामेय** त्रि० ग्रामे भव ना०ढक्। १ग्रामभवे "ग्रामेयान् कुलदोषांश्च" मनुः। २वेश्यायां स्त्री

**ग्रामेयक** त्रि० ग्रामे भव कत्र्या० ढकञ्। ग्रामभवे। "ग्रामेयककुलानाञ्च समस्तं सीम्नि साक्षिणः" मनुः। अत्र ग्रामयिकेति पाठः लिपिकरप्रमादात्।

**ग्रामेश** पु०६त०। ग्रामपतौ ग्रामाध्यक्षे ग्रामेश्वरादयोऽप्यत्र।

**ग्राम्य** त्रि० ग्राम—भवार्थे—वा यत्। १ग्रामभवे कृषकादौ "कृतमप्रेम सुन्दरि। ग्राम्यजनो मिष्टमश्नाति" इ०र०। २मूढे ३प्राकृते। ४मैथुने च "व्यवायो ग्राम्यधर्मश्च" अमरः। प्राकृते "ग्राम्यानपशून् कपिश पिपासत" माघ। मूढे "ग्राम्यभावमपहातुमिच्छवः" माघ। ५स्त्रीकारे ६रतबन्धे ७अश्लीलादिवचने अश्लीले हालिकादिप्रसिद्धवाक्ये च न० शब्दार्थचि०। ८काव्यदोषभेदे पु०। स च शब्दगतोऽर्थगतश्च तत्र शब्दगत सा० द०। शब्ददोषविभागे "दुःश्रव्यत्रिविधाश्लीलानुचितार्थाप्रयुक्तता। ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थता" इत्यादिना शब्ददोषान् विभज्य "कटिस्ते हरते मनः" इत्युदाहृतम् "अपुष्टदुष्क्रमग्राम्यव्याहतासीलकष्टता" इत्यादिनाऽर्थदोषान् विभज्य च "स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय!" इत्यर्थस्य ग्राम्यत्वमुदाहृतम्। "ग्राम्या मिथुनतुलाख्यो चापार्द्धघटा नियाश्च मेषद्यौ च" ज्यो०उक्तेषु ९सदा मिथुनादिराशिषु १०रातौ मेषादिराशौ च पु०। ११पशुभेदे पुस्त्री०। यथाह पैठीनसिः "ग्राम्यारण्याश्चतुर्दश गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः, महिषवानरऋक्षसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्या"। "अश्वाश्वतरगोखरोष्ट्रछागोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः" इति सुश्रुतोक्ते १२पशुभेदे पुस्त्री० "ग्राम्या वातहराः सर्वे दृष्याः कफपित्तलाः। मधुरा रसपाकाभ्यां दीपना बलवर्द्धनाः" सुश्रु०। १३ओषधिभेदे स्त्री। "तिलमाषव्रीहियवाः प्रियङ्गवो गोधूमाश्चेति सप्त ग्राम्या ओषधयः" तैत्ति०। ओषधि शब्दे १५६४ पृ० दृश्यम्।

**ग्राम्यकन्द** पु० कर्म०। कन्दभेदे (ग्रामेर ओल) रत्नमा०

**ग्राम्यकर्कटी** स्त्री कर्म०। कुष्माण्डे त्रिका०।

**ग्राम्यकर्म्मन्** न० ग्राम्यस्य प्राकृतस्य हालिकादेः कर्म। मैथुने व्यवाये। "ग्राम्यकर्मणैव विस्रसकालावधि" भाग० ५।१४।२।

**ग्राम्यकुङ्कुम** न० कर्म०। कुसुम्भे त्रिका०।

**ग्राम्यधर्म्म** पु० ग्राम्यस्य प्राकृतस्य हालिकादेः धर्मः। व्यवाये मैथुने अमरः। "प्रमत्तोग्राम्यधर्मेषु" भा०व० ४८ अ०। "प्रमत्तं ग्राम्यधर्मेषु" २८०अ०। स अस्त्यस्य इनि ग्राम्यधर्म्मिन् मैथुनरते त्रि०। "शूद्रादायोगवश्चापि वैश्यायां ग्राम्यधर्मिणः" भा०आनु०४८अ०। [दर्शिता।

**ग्राम्यपशु** पु० कर्म०। पशुभेदे ते च पशवः ग्राम्यशब्दे

**ग्राम्यमद्गुरिका** स्त्री कर्म०। मत्स्यभेदे हारा०।

**ग्राम्यमृग** पुस्त्री कुक्कुरे जटा० स्त्रियां ङीप्।

**ग्राम्यवल्लभा** स्त्री ६त०। १पालङ्क्यशाके (पालङ्) राजनि० हालिकादिग्राम्यप्रियत्वात्तस्य तथात्वम्। २वेश्यायाञ्च

**ग्राम्यवादिन्** त्रि० ग्राम्यं वदति णिनि। ग्राम्यशब्दवादके हालिकादौ। "य परस्तात् ग्राम्यवादी तस्य गृहात् नौषीनाहरेत्" तैत्ति० ७।२।१।२।

ततः पूर्व्वाह्णग्रसकालयोर्न्यूनं पश्चातोऽस्य मध्यग्रहणकालः” रघुना० ।

**ग्रासशल्य** न० ग्रासे शल्यम् । ग्रासस्थिते मत्स्यादिकण्टकरूपे शल्ये तदुद्धारोपाय सुश्रुते दर्शितोयथा “ग्रासशल्ये तु कण्ठासक्ते निःशङ्कमनवबुद्धकस्य स्कन्धे मुष्टिनाभिहन्यात् स्नेहं मद्यं पानीयं वा पाययेत्” ।

**ग्राह** पु० ग्रह–जलचरे ण । (हाँगोर) ख्याते जलचरभेदे अमरः “सन्निमज्जज्जगदिदं गम्भीरे कालसागरे । जरामृत्युमहाग्राहे न कश्चिदवबुध्यते” भा० शा० २८ अ० । “जग्राहाजगरो ग्राहोभुजयोरुभयोर्बलात्” भा० व० १७८अ० “हस्तकाद् ग्राहाद्विमुच्यते” मनु । भावे घञ् । २ज्ञाने ३आग्रहे निर्बन्धे च । “मूढग्राहेणात्मनोयत् पीडया क्रियते तपः” गीता । “मूढग्राहेण अविवेककृतेन दुराग्रहेण” श्रीधरः । ४आदाने हस्तव्यापारे ५स्वीकारे जलचरभिन्नेऽपि कर्त्तरि वेदे ण । ६ग्रहीतरि त्रि० “अध्वर्युं यजमानं वा ग्राहो विन्दति” शत०ब्रा० ३।५।३।२५। क्वचित् कर्मणि उपपदे अण् । तत्तत्कर्मग्राहके “पार्ष्णिग्राहस्तु पृष्ठतः” अमरः । “ऋणं कृत्वा ग्राहः ऋणं दाप्यः” याज्ञ० ।

**ग्राहक** पु० ग्रह–ण्वुल् । १श्येनपक्षिणि २विषवैद्ये च । ३ग्रहीतरि त्रि० । ग्रह–णिच्–ण्वुल् । ४ज्ञापके चिह्नेन्द्रियादौ “ग्राहकैर्ज्ञायते चौरो लोप्त्रेणाथ पदेन वा” याज्ञ० “यथास्य ग्राहकाण्येषां शब्दादीनामिमानि तु । इन्द्रियाणि सदा देही धारयन्निव तप्यते” भा० वन० २१०अ० । ५चित्रापरशाके राजनि० ।

**ग्राहिन्** पु० ग्रह–णिनि । १कपित्थे शब्दच० । २मलबन्धकारके, (धारक) त्रि० वैद्यकम् । “कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम्” भावप्र० दाडिमफलगुणोक्तौ । ३ग्राहके “व्यालग्राही यथा व्यालान् बलादुद्धरते बिलात्” काशीख० । “पक्षग्राहि पाण्डित्यम्” उद्भट । स्त्रियां ङीप् । सा च ४प्रांत्क्रुतायाम् । “मा स्म भूर्ग्राहिणी भीरु” । “अद्रिं ग्राहिणी मणिकूला” जयम० । ५क्षुद्रदुरालभायां स्त्री राजनि० । ६ताम्रमूलाहक्षे (जोरक) रत्नमाला तयोर्मलबन्धकारित्वात्तथात्वम् । [राजनि० ।

**ग्राहिफल** पु० ग्राहि मलबन्धकं फलं यस्य । कपित्थवृक्षे ।

**ग्राहुक** त्रि० ग्रह–बा० उकञ् । ग्रहणशीले “यदावर्त्तमना ग्राहुकः स्यात्” तैत्ति० ६।४।१।११।

**ग्राह्य** त्रि० ग्रह–ण्यत् । १ग्रहीतव्ये, २ग्रहणयोग्ये, ३उपादेये, ४स्वीकार्य्ये, ५ज्ञेये च । “शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो यत्रोपरुध्यते” मनु । “अस्मिंस्तु किल समरे ग्राह्यम् विविधमायुधम्” भा०द्रो०११२ अ० “अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः” स्मृतिः “पिशाचादप्यमृतं ग्राह्यम्” मनु । “चक्षुर्ग्राह्यं भवद्रूपम्” भाषा० । ६प्रतिबध्यज्ञाने प्रकारीभूतधर्म्मे यथा हृदोवह्निमानित्याकारकज्ञानं प्रतिबध्य हृदो वह्निमानितिज्ञानं तत्र प्रकारीभूतो वह्निः ।

**ग्रीवा** स्त्री गिरत्यनया गॄ–वनिप् नि० । कन्धरायाम् “ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः” शकु० । तन्मानादिकं सुश्रुते यथा “चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि । द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि । चतुर्विंशतिविस्तारपरिणाहं सुसग्रीवम्” सुश्रु० । “ग्रीवाग्रसक्तयुगैस्तुरङ्गैः” माघ । “पादयोर्द्दोर्डिकायाञ्च ग्रीवाया वृषणेषु च” मनु । “प्राग्ग्रीवमुत्तरलोम” आश्व०गृ० १।१४।३। “इदमहं रक्षसां ग्रीवा अपि कृन्तामि” यजु० ५।२२। दशग्रीवः कम्बुग्रीव इत्यादि । [तद्गोत्रापत्ये पुंस्त्री स्त्रियां ङीप् ।

**ग्रीवाक्ष** पु० ऋषिभेदे तस्य गोत्रापत्यं शिवा०अण् । ग्रैवाक्ष

**ग्रीवाघण्टा** स्त्री ७त० । ग्रीवास्थितघण्टायां त्रिका० ।

**ग्रीवाविल** न० ६त० । ग्रीवान्तर्गते गर्त्तभेदे त्रिका० ।

**ग्रीविन्** पुंस्त्री० दीर्घा ग्रीवाऽस्त्यस्य बा० इनि टिलोपः । १उष्ट्रे जटाधरः स्त्रियां ङीप् । २दीर्घग्रीवायुक्ते त्रि० ।

**ग्रीष्म** पु० ग्रसते रसान् ग्रस–मनिन् । ज्यैष्ठाषाढात्मके १ऋतुभेदे । “ग्रीष्मे तीव्रकरोभानुर्हेमन्ते तथा शिशिर” सूर्य्यसि० । “प्रिस्तर्त्तुमिच्छोर्वनिताखस्य तस्याम्भसि ग्रीष्मसुखे बभूव” रघु । “अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्व्वपेत् । हेमन्तग्रीष्मवर्षासु पाञ्चयज्ञिकमन्वहम्” “ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः” मनु । स्वार्थे अण् । ग्रैष्म तत्रार्थे तद्धेदत्व । रतुप्रत्ययान्विनि त्रि० “शुक्रश्च शुचिश्च ग्रैष्मावृतू” यजु०१।१६। “ग्रैष्मो ग्रैष्मस्त्वन्विनौ दारू न्तलवयधौ” मेदिनी० । ऋतौश्च यथा चान्द्रमासात्मकता तथर्तुशब्दे १४२७ पृ० दर्शिता । सौरास्तु ज्योतिर्गणनामात्रोपयोगित्वेन ज्योतिषे व्यवह्रियते तदपि तत्रैव शब्दे दर्शितम् । एतदृतौ ग्रीष्मगुणादिकं ऋतुचर्य्याशब्दे दर्शितम् ।

ग्लैपिक त्रि॰ ग्लैपधर्म्मं वेद तत्प्रतिपादकग्रन्थमधीते वा वसन्ता॰ ठञ्। १ग्लैपधर्म्मवेत्तरि २तद्ग्रन्थाध्यायिनि च

ग्लपन न॰ ग्लै–णिच् पुक् ह्रस्व भावे ल्युट्। १ग्लानि करणे "तद्वैशद्यालाघवग्लपनकृष्णविचारणकरम्" सुश्रुत। कर्त्तरि ल्यु। २ग्लानिकारके त्रि॰।

ग्लसु भक्षणे भ्वा॰ आत्म॰ सक॰ सेट्। ग्लसते अग्लसिष्ट। जग्लसे। उदित् ग्लसित्वा ग्लस्त्वा। ग्लस्त।

ग्लस्त त्रि॰ ग्लस–क्त क्त्वावेट्कत्वात् नेट्। भक्षिते अमर

ग्लह आदाने वा चुरा॰ उभ॰ पक्षे भ्वा॰ सक॰ सेट्। ग्लाहयति ते ग्लहति अजिग्लहत त अग्लहीत् अग्लाहीत्। णिचोऽभावे घाढा। घाट इत्यादि आदाने च द्यूतक्रीड़ार्थं पणादानम्। "तदेवा ग्लहमाना भूषो जयपराजयौ भा॰ क॰ ८७ अ॰। "दुर्य्योधनो ग्लहते पाण्डवेन" भा॰ य॰ ६१अ॰ "शकुने! हन्त दिव्यामो ग्लहमानाः परस्परम्" भा॰ स॰ ५८ अ॰। अत्र त आर्षम् आत्मनेपदम्। "इमास्तेत् पूर्व्वं कितवोऽग्लहीच्यत्" भा॰ स॰ ६८ अ॰।

ग्लह पु॰ ग्रह–ग्लह–वा अच् "अक्षेषु ग्लह" पा॰ कर्म्मणि नि॰। देवनविषये पणरूपे ग्राह्ये वस्तुनि (हुड)(बाजि) ख्याते पदार्थे "व्यात्युक्षीनभिसरणग्लहामदीव्यन्" माघ। "अक्षग्लहः सोऽभिभवेत् पर न" भा॰ स॰ ५८अ॰। "महाधन ग्लह त्वेक शृणु मे भरतर्षभ।" ७४ अ॰ धनिकस्य द्यूतविषये ग्लहविभागभेद याज्ञ॰ दर्शितो यथा "ग्लहे शतिकवृद्धेस्तु सभिक पञ्चकम् शतम्। गृह्णीयात् धूर्त्तकितवादितरात् दशक शतम्"।

ग्लान त्रि॰ ग्लै–कर्त्तरि क्त। १रोगादिना क्षीणदेहादौ दीने अमर। भावे क्त। २दैन्ये न॰

ग्लानि स्त्री ग्लै–भावे नि। १दौर्बल्ये २स्वकार्य्याक्षमतायाम् हेम॰। "स्वकर्म्मस्थोनियमन्ते मनस ग्लानिमृच्छति" मनु॰। "रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा। ग्लानिर्निष्प्राणता कम्पकार्श्यानुत्साहतादिकृत्" सा॰द॰ उक्ते ३व्यभिचारिगुणभेदे यथा "किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः। ग्लपयति परिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्म्मः केतकीपत्रगर्भम्" सा॰ द॰।

ग्लाव पु॰ इलभमित्रयोरपत्ये इद्रासस्यायने ऋषिभेदे। "अथातः शौव उद्गीथ तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेय स्वाध्यायमुद्वव्राज" छा॰ उप॰।

ग्लाविन् त्रि॰ ग्लै बा॰ विनि। अहृष्टे "पश्चाद्दोषाय ग्लाविनम्" यजु॰ ३०।१७। "ग्लाविनमहृष्टम्" वेददी॰।

ग्लास्नु त्रि॰ ग्लै–स्नु। ग्लानियुक्ते अमर। "वसन्तु मास्यवति ग्लास्नू रामोजिष्णु रधृष्णु वत्" भट्टि॰।

ग्लुच चौर्य्ये गतौ च भ्वा॰ पर॰ सक॰ सेट्। ग्लोचति इरित् अग्लुचत् अग्लोचीत्। जुग्लोच उदित् क्त्वा वेट्। ग्लुचित्वा ग्लुक्त्वा क्तो वेट्कत्वात् ग्लुक्त। "बहूनामग्लुचत् प्राणानग्लोचीच्च रथे यश" भट्टि।

ग्लुचुक पु॰ ऋषिभेदे तस्य गोत्रापत्यम् "प्राचामवृद्धात् फिन् बहुलम्" पा॰ फिन्। ग्लुचुकायनि तद्गोत्रापत्ये पुंस्त्री॰ स्त्रियां वा ङीप्। ग्लुचुकायनिर्भक्ति सैव्योऽस्य "गोत्रक्षत्रियाख्यो बहुलम्" पा॰ वुञ्। ग्लौचुकायनक तत्सेवके त्रि॰।

ग्लुन्च चौर्य्ये गतौ च भ्वा॰ पर॰सक॰ सेट्। ग्लुञ्चति इरित् अग्लुचत् अग्लुञ्चीत् जुग्लुञ्च। जुग्लुच(ञ्च) तुः। उदित् ग्लुञ्चित्वा ग्लुक्त्वा। क्तो वेट्कत्वात् ग्लुक्तः।

ग्लेप दैन्ये अक॰ गतौ चाले च सक॰ भ्वा॰ आ॰ सेट्। ग्लेपते अग्लेपिष्ट जिग्लेपे ऋदित् अजिग्लेपत् त।

ग्लेव सेवने भ्वा॰ आ॰ सक॰ सेट्। ग्लेवते अग्लेविष्ट जिग्लेवे ऋदित् अजिग्लेवत् त।

ग्लेष अन्वेषणे भ्वा॰ आ॰ सक॰ सेट्। ग्लेषते अग्लेषिष्ट जिग्लेषे। ऋदित्। अजिग्लेषत्।

ग्लै क्षये हर्षक्षये च भ्वा॰ पर॰ अक॰ अनिट्। ग्लायति अग्लासीत्। जग्लौ जग्लिथ जग्लाथ। ग्लानिः ग्लास्नु। ग्लानः। ग्लेयात्। णिचि ग्लपयति ते अजिग्लपत् त। ग्लानिशब्दे उदा॰। "मनो ग्लपयते तीव्रम् विष त्वेन सर्व्वशः" भा॰ आनु॰ ४६२४श्लो॰। "ग्लपयति यथा शशाङ्कम न तथा हि कुमुद्वतो दिवसः" शकु॰। "पतङ्गैर्ग्लपिताशयम्" भट्टि "बालस्य लक्ष्मीं ग्लपयन्तमिन्दो" कुमा॰। "यस्य वैराणि कोपश्च सहृदस्त्वनजिग्लपः" भट्टि॰।

ग्लौ पु॰ "ग्लास्नुभ्या डौः" उणा॰ग्लै–डौ। १चन्द्रे तस्य प्रतिमासं कृष्णपक्षे क्षीयमाणत्वात्तथात्वम् तन्नामनामके २कर्पूरे च अमर.। "अस्तङ्गते कथित्रग्लौरिव रिपौ कृतौ ग्लौरिव्यस्तं पराराश मदे च सर्व्वे" बृह॰ कि॰। ३हृदयमाल्यास "ग्लौभिर्गुल्मान् हिराभि स्रवन्ती" यजु॰ २५।८। "ग्लायति आस्यन्ति ग्लावो हृदयनाड्य" वेददी॰।

इति वाचस्पत्ये गकारादि शब्दार्थनिरूपणम्।

**घटकर्पर** पु॰ विक्रमादित्यसभ्ये नवरत्नान्तर्गते कविभेदे। 'धन्वन्तरि क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्विदाभरणम्। तत्कृतकाव्यञ्च नीतिसाराख्यं तन्नाम्ना प्रसिद्धमस्ति। तच्च "गिरौ कलापी गगने पयोदाः" इत्यादिकं "यथा करोतु नीतिज्ञो व्यवसायमितस्ततः। फलं पुनस्तदेव स्याद् यद्विधेर्मनसि स्थितम्" इत्यन्तम्। ६त॰। २भग्नघटावयवभेदे (खापरा) "तस्मै वहेयमुदकं घटकर्परेण" नीतिसार "घटकर्परतोयाम्" पञ्चत॰।

**घटकार** त्रि॰ घटं करोति कृ—अण् उप॰ स॰। कुम्भकारे (कुमार) शिल्पिभेदे "घटकारपुरोहितादयश्च" ह॰ सं॰ १६अ॰। ण्वुल्। घटकारकोऽप्यत्र।

**घटकृत्** त्रि॰ घटं करोति कृ—क्विप्। कुम्भकारके "विहगमात्स्यवणिग्जनघटकृच्छिल्पान्यजातिस्वफला" ह॰ सं॰ १६

**घटग्रह** त्रि॰ घटं गृह्णाति कर्मण्युपपदेऽपि न अण्। अन्त्र "अभिभाद्रपदाङ्गतोमरयहिवटघटीभृत्सु घटेन स्नानम्" वाति॰ अनुद्यमने अच्। कुम्भग्राहके उद्यमने तु अण्। घटग्राह तत्रार्थे त्रि॰

**घटज** पु॰ घटात् जायते जन—ड। कुम्भसम्भवे अगस्त्ये मुनौ। कुम्भयोनिशब्दे २११७ पृ॰ दृश्यम्। "किं यद्भुक्तेन घटज! काशी प्राप्नाथ तेन वै" काशीख॰१०अ॰। घटजातादयोऽप्यत्र। [अच् सुम्व। कुट्टिन्यां त्रिका॰।

**घटदासी** स्त्री घटयति नायकौ परस्परं योजयति घट—

**घटन** न॰ घटि+ल्युट्। योजने संमेलने "अघटनघटनापटीयसी माया" वेदा॰। "तन्त्रेण तन्त्रमयसा घटनाय योग्यम्" विभा॰।

**घटना** स्त्री चु॰ घट—युच्। १सङ्घटकरणे, २योजने ३मेलने, ४करिणां समूहे च अमर। "वाच्यं सङ्घटनिजपराङ्घटनामालोक्य कालयित्ना" ह॰ स॰ ५१अ॰। "प्रियजनघटनामाशु द्रुमीलितां च" ह॰ स॰ ५२अ॰।

**घटराज** पु॰ घटेन योजनेन राजते राज—अच्। कुम्भकारा॰ कपालद्वययोजनात्तस्य जातत्वात्तथात्वम्।

**घटपर्य्यसन** न॰ ६त॰। प्रायश्चित्ते पराङ्मुखस्य पतितस्य त्यागार्थं जीवत एव तस्य प्रेतकार्य्यादि च ज्ञातिभिः क्रियमाणे दास्याः पादेन कुम्भस्य निरुदककरणे तत्तद्विधिः मनुना दर्शितो यथा

"पतितस्योदकं कार्य्यं सपिण्डैर्बान्धवैर्बहिः। निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ। दासी घटमपां पूर्णं पर्य्यस्येत् प्रेतवत् पदा। अहोरात्रमुपासीरन्नशौचं बान्धवैः सह। निवर्त्तेरंश्च तस्मात्तु सम्भाषणसहासने। दायाद्यस्य प्रदानञ्च यात्रा चैव हि लौकिकी। ज्येष्ठता च निवर्त्तेत ज्येष्ठावाप्यञ्च यद्धनम्। ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयान् गुणतोऽधिकः" "पतितस्येति। महापातकिनो जीवत एव प्रेतस्योदकक्रिया वक्ष्यमाणरीत्या सपिण्डैः समानोदकैश्च ग्रामाद्बहिर्गत्वा ज्ञात्यृत्विग्गुरुसन्निधाने रिक्तायां नवम्यादौ तिथौ दिनान्ते कर्त्तव्या। दासीति। सपिण्डसमानोदकप्रयुक्ता दासी उदकपूर्णं घटं प्रेतवदिति दक्षिणाभिमुखीभूय पादेन क्षिपेत् यथा स निरुदको भवति तदनु ते सपिण्डाः समानोदकैः सहाहोरात्रमशौचमाचरेयुः। निवर्त्तेरन्निति। तस्मात् पतितात् सपिण्डादीनां सम्भाषणमेकासनोपवेशनं च तस्मै रिक्थदानं सांवत्सरिकादौ निमन्त्रणादिरूपो लोकव्यवहारः एतानि निवर्त्तेरन्। ज्येष्ठतेति। ज्येष्ठस्य यत् उत्थानाभिवादनादिकं कार्य्यं तत्तस्य न कार्य्यं ज्येष्ठांशस्य च तस्य विशोद्धारादिकं धनं न देयं यद्यपि रिक्थप्रदानप्रतिषेधादेवास्योद्धारप्रतिषेधः सिद्धः तथापि यवीयसस्तत्प्राप्त्यर्थमनूद्यते तस्यैव ज्येष्ठस्य यस्त्वंशः धनं सोद्धारांशं तदनुजो गुणाधिको लभते" कुल्लू॰।

विस्तरस्तु मिताक्षरायामुक्तो यथा

"यस्त्वोक्त्यादेतच्च चिकीर्षति तस्य किं कार्य्यमित्याह "दासीकुम्भं बहिर्ग्रामान्निनयेरन् स्वबान्धवाः। पतितस्य बहिः कुर्युः सर्वकार्य्येषु चैव तम्" या॰। "जीवत एव पतितस्य स्वज्ञातयो बान्धवाः मातुलाद्याश्च ते सर्वे सन्निपत्य दासी प्रेष्या तया सपिण्डादिप्रेषितयाऽऽनीत कुम्भमपां पूर्णं ग्रामाद्बहिर्निनयेयुः। एतच्चतुर्थ्यादिरिक्ततिथ्यह्नः पश्चिमे भागे गुर्वादिसन्निधौ कार्य्यम् "पतितस्योदकं कार्य्यं सपिण्डैर्बान्धवैः सह। निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधावित" मनुस्मरणात्। अथ या दास्येव सपिण्डादिप्रयुक्ता निनयेत् यथाह मनुः "दासी घटमपां पूर्णं पर्य्यस्येत् प्रेतवत्पदा। अहोरात्रमुपासीरन्नशौचं बान्धवैः सहेति"। प्रेतवदिति दक्षिणामुखापसव्यत्वयोः प्राप्त्यर्थम्। तत्र निनयनमुदकपिण्डदानादिप्रेतक्रियोपलक्षणं द्रष्टव्यम्। "तस्य विद्यागुरून् योनिसम्बन्धांश्च सन्निपात्य सर्वाण्युदकादीनि प्रेतकर्म्माणि कुर्युः पात्रञ्चास्य विपर्य्यस्येयुर्दासः कर्म्मकरो वावकरात् पात्रमानीय दासी घटं पूरयित्वा दक्षिणामुखी पदा विपर्य-

छिद्रस्याधोभागो रसेन मुद्रित । पुनरेकपार्श्वे जल प्रक्षिपेत् । तेन जलेन सूक्ष्मोऽपि रसो गुरुत्वात् परत सारयितु न शक्यते । अतो मुद्रितच्छिद्र तच्चक्र जलेनाकृष्ट स्वय भ्रमतीति” प्रमि० ।

ताम्रादिमयश्चेत्यादि (२) “ताम्रादिधातुमयस्याङ्कुशरूपस्य वक्रीकृतस्य नलस्य जलपूर्णस्यैकमग्र जलभाण्डेऽन्यदग्र बहिरधोमुख चैकहेलया यदि विमुच्यते त भाण्डजल सकलमपि नलेन बहि चरति । तदग्र छिन्नकमलस्य कमलिनीनलस्य जलस्थभाण्डे क्षिप्तस्य जलपूर्णसुषिरस्यैकमग्र भाण्डाद्बहिरधोमुख कृत यदि ध्रियते तदा भाण्डजल सकलमपि नलेन बहिर्याति । इद कुक्कुटनाडीयन्त्रमिति शिल्पिना कर-सेखलिना च प्रसिद्धम् । अनेन बहवश्चमत्कारा सि द्ध्यन्ति । अथ चक्रनेम्या घटीर्बद्धा जलयन्त्रवत् द्वारा-धाराच्चवस्थित तथा निवेशयेद्यथा नलकप्रच्युतजल तस्य घटीमुखे पतत । एव पूर्णघटीभिराकृष्ट तद्भ्रमत् केन निवार्य्यते । अथ चक्रच्युतस्योदकस्याध-प्रणालिकया कुण्डगमने कृते कुण्डे पुनर्जलप्रक्षेपनैर-पेक्षम्” प्रमि० ।

विष्णु पु० अन्यथा तन्निर्माणप्रकार उक्तो यथा

“नाडिका तु प्रमाणेन कला दश च पञ्च च । उन्मानेनाम्भस सा तु पलान्यर्द्धत्रयोदश । हेममाषै कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः । मागधेन प्रमाणेन जलप्रस्थस्तु स स्मृत ” विष्णु० पु० ।

“अम्भस उन्मानेन उन्नीयतेऽनेनेत्युन्मान पात्रम् । अर्द्धेन योगे त्रयोदश सार्द्धद्वादशेत्यर्थ । उन्मानरूपेण घटितानि सार्द्धद्वादशपलानि सा नाडिका सार्द्धद्वादशपलताम्रनिर्मितपात्रेण सा नाडिका ज्ञातव्येत्यर्थः । कि प्रमाण तत् पात्र कार्य्य तदाह । सार्द्धद्वादशपलजलेन हि मागधदेशप्रस्थ पूर्य्यते तत्प्रमाण पात्र कार्य्यम् इत्यर्थात् सिद्धम् । ननु तथापि पात्रेण कथ नाडिका ज्ञान क्रियापरिच्छेद्यत्वात् कालस्येत्याशङ्क्य क्रियासिद्धये प्रस्थादि विशिनष्टि हेमेति । माष पञ्चगुञ्ज । हेम्नोमाषैश्चतुर्भिश्चतुरङ्गुलेन शलाकारूपेण रचितै कृतच्छिद्रा । एतदुक्त भवति । सार्द्धद्वादशपलताम्र-मय मागधप्रस्थसम्मितमुद्धीयत पात्र चतुर्माषचतुरङ्गुलहेमशलाकया कृताधश्छिद्र जले स्थापित तेन छिद्रेण यावता कालेन पूर्य्यते तावान् कालो नाडिकेति ।

तथाच शुक्र “द्वादशार्द्धपलोन्मान चतुर्भिश्चतुरङ्गुलै । स्वर्णमाषै कृतच्छिद्र यावत् प्रस्थजलप्लुतमिति” । श्रीधरव्याख्या । हेत० । उद्गो रुमायां स्त्रस । घटियन्त्रमप्यत्र “तत सहारचक्रेऽस्मिन् भ्राम्यते घटियन्त्रवत्” मार्क०पु० । वध्या कूपात् उद्धारणार्थ यन्त्रम् । २कूपात् कुम्भोद्धारणार्थे यन्त्रभेदे । घटीयुक्त यन्त्र घटीयन्त्र तच्च घटीयुक्तजलोद्धारणयन्त्र पश्चिमदेशे प्रसिद्धम् । (जलतोलार कल) । “कमलपलपुटघटितवटीयन्त्राणि” काद० ।

घटोत्कच पु० भीमेन हिडिम्बायामुत्पन्ने राक्षसभेदे तदुत्पत्तिकथा भा० आ० हिडिम्बवधप० १५५अ० यथा

“बिभ्रती परम रूप रमयामास पाण्डवम् । रमयन्ती तथा भीम तत्र तत्र मनोजवा । प्रजज्ञे राक्षसी पुत्र भीमसेनान्महाबलम् । विरूपाक्ष महावक्त्र शङ्कुकर्ण विभीषणम् । भीमनाद सुताम्रोष्ठ तीक्ष्णदंष्ट्र महारवम् । महेष्वास महावीर्य्य महाबल महाभुजम् । महाजव महाकाय महामायमरिन्दमम् । दीर्घघोण महोरस्क विकटोद्बद्धपिण्डिकम् । अमानुष मानुषज भीमवेग महाबलम् । य पिशाचानतीत्यान्यान् बभूवातीव राक्षसान् । बालोऽपि यौवन प्राप्तो मानुषेषु विशाम्पते ! । सर्व्वास्त्रेषु पर वीर प्रकर्षमगमद्बली । सद्यो हि गर्भान् राक्षस्यो लभन्ते प्रसवन्ति च । कामरूपधराश्चैव भवन्ति बहुरूपिका । प्रणम्य विकच पादावग्रह्णात् स पितुस्तदा । मातुश्च परमेष्वासस्तौ च नामास्य चक्रतु । घटो हास्योत्कच इति माता त प्रत्यभाषत । अब्रवीत्तेन नामास्य घटोत्कच इति स्म ह । अनुरक्तश्च तानासीत् पाण्डवान् स घटोत्कच । तेषाञ्च दयितो नित्यमात्मभूतो बभूव ह । सवाससमयो जीर्ण इत्याभाष्य ततस्तु तान् । हिडिम्बा समय कृत्वा स्वा गति प्रत्यपद्यत । कृत्यकाल उपस्थास्ये पितॄनिति घटोत्कच । आमन्त्र्य रक्षसां श्रेष्ठ प्रतस्थे चोत्तरा दिशम् । स हि सृष्टो मघवता शक्तिहेतोर्महात्मना । कर्णस्याप्रतिवीर्य्यस्य प्रतियोद्धा महारथ ” ।

स च द्रोणप० घटोत्कचवधप० इन्द्रदत्तशक्त्या कर्णेन निहत । तत्कथा तत्र १८० अ० दृश्या यथा

“ततोऽन्वयन् कुरव सर्व एव कर्ण दृष्ट्वा घोररूपाश्च मायाम् । शक्त्या रक्षो जहि कर्णाद्य तूर्ण नश्यन्त्येते कुरवो धार्त्तराष्ट्रा । करिष्यत किञ्च नो भीमपार्थौ

तपन्तमेनं जहि पापं निशीथे। यो नः संग्रामाद्घोर रूपाद्धिरण्येत् स नः पार्थान् सबलान् शोधयेत। तथा-ऽऽदेन राक्षस घोररूपं जहि गङ्गाद्या मे दत्तया पावकेन। मा कौरवाः सर्व एवेन्द्रकल्पा रात्रियुद्धे कर्ण। नेशु सयोधाः। स बध्यमानो रक्षसा वै निशीथे दृष्ट्वा राजन् त्रास्यमानं बलञ्च। महच्च श्रुत्वा निनदं कौरवाणां मतिं दध्रे शक्तिमोक्षाय कर्णः। स वै क्रुद्ध सिंह इवात्यमर्षी नामर्षयत् प्रतिघातं रणे तम्। शक्तिं श्रेष्ठां वैजयन्तीमसह्यां समाददे तस्य वधं चिकीर्षन्। यासौ राजन्! निहिता वर्षपूगान् वधायाजौ सत्कृता फाल्गुनस्य। यां वै प्रादात् सूतपुत्राय शक्रः शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय। तां वै शक्तिं लेलिहानां प्रदीप्तां पाशैर्युक्तामन्तकस्येव रात्रिम्। मृत्योः स्वसारं ज्वलितामिवोल्कां वैकर्त्तनः प्राहिणोद्राक्षसाय। तामुत्तमां परकायापहन्त्रीं दृष्ट्वा सौतेर्बाहुसंस्थां ज्वलन्तीम्। भीतं रक्षो विप्रदुद्राव राजन्! कृत्वात्मानं विन्ध्यपादप्रमाणम्। दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां नेदुर्भूतान्यन्तरीक्षे नरेन्द्र!॥ ववुर्वातास्तुमुलाश्चापि राजन्। सनिर्घाता चाशनिर्गां जगाम। सा तां मायां भस्म कृत्वा ज्वलन्ती भित्त्वा गाढं हृदयं राक्षसस्य। ऊर्द्ध्वं ययौ दीप्यमाना निशायां नक्षत्राणामन्तराण्याविशन्ती। युद्ध्वा चित्रैर्विविधैः शस्त्रपूगैर्दिव्यैर्वीरो मानुषै राक्षसैश्च। नदन्नादान् विविधान् भैरवांश्च प्राणानिष्टांस्त्याजितः शक्रशक्त्या। इदञ्चान्यच्चित्रमाश्चर्य्यरूपं चकारासौ कर्म शत्रुक्षयाय। तस्मिन् काले शक्तिनिर्भिन्नमर्म्मा बभौ राजन्! शैलमेघप्रकाशः। ततोऽन्तरीक्षादपतद्गतासुः स राक्षसेन्द्रो भुवि भिन्नदेहः। अवाक्शिराः स्तब्धगात्रो विजिह्वो घटोत्कचो महदास्थाय रूपम्। स तद्रूपं भैरवं भीमकर्मा भीमं कृत्वा भैमसेनिः पपात। हतोऽप्येवं तव सैन्यैकदेशमपोथयत् स्वेन देहेन राजन्!"। [प्रभृतयोऽप्यत्र।

**घटोत्कचान्तक** पु० ६त०। कर्णे त्रिका०। घटोत्कचारि-

**घटोदर** पु० घट इव उदरमस्य। असुरभेदे। "घटोदरो महापार्श्वः प्रथनः पिठरस्तथा" हरिवं० २२२अ०। हिरण्यकशिपुसेनापतौ। स च वरुणसभ्य यथाह भा० स० ९अ०। घटोदर इत्यादि समानम्।

**घट्ट** चालने भ्वा० आत्म० सक० सेट्। घट्टते अघट्टिष्ट। जघट्टे। घट्टित घट्टनम्।

**घट्ट** चालने चुरा० उभ० सक० सेट्। घट्टयति-ते अज-घट्टत्-त। घट्टित "विघट्टितानां सरसाङ्कुशानाम्" कुमा०। "नदीयमातङ्गघटाविघट्टितैः" "महामौ सवयक्षरीविघट्टितघट्टनादः" माघः। परिस्फुरन्मीनविघट्टितोरवः" किरा०। "रथाङ्गिराघट्टनया नभस्वतः माघः"।

**घट्ट** पु० घट्टतेऽत्र घञ्। १स्नानायावतरणस्थाने (घाट) २शुल्कग्रहणस्थाने (घाटि) "घट्टादिदेये शुल्कोऽस्त्री" अमरः। भावे घञ्। ३चालने। अमर।

**घट्टकुटीप्रभात** न० घट्टस्य कुटी तत्र प्रभातमिव। न्यायभेदे शुल्कदानभिया विपथेन रात्रौ पलायमानस्य चौरवणिजः घट्टस्यकुटीसमीपे प्रभाते यथा अभीष्टसिद्ध्यभाव एव विपथेन धावमानस्य तद्दोषप्रादस्यरूपो हि न्यायभेदस्तथाभूतः "तदिदं घट्टकुटीप्रभातवृत्तान्तमनुहरति"। खण्डनखण्डखाद्यम्।

**घट्टगा** स्त्री नदीभेदे। राजनि०।

**घट्टजीविन्** पु० घट्टे तरिकशुल्कस्थाने नद्यावतरणस्थाने देयं शुल्कं वा जीवति जीव-णिनि। (पाटुनि) नौकातारके वर्णसङ्करजातिभेदे स च "वैश्यायां रजकाज्जातः" विवादमहार्णवधृत।

**घट्टना** स्त्री घु० घट्ट-युच्। १चालने "रथाङ्गिराघट्टनया नभस्वतः" माघ। २वृत्तौ च हेमच०। भ्वा० घट्ट-ल्युट्। ३चालने न०। "इह च्युतानिवुरकरघट्टनम्" माघ। "कम्पयन्तो महाशैलानुरुपादपघट्टने" हरिव०२७०अ०। "सुप्तसर्प इव दण्डघट्टनात्" रघुः।

**घट्टित** त्रि० घट्ट-कर्मणि क्त १निर्मिते, २चालिते, चित्रपटादेरङ्कनार्थम् शङ्खचूर्णे क्षिप्ते शंखादौ (कषप दिया घोँटा)। शब्दार्थचि०।

**घण** दीप्तौ तना० उभ० सक० सेट। घणोति घणुते। अघाणीत्-अघणीत् अघणिष्ट जघाण जघणे। उदित् घणित्वा-घण्ट। क्षोभेट्कत्वात् निष्ठा स्तिमिट् घण्ट।

**घण्ट** त्रि० घण-क्त उदित्त्वेन नेट्। १दीप्ते २खनामख्याते व्यञ्जनभेदे पु०।

**घण्टक** पु० घण्ट+संज्ञायां कन्। (घट्काथ) क्षुपभेदे राजनि०

**घण्टकर्ण** पु० घण्टेव दीप्ता कर्णा इव पत्रमस्य। (घट्काथ) क्षुपभेदे राजव०।

**घण्टा** स्त्री घु० घटि-शब्दकरणे अच्। कांस्यनिर्मिते वाद्यभेदे। "घण्टा वा परशु वापि वामतः सन्निवेशयेत्" दुर्गाध्यानम्। तन्निर्माणप्रकारनोपकारोऽन्यत्र स्कान्दे ब्रह्मनारदसंवादे स्नानार्चनक्रियाकाले घण्टानाद

करोति यः । पुरतो वासुदेवस्य तस्य पुण्यफलं शृणु । वर्षकोटिसहस्राणि वर्षकोटिशतानि च । वसते देवलोके तु अप्सरोगणसेवितः । सर्ववाद्यमयी घण्टा केशवस्य सदा प्रिया । वादनाल्लभते पुण्यं यज्ञकोटिसमुद्भवम् । वादित्रनिनदैस्तूर्य्यगीतमङ्गलनिस्वनैः । यः स्नापयति गोविन्दं जीवन्मुक्तो भवेद्धि सः । वादित्राणामभावे तु पूजाकाले हि सर्वदा । घण्टाशब्दो नरैः कार्य्यः सर्ववाद्यमयी यतः । सर्ववाद्यमयी घण्टा देवदेवस्य वल्लभा । तस्मात् सर्वप्रयत्नेन घण्टानादन्तु कारयेत् । मन्वन्तरसहस्राणि मन्वन्तरशतानि च । घण्टानादेन देवेशः प्रीतो भवति केशव" । विष्णुधर्मोत्तरे श्रीभगवत्प्रह्लादसंवादे "शृणु दैत्येन्द्र ! वक्ष्यामि घण्टामाहात्म्यमुत्तमम् । प्रह्लाद ! त्वत्समो नास्ति मद्भक्तो भुवनत्रये । मम नामाङ्किता घण्टा पुरतो मम तिष्ठति । अर्च्चिता वैष्णवगृहे तत्र मा विद्धि दैत्यज ! । वैनतेयाङ्कितां घण्टां सुदर्शनयुता यदि । समाप्ते स्थापयेद्यस्तु देहे तस्य वसाम्यहम् । यस्तु वादयते घण्टां वैनतेयेन चिह्निताम् । धूपे नीराजने स्नाने पूजाकाले विलेपने । समाप्ते प्रत्यहं वत्स । प्रत्येकं लभते फलम् । मखायुत गोऽयुतस्य चान्द्रायणशतोद्भवम् । विधिना त्वकृता पूजा सफला जायते नृणाम् । घण्टानादेन तुष्टोऽहं प्रयच्छामि स्वकं पदम् । नागारिचिह्निता घण्टा रथाङ्गेन समन्विता । वादनात् कुरुते नाशं जन्मस्मृत्युभयस्य च । गरुडेनाङ्किता घण्टां दृष्ट्वाहं प्रत्यहं सदा । प्रीतिं करोमि दैत्येन्द्र ! लक्ष्मीं प्राप्य यथाऽधनः । हव्यास्वत यथा देवाः प्रीतिं कुर्व्वन्त्यहर्निशम् । सुपर्णे च तथा प्रीतिं घण्टाशिखरमास्थिते । स्वकरेण प्रकुर्व्वन्ति घण्टानादं सुभक्तितः । मदीयार्च्चनकाले तु फलं कोट्यैन्दवं कलौ" । अन्यत्र च "घण्टादण्डस्य शिखरे सचक्रं स्थापयेत्तु यः । गरुडं वै प्रियं विष्णोः स्थापितं भुवनत्रयम् । सचक्रघण्टानादन्तु मृत्युकाले शृणोति यः । पापकोटियुतस्यापि नश्यन्ति यमकिङ्कराः । सर्व्वे दोषाः प्रलीयन्ते घण्टानादे कृते हरेः । दैवतानां मुनीन्द्राणां पितॄणामुत्सवो भवेत् । अभावे वैनतेयस्य चक्रस्यापि न संशयः । घण्टानादेन भक्तानां प्रसादं कुरुते हरिः । गृहे यस्य भवेन्नित्यं घण्टा नागारिसंयुता । न सर्पाणां तत्र भयं नाग्निविद्युत्समुद्भवम् । यस्य घण्टा गृहे नास्ति शङ्खश्च पुरतो हरेः । कथं भागवतं नाम गीयते तस्य देहिनः" "अतो भगवतः प्रीत्यै घण्टा श्रीगरुडान्विता । स माज्ञा वैष्णवैर्यत्नाच्चक्रेणोपरिलक्षिता । स्नाने शङ्खादिवाद्यन्तु नामसङ्कीर्त्तनं हरेः । गीतं नृत्यं पुराणादिपठनञ्च प्रशस्यते" हरिभक्तिविलासः । सर्व्वदेवपूजने धूपदीपदानोत्तरं वामहस्तेन घण्टावादनं तन्त्रसारे उक्तं यथा

"धूपभाजनमस्त्रेण (फट्) प्रोक्ष्याभ्यर्च्य हृदानुना (नमः) । अस्त्रेण पूजिता घण्टा वादयन् गुग्गुलुं दहेत्" । स्नानादौ तु तन्मन्त्रविशेषः तन्त्रसारे उक्तः "तथा जयध्वनिमन्त्रमातः स्वाहेत्युदीर्य्य च । घण्टाम्बृत्र वादयेत् घण्टामस्त्रेण धूपयेत्तत" गौतमीये "उत्तोलय हृदिपर्य्यन्तं घण्टां वामदिशि स्थिताम् । वादयन् वामहस्तेन दक्षहस्तेन चार्चयेत्" । एवं नीराजनेऽपि । २घण्टापाटलिवृक्षे शब्दर० । ३अतिबलायां ४नागबलायां च राजनि० । ५शणे शब्दर० ।

**घण्टाक** पु० घण्टेव कायति फलेन कै–क । घण्टापाटलि

**घण्टाकर्ण** पु० शिवानुचरभेदे (घेंटु) ख्याते "घण्टाकर्णो गणः श्रीमान् शिवस्यातीव वल्लभः" शिवपु० । मीनसङ्क्रान्तौ तस्य पूज्यतामाह कृत्यचिन्तामणौ "चैत्रे मासि च सम्पूज्यो घण्टाकर्णो घटात्मकः । आरोग्याय स्नुहीमूले सङ्क्रान्त्यां तत्र कारयेत्" । पूजामन्त्रः । "घण्टाकर्ण ! महावीर ! सर्व्वव्याधिविनाशन ! । विस्फोटकभये प्राप्ते रक्ष रक्ष महाबल !" ति० त० । २काशीस्थे ह्रदभेदे । "द्रष्टव्यश्च प्रयत्नेन घण्टाकर्णह्रदः स्वयं ह्रदः" काशी० ३३अ० ।

**घण्टाताड** पु० घण्टां कालज्ञापकघण्टां ताडयति ताडि–अण् उप० स० । १कालसूचकघण्टावादके (घण्टापाडे) "मैत्रेयकन्तु वैदेहो माधुकं सम्प्रसूयते । नॄन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये" मनूक्ते २सङ्कीर्णजातिभेदे च

**घण्टानाद** पु० ६त० । १घण्टाशब्दे । घण्टाया नाद इव नादोऽस्य । २कुबेरमन्त्रिभेदे शब्दार्थचि० ।

**घण्टापथ** पु० घण्टानां घण्टादिशब्दानां घण्टायुक्तहस्त्यादीनां वा पन्थाः ६त० अच् समा० । महति १राजपथे "दशधन्वन्तरो राजमार्गो घण्टापथः स्मृतः" कौटिल्य ।

**घण्टापाटलि** पु० हन्यते हन–कर्मणि ट टस्य नेत्त्वम् नि० घण्टा पट–गतौ घञ् पाटस्तं लाति ला–क नि० कर्म० । (घण्ट पारुलि) वृक्षभेदे अमर० ।

**घण्टारवा** स्त्री घण्टेवारौति आ+रु—अच्। (शनपाच) क्षुपभेदे अमर यस्य फल पक्व सत् घण्टेवारौति

**घण्टाली** स्त्री घण्टा तच्छब्दमलति अल—अण् ङीप्। १कोषातक्याम्। शब्द०। २घण्टाशब्दे पौ। राजनि०।

**घण्टाबीज** पु० घण्टेव बीजमस्य। जयपालवृक्षे। राजनि०

**घण्टाशब्द** पु० घण्टाया शब्दइव शब्दोयस्य। १कांस्ये हेमच०। शब्द०। २तच्छब्दे

**घण्टिका** स्त्री क्षुद्रा घण्टा स्वल्पार्थे कन्। क्षुद्रघण्टाया तत्तुल्याकारत्वात् २तालुस्थजिह्वायाञ्च (आलजिव) हेमच०।

**घण्टिनीबीज** न० घण्टाऽस्त्यस्या तदाकारफलत्वात् इनि ङीप् घण्टिन्या घण्टायुक्ताया बीजम्। जयपाले राजनि०।

**घण्टु** पु०घटि—उन्। १गजगण्टायां २प्रतापे च उणादिकोष

**घण्टेश्वर** पु० मङ्गलपुत्रे व्रणदातरि देवभेदे "मङ्गलस्य प्रिया मेधा तस्या घण्टेश्वरोमहान्। व्रणदाता च तेजस्वी विष्णुतुल्यो बभूव ह" ब्रह्मवै०।

**घण्ड** पु० घण—ड्रा० ड तस्य नेत्वम्। भ्रमरे शब्दरत्नाकर०।

**घतन** त्रि० हन्ति हन—हन्तेर्घुं भाद्यन्तयोर्घत्वतत्वे" उणा० युन्। मारके उज्ज्वलद० तत्रार्थे घातनेति पाठोऽयुक्त

**घन** पु० हन—मूर्त्तौ अप् घनादेशश्च। १मेघे २मुस्तके ३समूहे ४दार्ढ्ये ५विस्तारे च ६लौहमुद्गरे मेदि० ७शरीरे ८कफे ९अभ्रके राजनि०। "घर्माभिघातश्च घन प्रदिष्ट" इति १०मीनाद्युक्ते नृत्याङ्गभेदे। ११निविडे सान्द्रे त्रि० अमर १२ दृढे त्रि० मेदि०। १३पूर्णे १४सम्पुटे त्रि० शब्दर०। १५करतालादिकांस्यवाद्यभेदे १६मध्यमनृत्ये च न० अमर। १७लौहे न० हेमच० १८त्वचे न० राजनि०। तत्र मेघस्योत्पत्तिभेदादिक पुराणसर्वस्वे ब्रह्माण्डपु० उक्त -यथा

"सूर्य्य किरणजालेन वायुयुक्तेन सर्व्वत। जगतो जलमादत्ते कृत्स्नस्य द्विजसत्तमा !। आदित्यभूत भूतेभ्य सोमं सङ्क्रमते जलम्। नाडीभिर्वायुयुक्ताभिर्लोकाधारः प्रवर्त्तते। यत् सोमाच्च्यवते सूक्ष्म तदभ्रेष्ववतिष्ठते। मेघावाय्वभिघातेन विसृजन्ति जल भुवि। एव प्रक्षेपेनैव पतत चावसत्तजलम्। न नाशमुदकस्यास्ति तदेव परिवर्त्तते। सन्धारणार्थं भूतानां मायैषा विष्णुनिर्मिता। अनया मायया व्याप्त त्रैलोक्य सचराचरम्। विश्वेशो लोककृद्देव सहस्रांशु प्रजापति। धाता कृत्स्नस्य लोकस्य प्रभविष्णुर्दिवाकर। सार्व्वलौकिकमम्भोय सत् सोमो नभसोरस। एव भूत जगत् सर्व्वमेतत्सत्य प्रकीर्त्तितम्। सूर्य्यादुष्ण निस्रवति सोमाच्छीत प्रवर्त्तत। शीतोष्णवीर्य्यौ द्वावेतौ युक्त्या पालयतो जगत्। सोमात्मतोद्भवा गङ्गा पवित्रा विमलोदका। भद्रासोमपुरोगाश्च महानद्यो द्विजोत्तमा !। सर्व्वभूतशरीरेषु यास्त्वापोऽप्यसृताभुवि। तेषु सन्दह्यमानेषु जङ्गमस्थावरेषु च। धूमभूतास्तु ता ह्यापो निष्क्रामन्तीह सर्वश। तेन चाभ्राणि जायन्ते स्थानमभ्रमय स्मृतम्। तेजोऽर्कः सर्वभूतेभ्य आदत्ते रश्मिभिर्जलम्। समुद्राद्वायुसयोगाद्वहन्त्यप। ततस्त्वृतुगते काले परिवृत्तो दिवाकर। नियच्छत्यपोमेघेभ्यः शुक्लकृष्णैर्गभस्तिभि। अभ्रस्था प्रपतन्त्यापो वायुना समुदीरिताः। सर्वभूतहितार्थाय रसभूता समन्तत। ततो वर्षति षण्मासान् सर्वभूतविवृद्धये। वायव्य स्तनितञ्चैव विद्युदग्निसमुद्भवा। मेहनाच्च मिहेर्धातोर्मेघत्व व्यञ्जयन्त्युत। न भ्रश्यन्ति यतश्चापस्तदभ्र कवयो विदुः। मेघानां पुनरुत्पत्तौ त्रिविधा योनिरुच्यते। अग्निजा ब्रह्मजा चैव पक्षजा च पृथग्विधा। त्रिधा घना समाख्यातास्तेषां वक्ष्यामि सम्भवम्। आग्नेया ह्यूष्मजा प्रोक्तास्तेषां धूमात् प्रवर्त्तनम्। शीतदुर्दिनवाता ये स्वगुणास्ते व्यवस्थिता। महिषाश्च वराहाश्च मत्तमातङ्गरूपिणः। भूत्वा धरणिमभ्येत्य रमन्ति विचरन्ति च। जीमूता नाम ते मेघा ये तेभ्यो जीवसम्भवा। विद्युद्गुणविहीनाश्च जलधाराधरम्बिनः। मूका मेघा महाकाया आवहस्य वशानुगा। क्रोशमात्राच्च वर्षन्ति क्रोशार्द्धादपि वा पुन। पर्वताग्रनितम्बेषु वर्षन्ति गह्वरेषु च। बलाकागर्भदाश्चैव बलाका गर्भधारिणः। ब्रह्मजाश्चैव ये मेघा ब्रह्मनिश्वाससम्भवा। ते हि विद्युद्गुणोपेता स्तनयित्नुप्रियस्वनाः। तेषु शब्दप्रणादेन भूमिःस्वाङ्गरुहोद्भवै। वायुवाहाभिषिक्तेषु वायुर्यौवनमश्नुते। तेष्वियं प्राकृतासक्ता भूतानां जीवितोद्भवा। जीमूता नाम ते मेघा ये तेभ्यो जीवसम्भवाः। द्वितीय प्रवह वायु मेघास्ते तु समाश्रिताः। इतो योजनमात्राच्च सार्द्धार्द्धादपि वा च ते। वृष्टिधर्मा द्विधा तेषः धाराऽऽसार प्रकीर्त्तित। पुष्करावर्त्तका नाम ये मेघाः पक्षसम्भवा। सयोगाद्वायुनोच्छिन्ना पर्वतानां महौजसाम्। कामगाना च लोकानां सर्व्वेषां शिवमिच्छताम्। पुष्करा नाम ते मेघा बृहन्तो बलत्-

कृता । पुष्करावर्त्तकास्तेन कारणेनेह शब्दिताः । नानारूपधराश्चैव महाघोरस्वनाश्च ये । कल्पान्तवृष्टेः स्रष्टारः संवर्त्ताग्नेर्नियामकाः । वर्षन्ति ते युगान्तेषु तृतीयास्ते प्रकीर्त्तिताः । अनेकरूपसंस्थानाः पूरयन्तो महीतलम् । वायुं परिवहं ते तु श्रिताः कल्पान्तसाधकाः । योऽण्डस्य च विभिन्नस्य प्राकृतस्याभवद्दा । यस्मात् ब्रह्मा समुत्पन्नश्चतुर्वक्त्रः स्वयम्भुव । तस्यैवाण्डकपालानि सर्वमेघाः प्रवर्त्तिताः । तेषामाप्यायनं धूमः सर्वेषामविशेषतः । तेषां श्रेष्ठस्तु पर्जन्यश्चत्वारश्चैव दिग्गजाः । गजानां पर्वतानाञ्च मेघानां भोगिभिः सह । कुलमेकं पृथग्भूतं योनिस्त्वेकं जलं स्मृतम् । पर्जन्यो दिग्गजाश्चैव हेमन्ते शीतसम्भवाः । तुषारवृष्टिं वर्षन्ति हिमं सस्यविवृद्धये"।

वायुविशेषवशतएव घनभेदो भा॰शा॰३२०अ॰ दर्शितो यथा "प्रेरयत्यभ्रसङ्घातान् धूमजांश्चोष्मजांश्च य । प्रथमः प्रथमे मार्गे प्रवहो नाम योऽनिलः । अम्बरे स्नेहमभ्येत्य तडिद्भ्यश्चोत्तमद्युतिः । आवहो नाम सम्भाति द्वितीयः श्वसनो नदन् । उदयं ज्योतिषां शश्वत् सोमादीनां करोति यः । अन्तर्देहेषु चोदानं यं वदन्ति मनीषिणः । यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलम् । उद्धृत्याददते चापो जीमूतेभ्योऽम्बरेऽनिलः । योऽद्भिः संयोज्य जीमूतान् पर्जन्याय प्रयच्छति । उद्वहो नाम वंहिष्ठस्तृतीयः स सदागतिः । समुह्यमाना बहुधा येन नीताः पृथग्घनाः । वर्षमोक्षकृतारम्भास्ते भवन्ति घनाघनाः । संहता येन चाविद्धा भवन्ति नदता नदाः । रक्षणार्थाय सम्भूता मेघत्वमुपयान्ति च । योऽसौ वहति भूतानां विमानानि विहायसा । चतुर्थः संवहो नाम वायुः स गिरिमर्द्दनः । येन वेगवता रुग्णा रूक्षेणारुजता नगाः । वायुना सहिता मेघास्ते भवन्ति बलाहकाः । दारुणोत्पातसञ्चारो नभसः स्तनयित्नुमान् । पञ्चमः स महावेगो विवहो नाम मारुतः । यस्मिन् पारिप्लवा दिव्या वहन्त्यापो विहायसा । पुण्यञ्चाकाशगङ्गायाः तोयं विष्टभ्य तिष्ठति"।

घनविधानसंख्यादिरचनार्थं घनसंख्यानां तदाख्या घातः यद्यप्यत्र समयोर्द्वयोर्घातेन वर्गः क्रमेण तत्फलस्य घनत्वं नास्ति तथापि घनशब्देन सदृशघातत्रित्वात्तेन घनत्वं बोध्यं यथा १घन १। द्वाभ्यां द्वयोर्गुणने ४ ततस्तेषां द्वाभ्यां गुणने ८। एवं त्रयाणां त्रिभिर्गुणने ९ तेषां पुनस्त्रिभिर्गुणने २७। एवं क्रमेण यावद्दशं समसमत्रिघातरूपवर्गगुणनात् घनरूपत्वं जायते तत्रैकादीनां दशपर्यन्तानां घनसंख्याः सुबोधाय प्रदर्श्यन्ते यथा

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
| १ | ८ | २७ | ६४ | १२५ | २१६ | ३४३ | ५१२ | ७२९ | १००० |

अस्य प्रकारान्तरं स्थाप्योऽघनोऽन्त्यस्येत्यादि लीलावत्यां दृश्यं विस्तरभयान्नोक्तम् ।

"जटामाला विपर्यस्य घनमाहुर्मनीषिणः" इत्युक्ते १९वेदपाठभेदे ऋग्वेदशब्दे १४०९।११।१२ पृ॰ विवृत तत्र २० सान्द्रे प्रचण्डघनगर्जितप्रतिरुतानुकारी (रव) दृढ "मेघो॰। "जघनेन घनेन सा" "लौहोद्घनघनस्कन्धा" भट्टि । लौहमुद्गरे "प्रतिजघान घनैरिव मुष्टिभि" किरा॰ । मेघे "प्राावृषमिव घनकेशजालाम्" काद॰ । "रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवा" कुमा॰ "असम्भवद्घनरसा शतालोपरिपेषिता" उद्भट । घनश्याम । मूर्त्तौ—काठिन्ये "द्वारं तमोघनमपघ्नम्" भट्टि । "तरुषु घनो मूर्त्तिः काठिन्यम् तेन मूर्त्तिमत्तम सत्तम्" जयम॰ । [त्रिका॰ ।

**घनकफ** पु॰ घनस्य मेघस्य कफ इव । मेघोपले करके ।

**घनकाल** पु॰ घनप्रधानः कालः । वर्षर्त्तौ शब्दच॰।

**घनगोलक** पु॰ घनेन मूत्र्या गोल इव कायति कै—क । सन्निष्टस्वर्णरजते हेमच॰ । [त्रि॰ ।

**घनच्छद** पु॰ घना निबिडाश्छदा यस्य । शिग्रौ । शब्दार्ण

**घनजम्बाल** पु॰ कर्म॰। सान्द्रजम्बाले चुलुके (घनशैवाला) त्रिका॰ । [दीप्तौ च शब्दर॰ ।

**घनज्वाला** स्त्री घनस्य ज्वालेव । १वज्राग्नौ । ६त॰ । २मे-

**घनताल** पु स्त्री॰ घनतायां निबिडतायाम् अलति पर्याप्नोति अल—अच् । १सारङ्गखगे स्त्रियां जातित्वात् ङीष् [illegible]॰। २वाद्यादितालभेदे ।

**घनतोल** पु स्त्री॰ घनं मेघं तोलयति ऊर्द्धं नयति आह्वानेन तुल—उन्नितौ अण् उप॰ स॰ । चातके खगे तदाराबेण हि मेघोत्थानमनुमीयते इति तस्य तथात्वम् । स्त्रियां जातित्वात् ङीष् ।

**घनत्वच्** पु॰ घना निबिडा त्वक् यस्य । शिग्रौ शब्दार्थचि॰ ।

**घनद्रुम** पु॰ कर्म॰ । विकण्टकवृक्षे राजनि॰ ।

**घननाभि** पु॰ घनस्य मेघस्य नाभिरिव योनित्वात् । धूमे शब्दर॰ धूमस्य मेघयोनित्वात् तथात्वम् मेघस्य धूमयोनित्वं च घनशब्दे २७८६पृ॰ दर्शितम् ।

यत्ने कृते विपन्ने स्यात् प्रायश्चित्तं न विद्यते"। मूढगर्भोऽन्तर्मृतगर्भः। तथा "दाहच्छेदशिराभेदप्रयत्नैरुपकुर्व्वताम्। द्विजानां गोहितार्थेषु प्रायश्चित्तं न विद्यते"। याज्ञवल्क्यः "क्रियमाणोपकारे तु मृते विप्रे न पातकम्। विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च"। विशेषमाहाङ्गिरा "औषधे तु न दोषोऽस्ति स्वेच्छया पिबते यदि। अन्यथा दीयमाने तु प्रायश्चित्तं न च ग्रय"। मृत्यूत्पादने निमित्तवधमाह वृद्धशातातपः "गोभूहिरण्यहरणे स्त्रीसम्बन्धकृतेऽपि च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" विष्णुः "अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"। तथा बृहस्पतिनाम्ना पठितानि वचनानि "ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्। गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्। गुर्व्वर्थं पितृमातृर्थमाश्रमार्थमथ वा पुनः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" षट्त्रिंशन्मतमिति कृत्वा पठितम् "आक्रोशितस्ताडितो वा धनैर्वा परिपीडितः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"। अत्रोद्दिश्येति शब्दकीर्त्तनात् उद्देश्याभावे निमित्ततामात्रेण वधित्वं नास्ति, अर्थादिहरणाक्रोशनताडनादीनां मन्युकारणानामपराधत्वादेतेषामभावे धनाद्यर्थं वृक्षारोहणादिना ये म्रियन्ते तत्र कीर्त्तनमात्रेण निमित्तवधो नास्ति तथा च पठन्ति "असम्बन्धेन यः कश्चिद् द्विज प्राणान् परित्यजेत्। तस्यैव तद्भवेत् पापं न तु यं परिकीर्त्तयेत्"। असम्बन्धेनेति वाक्ताडनादिरूपापराधसम्बन्धाभावपरम्। यत्तु "सम्बन्धेन विना देव। शुष्कवादेन कोपित"। इति भविष्यपुराणवचनं प्रायश्चित्तविधायकम् तत् ताडनेतरापराधसम्बन्धाभावपरं "शुष्कवादेन कोपित" इत्यभिधानात्। यत्र यत्राक्रोशनादौ पश्चात्कृतेनापराधः तत्रापि न वधः। यथा बृहस्पतिः "आकृष्टस्तु यदाऽऽक्रोशं ताडितः प्रतिताडयन्। हत्वाऽऽततायिनञ्चैव नापराधी भवेन्नरः" शास्त्रविहितताडनादौ कृते यत्र शिष्यादिर्म्रियते तत्रापि वधो नास्त्येव यथा भविष्यपुराणे "त्वत्तः शिष्यस्तथा भार्य्या शासितवोद्विजग्रति। न शास्ता तत्र दोषेण लिप्यते देवसत्तम!"। अथाततायि ताडनादौ अवधेन यथा मनुः "गुरुः शिष्यस्तथा भार्य्या दासी दासस्तु पञ्चम। प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा। अधस्तात् पृष्ठदेशे नोत्तमाङ्गे कदाचन। अतोऽन्यथा तु प्रहरंश्चौरस्याप्नोति किल्बिषम्"। एवञ्च चिकित्सादण्डाचरणे शास्त्रीयकरणकृत्ये क्रियमाणे यदि म्रियते तदापि वधो नास्त्येव दण्डादिशास्त्रविधिविरोधाभिप्रेषाप्रसक्ते। सोमविक्रयणे तु रागादेव प्रवृत्तिरस्मात् न विरोधः। आततायिवधापवादमाह बृहस्पतिः "आततायिवधे हत्वा किल्बिषं प्राप्नुयात् क्वचित्। विनाशिनमथायान्तं घातयन्नापराध्नुयात्" किल्बिषाभावः प्रायश्चित्तनिषेधार्थं। अपराधाभावोऽन्यदण्डनिषेधार्थं। अतः "सर्व्वत एवात्मानं गोपायीत" इति श्रुतिमूलमिदम् अतः पलायनादिनापि आत्मरक्षणाभावे इदं बोद्धव्यम्। कात्यायनः "आततायिनमायान्तमपि वेदान्तपारगम्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्"। जिघांसीयात् हन्यादित्यर्थः। देवलः "उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्। निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्"। भ्रूणो ब्राह्मणविशेषः दोषदर्शनं नियमार्थम्। मनुविष्णू "गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्"। एवकारो नियमार्थः "नाततायिवधे दोषो हन्तुर्भवति कश्चन। प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति" अत्राहन्तुर्मन्युर्हन्यमानमन्युं नाशयति न पुनः पुरुषो हन्ति हन्यते वेति हननविधेरनुवादः। "आततायिनमाह वशिष्ठः" "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः" विष्णुकात्यायनौ "उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा। आथर्व्वणेन हन्ता च पिशुनश्चैव राजसु। भार्य्यातिक्रमिणश्चैव विद्यात् सप्ताततायिनः। यशोवित्तहरानन्यानाहुर्धर्म्मार्थहारकान्"। विशेषमाह कात्यायनः "अनाचारितपूर्व्वोक्तापराधे प्रवर्त्तते। प्राणद्रव्यापहारे च महत्स्याततायिता" अनाचारितोऽप्यकृतः। एतेन पूर्व्वकृतापकारस्य मारणोद्यतस्य नाततायिता तेन प्रत्यपकारिवधे दोष एव। ननु आततायिनोरपि गोब्राह्मणयोर्हनने दोषमाह सुमन्तुः "आततायिवधे न दोषोऽन्यत्र गोब्राह्मणात् यदा हन्यात् तदा प्रायश्चित्तं कुर्य्यात्"। तथा भविष्ये "विप्राणामपि गोविप्रं न हन्याद्वै कदाचन" इति अतः पूर्व्ववचनविरोधः समाधेय

अघुषत् अघोषीत्। जुघोषाम् बभूव आस चकार चक्रे। जुघोष णिजभावे घुषित—घुष्ट। घोष घोषणा। घोषणम्। "इति स द्रुपदो राजा स्वयंवरमघोषयत्" भा० आ० १८५अ०। "सुहृदां प्रियमाख्यातु घोषयन्तु च ते जयम्" भा० वि० ३४अ०। "जयमघोषयदस्य तु कौरवम्" रघु। आविष्करणञ्च सर्वजनश्रुतियोग्यशब्दकरणम्। (ढेंढरापेटा)

आ+सम्यक् घोषणे। "आघोषयत् भूमिपतिं समस्तम्" भट्टि। सततक्रन्दने इत्यन्ये। [इ० स०१८अ०।

उद्+उच्चैराविष्करण। 'उद्घुष्टजयशब्दविराविताशा"

घु(घू)षित त्रि० घुष—क्त वा इट्। शब्दिते इडभावे। घुष्ट इत्यपि तत्र उच्चशब्देन प्रकटिताभिप्राये २वाक्यादौ न०।

घुष्टान्न न० घुष्टं को भोक्तेत्युद्घुष्य देयमन्नम्। कोभोक्तेत्युद्घुष्य श्राद्धादौ दीयमानेऽन्ने तस्याभोज्यतामाह मनु "गवा चान्नमुपाघ्रातं घुष्टान्नञ्च विशेषतः। गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम्"।

घुसृण न० घुसि(सि)—वा० क्यङ् पृषो० नलोप० घुषेः पस्य सः। कुङ्कुमे त्रिका०। "घुसृणैर्यत्र जवालमयोदरे" इति नैषधम्।

घुसृणापिञ्जरतनु स्त्री घुसृणमिव घुसृणेन वा आपिञ्जरा तनुरस्याः। गङ्गायां "घुसृणापिञ्जरतनुर्घर्घरी घर्घरस्वना" काशी० २९अ० गङ्गानामोक्तौ

घूक पुंस्त्री० घू इत्यव्यक्तं कायति कै—क। उलूके पेचके। हेमच०। स्त्रियां जातित्वात् ङीष्।

घूकनादिनी स्त्री घूक इव नदति नद—णिनि ङीप्। गङ्गायाम् "घर्घरा घूकनादिनी" काशी० २९अ०। गङ्गानामोक्तौ।

घूकारि पुंस्त्री० ६त०। काके हेमच०। तस्य पेचकवैरित्वं लोकसिद्धम्। स्त्रियां जातित्वात् वा ङीष्।

घूकावास पु० ६त०। शाखोटवृक्षे राजनि०। तस्य निविडशाखावृतत्वेन कोटरवत्त्वात् दिवाभीरोलूकस्यान्धकारावृतत्वेनावासस्थानत्वात्तथात्वम्।

घूर हिंसायां सक० जीर्णतायाम् अक० दि० आत्म० सेट्। घूर्य्यते अघूरिष्ट। जुघूरे ईदित्। घूर्णः। ध्वनौ च "जुघूरेऽशनिनिस्वनम्" भट्टौ दीर्घमध्य पठित्वा तस्य ध्वन्यर्थकतां भरत आह।

घूर्ण भ्रमणे अक० तु० उभ० सेट्। घूर्णति ते। अघूर्णीत् अघूर्णिष्ट। जुघूर्ण जुघूर्णे। "गुरुभारवशाकार-न्मवशाच्च च जुघूर्ण च" रामा० कि०। "केचिदाक्षिपत स्वच्छा भयात् केचिदघूर्णिषुः" "अघूर्णिष्ट ततो व्याघ्रस्तावधीन्निवतामसौ" इति च भट्टि। घूर्णित घूर्णितवान्। "ततोऽथो घूर्णितवान् नरेन्द्रः" भा० क० ९०अ०। "कादम्बरीमदविघूर्णितलोचनस्य युक्तं हि लाङ्गलभृतः पतनं पृथिव्याम्" उद्भट। "भो दृष्टा पर्वतस्था बहुकुसुमयुता वायुना घूर्णमाना" महाना०। वायुनेति उक्तौ तृतीया शयकारपाठे शयन्तात् कर्म्मणि शानच् कर्त्तरि तृतीयेति भेदः। णिच् घूर्णयति ते अजुघूर्णत् त। "नयनान्यरुणानि घूर्णयन्" कुमा०। "घूर्णयन् मदिरास्वादमदपाटलितद्युती" माघ। कर्म्मणि घूर्ण्यते अघूर्णि। घूर्ण्यमानः। "वायुना घूर्ण्यमाना" महाना० पाठान्तरम्।

घूर्ण पु० घूर्णयति अच्। (गिमा) १शाकभेदे चौपसुन्दरके शब्दच०। २भ्रान्ते त्रि०। भावे घञ्। ३भ्रमणे। घूर्ण—णिच्—अच्। ४घूर्णकारके रोगभेदे

घूर्णन न० घूर्ण—भावे ल्युट्। १भ्रमणे चक्राकारावर्त्ते। हेमच०। ङुप्। घूर्णनाप्यत्र स्त्री "घूर्णनागात्रपतनभ्रमणाद्यैर्नाटितम्" सा०द०।

घूर्णायमान त्रि० घूर्णः भ्रान्त इवाचरति क्यङ्० घूर्णे वा काङ् कर्त्तरि शानच्। भ्राम्यमाणे। "इन्द्राद्यैरखिलार्थसाधनपरैः स्तूयमानस्तुतं पीतोरूपकलास्त्रुवाचलतया घूर्णायमानेक्षणम्" इति कलापधातुव्याख्यासारः।

घूर्णि पु० घूर्ण—भावे इन्। भ्रमणे हेमच०।

घूर्णित त्रि० घूर्ण—णिच् कर्मणि क्त। १भ्रामिते। कर्त्तरि क्त। २भ्रान्ते प्रचलायिते अमरः। घूर्णधातौ उदा०।

घूर्णिका स्त्री शुक्राचार्य्यकन्यादेवयान्याः सखीभेदे। "गते तु नाहुषे तस्मिन् देवयान्यप्यनिन्दिता। व्याकुला शोकसन्तप्ता घूर्णिकामागतां पुरः। देवयान्यब्रवीत्। त्वरितं घूर्णिके! गच्छ शीघ्रमाचक्ष्व मे पितुः। नेदानीं सम्प्रवेक्ष्यामि नगरं वृषपर्वणः। वैशम्पायन उवाच। सा तत्र त्वरितं गत्वा घूर्णिकाऽसुरमन्दिरम्। दृष्ट्वा काव्यमुवाचेदं सम्भ्रमाविष्टचेतना" भा० आ० ७८अ०।

घृ सेके भ्वा० पर० सक० अनिट्। घरति अघार्षीत्। जघार

घृ सेके आदने च चु० उभ० सक० सेट्। घारयति ते अजीघरत् त। घारया बभूव आस चकार चक्रे। घारितः।

आ+समन्तात्सेके आघारः। तच्छब्दे ६२५ दृश्यम्। "मध्येन पृषदाज्याभिघारयोगा" वीरच०।

घृ भासि चक० सेके सक० जु० पर० अनिट्। जिघर्त्ति अजाघर्षीत्। अयं वैदिकः। घर्मः (दीप्त)।

घृङ् अव्य० अव्यक्तशब्दे। "घृङिति पपात" इत्युपक्रमे "तद्यद्‌घृङित्यपतत्तस्माद्‌घर्मः" शत० ब्रा० १४।१।१।१०।

घृण दीप्तौ तना० उभ० सक० सेट्। घर्णोति घृणोति घर्णुते घृणुते अघर्णीत् अघर्णिष्ट जघर्ण जघृणे इत्वा। उदित्। घर्णित्वा घृष्ट्वा। क्त्वो वेट्कत्वात् निष्ठा त्वनिट्। घृष्टः। वेदे गणव्यत्ययेऽपि "आ यो घृणे न ततृषाणो अजरः" ऋ० ६।१५।५। "आघृणे आदीप्यत" भा०।

घृण ग्रहणे भ्वा० आत्म० सक० सेट् इदित्। घृणते अघर्णिष्ट। जघृणे।

घृण पु० घृण—दीप्तौ क। १दिवसे निघ०। २दीप्तौ ३उष्णे च। "अग्ना न भानुना न हिमा न घृणेन ऋ० १०।२७।१०। "घृणेन उष्णेन" भा०। "घृणात् भीमा अद्रिवः ऋ० १।१३३।६। "घृणात् दीप्तात्" भा०।

घृणा स्त्री घृ—सेके नक्। १कारुण्ये—दयायां कारुण्येन हि हृदयं क्लिन्नमिवार्द्रं भवतीति तस्य तथात्वम्। "मन्द-मस्तविपुषतां घृणया घृणिरेव वः" किरा०। "इत्यङ्गते गतघृणः किमयं विधत्ताम्" रघुः २जुगुप्सायां निन्दायाञ्च अमरः "तां विलोक्य वनितावधे घृणाम्" "प्राण जीवन घृणा मतो मही" इति च रघुः। "अधारि पद्मेषु तदङ्घ्रिणा घृणा" नैष०।

घृणालु त्रि० घृणा+बा० आलुच्। कृपायुक्ते "निष्पादितव्यान् यत्र भगवद्भिर्घृणालुभिः" भाग० ४।२२।४१।

घृणावत् त्रि० घृणा+अस्त्यर्थे मतुप् मस्य वः १कृपायुक्ते स्त्रियां ङीप्। सा च २गङ्गायाम् घृणिनिधिमन्त्रे उदा०।

घृणावास पु० ६त०। १कुष्माण्डे त्रिका०। २कृपायुक्ते च

घृणि पु० घृ—नि नि० गुणाभावः। १किरणे, २ज्वालायाम्, अमरः। ३तरङ्गे, ४सूर्ये ५जले न० मेदि० ६दीप्ते त्रि० "तस्य त्वक्त्वमायस्य घृणेर्भावमोकसः" भाग० ७।१।६। घृणेर्दीप्तस्य

घृणिनिधि पु० निधीयते अस्मिन् नि+धा आधारे कि ६त०। १सूर्ये २गङ्गायाञ्च "घृणावती घृणिनिधिः" काशीख० गङ्गानामोक्तौ।

घृणीवत् त्रि०घृणिरस्त्यस्य मतुप् मा०वेदे न मस्य वः दीर्घः। दीप्तिमति; "घृणीवां चेतति त्मना" ऋ० १०।१७६।३। "घृणीवान् दीप्तिमान्" भा०।

घृत न० घृ—सेके क्त। अवस्थाविशेषापन्ने दुग्धभवे "सर्पिर्विलीनमाज्यं स्याद् घनीभूतं घृतं भवेत्" इत्युक्ते घनीभूते १आज्ये घृतगुणभेदादि भावप्र० उक्तं यथा,

"घृतमाज्यं हविः सर्पिः कथ्यन्ते तद्गुणा अथ। घृतं रसायनं स्वादु चक्षुष्यं वह्निदीपनम्। शीतवीर्यं विषालक्ष्मीपापपित्तानिलापहम्। अल्पाभिष्यन्दि कान्त्योजस्तेजोलावण्यबुद्धिकृत्। स्वरस्मृतिकरं मेध्यमायुष्यं बलकृद्‌गुरु। उदावर्त्तज्वरोन्मादशूलानाहव्रणान् हरेत्। स्निग्धं कफकरं रक्षःक्षयवीसर्परक्तनुत्।

गव्यस्य घृतस्य गुणा गव्य घृत विशेषेशब्दादि भावप्र० वाक्यम् २५८२ पृ० उक्तम् घृतभेदगुणा भावप्र०उक्ता यथा

माहिषस्य गुणा। "माहिषन्तु घृतं स्वादु पित्तरक्तानिलापहम्। शीतलं श्लेष्मलं वृष्यं गुरु स्वादु विपच्यते"।

छागस्य गुणाः "आजमाज्यं करोत्यग्निं चक्षुष्यं बलवर्द्धनम्। कासे श्वासे क्षये चापि हितं पाके भवेत्कटु"।

अथ उष्ट्रीघृतम् "औष्ट्रं कटु घृतं पाके शोषकृमिविषापहम्। दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम्"।

अथ आविकघृतम् "पाके लघ्वाविकं सर्पिः सर्वरोगविनाशनम्। वृद्धिं करोति चास्थीनामश्मरीशर्करापहम्। चक्षुष्यमग्निकृच्चैव वातदोषनिवारणम्"।

अथ नारीघृतम्। "कफेऽनिले योनिदोषे पित्ते रक्ते च तद्धितम्। चक्षुष्यमाज्यं स्त्रीणां वा सर्पिः स्यादमृतोपमम्"।

अथाश्वघृतम् "वह्निं करोति देहाग्नेर्लघु पाके विषापहम्। तर्पणं नेत्ररोगघ्नं दाहनुद्वडवाघृतम्"।

दुग्धघृतस्य गुणा "घृतं दुग्धभवं ग्राहि शीतलं नेत्ररोगहृत्। निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रमानिलान्"।

अथ हैयङ्गवीनघृतगुणा "ह्यस्तनदुग्धोत्थं तत्तु हैयङ्गवीनकम्। हैयङ्गवीनं चक्षुष्यं दीपनं रुचिकृत्परम्। बलकृद्‌बृंहणं वृष्यं विशेषाज्ज्वरनाशनम्"।

पुराणघृतस्य गुणा "वर्षादूर्द्ध्वं भवेदाज्यं पुराणं तत्त्रिदोषनुत्। मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम्। यथा यथाऽखिलं सर्पिः पुराणमधिकं भवेत्। तथा तथा गुणैः स्वैः स्वैरधिकं तदुदाहृतम्"।

अथ नवनीतघृतस्य विषया "योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे। बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः"।

घृतप्रयोगनिषेधविषया "राजयक्ष्मणि बाले च वृद्धे श्लेष्मकृते गदे। रोगे सामे विसूच्यां च विबन्धे च मदात्यये। ज्वरे च दहने मन्दे न सर्पिर्बहु मन्यते"।

**घृतप** पु० ब०व० घृतमाज्यं पिबन्ति+पा–क उप० स०। आज्यपाख्ये पितृगणभेदे। "घृतपा सोमपा यत्रा वैश्वानरमरीचिपा," भा० शा० १६६अ०। २घृतपान कर्त्तरि त्रि०।

**घृतपदी** स्त्री घृतं पादे सुस्थितं यस्याः पादात् स्वाङ्गत्वात् ङीप् पद्भाव। १इडादेवताभेदे। शत० ब्रा० इडा ब्राह्मणे ११।८।१।२६। तन्निरुक्तिर्दर्शिता यथा "मानवी घृतपदीति मनुर्ह्येतामग्रेऽजनयत तस्मादाह मानवीति घृतपदीति यदेवास्यै घृतं पदे समतिष्ठत तस्मादाह घृतपदीति"। तद्ब्राह्मणोपोद्घाते "इडाया मानवीमिडादेवता मन्त्र मानवी घृतपदीमैत्रावरुणीत्येतानि च निगदपदानि व्याख्यायन्ते" भा०। घृता दीप्ता पादा यस्याः प्राग्वत् पादुभावादि। २सरस्वत्यामिडादेव्याञ्च। "हविपीडा देवी घृतपदी जुषन्त" ऋ० १०।७०।८। इडेन्नात्मिका देवी सरस्वती घृतपदी दीप्तपदोपेता" भा०। [राजनि०।

**घृतपर्णक** पु० घृतमिव स्वादु पर्णमस्य कप्। घृतकरञ्जे

**घृतपीत** त्रि० घृतं पीतं येन आहिता० वा परनिपात। घृतपानकर्त्तरि यज्ञे पीतघृत इत्यपि तत्रार्थे त्रि०।

**घृतपूर** पु० घृतेन पूर्य्यते पूरि–कर्म्मणि अच्। पक्वान्नभेदे तस्य प्रचुरघृतेन पक्वत्वात्तथात्वम् तत्पाकप्रकारादि पदार्थचि०। "मर्द्दिता समिता क्षीरनारिकेलघृतादिभिः। अवगाह्य घृते पक्वा घृतपूरोऽयमुच्यते। घृतपूरो गुरुर्वृष्यः कफकृद्रक्तमांसद। रक्तपित्तहरो हृद्यः स्वादुः पित्तहरोऽग्निद। अपि च "क्षीरेण मर्दितं चूर्णं गोधूमानां सुगालितम्। विस्तार्य्य सर्पिषा पाच्यं कटाहेऽथ सिताप्लितम्। घृतपूरोऽयमुद्दिष्टः कर्पूरमरिचान्वितः"। नारिकेलजस्तु "समिता मर्दिता क्षीरे नारिकेलसिताकृते। अवगाह्य घृते पाच्यो घृतपूरोऽपरः स्मृतः"। दुग्धजोऽपि "पाकपिण्डीकृतं क्षीरं शर्कराचूर्णमिश्रितम्। घृतपूरविनिर्माणं कारयेत् खण्डवर्धिनि"। धात्रिभवोऽपि "सुधाक्षीरिणि दुग्धन्तु क्वथितं वस्त्रगालितम्। अक्षयुक्त घृते पक्व घृतपूरो भवेदयम्"। कशेरुजोऽपि "कशेरुचूर्णे निःक्षिप्य पाकपिण्डीकृतं पयः। निर्माय घृतपूराणां शर्करावलितं भवेत्"। आम्रजस्तु "पक्वाम्रस्य घृते तप्ते रससंमर्दपिण्डितम्। खण्डशर्करया योज्यो घृतपूरो यदृच्छया। क्षीरमाद्य सक्तूंश्च खण्डचूर्णं ततः कृतम्। योजिते यो पिष्टेनोऽन्न तदाख्याविवर्ज्जित। घृतपूरो गुरुर्वृष्यो हृद्य पित्तानिलापह। सद्यः प्राणप्रदो बल्य सुरभ्योऽग्निप्रदीपन। शृङ्गाटकगुडाभाषणवं स्वादु घृतपूरक। विचार्य्य वस्तुसंयोग तद्बुद्धानपि कारयेदिति"।

**घृतपूर्णक** पु० घृतं पूर्णमत्र कप्। करञ्जभेदे तद्धर्म्मा निघा० घृतपूर्णकरञ्जकोऽप्यत्र भावप्र० करञ्जशब्दे १६८८पृ० दृश्यम्।

**घृतपृष्ठ** पु० घृतं दीप्तं पृष्ठमस्य। क्रौञ्चद्वीपपतौ प्रियव्रतपुत्रे राजभेदे। क्रौञ्चशब्दे २२४१पृ० विवृतिः।

**घृतप्रतीक** पु० घृतं प्रतीकं मुखं यस्य। वह्नौ। तस्य उत्तरवेद्यामाज्याधारेणोद्दीपनात् तथात्वम् "घृतप्रतीको घृतयोनिः" यजु० ३५।१७।

**घृतप्रयस्** पु० घृतं तत्पूर्णाहुतं प्रयोऽन्नं यस्य। वह्नौ "घृतप्रयाः सधमादे मधूनाम्" ऋ० ३।४३।३। "घृतप्रयाः घृतसङ्गितानि प्रयांसि अन्नरूपाणि हवींषि यस्य" भा०।

**घृतप्रसत्त** पु० प्र+सद–क्त० त ३त०। घृतेन प्रसन्ने वह्नौ। "घृतप्रसत्तो असुरः सुशेवः" ऋ० ५।१५।१।

**घृतमण्ड** पु ६त०। घृतसारे। गलितघृतस्याच्छे सारांशभेदे (ओथादानाथ) "ततः स घृतमण्डेन हृद्येनेन्द्रियबोधिना"। "भुञ्जन्त घृतमण्डेन वटीमधुकत्रिवृत्तेन तैलेन वाऽनुवासयेत्" सुश्रु०। सर्पिर्मण्डोऽप्यत्र घृतशब्दे तद्गुणाः सुश्रुतोक्ता दर्शिताः। घृतमण्डोऽस्त्यस्याः अच्। १काकोल्यां स्त्री शब्दच०।

**घृतमण्डलिका** स्त्री घृतमण्डं तदाकारनिर्यासं लाति ला–क स्वार्थे कन् अत इत्वम्। हंसपदीलतायां राजनि०

**घृतलेखनी** स्त्री घृतं लिख्यतेऽनया लिख–करणे ल्युट् ङीप्। दारुमये घृतलेखनपात्रीभेदे हेमच०।

**घृतवती** स्त्री द्वि०व०। घृतमुदकं हेतुत्वेन कार्य्यत्वेन वाऽनयोरस्ति मतुप् मस्य व ङीप्। द्यावापृथिव्योः निघ०। "अद्भ्यः पृथिवी" इति श्रुतेर्भूमेरुदकहेतुकत्वात् तथात्वम् दिवश्च उदकहेतुत्वात् तथात्वम्। २आज्ययुक्ते ३घृतवदुक्तौ च त्रि० स्त्रियां ङीप्। "तेन प्रतिनिधिं कुर्यात् घृतार्थं याज्ञिको यदि। प्रश्नेन तदा ब्रूयात् होता घृतवतीमिति" ति० त० वृषपार्व्वः।

**घृतवर** पु० घृतं वरमस्य। घृतपूरे पक्वान्नभेदे हेमच०। तस्य घृतप्रचुरत्वात्तथात्वम्।

**घृतस्थला** स्त्री घृतवद् स्वच्छजलस्थानं स्थला घृतं दीप्तं स्थलं नितम्बस्थलं यस्या वा। अप्सरोभेदे। सा च

स्वरसा हि जलोद्भवत्व भाग० ८।७।६। समुद्रमन्थने उक्तं यथा "ततश्चाप्सरसो जाता निष्कण्ठस्य सुवासस" तासां मध्ये अस्या प्रशस्तभितत्वस्य जनत्वात् तथात्वम्। "घृतस्थला घृताची च विश्वाची चोर्वशी तथा" हरिव० २२६अ०।

**घृतस्पृश्** त्रि० घृत स्पृशति स्पृश–क्विन्। 'घृतस्पर्शिनि क्विन्नन्तत्वात् स्वादौ कु। घृतस्पृक् घृस्पृग्भ्या'मित्यादि

**घृताची** स्त्री घृतमुदक कारणतयाऽञ्चति अञ्च–क्विप् नलोपे स्त्रियां ङीप् पूर्व्वाणोदीर्घश्च। १अप्सरोभेदे तस्या अङ्गतोजातत्वात् तथात्वम्। घृतस्थलाशब्दे दृश्यम्। सा च पौरवरौद्राश्वनृपस्य परिग्रहे दश पुत्रान् कन्याश्च दश सुषुवे यथा हरिव० ३१अ०।

"रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः। ऋचेयु प्रथमस्तेषां कक्षेयुस्तथैव च। कृत्येयुः स्थण्डिलेयुश्च सन्नतेयुस्तथैव च। दशार्णेयुर्जलेयुश्च स्थलेयुश्च महायशाः। वननित्योपनेयुश्च पुत्रिकाश्च दश स्त्रियः। रुद्रा शूद्रा च भद्रा च मलदा मलहा तथा। खलदा चैव राजेन्द्र। नलदा सुरसाऽपि च। तथा गोचपला च स्त्री रत्नकूटा च ता दश"।

२रात्रौ निघ० तस्याः सोमरश्मिजातहिमाशिरसलभूयस्त्वात् तथात्वम्। घृतमाज्यमञ्चति प्राप्नोति। ३घृतप्रापके त्रि० स्त्रियां ङीप्। "घृताच्यसि जुहूर्नाम्ना" यजु०२।६। ४उदकयुक्ते त्रि० स्त्रियां ङीप्। ६ वहन्ति सूर्यं घृताची" ऋ०७।६०।२ "घृताची उदकवत्य" भा०। घृत दीप्त रूपमञ्चति। ५दीप्तरूपवति त्रि० स्त्रियां ङीप् पूर्ववत् सर्वम्। "स विश्वाचीरभिचष्टे घृताची" ऋ०१०।१२८।२। "घृताचीर्दीप्तरूपवती" भा०।

**घृताचीगर्भसम्भवा** स्त्री घृताच्या गर्भ इव सम्भवति सम्+भू–अच्। स्थूलैलायाम् राजनि०। घृताच्या गर्भे सम्भवोऽस्य। २कृतेयुप्रभृतौ पौरवे नृपभेदे पु० ३तत्कन्यायां स्त्री घृताचीशब्दे विवृति।

**घृतादि** पु० घृतमादिर्यस्य "घृतादीनाञ्च" शान्तनवाचार्य्यकृतोक्ते अन्तोदात्ततानिमित्ते शब्दगणे स च आकृतिगणः" सि० कौ०।

**घृतान्न** पु० घृतमाज्यमन्नमदनीय यस्य। हविर्भुजि वह्नौ। "तपुर्मूर्द्धा घृतान्नः पावक" ऋ० ७।३।१। २घृतभोजिनि त्रि० घृतेन मिश्रितमन्नम्। ३घृतमिश्रिते अन्ने न०।

**घृतार्चिस्** पु० घृतेनार्चिर्यस्य घृत दीप्तमर्चिर्यस्य वा। वह्नौ। "घृतार्चिः शीतिमाद्यापि प्रजज्वाल दिधक्षया" भा० आ० ५८ अ०।

**घृतावनि** स्त्री घृतस्यावनिरिव। यूपकर्णे हेमच०।

**घृतावृध्** त्रि० घृतमुदकं वर्द्धतेऽनया क्विप् दीर्घ छान्द०। उदकवर्द्धके "घृतेन द्यावापृथिवी अभिवृते घृतश्रिया घृतपृचा घृतावृधा" ऋ०६।७०।४। उदकवर्द्धिके द्यावापृथिव्यावित्यर्थं औस्थाने आच्।

**घृतासुति** पु० घृतमुदकं हविरूपमासुवति आ+सु–क्विच् हविःसम्पादकयोर्मित्रावरुणयोः "ता (मित्रावरुणौ) सम्राजा घृतासुती यज्ञे यज्ञ उपस्तुता" ऋ० १।१३६।६। औस्थाने आच्। घृतमासुतिरन्नं यस्य। घृतान्नयो इन्द्राविष्णोः। (इन्द्राविष्णू) "घृतासुती द्रविणं दत्तमस्मे" ऋ० ६।६८।६। अस्मे अस्मभ्यम्।

**घृताह्वन** पु० घृतेनाहूयतेऽस्मिन् आ+ह्व–आधारे ल्युट् जुहोतेरविवक्षितकर्म्मकत्वे नाकर्म्मकत्वात् घृतस्य करणत्वमेव "तृतीया च होश्छन्दसि" पा० कर्म्मणि न तृतीया किन्तु "कर्त्तृकरणयोस्तृतीया" पा० करणे तृतीया इत०। घृतेनाह्वनाधिकरणे वह्नौ। "घृताह्वन। दीदिव प्रति ष्म रिषतो दह। अग्ने। त्वं रक्षस्विन" ऋ०१।१२५। घृताह्वन।। अग्ने।" भा०।

**घृताहुति** स्त्री घृतेनाहुतिः "तृतीया च होश्छन्दसि" पा० कर्म्मणि तृतीया जुहोतेरविवक्षितकर्म्मकत्वेनाकर्म्मकत्वात् करणे तृतीया वा इत०। घृतेनाहुतौ। "यद्यप्यपि घृताहुतिभिः। यत्सामाभि मध्वाहुतिभि" आश्व० श्रौ० १।२।१।

**घृताह्व** पु० घृत तद्गन्धमाह्वयते स्पर्द्धते निर्यासेन आ+ह्वे–क उप० स०। घृततुल्यगन्धनिर्यासके सरलद्रुमे त्रिका०।

**घृतिन्** त्रि० घृतमाज्यमुदकं वा प्राशस्त्येनास्त्यस्य इनि। १प्रशस्ताज्यके २प्रशस्तजलके च स्त्रियां ङीप्। "पयस्विनीं घृतिनीमत्युदाराम्" (गङ्गाम्) भा० आनु०२६अ०।

**घृतेयु** पु० पौरवे रौद्राश्वनृपपुत्रभेदे कृतेयुशब्दे दृश्यम् स च जलेयुरित्यत्र घृतेयुरिति विष्णुपु० पाठ

**घृतेली** स्त्री घृते स्नेहद्रव्ये इलति शेते इल–शय अच् गौरा० ङीष्। तैलपायिकायां (तेलापोका) हेमच०

**घृतोद** पु० घृतमिव स्वादु उदकमस्य उदकस्याद। कुशद्वीपावरके समुद्रभेदे घृतोदध्यादयोऽप्यत्र क्षुपशब्दे २१४२ पृ० दृश्यम्।

**घृतौदन** पु० घृतेन मिश्रः ओदनः । "भक्ष्येण मिश्रये" पा०३त०। घाज्यमिश्रिते ओदने । "दध्योदन च सौमाय शुक्राय च घृतौदनम्" ग्रहयज्ञकथने स० त० ।

**घृतसमट** पु०न्दतृसमद्+पृषो०। ऋषिभेदे विष्णुपु०तत्पाठः ।

**घृष** संघर्षे सद्दीप्याञ्च चक० पर० सेट् । घर्षति अघृषत् (घषा) व्यापारभेद संघर्षः, घर्षति अघर्षीत् अघर्षत् । घर्षः घर्षः । उदित् घर्षित्वा घृष्ट्वा । क्त्वो वेट्कत्वात् निष्ठा तन्नट् घृष्ट । घर्षित इति प्रयोगस्तु तारका० इत्यन्न । "धातुना स्पृशते रेणु वायुवेगेन घर्षितम्" (शैलराज) रामा० ४।७९अ० ।

**घृष्ट** त्रि० घृष–कर्मणि क्त । घर्षिते ।अतपथ्ये "घृष्ट रसाञ्जन भार्या चौरेण" सुश्रु० । "क्रोधद्या मनु मनुस्य राजभवने घृष्टं न कि चन्दनम्" पञ्चतन्त्रम् । २गन्धभेदे "घृष्टोधनयजोगन्ध सरन्ध्र मनेकधा । अगुरुप्रभृति चापि यस्य पङ्क प्रदीयते । घृष्ट स च घृष्टगन्धोऽय द्वितीय परिकीर्त्तितः' इति शब्दार्थचि० धृत-वाक्यम् ।

**घृष्टि** पु स्त्री घृष–कर्त्तरि क्तिच् । १शूकरे मेदि० स्त्रियां वा ङीप् । (चामरआलु) २वाराह्याम् अमरः । ३अपरा-जितायाम् स्त्री मेदि० । भावे क्तिन् घर्षणे (घषा) ४व्यापारभेदे ५सद्दीप्याञ्च स्त्री मेदि० । क्तिन्नन्तत्वात् न ङीप् (कुत्सिया) । रत्नमा० ।

**घृष्टिला** स्त्री घृष्टि जाति ला–क । पृश्निपर्ण्याम् । (घा

**घृष्वि** पु स्त्री घर्षति भूमिं तुण्डेन घृष–क्विन् क्वचिद्धृषि अपी त्यादि उ०मि०न पक्षेण । १वराहे २घर्षणशीले त्रि० । "मदन्ति वीरा विदथेषु घृष्वय" ऋ० १।८५।१। "प्र व महीय घृष्वये' १।३७।४। "घृष्वये न्नतु घर्षणयुक्ताय" भा० । "क्रीडन्ति क्रीडा विदथेषु घृष्वय" १।१६६।२। एव सर्वत्र घृष्विशब्दस्य इदन्तत्वेन प्रयोगदर्शनात् क्विन्प्रत्ययान्तत्वेव निष्पन्नत्वात् क्विन्नराड् इति सि०कौ० उक्तेश्च शब्दक० गृ अन्तशब्दस्य नान्तत्वकल्पन प्रमादिकमेव । स्त्रियां वा ङीप् ।

**घेष्कु लिका** स्त्री (घेँचु) ख्याते क्षौद्राटने इत्थे रत्नमाला ।

**घोङ्ग** पु स्त्री पक्षिभेदे शब्दच० स्त्रियां ङीप् ।

**घोट(क)** पु० घुट–अच् ण्वुल् वा । अश्वे । तस्य भुवि वेष्टमात्रारेण चेष्टमानत्वात्तम् । स्त्रियां जातित्वात् ङीप् । "घोटी घोषा विक्षतविक्षत स्र फेनफीन क्वनी" सा०द० । तल्लक्षणादि अश्वशब्दे ४८८पृ० दृश्यम्" भा० ।

**घोटकमुख** पु० घोटकस्य मुखमिव मुखमस्य । किन्नरभेदे २प्रवर्तिभेदे च हेमा० म० प्रवराध्याये दृश्यम् ।

**घोटकारि** पु० इत० । महिषे शब्दार्थ चि० । तस्य यथाऽश्वैर तथा उपयमश्वे १२५० पृ० उक्तम् स्त्रियां वा ङीप् । २कयारिइक्ष करवीरे च । कयारिशब्दे दृश्यम् ।

**घोटिका** स्त्री घुट्–ण्वुल् टापि अत इत्वम् । कर्कट्याम् राजनि० ।

**घोणा** स्त्री घुण–अच् । १अश्वभाविकार्यां, २नासानाले च अमर । "अयमिरोधस्त्रीलरोमघुरघुरायमाणघोर घोणेन" काद० । "गोर प्रशस्त्वोत्स् अघाटघोण "भा० ध्या० १८८ श० । अस्य क्रोडादित्वात् स्वाङ्गत्वेऽपि न ङीप दीर्घघोणा स्त्री ।

**घोणिन्** पु स्त्री दीर्घा घोणाऽस्त्यस्य ब्रीह्या० इनि । शूकरे अमर स्त्रियां ङीप् ।

**घोण्टा** स्त्री घुण–भा ट तस्य नेत्वम् । बदरीभेदे (घेको-लाकुल) २पूगवृक्ष च मेदि० । [हेमच ।

**घोण(न)स** पु० गोनस+पृषो० । निरुक्ते गोनसे सर्पभेदे

**घोर** न० घुर–अच् । १विषे राजनि० २भयानके त्रि० हेम० । घोषाशब्दे उदा० । "शिवाघोरस्वना पश्चात्" रघु० । "घोरेऽस्मिन् भूतसंसारे"मनु ।"घोरराका महारौद्रीम्" काशीख्यानम् । ३शिवे पु० "घोराय घोररूपाय घोर-घोरतराय च" भा०शा०२८६ध्या० शिवस्तोत्रे । "नमोव पितरोघोरा " यजु० २।३२ ।

**घोरक** पु० व । देशभेदे । "काश्मीराश्च कुमाराश्च घोरका इसकायना " भा० स० ५१अ० ।

**घोरघुष्य** न० घोर घुष्यते घुष–क्यप् । कांस्ये राजनि० । घोर घुष्ट यस्य घोरघुष्टमित्यपि तत्र पाठ । तत्रार्थे राजनि० ।

**घोरघोरतर** पु० घोर+प्रकारे द्वित्वम् तत तरप् । १शिवे घोरशब्दे दृश्यम् २अत्यन्तघोरे त्रि० ।

**घोरदर्शन** पु स्त्री घोर दृश्यतेऽसौ दृश–कर्मणि ल्युट् । १उलूके राजनि स्त्रियां जातित्वात् ङीप् । २भयानके त्रि० । "घोषाश्चके महावाहुस्तत्र घोरदर्शनम्" भा० सौ० १अ० ।

**घोरवासन** पु स्त्री घोरं रासन शब्दोऽस्य । १शृगाले शब्दर० स्त्रियां जातित्वात् ङीप् । २घोरशब्दयुक्ते त्रि० ।

**घोराशिन्** पु स्त्री० घोर रसति रस–णिनि । १शृगाले हेमच० । स्त्रियां ङीप् । २घोरशब्दकारिणि त्रि०

घोररूप पु० घोरङ्रूपं रूपमस्य १महादेवे। घोरशब्दे दृश्यम्। २उग्ररूपे त्रि०।

घोरवाशन पु स्त्री० घोरं वाशते वाश–ल्यु। १शृगाले शब्दर० स्त्रियां जातित्वात् ङीष्। २भयानकशब्दकारिणि तिर्य्यग्जातिमात्रे त्रि०।

घोरवाशिन् पु स्त्री० घोरं वाशते वाश–णिनि। १शृगाले हेमच० २भयानकशब्दकारिणि पक्षि मृगादौ च स्त्रियां ङीप्।

घोरा स्त्री घुर–अच्। १देवताडीलतायां, राजनि० भयानकायां स्त्रियां त्रिका०। "२करालवदनां घोराम्" कालीध्यानम्। ३रात्रौ, ४आश्लेषायां राजसी मनोवृत्तौ शब्दार्थचि० ज्योतिषोक्ते "रवावुषभे संक्रमे भास्करस्य भवेद्घोरनाम्नी युक्ते" २।१०।१।१२०।२५। मध्याह्नकालस्थे ५रविसंक्रान्तिभेदे च। संक्रमशब्दे विवृतिः

घोल पु न० घुड–कर्म्मणि घञ् डस्य लः। १तक्रे मथितदध्नि। "तत्तु सस्नेहमजलं मथितं घोलमुच्यते" सुश्रु०। "श्वशर निर्जलं घोलं वातपित्तहरं स्मृतम्। मस्तुना रहितं गाव्यं दधि शुभ्रतरे पटे। जीरसैन्धवसंमिश्रं घोलं घनतरं स्मृतम्। जीरसैन्धवसंयुक्तं घोलं वातप्रणाशनम्। अतीसारे च मन्देऽग्नौ हितं रुच्यं बलप्रदम्" शब्दार्थचि० वैद्यकम्। "हिङ्गुजीरयुतं घोलं सैन्धवेन च संयुतम्। भवेदतीव वातघ्नमर्शोऽतीसारहृत् परम्। रुचिदं पुष्टिदं बल्यं वस्तिशूलविनाशनम्। मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम्। भावप्र० द्रव्यभेदयुतस्य तस्य गुणादिकमुक्तम्।

घोलज न० घोलात् जायते जन–ड। घोलजाते दध्यादौ।

घोलवटक पु० घोलमिश्रितो वटकः। वटकभेदे "पिष्टमौघोलवटको विदाही पवनापहः" मदनपालनि०।

घोलि(ली) गुड–इन् डस्य वा ङीप्। पत्रशाकभेदे राजनि०

घोष पु० घुष–आधारे घञ्। १आभीरपल्ल्यां तस्यां गोभिर्नादात् तथात्वात् कर्त्तरि अच्। २गोपाले ३कांस्ये न० मेदि० ४मशके त्रिका०। भावे घञ्। ५ध्वनौ ६मेघशब्दे "श्वया यम रय+कृपौ विसर्गः शरएव च। एते शासानुप्रदाना अघोषाच विवृण्वते। कण्ठमन्ये तु घोषाः स्युः" शिक्षोक्ते ७वर्णोच्चारणबाह्यप्रयत्नभेदे। ८घोषवतायाम् स्त्री शब्दार्थचि० "न च वृन्दावने कार्य्यो गवां घोषः कदाचन" हरिवं० १२८। स्त्रो० मन्दे "द्युमन्तं घोषं विजयाय कृण्महे" ऋ० १०।८४।४। "तत्र भुक्त्वा पुनः किञ्चित् तूर्य्यघोषैः प्रहर्षितः" मनु। गोमे "हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्" रघु०। भूमा० मुञ्। घोषक आभीरपल्लीभवे त्रि०।

घोषक पु० घोष+स्वार्थे क। घामार्गवे घोषातकीलतायाम् अमर। [श्वेतघोषातकीलताभेदे रत्नमा०।

घोषकाकृति पु० घोषकस्य लताभेदस्याकृतिरिवाकृतिरस्य।

घोषण न० घुष–भावे ल्युट्। १ध्वनौ णिच्–भावे ल्युट्। उच्चैः शब्देन ज्ञापने २व्यापारभेदे (ढेंडरा पेटा)। "शौर्य्यविक्रमशौर्य्याणां घोषणं संहृत भवेत्" रामा० सुन्द० ५८अ०। युच्। घोषणाऽप्यत्र स्त्री। "राजा सर्व्वत्र पटहशब्देन घोषणामाज्ञापयामास" पञ्चत०। "दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः" रघु।

घोषयित्नु पु स्त्री० घुष–णिच् बा० इत्नुच्। १ब्राह्मणे २कोकिले। ३वन्दिनि त्रि० शब्दरत्ना०।

घोषवत् त्रि० घोषः ध्वनि वर्णभेदोच्चारणे बाह्यप्रयत्नोवाऽस्त्यस्य मतुप् मस्य वः। १घोषरूपबाह्यप्रयत्नयुक्ते गकारादिवर्णभेदे। "सर्व्वे स्वरा घोषवन्तो घोषवन्तः कर्त्तव्या" छा० उ० "घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा" आश्व०गृ०१।१५।१।६। "वर्गप्रथमद्वितीयवर्णाः शषासश्च कुकारवर्जमघोषवन्तः शिष्टा घोषवन्तः। तदादौ यस्य तत्तथोक्तं अन्तर्मध्येऽन्तःस्थायरलवाःयस्य तत् तथोक्तम्। अभिनिष्ठानो विसर्ग अन्ते यस्य तत् अक्षरं स्वरः। अकारादयो द्वादश स्वराः शिष्टं व्यञ्जनम् अपरिमितं व्यञ्जनं। चतुरक्षरं वा। तत्र द्व्यक्षरे भद्र देव भव। चतुरक्षरे भवनाथ नागदेवः रुद्रदत्त नारा० "आदौ घोषवदक्षरं वरवान् मध्ये पुनः स्थापयेदन्ते दीर्घविसर्जनीयरहितं नाम प्रयत्नात् कृतम्" शर्म। शाखिभेदात् ऽपि विसर्गान्तता व्यवस्थाप्या। २ध्वनियुक्ते च। "त्वं पञ्चमतत्त्वं घोषं घोषवास्त्वं वसाहक" भा० आ० २५अ०। स्त्रियां ङीप्। सा च ३वीणायां हेमच०।

घोषा स्त्री घुष्यते ध्वनद्भिरिव कर्म्मणि घञ्। १शतपुष्पायां, मधुरिकायां, (मौरि) मेदि० २कर्कटशृङ्ग्यां, राजनि०। ४कोशातक्यां च शब्दार्थचि०। [घोषालतायां रत्नमा०।

घोषातकी स्त्री कोशातकी+पृषो०। कोशातकीलतायां श्वेत-

घोषादि पु० "घोषादिषु च" पा० परस्मिन्नेषु पूर्व्वपदस्याद्युदात्ततानिमित्तेषु शब्दभेदेषु स च गणः घोष कट वल्लभ हृद बदरी पिङ्गल पिशङ्ग माला रक्षा शाला कूटशाल्मली अश्वत्थ तृण शिल्पी मुनि प्रेक्षा।"

त्तिनिमित्त समाहारे तु द्वित्वसिद्ध्यादिनेव समूहस्य भानात् समूहत्वेनैव प्रवृत्तिनिमित्तमिति विशेषः। एवञ्च उभयत्रैव समूहस्य बोध । (७) समासघटकत्वादिति एका र्थीभावाभावादियर्थः। तथाहि बहुव्रीहिघटकपदानां कर्मधारयभावेणैव द्वन्द्वघटकपदाना चार्थानाभविणैव एकार्थीभावश्यावश्यक "समर्थः पदविधिरिति" पा० परिभाषितत्वात् चार्थे द्वन्द्वस्त्वुक्तेव । अथतरेतरान्वये परस्परनिरपेक्षाणामेकार्थीभाव कथमिति येन समु च्चयान्वाचयादेकार्थीभावेऽन्तर्भूतौ स्याताम्। तत्रेतरेत- रयोगे समाहारे च साहित्यस्य समस्तादेकार्थीभावस्य तात्कालभावाच्च तथेति बोध्यम्। इयांस्तु विशेष इतरेतर योगे साहित्य विशेषण द्रव्य विशेष्य, समाहारे तु साहित्य प्रधान द्रव्य विशेषणमिति यथा चानयोर्बोध वैलक्षण्य तथाकरे द्रष्टव्यम्"। पक्षान्तरं चात्र पुनरयक्रम् यथा "मूर्खोऽपि शोभते तावत् सभायां वस्त्रवेष्टित । तावच्च शोभते मूर्खो यावत् किञ्चित् न भाषते" हितो०। ८तुल्ययोगित्वे १०विनियोगे च शब्दार्थचिं०। तत्र तुल्ययोगितालङ्कारस्य येन द्योतकत्वात्तस्य तदर्थकता यथा "सङ्कुचन्ति सरोजानि स्वैरिणी वदनानि च" चन्द्रा०। एव दीपकालङ्कारद्योतकताऽपि २६६४० द्रष्टव्या। "सती च योषित् प्रकृतिश्च निश्चला" माघ। चकारद्वयप्रयोगे क्वचिद्विषमयोगितायां क्वचित्तुल्य प्राधान्यस्य चावबोधनम् यथा "इतोऽरिता पत्ररथेन तेन क्षोणी च हृष्टा च बभाण भैमी" नै०। "कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी" कुमार०। चिदनुबन्ध चण् चदर्थे तस्य प्रयोगे निषेधः।

च पु० चीयते शुक्लपक्ष किरणैः कृष्णपक्षे वा चिनोति वा चि–ड। १चन्द्रे २कच्छपे ३चौरे ४चण्डेशे ५चर्वणे च मेदि०। ६निर्बीजे ७दुर्जने च त्रि० शब्दरत्ना०।

चक भ्रान्तौ भ्वा० पर०सक० सेट् इदित्। चङ्कति अचङ्कीत्। चचङ्क।

चक प्रतिघाते तृप्तौ च भ्वा० आ० अक० सेट्। चकते अचकिष्ट चचके। मिते चकयति। प्रतिघात भयहेतुकोऽ निष्टशङ्कया गमनादिप्रतिरोधः। "व्याधानुसारचकिता हरिणीव यासि" मृच्छ०। "पौलस्त्यचकितेश्वरः" रघुः। उद्+अप्रतिघाते। "यं चेकितानमनुचिन्तय उच्चकन्ति" भाग० ६।१७।४६। उच्चकन्ति अप्रतिहतानि भवन्ति

चकास दीप्तौ अदा० जक्षा० पर० अक० सेट्। चकास्ति अचकासीत्। चकासाम्-बभूव आस चकार। कदित्। अचचकासत्। "चकासति च मांसादाजया रक्षेषु शा- म्यति"। "चकासां चक्रुरम्बु" "शोकादभूयैरपि भू- चकासाञ्चकार भागेन्द्रयोश्चिमैः" भट्टि। "चकासत चारु चमूचर्मणा" माघ।

चकित न० चक–भावे क्त। १भये २सम्भ्रमे च। "कुतो- ऽपि दयितव्याप्ते चकित भयसम्भ्रमः" सा० द० उक्ते ३स्त्रीणां साविकालङ्कारभेदे यथा "त्रस्यन्ती चलशफरी- विघट्टितोरुर्वामोरूरतिशयमाप विभ्रमस्य। क्षुभ्यन्ति प्रस- भमहो विनाऽपि हेतोर्लीलाभिः किमु सति कारणे तरुण्यः" "सचकितमुपरिकृतार्धाग्रजावगाढरिणीः"। "भय- चकितमाह्वये निजम्" माघ। "भ समभमगा यस्यां साष्टच्छिदिह चकिता" वृ० र० उक्ते ४छन्दोभेदे स्त्री। कर्त्तरि क्त। ६शङ्किते ५भीते च त्रि०।

चकोर पु० चक–तृप्तौ ओरन्। स्वनामख्याते–पक्षिभेदे "कोकश्रीतिचकोरपारणपटु सुरारि। "इमां विमा- चामचरे न चक्षुषी चिर चकोरस्य भवन्मुखस्पृशी" नैष०। "दृतचकाराक्षि। विलोकयेति" रघु। स्वार्थे क तत्रार्थे अमर। "तन्मांसगुणा राजनि० उक्ता यथा "वातक शीतल रुच्यं हृद्यं कापिञ्जलामिषम्। तद- च्चकोरज मांस हृद्यञ्च मधुरं हितम्"।

चक्क व्यथायां चुरा०उभ०सक०सेट्। चक्कयति ते अचचक्कत् त।

चक्र पु० क्रियतेऽनेन कृ–घञर्थे क नि० द्वित्वम्। १चक्रवाके पक्षिणि, (चका) अमर २रथाङ्गे, (चाका) ३सैन्ये, ४समुदाये, ५राष्ट्रे, ६दम्भभेदे, ७कुम्भकारोपकरणे, "कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारितागुणः" नैषधम्। ८अस्त्रभेदे। ९व्यूहभेदे, १०जलावर्त्ते, मेदि० ११ग्रामजाले, त्रिका० १२तगरपुष्पे, १३तैलिक यन्त्रे तन्त्रोक्तेषु मूलाधारादिषु स्थितेषु षट्सु १४पद्मेषु, १५सर्वतोभद्रादिषु, १६देवार्चनयन्त्रेषु "श्रीचक्रमेतदु- दित परदेवतायाः" तन्त्रम्। मन्त्रशोधोपयोगिषु १६अक- डमादिषु, १७अभैरवादिचक्रेषु, "प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः इति "तन्त्रम् १८अलङ्कारोक्ते आख्यस्य विशेषे च न०। अलङ्कारशब्दे २८०४० दृश्यम् अर्द्धर्चादि त्वात् क्वचिन्नपुंसकेऽपि पक्षभेदेनैवास्य लिङ्गभेदनियमः। तत्र अस्त्रभेदचक्रस्वरूपं हेमाद्रौ परि० ब्रह्मपुराणे "श्रीमान्से चतुर्वेदे जमदग्नि प्रति धूर्ज उवाच। चक्र यथाप्रमाणमुद्दिष्टमाम निबोध तत्रोत्तममध्यमाधमभेदेन

चक्र त्रिविध भवति। चक्रमष्टाभिरारैरुत्तम, षडार मध्यम चतुर्भिरारैः सम्यगधम भवति। तत्र श्लोक। अष्टारमुत्तम चक्र षडार मध्यम भवेत्। जघन्य चतुरार स्यादिति चक्र भवेत्त्रिधा। द्वादशपलमुत्तममेकादशपल मध्यम दशपलमधम चेति बालानाम्। अबालाना पञ्चाशत्पलमुत्तम चत्वारिंशत्पल मध्यम त्रिंशत्पल कनिष्ठमिति। तथाऽष्टाङ्गुलमुत्तम सप्ताङ्गुल मध्यममधम षडङ्गुल भवति बालानाम्, अबालानान्तु षोडशाङ्गुलमुत्तम चतुर्दशाङ्गुल मध्यममधम द्वादशाङ्गुल भवति। तत्र श्लोकौ। द्वादशैकादशदशपलानि क्रमशः शिशोः। अबालस्य द्विरष्टौ स्युर्द्विसप्त द्वादशापि च। बालाना त्रिविध चक्रमष्टसप्तषडङ्गुलम्। षोडशाङ्गुलमन्येषा द्विहीने मध्यमाधमे। त्रिविध चतुर्दशाङ्गुलमाद्य द्विद्विहीन मध्यम कनिष्ठ चेति। तत्र त्र्यङ्गुला सैक्यायसमयी प्रथमा नेमिः। सार्द्धद्व्यङ्गुला मध्यमा नेमिर्द्व्यङ्गुला तु कनिष्ठा नेमिः सा तु मध्यमपरिमण्डला नेमिभिर्विस्तृताभि स्यात् मणिरत्नालङ्कृता स्थूलमूला या नेमि सा चक्रे पूजिता भवति। तत्र सैक्य शिल्पिभिर्विचित्रमनेकाश्मवत्स्थानमतिमनोहर चक्र कर्त्तव्यमन्यथा सुधारयत्ना कुर्व्वीत"।

विष्णुचक्रलक्षणन्तु हरिभ० ४वि०। "द्वादशारन्तु षट्कोण वलयत्रयसंयुतम्। चक्र स्याद्दक्षिणावर्त्त. मङ्गल श्रीहरे धृत"

तन्त्रोक्त भैरवीचक्र च तत्त्वचक्रत्वेन प्रसिद्धम् तत्र च निष्कामाणामधिकार रुद्रयामलोक्ते चक्रपञ्चके तु सकामानाम् यथाह चक्र पञ्चविध प्रोक्त तन्त्रे तु रुद्रयामले। विधिना पूजिते चक्रे सौख्यमोक्षफल लभेत्। महाचक्र राजचक्र दिव्यचक्र तथाऽपरम्। वीरचक्रम् चतुर्थञ्च पशुचक्रञ्च पञ्चमम्। राजचक्र राज्यद स्यान्महाचक्र तु मोक्षदम्। देवत्वद देवचक्र वीरचक्र तु सिद्धिदम्। पशुचक्र तु दारिद्र्यशोकदुःखामयप्रदम्। कापट्ये दक्षिणाहीने सर्व्वचक्रन्तु निष्फलम्। सकामाश्चैव निष्कामाद्द्विविधा भुवि मानवाः। फलाशया कामिनो ये तेषामत्राधिकारिता। ब्रह्मज्ञानाय तु प्रोक्त भैरवीचक्रमुत्तमम्। ब्रह्मज्ञानयुताना तु तत्त्वचक्रेऽधिकारिता।" महानिर्व्वाणे च "नात्राधिकार सर्व्वेषा ब्रह्मज्ञान् साधकान् विना। परब्रह्मोपासका ये ब्रह्मज्ञा ब्रह्मतत्पराः। शुद्धान्तःकरणाः शान्ता सर्व-प्राणिहिते रता। निर्विकारा निर्विकल्पा दयाशीला दृढव्रता। सत्यसङ्कल्पका ब्राह्मास्त एवात्राधिकारिण। ब्रह्मभावेन तत्त्वज्ञा ये पश्यन्ति चराचरम्। तेषा तत्त्वविदा पुसा तत्त्वचक्रेऽधिकारिता। सर्वब्रह्ममयो भावश्चक्रेऽस्मिन् तत्त्वसज्ञके। येषामुत्पद्यते देवि। स एव तत्त्वचक्रिण"। अत्र सर्व्वत्र चक्राकारेण साधकैरुपवेशनात् चक्रत्वम्। चक्रानुष्ठानञ्च श्यामारहस्यादौ द्रष्टव्यम्। योगोपयोगितया देहस्थमूलाधारादिचक्रनिरूपणाय इडादिनाडीनिवेशनोक्तिपूर्व्विका चक्रभेदोक्तिः तन्त्रसारे "गौतम उवाच। देवर्षे। योगयुक्ताना योगानुभवदर्शक॥ साङ्ख्ययोगविशेषज्ञ। कर्म्मयोगनिषेधक। विना योग न सिध्येत्तु कुण्डलीचक्रभेद प्रभो॥ मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो॥ तावत् किञ्चिन्न सिध्येत मन्त्रयन्त्रार्च्चनादिकम्। जागर्त्ति यदि सा देवी बहुभि पुण्यसञ्चयै। तदा प्रसादमायान्ति मन्त्रयन्त्रार्च्चनादयः। शिववद्विहरेल्लोके षडैश्वर्य्यसमन्वित। योगयोगाद्भवेन्मुक्तिर्मन्त्रसिद्धिरनुत्तमा। सिद्धे मन्त्रे पराशान्तिरिति शास्त्रेषु निर्णय। तस्मात् कार्य्य पर योग कथयस्व मुनीश्वर॥ मुक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले। जीवन्मुक्तश्च देहान्ते निर्व्वाणपदमाप्नुयात्। नारद उवाच। कथयामि तव स्नेहाद्योगयोग्योऽसि गौतम॥ संसारोत्तरणे युक्तिर्योगशब्देन कथ्यते। ऐक्य जीवात्मनोराहुर्योग योगविशारदा। तव स्नेहात् समाख्यास्ये योगविघ्नकरांस्त्विमे। कामक्रोधलोभमोहमदमात्सर्य्यसज्ञका। योगाङ्गैरेभिर्निर्ज्जित्य योगिनो योगमाप्नुयु। यमनियमावासनप्राणायामौ तत परम्। प्रत्याहार धारणाख्य ध्यान सार्द्ध समाधिना। योगाङ्गान्याहुरेतानि योगिनो योगसाधने"। "यमादयस्तु। "अहिंसा सत्यमस्तेय ब्रह्मचर्य्य दयाऽऽर्जवम्। क्षमा धृतिर्मिताहार शौचञ्चेति यमा दश। तप सन्तोषमास्तिक्य दान देवस्य पूजनम्। सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम्। दशैते नियमा प्रोक्ता योगशास्त्रविशारदै" आसनानि प्रोक्तानि। "इडयाकर्षयेद्वायु बाह्य षोडशमात्रया। धारयेत् पूरित योगी चतु षष्ट्या तु मात्रया। सुषुम्णामध्यग सम्यग्द्वात्रिंशन्मात्रया शनै। नाड्या पिङ्गलया चैव रेचयेद्योगवित्तम। प्राणायाममिमम्प्राहुर्योगशास्त्रविशारदा। भूयो भूय-क्रमात्तस्य व्यत्यासेन समाचरेत्। मात्रावृद्धिक्रमेणैव

सम्यगुक्तादश षोडश । जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः । तदपेतं निगर्भञ्च प्राणायामन्परं विदुः । क्रमादभ्यस्यतः पुंसो देहस्वेदोद्गमोऽधमः । मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः । उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते । इन्द्रियाणां विचरतां विषयेषु निवर्त्तनम् । बलादाहरणं तेभ्यः प्रत्याहारोऽभिधीयते । अङ्गुष्ठगुल्फजानूरुसीमनीलिङ्गनाभिषु । हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि । भ्रूमध्ये मस्तके मूर्द्ध्नि द्वादशान्ते यथाविधि । धारणं प्राणमरुतो धारणेति निगद्यते । समाहितेन मनसा चैतन्यान्तरवर्त्तिना । आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते । समत्वभावनां नित्यं जीवात्मपरमात्मनोः । समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् । इत्यादि कथितं प्रिये । कामादिषट्कनाशनम् । इदानीं कथयिष्येऽहं मन्त्रयोगमनुत्तमम् । विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं शुभे ॥ चन्द्रसूर्य्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् । तिस्रः कोट्यस्तदर्द्धेन शरीरे नाडयो मताः । तासु मुख्या दश प्रोक्तास्ताभ्यस्तिस्रो व्यवस्थिताः । प्रधाना मेरुदण्डेऽत्र सूर्य्याग्निचन्द्ररूपिणी । शक्तिरूपा सा च नाड़ी साक्षादमृतविग्रहा । दक्षिणे पिङ्गलाख्या तु पुंरूपा सूर्य्यविग्रहा । दाड़िमीकुसुमप्रख्या विषाभा सुनिभि स्मृता । मेरुमध्यस्थिता या तु मूलाद्या ब्रह्मविग्रहा । सर्व्वतेजोमयी सा तु सुषुम्णा वह्निरूपिणी । तस्यामध्ये विचित्राख्या अमृतस्राविणी शुभा । सर्व्वदेवमयी सा तु योगिनां हृदयङ्गमा । विसर्गाद्बिन्दुपर्य्यन्तं व्याप्य तिष्ठति तत्त्वतः । मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके । मध्ये स्वयम्भूलिङ्गन्तु कोटिसूर्य्यसमप्रभम् । तदूर्द्ध्वे कामबीजन्तु कर्णशान्तीन्दुनाटकम् । तदूर्द्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा । तद्बाह्ये हेमवर्णाभं वसवर्णं चतुर्दलम् । द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् । तदूर्द्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् । वादिलान्तषड्वर्णेन युक्ताधिष्ठानसंज्ञकम् । मूलमाधारषट्कानां मूलाधारं ततो विदुः । स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः । तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम् । मेघाभं विद्युदाभञ्च बहुतेजोमयन्ततः । मणिवद्भिन्नं तत् पद्मं मणिपूरं तथोच्यते । दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् । शिवेनाधिष्ठितं पद्मं विश्वालोकैककारणम् । तदूर्द्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् । कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् । तन्मध्ये बाणलिङ्गन्तु सूर्य्यायुतसमप्रभम् । शब्दब्रह्ममयः शब्दोऽनाहतस्तत्र दृश्यते । तेनाहताख्यं पद्मं तन्मुनिभिः परिकीर्त्तितम् । आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् । तदूर्द्ध्वन्तु विशुद्धाख्यं षोड़शदलपङ्कजम् । स्वरैः षोड़शभिर्युक्तं धूम्रवर्णं महाप्रभम् । विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् । विशुद्धं पद्ममाख्यातमाकाशाख्यं महाप्रभम् । आज्ञाचक्रन्तदूर्द्ध्वे तु आत्मनाधिष्ठितं परम् । आज्ञासंक्रमणन्तत्र गुरोराज्ञेति कीर्त्तितम् । द्विदलं हक्षसंयुक्तं बोधनन्तु तदूर्द्ध्वतः । एतत्तु षट्चक्राणि प्रोक्तानि तव सुव्रत ॥ सहस्राराम्बुजं बिन्दुस्थानं तदूर्द्ध्वमीरितम् । इत्येतत् कथितं सर्व्वं योगमार्गमनुत्तमम्" ।

दीक्षणीयतन्त्रोक्तमन्त्राणां साधकस्य शुभाशुभदायकता विचाराङ्गचक्राणि तन्त्रसारे दर्शितानि यथा "अनुकूलं मन्त्रं गृह्णीयात्तथाच 'स्वतारराशिकोष्ठानामनुकूलान् भजेन्मनून्'" । वाराहीतन्त्रे "ताराचक्रं राशिचक्रं नामचक्रं तथैव च । तत्र चेत् सगुणो मन्त्रो नान्यचक्रं विचारयेत्" । इति तु प्रधानतया बोद्धव्यम् । "अरिमन्त्रं न गृह्णीयादकुलञ्च तथैव च" । इत्यादिदर्शनात् ततश्च चक्रविचारस्यावश्यकत्वात् प्रथमं निरूप्यते । तत्र सिद्धसारस्वते "स्वसिद्धार्द्धशरार्णानां प्रसादप्रणवस्य च । सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत् । स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे च त्र्यक्षरे । वैदिकेषु च सर्व्वेषु सिद्धादीन्नैव शोधयेत् । एकाक्षरस्य मन्त्रस्य मालामन्त्रस्य पार्व्वति ॥ वैदिकस्य च मन्त्रस्य सिद्धादीन्नैव शोधयेत्" । मालामन्त्रो यथा वाराहीतन्त्रे "विंशत्यर्णाधिका मन्त्रा मालामन्त्राः प्रकीर्त्तिताः । नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत् । हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य च । एकद्वित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत्" चामुण्डातन्त्रे "काली तारा महाविद्या षोड़शी भुवनेश्वरी । भैरवी छिन्नमस्ता च विद्या धूमवती तथा । बगला सिद्धविद्या च मातङ्गी कमलात्मिका । एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः । नात्र सिद्धाद्यपेक्षास्ति नक्षत्रादिविचारणा । कालादिशोधनं नास्ति नारिमित्रादिदूषणम् । सिद्धविद्या तथा नात्र युगसेवापरिश्रमः । नास्ति किञ्चिन्महादेवि ! दुःखसाध्यं कथञ्चन" । मालिनीविजये "काली तारा महाविद्या त्वरिता छिन्नमस्तका । वाग्वादिनी चान्नपूर्णा

तथा प्रत्यङ्गिरा मता । कामाख्यावासिनी बाला मातङ्गी शैलवासिनी । इत्याद्या सकला विद्या कलौ पूर्णफलप्रदा । सिद्धविद्यास्तथा नात्र युगसेवापरिश्रम । तथा चैता महाविद्या कलिदोषैर्न बाधिता” इत्यादि वचनादेषु विचारो नास्ति । वस्तुतस्तु इदन्तु प्रशंसापरम् सर्व्वत्र विचारस्यावश्यकत्वम् । दुरदृष्टवशात् कदाचिद्वैरि मन्त्रस्य स्वप्नादौ प्राप्त्या तत्तद्दोषस्य दृष्टत्वादिति तु साम्प्रदायिकाः । तत्रादौ

कलाकुलचक्रम् तत्र तच्छब्दे २१२४पृ० दर्शितम् ।

राशिचक्रम् आगमकल्पद्रुमे “रेखाद्वय पूर्व्वपरेण कुर्य्यात्तन्मध्यतो याम्यकुबेरभेदात् । एकैकमीशाननिशाचरे तु हुताशवाय्वोर्विलिखेत्ततोऽर्णान् । वेदाग्निवह्नियुगलाश्वयुगाग्नियुग्मान् पक्षेषुबाणशरपक्षचतुष्टयार्णान् । मेषादितः प्रविलिखेत् सकलास्तु वर्णान् कन्यागतान् प्रविलिखेदथ शादिवर्णान्” । सङ्केतान्तर शारदायाम् “वाल गौर खुर शोण शमी शोभेति राशिषु । क्रमशोभेदिता वर्णाः कन्याया शादय स्मृता” । अ आ इ ई मेषः । उ ऊ ऋ वृष । ॠ ऌ ॡ मिथुनम् । ए ऐ कर्कट । ओ औ सिंह । अं अः शष सह ळक्षा कन्यका । कवर्गस्तुला । चवर्गो वृश्चिक । टवर्गो धनु । तवर्गो मकर । पवर्गः कुम्भ । यवर्गो मीनः । स्वराशीनामनुकूल मन्त्रं भजेत् “स्वतारराशिकोष्ठानामनुकूलान् भजेन्मनून्” इति वचनात् । “राशीनां शुभता ज्ञेया त्यजेच्छत्रु इति व्ययम् । स्वराशेर्मन्त्रराश्यन्तं गणनीय विचक्षणै” । यदा तु स्वराशेरज्ञानम् तदा साधकनामाक्षरसम्बन्धिन राशि गृहीत्वा गणयेत् । “साध्याद्याक्षरराश्यन्त गणयेत् साधकाक्षरादिति” रामार्च्चनचन्द्रिकाधृतवचनात् । नारायणीये च “अज्ञाते राशिनक्षत्रे नामाद्याक्षर राशित” इति । रामार्च्चनचन्द्रिकायाम् “एकपञ्चनवबान्धवा स्मृता द्वौ च षट् च दशमास्तु सेवका । वह्निरुद्रतनयस्तु पोषका द्वादशाष्टचतुरस्तु घातका” । चतुरस्तु घातका इति विष्णुविषय रामार्च्चनचन्द्रिकाधृतत्वात् । मन्त्रादौ तु षष्ठ वर्जनीयम् “षष्ठाष्टमद्वादशानि वर्जनीयानि यत्नत” इति वचनात् । तन्त्रान्तरे “लग्न धन भ्रातृबन्धू पुत्रामित्रकलत्रकम् । मरण धर्म्मकर्म्मायव्यया द्वादश राशय । लग्नोऽतिक्लेशजनकोधनदस्तु धनमावेत् । भ्राता रत्नाकरो बन्धुरर्थहत् सुखदः सुत । शत्रुर्नाशाय, सम्पत्त्यै कलत्रं भवति ध्रुवम् । मरण मरणायैव, धर्म्मो धर्म्माय कल्पते कर्म्मापि सर्व्वसिद्धिः स्यादायोऽतिशीघ्रदस्तथा । लाभालाभौ व्यय कुर्य्यादेवाक्रमविचारणा । नामानुरूपमेतेषां शुभाशुभफलं दिशेत् । वैष्णवे तु शत्रुस्थाने बन्धुरिति पाठ । तथाच तन्त्रराजे “तेन मन्त्रादिवर्णेन नाम्नश्चाद्याक्षरेण च । गणयेद्यदि षष्ठ वाष्टम द्वादशन्तु वा । रिपुमन्त्राद्यवर्ण स्यात्तेन तस्याहित भवेत् ।”

अष्टवर्गचक्रम्—अष्टवर्गशब्दे १२२ पृ० तच्चोक्तम् ।

नक्षत्रचक्रम्—भैरवीतन्त्रे “अर्द्धगा दश रेखा स्युस्तिर्य्यग्वा चतरष्टका । सप्तविंशतिकोष्ठानि भेषु वर्णांश्च सर्व्वथा । गणाक्षरनिर्णय । अ आ अश्विनी देवगण । इ भरणी मानुष । ई उ ऊ कृत्तिका राक्षस । ऋ ॠ ऌ ॡ रोहिणी मानुष । ए मृगशिरो देव । ऐ आर्द्रा मानुष । ओ औ पुनर्वसू देव । क पुष्य देव । खगघ अश्लेषा राक्षस । ङ च मघा राक्षस । छ पूर्वफल्गुनी मानुष । ज झ उत्तरफाल्गुनी मानुष । ञ ट हस्ता देव । ठ ड चित्रा राक्षस । ढ स्वाती देव । ण त विशाखा राक्षस । थ द अनुराधा देव । ध ज्येष्ठा राक्षस । न प फ मूला राक्षस । ब पूर्वाषाढ़ा मानुष । भ उत्तराषाढ़ा मानुष । म श्रवणा देव । य र धनिष्ठा राक्षस । ल शतभिषा राक्षस । व श पूर्वभाद्रपदा मानुष । ष स ह उत्तरभाद्रपदा मानुष । ळ क्ष अं अः रेवती देव । निबन्धे “प्राप लोभात् षट् प्राद्य रुद्रस्याद्रिरुद्र करम् । लोकशोपषट् प्राय स्वर्णौ योभेषु भेदिता । वर्णा क्रमात् स्वरान्त्यौ तु रेवत्यंशगतौ सदा । अन्त्यव्यञ्जनसंख्याश्च षाड्डा वर्गादिवर्णत” । तथा च पिङ्गलातन्त्रे “उत्तराद्दक्षिणान्तु रेखा कुर्य्याच्चतुष्टयीम् । दश रेखा पश्चिमाद्याः कर्त्तव्या वरवर्णिनि ॥ अश्विन्यादिक्रमेणैव विलिखेत्तारकाः शुभ । वक्ष्यमाणविधानेन तन्मध्ये वर्णकान् लिखेत् । अकारादिलकारान्तान्द्विचन्द्रवह्निवेदकान् । भूमीन्दुनेत्रचन्द्रांश्च अश्लेषाया स्वगौ प्रिये । द्विभूनेत्रनेत्रयुग्मानि चेन्दुनेत्राग्निचन्द्रकान् । मघादिज्येष्ठापर्य्यन्त द्वितीय नवतारकम् । वह्निभूमीन्दुचन्द्रांश्च यमेन्दु नेत्रवह्निकान् । वेदेन भेदितान् वर्णान् रेवत्यन्त्ययुगे क्रमात् । एकैक त्रिरूपाश्विनिभुजकुयुगायुग्मभूयुग्मपक्षाद्युग्मैकद्विद्विरूपानलशशिशशिभूद्वे कपक्षाग्निवेदा । वर्णा क्रमात् स्वरान्त्यौ तु रेवत्य शगतावुभौ । तथा च निबन्धे “पूर्वोत्तरा-

क्रमात्। प्रभवादिक्रमेणैव अकारादिस्वरास्तथा। वर्षैर्द्वादशभिर्मानमेकैकस्य स्वरोदये। उदयोद्वादशाब्दानां प्रत्येकं द्वादशाब्दिक। अन्तान्तरोदयोवर्षमासमेकं दिनद्वयम्। लौकाख्विनाडिकाः ४२ प्रोक्ता अष्टत्रिंशत्पलानि च"

१० वार्षिकस्वरचक्रम्—प्रभावाद्यब्दमेकैकमुदयश्चास्वरादिक। द्वादशाब्दस्य वर्षाणां तद्भुक्तिर्वार्षिके स्वरे"

११ अयनस्वरचक्रम्—"अस्वरोदक्षिणे स्वामी इस्वरश्चोत्तरायणे। वर्षभुक्त्यर्द्धमानेन भोगः षाण्मासिकस्वरे"।

१२ ऋतुस्वरचक्रम्—"अकारादिस्वराः पञ्च वसन्तादिक्रमोदयाः। एकैकस्मिन् स्वरे प्रोक्तोद्विसप्ततिदिनोदय। षड्दिनानि ८।३२ नाड्यो वर्द्धमेद्२४ पलानि च। अन्तरोदयमानं स्यादृतुनाम्नि स्वरोदये" इति

१३ मासस्वरचक्रम्—"अमस्यमार्गवैशाखेष्वस्वरस्योदयोभवेत्। आश्विनश्रावणाषाढेष्विकारो नायकः स्मृत। उकारश्चैत्रपौषे स्यादेकारो ज्यैष्ठकार्त्तिके। ओकार उदयं याति माघफाल्गुनमासयो। द्वे दिने त्र्यक्षयो४२ नाड्यष्टाविंशत् पलानि च। अन्तरोदयउक्तोऽत्र वार्षिके मासस्वरोदये"

१४ पक्षस्वरचक्रम्—"अस्वरः कृष्णपक्षेषु शुक्लपक्षेषु इस्वरः। पक्षात्मिकान्तरा भुक्तिर्मासभुक्त्यर्द्धमानत"

१५ तिथिस्वरचक्रम्—"अकारादिक्रमाच्चस्य नन्दादितिथिपञ्चकम्। नन्दा भद्रा जया रिक्ता पूर्णा च कथिता क्रमात्। दिनस्वरोदयोनित्यं स्वस्वतिथ्यादि जायते। एकैकस्य स्वरस्य स्युर्घटी पञ्च पलानि भे २७। अस्यान्तरोदय प्रोक्तोदिनस्वरस्य सूरिभिः"

१६ घटीस्वरचक्रम्—"घटीस्वरो घटीपञ्च पलानि सप्तविंशति। एव घटीस्वरोयाति दिनस्वरघटीस्वर। अस्यान्तरोदय प्रोक्तोघटिकार्द्धप्रमाणत"

१७ तिथिवारर्क्षादिस्वरचक्रम्—"द्वादशाब्दादिनाद्यन्ता स्वस्वामाश्च स्वकास्तः। उदयन्ते पुनस्ते च ते चैकादशधा स्वरा। वर्षमासदिनानाडीपलानि च यथाक्रमम्। कालमान मया प्रोक्त पञ्चधात्र स्वरोदये। द्वादशाब्दस्वरादीनां भुक्त पलमयन्तु यत्। तद्भक्त च स्वभोगेन लब्ध शेषादिक भवेत्। लब्धभुक्तस्वरा ज्ञेया शेषश्चैवोदिता स्वरा। अस्मिन् षट्त्र्यादिभक्ते च भुक्तं स्यादुदित स्वर। उदितस्य स्वरस्य स्युर्नामस्वरवशेन ता। पञ्च बालादिकावस्थाः स्वस्वकालप्रमाणतः"।

(यो यस्य कालभोगो तस्य कालगतान्तरम्। पिण्डितभुक्तिर्विभक्तं लब्धाङ्केन गतोदय। शेषस्वरोदयोज्ञेय स्वस्य संख्याहृते ततः। पञ्चावस्था स्वरूपेण ज्ञेयं तस्य बलाबलम्। उदयास्तस्वरौ यत्र नामाद्यक्षरजस्वरात्। तत्र बालादयोऽवस्था भवन्त्येकादिसंख्यया। नामस्वरोदयोबाल कुमारश्च द्वितीयक। तृतीयो युवा तुर्य्यो वृद्धोमृत्युस्तु पञ्चम) ग्रन्थान्तरेऽधिक पाठ। आद्योबाल कुमारश्च युवा वृद्धो मृतिस्तथा। नित्यावस्थास्वरूपेण फलदा नात्र संशय। किञ्चिल्लाभकरोबाल कुमारस्त्वर्द्धलाभद। सर्वसिद्धि युवा दत्ते वृद्धे हानिर्मृते क्षय। यात्रायुद्धे विवादे च नष्टदृष्टे रुजान्विते। बालस्वरोभवेद्दुष्टोविवाहादिशुभे शुभ। सर्वेषु शुभकार्य्येषु यात्राकाले तथैव च। कुमार कुरुते सिद्धि संग्रामे सर्वतोजयम्। शुभाशुभेषु कार्येषु मन्त्रयन्त्रादिसाधने। सर्वसिद्धि युवा दत्ते यात्रायुद्धे विशेषत। दाने देशार्च्चने दीक्षागूढमन्त्रप्रकल्पने। वृद्धस्वरो भवेद्भव्योरणे भङ्गो भयं गमे। विवाहादिशुभं सर्व्वं रुग्णासाद्यशुभं तथा। न कर्त्तव्यं नृभिः किञ्चिज्जाते मृत्युस्वरोदये। मृतोबालस्तथा वृद्ध कुमारस्तरुणस्वर। यथोत्तरबलाः सर्व्वे ज्ञातव्या स्वरवेदिभि। योयस्य पञ्चमे स्थाने स स्वरो मृत्युदायक। तृतीये तु भवेत् हृद्धि शेषामध्यफलप्रदा। मृत्युहीनस्वरे नाम्नि जयोनाम्नि स्वराधिके। समनाम्नि भवेत् साम्यं सन्धिर्जयपराजयौ। एकमात्रो द्विमात्रश्च त्रिचतुःपञ्चमात्रिका। यथोत्तरबला सर्व्वे ज्ञातव्या स्वरपारगै। एकमात्र कवर्गश्च किवर्गश्च द्विमात्रक। कुस्तृतीयस्तु तुर्य्यं के, कोवर्ग पञ्चमात्मक। आद्ये स्वरे भवेत् साम्यं द्वितीयोऽर्द्धफलप्रद। तृतीये तु फल पूर्णं तुर्य्ये मन्त्रपरम्परा। गतोमृत्यु स्वरे प्राप्ते यूनि प्राप्ते स्वकीयके। तत्काले प्रारभेद्युद्ध विजयो भवति ध्रुवम्। तत्काले शान्तिकोपाद्योदिने वर्णस्वरस्तथा। पक्षे पञ्चस्वरोज्ञेयो मासे जीवस्वरोदय। ऋतौ राशिस्वरोप्राह्य षण्मासे धिष्ण्यसम्भव। अब्दे पिण्डस्वरोज्ञेयो योगो द्वादशवार्षिके। सर्व्वकाले वली वर्णः सर्वव्यापी न संशय। तस्मात्सर्व्वप्रयत्नेन वर्णे वीक्ष्य बलाबलम्। यथा पद हस्तिपदे प्रविष्ट यथा हि नद्यः खलु सागरेषु। यथा हरेर्द्देहगताश्च देवास्तथा स्वरा वर्णफलोदया स्यु। साधनं मन्त्रयन्त्रस्य यात्रायोगश्च सर्व्वदा। अथोक्तानि कार्य्याणि मात्रास्वरबले कुरु। वर्णस्वरबले सर्वं कर्त्तव्यं

च शुभाशुभम्। सिद्धिदं सर्व्वकार्य्येषु युद्धकाले विशेषतः। मारण मोहन स्तम्भविद्वेषोच्चाटन तथा विवाद विग्रह वाद कुर्य्यात् प्रहस्वरोदये। स्नान पानादिकं सर्व्वं वस्त्रालङ्कारभूषणम्। विद्यारम्भं विवाहञ्च कुर्य्याज्जीवस्वरोदये। प्रासादारामहर्म्याणि देवतास्थापनार्च्चनम्। राज्याभिषेचनं यात्रा प्रवेशो बीजवापनम्। स्त्रीविवाहश्च दीक्षा च कर्त्तव्या राशिके स्वरे। शान्तिकं पौष्टिकं यात्रा प्रवेशो बीजवापनम्। स्त्रीविवाहस्तथा सेवा कर्त्तव्या भस्वरोदये। शत्रूणां देशभङ्गञ्च कोटयुद्धं च वेष्टनम्। सेनाध्यक्षस्तथा मन्त्री कर्त्तव्यः पिङ्गलकोदये। योगेन साधयेद्योगं देहस्थं प्राणसम्भवम्। आपश्च शाम्भवं चैव शाक्तेयञ्च तृतीयकम्। तिथिवारञ्च नक्षत्रं पृथक् पृथक् प्रभाषितम्। यच्चैकत्र समेत्य कुर्य्याद्धर्षस्वरोदये। सस्वरो वर्णतोयत्र तत्तस्याथ स्थितं कुरु। यस्य नामादिमं वर्णं तिथिवारर्क्षस्थलजम्। तद्दिनं वर्जयेत्तस्य हानिर्मृत्युकरं यतः। अनेन स्वरयोगेन शत्रूणां मारणादिकम्। मन्त्रयन्त्रक्रियाहोमं साधयेत्तद्दिने शुभम्। तत्र बालादयोऽवस्थाभानुसंख्या भवन्ति हि। उदयन्ते क्रमेणैव स्वस्वभुक्तिप्रमाणतः। घटिकाख्ये दिने पक्षे मासे ऋत्वयने तथा। वर्षे द्वादशवर्षे च अवस्था जायते स्वरे। भवन्ति घटीपञ्च सपादार्द्धं दिनद्वयम्। पक्षञ्च पञ्चमासं च वर्षैकं भुज्यते क्रमात्। भुक्तस्वरप्रमाणं च पिण्डस्य भोगभाजितम्। गतावस्था गताङ्केन शेषास्तत्कालजा मता। मूका १ च बाला २ शिशु ३ हासिका ४ च कुमारिका ५ यौवन ६ राज्यदा ७ च। क्रोधा ८ च लोभा ९ ज्वरिता १० प्रवासा ११ मृता १२ च बालस्वरजा अवस्था। स्वस्था १ शुभा २ मोहन ३ हर्ष ४ वृद्धि ५ मेहोदया ६ शान्तिकरी ७ सदर्पा ८। मदा ९ समा १० शान्तिगुणोदया ११ च माङ्गल्यदा १२ द्वादशधा कुमारे। उत्साह १ धैर्य्योपशमा २।३।४। च बाला ५ माङ्गल्ययुक्ता ६ च सकाम ७ पुष्टी ८। तुष्टा ९ च सिद्धि १० धनेश्वरी ११ च शान्ताभिधा १२ द्वादशधा युवाख्ये। वैकल्य १ शोषा २ च तथा च लोभा ३ च्युतेन्द्रिया ४ दुःखिता ५ रात्रि ६ निद्रा ७। बुद्धिप्रभङ्गा ८ च तपा ९ च खिन्ना १० जरा ११ मृता १२ द्वादश वृद्धजा च। छिन्ना १ च मन्दा २ रिपुघातकारी ३ शोका ४ मही ५ ज्वालन ६ क्रुद्धा ७ च। क्षुधान्विता ८ भेदकरी ९ च दाहा १० मृत्यु ११ क्षया १२ द्वादश मृत्युजा दशा। एव पञ्चस्वरस्था सूर्य्यस्याथ पक्षके सदा। तासु सर्वासु विज्ञेय स्वनामसदृशं फलम्। अवस्था फलम्।

१८ तात्कालिकदिनस्वरचक्रम्—"तिथ्यादायुदय याति क्रकारादिर्घटीस्वर। बालस्वरादिकं प्रश्ने फलं तस्य वदाम्यहम्। तिथिभुक्तघटीसंख्यां कृत्वा पञ्चगुणीं ततः। सप्तवह्नि१२७हृते शेषे स्वरस्तत्कालसम्भवः। तिथिभुक्तघटी या स्यात् रुद्र११ षष्टिभाजिता। शेषे तिथिस्वरात् भोक्तास्तत्कालजघटीस्वर। शेष रुद्रा११ हृत पञ्चा भाजयेच्चान्तरोदयः। वर्णं तस्तु फल वाच्य शेषे तत्कालजस्वर। तिथिभुक्तघटीसंख्या विघ्ना नवखेन्दुना १०९ हृता घटीस्वर शेषे तत्र स्यादन्तरोदय। यद्दिशस्तत्र प्रश्न फल तस्य प्रजायते। यत्र नोद्दिश्यते किञ्चित् तत्र प्रष्टु शुभाशुभम्। बालोदये यदा पृच्छा लाभार्थे स्वल्पलाभदा। रुजार्थे चिररोगश्च गमे हानिः क्षयो रणे। कुमारोदयवेलायां लाभो भवति पुष्कल। रुजानाशो जयी युद्धे यात्रा सर्वत्र सिद्धिदा। युवोदये लभेद्राज्य क्लेशच्छेदस्तत्क्षणात्। संग्रामे शत्रु हन्ता च यात्रा च सफला भवेत्। वृद्धोदये न लाभः स्यात् क्लेशिनां क्लेशवर्द्धनम्। संग्रामे भङ्गमायाति यात्रायां न निवर्त्तते। मृतोदये यदा दूत पृच्छति स्वप्रयोजनम्। तत् सर्वं मृत्युदं ज्ञेय युद्धे मृत्युश्च भङ्गद। श्रोजस्वराः पुमांस स्युः स्त्रियो युग्मस्वरान् विदुः। स्वस्वस्वरोदये जाते पुंसां स्त्रीणां बलं भवेत्। बलिन स्युः सदा तेभ्यो बली स्वस्य स्वरोदये। गर्भार्थे पुंस्वरे पुत्र। कन्या कन्यास्वरोदये। युग्मे युग्म, क्षयो नष्टे मातुर्मृत्युश्च सङ्क्रमे। द्युनाडीस्वरयो पुंसोः पुंयुग्म, स्त्रीयुग स्त्रियो। तयोस्तु पुंस्त्रियोः पुंस्त्रीयुग्म गर्भे विनिर्द्दिशेत्। तिथिनाडीस्वरे साम्ये पुंपुंस्त्रीस्त्री प्रजायते। असाम्ये तिथिनाडीस्थे गर्भे साम्य न विद्यते"।

"तत्र जन्मनि विशेष।" "जन्मर्क्षे जन्मपादस्य वर्णे योऽक्षरजस्वर। तेनाक्षरेण विज्ञेय स्वभावः प्राणिनामिह। चपल कातरोऽमूर्खः कृपणश्चाजितेन्द्रिय। अपत्यबहुभाषी च जाते बालस्वरोदये। व्यवसायी कलाभिज्ञ स्त्रीरतः सुभगः सदा। दीर्घायुर्विघ्नी शूरः कुमारोदयसम्भवः। सर्वलक्षणसम्पूर्णो राजा भवति धार्मिकः। सर्वकालजयी युद्धे जातो युवोदये शुभः। स्त्रीजितो धार्मिकः कामी विवेकी स्थिरसाहस। सत्यवादी सदाचारः

पुमान् हस्तोदयोद्भव । क्रोधी समत्सर क्रूरो निःकामो यिकलेन्द्रिय । सर्वकार्य्यक्षयो दुष्टो जन्म यस्य मृतोदये" आतस्य शुभाशुभनिर्णय । "ककारादिटकारान्ताः पञ्च ह्रस्वा स्वरास्तथा । वक्तिन स्यु सिते पक्षे शेषा सर्वे सितेतरे । एकस्वरः पृथक् वर्णौ योधयोरुभयोर्य्यदि । तत्र पञ्चवलं ग्राह्य शुक्लकृष्णादिभेदत । एकपञ्चाक्षरैरेक स्वरस्थे योधयोर्द्वयो । शुक्ले गौर पर कृष्णो युद्धे जयति निश्चितम् । यस्मिन्नेव स्वरे कृष्णो गौरो वा सुभटो यदि । स्वरासन्नाक्षरे ह्रस्वो दीर्घो दूराक्षरे जयी । प्रमाणनाम वर्णैक्य युद्धकारकयोर्यदि । तत्र युद्धे बलं देय यायिस्थायिविभेदत । योधयो सर्वभेदैक्ये स्वरे यूनि कुमारके । यायी जयी तथा स्थायी बालवृद्धान्तिमस्वरे । आद्यास्त्रिषु स्वयोर्वर्णा द्वौ द्वौ शेषकयोर्मतौ । एव तिथित्रये ज्ञेया वर्णसंख्या तिथिस्वरे । वर्णतिथ्यादितिथ्याख्या जन्महानिर्मृतिस्तथा । श्रीर्जन्म नीरुजा हानौ मृतौ मृत्युर्न संशय"। यदुक्त यामले तन्त्रे ज्ञात गुरुप्रसादत । स्वराद्दिनफल वक्ष्ये पुंसां कर्मप्रकाशकम् । योगपिण्डं च राश्याख्यान् जीवखेटाऽक्षरस्वरान् । उत्पाद्य नामतश्चाष्टौ मात्रान्तान् स्थापयेत् क्रमात् । तस्याध स्थाप्निखेष्वष्टौ द्वादशाब्दादिकालजान् । स्वभोगेन समायुक्तान् भोगश्चैकादशांशकः । यथोत्तरबला सर्वे तथा कालबलात् पुन । कालोदयबलाश्चापि ज्ञातव्याः स्वरवेदिभि । अकारादिस्वराद्य स्या सख्या वेदप्रमाणिका । विन्यस्य चक्रयोगेण तेन विशोपकाप्तता । योगात् द्वादशवर्षा स्युरवस्था पिण्डतोऽब्दके । भस्वरादयने ज्ञेया राशिस्वरादृतुस्वरे । जीवात् मासस्वरेऽवस्था ग्रहात्पक्षस्वरे तथा । वर्णाद्दिनस्वरे ज्ञेया मात्रास्वरात्घटीस्वरे । द्वादशाब्दादिक कालोयत्राऽकारादिकस्वरे । स्थितस्तत्र शुभो न स्यात् पश्चावस्थाशुभोऽपि च । स्वरौ बालान्तिमौ दुष्टौ बालपूर्वंटल तथा । शेष सार्द्धद्वय भव्यमिति ज्ञेयं शुभाशुभम् । बालवृद्धान्तिमादुष्टा, शुभौ युवकुमारकौ । उत्पाद्यौ क्रमयोगेण योज्यौ दृष्टौ शुभाशुभौ । यो यत्र वर्त्तते कालो द्वादशाब्दादिसम्भव । अकारादिस्वरस्थाने योगादि फलनिर्णय । योगाद्द्वादशवर्षं च पिण्डाद्वर्षं च वायनम् । भादृतुर्जीवतो मास ग्रहात् पक्षोऽक्षरात् दिनम् । योगादिस्वरयोगेण द्वादशाब्दादिक क्रमात् । यावदुत्पाद्यते राशिस्तावत् ज्ञेय शुभाशुभम् ।" (अङ्कयुग्माधिकत्वेन तद्दिने तस्य तत्फलम् । द्वादशार्पिकाद्या ये स्वान्तरोदयसंस्थिता । ते शुभाश्चैकत-स्थाप्यास्त्वशुभास्त्वन्यत पृथक् । वेदवेदाङ्गनेत्राणि वेदसंख्या क्रमेण च । शुभाशुभस्वरूपस्य राशियुग्मस्य मध्यत । एकस्मात्पतिते शेषे ज्ञेय तद्दिनजं फलम् । त्रिंशत्या ताडिते शेषे चतु पष्टिविभाजिते । लब्धा विशोपकास्तत्र शुभाशुभप्रकाशका । योगे स्वकर्मतः, पिण्डे शरीराङ्ग सुहृज्जनात् । राशौ स्वकुलतो, जीवे स्ववित्ताद्, ग्रहतो रिपो । वर्णे स्वस्वामिनो ज्ञेयो, मात्रायां स्त्रीजनात् फलम् । एव ज्ञात्वा वदेद्विद्वान्दिने फलशुभाशुभम्)" । ग्रन्थान्तरेऽधिकपाठ

१९ दिक्चक्रम्—"पूर्वस्मिन्नस्वर स्वामी इस्वरो दक्षिणे तथा । उस्वर पश्चिमे ज्ञेय एसौम्ये मध्य ओस्वर । यस्यां दिशुदयं याति स्वरस्तत्पञ्चमीं दिशम् । वर्जयेत् सर्वकार्य्येषु यात्राकाले विशेषत । गच्छत पृच्छकस्याशु स्वरस्यास्तमिता दिशम् । हानिर्मृत्युभय रोगो जायते नात्र संशय

२० देहजस्वरचक्रम्—"अथान्यत् सम्प्रवक्ष्यामि शरीरस्य स्वरोदयम् । हंसचारस्वरूपेण येन ज्ञान त्रिकालजम् । कुण्डलिनी महाशक्तिर्नाभिस्थाऽहिस्वरूपिणी । ततोदशोर्द्ध्वगा नाड्योदश चाधोगतास्तत । द्वे द्वे तिर्य्यग्गते नाड्यौ चतुर्विंशतिसंख्यया । कुण्डलिन्या महाशक्तौ मूलमार्गे भवन्त्यमू । ताभ्यः सूक्ष्ममुखा नाड्यः शरीरस्यातिपोषिका । सप्त शतानि जायन्ते सप्तोत्तराणि संख्यया । प्रधाना दश नाड्यस्तु दशवायुप्रवाहिका । नामानि नाडिकानाञ्च वातानाञ्च वदाम्यहम् । इडा पिङ्गला सुषुम्णा गान्धारी हस्तिजिह्विका । पूषा यशाऽलम्बुषा च कुहू शङ्खिनिका तथा । प्राणोऽपान समानश्चोदानव्यानौ तथैव च । नाग कूर्म्मं कृकरश्च देवदत्तो धनञ्जय । प्रकटो वायुसञ्चारो लक्ष्यते देहमध्यग । पिङ्गलेडासुषुम्णाभिर्नाडीभिस्तिसृभिर्बुधै । (अष्टाङ्गुले वहेद्वह्निरनिलश्चतुरङ्गुल । दिवाकराङ्गुला पृथ्वी सलिल षोडशाङ्गुलम् । नीलवर्णो भवेद्वायुरक्तवर्णो हुताशन । पीतवर्णस्तु माहेय शुक्लवर्णस्तु वारुण । छायाकारो भवेद्वायुस्त्रिकोणो वह्निरुच्यते । चतुरस्रस्तु माहेयो वर्त्तुलो वारुणःस्मृत । कटुस्वादुर्भवेद्वायुस्तीक्ष्णस्वादोऽनलोभवेत् । कषायकस्तु माहेयो मधुरो वारुणो-मतः) अधिकपाठः । "इडानाडीस्थितश्चन्द्रः पिङ्गला

भानुवाहिनी । सुषुम्णा शम्भुरूपेण शम्भुर्हंसस्वरूपकः । हकारो निर्गमे प्रोक्तः सकारस्तु प्रवेशकः । हकारः शम्भुरूपेण सकारः शक्तिरुच्यते । शक्तिरूपस्थितश्चन्द्रो वामनाडीप्रवाहकः । दक्षनाडीप्रवाहे तु शम्भुरूपी दिवाकरः । एकैकस्य कलाः पञ्च क्रमेणैवोदयन्ति ताः । पृथिव्यापस्तथा तेजो वायुराकाशमेव च । मध्ये पृथ्वी अधश्चाप ऊर्द्धं वहति चानलः । तिर्य्यग्वायुप्रवाहश्च नभोवहति सङ्क्रमे । चत्वारिंश नभ प्रोक्त सर्व्वशास्त्रेषु भाषितम् । अपां स्थाने स्थितं वस्तु पृथिव्यामुत्तरं गतम् । तेजसा पूर्व्वगं वस्तु त्वाकाशे दक्षिणं गतम् । त्रिशङ्कितार्थेऽपि पृथ्वी सलिलं पञ्च सप्तकम् । एकविंशाहिते तेजोवायु पञ्चदिनं स्मृतम् । वर्षैकन्तु व्योम्नि स्यात् सर्व्वशास्त्रेषु सम्मतम् । दूतोक्तवर्णसङ्ख्याढ्यो द्विगुणो भज्यते त्रिभिः । यद्येकं द्वितयं शेषं तृतीये मरणं भवेत् । लग्नं तिथिसमायुक्तं समष्टान्तं तथान्वितम् । पञ्चभिस्तु हरेद्भागं शेषाङ्के तत्त्वमुच्यते । पृथ्व्यापौ चोत्तमौ प्रोक्तौ तेजसि सर्व्वसिद्धयः । वायौ च निष्फलं ज्ञेयमाकाशे मरणं ध्रुवम् । पृथ्व्यादेकैकतत्त्वस्यान्यैकैकघटिकोदयः । अहोरात्रस्य मध्ये तु ज्ञातेन द्वादशसङ्क्रमाः । आदौ चन्द्रः सिते पक्षे भास्करस्तु सितेतरे । प्रतिपदादिदिनान्येव त्रीणि त्रीणि क्रमोदयौ । चन्द्रोदये यदा सूर्य्यश्चन्द्रः सूर्य्योदये यदा । अशुभं हानिरुद्वेगः शुभं सर्व्वं निजोदये । यत्नाच्च चारयेद्रात्रौ दिवा चार्य्यो दिवाकरः । इत्यभ्यासरतो नित्यं स योगी नात्र संशयः । यात्रादाने विवाहे च वस्त्रालङ्कारभूषणे । शुभकर्म्मणि सन्धौ च प्रवेशे च शशी शुभः । विवादे द्यूतयुद्धेषु स्नानभोजनमैथुने । व्यवहारे भये भङ्गे भानुनाडी प्रशस्यते । दूरयुद्धे जयी चन्द्रः समासन्ने दिवाकरः । वहन्नाडीपदेनैव कृता यात्राऽतिसिद्धिदा । पृथ्वीजले शुभे तत्त्वे तेजो मिश्रफलोदयम् । हानिमृत्युकरौ पुंसामशुभौ व्योममारुतौ । योद्धृद्वयकृते प्रश्ने पूर्णे च प्रथमो जयी । रिक्तस्थे द्वितीयस्तु जयी भवति नान्यथा । युद्धकाले यदा चन्द्रः स्थायी जयति निश्चितम् । यदा सूर्य्यप्रवाहश्च यायी च विजयी तदा । पार्थिवे समतं युद्धं सन्धिर्भवति वारुणे । विजयो वह्नितत्त्वेन वायौ भङ्गो मृतिस्तु खे । पूर्णनाडीगते पृष्ठे शून्यमङ्गं तदग्रतः । शून्यस्थाने कृते शत्रुर्म्रियते नात्र संशयः । पूर्व्वोत्तरदिशोश्चन्द्रे भानौ पश्चिमयाम्ययोः । स्थितस्तत्र जयी युद्धे स्थायी यायी क्रमेण च । वामनाड्युदये चन्द्रः कर्त्तव्यो वामसंमुखः । सूर्य्यवाहे तथा स्थैर्य्यं पृष्ठदक्षिणयोर्जयी । शयने वा प्रसङ्गे वा युवत्यालिङ्गनेऽपि वा । यः सूर्य्येण पिबेच्चन्द्रं स भवेन्मकरध्वजः । जीवेन स्थापितं जीवो जीवो जीवस्य दीयते । जीवस्थानगतो जीवो बाला जीवान्तवशगा । रात्रिक्रियाप्रधानाया प्रसुप्ते कामिनीजने । प्रसुप्तेषु पिबेद्यस्तु बालाजीवं नरः । अष्टाष्टं जपित्वा तु तस्मिन् क्षणे रतौ सति । तत्क्षणे दीयते चन्द्रो मोहमायाति कामिनी । शिव आलिङ्गते शक्त्या प्रसङ्गे दक्षिणेन तु । तत्क्षणे पाययेच्चन्द्रं मोहमायाति कामिनी । चन्द्रचारो विषं हन्ति सूर्य्यो बालां वशं नयेत् । सुषुम्णायां भवेन्मोक्ष एकोदेवस्त्रिधा स्थितः । भुक्तमात्रे च मन्दाग्नौ स्त्रीणां वश्यार्थकर्म्मणि । शयनं सूर्य्यवाहेन कर्त्तव्यं सर्व्वदा बुधैः । भ्रान्ते शोके विषार्त्ते च ज्वरिते मूर्च्छितेऽपि च । स्वजनस्वामिबोधार्थे चन्द्रचारं प्रवाहयेत् । ऊर्द्ध्वं वामाग्रतो दूतो ज्ञेयो वामपथोदये । पृष्ठे दक्षे तथाऽधस्तात् सूर्य्यवाहगमो मतः । पूर्णनाडीगतो दूतो यत् पृच्छति शुभाशुभम् । तत् सर्व्वं सिद्धिदं ज्ञेयं शून्ये शून्यं न संशयः । पृथिव्यादिद्वितत्त्वेन दिनमासाब्दकैः फलम् । शोभनञ्च तथा दुष्टं व्योममारुतवह्निभिः । श्वासप्रवेशकाले तु दूतो वाञ्छति जल्पितम् । सर्व्वं सिद्धिमायाति निर्गमे नास्ति सुन्दरम् । सूर्य्ये च विषमान् वर्णान् समवर्णान् निशाकरे । वाहस्थो भाषते दूतस्तदा लाभोऽन्यथा न हि । गर्भप्रश्ने यदा दूतः पूर्णे पुत्रः प्रजायते । शून्ये कन्यायुगे युग्मं गर्भपातश्च सङ्क्रमे । मारणं मोहनं स्तम्भं विद्वेषोच्चाटनं वशम् । प्रेरणाकर्षणं क्षोभं भानुनाड्युदये कुरु । शान्तिकं पौष्टिकं क्षेमं दिव्यौषधिरसायनम् । योगाभ्यासादिकर्म्माणि कर्त्तव्यानि निशाकरे । चन्द्रसूर्य्यस्वराभ्यासं ये कुर्व्वन्ति सदा नराः । अतीतानागतज्ञानं तेषां हस्तगतं सदा"

इति स्वरोदये स्वरचक्रनिर्णायकं प्रथमाङ्कम् ।

सर्व्वचक्रोपयोगि वालादिचक्रं ज्यो॰ त॰ दर्शितं यथा "ऊर्द्धवर्णांश्च लम्बवर्णांश्च न्यस्ता कोष्ठेषु पञ्चसु । अकारादाः स्वरा लेख्या एकैकस्मिन् द्विकं द्विकम् । कादिक्षान्तान् लिखेद्वर्णान् स्वराधोङञणोज्झितान् । तिर्य्यक्पंक्तिक्रमेणैव पञ्चत्रिंशत्कोष्ठके । अकारादिक्रमात् न्यस्य नन्दादितिथिपञ्चकम् । अर्ककुजौ विधुसौम्यौ गुरू शुक्र

स्थिते। इदञ्च सौम्यक्रूराणां मत्स्यानवशात् समम्। एतदेव फलं विद्धि सौम्ये क्रूरे विपर्य्ययात्। स्थानवेधसमायोगात् यत्संख्यं जायते फलम्। तत्सङ्ख्यवेधयुक्तेन फलं ज्ञेयं शुभाशुभम्। यद्वा सौम्यास्तथा क्रूराः वक्राः शीघ्रोच्चनीचगाः। स्थानञ्च वेध्यमित्येवं मत्वा ज्ञात्वा फलं वदेत्। वक्रपक्षे फलं द्विघ्नं त्रिगुणं स्वोच्चसंस्थिते। समानजं फलं शीघ्रे नीचस्थेऽर्द्धफलोदयः। तिथिराश्यन्नवर्णांश्च विद्धं क्रूरग्रहेण यत्। सर्व्वेषु शुभकार्य्येषु वर्ज्जयेत्तत् प्रयत्नतः। न नन्दति विवाहे च यात्रायां न निवर्त्तते। न रोगात् मुच्यते रोगी वेधवेलासमोद्भवे। रोगकाले भवेद्वेधः क्रूरखेचरसम्भवः। यत्कमत्वा, भवेन्मृत्युः शीघ्रे चाप्यसृजान्वितः। वेधस्थाने रणे भङ्गो दुर्गे खण्डः (भङ्गः) प्रजायते। कविप्रवेशने तत्र योधाघातश्च तत्र वै"। (कश्चिद्वीरयोद्धा)। "यत्र पूर्व्वादिकाष्ठायां इष्टराश्यादिगो रविः। सा दिगस्तमिता ज्ञेया शेषास्तिस्रः सदोदिताः। ऐशान्यां स्वराः प्राच्यां ज्ञेया आग्नेयगा यमे। नैरृते तस्याश्च वारुण्यां, वायव्यां सौम्यगा मताः। नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिश। ते सर्व्वेऽस्तमिता ज्ञेया यत्र भानुस्त्रिमासिकः। नक्षत्रेऽस्ते रुजा, वर्णे हानिः, शोकः स्वरेऽस्तगे। राशौ विघ्नं, तिथौ भीतिः, पञ्चास्ते मरणं भवेत्। यात्रा युद्धं विवादश्च द्वारं प्रासादहर्म्म्यको। न कर्त्तव्यं शुभं चान्यदस्ताभिमुखं नरैः। अस्ताशायां स्थितं यस्य नाम्नः प्रथमअक्षरम्। स आर्त्तः सर्व्वकार्य्येषु ज्ञेयो दैवहतो नरः। अरौ कोटे तथा युद्धे चातुरङ्गे महाबले। त्यजेदस्तगतान् योद्धा यदीच्छेद्विजयं रणे। नक्षत्रेऽभ्युदिते पुष्टिः, वर्णे लाभः, स्वरे सुखम्। राशौ जयः, तिथौ तेजः पदाप्तिः पञ्चकोदये। प्रश्नकाले भवेद्विद्धं यल्लग्नं क्रूरखेचरैः। तद्दुष्टं, शोभनं सौम्यैः, मिश्रैर्मिश्रफलं भवेत्। षड्भेदैः विद्धं यल्लग्नं फलं लग्नस्वभावतः। ज्ञातव्यं दैवविकेन्द्रेण भाषितं यन्त्रादिकम्। (शीर्षोदये सौम्यविलग्नवर्गे लग्नेऽपि वा सौम्ययुते शुभं स्यात्। अतोऽन्यथास्ते तु तदन्यथात्वं, मिश्रं विमिश्रैरधिकं वदाश्च। केन्द्रोपगा नवमपञ्चमगाश्च सौम्याः केन्द्राष्टवर्जमशुभास्त्रिषडायसंस्थाः। सर्व्वार्थसाधनकराः परिपृच्छतां स्युरेभिर्व्विपर्य्ययगतैस्तु विपर्य्ययं स्यात्। लग्नाधिनाथो यदि केन्द्रग स्यात् तस्मिन्नेतस्य च केन्द्रग वा। अथाष्टकेन्द्राद्यपचाय पापा अन्यत्र याता यदि तच्छुभं स्यात्। आद्यो लग्नाधिपः कार्य्ये लग्ने कार्य्याधिपो यदि। लग्नपः कार्य्यपश्चापि लग्ने यदि तृतीयकः। चतुर्थः कार्य्यगो ज्ञाता यदि लग्नपकार्य्यपौ। कार्य्यसिद्धिस्तदा ज्ञेया मित्रदृग्भिरधिकं फलम्। एवं दृष्टिवशाज्ज्ञेयं फलं तद्वत्तदुत्तमम्। पूर्णनाडीस्थितो दूतो यत् पृच्छति शुभाशुभम्। तत् सर्व्वं सिद्धिमाप्नोति शून्ये शून्यं समीरणे। आदौ शून्यगतः पृच्छेत् पश्चात् पूर्णं विशेद् यदि। तदा सर्व्वार्थसिद्धिः स्यात् वामे वामे न संशयः। श्वासप्रवेशकाले चेद् दूतो जल्पति वाञ्छितम्। तस्यार्थसिद्धिमाप्नोति निर्गमे नास्ति सुन्दरम्। ऊर्द्ध्ववामाग्रतो दूतो ज्ञेयो वामपथस्थितः। पृष्ठे दक्षे तथाधस्तात् दक्षनाडी मतो मतः। यात्रादानविवाहेषु वस्त्रालङ्कारभूषणे। शुभे कर्म्मणि सन्धौ च प्रवेशे वामनः शुभः। कलहद्यूतयुद्धेषु स्नानभोजनमैथुने। व्यवहारे भये भङ्गे दक्षनाडी प्रशस्यते)। अन्यप्रकारेणोक्तमेतत् ज्यो० त० प्रशिष्टम्। "क्रूरैरुभयतोविद्धा यस्याश्चरतिधिस्वराः। राशिधिष्ण्यञ्च पञ्चापि तस्य मृत्युर्न संशयः। मण्डलं नगरं ग्रामो दुर्गं देशालयं पुरम्। क्रूरैरुभयतोवेधे विनश्यन्ति न संशयः। कृत्तिकायां मघा पुष्ये रेवत्याञ्च पुनर्व्वसौ। वेधे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिषु। पूर्व्वात्रय तथाग्नेयं ब्राह्मणानां प्रकीर्त्तितम्। उत्तरात्रितयं पुष्यं क्षत्रियाणां विनिर्द्दिशेत्। पौष्णं चैत्रं मघा चैव प्राजापत्यं विशाम्पते। आदित्यमश्विनी हस्तं शूद्राणामभिजित्तथा। विद्धैरेभिर्द्विजातीनां कारुकाणां च शेषकैः। सौम्यं माहेन्द्रं रसोधान्यं गजाश्वादिचतुष्पदाः। सर्व्वं महार्घतां याति यावत् क्रूरोऽत्र संस्थितः। क्रूरवेधसमायोगे यस्योपपद्यसम्भवः। तस्य मृत्युर्न सन्देहो रोगाद्वापि रणेऽपि वा। सूर्य्यभात् पञ्चमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम्। शून्यश्चाष्टमं प्रोक्तं सन्निपातं चतुर्द्दशम्। केतुरष्टादशं प्रोक्तमुल्का स्यादेकविंशति। द्वाविंशतितमं कम्पस्त्रयोविंशं च वज्रकम्। निर्घातश्च चतुर्विंशत्प्रोक्ता अष्टानुपग्रहाः। प्रस्थाने विपदः प्रोक्ताः सर्व्वकार्य्येषु सर्व्वदा। प्रयत्नादतः

१ षड्नाडीचक्रं नवनाडीचक्रञ्चोक्तं यथा "अस्थन कर्म्म आधान विनाशः सामुदायिकम्। सांघातिकमिदं धिष्ण्यं षट्कं सार्व्वजनीनकम्। जातिदेशाभिषेकैश्च नव धिष्ण्यानि

पते । वेधं ज्ञात्वा फलं ब्रूहि सौम्ये क्रूरे शुभा-
शुभम् । जन्मभं जन्मनक्षत्रं दशमं कर्म्मसञ्ज्ञकम् । एको-
नविंशमाधानं त्रयोविंशं विनाशकम् । अष्टादशञ्च नक्षत्रं
सामुदायिकसञ्ज्ञकम् । साङ्घातिकञ्च विज्ञेयं धिष्ण्यञ्च
षोडशमेव हि । षट्त्रिकस्थं राजजातेर्जातिनाम
स्वनामभम् । देशभं देशनामर्क्षं राज्यभं चाभिषेकभम् ।
मृत्युः स्याज्जन्मभे विद्धे कर्म्मभे क्लेश एव च ।
आधानर्क्षे प्रवासः स्यात् विनाशे बन्धुविग्रहः । सामुदा-
यिकभे रिष्टं हानिः साङ्घातिके तथा । जातिभे कुल-
नाशः स्यात् बन्धनञ्चाभिषेकभे । देशर्क्षे देशभङ्गः स्यात्
क्रूरैरेव शुभैः शुभम् । उपग्रहसमायोगे मृत्युर्भवति
नान्यथा । भयं भङ्गश्च घातश्च मृत्युर्भङ्गयुता मृतिः ।
क्रूरैरेकादिपञ्चान्तैर्युधि वेधे फलं भवेत् । तिथि
धिष्ण्यं स्वरं राशिं वारञ्चैव तु पञ्चमम् । यद्दिने
वेधयेच्चन्द्रस्तद्दिने स्यात् शुभाशुभम् । तिथ्यादिपञ्चके
विद्धे चन्द्रयोगो यदा भवेत् । उक्तं फलं तदा वाच्यं
तद्दिने ग्रहसम्भवम् ।

अथाहं सम्प्रवक्ष्यामि यदुक्तं चादियामले । एकाशीति-
पदे चक्रे ग्रहभेदाच्छुभाशुभम् । देशं कालं ततः पात्र-
मिति त्रैलोक्यदीपनिर्णये । चिन्तनीयानि विज्ञानि सर्व-
कार्य्ये विचक्षणैः । देशोऽथ मण्डलं स्थानमिति देशस्त्रि-
धोच्यते । वर्षमासदिनं चेति त्रिधा कालोऽपि कथ्यते ।
धातुर्मूलं च जीवश्च इति पात्रं त्रिधा मतम् । अथ त्रिक-
त्रयस्यास्य वक्ष्यामि स्वामिखेचरान् । देशेशा राहु-
मन्देज्या मण्डलस्वामिनः पुनः । केतुसूर्य्यसिता स्थान-
नाथाश्चन्द्रारचन्द्रजाः । वर्षेशा राहुकेत्वार्किजीवा मासा-
धिपाः पुनः । भौमार्कसिता ज्ञेयाश्चन्द्रः स्यात् दिवसाधिपः ।
धात्वीशाः सौरिपातारा, जीवेशाश्चेन्दुसूरयः । मूलेशा
केतुशुक्रार्का इति पात्राधिपा ग्रहाः । पुं ग्रहा राहुकेत्वर्क-
जीवभूमिसुता मताः । स्त्रीग्रहौ शुक्रशशिनौ सौरिसौ-
म्यौ नपुंसकौ । सितेन्दू सितवर्णेशौ रक्तेशौ भौम-
भास्करौ । पीतेशौ ज्ञगुरू कृष्णनाथाः केतुतमोऽर्कजाः ।
ग्रहो वक्रोच्चयोर्यः स्यादुदये च बलाधिकः । देशादीनां
स एवैकः स्वामी खेटस्तदा मतः । स्वगृहे वक्रतुङ्गे स्या-
दुदये च बलाधिकः । वक्रोदये स्वगृहस्थे च पूर्णवीर्य्यो
ग्रहो भवेत् । तदप्रष्टगे खेटे बलं त्रैराशिकात्
मतम् । उच्चांशस्थे बलं पूर्णं नीचांशस्थे दलं बलम् ।
त्रैराशिकवशात्ज्ञेयमन्तरे तु बलं बुधैः । एवं देशा-
दिनाथा ये ग्रहवेधे व्यवस्थिताः । शुद्धं शल्यशोध-
ध्याश्चिन्तनीयाः प्रयत्नतः । स्वमित्रसमशत्रूणां विध्यन्
देशादिकं क्रमात् । शुभग्रहः शुभं दत्ते चतुस्त्रिद्व्ये-
कपादकैः । दुष्टं दुष्टग्रहः कुर्य्यादेकद्वित्रिचतुष्पदैः ।
विद्धं पूर्णदृशा पश्यन् तत्पादेन फलं ग्रहः । अविद्ध-
स्त्वन्यथा ज्ञेयं फलं दृष्ट्यनुमानतः । वर्णादिस्वरराशीनां
मेषाद्ये राशिमण्डले । ग्रहदृष्टिवशात् सर्वं विद्धं वर्णादिक-
मतम् । स्वरवर्णं स्वचक्रोक्तस्तिथिवेधाश्च पीडयेत् ।
तिथिवर्णेषु यो राशिस्तद्दृष्टिः स्यात्तिथीक्षणात् । अशुभो
वा शुभो वापि शुक्ले विध्यंस्तिथिं ग्रहः । सर्वं
निजफलं दत्ते कृष्णे पक्षे तु तद्दलम् । खेटकैकैकांशके
ज्ञेया पूर्णा दृष्टिः सदा बुधैः । दृष्टिहीने पुनर्वेधे न
स्यात् किञ्चित् शुभाशुभम् । इत्येवं दृष्टिभेदेन निर्द्दिष्टं
सकलं फलम् । वर्णादिपञ्चके विद्धे ग्रहो दत्ते शुभा-
शुभम् । सौम्यः पूर्णदृशा पश्यन् विद्धं वर्णादिपञ्च-
कम् । फलं विंशोपकाः पञ्च क्रूरस्य चतुरो दिशेत् ।
वर्णादिपञ्चके यावत् स्थानवेधे च तावती । दृष्टिस्तदनु-
मानेन मात्रा विंशोपका बुधैः । एवं विंशोपका येऽत्र
सम्भवन्ति शुभाशुभाः । अन्योन्यं शोधयेत्तेषां शेषात् ज्ञेयं
शुभाशुभम् । देशध्वंसः प्रजापीडा नृपविग्रहस्तथा ।
यत्र दृष्टिस्तु तत्र स्याद्दुर्भिक्षं मण्डले तथा । वर्त्तमानार्घ-
विंशांशा कल्प्या विंशोपका इह । ते क्रमात् वर्त्तमा-
नार्घे देया पात्या शुभाशुभाः । अकालेऽपि फलं
पुष्पं वृक्षाणां यत्र जायते । स्वजातिमांसभुक्तिश्च
दुर्भिक्षं तत्र रौरवम् । परचक्रागमो यत्र विग्रहश्च
स्वराज्यके । ऋतोर्विपर्य्ययो यत्र दुर्भिक्षं मण्डले
भवेत् । भूमिकम्पोरजःपातोरक्तवृष्टिश्च जायते । देशे
सर्व्वसुखोपेते वेधादेतद्भवेद्ध्रुवम् । दीपो यथा गृहस्था-
न्तमुद्योतयति सर्व्वतः । तथेदं सर्व्वतोभद्रं चक्रं ज्ञान-
प्रकाशकम्" ।

२ शतपदचक्रम्—"चक्रं शतपदं वक्ष्ये सूर्च्चाशाक्षरसम्भ-
वम् । नामादिवर्णतो ज्ञेया नक्षत्राद्यंशकास्तथा । तिर्य्य-
गूर्द्ध्वगता रेखा रुद्रसंख्या लिखेद्बुधः । जायते कोष्ठ-
कानाञ्च शतैकं १०० नात्र संशयः । न्यसेदवकहडा-
दि रौद्रादिविदिशि क्रमात् । (अ व क ह ड़ा ऐशान्यां
म ट प र ता हरिति चाग्नेय्याम् । न य भ
ज खा नैर्ऋत्यां ग स द च ला वायव्याम्) पञ्च पञ्च
क्रमेणैव विंशवर्णान् नियोजयेत् । पञ्चस्वरसमायोगे

एकैकं पञ्चधा कुरु । (अवर्णाद्यास्त्रयो ज्ञेयाः सन्ध्यक्षरयुतास्तथा । सजातीयैक्यमास्थाय पञ्चस्वरविनिर्णयः । ऋद्दलृतोरप्यकारेण ञेन सह परिग्रहः ) अधिकं चा॰ । "कुर्यात् कुम्भद्वयस्थाने त्रीणि त्रीण्यक्षराणि च । कुघङछो भवेत् स्तम्भे रौद्रे त्वीशानगोचरे । पुषणठो भवेत् स्तम्भे कृत्ते चाग्नेयसञ्ज्ञके । भुधफढोभवेत् स्तम्भे पूर्वाषाढे च नैरृते । दुथझञो भवेत् स्तम्भे वायव्ये भाद्रउत्तरे । एवं स्तम्भचतुष्कञ्च ज्ञातव्यं स्वरवेदिभिः । धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः । साभिजित्त्यप्रकाशात्र यत्नैकं द्वादशाधिकम् । यद्धिष्ण्यांशककोष्ठस्थः क्रूरः सौम्योऽपि वा ग्रहः । ततस्तु वेधयेत् तिर्यक् पुरोनामादिमाक्षरम् । सौम्यैर्विद्धं शुभं ज्ञेयमशुभं पापखेचरैः । मिश्रैर्मिश्रफलं तत्र निर्वेधे न शुभाशुभम् । यदुक्तं सर्वतोभद्रे चक्रोपचक्रवेधतः । शुभाशुभफलं सर्वं तदिहापि विचिन्तयेत्"। (पञ्च स्वरा अ इ उ ए ओकारास्तैर्योगे धिष्ण्यानि नक्षत्राणि । अत्र चतुर्भिर्वर्णैरेकं नक्षत्रं यथा । अ इ उ ए १ । ओ वा वि वु । ४ । वेवोकवि । ५ । कुघङछ । ६ । केकोहहि । ७ । हुहेहोड । ८ । डिडुडेडो । ९ । ममिमुमे । १० । मोटटिटु । ११ टेटोपपि । १२ । पुषणठ १३ । पेपोररि । १४ । रुरेरोत । १५ । तितुतेतो । १६ । ननिनुने । १७ । नोययियु । १८ । येयोभभि । १९ । भुधफढ । २० । भेभोजजि । २१ । जुजेजोख । (अभिजित्)॰ । खिखुखेखो । २२ । गगिगुगे । २३ । गोशशिशु । २४ । शेशोदद्दि । २५ । दुथझञ । २६ । देदोचचि । २७ । चुचेचोल । १ । लिलुलेलो । २ । ऋद्युक्त ककारयुक्तेन ज्ञेय । ह्रस्वेन दीर्घो ज्ञेय । तालव्यशकारेण दन्त्यसकारो ज्ञेय ) ।

३ यमचक्रम् — "अष्टाविंशोर्द्धगा रेखा अष्टाविंशतिस्तिर्यग्गाः । यामचक्रं भवत्येव यदुक्तं यादियामले । कृत्तिकादीनि भान्यत्र पादाक्षरक्रमेण च । साभिजिन्ति न्यसेत् सर्वाण्यष्टाविंशतिसंख्यया । यो ग्रहो यत्र धिष्ण्यांशे तत्रैव न्यसेद्ग्रहम् । वेधयेत् सहस्रवर्णं शुभो वाप्यशुभोऽपि वा । आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् । द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम् । यस्य नामाक्षरं विद्धमयचक्रे ग्रहेण तु । क्रूरै रिष्टं, शुभैर्लाभमिष्टार्थं सिद्धिर्न संशयः । क्रूरोभयस्थिते वेधे मृत्युर्विघ्नं शुभाशुभे । शुभोभयगते वेधे व्याधिपीडा च मरणम् । वैधव्यञ्च विवाहे तु यात्राकाले महाभयम् । रोगे मृत्यू रणे भङ्गः क्रूरवेधे न संशयः । अद्रयः सागरा नद्यो देशग्रामपुराणि च । क्रूरवेधे विनश्यन्ति नात्र कार्य्या विचारणा । चन्द्रसूर्य्यांशको विद्धो भवेद्यात्रापराधके । तस्मान तद्दिनं वर्ज्यं सर्वदा शुभकर्मणि"

४ छत्रत्रयचक्रम् — "आदौ चक्रं समालिख्य छत्रत्रयसुशोभितम् । अश्विन्यादीनि ऋक्षाणि सप्तविंशतिभानि च । अश्विन्याद्यं मघाद्यञ्च मूलाद्यञ्च क्रमेण च । उत्तरे पूर्वके याम्ये चैतच्छत्रत्रयं मतम् । प्रतीचीमध्यरेखायामीशानाच्छत्राधिपः । आग्नेयान्त नराधीशस्तन्मध्ये च गजाधिपः । अश्वाध्यक्षो गजाध्यक्षो नराध्यक्षः क्रमेण च । एषां छत्रविभागेण ज्ञातव्यं हि शुभाशुभम् । अन्येषां भूभृतां यच्च यत्र छत्रे व्यवस्थितम् । तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदम् । यत्र छत्रे स्थितः सौरिर्भङ्गं तस्य विनिर्दिशेत् । फलञ्च चामरादीनां प्रत्येकं च प्रदास्यते । चामर कलस पीठा छत्र दण्ड पताकम् । आसन कीलक रज्जुरेव भेदाः प्रकीर्त्तिताः । चामरे १चपलता वायोरनावृष्टिश्च जायते । दुर्भिक्षं च भवेद्घोरं प्रजापीड़ा न संशयः । कलसस्थे २भवेद्युद्धं रणे भङ्गो महद्भयम् । वाहनधान्यादिकं सर्वं जायते नात्र संशयः । पीठासस्थे ३चार्कपुत्रे चक्ररात्री विनश्यति । चलचित्तो भवेद्राजा भयभीता च मेदिनी । यदाक्रमणमये सौरिश्छत्रे ४ दण्डे ५ पताके ६ । तदा तस्य भवेद्भङ्गश्छत्रस्यापि न संशयः । आसनस्थ भवेन्नाश आसनस्थे ७ शनैश्चरे । युवराजमय कीलेद८ यत्न रज्जुसंस्थिते ९ । सौम्ययुक्तोऽतिचारस्थः शनिश्छत्रफलो न हि । यक्रेण क्रूरयुक्तश्च सर्वं क्रूरं करोति सः । शनिराहुकुजादित्यायदाजीवेन्दुसंयुताः । छत्राधीशराज्यस्य निश्चितं छत्रभङ्गदाः । क्रूरचतुष्टयं चैव बुधचन्द्रेण संयुतम् । पूर्वं छत्रविनाशाय कथितं पूर्वसूरिभिः । एवं पापचतुष्कं च यदा शुक्रेन्दुसंयुतम् । दक्षिणाधिपतेश्छत्रविनाशो भाषितो बुधैः । एवमन्येषु राज्येषु यत्र यत्र च सम्भवः । उभयग्रहसमायोगाच्छत्रभङ्गं विनिर्दिशेत् । यथा हुतवहः सौरिस्तथा सौम्यफलो गुरुः । भौमसौ शुक्राद्द च रविचन्द्रौ बले समौ । यथा फणिकरा क्रूरास्तथा सौम्या शुभप्रदाः । क्रूरयुक्तो भवेत् क्रूरश्चन्द्र सौम्ययुतः शुभः । सौम्यक्रूरा यदा छत्रे अष्टावेकत्र संस्थिताः । छत्रभङ्गो भवे-

स्तस्य परचक्रागमेण च। न्टपनामर्चगोराह्न' केतुर्वा यस्य संस्थित । छत्रभङ्गोभवेत्तस्य विपदानेन भूपते । न्टगयां साहसं यात्रां दुष्टाश्वगजवाहनम् । विपहञ्च त्यजेद्राजा छत्रस्थे क्रूरखेचरे । एवं ज्ञात्वा यदा राजा करोति ग्रहशान्तिकम् । यदुक्तं यामले तन्त्रे तेन शान्तिर्भविष्यति” इति

५ सिंहासनचक्रम्(२)—“अथातः सम्प्रवक्ष्यामि चक्रं सिंहासनं त्वयम् । येन विज्ञातमात्रेण क्रियते राज्यनिर्णय । सप्तविंशतिनक्षत्रैर्वैकैकन्तु नवात्मकम् । अश्विनीमघमूलाद्य पञ्चनाडीविभेदितम् । अश्विन्याद्युत्तरे भागे मघाद्यं पूर्वतः स्थितम् । मूलादा दक्षिणे भागे ज्ञातव्यं न्टपतिस्त्वयम् । इतरेषु च राज्येषु न्टपनामर्क्षतोवदेत् । शुभाशुभमिदम् सर्वं यस्य यत्र शनि स्थित । नाडिकापञ्चभेदेन एकैकस्याऽऽसनं भवेत् । आधारमासनं पट्ट सिंह सिंहासनं तथा । आधारादिफलं सर्वमेकैकस्य वदाम्यहम् । ग्रहवेधवशाज्ज्ञेयं सौम्ये क्रूरे शुभाशुभम् । न्टपस्याऽऽधारनाभर्क्षे यदा पट्टाभिषेचनम् । पराधीनगतं राज्यं कुरुते नात्र संशय । आसनस्थेन नक्षत्रेण नीतियुक्तो भवेन्नृप । प्रधानपुरुषादेशो प्रजाशान्तिकरो भवेत् । पट्टनक्षत्रे यदा राजा चोपविष्टो यदासने । पूर्वराजस्थितेस्तुल्यं चिरं पालयते महीम् । सिंहरूपी भवेद्राजा सिंहनक्षत्रासने स्थित । स प्राप्नोति प्रियोनित्यमसाध्यो मन्त्रिणां सदा । सिंहासनगते नक्षत्रे तेजस्वी भीषणाकृतिः । चलचित्तो महाक्रोधी प्रजापीडाकरोन्टप । तत्कालेन्दुगते नक्षत्रे क्रूरनिर्वेधनाडिके । शुभावस्थे शुभलग्ने सत्थायी न्टप आसने । ईदृशे च समायोगे उपविष्टो यदासने । उच्छिद्य शत्रुसंघातमेकच्छत्रं करोति सः । क्रूरग्रहगतनाद्यासुपविष्टो यदासने । बन्धनं भूमिनाशश्च तथा न्टत्युः प्रजायते । आधारादिफलं सत्र क्रूरैरेव शुभे शुभम् । आधारनक्षत्रग सौरिरनादृष्टिं करोति स । दुर्भिक्षं रौरवं घोरं प्रजान्टत्यु प्रजायते । आसनस्थो यदा सौरिर्युद्धे भङ्गप्रदोभवेत् । अथ वा व्याधिपीडा च शान्दुखञ्च जायते । पट्ट ऋक्षे यदा सौरि पट्टराज्ञी विनश्यति । प्रियो वाथ कुमारो वा मन्त्रिवर्गस्तयोऽपि वा । सिंहे सिंहासने वाथ यदि तिष्ठति सूर्यजः । तदा न्टत्युर्न सन्देहो यदि शक्रसमोन्टपः । शन्यर्कराहुमाहेया यदा चन्द्रर्क्षसंयुता । यस्यासनगता एते सदा तस्य क्षयङ्कराः । क्रूरयुक्तोऽतिवक्रश्च क्रूरनाडीगतोऽपि वा । आसने चन्द्रयोगेण कालरूपी शनैश्वर । एवं शुभफलं दद्याद्देवमन्त्री न संशय' । करोति विपुलं राज्यं यस्यासनगतो गुरु”

६ कूर्मचक्रम्(५)—“कूर्मचक्रं प्रवक्ष्यामि यदुक्तं कौशलागमे । येन विज्ञातमात्रेण ज्ञायते देशनिर्णय । यस्य स्कन्धे क देशस्था देवास्तिस्त्रिशकोटय' । स मेरु पृथिवीमध्ये श्रूयते दृश्यते न तु । तादृशाः पर्वताश्चाष्टौ सागरा द्वीपदिग्गजाः । सर्वं तु विधृता भूम्या सा धृता येन तं शृणु । दंष्ट्रया सा वराहेण विधृता सवराधरा । मुस्तास्तनतोयस्य शोभते न्टत्तिका यथा । ईदृशोऽपि महाकायो वराहः शेषमस्तके । तस्य चूडामणेरूर्द्ध शोभते मशकोपम । एवंविध स शेषोऽपि कुण्डलीभूय संस्थित । कूर्मपृष्ठैकभागेन विसतन्तुरिवाबभौ । वपु स्कन्ध शिरः पुच्छनखाङ्घ्रिप्रभृतीनि च । मानेन तस्य कूर्मस्य कथयामि प्रयत्नतः । शङ्को शतसहस्राणि योजनानि वपु स्थितम् । तदर्द्धेन भवेत् पुच्छं पुच्छार्द्धेन तु कुक्षिकम् । ग्रीवाऽस्याऽयुतकोटीभिर्मस्तकं सप्तकोटिभि' । नेत्रयोरन्तरं तस्य कोटिरेका प्रजायते । मुखं कोटिद्वयं तस्य द्विगुणेन च पादयो । अङ्गुलीना नखाग्रे तु योजनायुतसंख्यया । एवं कूर्मप्रमाणन्तु कथितं चादियामले । तस्योपरिस्थिता चेयं सप्तद्वीपवती मही । कूर्माकारं लिखेच्चक्रं सर्वावयवसंयुतम् । पूर्वभागे मुखं तस्य पुच्छं पश्चिममण्डले । पूर्वापरं लिखेद्देवं वेधस्योत्तरदक्षिणे । ईशानराक्षसे वेध वेधमाग्नेयमारुते । नाभिशीर्षचतुः पादकुक्षिपुच्छेषु संस्थिते । तारात्रयाङ्किते ऋक्षिन् सौरिं यत्नेन चिन्तयेत् । अधिके मलिके तत्र पादार्द्धेषु भमण्डलम् । चतुर्विंशति संख्या स्युस्तांश्च हन्ति शनि क्रमात् । अश्विन्याद्युत्तरे भागे मघाद्या पूर्वत स्थितम् । मूलं च दक्षिणे भागे ज्ञातव्यं न्टपतित्रयम् । व्यापकग्रहराशिस्थे चन्द्रे मन्दोविशेषदा । यद्यद्भिष्ण्यप्रपदार्द्ध च तत्र दोषा भवन्त्यमी । अतिवृष्टिरनावृष्टिर्मूषिका शलभा शुका । स्वचक्रं परचक्रञ्च सप्तैता ईतय स्मृता । कृत्तिका रोहिणी सौम्य (५) कूर्मनाभीगतं त्रयम् । साकेता मिथिला चम्पा कौशाम्बी कौशिकी तथा । अहिच्छत्र गया विन्ध्यमन्तर्वेदी च मेकला । कान्यकुब्जं प्रयागश्च मध्यदेशो विनश्यति । रौद्रस्पुनर्वस्व पुष्य कूर्मस्य च शिरःस्थितम् । सगौडो हस्तिबन्धश्च पञ्चराटश्च कामरूः । नरेन्द्रोच तथा ज्ञेया मगधश्च तथैव च । सूरसेनो वने-

पातः स्वर्भानुः सिंहिकासुतः । दैत्यश्छाया शिरोवक्त्रं चक्रारिश्च विधुन्तुदः । पुच्छं केतुः शिखी सर्पो गुदः शुद्धं घटोऽमतम् । उत्पातो विषगर्भश्च धूम्रकालः प्रहान्तकः । कृत्वाधारगता राहुः सर्परूपेण संस्थितः । तस्य चक्रं प्रवक्ष्यामि राहुकालानलात्मकम् । शलाकाष्टकं चक्रं योगादौ कृत्तिकादिकम् । साभिजित् सप्तमालिख्य चाष्टाविंशतितारकाः । यत्र ऋक्षस्थितो राहुर्वदनं तद्विनिर्दिशेत् । मुखात् पञ्चदशे ऋक्षे पुच्छं तस्य व्यवस्थितम् । एकोत्तरशतं ख्याताः जायन्ते तत्र केतवः । व्याप्नुवन्तो जगत् सर्वं सप्तलोकसमन्विताः । राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश । त्रयोदशाऽपि भोग्यानि मृतपक्षः प्रकीर्त्तितः । मृतपक्षे कृशाङ्गस्य गुदः जीवाङ्गमध्यगः । प्रश्नसन्देहं राहोर्ज्ञातव्यं स्वरवेदिभिः । जीवपक्षे क्षपानाथे मृतपक्षे रवौ स्थिते । तस्मिन् काले शुभा यात्रा विपरीता तु हानिदा । चन्द्रादित्यौ यदा युक्तौ जीवपक्षव्यवस्थितौ । तत्र क्षेमं जयो लाभो यात्राकाले न संशयः । मृतपक्षे यदा काले संस्थितौ चन्द्रभास्करौ । तदा हानिर्भयं भङ्गो मृत्युर्यात्राफलं मतम् । जीवपक्षस्थिते चन्द्रे कार्य्यं स्यादमृतोपमम् । मृतपक्षे मृतमेव यतश्चन्द्रबलात् बलम्” तत्राङ्गभेदेन फलभेद उक्तस्तत्

राहुषडङ्गविभागस्तु यथा,— “अतः षडङ्गभेदेन राहुचक्रं वदाम्यहम् । मुखं हृदुदरं गुह्यं पुच्छं मस्तकमेव च । मुखैकं हृदये सप्त षड्क्षाणि तथोदरे । एकैकं गुह्यगं तस्य षट् पुच्छे

“मुखाद्यङ्गनामभेदं सप्तमस्तके मुखाद्यङ्गस्य नामानि फलं चास्य वदाम्यहम् । यथोत्तरं क्रमेणैव चन्द्रार्कभ्रमणेन च । यत्र ऋक्षे स्थितो राहुस्तस्याभिधानमीरितम् । ग्रसितं कर्त्तरी जिह्वा चन्द्राङ्गं वदनं तथा । राहुधिष्ण्याग्रतः सप्त भुक्तधिष्ण्यानि यानि च । तानि सम्पुटऋक्षाणि कामाङ्गं हृदयं तथा । हृदयाग्रे स्थितायाश्च तारका रससंख्यया । कामाङ्गं जठरं जीवं सम्पुटोदरसंज्ञकम् । तत्पुरोयत्तु नक्षत्रमेकं पञ्चदशं मुखात् । गुदश्च द्युनिलिप्तं गुह्यं केतुश्चन्द्राङ्गकर्त्तरी । गुदधिष्ण्याग्रतो यानि धिष्ण्यानि रससंख्यया । पुच्छं सूर्य्याङ्गवज्राङ्गपृष्टमृत्युस्तथैव च । शेषाणि सप्त भान्यत्र मध्यस्थान्यस्य पुच्छयोः । कपालं मस्तकं शीर्षं रुद्राङ्गं भोगिमण्डलम् । स्थिररूपी स्थितो भानुश्चररूपश्च चन्द्रमाः । क्रमेणैकैकशोऽङ्गानां योगषट्कं वदाम्यहम् ।

मुखादियोगषट्कम्—“राहुवक्त्रे स्थिते सूर्य्ये चन्द्रे हृदयसंस्थिते । यायिनो विजयस्तत्र स्थायिनो भङ्ग आहवे । मुखाग्रसंस्थिते सूर्य्ये चन्द्रे चोदरगे तथा । तत्र यायी जयेद्युद्धे हेलया नात्र संशयः । भास्करे ग्रसिताङ्गस्थे चन्द्रे वज्राङ्गसंस्थिते । स्थायी भङ्गमवाप्नोति यायी जयति सर्वतः । राहुऋक्षस्थितो भानुश्चन्द्रे पुच्छाङ्गसंस्थिते । स्थायिनो विजयो युद्धे यायिनो मृत्युमादिशेत् । राहुजिह्वां गते सूर्य्ये चन्द्रे रुद्राङ्गसंस्थिते । घनाघनौ भवेत्तत्र सैन्ययोरुभयोरपि । राहुऋक्षस्थितो भानुश्चन्द्रस्तत्रैव संस्थितः । न कश्चिज्जयमाप्नोति सैन्ययोरुभयोः क्षयः” ।

हृदयादियोगषट्कम् । “हृदयस्थे दिवानाथे जठरस्थे निशाकरे । निर्द्दिष्टः स्थायिनो मृत्युर्यायी जयति निर्व्रणः । हृदयस्थो यदा भानुः शशाङ्को गुदमाश्रितः । हेलया जयते यायी स्थायी च म्रियते रणे । कामाङ्गके दिवानाथे पुच्छपृष्ठके निशाकरे । स्थायिनो विजयस्तत्र यायिनश्च पराजयः । सम्पुटस्थो यदादित्यो रुद्राङ्गे चन्द्रमाः स्थितः । यायी च भङ्गमायाति किञ्चित्स्थायी जयी रणे । कामाङ्गं याति चेत् भानुश्चन्द्रे राहुमुखस्थिते । संग्रामे विजयी यायी, स्थायिनो भङ्गमादिशेत् । हृदयाङ्गे यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ । देवानपि जयेत् यायी किंपुनर्मानवं बलम्” ।

उदरादियोगषट्कम्—“उदरस्थे दिवानाथे निशानाथे गुदस्थिते । समयुद्धं भवेत्तत्र किञ्चित् यायी जयी रणे । सम्पुटस्थो यदा भानुः पुच्छे भवति चन्द्रमाः । यायिभङ्गो, जयः स्थायिनस्तत्र काले न संशयः । कामाङ्गगः सहस्रांशुर्मस्तकस्थो निशाकरः । यात्रिको भङ्गमायाति स्थाने यायी जयी रणे । भानुरुदरगे यत्र निशेशो राहुवक्त्रगः । विवादी क्षीयते तत्र स्थायी जयति नान्यथा । स्वर्भानोरुदरे भानुर्हृदये तारकाधिपः । अनायासेन संग्रामे यायिनो जयमादिशेत् । उदराङ्गे यदा युक्तौ चन्द्रादित्यौ व्यवस्थितौ । तदा सन्धिश्च सन्देहः सैन्ययोरुभयोरपि” ।

गुदादियोगषट्कम्—“केतुधिष्ण्ये स्थिते सूर्य्ये चन्द्रे वज्राङ्गसंस्थिते । यायिभङ्गो, जयी स्थायी भाषितं ब्रह्मयामले । गुदे तीक्ष्णांशुसंयुक्ते कपालस्थे निशाकरे । यायी च भज्यते तत्र स्थायी जयति नान्यथा । गुदऋक्षस्थितसूर्य्यो राहुऋक्षस्थितः शशी । महाहवं भवेद्घोरं किञ्चित् स्थायी जयी रणे । भानुरुद्ग्रसिते ऋक्षे शशभृत्

सम्पुटे यदि । यायिनो विजयस्तत्र स्थायिनो भङ्गमादिशेत् । गुरुभे वर्त्तते भानुर्जठरे रोहिणीपतिः । दण्डयित्वा रिपोः सैन्यं यातास्येति निजालयम् । गुदे दिनकरो यत्र तत्रैव यामिनीकरः । समयुद्धं भवेत्तत्र किञ्चिदागन्तुको जयी" ।

वज्राङ्कयोगषट्कम्—"सूर्य्याङ्कस्य सहस्रांशुर्ज्जङ्घायां शीतगुः स्थितः । यायिनो विजयं विद्यात् स्थायिनश्च पराजयम् । पुच्छक्षेत्रस्थितो भानुः कुक्षिस्थे तु चन्द्रमाः । यायिनो मृत्युरायाति जयलाभो च स्थायिनः । पुच्छषट्के यदादित्यः कालाङ्के चन्द्रमाः स्थितः । यायी विलुप्यते तत्र शक्रतुल्योऽपि वैरिभिः । अंशुमाली स्थितो वस्ते जठरस्थे सुधाकरे । आदत्तेऽरिश्रियं सर्वां जित्वा यायी रणाङ्गणे । भास्करे राहुपुच्छस्थे मृगाङ्के गुदमाश्रिते । समयुद्धं भवेत्तत्र किञ्चित् यायी जयी रणे । सूर्य्याचन्द्रमसौ यत्र वज्राङ्के यदि संस्थितौ । सैन्ययोरुभयोस्तत्र वधो भवति निश्चितम्" ।

कपालादियोगषट्कम्—"रुद्राङ्कस्थे दिवानाथे राहुजिह्वाङ्कगे शशी । स्थायिनस्तु जयस्तत्र भङ्गो भवति यायिनः । राहुशीर्षस्थिते मित्रे शशाङ्के हृदि संस्थिते । विना युद्धेन लक्ष्मीयाद्यायी सर्वामरिश्रियम् । कपालसंस्थितः सूर्य्यः सम्पुटस्थो यदा शशी । विना जीयते तत्र स्थायिनो भङ्गमादिशेत् । मस्तके दिवानाथे धिष्ण्यनाथे गुदाश्रिते । यायिनो विजयो युद्धे स्थायिनस्तु पराजयः । राहुशीर्षगतो भानुः पुच्छस्थे तु निशाकरे । अन्योऽन्यं विग्रहं घोरं युद्धं भवति दारुणम् । दिनेशो राहुरुद्राङ्के चन्द्रस्तत्रैव संस्थितः । विनाशः कोषराज्यस्य यायिनो मृत्युमादिशेत् ।'

राहुदशाङ्गविभागचक्रम्—"हृदयादीनि चाङ्गानि जिह्वान्तानि क्रमेण च । दशसंख्यान्यङ्कयुक्ते राहुचक्रस्य मध्यतः । पुष्पितं फलितं चैव निःफलं भटितं गुदम् । राजसत्तामसं छद्मं मृतं जिह्वा क्रमेण च । पुष्पिते त्रीणि धिष्ण्यानि क्षेमलाभकराणि च । शत्रुभङ्गो भवेद्युद्धे यात्रा मासेन साधदा । ततश्चत्वारि धिष्ण्यानि पञ्चकेण फलन्ति च । गतराज्योऽपि स्वं देशं यायी तु लभते ध्रुवम् । अफलेषु त्रिधिष्ण्येषु पराभासैर्यायिनं प्रति । सन्धिं वीरां कृत्वा देशं स्थायी गच्छति निश्चितम् । फलं प्राप्नोति वर्षेण भटितेषु त्रितारके । कृत्स्नखण्डमित्रादि देशकोषपरिग्रहैः । शुद्धैकेन भङ्ग लक्ष्मी पट्टिनी प्रियवादिनी । रूपयौवनसम्पन्ना मासयुग्मेन लभ्यते । विपक्षस्य भवेद्वृद्धिर्युद्धे भङ्गस्तथैव च । रोगपीडा भवेद्दर्पं गजवाज्यं त्रितारकैः । कृत्स्नखण्डमित्रादि देशकोषपरिग्रहा । षड्भिर्मासैर्विनश्यन्ति यायिनस्तासमत्यये । नामभाग्ये चतुर्थे तु तारकाद्वयसंयुक्ता । सर्व्वनाशकरा प्रोक्ता मासैकेन न संशय । ततस्त्रीणि मृत्युभानि राजमृत्युप्रदानि च । आरोग्यतस्य गुल्मस्य पक्षेकेण फलन्ति च । युद्धे भङ्गो-महाभीतिर्द्रव्यनाशः कुलक्षयः । सद्यो मृत्युं लभेद्यायी राहुचक्रे सुनिश्चितम् ।" इति दशाङ्गफलम् ।

"युद्धकाले यदा शीघ्रं यात्रायोगो न लभ्यते । उत्पाद्येते तदा शीघ्रं तत्कालेन्दुदिवाकरौ । दृष्टनाड्योऽङ्गाधिष्ण्यैः षष्टिभागात्मकौ । अश्विन्यादीन्दुभुक्तेन युतस्तत्कालचन्द्रमाः । यथा चन्द्रस्तथा सूर्य्यं कर्त्तव्यं एकाधिकं । अहोरात्रस्य मध्ये तौ विभ्रान्तौ धिष्ण्यमण्डले । स्थिरचक्रे पुरा प्रोक्तं चन्द्रादित्यफलं मया । चरचक्रेऽप्यनेनैव प्रकारेण फलं भवेत् । सर्व्वेषु शुभकार्य्येषु यात्राकाले विशेषतः । सर्व्वकाले शुभश्चन्द्रो ज्ञेयो हृदि गुदोदरे । पुच्छषट्के कपालस्थे शशाङ्के राहुवक्त्रगे । बन्धनं हानिर्मृत्युश्च सर्व्वकार्य्येषु जायते । हृदि गुदोदरे चन्द्रे विवाहे मन्त्रिति द्वयम् । नैव वैधव्यविद्वेषौ सुखे पुच्छे तु मस्तके । पुष्पिते फलिते शुद्धे प्रश्नकाले शशी शुभः । अफले भटिते मध्ये मृत्युः शेषाङ्गगे विधौ । ऊर्द्ध्वं तु खेचरं चक्रमधोभूचरमुच्यते । उभयोः सन्निपातेन राहुकालानलं मतम्" ।

१० सूर्य्यकालानलचक्रम्—"ऊर्द्ध्वगास्त्रिस्रः शूलाग्रास्तिर्य्यक् च संस्थिताः । द्वे द्वे भागत्रौ स्थिते कोणे खड्गयुग्मं तथैकया । मध्ये त्रिशूलदण्डाधो भानुभाद्यं समालिखेत् । साभिजिच्च प्रदातव्यं सव्यमार्गेण सर्व्वदा । शूलाष्टके जयो लाभः खड्गषट्के तथा पुनः । खड्गयुग्मे रुजाभङ्गौ मृत्युः शूलत्रये स्फुटम् । नामभञ्च स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् । अधोगतैश्च नक्षत्रैर्द्वेगो-बन्धनम् । विवाहे विग्रहे युद्धे रोगार्त्तौ गमने तथा । सूर्य्यकालानलं चक्रं ज्ञातव्यं च प्रयत्नतः ।" (रोगे च कुजनक्षत्र दिन कृत्तिकातु युतके । प्रयाणे कृत्तिका लेख्या अन्यत्रार्कस्य दीयते) । क्वचित् अधिकपाठः

११ चन्द्रकालानलचक्रम्—"चन्द्रकालानलं चक्रं व्योमाकारं लिखेद्बुधः । चतुर्दिक्षु त्रिशूलानि मध्ये त्रिशूलानि कार-

येत्। पूर्वत्रिशूलमध्यस्थ टीकाद्यादि लेखयेत्। मध्य मार्गेण गन्तव्या अष्टाविंशतितारका। त्रिशूले च बहिर्मध्ये सर्वे वह्निस्त्रिशूलके। त्रिशूले चक्रबाह्ये च चक्रमध्ये तथैव च। नामऋक्षं स्थितं यत्र तत्र ज्ञेयं शुभाशुभम्। त्रिशूले च भवेन्मृत्युर्मध्ये च बहिरिष्टकम्। नाम भेन जय यत्रा चन्द्रगर्भे न संशय। वर्ज्जनीय प्रयत्नेन प्रथमादित्रिपञ्चकम्। फल द्वादशक चात्र फलरूप न संशय। लाभालाभौ सुखं दुःखं जय चैव पराजय। चन्द्रकालानल चक्रं ज्ञात्वा समय-वर्ज्जितम्।

१२ घोरकालानलचक्रम्—"सप्ताकारात्मक चक्रं लिखित्वा चन्द्रभान्वित। त्रिषु त्रिषु च ऋक्षेषु नव सूर्यादयो-ग्रहा। यदृक्षे नामनक्षत्रं युद्धकाले च जायते। फल-न्तस्य प्रवक्ष्यामि एकैकस्य यथाक्रमम्। भानुना शोक-सन्ताप शशाङ्क क्षेमलाभद। भूसुतो मृत्युमाधत्ते बुधे-बुद्धि प्रजायते। जीवे लाभ, शुभं शुक्रे, सूर्य्यपुत्रे भङ्गभयम्। राहुणा घातपातश्च केतौ मृत्युर्न संशय। यात्राजन्मविवाहेषु सङ्ग्रामे विग्रहेऽपि वा। घोर-कालानलं चक्रं ज्ञात्वा कर्म समारभेत्"।

१३ गूढकालानलचक्रम्—"सप्तरेखोद्भवं चक्रं चन्द्रभाद्यं प्रकल्पितम्। लिखित्वा कल्पयेच्चक्रं यद्गुप्तं जयकाङ्क्षिभि। दिनर्क्षाद्गण्यते चक्रे गठसम्पुटकर्त्तरी। दण्ड धयान दशाङ्क ज्ञातव्य स्वरवेदिभि। यत्र ऋक्षे स्थितचन्द्रत्रयादौ त्रीणि गूढकम्। सम्पुटे नव भान्य-त्र कर्त्तरी च ततस्त्रिभि। दण्डे धिष्ण्यानि च त्रीणि कथाने विष्ण्वग्नाराम्। वज्राङ्गे त्रीणि धिष्ण्यानि चङ्क-ल्येति निर्णय। यदृक्षे नामनक्षत्र युद्धकाले च जायते। ज्ञात्वा शुभाशुभं तस्य गूढकालानले स्थितम्। गूढस्थे विग्रहो, युद्धे जयो भवति सम्पुटे। कर्त्तर्यां समर युद्ध, दण्डे भङ्गो न संशय। कथाने च भवेन्मृत्युर्वज्रे तस्य भङ्गभयम्। गूढकालानलं चक्रं भाषितं ब्रह्म-यामले"।

१४ संग्रामकालानलचक्रम्—"द्वादशार लिखेच्चक्रं मेषादि द्वादशान्वितम्। मेषयुग्मस्थं तत्रैव विन्यास रविचन्द्रयो। लिखेत् मकरान्तं च कर्कटाद्यं ततः परम्। कुम्भादिकर्कपर्य्यन्त चन्द्रक्षेत्रं न संशय। चन्द्रक्षेत्रगते सूर्य्ये चन्द्र-भावैव संस्थित। स्थायिनो विजयं ब्रूयात् स्थायिनो भङ्ग-मादिशेत्। सूर्य्यक्षेत्रे गते चन्द्रे सूर्य्यक्षेत्रैव संस्थित।

यायी भङ्गमवाप्नोति स्थायिनो विजयो भवेत्। सूर्य्ये सूर्य्याङ्कसंयुक्ते चन्द्रे चन्द्राङ्कसंगते। तदा काले भवेद्दुर्म्मिर्युद्धं तस्य विपर्य्यये। सूर्य्यक्षेत्रगते चन्द्रे चन्द्रक्षेत्रगते रवौ। महायुद्धं प्रवर्त्तेत सङ्गार सैन्ययोर्द्वयो। यात्रायां युद्धकाले च चक्रमेतद्वि-लोकयेत्। अत्र विशेष। "एकेन क्रूरवेधेन विद्धो भवति चन्द्रमा। स्वल्प युद्धं तदा काले जायते नात्र संशय। द्वाभ्यां वापि त्रिभिर्व्वापि पापविद्धो यदा शशी। तदा युद्धं महाघोरं सैन्ययोरुभयोरपि। पक्षे पृष्ठे भवेद्युद्धमश्वे पदातिचारिभि। मध्यगत्वा भवेन्मध्ये पापे सौम्यैस्तु तत् न हि। ऊर्द्ध-दृष्टौ भवेद्दूरं मध्यदृष्टौ तु मध्यमे। अधोदृष्टा-वधकाश्च केकरे पार्श्वतो भवेत्। शनिराहुकुजादित्या-स्त्वेकरेखागता यदि। चन्द्रेण संयुतास्ते च तदा पात-चतुष्टयम्। शनिना चन्द्रयुक्तेन जीवस्य भ्रमतन च। तदा हर्षर्भयेद्भूम सर्व्वोपद्रवमयोचितम्। भौमे-नाग्निर्भवेत् पातो राहुणा कौणपातकृत्। भानु-ना चण्डवातश्च सर्व्वे सर्व्वे भवन्ति च। शुक्रेण जलपातोऽपि पांशुपात शशाङ्कजे। गुरुणा वज्रना-पात दिग्दाह केतुना भवेत्"।

१५ सघट्टचक्रम्—"अश्विन्यादि लिखेत् चक्रं सप्तविंशति तारकम्। त्रिकोणं नवभिर्वेध कर्त्तव्यस्त्रियुग्मानि। अश्विनीरेवतीवेधो मेषयाम्यनिजद्वयो। मघापौष्णो मघासेधे अश्लेषामूलयोस्तथा। एव सघट्टचक्रं च कार्य्यं सङ्घगता ग्रहा। भूपनामर्क्षघट्टे युद्ध भवन्ति नान्यथा। मिश्रवेधे सौम्यवेधे च युद्धं नास्ति न संशय। क्रूरवेधे भवेद्युद्धं तत्काले घोरदर्शनम्। युद्धकाङ्क्षी भवेद्राजा यस्य भं क्रूरवेधितम्। युद्धदेशो भवेत् सौम्ये तथा वेधविवर्जित। सौम्यक्रूरविभागेन मिश्रामिश्र क्रमेण च। अश्वातिचारगत्या च युद्धं स्वल्पं नास्ति च"।

१६ कुलाकुलचक्रम्(२)—"द्वितीया दशमी षष्ठी कुलाकुल-मुदाहृतम्। विषमा अकुला सर्व्वाः शेषाश्च मिश्रका। रविचन्द्रौ गुरुः सौरिश्चत्वारोऽप्यकुलाः मता। भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुल। वार-घाट्टाभिजिन्मूल कुलाकुलमुदीरितम्। कुलानि समधिष्ण्यानि शेषाण्यकुलानि च। तिथौ वारे च नक्षत्रे अकुले यायिनो जय। कुलाख्ये स्थायिनोऽन्य-त्र सन्धिरेव कुलाकुले"।

तद्दर्व्यास्तु रणे त्याज्या न कर्त्तव्या गडाधिपा। खवर्गपञ्चमे स्थाने खण्डभङ्गश्च जायते। अवर्गाद्यष्टकञ्चैव पूर्वाद्यष्टदिशा क्रमात्। कोटचक्रं लिखेच्चादौ चतुरस्रं त्रिनाडिकम्। कृत्तिकादीनि भान्यत्र साभिजिन्ति न्यसेद्बुध। बहिः कोटे च मध्ये च मध्ये दुर्गे बहिर्बहिः। प्रवेशो निर्गमस्तत्र ज्ञातव्य खरवेदिभिः। ऐशात् प्रवेशधिष्ण्यानि मध्यात् प्राचीविनिर्गम। वह्निदिग्भान्यत्र प्राकारे तारकाष्टकम्। दुर्गमध्ये तथा चाष्टौ तन्मध्ये स्तम्भतुर्य्यकम्। कृत्तिका पुष्यसार्पश्च मघास्वातीविशाखकम्। अनुराधाभिजित् कर्णौ धनिष्ठाश्वियमाह्वयम्। आर्द्रा पुनर्वसु भाग्य चित्रा ज्येष्ठा तथोत्तरा२। शतभ रेवती चैव प्राकारे तारकाष्टकम्। मृगरौद्रोत्तराहस्तमूलमाषाढपूर्वकम्। पूर्वोत्तरा तथा भाद्रा मध्ये ताराष्टक तथा। प्राच्यां रौद्र यमे हस्त पूर्वाषाढा च पश्चिमे। कौवेर्य्यामुत्तरा भाद्रा ह्येतत्स्तम्भचतुष्टयम्। कृत्तिकाद्यं मघाद्यञ्च मैत्राद्य वासवादिकम्। त्रीणि त्रीणि प्रवेशे च द्वादशर्क्षाणि निर्गमे। कृत्तिकादिरयं न्यास सुबोधार्थं प्रदर्शित। दुर्गभाद्गणना चात् पञ्चैर्बोध्यं तत फलम्। दुर्गनामस्थितो वर्णोवर्गोश्चारित स्फुटम्। तदाद्यादि लिखेच्चक्रं क्रमात् स्वरविचक्षणैः। चतुरस्रं १ वृत्त २ दीर्घ ३ त्रिकोणं ४ वृत्तदीर्घकम् ५। अर्द्धचन्द्रं ६ तथा ज्ञेयं गोस्तन ७ धनुराकृति ८। चक्रस्य यथा न्यासो भूमिभागक्रमेण च। प्रवेशे निर्गमे ह्यस्ति तथा वृत्तादिसप्तके। दुर्गे भित्तिविभागेन दातव्यं धिष्ण्यमण्डलम्। तत्रस्थे खेचरे सर्वं फल वाच्यं यथोदितम्। बाह्यभे मध्यभे वापि यत्स्था क्रूरखेचरा। तत् स्थाने क्षतं यत्र हन्ति दुर्ग स्वसैनिकम्। बुधगुर्वेन्दुजोयाश्च सदा सौम्या ग्रहा मता। शन्यर्कराहुकेत्वारा मता क्रूरा बुधैरिमे। त्रिप्रकारो ग्रहे चारो वक्र शीघ्र समोमत। उच्चनीचसमास्ते च त्रिधा चक्रे भ्रमन्ति च। ऊर्द्ध चाध समास्तिर्य्यगादिभेदश्चतुर्विध। स्वर्क्षे मित्रे सम शत्रौ चतुर्धा च दृष्टे ग्रहः। सूर्य्यभक्ता उदीर्यन्ते शीघ्राश्चार्के द्वितीयगे। समास्तृतीयगे यान्ति मन्दगत्या चतुर्थगे। वक्रः स्यात् पञ्चषष्ठेऽर्के त्वतिवक्रोऽष्टसप्तमे। नवमे दशमे भानौ जायते कुटिला गति। शीघ्रगाश्च भवन्त्यर्के द्वादशैकादशे तथा। राहुर्वक्र सदा ज्ञेयो रवीन्दू शीघ्रगौ तथा। शीघ्रोऽतिचारगत्या च समश्च सप्तमन्दया।

वक्रातिवक्रकौटिल्यगत्या वक्रग्रहोमत। क्रूरोऽतिक्रूरता याति सौम्योयात्यतिसौम्यताम्। वक्रचारे चतुर्दशे शीघ्रे तुङ्गविपर्य्यय। मेषो वृषोमृग कन्या कर्क मीनतुलास्तथा। रव्यादीनां क्रमादुच्चं नीचं यत्तस्य सप्तमम्। उच्चान्नीचाच्च यत्तुर्य्यं समस्थान तदुच्यते। उच्चस्थं मध्यमं नीच वक्रे यत् व्यवस्थितम्। ऊर्द्धदृष्टी च भौमार्कौ केकरौ बुधभार्गवौ। समदृष्टी च जीवेन्दू शनिराहू त्वधोदृशौ। सुहृदोऽर्केन्दुभौमेज्या एवं शुक्रज्ञभानुजा। अन्योन्यं वैरिणोज्ञेता राहो सर्वे च शत्रव। स्वक्षेत्रस्थे बलं पूर्णं पादोन मित्रभे ग्रहे। अर्द्धं समगृहे ज्ञेयं पादं शत्रुगृहस्थिते। क्रूरोगर्भे पुर हन्ति प्राकारे खण्डकारक। बहिःस्थो वेष्टके सैन्ये मृत्युदो नात्र संशय। क्रूरागर्भे, शुभा बाह्ये निश्चितन्ते पुरान्तका। सौम्या मध्ये बहिः क्रूरा असाध्यं दुर्गमुच्यते। क्रूरचतुष्टय मध्ये प्राकारे सौम्यखेचरा। भेदोभङ्गो भवेत्तत् विना युद्धेन दृश्यते। प्राकारे संस्थिता क्रूरामध्ये सौम्यग्रहा यदि। दुर्गभङ्गस्तदुत्पन्ने भङ्गमायाति वेष्टक। मध्ये नाडीस्थिता सौम्याः क्रूरा बहिरवस्थिता। सैन्यावर्त्तौर्बहिः शत्रोर्विना युद्धेन जायते। प्राकारे पुरमध्ये च यदा क्रूरा व्यवस्थिता। सौम्या बाह्ये तदा दुर्गमयत्नेनापि सिद्ध्यति। सौम्या मध्ये च कोटे च बाह्ये पापग्रहा यदि। देवैर्ब्रह्मादिभिर्दुर्गं रणारम्भे न दृश्यते। प्राकारबाह्यगा क्रूरा सौम्या मध्यगता यदि। युद्धे प्राकारखण्डश्च पुरभङ्गो न जायते। सौम्या बाह्ये तथा कोटे मध्ये क्रूरग्रहा स्थिता। स्वयं दुर्गं प्रयच्छन्ति वेष्टकस्य गडाधिपा। बाह्याभ्यन्तरगा क्रूरा प्राकारे शोभना ग्रहा। रिपुपक्ष जयं याति विनायुद्धेन निश्चितम्। प्राकारस्था ग्रहा क्रूरास्तिर्मध्ये शुभा स्थिताः। समयुद्ध भवेत्तत्र खण्डपाता दिने दिने। स्तम्भान्तरगता यस्य ग्रहा सौम्या शुभान्विता। भवेयुस्तस्य कोटस्य न नाशस्तु कदाचन। यदि बाणादहं (मिश्र) तत्र यत्रमामीरणोऽग्निके!। तथापि न भय विद्यादिति सत्य च नान्यथा। सौम्या क्रूराग्रहाश्चाष्टौ मध्ये प्राकारबाह्यगा। एकस्था यत्र कुर्वन्ति सङ्ग्राम तत्र दारुणम्। गजाश्वरथभूपाले सामन्तैर्मण्डलेश्वरै। तत्राग्र्यभटामर्द उभयो सैन्ययो. क्षय। बाह्ये यात्रप्रवेशर्क्षे

नक्षत्रं विद्धं क्रूरग्रहेण च । देशग्रामपुरं सैन्यं नरो-नारी विनश्यति"। अधिकमुपयमयन्त्रे १२६२४० दृश्यम् ।

४६ पञ्चशलाकचक्रम्—"तिर्य्यगूर्द्ध्वगता पञ्च द्वे द्वे रेखे च कोणयोः । ईशकोणाग्ररेखायां कृत्तिकां विलिखेद्बुध । विशाखाकृत्तिकावेधो भरण्यानुराधया । धनिष्ठा सार्पयोर्वेधो मघाश्रवणयोस्तथा । शुभाशुभेषु सर्वेषु विवाहे परिवर्जयेत् । यदि विद्धं महादुष्टं क्रूरवेधे-मरद्वयम्" । अधिकमुपयमयन्त्रे १२६२४० दृश्यम् ।

४७ चन्द्रचक्रम्—"चन्द्रसदृशं चक्रं त्रित्रिशूलसमन्वितम् । मध्ये द्वादश भान्यत्र षट् पृष्ठे नव शृङ्गके । मध्ये शूलस्य मध्यस्य शशाङ्कक्षमादितः । सव्येन गण्यते चक्रं यावद्योधस्य नामभम् । शृङ्गे मृत्युर्भयं मध्ये, पृष्ठे भङ्गो महाहवे । चतुरङ्गे कृतौ कोटे दृष्टे युद्धे विशेषतः" ।

४८ भास्करचक्रम्—"रेखात्रयं त्रिशूलाग्रं तिर्य्यग्रेखा-षड्न्वितम् । एकैका कोणगास्तत्र मध्याधोभानुभादितः । अधस्त्रये भवेन्मृत्युस्त्रिभिः कोणगैः शुभम् । द्वादश मध्ये संप्रोक्ता नवचारैव दाहका ।"

४९ प्रथममातृकाचक्रम्—"षोडशोर्द्ध्वगतारेखाः पञ्च रेखाश्च तिर्य्यगाः । कोष्ठकानां भवेद् पश्चिमांशादूस्वरयोजना । पूर्णिमादिविलोमचारान् लिखेत् प्रतिपदादिकान् । तदधो मातृकालेख्या ङञणान्त्यस्वरोज्झितान् । सप्टघ्न नामवर्णाङ्कान् मात्राभेदेन संयुतान् । मुनिभि(७)स्तु हरेद्भागं पश्चात् ज्ञेयं शुभाशुभम् । मात्राधिके भवेल्लाभो मात्राहीने पराजयः । मातृकाया प्रभेदोऽयं तस्मात् ज्ञेयं प्रयत्नतः" ।

५० द्वितीयमातृकाचक्रम्—"द्वादशोर्द्ध्वगता रेखा पञ्च रेखाश्च तिर्य्यगाः । मातृकाक्षरे तत्र षण्डान्त्यस्वरवर्ज्जितान् । कोष्ठकाधो लिखेदङ्कान् पञ्च युग्म त्रिक त्रयम् । षड्द्वयमष्टक त्रीणि नवकैकं तथैव च । नामवर्णस्य या संख्या मात्रासंख्या तथैव च । पिण्डिता नवभिर्भक्ता जयो मात्राधिके रणे ।"

५१ तृतीयमातृकाचक्रम्—"भानुमार्त्तण्डदोर्बाणतिथ्यद्रिरस-दिग्गजाः । नवाङ्कास्तदधः स्थाप्याः पञ्चस्वरकमादितः । ङञणोना हकारान्ता नवधा कोष्ठकक्रमे । नाममात्राक्षराङ्कैक्यमभ्रशेषेऽधिके जयः" ।

"भूबाणादित्यदोर्बाणतिथिवेदाश्वदिग्गजान् । वसुनन्दान्तकान् लिख्य षण्डकोज्झितमातृकाम् । पुन्नामवर्णमात्राणां सङ्ख्यायोगेऽष्टशेषके । मात्राधिके जयो युद्धे मात्राहीने पराजयः" पाठान्तरम् ।

५२ विजयचक्रम्—"अथ सारतरं वक्ष्ये लम्पटाचार्य्यभाषितम् । जयपराजयौ येन नामोच्चारणतः स्फुटम् । लग्नालग्नप्रभेदेन घोषाघोषक्रमेण च । प्रवेशनिर्गमाभ्यां च चक्रं जयपराजयम् ।"

५३ श्येनचक्रम्—"श्येनचक्रं समालिख्य पक्षिरूपं सुशोभनम् । चञ्च्वग्रे भानुभं कृत्वा अष्टाविंशतिभं लिखेत् । कटचैकं चञ्चुकोटिस्थं शीर्षे नेत्रे त्रिकं त्रिकम् । पादे पृष्ठे चतुष्कं च उदरे नव भानि च । नाम ऋक्षं स्थितं यत्र फलं तस्य वदाम्यहम् । चञ्च्वग्रे वधबन्धाय नामर्क्षं च यदा भवेत् । लाभः शीर्षोदरे नेत्रेऽशुभं स्यात् पादपृष्ठयोः ।"

५४ तोरणचक्रम्—"नाडीचतुष्टयं चक्रं लिखित्वा तोरणाकृति । सूर्य्यभाद्विन्यसेत् भानि प्रवेशे निर्गमे तथा । स्तम्भमूले स्थितान्यष्टौ सिंहद्वारे तथाष्टकम् । मालायाम् अष्टकं चैव चतुर्धिष्ण्यानि तोरणे । निर्गमे चन्द्रमा यत्र प्रवेशे यत्र भास्करः । तत्र काले शुभा यात्रा विपरीता च हानिदा । चन्द्रः प्रवेशकक्षस्थो निर्गमस्थो दिवाकरः । अयमन्वनदा यात्रा प्रवेशे तत्र शोभना । चन्द्रादित्यौ प्रवेशर्क्षे अथ वा निर्गमे स्थितौ । मिश्रं फलं भवेत्तत्र प्रवेशे वाऽथ निर्गमे । क्रूरग्रहयुतश्चन्द्रः प्रवेशे वाऽथ निर्गमे । तद्दिने भूभुजां चैव निषिद्धा राजपट्टिका । शुभग्रहयुते चन्द्रेऽपि सिंहद्वार-भसंस्थिते । प्रवेशः पट्टबन्धश्च भूभुजां शोभनः स्मृतः । स्तम्भे सौरिर्न्नृपं हन्ति सिंहे स्वचक्रविग्रहः । मालास्थिते वरं राज्यं तोरणे सर्वसिद्धिदः" ।

५५ अहिचक्रम्—"अहिचक्रं प्रवक्ष्यामि यथा सर्वज्ञभाषितम् । द्रव्यं शल्यं तथा शून्यं येन जानन्ति साधकाः । निधिश्चिह्नमेकस्य सम्भ्रान्तो यत्र भूतले । तत्रचक्रमिदं स्थाप्यं स्थानद्वारमुखस्थितम् । ऊर्द्ध्वरेखाष्टकं लेख्यं तिर्य्यक् पञ्च तथैव च । अहिचक्रं भवत्येवम् अष्टाविंशतिकोष्ठकम् । अहिमत्या च नक्षत्रे तत्-काले यत्र चन्द्रमाः । द्रव्यं शल्यं भवेत्तत्र चन्द्रभास्करसंक्रमे । तत्र पौष्णाश्वियाम्यर्क्षकृत्तिकामघ-भाग्यकम् । उत्तराफाल्गुनी लेख्यं पूर्व्वपङ्क्त्या भसं-ख्यकम् । अहिर्बुध्न्याजपादर्क्षे शतभं ब्राह्मसर्पभम् । पुष्यं हस्तं समालेख्यं द्वितीयपङ्क्तिसंस्थितम् । चित्रं

पुच्छे दुर्दिनं। पादोदरे क्षयेत्। इत्यमवाप्नमौमोऽपि प्राप्ताद्दिनिर्णयकम्। यत्राङ्के स्थितचन्द्रस्य चक्रे शुभाशुभम्। स्कन्धे च सुखानि बोधनगते कर्णे च भिक्षाटनम्, मौर्वे स्यात् अतिरत्न प्रकुक्षिगते स्कन्धे स्थिते शोभनम्। पृष्ठे राजभय च पुच्छमगते पादे भ्रम इत्युक्तमेव चन्द्रभक्त फलं प्रकटितं चक्रे क्रमाद्बुधानाम्”।

६। सप्तनाडीचक्रम्—“अथातः सम्प्रवक्ष्यामि यच्चक्र सप्तनाडिकम्। येन विज्ञातमात्रेण वृष्टिं जानन्ति साधकाः। कृत्तिकादि लिखेद्भानि साभिजिन्ति क्रमेण च। सप्तनाडीव्यवस्थात्र कर्त्तव्या पञ्चमाकृति। ताराचतुष्कवेधेन नाड्येकैका प्रजायते। तासां नामान्यहं वक्ष्ये तथा चैव फलानि च। कृत्तिका च विशाखा च मैत्राख्य भरणी तथा। चण्डाख्या प्रथम नाडी स्वाश्चण्डनाड्यभिधा मता। रोहिणी स्वाति ज्येष्ठानि द्वितीया नाडिका मता। आदित्यप्रभवा नाडी वायुनाडी तथैव च। सौम्यं चित्रा तथा मूलं पौष्णञ्च चतुष्टकम्। तृतीयाऽङ्गारका नाडी दहनाख्या तथैव च। रौद्रं हस्त तथा पूर्वाषाढभाद्रोत्तरा तथा। चतुर्थी सौम्यनाडी स्यात् सौम्या नाडी प्रकीर्त्तिता। पुनर्वसूत्तराफाल्गुन्युत्तराषाढतारकाः। पूर्वभाद्रश्च शुक्राख्या पञ्चमी नीरनाडिका। पुष्यश्च फाल्गुनी पूर्वा साभिजिच्छततारका। षष्ठी नाडी च विज्ञेया बुधाख्या जलनाडिका। अश्लेषश्च मघा कर्णौ धनिष्ठाभं तथैव च। अमृताख्या हि चन्द्रस्य सप्त नाड्यः प्रकीर्त्तिताः। मध्यमार्गे स्थिता सौम्या नाडी तस्याप्युत्तत। सौम्ययाम्यगत ज्ञेय नाडिकानां त्रिकत्रिकम्। क्रूरा याम्यगता नाड्यः सौम्याः सौम्यदिगाश्रिताः। मध्यनाडी च मध्यस्था पक्षफलप्रदा। एकनाडीगता ह्याद्या ग्रहा क्रूराः शुभा यदि। ततो नाडीफलं वाच्यं शुभं वा यदि वाऽशुभम्। ग्रहाः कुर्युश्च स्वायातं गताश्चण्डाख्यनाडिकाम्। वायुनाडीं गतावायु दहन्त्यामपि दाहकाः। सौम्यनाडीगताः साध्या नीरस्या मेघवाहकाः। अमायां वृष्टिदा चन्द्र नाडिकाऽप्यमितवृष्टिदा। एकोऽप्येतत्फलं दत्ते स्वनाडी संस्थितो ग्रहः। भूसुत सर्वनाडीषु धत्ते नाडीभवं फलम्। प्रावृट्काले समायाते रौद्रक्षगते रवौ। नाडीवेधसमायोगे जलयोग वदाम्यहम्। यत्र नाडी स्थितचन्द्रस्तत्स्थाः खेचरा यदि। क्रूरसौम्यैर्मिश्रैश्च तद्दिने वृष्टिरुत्तमा। एवमत्रायसं योगो जायते यदि खेचरैः। तत्र काले महावृष्टिर्भवेत् तत्रांशके शशी। केन्द्रैः सौम्यपापैर्वा ग्रहैर्विद्धो यदा शशी। तदा तु तत्क्षणानीय दुर्दिनं तु भवेद्‌ध्रुवम्। यस्य ग्रहस्य नाडीस्थचन्द्रमास्तद्ग्रहेण च। दृष्टो युक्तः करोत्यम्भो यदि चौणेन जायते। पीयूषनाडी गतश्चन्द्रस्तत्र खेटा शुभाशुभाः। त्रिचतुःपञ्चपापीश्च दिनान्येकान्तिकष्टकम्। एवं जलाख्यनाडीस्थे चन्द्रे मिश्रग्रहान्विते। दिनार्द्धं दिवस पञ्च दिनानि जायते जलम्। नीरनाडीस्थिते चन्द्रे तत्रस्थैः पूर्ववद्ग्रहैः। याम दिनार्द्धक तोषि दिनानि जायते जलम्। अमृतादित्रये यत्र भवन्ति सर्वखेचराः। तत्र वृष्टि क्रमाज्ज्ञेया ह्येकत्रिसप्तवासरान्। सौम्यनाडीगताः सर्वे वृष्टिदास्ते दिनत्रयम्। शेषनाड्यां महावात दुष्टवृष्टिप्रदा ग्रहाः। निर्जला जलदा नाडी भवेद्योगे शुभाधिके। क्रूराधिकसमायोगे जलदा ह्यम्बुनाडिका। एकनाडीसमारूढौ चन्द्रमोधरणीसुतौ। यदि तत्र भवेत्तोयसदा वारिमयी मही। याम्यनाडीगता क्रूरा समावृष्टिप्रसूचकाः। शुभयुक्ता जलाख्यास्याः सोऽतिवृष्टिप्रदायकाः। बुधशुक्रौ यदैकत्र गुरुणा च समन्वितौ। चन्द्रयोगे तदा काले जायते वृष्टिरुत्तमा। जलयोगसमायाते यदा चन्द्रसितौ ग्रहौ। क्रूरैर्दृष्टौ युतौ वापि तदा मेघोऽल्पवृष्टिदः। उदयास्तमिते मार्गे चक्रे युक्ते च संक्रमे। जलनाडीगता खेटा महावृष्टिप्रदा मताः”। “प्राहृपि शीतकरो भृगुपुत्रात् सप्तमराशिगतः शुभदृष्टः। सूर्यसुतान्नवपञ्चमगो वा सप्तमगश्च सलिलागमनाय”। क्वचित् पाठान्तरम्।

६२। संवत्सरचक्रम्—“चक्र सांवत्सरं वक्ष्ये यदुक्तं कौशलागमे। येन विज्ञायते सम्यग्वर्षे वर्षे शुभाशुभम्। द्वादशारं लिखेच्चक्र तत्र मेषादिराशय। संख्याया क्रमयोगेन सौम्याना सव्यमार्गगा। तत्र चक्रे समालेख्या मेषादिराशिमार्गगाः। प्रभवाद्यब्दमेकैकं षष्टिसम्वत्सरैः। एकराशौ स्थितौ यत्र वत्सरोवर्त्तमानकः। तद्राशिस्थ फलं सौख्यं यत्किञ्चित् वार्षिकं मतम्। चैत्रे या प्रतिपच्छुक्ला तस्या काले प्रवेशयेत्। एतद्धि लोकवेधक्र कालज्ञानविनिश्चये। तत्र सप्त ग्रहा ज्ञेया राशौ यो यत्र संस्थितः। वर्षे राशौ विचिन्त्यास्ते रेखास्थानगता ग्रहाः। उपचयेषु गता, क्रूरा सौम्या

श्चिद्रान्त्यवर्ज्जिताः । चक्ररेखाप्रदाश्चेया मित्र-मध्यस्थिता ग्रहाः । सर्व्वे छिन्नं फलं दत्ते स्तोत्रे मित्रं तथैव च । फलार्द्धं शत्रुगेहस्थो नीचस्थो निष्फलो ग्रहः । एवं रेखाप्रमाणेन वर्णविशोपका मताः । ज्ञातव्या-दिशि केन्द्रेण वर्षे वर्षे प्रयत्नतः । एवं वर्षफलं ज्ञेयं चैत्र-मासाद्यवासरात् । आषाढे कार्त्तिकेऽप्येवं जलं धान्यं विचिन्तयेत् । ननु देशे पुरे ग्रामे फलं भिन्नं प्रदृश्यते । तस्मात् तत्कारणं वाच्यं येन जानन्ति साधकाः । देशादिराशिनाथस्य यो रेखादायको ग्रहः । मित्रोदासीन शत्रुत्वे फलं भिन्नं करोति सः । मित्रं छिन्नं फलं दत्ते सम साम्यं करोति च । शत्रुः सर्व्वं हरोत्येव सर्वदा शास्त्रचिन्तकैः । एवं विचार्य्य कर्त्तव्या ज्ञान विशोपकास्तुधैः । तथा पानीयधान्यानां स्वकाले च विचिन्तयेत्" ।

६१ स्थानचक्रम्—"स्थानचक्रं प्रवक्ष्यामि यदुक्तं जम्भटागमे । येन विज्ञायते सम्यक् स्थाने स्थाने शुभाशुभम् । स्थानपीड़ाप्रभावेण राज्ञां पीड़ा प्रजायते । तस्मादपीड़िते स्थाने स्थातव्यं सर्व्वदा बुधैः । स्थाननामोद्भव राशिं मत्वादौ द्वादशारके । राशिमण्डलकं न्यस्य वाम-मार्गेण स उच्यतम् । तत्र नव ग्रहाः स्थाप्याः भास्वच्चन्द्र खराशिभे । तेषां विलोकनं वीक्ष्य स्थानराशिगतं यथा । तृतीयैकादशे पादं द्विपादं व्योमनन्दगे१०।४। त्रिकोणे५।८। त्र्यङ्घ्रिं मृत्युगे ।।७। पूर्णं पश्यन्ति खेचराः । शन्यर्क राहुकेत्वाराः पञ्च क्रूरा ग्रहा मताः । शेषं चतुष्टयं सौम्यं मासेन्दुश्चापि पञ्चमः । एवं पञ्च ग्रहाः क्रूराः पञ्च सौम्यास्तथैव च । तेषां शुभाशुभां दृष्टिं ज्ञात्वा स्थानबलं वदेत् । एकैकग्रहजा दृष्टिः पूर्णपादचतुष्टयम् । पञ्चमे व्यापकैस्तेषां पादाना विंशतिर्भवेत् । तत्र विंशोपकाश्चेया सौम्यक्रूरसमुद्भवा । एवं प्र-साधयेद्दृष्टिं युग्मं नाम शुभाशुभम् । चक्रे लोकोभिता शेषा जायते तत्क्शुभाशुभा । ते च विंशोपकास्तस्य स्थानस्य बलनिर्णये । एवं देशे पुरे ग्रामे बलं यत्र शुभाधिकम् । तत्र स्थाने स्थितो राजा दुष्टारिष्टैर्न पीड्यते । स्थानबलप्रभावेण स्वबलस्य बलोदय । शत्रुसैन्यं क्षयं याति यावत्स्थाने शुभे स्थित । एतानि सर्व्वचक्राणि ज्ञात्वा युद्धं समारभेत् । जयेदिह न सन्देहः शक्र-तुल्योऽपि भूभुजि" । एतेषां त्रिवर्णेन व्याकरणेऽपि चक्रा-न्तरचक्रस्याभेदेन चतुरङ्गोतिष स्थापूरणम् ।

अङ्गमल्ले ७१ पृ० दर्शितानि "तथाचान्तरचक्रं च श्वान-चक्रं तथैव च । श्वचक्रं वातचक्रञ्च चक्राङ्गेषु चतुष्टयम्" गर्गोक्तानि च चत्वारि चतुष्षष्ट्यङ्गज्योतिष-मध्ये चान्तरादिचक्राणि यानि तत्र चान्तरचक्रं वृ० सं० ८७अ० उक्तं यथा

"ऐन्द्र्यां दिशि शान्तायां विरुवन् पथिकाभिमतागमं शंसति । पटुभि पूजालाभं मणिरत्नद्रव्यसम्प्राप्तिम् । तदनन्तर-दिशि कनकागमो भवेद्वाञ्छितार्थसिद्धिश्च । आयुधधन पूगफलागमस्तृतीये भवेद्भागे । स्निग्धद्विजस्य सन्दर्शन चतुर्थे तथाऽऽहिताग्नेश्च । कोणेऽसुजीविभिक्षुप्रदर्शनं कनकलोहाप्तिः । याम्ये स्यादाद्ये सर्पपुत्रदर्शनं चि-रभिमतस्याप्तिः । परतः स्त्रीधर्म्माप्तिः सर्षपयवलब्धिर-प्युक्ता । कोणाच्चतुर्थखण्डे लब्धिर्द्रव्यस्य पूर्वनष्टस्य । यद्वा तद्वा फलमपि याम्यायां मात्र्याद्याता । यात्रासिद्धिः प्रथमदक्षिणेन शिखिमहिषकुक्कुटाप्तिश्च । याम्याद्द्वितीय-भागे चारणसङ्गः शुभं प्रीतिः । ऊर्द्ध्वं सिद्धिः कैवर्त्त-सङ्गमो मीनतित्तिराद्याप्तिः । प्रव्रजितदर्शनं तत्परे च पक्वान्नफललब्धिः । नैर्ऋत्यां स्त्रीलाभस्तुरगाश्वद्वारदूतवे चाप्तिः । परतोऽस्य चर्मतक्षकिदर्शनं चर्ममयलब्धिः । वानरभिक्षुश्रमणावलोकनं नैर्ऋतीत्तृतीयांशे । फलकुसुम-दन्तघटितागमश्च कोणाच्चतुर्थांशे । वारुण्यामर्णवजात-रत्नवैदूर्य्यमणिमयाप्तिः । परतोऽतः शवरव्याधचौर-सङ्गः पिशितलब्धिः । परतोऽपि दर्शनं वातरोगिणां चन्दनागुरुप्राप्तिः । आयुधपुस्तकलब्धिस्तद्वृत्तिसमागम-श्चोर्ध्वम् । वायव्ये फेनकचामरौर्णिकाप्तिः समेति का-यस्थ । कृष्णमयलाभोऽप्यस्मिन् वैतालिकडिण्डिभावता-नाम् । वायव्याद्यत्तृतीये मित्रेण समागमो धनाप्तिः । वस्त्राश्वाप्तिरतः परमिष्टसुहृत्सम्प्रयोगश्च । दधितण्डु-लालाभा लब्धिरुदग्दर्शनं च विप्रस्य । चर्वाताप्तिरन-न्तरसुपगच्छति साधवाहश्च । वेश्यावटुदाससमागमः परे शुष्कपुष्पफललब्धिः । अतः परं चित्रकरस्य दर्शनं वस्त्रसम्प्राप्तिः । ऐशान्यां देवलकोपसङ्गमो धान्यरत्न-पशुलब्धिः । प्राक् प्रथमे वस्त्राप्तिः समागमश्चापि ब-न्धक्या । रजकेन समायोगो जलजद्रव्यागमश्च परतोऽतः । हस्त्युपजीविसमाजश्चाचार्यमकलितलब्धिश्च । शालिगतं परिभक्तं दिक्चक्रं वास्तुमध्यनेऽप्युक्तम् । चरमाभिस्त्वैरन्तं फलानि नवधा विकल्प्यानि । ना-भिस्थे मनुष्यद्वितसागमस्तु विकल्पा भवति । प्रापक

पट्टस्त्रागमस्तत्परे नृपतिसंयोगः । आग्नेये कौलिकतत्पारिकर्मीश्वसूतसंयोगः । लब्धिश्च तत्कृतानां द्रव्याणामश्वलब्धिर्वा । नेमीभागं बुद्ध्वा नाभीभागं च दक्षिणे योऽरः । धार्मिकजनसंयोगस्तत्र भवेद्धर्मलाभश्च । शुष्काक्रोडककापालिकागमो नैरृते समुद्दिष्टः । वृषभस्य चात्र लब्धिर्माषकुलत्थाद्यमशनं च । अपरस्यां दिशि योऽरस्तत्रार्थाप्तिः कृषीवलैः सह । सामुद्रद्रव्यतुषारकाचफलमद्यलब्धिश्च । भारवहतक्षभिक्षुकसन्दर्शनमपि च वायुदिक्संस्थे । तिलककुसुमस्य लब्धिः सनागपुन्नागकुसुमस्य । कौबेर्यां दिशि शकुनः शान्तायां वित्तलाभमाख्याति । भागवतेन समागममाचष्टे पीतवस्त्रैश्च । ऐशाने व्रतयुक्तवनितासन्दर्शनं समुपयाति । लब्धिश्च परिज्ञेया कृष्णायोवस्त्रघण्टानाम् । याम्येऽष्टाये च स्याद्विपद्विनिसृष्टेषु मध्यफला । सौम्येन च द्वितीये श्रेयेष्वतिशोभना यात्रा । अभ्यन्तरे तु नाभ्यां शुभफलदा भवति षट्सु चारेषु । वायव्यानैरृतयोरुभयोः क्लेशावहा यात्रा । शान्तासु दिक्षु फलमिदमुक्तं दीप्तास्वतोऽभिधास्यामि । ऐन्द्र्यां भयं नरेन्द्रात् समागमश्चैव शत्रूणाम् । तदनन्तरदिशि नाशः कनकस्य भयं सुवर्णकाराणाम् । अर्थक्षयस्तृतीये कलहः शस्त्रप्रकोपश्च । अग्निभयं च चतुर्थे भयमाग्नेये च भवति चौरेभ्यः । कोणादपि द्वितीये धनक्षयो नृपसुतविनाशः । प्रमदागर्भविनाशस्तृतीयभागे भवेच्चतुर्थे च । नैरृतककारुकयोः प्रध्वंसः शस्त्रकोपश्च । अथ पञ्चमे नृपभयं मारीस्तद्दर्शनं च वक्तव्यम् । षष्ठे तु भयं ज्ञेयं गन्धर्वाणां सडोम्बानाम् । धीवरशाकुनिकानां सप्तमभागे भयं भवति दीप्ते । भोजनविघात उक्तो निर्ग्रन्थिभयं च तत्परतः । कलहो नैरृतभागे रक्तस्रावोऽथ शस्त्रकोपश्च । अपराद्ये चर्मकृत विनश्यति चर्मकारतुभयम् । तदनन्तरे परिव्राट्श्रमणभयं तत्परे स्तनशनभयम् । वृष्टिभयं वारुण्यां श्वतस्कराणां भयं परतः । वायुप्रस्ते विनाशः परे परे शस्त्रपुस्तवार्त्तानाम् । कोणे पुस्तकनाशः परे विपत्तेन वायुभयम् । परतो वित्तविनाशो मित्रैः सह विग्रहश्च विज्ञेयः । तस्मात्सन्नेऽश्वमृत्यो भयमपि च पुरोधसः प्रोक्तम् । गोहरणशस्त्रघाताः उदक् परे सार्थघातधननाशौ । आसन्ने च भयं स्याद् द्विजदासगणिकानाम् । ऐशानस्यासन्ने चित्राम्बरचित्रकृतः प्रोक्तम् । ऐशाने स्त्रीभयं दूषणमप्युत्तमस्त्रीणाम् । प्रोक्तस्यैवासन्ने दुःखोत्पत्तिः स्त्रिया विनाशश्च । भयमूर्ध्वं रजकानां विज्ञेयं कान्त्विकानां च । हस्त्यारोहभयं स्याद् द्विरदविनाशश्च मण्डलसमाप्तौ । अभ्यन्तरे तु दीप्ते पत्नीमरणं ध्रुवं पूर्वे । शस्त्रानलप्रकोपावाग्नेये वाजिमरणशिल्पिभयम् । याम्ये धर्मविनाशः परेऽन्त्यवक्त्रान्त्यचौरवधः । अपरे तु कर्मिणां भयमथ कोणे चानिले खरोष्ट्रवधः । अत्रैव मनुष्याणां विसूचिकाविषभयं भवति । उदगर्थविप्रपीडा दिक्श्रेण्यां तु चित्तसन्तापः । आमीणगोपपीडा तत्र च नाभ्यां तथात्मवधः" ।

२ मृगचक्रं वृ० स० ९२ अ० यथा

"सीमागता वन्यमृगा रुवन्तः स्थिता व्रजन्तोऽथ समापतन्तः । सम्प्रत्यतीतैष्यभयानि दीप्ताः कुर्वन्ति शून्यं परितो भ्रमन्तः । ते ग्राम्यसत्त्वैरनुवाश्यमाना भयाय रोधाय भवन्ति मन्त्रैः । द्वाभ्यामपि प्रत्यनुवाशितास्ते वन्दिप्रहायैव मृतौ भवन्ति । वन्ये सत्त्वे द्वारसंस्थे पुरस्य रोधो वाच्यः सम्प्रविष्टे विनाशः । सूते मृत्युः स्याद्भयं संस्थिते च गेहं याते बन्धनं सम्प्रदिष्टम्" ।

३ श्वचक्रं वृ० स० ८९ अ०

"नृतुरगकरिकुम्भपर्याणसक्षीरवृक्षेष्टकासञ्चयच्छत्रशय्यासनोलूखलानि ध्वजं चामरं शाद्वलं पुष्पितं वा प्रदेशं यदा श्वावमूत्र्याग्रतो याति यातुस्तदा कार्यसिद्धिर्भवेदार्द्रके गोमये मिष्टभोज्यागमः शुष्कसम्मूत्रणे शुष्कान्नलाभोऽथवा गोडिकामोदकावाप्तिरेवाथ वा । अथ विषतरुकण्टकीकाष्ठपाषाणशुष्कद्रुमास्थिश्मशानानि मूत्राग्रतो ह्यावशायिनो वा यायिनोऽग्रेसरोऽनिष्टमाख्याति शय्याकुलालादिभाण्डान्यभग्नानि वा मूत्रयन् कन्यकादोषकृद् भुज्यमानानि चेद् दूषिता तद्गृहिण्यास्तथा स्यादुपानत्फलं गोस्तु सम्मूत्रणे वर्णजः सङ्करः । गमनमुखमुपानहं सम्प्रगृह्योपतिष्ठेद्यदा स्यात्तदा सिद्धये मांसपूर्णानने ऽर्थाप्तिरार्द्रेण चास्थ्ना शुभं साग्निनालातेन शुष्केण चास्थ्ना मृतिः । दण्डिना न व प्रशान्तोल्मुकेनाभिघातोऽथ पुंसः शिरोहस्तपादादिवक्त्रे ध्रुवो ह्यागमो वस्त्रचौरादिभिर्व्यापदं केचिदाहुः सवस्त्रे शुभम् । प्रविशति तु गृहं सशुष्कास्थिवक्त्रे प्रधानस्य तस्मिन् वधः शृङ्खलाशीर्णवल्लीवरत्रा वा बन्धनं चोपदिश्योपतिष्ठेद्यदा स्यात्तदा बन्धनं लेढि पादौ विधुन्वन् स्वकर्णावुपर्याक्रमत्यापि विज्ञाय यातुर्विरोधे विरोधस्तथा स्यात्स्वकण्डूयने स्यात् स्वपन्नूर्ध्वपादः सदा दो

चक्रम्। सूर्योदये ऽर्काभिमुखो विरौति ग्रामस्य मध्ये यदि सारमेयः। एको यदा वा बहवः समेताः शंसन्ति देशाधिपमन्यमाशु। सूर्योन्मुखः श्वा ऽनलदिक्स्थितश्च चौरानलत्रासकरोऽचिरेण। मध्याह्नकाले ऽनलमृत्यु-शंसी सशोणितः स्यात्कलहो ऽपराह्णे। रुवन्दिनेशाभिमुखो ऽस्तकाले कृषीवलानां भयमाशु धत्ते। प्रदोषकालेऽनिलदिङ्मुखस्तु धत्ते भयं मारुततस्करोत्थम्। उदङ्मुखश्चापि निशार्धकाले विप्रव्यथां गोहरणं च शास्ति। निशावसाने शिवदिङ्मुखश्च कन्याभिदूषानलगर्भपातान्। उच्चैः स्वरा सुरशकूटसंस्था प्रासादवेश्मोत्तमसंस्थिता वा। वर्षासु वृष्टिं कथयन्ति नोचेदन्यत्र मृत्युं दहनं रुजञ्च। प्रावृट्कालेऽवग्रहे ऽम्भो ऽवगाह्य प्रत्यावृत्ते रेचकैर्वाप्यभीक्ष्णम्। प्रामुञ्चन्तो वा शिरस्तस्तोयं वृष्टिं कुर्वन्त्यन्तरे द्वादशाहात्। द्वारे शिरो न्यस्य बहिः शरीरं रोरूयते श्वा गृहिणीं विलोक्य। रोगप्रदः स्यादथ मन्दिरान्तर्बहिर्मुखश्च शंसति बन्धकीं ताम्। कुड्यं समुत्किरति वेश्मनो यदा तत्र खानकभयं भवेत्तदा। गोष्ठमुत्किरति गोग्रहं वदेद्धान्यलब्धिमपि धान्यभूमिषु। एकेनाक्ष्णा साश्रुणा दीनदृष्टिर्मन्दाहारो दुःखकृत्तद्गृहस्य। गोभिः सार्धं क्रीडमानः सुभिक्षं क्षेमारोग्यं चाभिनन्दे मुदं च। वामं जिघ्रेज्जानु वित्तागमाय स्त्रीभिः सार्धं विग्रहो दक्षिणं चेत्। ऊरुं वामं चेन्द्रियार्थोपभोगाः सव्यं जिघ्रेदिष्टमित्रैर्विरोधः। पादौ जिघ्रेद्यायिनश्चेद्यात्रा प्राहार्थाप्तिं वाञ्छितां निश्चलस्य। स्थानस्थस्योपानहौ चेद्विजिघ्रेत् क्षिप्रं यात्रां सारमेयः करोति। उभयोरपि जिघ्रतीह बाह्वोर्विंशये रिपुचौरसम्प्रयोगम्। अथ गेहमायाति भषन्ति सम्भ्रमात् मांसास्थीनि च शीघ्रमग्निकोपः। ग्रामे भषित्वा च बहिः श्मशाने भषन्ति चेदुत्तमपुंविनाशः। यियासतश्चाभिमुखो विरौति यदा तदा श्वा निरुणद्धि यात्राम्। उकारवर्णेन रुते ऽर्थसिद्धिरोकारवर्णेन च वामपार्श्वे। व्याक्षेपमौकारकृतेन विद्यान्निषेधकृत्सर्वकृतेन पश्चात्। खं खेति चोक्तैः सकलं रुदन्ति दण्डैरिव ताड्यमाना। श्वानो ऽभिधावन्ति च मण्डलेषु ते शून्यतां मृत्युभयं च कुर्युः। प्रकाश्य दन्तान् यदि लेढि सृक्किणी तदाऽशनं मिष्टमुशन्ति तद्विदः। यदाननं चावलिहेत्ससृक्किणी प्रवृत्तभोज्येऽपि तदान्नविघ्नकृत्। ग्रामस्य मध्ये यदि वा पुरस्य भषन्ति सहसा सकरुणैः स्वरैर्वै। ते क्लेशमाख्यान्ति तदीश्वरस्य श्वा रासभस्थो ऋक्षवृत्तिचिन्त्यः। हस्त्योपगे क्षोभयति तोयपातः स्यादिन्द्रकीले बलिनश्च पीडा। वायोर्दिशं शस्त्रभयं रुदन्तः पीडा पुरस्यैव च गोपुरस्था। भयं च शय्यासु तदीश्वराणां याने भषन्तो भयदाश्च पश्चात्। छायापथस्था जनसन्निवेशे भयं भषन्तः कथयन्त्यशेषम्"।

४ अनिलचक्रं अनिलशब्दे १६६ पृ॰ दर्शितम्। ५ व्यूहभेदे चक्राकारः स च द्रोणेनाभिमन्युवधपर्वणि कृतः। "चक्रव्यूहो महाराज! द्रोणाचार्येणाभिकल्पितः" भा॰ द्रो॰ ३४ अ॰। इत्यादिनोक्तः। यन्त्ररूपचक्राणि यन्त्रशब्दे वक्ष्यन्ते। ६ राष्ट्रे "स्वचक्रं परचक्रञ्च" इति कथने एतच्छब्दस्य अनुपदं दर्शितवाक्ये। ७ समूहे "भूरेणवो नभसि नद्धपयोदचक्रम्" माघः। "दिक्चक्रमाक्रामति" नैष॰। सुदर्शनाख्ये राष्ट्रे च। "अविचालितचारुचक्रयोरनुरागादुपगूढयोः श्रिया" माघ। "न चक्रमस्याक्रमताधिकन्धरम्" माघ। चक्रवाके। "तव तन्वि! कुचावेतौ नियतं चक्रवर्त्तिनौ" उद्भट। कुम्भकारचक्रे चक्रवाके च। "कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारितागुणः। स तदुच्चकुचौ भवन् प्रभाभरचक्रभ्रममातनोति यत्" नैष॰। राशिचक्रे "त्रिंशत्कृत्यो युगे भानां चक्रं प्राक्परिवर्त्तते" सू॰ सि॰। "रवेश्चक्रभोगोऽर्कमासं प्रदिष्टम्" सि॰ शि॰। ८ मण्डलाकारे रेखादिन्यासभेदे "चक्रे सचक्रनिभचङ्क्रमणच्छलेन" "वितत्य पात्रामयचक्रचङ्क्रमान्" नैष॰। "शालग्रामशिलाचक्रम् गोमतीचक्रम्" एकद्वारे चतुश्चक्रं वनमालाविभूषितम्" शालग्रामशब्दे दृश्यम्।

चक्रक पु॰ चक्रमिव कायति कै—क। तर्कभेदे। तल्लक्षणं "स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनः प्रसङ्गश्चक्रकः" तर्के जगदीशः। अपेक्षा च ज्ञप्तौ उत्पत्तौ स्थितौ च। अन्योन्याश्रयशब्दे दर्शिते आपादके अन्यपदमन्तर्भाव्योदाहरणम्। अपेक्षा चात्र साक्षात्परम्परासाधारणी ग्राह्या" तर्के जगदीशः। तत्र ज्ञप्तौ एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानजन्यज्ञानजन्यं स्यात् तदा एतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्नं स्यात्। उत्पत्तौ घटोऽयं यद्येतद्घटजन्यजन्यजन्यः स्यात् तदा एतद्घटजन्यजन्यभिन्नः स्यात्। स्थितौ घटोऽयं यद्येतद्घटवृत्तिवृत्तिवृत्तिः स्यात् तदा तत्त्वेनोपलभ्येतेति। २ ऋषिभेदे पु॰ चक्रकः गोत्रा॰

चक्रद्वार पु० चक्रमिव द्वारमत्र। पर्व्वतभेदे। "द्रोणश्च शत शृङ्गश्च चक्रद्वारश्च पर्वत" भा० शा० ३२२अ०।

चक्रधनुस् पु० सूर्य्याज्जाते कपिलाख्ये ऋषिभेदे। "अत चक्रधनुर्नाम सूर्य्याज्जातो महानृषिः। विदुर्यं कपिलं देव येनार्त्ताः सगरात्मजाः" भा० उ० १०८अ०।

चक्रधर पु० चक्रं मनस्तत्त्वं सुदर्शनमस्त्रं वा धरति–धृ–अच्। १चक्रधारिणि विष्णौ २ग्रामयाजिनि च मेदि०। "प्रचक्रमे चक्रधरप्रभाव" रघु। ३चक्राङ्कधारकमात्रे अपादौ "यजन्ते क्रतुभिर्देवांस्तथा चक्रधराश्च या" भा० स० ८५अ०।

चक्रधर्म्मन् पु० विद्याधरभेदे। "विद्याधराधिपश्चैव चक्रधर्म्मा सहानुजैः। उपाचरति तत्रस्थं धनानामीश्वरं प्रभुम्" भा० स० १० अ०।

चक्रधारण न० चक्रं धार्य्यतेऽनेन धारि–करणे ल्युट्। रथावयवभेदे अक्षनाभौ शब्दार्थ०।

चक्रधारा स्त्री ६त०। चक्राग्रे शब्दार्थ०।

चक्रनख पु० चक्रमिव नखोऽस्यास्य अच्। व्याघ्रनखे गन्धद्रव्यभेदे राजनि०।

चक्रन(ण)दी स्त्री चक्रप्रधाना विष्णुचक्राभिधस्यान नदी गिरिनद्या० वा णत्वम्। गण्डकीनद्याम्। "यत्राश्रमपदान्युभयतो नाभिदृशच्चक्रैश्चक्र(ण)नदी नाम सरित्प्रवरा सर्वत पवित्रीकरोति" भाग०५।७,११। "चक्रनदी गण्डकी" श्रीधर।

चक्रनाभि पु० ६त०। चक्रस्य नाभौ। "यावत्यस्तु सिरा काये सम्भवन्ति शरीरिणाम्। नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः। नाभिस्था प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता। सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः" सुश्रुत।

चक्रनामन् पु० चक्रात् मक्षिकाचक्रात् नाम यस्य। १माक्षिकधातौ हेमच०, तस्य मक्षिकापटलजातत्वात् तथात्वम् २चक्रनामनामके चक्रवाके च।

चक्रनायक पु० चक्रं तदाकार नयति नी–ण्वुल्। ६त०। व्याघ्रनखे गन्धद्रव्यभेदे राजनि।

चक्रपद्माट पु० चक्रं चक्राकारो दद्रुरोग पद्ममिव मर्दयति प्रभवति अच् उत०। चक्रमर्द्दशब्दे दद्रुघ्ने शब्दर०।

चक्रपद न० "चक्रपदमिह भननभगुरुभि" इ०र०टी० उक्ते त्रयोदशाक्षरपादे छन्दोभेदे। [६त०। आरग्वधे वैद्यकम्।

चक्रपरिव्याध पु० चक्रं दद्रुरोग परिविध्यति परि+व्यध–अ

चक्रपर्णी स्त्री चक्रमिव पर्णमस्याः ङीप्। पृश्निपर्ण्याम् शब्दच०

चक्रपाणि पु० चक्रं पाणावस्य प्रहरणार्थत्वात् सप्तम्याः परनि० व्य० बहु०। विष्णौ। "निघ्नन्नमित्रान् समरे चक्रपाणिरिवासुरान्" भा० भी० ४८अ०। "प्रावेण निष्क्रामति चक्रपाणौ" माघ।

चक्रपाणिदत्त पु० चक्रदत्ताख्यवैद्यकग्रन्थकारके विद्वद्भेदे।

चक्रपाद पु० चक्रं पादइव यस्य। रथे अजयपाल।

चक्रपाल पु० चक्रं पालयति पालि+अण्। सेनापति चक्ररक्षके योधभेदे। चक्ररक्षशब्दे दृश्यम्।

चक्रपुष्करिणी चक्रेण खननात् विष्णुना कृता पुष्करिणी। काशीस्थे मणिकर्णिकाख्ये पुष्करिणीभेदरूपे तीर्थे तत्कथा काशीख० २६अ० यथा

"खनित्वा तत्र चक्रेण रम्यां पुष्करिणीं हरिः। निजाङ्गस्वेदसन्दोहसलिलैस्तामपूरयत्। समाः सहस्र पञ्चाशत् तपश्चक्रे स। चक्रपुष्करिणीतीर्थे मत् स्वाशु समाहृत" इत्युपक्रमे "त्वदीयचरणाम्भोजमकरन्दमधुव्रतक। मत्तोऽभ्रमरो भ्रान्ति निदायास्तासु निश्चलः॥ त्वदीयस्यास्य तपसो महोपचयदर्शनात्। यन्मया स्रो लितो मौलिरभिरत्नभूषणः। तदान्दोलनत कर्णात् पपात मणिकर्णिका। मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका। चक्रपुष्करिणीतीर्थे पुरा ख्यातमिद शुभम्। त्वया चक्रेण खननात् शङ्खचक्रगदाधर॥ मम कर्णात् पपातेय यदा च मणिकर्णिका। ततः प्रभृति लोकेऽत्र ख्यातास्तु मणिकर्णिका"। "चक्रि तीर्थवरे शम्भो। मणिरत्नभूषणे। सन्ध्या स्नानं जप होम वेदाध्ययनमुत्तमम्। तर्पणं पिण्डदानञ्च देवतानाञ्च पूजनम्। गोभूतिलहिरण्यानि दीपान्नाम्बरभूषणम्। कन्यादानं प्रयत्नेन सप्ततन्तूननेकशः। व्रतोत्सर्ग वृषोत्सर्ग लिङ्गादिस्थापनं तथा। करोति यो महाप्राज्ञो ज्ञात्वायु क्षणभङ्गुरम्। विपत्तिं विपुलाञ्चापि सम्पत्तिमतिभङ्गुराम्। अत्रया सुकृतिकास्तु विपाकस्तस्य कर्म्मणः। अन्यत्रापि शुभं कर्म्म यद्दत्तं श्रद्धया कृतम्। विमात्मघातमीशान। त्यक्त्वा प्रायोपवेशनम्। नैःश्रेयस्याः श्रियो हेतुस्तदस्तु जगदीश्वर॥ कार्त्तायोजनानि नाम्बानि कृत्वा कामान्तरेऽपि यत्। तदिहाक्षयमेवास्तु तवेश। त्वदनुग्रहात्। तव प्रासादात्सर्वेश। सर्वमक्षयमस्तु तत्। यदस्ति यच्च भविष्यच्च यद्भूतञ्च सदाशिव॥ तत्कारेणैव सर्वस्मात् क्षेममस्तु शुभोदयम्। यथा सदाशिव।

सहस्राख्यं महाभारतमध्यगम् । चण्ड्या सप्तशती स्तोत्रं तथा नामसहस्रकम्' इत्यादिना "भार्गवाख्येन रामेण प्राप्तान्यप्यनिकारणात्" इत्यन्तेन । यद्यपि तन्त्रान्तरेऽस्यापि स्तोत्रस्य शिवशाप कीलनं चेति सिद्धिनिरोधकायुक्तौ तथापि तत्रैव शापोद्धारोत्कीलनयोः कर्मविशेषयोस्तद्रूपत्वेन सत्करणविधानात्तत्करणे सिद्धिनिरोधोक्त्या तदावश्यकत्वपरौ तात्पर्यवादौ । तत्र शापोद्धारो यथा त्रयोदशप्रथमौ, द्वादशद्वितीयौ, एकादशतृतीयौ, दशमचतुर्थौ, नवमपञ्चमौ, अष्टमषष्ठौ, अध्यायौ पठित्वा सप्तममध्यायं द्विः पठेदित्याकारकः प्रयोगः । उत्कीलनं यथा । आदौ मध्यमचरित्रं पठित्वा तत्र प्रथमचरित्रं ततस्तृतीयचरित्रं पठेदित्याकारकः । "अन्त्याद्यार्कद्विरुद्रत्रिदिगब्ध्यङ्केष्विभर्तवः । अश्वोऽश्व इति सर्गाणां शापोद्धारे मनोः क्रमः । उत्कीलने चरित्राणां मध्याद्यान्त्यमिति क्रमः" । अङ्को नवम इषु पञ्चम इभोऽष्टमः । "ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति" इति निष्कीलं दानप्रतिग्रहनामकमष्टोत्कीलनं तु कीलकाध्यायव्याख्यावसरे विशदीकरिष्यते । एवं सम्प्रदायप्राप्तस्य निर्दोषमुत्तमङ्को शीघ्रसिद्धिदमिदमिति सिद्धम् । एतद्वाचनक्रमो वाराहीतन्त्रे "यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठन् । यदि प्रमादादध्याये विरामो भवति प्रिये ! । पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अनुक्रमात्पठेदेव चिरं कम्पादिकं त्यजेत् । न मानसं पठेत्स्तोत्रं वाचिकन्तु प्रशस्यते । कण्ठतः पाठाभावे तु पुस्तकोपरि वाचयेत्" । तल्लेखनेऽपि तत्र विशेषः "न स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिं पठेत् । न च स्वयंकृतं स्तोत्रं तथान्येन च यत्कृतम् । यतः कलौ प्रशंसन्ति ऋषिभिर्भाषितं तु यत्" । यत्तु "आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनादेव भवेदर्द्धफलं ध्रुवमिति" । तस्य व्यवस्थापि तत्रैव "पुस्तके वाचनं हस्ते सहस्रादधिकं यदि । ततोन्यूनस्य तु भवेद्वाचनं पुस्तकं विना" । सहस्रान्यूनमन्त्रस्य कण्ठे पाठसत्त्वे पुस्तकं विनैव वाचनं, तदभावे आधारे पुस्तकस्थापनेनैव वाचनं सहस्राधिकस्य तु पाठसत्त्वेऽप्याधारस्थापितपुस्तकोपर्य्येव वाचनमिति यथार्थः । प्रकृतस्तोत्रस्य सहस्रान्यूनत्वात् "ततः कृताञ्जलिपुटः स्तुवीत चरितैरिमैरिति" वैकृतिकरहस्ये विधानात् कण्ठपाठाभावे पुस्तकस्याधारे स्थापनेनैव वाचनम् ।

कण्ठपाठीत्वे तु पुस्तकं विनैव तु कृताञ्जलितया पठनमुत्तममिति द्रष्टव्यम् । अत्र सहस्रशब्देन शालिशवृत्तरात्मकश्लोकैकानुष्टुप्कल्पनेन ताडृशानुष्टुप्छन्दःसहस्रं ज्ञेयमिति स्पष्टम् । शक्तिसङ्गमतन्त्रराजे "शालिनवा स्वरैर्युक्ता एकोऽनुष्टुप् निगद्यते । स एव गदितः श्लोकः सारात्मेत्यसङ्ख्य" इत्यादिना । तेन गद्यात्मकमालामन्त्रेष्वप्यस्य नियमस्य प्रचारो ज्ञेयः । स्तोत्रपूर्वोत्तरभागपाठाभावे नैष्फल्यादिवचनानि शक्तिसङ्गम एव द्रष्टव्यानि । "ऋष्यादिच्छन्दोदैवतादि पठेत् स्तोत्रं समाहितः । यत्र स्तोत्रे न दृश्येत प्रणवन्यासमाचरेत्" । डामरे "सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः । छन्दो गायत्रमुदितं महाकाली तु देवता । वाग्बीजं पावकस्तत्त्वं धर्मार्थे विनियोजनम् । मध्यमस्य चरित्रस्य मुनिर्विष्णुरुदाहृतः । उष्णिक्छन्दो महालक्ष्मीर्देवता बीजमद्रिजा । वायुस्तत्त्वं भवेत्तत्र मोक्षार्थे विनियोजनम् । उत्तरस्य चरित्रस्य ऋषिः शङ्कर ईरितः । त्रिष्टुप् छन्दो देवतास्य महापूर्वा सरस्वती । कामो बीजं रविस्तत्त्वं कामार्थे विनियोजनम् । ह्रीं चण्डिकायै व्यस्तेन समस्तेन षडङ्गको । वाग्ऐं अद्रिजा ह्रीं काम क्लीं इति नवार्णप्रथमबीजत्रयम् ध्यानादिकं नवार्णवत् । अस्य पुरश्चरणस्वरूपं मरीचिकल्पे "कृष्णाष्टमीं समारभ्य यावत् कृष्णचतुर्दशीम् । इदं त्रिकोत्तरमावाप्य पुरश्चरितन्तु तत् । एवं देवि ! मया प्रोक्तं पौरश्चरणिकं क्रमम् । तदन्ते हवनं कुर्य्यात्प्रतिश्लोकेन पायसम् । रात्रिसूक्तं प्रति ऋचं तथा देव्याश्च सूक्तकम् । हुत्वान्ते प्रजपेत्स्तोत्रमादौ पूजादिकं ततः !" इति । पूर्वाभ्यां पूर्वोक्ताभ्यां रात्रिसूक्तदेवीसूक्ताभ्यां सम्पुटितम् । प्रतिश्लोकेनेति मन्त्रविभागोपलक्षणम् कात्यायन्यादितन्त्रोक्तसप्तशतीविभागमनुसृत्य हवनादिविधिं प्रति वाक्यशेषत्वेन तेनैव वेदपदार्थनिर्णयावश्यकत्वाभावात् "यत्र तु श्येनेष्ट्यादेः स्थानान्तरस्थस्याप्यग्निहोत्रादिविधिशेषत्वेन लोकाचारेण स्वर्गपदार्थनिर्णयस्य वैदिकसम्मतत्वात् । होमसंख्या तु स्तोत्रस्य त्रिरावृत्तिरूपेति वृद्धाः । रात्रिसूक्तदेवीसूक्ते च ऋग्वेदशाकलसंहितायां प्रसिद्धे तयोस्तन्त्रेण जपे क्रमप्रक्रमः सम्पुटाकारो निर्दिश्यते । तन्त्रस्य पूर्व्वपरामर्शित्वात् । तस्य श्लोकपूरणमात्रार्थत्वे तु द्वाभ्यामपि सूक्ताभ्यां त्रिरावृत्तसप्तशतीहोमोत्तरमेव च तत्क्रमानुसारेण होमः । "विश्वेश्वरीं जगद्धात्रीम्"

इति स्तोत्रान्तरमुक्तम् । "नमो देव्यै महादेव्यै" इति स्तवो देवीसूक्तमिति कश्चित् । तन्न । प्रतिश्लोकेन प्रतिऋचमिति प्रतिनियतनिर्द्देशविरोधात् । ऋक्सूक्तादिशब्दाना वैदिकमन्त्रेष्वेव रूढ्या प्रसिद्धेः । सप्तशतीसूक्तमित्यादिकाधिकतान्त्रिकव्यवहारस्य केवल यौगिकत्वेनोपपत्तेः । तेन ऋक्पदस्य श्लोके लक्षणे-त्युक्तिरपि साहसमात्रम् । सहस्रनामोध्यानादिविधौ इह हृद्यन्तरपदयो प्रतिनियतनिर्द्देशबलादेव लक्षणा-व्यवस्थाया इव भवते तु प्राया एव शक्तेर्व्यवस्थादार्ढ्य-स्य कैमुतिकन्यायेनैव सिद्धेः । यदि त्वेवमालोच्यते "विश्वेश्वर्यादिकं सूक्तं दृष्टं यद्ब्रह्मणा पुरा । स्तुतये योगनिद्राया मम देव्याः पुरन्दर ॥ महिषान्तकरी सूक्तं सर्व्वसिद्धिप्रदन्तथा । देव्या ययादिकं दिव्यं दृष्टं देवैः महर्षिभिः । देवि । प्रपन्नार्त्तिहरे प्रसीदेत्यादिकं तथा । नारायणीस्तुतिनाम सूक्तं परमशोभनम् । असुरघ्नास्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः । नमो देव्यादिकं सूक्तं सर्व्वकामफलप्रदमिति" विभक्तलितवैषेण पाञ्चरात्रलक्ष्मीतन्त्रे व्यवहारदर्शनादेतेषां स्तोत्राणा-मपौरुषेयसिद्धान्तत्वाच्च सूक्तर्चव्यवहारो युज्यत एवेति, तदा कात्यायनीतन्त्रमते विश्वेश्वरीमिति श्लो-कात् पूर्व्वं ब्रह्मोवाचेत्यस्य पाठाभावात्तदुत्तरमेव तत्पाठाच्च त्व स्वाहेत्यारभ्यैव स्तोत्रारम्भः तस्य च योगनिद्रा-त्मकरात्रिदेवतात्वान्मरीचितन्त्रे रात्रिसूक्तपदेन निर्द्देश इति समाधेयम् । परन्तु तत्तन्त्रमनुसरता विश्वेश्वरी-मिति श्लोकाद्धोमदशायां न होतव्यम् । स्तोत्रान्तिम श्लोकस्य द्वेधा विभागोऽपि न कार्य्यः । देवीसूक्तेऽपि त्रेधा विभागोऽङ्गहोमे न विधेयः प्रधानविधिशेषस्याङ्ग-विधावन्वयेन प्रतिऋचमिति पदे लक्षणाकल्पने माना-भावादित्यवधेयम् । क्रोडतन्त्रे "प्रतेत्रकामतेन देवि ! स्वप्नमेधेन समितम् । त्रिरावृत्त्या लभेत्कामान् पञ्चावृत्त्या रिपून् जयेत्" । काम्ये तु प्रयोगे विशेषः । कात्यायनी तन्त्रे "एकावृत्त्यादिपाठानां प्रवक्ष्ये पठतां नृणाम् । सङ्कल्पपूर्व्वं संपूज्य न्यासाङ्गेषु ननु सकृत् । पञ्चाङ्गलि-प्रदानेन फलं प्राप्नोति मानव" । वलिश्च ब्राह्मणादिभेदेन व्यवस्थयोक्तः कालिकापुराणे विशेषः द्रष्टव्यः । तत्रामत्ता-नामपि तत्रैव "कुष्माण्डमिक्षुदण्डञ्च मद्यमासव-मेव च । एते वलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा" । छागसमाः पञ्चविंशतिवर्षावधितृप्तिजनकाः "अजा-विकानां रुधिरैः पञ्चविंशतिवार्षिकीम् । तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथेति" तत्रैवोक्तेः । वस्तुतस्तु "न हिंस्यादिति" निषेधस्य सङ्कोचमन्तरेणैव छागसमा-नामप्रसम्भवे छागवलिर्ब्राह्मणैर्न कार्य्य एव । एवं मद्यासवे अपि न देये । "वरं प्राणाः प्रगच्छन्तु ब्राह्मणो नार्पयेत्सुरामिति" "ब्राह्मणो मदिरां दत्त्वा ब्राह्मण्या-देव हीयते" इति च वृहत्कुम्भतन्त्रवचनात् । अत-एव तत्प्रतिनिधिरपि कालिकापुराणे दर्शितः "अवश्य विहित यत्र मद्य तत्र द्विज पुन । नारिकेल जलं कांस्ये, ताम्रे चैवोत्सृजेन्मधु" । कात्यायनी तन्त्रे "उपसर्गोपशान्त्यर्थे त्रिरावृत्तिं पठेन्नर । ग्रहदोषोपशान्त्यर्थं पञ्चावृत्तं वरानने ॥ महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत्" इत्यादिना फलभेदेन संख्याभेदाननेकानुपसंहृतम् "अथ वा बहुनोक्तेन किमन्येन वरानने ॥ चण्ड्या शतावृत्तपाठात्सर्व्वाः सिध्यन्ति सिद्धय" इति । इतोऽप्यधिका सहस्रसंख्या-दयोऽत्र द्रष्टव्याः । हरगौरीतन्त्रे "श्रीकाम पुत्रकामो वा सृष्टिमार्गक्रमेण तु । जपेन्मध्यमादिमारभ्य युग्म-दैत्यवधावधि । आदिमारभ्य प्रजपेत्पश्चाच्छेष समा-पयेत् । शान्त्यादिकामः सर्व्वत्र स्थितिमार्गक्रमेण तु । सावर्णिः सूर्य्यतनय सावर्णिर्भविता मनु । षष्ठे चा-न्त्यमारभ्य पश्चादादि समापयेत्" । इत्यादिकस्य कामना-भेदेन पाठवैचित्र्यस्य कतिपयश्लोकमात्रपाठेन तत्तत्-प्रयोगवैचित्र्यस्य च विस्तरो डामरादितन्त्रस्तोमन्यान्त-रेभ्य एवावगन्तव्यः । केरलास्तु एकैकस्मिन्दिवसे एकैकमेव चरित्रं पठेदिति दिनत्रयेणैकावृत्तिरित्येकः पक्षः । "चन्द्राग्निभूवेदकरेन्दुदस्रसङ्ख्याकमध्यायान् ; क्रमेण दिनभेदेन पठेदिति सप्तभिर्दिनैरेका वृत्तिरित्यन्य पक्ष. इत्याहुः । अत्र द्वितीयमेव पक्ष पाटोऽयद्वि-प्रकारः । इति सप्ताध्यायाः संटह्लन्त मङ्गलदनुया-यिनोऽनुतिष्ठन्ति कचटतपयशवर्गैर्विरहभपिसान्त्यैरक्षरैरङ्काः नेत्रे शून्य ज्ञेय तथा स्वरे केवले कथिते" इति प्रसिद्धपरिभाषया पकारयकाररकारा एकस्मिन् ठमरेफा द्वयो हिंस्यल्लघु संकेतित इति । तन्मूलत-न्त्राणि त एव जानन्ति । अन्यत्रापि तानि तन्त्रवचनानि सर्कादिनैकावत्तमपराणि । अस्ति हि तादृशोऽप्यस्य प्रयोग कात्यायनीतन्त्रे मन्त्रविभजनान्ते" होमे स्वाहा-न्तिमा एते पूजायां तु नमोऽन्तिमाः । तर्पणे तर्पया-

| अध्यायः | श्लोकः | श्लोकात्मा | अर्द्धश्लोकात्मा | त्रिपात् | उवाचाङ्कितः | मन्त्रः |
|---|---|---|---|---|---|---|
| ९ | ३९ | ३९ | ० | ० | २ | ४१ |
| १ | २७॥ | २७ | १ | ० | ४ | ३२ |
| ११ | ५०॥ | ५० | १ | ० | ४ | ५५ |
| १२ | ३८ | ३७ | २ | ० | २ | ४१ |
| १३ | १७॥ | १४ | ७ | ० | ६ | पुनरुक्तः२९ |
| उ०च० ९ | २५५ | २२७ | १२ | ६६ | २४ | पुनरुक्तः२४१ |
| समष्टि १३ | ५७८ | ५३७ | ३८ | ६६ | ५७ | पुनरुक्त० ७०० |

अस्या रहस्यमुक्तं मार्कण्डेय पु० प्राधानिकादिरहस्ये "राजोवाच। भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः। एतेषां प्रकृतिं ब्रह्मन्! प्रधानं वक्तुमर्हसि॥ आराध्यं यन्मया देव्याः स्वरूपं येन च द्विज!। विधिना! ब्रूहि सकलं यथावत् प्रणतस्य मे॥ ऋषिरु०"इदं रहस्यं परममनाख्येयं प्रचक्षते। भक्तोऽसीति न मे किञ्चित्तवावाच्यं नराधिप!॥ सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी। लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता॥ मातुलिङ्गं गदां खेटं पानपात्रं च बिभ्रती। नागं लिङ्गं च योनिञ्च बिभ्रती नृप मूर्द्धनि॥ तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा। शून्यं तदखिलं स्वेन पूरयामास तेजसा॥ शून्यं तदखिलं लोकं विलोक्य परमेश्वरी। बभार रूपमपरन्तमसा केवलेन हि॥ सा भिन्नाञ्जनसङ्काशा दंष्ट्राञ्चितवरानना। विशाललोचना नारी बभूव तनुमध्यमा॥ खड्गपात्रशिरःखेटैरलङ्कृतचतुर्भुजा। कबन्धहारं शिरसा बिभ्राणा हि शिरःस्रजम्॥ ताम्प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम्। ददामि तव नामानि यानि कर्माणि तानि ते॥ महामाया महाकाली महामारी क्षुधा तृषा। निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया॥ इमानि तव नामानि प्रतिपाद्यानि कर्मभिः। एभिः कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते सुखम्॥ तामित्युक्त्वा महालक्ष्मी स्वरूपमपरं नृप। सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभन्दधौ॥ अक्षमालाङ्कुशधरा वीणापुस्तकधारिणी। सा बभूव वरा नारी नामान्यस्यै च सा ददौ॥ महाविद्या महावाणी भारती वाक् सरस्वती। आर्या ब्राह्मी महाधेनुर्वेदगर्भा सुरेश्वरी॥ अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम्। युवां जनयतां देव्यौ मिथुने स्वानुरूपतः॥ इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम्। हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ॥ ब्रह्मन्विधे विरिञ्चेति धातरित्याह तं नरम्। श्रीः पद्मे कमले लक्ष्मीत्याह माता स्त्रियञ्च ताम्॥ महाकाली भारती च मिथुने सृजतः सह। एतयोरपि रूपाणि नामानि च वदामि ते॥ नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम्। जनयामास पुरुषं महाकाली सितां स्त्रियम्॥ स रुद्रः शङ्करः स्थाणुः कपर्द्दी च त्रिलोचनः। त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षरा स्वरा॥ सरस्वती स्त्रियं गौरीं कृष्णं च पुरुषं नृप। जनयामास नामानि तयोरपि वदामि ते॥ विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः। उमा गौरी सती चण्डी सुन्दरी सुभगा शिवा॥ एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे। चक्षुष्मन्तोऽनुपश्यन्ति नेतरेऽतद्विदो जनाः॥ ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम्। रुद्राय गौरीं वरदां वासुदेवाय च श्रियम्॥ स्वरया सह सम्भूय विरिञ्चोऽण्डमजीजनत्। बिभेद भगवान् रुद्रस्तद्गौर्या सह वीर्यवान्॥ अण्डमध्ये प्रधानादि कार्य्यजातमभून्नृप!। महाभूतात्मकं सर्वं जगत्स्थावरजङ्गमम्॥ पुपोष पालयामास तं लक्ष्म्या सह केशवः। महालक्ष्मीरेवमजा राजन्! सर्वेश्वरेश्वरी॥ निराकारा च साकारा सैव नानाभिधानभृत्। नामान्तरैर्निरूप्यैषा नाम्ना नान्येन केनचित्" १अ०।

"ऋषिरुवाच। त्रिगुणा तामसी देवी सात्त्विकी या त्रिधोदिता। सा शर्वा चण्डिका दुर्गा भद्रा भगवतीर्य्यते॥ योगनिद्रा हरेरुक्ता महाकाली तमोगुणा। मधुकैटभनाशार्थं यान्तुष्टावाम्बुजासनः॥ दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा। विशालया राजमाना त्रिंशल्लोचनमालया॥ स्फुरद्दशनदंष्ट्रा सा भीमरूपापि भूमिप!॥ रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियाम्। खड्गबाणगदाशूलचक्रशङ्खभुशुण्डिभृत्॥ परिघं कार्म्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ। एषा सा वैष्णवी माया महाकाली दुरत्यया॥ आराधिता वशीकुर्य्यात् पूजाकर्त्तुश्चराचरम्। सर्वदेवशरीरेभ्यो याऽऽविर्भूताऽमितप्रभा॥ त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्द्दिनी। श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला॥ रक्तमध्या रक्तपादा नीलजङ्घोरुरुन्मदा। सुचित्रजघना चित्रमाल्याम्बरविभूषणा॥ चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी। अष्टादशभुजा पूज्या सा सहस्रभुजा सती॥ आयुधान्यत्र वक्ष्यन्ते दक्षिणाधःकर-

क्रमात् । अक्षमाला च कमलं वाणोऽसिः कुलिशं गदा । चक्रं त्रिशूलं परशुः शङ्खो घण्टा च पाशकः । शक्तिर्दण्डश्चर्म चापं पानपात्रं कमण्डलुः । अलङ्कृतभुजामेभिरायुधैः कमलासनाम् । सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप ! ॥ पूजयेत्सर्वदेवानां स लोकानां प्रभुर्भवेत् । गौरीदेहात्समुद्भूता या सत्त्वैकगुणाश्रया । साक्षात्सरस्वती प्रोक्ता शुम्भासुरनिवर्हिणी । दधौ चाष्टभुजा बाणमुषले शूलचक्रभृत् । शङ्खं घण्टां लाङ्गलञ्च कार्मुकं वसुधाधिप ! ॥ एषा सम्पूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति । निशुम्भमथिनी देवी शुम्भासुरनिवर्हिणी । इत्युक्तानि स्वरूपाणि मूर्त्तीनामथ पार्थिव ! स्वरूपाणि जगन्मातुः, पृथगर्चां निशामय । महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती । दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुनत्रयम् । विरिञ्चिः स्वरया मध्ये रुद्रो गौर्य्या च दक्षिणे । वामे लक्ष्म्या हृषीकेशः इत्येवं देवतात्रयम् । अष्टादशभुजा मध्ये वामे चास्या दशानना । दक्षिणेऽष्टभुजा लक्ष्मीर्महतीं तां समर्चयेत् । अष्टादशभुजा चैषा यदा पूज्या नराधिप ! । दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा । कालमृत्यू च सम्पूज्यौ सर्वारिष्टप्रशान्तये । यदा चाष्टभुजा पूज्या शुम्भासुरनिवर्हिणी । नवास्याः शक्तयः पूज्यास्तदा रुद्रविनायकौ । नमो देव्या इति स्तोत्रैर्महालक्ष्मीं समर्चयेत् । अवतारत्रयार्चायां स्तोत्रमन्त्रास्तदाश्रयाः । अष्टादशभुजा चैषा पूज्या महिषमर्द्दिनी । महालक्ष्मीर्महाकाली महती च सरस्वती । ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी । महिषान्तकरी येन पूजिता स जगत्प्रभुः । पूजयेज्जगतां धात्रीं चण्डिकां भक्तवत्सलाम् । अर्घ्यादिभिरलङ्कारैर्गन्धपुष्पैस्तथोत्तमैः । धूपैर्दीपैश्च नैवेद्यैः नानाभक्ष्यसमन्वितैः । रुधिराक्तेन बलिना मांसेन सुरया नृप ! ॥ सुरभिणा स्नानीयेन चन्दनेन सुगन्धिना । सकर्पूरैश्च ताम्बूलैर्भक्तिभावसमन्वितैः । वामभागेऽग्रतो देव्याः छिन्नशीर्षं महासुरम् । पूजयेन्महिषं येन गतं सायुज्यमीशया । दक्षिणे पुरतः सिंहं समग्रं धर्ममीश्वरम् । ततः कृताञ्जलिर्भूत्वा स्तुवीत चरितैस्त्रिभिः । एकेन वा मध्यमेन नैकेनेतरयोरिह । चरितार्द्धन्तु न जपेज्जपन् छिद्रमवाप्नुयात् । स्तोत्रमन्त्रैः स्तुवीतेमां यदि वा जगदम्बिकाम् । प्रदक्षिणनमस्कारं कृत्वा मूर्ध्नि कृताञ्जलिः । क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतन्द्रितः । प्रतिश्लोकञ्च जुहुयात्पायसं तिलसर्पिषा । जुहुयात्स्तोत्रमन्त्रैर्वा चण्डिकायै शुभं हविः । भूयो नमःपदैर्देवीं पूजयेत् सुसमाहितः । प्रयतः प्राञ्जलिः प्रह्वः प्राणानारोप्य चात्मनि । सुचिरं भावयेदीशां चण्डिकान्तन्मयो भवेत् । एवं यः पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् । भुक्त्वा भोगान् यथाकामं देवीसायुज्यमाप्नुयात् । यो न पूजयते नित्यं चण्डिकां भक्तवत्सलाम् । भस्मीकृत्यास्य पुण्यानि निर्द्दहेत्परमेश्वरी । तस्मात् पूजय भूपाल ! सर्वलोकमहेश्वरीम् । यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि” १५ अ० ।

“ऋषिरुवाच । नन्दा१ भगवती नाम या भविष्यति नन्दजा । सस्तुता पूजिता ध्याता वशीकुर्य्याज्जगत्त्रयम् । कनकोत्तमकान्तिः सा सुकान्तिकनकाम्बरा । देवी कनकवर्णाभा कनकोत्तमभूषणा । कमलाङ्कुशपाशाब्जैरलङ्कृतचतुर्भुजा । इन्दिरा कमला लक्ष्मीः सा श्रीरुक्माम्बुजासना ॥ या रक्तदन्तिका२ नाम देवी प्रोक्ता मयानघ । तस्याः स्वरूपं वक्ष्यामि शृणु सर्वभयापहम् । रक्ताम्बरा रक्तवर्णा रक्तसर्वाङ्गभूषणा । रक्तायुधा रक्तनेत्रा रक्तकेशाऽतिभीषणा । रक्ततीक्ष्णनखा रक्तदशना रक्तदन्तिका । पतिं नारीवानुरक्ता देवी भक्तं भजेज्जनम् । वसुधेव विशाला सा सुमेरुयुगलस्तनी । दीर्घौ लम्बावतिस्थूलौ तावतीव मनोहरौ । कर्कशावतिकान्तौ तौ सर्वानन्दपयोनिधी । भक्तान् सम्पाययेद्देवी सर्वकामदुघौ स्तनौ । खड्गपात्रञ्च मुषलं लाङ्गलञ्च बिभर्त्ति सा । आख्याता रक्तचामुण्डा देवी योगेश्वरीति सा । अनया व्याप्तमखिलं जगत् स्थावरजङ्गमम् । इमां यः पूजयेद्भक्त्या स व्याप्नोति चराचरम् । अधीते य इमं नित्यं रक्तदन्तीवपुःस्तवम् । तं सा परिचरेद्देवी पतिं प्रियमिवाङ्गना२ । शाकम्भरी३ नीलवर्णा नीलोत्पलविभूषणा । गम्भीरनाभिस्त्रिवलीविभूषिततनूदरी । सुकर्कशसमोत्तुङ्गवृत्तपीनघनस्तनी । मुष्टिं शिलीमुखैः पूर्णं कमलं कमलालया । पुष्पपल्लवमूलादिफलाढ्यं शाकसञ्चयम् । काम्यानन्तरसैर्युक्तं क्षुत्तृण्मृत्युजरापहम् । कार्मुकञ्च स्फुरत्कान्ति बिभर्त्ति परमेश्वरी । शाकम्भरी शताक्षी स्यात् सैव दुर्गा४ प्रकीर्त्तिता । शाकम्भरीं स्तुवन् ध्यायन् जपन् सम्पूजयन्नमन् । अक्षय्यमश्नुते शीघ्रमन्नपानादि सर्वशः । भीमाऽपि५ नीलवर्णा सा दंष्ट्रादशनभासुरा ।

च्छेषु येत्येष प्राग्वत् मन्त्रत्रयात्मकः । स्तुता सुरैरिति श्लोकाष्टविरेव स्तवादिका । श्लोकाः सप्तदशार्धानि निशम्येति मनुत्रयम् । दूतोक्तिर्देवि ! दैत्येति नव-श्लोका ऋषेर्वच । इत्युक्ता सा तदेत्येक श्लोको देवीवचस्ततः । सत्यमुक्तमिति श्लोकचतुष्कमथ दूत वाक् । अवलिप्तेति चत्वारः श्लोका देव्यास्ततोवचः । एवमेतदिति द्वाविंशत्येकोनत्रि शदुत्तरम । शत १२९ मन्त्रा पञ्चमे षट्सप्तति७६ श्लोकमण्डिते । अथपरित्या-कर्ण्येति चतु श्लोकी ऋषेर्वच । तेनाप्तइति श्लोक त्रय देवीवचस्ततः । दैत्येश्वरेणत्येकोऽथ ऋषिरित्युक्त इत्यमी । द्वादशेति मता षष्ठे चतुर्विंशतिमन्त्रका २४। अथर्षिवाक् मयाज्ञप्ता इत्याद्यास्तत्राष्टविंशतिः २२ । ऋषिस्ताविनुभावित्य सप्तमे सप्तविंशति २७। अथर्षिवाणी चण्डे चेत्यारभ्याभिजघान तम् । इत्यन्त पञ्च मञ्चा-शच्छ्लोकामन्त्रास्तत परम् । सुखेन काली ज्वटेह्-इत्यर्धश्लोकमन्त्रक । ततोऽसाविति षट् श्लोकाश्च-षष्टिरेत्यमष्टमे६२ । राजा विचित्रमित्यादि श्लोक द्वयमथो ऋषिः । चकार कोपमित्याद्या सप्तत्रिंश दुदीरिता । इत्येकचत्वारिंशत्४१सुनेवमाध्यायमन्त्र-काः । ऋषिर्निशुम्भ निहतमिति द्वात्रिंशका-स्ततः । एकैवेति द्वय देवी तत एकोऽहमित्यृषि । तत प्रववृते युद्धमिति श्लोकास्त्रयोदश । तत्रापि सा नि-राधारेत्यर्धश्लोकात्मकोमनु । निहते च तदा दैत्य इत्याद्या मनवोनव । इत्येवं दशमेऽध्याये द्वात्रिंशन् मनवोमता ३२ । ऋषेर्देव्याहते तत्रेत्याद्यास्त्रिंशच्चतु-र्युताः३४ । देवीवाग् वरदेत्योके देवा सर्वेति चैककः । देवी वैवस्वतेत्यष्टावथ शाकम्भरी मनु । अर्धश्लोका-त्मकः पश्चाच्छ्लोकास्तत्र च चेति षट् । एवमेकादशे मन्त्राः पञ्चपञ्चाशदीरिता ५५ । देवीवागेभिरित्याद्या श्लोका अष्टादशोदिता । सर्वं ममैतदित्यर्धं पश्चाद्या श्लोकका दश । ऋषेर्वचनमित्युक्त्वाद्या श्लोका-स्ततस्त्रय । निशुम्भे चेत्यर्धमनुरेवं भगवतीति षट् । इत्येकचत्वारिंशत्४१स्या द्वादशाध्यायमन्त्रका । ऋषिरेतत्त इत्यर्धश्लोको मन्त्रस्ततस्त्रय । एवंभाषा वे स्माद्या मार्कण्डेय उवाच ह । इति तस्येति षट् श्लोका-देवी यदिति चैकक । मार्कण्डेय उवाचाथ ततो वर्णे मनुद्वयम् । देव्युवाच तत स्वल्पैरहोभिरिति सम्मता । अर्धश्लोकात्मका मन्त्रा मार्कण्डेयवचस्तत । इति दत्त्वा तयोरेवं देव्यावरमिति द्वयम् । द्विर्दण्डकत्रिमन्त्रा-यादाहस्त स्वाक्षरद्वयम् । इत्येवमेकोनत्रिंशम्२९मनवः-स्युः त्रयोदशे । अत्रापरे नवार्धानि केचिदेकादशाध्ययु न तत् कात्यायनीतन्त्रलक्षित किन्तु कल्पितम् । इत्यु सप्तशतीसन्त्रेऽस्मिन्नध्यायत्रिनवमादन्तर्गतानि । तस्मा य मन्त्र सर्वैरेकचत्वारिंशच्छतो४४१ । अर्धश्लोकात्मका मन्त्रा स्तेषु द्वादश कीर्त्तिता । त्रिपाद्गु मन्त्रास्तु षट्षष्टिर्द्वौ-श्लोकौ पुनरुक्तकौ । श्लोका अपुनरुक्तास्तु त्रिशती सप्त-विंशति ३२७ । राज्ञो देवदूतोक्ती द्वे द्वे देव्युक्तयो-दश । मार्कण्डेयोक्तयस्त्रिसप्तषष्टिवाक्यानि षोडश । इत्युवाचाङ्किताः मन्त्राश्चतुस्त्रिंशदिति ३४ स्थिति । अथ-सर्वे निहितास्तदध्यायेषु त्रयोदशसु । पञ्च शतानि श्लोका अष्टसप्ततियुतानि५७८ । तेष्वन्त्यौ श्लोकौ द्विगुणौ भवतस्तेषां द्वाविंशतिभाग । एकोनविंशतेश द्वेधा ते पञ्चषष्टिरतिरिक्ता । ब्रह्मा भगवान्दूतोवैश्यो देवा ऋषयो मार्कण्डेयस्त । देव्युवाचैकैकाद्विद्विचतु शराकेन्द्रमिता । इति सप्ताधिकपञ्चाशदुवाच पदाङ्किता अमी अधिकाः । द्वाविंशतिशतमेषां श्लोकैर्योगेन मन्त्रसप्तशती । इति विभजमनुदित प्रतिमन्त्रं कात्यायनीतन्त्रे । तस्मादेतत् प्रकृतिक्रम-पूर्णमन्यत्तु यामलप्रभृति । एकमन्त्रत्रिपान्मन्त्र पुन रुक्तोऽर्धमन्त्रकः । उवाचाङ्कितइत्येव मन्त्र प्रोक्तोऽत्र पञ्चधा । मन्त्रपिण्ड श्लोकपिण्डो ऽध्यायपिण्ड इति त्रिधा ।” शुभवती

नागोजीभट्टकृतविभागस्तन्याहश विस्तरभयान्नोक्त उ-भयोश्च युक्तायुक्तत्वमुभयग्रन्थदर्शनेन सुधीभिर्विचिन्त्यम् ।

तदस्य सङ्क्षेपः ।

| अध्यायः | श्लोक | श्लोकात्मा | अर्द्धश्लोकात्मा | त्रिपाद् | उवाचाङ्कित | मन्त्र |
|---|---|---|---|---|---|---|
| १अ० १ | ७८ | ६६ | २४ | ० | १४ | १०४ |
| २ | ६८ | ६८ | ० | ० | १ | ६९ |
| ३ | ४१ | ४१ | ० | ० | ३ | ४४ |
| ४ | २६ | २५ | २ | ० | ५ | ३२ |
| २८०१ | १६५ | १४४ | २ | ० | ९ | १५५ |
| ५ | ७६ | ५४ | ० | ६६ | ९ | १२९ |
| ६ | २० | २० | ० | ० | ४ | २४ |
| ७ | २५ | २५ | ० | ० | २ | २७ |
| ८ | ६१॥ | ६१ | १ | ० | १ | ६३ |

विशाललोचना नारी वृत्तपीनघनस्तनी । चन्द्रहासञ्च डमरुं शरं पात्रञ्च बिभ्रती । एकवीरा कालरात्रिः सैवोक्ता कामदा स्तुता५ । तेजोमण्डलदुर्द्धर्षा भ्रामरीह् चित्रकान्तिभृत् । चित्रभ्रमरपाणिः सा महामारीति गीयते६ । इत्येतामूर्त्तयोदेव्या व्याख्याता वसुधाधिप ! । जगन्मातुश्चण्डिकायाः कीर्त्तिताः कामधेनवः । इदं रहस्यं परमं न वाच्यं कस्यचित्त्वया । व्याख्यानं दिव्यमूर्त्तीनामधीष्वावहितः स्वयम् । देव्याध्यानं मया प्रोक्तं गुह्याद्गुह्यतरं महत् । तस्मात्सर्व्वप्रयत्नेन सर्व्वकामफलप्रदम् । १६ अ० ।

शतचण्डीविधानं मन्त्रमहोदधौ १८ तरङ्गे नवार्ण-प्रयोगानन्तरं प्रतिपादितं यथा

"शतचण्डीविधानन्तु प्रवक्ष्ये प्रीतये नृणाम् । नृपोपद्रव आपन्ने दुर्भिक्षे भूमिकम्पने । अतिवृष्ट्यामनावृष्टौ परचक्रभये क्षये । सर्व्वे विघ्ना विनश्यन्ति शतचण्डीविधौ कृते । रोगाणां वैरिणां नाशो धनपुत्रसमृद्धय । शङ्करस्य भवान्या वा प्रासादनिकटे शुभम् । मण्डपं द्वारवेद्याढ्यं कुर्य्यात् सध्वजतोरणम् । तत्र कुण्डं प्रकुर्व्वीत प्रतीच्यां मध्यतोऽपि वा । स्नात्वा नित्यकृतिं कृत्वा वृणुयाद्दश वाडवान् । जितेन्द्रियान् सदाचारान् कुलीनान् सत्यवादिनः । व्युत्पन्नांश्चण्डिकापाठरतांश्चाह्वयेत । मधुपर्कविधानेन वस्त्रस्वर्णादिदानतः । जपार्थमासनं मालां दद्यात्तेभ्योऽपि भोजनम् । ते हविष्याशनरता मन्त्रार्थगतमानसाः । भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम् । मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः । नवार्णं चण्डिकामन्त्रं जपेयुश्चाऽयुतं पृथक् । यजमानः पूजयेच्च कन्यानां नवकं शुभम् । द्विवर्षाद्यादशाब्दान्ता कुमारी परिपूजयेत् । नाधिकाङ्गा न हीनाङ्गी कुष्ठिनीञ्च व्रणाङ्किताम् । अन्धां काणां केकराक्षीं कुरूपां रोमयुक्तनुम् । दासीजातां रोगयुक्तां दुष्टां कन्यां न पूजयेत् । विप्रां सर्व्वेष्टसिद्ध्यर्थं यशसे क्षत्रियोद्भवाम् । वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत् । द्विवर्षा सा कुमार्य्युक्ता त्रिमूर्त्तिर्हायनत्रिका । चतुरब्दा तु कल्याणी पञ्चवर्षा तु रोहिणी । षडब्दा कालिका प्रोक्ता चण्डिका सप्तहायनी । अष्टवर्षा शाम्भवी स्याद्दुर्गा च नवहायनी । सुभद्रा दशवर्षोक्ता तां मन्त्रैः परिपूजयेत् । एकाब्दाया प्रीत्यभावो रुद्राब्दा तु विवर्जिता । तासामावाहने मन्त्रं प्रोच्यते शङ्करोदितम् । मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम् । नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् । कुमारिकादिकन्यानां पूजामन्त्रान् ब्रुवेऽधुना । जगत्पूज्ये ! जगद्वन्द्ये ! सर्व्वशक्तिस्वरूपिणि ! । पूजां गृहाण कौमारि ! जगन्मातर्नमोऽस्तु ते ।१ त्रिपुरां त्रिपुराधारां त्रिवर्गज्ञानरूपिणीम् । त्रैलोक्यवन्दितां देवीं त्रिमूर्त्तिं पूजयाम्यहम् ।२ कालात्मिकां कलातीतां कारुण्यहृदयां शिवाम् । कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम् ।३ अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् । अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ।४ कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम् । कामदां करुणोदारां कालिकां पूजयाम्यहम् ।५ चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जिनीम् । पूजयामि महादेवीं चण्डिकां चण्डविक्रमाम् ।६ सदानन्दकरीं शान्तां सर्व्वदेवनमस्कृताम् । सर्व्वभूतात्मिकां देवीं शाम्भवीं पूजयाम्यहम् ।७ दुर्गमे दुस्तरे कार्य्ये भवार्णवविनाशिनीम् । पूजयामि सदा भक्त्या दुर्गां दुर्गार्त्तिनाशिनीम् ।८ सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम् । सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ।९ एतैर्मन्त्रैः पुराणोक्तैस्तां तां कन्यां प्रपूजयेत् । गन्धैः पुष्पैर्भक्ष्यभोज्यैर्वस्त्रैराभरणैरपि । वेद्यां विरचिते रम्ये सर्व्वतोभद्रमण्डले । घटं संस्थाप्य विधिवत्तत्रावाह्यार्च्चयेच्छिवाम् । तदग्रे कन्यकाश्चापि पूजयेद्ब्राह्मणानपि । उपचारैस्तु विविधैः पूर्व्वोक्तावरणान्यपि । एवं चतुर्द्दिनं कृत्वा पञ्चमे होममाचरेत् । पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारम्भाफलैरपि । मातुलुङ्गैरिक्षुखण्डैर्नारिकेलैः पुरैस्तिलैः । जातिफलैराम्रफलैरन्यैर्मधुरवस्तुभिः । सप्तशत्या दशावृत्त्या प्रतिश्लोकं हुतञ्चरेत् । अयुतञ्च नवार्णेन स्थापितेऽग्नौ विधानतः । कृत्वाऽऽवरणदेवानां होमं तन्नाममन्त्रतः । कृत्वा पूर्णाहुतिं सम्यग्देवमग्निं विसृज्य च । अभिषिञ्चेच्च यष्टारं विप्रौघः कलशोदकैः । निष्कं सुवर्णमथ वा प्रत्येकं दक्षिणां दिशेत् । भोजयेच्च शतं विप्रान् भक्ष्यभोज्यैः पृथग्विधैः । तेभ्योऽपि दक्षिणां दत्त्वा गृह्णीयादाशिषस्ततः । एवं कृते जगद्वश्यं सर्व्वे नश्यन्त्युपद्रवाः । राज्यं धनं यशः पुत्रानिष्टमन्यं लभेत सः" ।

सहस्रचण्डीविधानं तत्रैव १८ तरङ्गे

"एतद्दशगुणं कुर्य्याच्चण्डीपाठस्थिकं विधिम्। विद्याव्रत सदाचारान् ब्राह्मणान् वृणुयाच्छतम्। प्रत्येकं चण्डिकापाठान् विदध्युस्ते दशा१० मितान्। अयुतं प्रजपेयुस्ते प्रत्येकं च नवार्णकम्। पूर्व्वोक्ता कन्यका' पूज्या' पूर्व्वमन्त्रैः शतं शुभा। दशांशमेव सम्पाद्य होमं कुर्य्यात् प्रयत्नतः। सप्तशत्याः शतावृत्त्या प्रतिश्लोकं विधानतः। लक्षसंख्य नवार्णेन पूर्व्वोक्तैर्द्रव्य सञ्चयैः। होतृभ्यो दक्षिणान्दत्त्वा पूर्व्वोक्तान् भोजयेद्द्विजान्। सहस्रप्रमितान् साधून् देव्याराधनतत्परान्। एवं सहस्रसंख्याके कृते चण्डीविधौ नृणाम्। सिध्यत्यभीप्सितं सर्व्वं दुःखौघश्च विनश्यति। मारीदुर्भिक्षरोगाद्या नश्यन्ति व्यसनोच्चयाः। नेमं विधिं वदेद्दुष्टे खले चौरे गुरुद्रुहि। साधौ जितेन्द्रिये दान्ते वदेद्विधिमिमं परम्। एवं सा चण्डिका तुष्टा यष्टॄन् श्रोतॄंश्च रक्षति"।

चण्डीमहाक्षरविधानं तत्रैव १८तरङ्गे

"अथोमहाक्षरंमन्त्रं वक्ष्ये चण्डीप्रसत्तये। वाङ्माया मदनो दीर्घलक्ष्मीस्तन्द्रा श्रुतीन्दुयुक्। डायै सदक् जल कूर्म्मद्वय झिण्टीशसंयुतम्। (ऐं ह्रीं क्लीं चामुण्डायै विच्चे) नवाक्षरोऽस्य ऋषयो ब्रह्मविष्णुमहेश्वराः। छन्दांस्युक्तानि मुनिभिर्गायत्र्युष्णिगनुष्टुभः। देव्यः प्रोक्ता महापूर्व्वाः काली लक्ष्मीः सरस्वती। नन्दाशाकम्भरी भीमाः शक्तयोऽस्य मनोः स्मृताः। स्याद्रक्तदन्तिकादुर्गा भ्रामर्य्यो बीजसञ्चयः। अग्निवायुभगास्तत्त्वम्फलं वेदत्रयोदितम्। सर्व्वाभीष्टप्रसिद्ध्यर्थं विनियोग उदाहृतः। ऋषिच्छन्दोदैवतानि शिरोमुखहृदि न्यसेत्। शक्तिबीजानि स्तनयोस्तत्त्वानि हृदये पुनः। एकैकेन चैकेन चतुर्भिर्युगलेन च। समस्तेन च मन्त्रेण कुर्य्यादङ्गानि षट् सुधीः। ततएकादश न्यासान् कुर्व्वीतेष्टफलप्रदान्। प्रथमो मातृकान्यासः कार्य्यः पूर्व्वोक्तमार्गतः। कृतेन येन देवस्य सारूप्यं याति मानवः। अथ द्वितीयं कुर्व्वीत न्यासं सारस्वताभिधम्। बीजत्रयन्तु मन्त्राद्यं तारादि हृदयान्तिकम्। क्रमादङ्गुलिषु न्यस्येत् कनिष्ठाद्यासु पञ्चसु। करयोर्मध्यतः पृष्ठे मणिबन्धे च कूर्परे। हृदयादिषडङ्गेषु विन्यसेत् जातिसंयुतम्। अस्मिन् सारस्वते न्यासे कृते जाड्यं विनश्यति। ततस्तृतीयं कुर्व्वीत न्यासं मातृगणान्वितम्। मायाबीजादिका ब्राह्मी पूर्व्वतः पातु मां सदा। माहेश्वरी तथाग्नेय्यां कौमारी दक्षिणेऽवतु। वैष्णवी पातु नैर्ऋत्ये वाराही पश्चिमेऽवतु। इन्द्राणी वायुकोणे च चामुण्डा चोत्तरेऽवतु। ऐशाने तु महालक्ष्मीरूर्द्ध्वं व्योमेश्वरी तथा। सप्तद्वीपेश्वरी भूमौ रक्षेन्नागेश्वरी तले। तृतीयेऽस्मिन् कृते न्यासे त्रैलोक्यविजयी भवेत्। न्यासं चतुर्थं कुर्व्वीत नन्दजादिसमन्वितम्। नन्दजा पातु पूर्व्वाङ्गं कमलाङ्कुशमण्डिता। खड्गपात्रकरा पातु दक्षिणे रक्तदन्तिका। पृष्ठे शाकम्भरी पातु पुष्पपल्लवसंयुता। धनुर्बाणकरा दुर्गा वामे पातु सदैव माम्। शिरःपात्रकरा भीमा मस्तकाच्चरणावधि। पादादि मस्तकं यावद्भ्रामरी चित्रकान्तिभृत्। तुर्य्यं न्यासं नरः कुर्व्वन् जरामृत्यू व्यपोहति। अथ कुर्व्वीत ब्रह्माद्यं न्यासं पञ्चममुत्तमम्। पादादिनाभिपर्य्यन्तं ब्रह्मा पातु सनातनः। नाभेर्विशुद्धिपर्य्यन्तं पातु नित्यं जनार्द्दनः। विशुद्धेर्ब्रह्मरन्ध्रान्तं पातु रुद्रस्त्रिलोचनः। हंसः पातु पदद्वन्द्वं वैनतेयः करद्वयम्। चक्षुषी वृषभः पातु सर्व्वाङ्गाणि गजाननः। परापरौ देहभागौ पात्वानन्दमयो हरिः। कृतेऽस्मिन् पञ्चमे न्यासे सर्व्वान् कामानवाप्नुयात्। षष्ठं न्यासं ततः कुर्य्यान्महालक्ष्म्यादिसंयुतम्। मध्यं पातु महालक्ष्मीरष्टादशभुजान्विता। ऊर्द्ध्वं सरस्वती पातु भुजैरष्टाभिरूर्जिता। अधः पातु महाकाली दशबाहुसमन्विता। सिंहो हस्तद्वयं पातु मम हंसोऽक्षियुग्मकम्। महिषं दिव्यमारूढो यमः पातु पदद्वयम्। महेशश्चण्डिकायुक्तः सर्व्वाङ्गाणि ममावतु। षष्ठेऽस्मिन् विहिते न्यासे सद्गतिं प्राप्नुयान्नरः। मूलाक्षरन्यासरूपं न्यासं कुर्व्वीत सप्तमम्। ब्रह्मरन्ध्रे नेत्रयुगे श्रुत्योर्नासिकयोर्मुखे। पायौ मूलमनोर्वर्णांस्ताराद्यान्नमसाऽन्वितान्। विन्यसेत् सप्तमे न्यासे कृते रोगक्षयो भवेत्। पायुतो ब्रह्मरन्ध्रान्तं पुनस्तानेव विन्यसेत्। कृतेऽस्मिन्नष्टमे न्यासे सर्व्वं दुःखं विनश्यति। कुर्व्वीत नवमं न्यासं मन्त्रव्याप्तिस्वरूपकम्। मस्तकाच्चरणं यावच्चरणान्मस्तकावधि। पुरोदक्षे पृष्ठदेशे वामभागेऽष्टशो न्यसेत्। मूलमन्त्रं कृतो न्यासो नवमो देवताप्रियः। ततः कुर्व्वीत दशमं षडङ्गन्यासमुत्तमम्। मूलमन्त्रं जातियुक्तं (दीर्घस्वरयुक्तम्) हृदयादिषु विन्यसेत्। कृतेऽस्मिन् दशमे न्यासे त्रैलोक्यं वशगं भवेत्। दशन्यासोक्तफलदं कुर्य्यादेकादशं ततः। खड्गिनी शूलिनीत्यादि(१अ०६१–६५) पठित्वा श्लोकपञ्चकम्। आद्य(ऐं) [illegible] बीजं ध्यात्वा सर्व्वाङ्गके न्यसेत्।

शूलेन पाहि नो देवीत्यादि (४अ०२३–२६) श्लोकचतुष्टयम् । पठित्वा सूर्य्यसदृशं द्वितीयं (ह्रीँ) सर्व्वतो न्यसेत् । सर्व्वस्वरूपे सर्व्वेशे इत्यादि (११अ०२३–२७) श्लोकपञ्चकम् । पठित्वा स्फटिकाभासं तृतीयं (क्लीँ) स्वतनौ न्यसेत् । ततः षडङ्गं कुर्व्वीत विभक्तैर्मूलवर्णकैः । एकैकेन चैकेन चतुर्भिर्युगलेन च । समस्तेन च मन्त्रेण कुर्य्यादङ्गानि षट् सुधीः । शिखायां नेत्रयोः श्रुत्योर्नसोर्वक्त्रे गुदे न्यसेत् । मन्त्रवर्णान् समस्तेन व्यापकं समाचरेत् । खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः शङ्खं सन्दधतीं करैस्त्रिनयनां सर्व्वाङ्गभूषावृताम् । नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौत् स्वपिते हरौ कमलजो हन्तुं मधुकैटभौ । अक्षस्रक्परशू गदेषुकुलिशं पद्मं धनुः कुण्डिकां दण्डं शक्तिमसिञ्च चर्म्म जलजं घण्टां सुराभाजनम् । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्द्दिनीमिह महालक्ष्मीं सरोजस्थिताम् । घण्टाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् । गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्व्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्द्दिनीम् । एवं ध्यात्वा जपेल्लक्षचतुष्कं तद्दशांशतः । पायसान्नेन जुहुयात् पूजिते हेमरेतसि । जयादिशक्तिभिर्युक्ते पीठे देवीं यजेत्ततः । तत्त्व२५पत्रावृतत्र्यस्रे षट्कोणाष्टदलान्विते । त्रिकोणमध्ये सम्पूज्य ध्यात्वा तां मूलमन्त्रतः । पूर्व्वकोणे विधातारं स्वशक्त्या सह पूजयेत् । विष्णुं श्रिया च नैरृत्ये, वायव्ये तूमया शिवम् । उदग्दक्षिणयोः सिंहं महिषञ्च क्रमाद्यजेत् । षट्कोणेषु च पूर्व्वादौ नन्दजां रक्तदन्तिकाम् । शाकम्भरीं तथा दुर्गां भीमाञ्च भ्रामरीं यजेत् । सबिन्दुनामवर्णाद्यास्ताराद्याश्च नमोऽन्तिमाः । नन्दजाद्या यजेल्लक्ष्मीर्वक्ष्यमाणा अपीश्वरीः । अष्टपत्रेषु ब्रह्माणी पूज्या माहेश्वरी परा । कौमारी वैष्णवी चाथ वाराही नारसिंह्यपि । पश्चादैन्द्री च चामुण्डा तथा तत्त्व २५ दलेष्विमाः । विष्णुमाया चेतना च बुद्धिर्निद्रा क्षुधा ततः । छाया शक्तिः परा तृष्णा क्षान्तिर्जातिश्च लज्जया । शान्तिः श्रद्धा कान्तिलक्ष्म्यौ धृतिर्वृत्तिः श्रुतिः स्मृतिः । दया तुष्टिस्ततः पुष्टिर्माता भ्रान्तिरिति क्रमात् । बुद्धिर्भूगृहकोणेषु गणेशः क्षेत्रपालकः । वटुकश्चापि योगिन्यः पूज्या इन्द्रादिका अपि । एवं सिद्धे मनौ मन्त्री भवेत् सौभाग्यभाजनम् । मार्कण्डेयपुराणोक्तं नित्यं चण्डीस्तवं पठन् । पुटितं मूलमन्त्रेण जपन्नाप्नोति वाञ्छितम् । आश्विनस्य सिते पक्षे आरभ्याग्नितिथिं सुधीः । अष्टम्यन्तं जपेल्लक्षं दशांशं होममाचरेत् । प्रत्यहं पूजयेद्देवीं पठेत् सप्तशतीमपि । विप्रानाराध्य मन्त्री स्वमिष्टार्थं लभतेऽचिरात् । सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः । छन्दो गायत्र्युदितं महाकाली तु देवता । वाग्बीजं (ऐँ) पावकस्तत्त्वं धर्म्मार्थे विनियोजनम् । मध्यमे च चरित्रे तु मुनिर्विष्णुरुदाहृतः । उष्णिक्छन्दो महालक्ष्मीर्देवता बीजमद्रिजा(ह्रीँ) । वायुस्तत्त्वं धनप्राप्त्यै विनियोग उदाहृतः । उत्तरस्य चरित्रस्य ऋषिः शङ्कर ईरितः । त्रिष्टुप्छन्दो देवता च महापूर्व्वा सरस्वती । कामोबीजं (क्लीँ) रविस्तत्त्वं कामाप्त्यै विनियोजनम् । एवं सञ्चिन्त्य ऋष्यादीन् ध्यात्वा पूर्व्वोक्तमार्गतः । सार्थस्मृति पठेच्चण्डीस्तवं स्पष्टपदाक्षरम् । समाप्तौ तु महालक्ष्मीं ध्यात्वा कृत्वा षडङ्गकम् । जपेदष्टशतं१०८ मूलं देवतायै निवेदयेत् । एवं यः कुरुते सोऽत्र नाशमीयान्न जातुचित् । चण्डिका प्रभजन्मर्त्यो धर्म्मैर्धान्यैर्यशस्यै । पुत्रैः पौत्रैरथाऽऽरोग्यैर्युक्तो जीवेच्छतं समाः" ।

निर्णयसि० २परि० शतचण्डीविधौ विशेष उक्तो यथा रुद्रयामले "शतचण्डीविधानञ्च प्रोच्यमानं शृणुष्व तत् । सर्व्वोपद्रवनाशार्थं शतचण्डीं समारभेत् । षोडशस्तम्भसंयुक्तं मण्डपं पल्लवोज्ज्वलम् । वह्निकोणयुतां वेदीं मध्ये कुर्य्यात्त्रिभागतः । पञ्चहस्तचितां रम्यां तत्कुण्डाये हस्तमितम् । पञ्चवर्णरजोभिश्च कुर्य्यान्मण्डलकं शुभम् । पञ्चवर्णवितानञ्च किङ्किणीजालमण्डितम् । आचार्य्येण सम विप्रान् वरयेद्दश सुव्रतान् । ऐशान्यां स्थापयेत्कुम्भं पूर्व्वोक्तविधिमाचरेत् । वारुण्याञ्च प्रकर्त्तव्यं कुण्डं लक्षणलक्षितम् । मूर्त्तिं देव्याः प्रकुर्व्वीत सुवर्णस्य पलेन वै । तदर्द्धेन तदर्द्धेन तदर्द्धेन महामते ।। अष्टादशभुजां देवीं कुर्य्याद्वाष्टकरामपि । पट्टकूलयुगच्छन्नां देवीं मध्ये निधापयेत् । देवीं सम्पूज्य विधिवज्जपं कुर्य्युर्दश द्विजाः । प्रथमादौ शतस्यान्ते जपेन्मन्त्रं नवार्णकम् । चण्डीं सप्तशतीमध्ये सम्पुटोऽयमुदाहृतः । एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयम् । तथापि क्रमशस्तद्वत् पूजनादिकमाचरेत् । पञ्चमे दिवसे प्रातर्होमं कुर्य्याद्विधा-

मत॰। गुडूचीमाषसन्दूर्वान्तिलान् शुक्लान् यथाविधि। चण्डीपाठस्य होमन्तु प्रतिश्लोकन्दशांशतः। होमं कुर्याद् ग्रहादिभ्यः समिदाज्यचरून् क्रमात्। कृत्वा पूर्णाहुतिन्दद्याद्विप्रेभ्यो दक्षिणां क्रमात्। कपिलाङ्गाश्च सम्यक् श्वेताश्वं छत्रचामरे। अभिषेकन्ततः कुर्याद् यजमानस्य ऋत्विजः। एवं कृतेऽमरेशान! सर्वसिद्धिः प्रजायते"। "सहस्रचण्डी विधिं वक्ष्ये शृणु विष्णो महामते!। राज्यभ्रंशे महोत्पाते जनमारे महाभये। गजमारेऽश्वमारे च परचक्रभये तथा। इत्यादिविविधे दुःखे क्षयरोगादिजे भये। सहस्रचण्डिकापाठं कुर्याद्वा कारयेत्तथा। जापकास्तु शतप्रोक्ता विधवत्तत्र मण्डपे। भोज्याः सहस्रं विप्रेन्द्रा गोशतं दक्षिणान्दिशेत्। गुरवे द्विगुणन्देयं शय्यादानन्तथैव च। सप्तधान्यं च भूदानं श्वेताश्वं च मनोहरम्। पञ्चनिष्कमिता मूर्त्तिः कर्त्तव्या वार्द्धमानतः। अष्टादशभुजा देवी सर्वायुधविभूषिता। अथारिताश्च दातव्य सहस्रशतरुक्मभो!। शतं वा नियताहारः पयःपानेन वर्त्तयेत्। एवं चण्डिकापाठं सहस्रं तु समाचरेत्। तस्य स्यात्कार्यसिद्धिस्तु नात्र कार्या विचारणेति"। एतद्द्वयं यद्यपि महानिबन्धेषु नास्ति तथापि प्रचरद्रूपत्वादुक्तमिति दिक्। वाराहीतन्त्रे "सङ्कटे समनुप्राप्ते दुश्चिकित्स्यामये तथा। जातिध्वंसे कुलोच्छेदेऽप्यायुषो नाश आगते। वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये। तथैव त्रिविधोत्पाते तथा चैवातिपातके। कुर्याच्चण्ड्याः शतावृत्तिन्ततः सम्पद्यते शुभम्। श्रेयोवृद्धिः शतावृत्तात्सहस्रावृत्तितस्तथा परा। मनसा चिन्तितन्देवि! सिध्येदष्टोत्तराच्छतात्। सहस्रावर्त्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा। भुक्त्वा मनोरथान् कामान्नरो मोक्षमवाप्नुयात्। चण्ड्याः शतावृत्तपाठात्सर्वाः सिध्यन्ति सिद्धयः"। २काल्या भैरवभेदे पु॰। "असिताङ्गो रुरुश्चण्ड उन्मत्तः क्रोधनस्तथा" तन्त्रसा॰। शक्रामयरथाष्टभैरवोक्तौ। सप्तार्यां कन्। चण्डिका सप्तशत्यां कुमार्याम् अत्रैव शब्दे मन्त्रमहोदधियाक्यम् द्रष्टव्यम्। [राजनि॰।

चण्डीकुसुम पु॰ चण्डीप्रियं कुसुमं यस्य। रक्तकरवीरवृक्षे।

च(ण्डे)ण्डीश पु॰ रुद्रगणभेदे 'चण्डे(ण्डी)शः पूषणं देव भगं नन्दीश्वरोऽग्रहीत्" भाग॰४।५।१६। ६त॰। २शिवे पु॰ "चण्डीश्वरोऽप्यत्र त्रिभुवनगुरोर्धाम चण्डीश्वरस्य" मेघ॰

चण्डू पु॰ चडि-ऊन्। उन्दुरे मूषिके शब्दच॰।

चण्डेश्वर पु॰ चण्ड ईश्वरः। रक्ततनौ शिवमूर्त्तिभेदे "चण्डेश्वरं रक्ततनुं त्रिनेत्रम्" तन्त्रसारः।

चण्डोग्रशूलपाणि पु॰ शिवमूर्त्तिभेदे। "चण्डोग्रशूलपाणेश्च मनुत्रः सर्वार्थसाधकः" तन्त्रसारे तन्मन्त्रः उक्तः।

चत याचने भ्वा॰ उभ॰ द्वि॰ सेट्। चतति ते एदित् अचतीत्। अचतिष्ट। चचात चेते। निरुक्तौ अस्य गत्यर्थतयोक्तिः। "शुष्णा चतन्तमशिजो नमोभिः" ऋ॰ १०।४६।२। "चतन्त चततिर्गतिकर्म्मा" निरु॰ भा॰। अस्य वैदिकेऽनिट्त्वम् चत्तः। "चत्तो इतश्चत्तामुतः" ऋ॰ १०।१५५।२। "दूरे चत्ताय च्छन्त्सद्गहनम्" ऋ॰ १।१३२। ६। याचनस्य हिंसाया इत्तेरस्य हिंसार्थत्वमपि। "त व इन्द्रं चतिनमस्य" ऋ॰ ६।१८।४। "चतिन नाशकमिति" भा॰। या॰ इनि।

चतुःकूटा स्त्री श्रीविद्यामन्त्रभेदे तन्त्रसारे तत्स्वरूपं दृश्यम् "चतुःकूटा महाविद्या शङ्करेण प्रपूजिता" तन्त्रसा॰।

चतुःपञ्च त्रि॰ चत्वारः पञ्च वा वार्थे बहु॰ डच्। चतुःसंख्यके पञ्चसंख्यके वा। "अजानतामिवान्योन्यं चतुःपञ्चावशेषिताः" भाग॰ १।१५।२३। वा रस्य षत्वे चतुष्पञ्चेत्यप्यत्र।

चतुःपञ्चाशत् स्त्री॰ चतुरधिका पञ्चाशत्। (चौयान्न) १चतुरधिकपञ्चाशत्संख्यायां २तत्संख्यान्विते च "पशुपुरोडाशोहविस्तच्चतुःपञ्चाशत्" शत॰ ब्रा॰ ६।२।२।३७। तत पूरणार्थे डट्। चतुःपञ्चाश तत्संख्यापूरणे त्रि॰ स्त्रियां ङीप्। वा रस्य षत्वे चतुष्पञ्चाश इत्यप्यत्र।

चतुःपत्री स्त्री चत्वारि चत्वारि पत्राण्यस्याः। क्षुद्रपाषाणभेदे राजनि॰। वा रस्य षत्वे चतुष्पत्रीत्यप्यत्र

चतुःपर्णी स्त्री चत्वारि चत्वारि प्रतिपर्णं पर्णान्यस्याः। क्षुद्राम्लिकायाम् (आमरुल्)। राजनि॰। वा रस्य षत्वे चतुष्पर्णीत्यप्यत्र।

चतुःपुण्ड्र पु॰ चत्वारि पुण्ड्राण्यंशाः यस्य। भिण्डाख्ये राजनि॰। वा रस्य षत्वे चतुष्पुण्ड्र इत्यप्यत्र।

चतुःफला स्त्री चतुर्धा विभक्तं फलमस्याः। नागबलायाम् राजनि॰। वा रस्य षत्वे चतुष्फलाप्यत्र।

चतुःशाल न॰ चतसृणां शालानां समाहारः। अन्योन्याभिमुखशालाचतुष्टये "एकशाले चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे। पतिना नीयमानायाः पुरं शुक्रो न दुष्यति" ज्यो॰ त॰। वा रस्य विसर्गसत्वे चतुःशालेत्यप्यत्र। पक्षे वा ङीप् चतु(श्)शालीत्यप्यत्र स्त्री।

**चतुःषष्टि** स्त्री चतुरधिका षष्टिः । (चौषट्टि) १चतुरधिकषष्टिसंख्यायां २तत्संख्यान्विते च । वा रस्य विसर्गपक्षे । तत पूरणे डट् । चतुःषष्ट तत्संख्यापूरणे त्रि॰स्त्रियां ङीप् ।

**चतुःषष्टिकला** स्त्री चतुःषष्टिमिता कला । उपविद्याभेदे तासु कलाशब्दे श्रीधरधृतवाक्ये दर्शिता । शिवप्रोक्त नीतिशास्त्रे तु ४अ॰ अन्यविधा उक्ता यथा
"पृथक् पृथक् तु विद्यानां लक्षणं सम्प्रकाशितम् । कलानां न पृथग् लक्ष्म नाम चास्तीह केवलम् । पृथक् पृथक् क्रिया याभिः कलाभेदस्तु जायते । यां यां कलां समाश्रिता, तन्नाम्ना जातिरुच्यते । हावभावादि संयुक्तं नर्त्तनं १ च कला स्मृता । अनेकवाद्यविकृतौ ज्ञानं तद्वादने २ कला । वस्त्रालङ्कारसन्धानं ३ स्त्रीपुंसोश्च कला मता । अनेकरूपाविर्भावकृतिज्ञानं ४ कला स्मृता । शय्यास्तरणसंयोगे पुष्पादिग्रथनं ५ कला । द्यूताद्यनेकक्रीडाभिरञ्जनं ६ तु कला स्मृता । अनेकासन सन्धाने रतेर्ज्ञानं ७ कला स्मृता । कलासप्तकमेतद्धि गान्धर्वे समुदाहृतम् । मकरन्दासवादीनां मद्यादीनां कृतिः ८ कला । शल्यगूढाहृतौ ज्ञानं शिराव्रणव्यधः ९ कला । हीनादिरससंयोगे ऽन्नादिसम्पाचनं १० कला । वृक्षादिप्रसवारोपपालनादिकृतिः ११ कला । पाषाणधात्वादिदृतिस्तद्भस्मकरणं १२ कला । यावदिक्षुविकाराणां कृतिज्ञानं १३ कला स्मृता । धात्वोषधीनां संयोगक्रियाज्ञानं १४ कला स्मृता । धातुसाङ्कर्य्यपार्थक्यकरणं १५ तु कला स्मृता । संयोगपूर्वविज्ञानं १६ धात्वादीनां कला स्मृता । क्षारनिष्कासनज्ञानं १७ कलासंज्ञं तु तत् स्मृतम् । कलादशकमेतद्धि ह्यायुर्वेदागमेषु च । शस्त्रसन्धानविक्षेपः १८ पदादिन्यासतः कला । सन्ध्याघाताकृष्टिभेदैर्मल्लयुद्धं १९ कला स्मृता । कृताऽभिलक्षिते देशे यन्त्राद्यस्त्रनिपातनम् २० । वाद्यसङ्केततो व्यूहरचनादि २१ कला स्मृता । गजाश्वरथगत्या तु युद्धसंयोजनं २२ कला । कलापञ्चकमेतद्धि धनुर्वेदागमस्थितम् । विविधासनमुद्राभिर्देवतातोषणं २३ कला । सारथ्यञ्च गजाश्वादेर्गतिशिक्षा २४ कला स्मृता । मृत्तिकाकाष्ठपाषाणधातुभाण्डादिसत्क्रिया २५।२६।२७।२८ । पृथक् कला चतुष्कं तु चित्राद्यालेखनं २९ कला । तडागवापीप्रासादसमभूमिक्रिया ३० कला । घट्याद्यनेकयन्त्राणां वाद्यानां कृतिः ३१ कला । हीनमध्यादिसंयोगवर्णाद्यैरञ्जनं ३२ कला । जलवाय्वग्निसंयोगनिरोधादिक्रिया ३३ कला । नौकारथादियानानां कृतिज्ञानं ३४ कला स्मृता । सूत्रादिरज्जुकरणे विज्ञानं ३५ तु कला स्मृता । अनेकतन्तुसंयोगैः पटबन्धः ३६ कला स्मृता । वेधादिसदसज्ज्ञानं ३७ रत्नानां तु कला स्मृता । स्वर्णादीनां तु याथात्म्यविज्ञानं ३८ च कला स्मृता । कृत्रिमस्वर्णरत्नादिक्रियाज्ञानं ३८ कला स्मृता । स्वर्णाद्यलङ्कारकृतिः ३९ कला लेपादिसत्कृतिः ४० । मार्दवादिक्रियाज्ञानं ४१ चर्म्मणां तु कला मता । पशुचर्म्माङ्गनिर्हारक्रियाज्ञानं ४२ कला स्मृता । दुग्धदोहादिविज्ञानं ४३ घृतान्तं तु कला स्मृता । सीवने कञ्चुकादीनां विज्ञानं ४४ तु कला स्मृता । बाह्वादिभिश्च तरणं ४५ कलासंज्ञं जले स्मृतम् । मार्जने गृहभाण्डादेर्विज्ञानं ४६ तु कला मता । वस्त्रसम्मार्जनं ४७ चैव क्षुरकर्म्म ४८ कले ह्युभे । तिलमांसादिस्नेहानां कला निष्कासनं ४९ मता । सीराद्याकर्षणे ज्ञानं ५० वृक्षाद्यारोहणे ५१ कला । मनोऽनुकूलसेवायाः कृतिज्ञानं ५२ कला मता । वेणुतृणादिपात्राणां कृतिज्ञानं ५३ कला मता । काचपात्रादिकरणविज्ञानं ५४ तु कला मता । संसेचनं ५५ संहरणं ५६ जलानां तु कला स्मृता । लोहाभिसारशस्त्रास्त्रकृतिज्ञानं ५७ कला मता । गजाश्ववृषभोष्ट्राणां पल्याणादिक्रिया ५८ कला । शिशोः संरक्षणे ज्ञानं ५९ धारणे ६० क्रीडने ६१ तथा । सुयुक्तताडनज्ञानं ६२ अपराधिजने तथा । नानादेशीयवर्णानां सुसम्यग् लेखने ६३ कला । ताम्बूलरक्षादिकृतिविज्ञानं ६४ तु कला स्मृता । आदाने आशुकारित्वं प्रतिदाने चिरक्रिया । कलासु द्वौ गुणौ ज्ञेयौ सर्व्वास्वेतौ मनीषिभिः । चतुःषष्टि कलास्त्वेता संक्षेपेण निर्दर्शिताः । यां यां कलामाश्रितोयस्तां तां कुर्य्यात् स एव हि" । "चतुःषष्टिकलाविद्या देवरीप्रीतिवर्द्धनम्" गायत्रीकवचम् । वा रस्य विसर्गपक्षे चतुष्षष्टिकलाप्यत्र

**चतुःसप्तति** स्त्री चतुरधिका सप्ततिः । (चौहत्तर) १चतुरधिकसप्ततिसंख्यायां २तत्संख्यान्विते च तत पूरणे डट् । चतुःसप्त त तत्पूरणे त्रि॰ स्त्रियां ङीप् । वा रस्य विसर्गसत्त्वम् ।

**चतुःसम** न॰ चत्वारि समानि यत्र । "त्वक्कुङ्कुमं शौरिकं पथ्या यवानी च चतुःसमम्" वैद्यकोक्ते त्वगादिचतुर्द्रव्यात्मके

औषधभेदे, शब्दार्थचि० वैद्यके तद्गुणा उक्ता यथा "लवङ्गं जीरकं पथ्या यमानी च चतुः समम्। आमशूलविबन्धघ्नं पाचनं भेदि दीपनम्"। "कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु। कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसमम्" इत्युक्तेषु २मिलितेषु तत्तत्परिमाणान्वितकस्तूरीचन्दनकुङ्कुमकर्पूरेषु च। वा रस्य विसर्गसत्त्वे चतुस्सममप्यत्र।

चतुर् त्रि० ब० व० चत–उरन्। १चतुःसंख्यायाम्, २चतुःसंख्यान्विते च। "चत्वारोऽवयवास्त्रिजः स भगवान् कर्म्मोपदेष्टा हरिः" वेणी०। स्त्रियां गौणे मुख्ये च चतसृादेशः। "तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या" मनुः। प्रियचतसा अतिचतसा। नञा सुना विना च समासे बहु० अच् समा०। अचतुरः सुचतुरः विचतुरः। अव्ययीभावे टच् समा० उपचतुरम्। अवयवे तयप् चतुष्टय। चतुःसंख्यायां तदन्विते च त्रि० स्त्रियां ङीप् "चरितार्था चतुष्टयी" कुमा०। "ततोवारे सुच् "रात्सस्य" पा० सलोपे। चतुर् २चतुर्वारे अव्य०। तस्यार्थे चतुस् इति शब्दकल्पद्रुम प्रामादिकम्। "चतुरवत्तं कात्या० श्रौ०। "चतुर्नमो अष्टकृत्वो भवाय" अथ० ११।२।९। "चतुरुपह्वयते" तै० ब्रा० २।६।७।१। चतुष्टयार्थे च "गूढमैथुनधर्म्मं च काले काले च सञ्चयम्। अप्रमादमनालस्यं चतुः शिक्षेत वायसात्" इति चाणक्यः।

चतुर पु० चत–उरच्। १वक्रगतौ २हस्तिशालायाञ्च हेमच०। ३कार्य्यदक्षे ४आलस्यहीने ५निपुणे च त्रि०। ६नायकभेदे पु० तल्लक्षणं रसमञ्जर्य्याम् "वाक्चेष्टाव्यङ्ग्यसमागमश्चतुरः। तत्र वचनव्यङ्ग्यसमागमो यथा "तमोजटाले हरिदन्तराले काले निशायास्तव निर्गतायाः। तटे नदीनां निकटे वनानां घटेत पातोदरि! कः सहायः"। चेष्टाव्यङ्ग्यसमागमो यथा "कान्ते कनकजम्बीरं करे कमपि कुर्वति। अपारनिखिले भामा बिन्दुं बिन्दुं सखी ददौ"। तां वीक्ष्य लीलाचतुरामनङ्गः "नव प्रियं चतुरावलोकिन" कुमा०। "न पुनरेति गतं चतुरं वयः"। "मृगया जहार चतुरेव कामिनी" रघु०। चतुर्+अर्श० अच्। ६चतुर्विशिष्टे त्रि०।

चतुरश्रा स्त्री वर्णवृत्तभेदे "द्विजवरकर्णौ विरहरसवर्णौ भवति यदा सा किल चतुरश्रा" छन्दोम०।

चतुरक्रम पु० "द्रुतद्वन्द्वं लुतद्वन्द्वं नगणः प्रान्ते गुरुर्भवेत्। द्वात्रिंशदक्षरैर्युक्तः स्वङ्कारे चतुरक्रम" इति सङ्गीतदा० उक्ते रूपकभेदे।

चतुरङ्ग न० चत्वारि अङ्गानि यस्य। १हस्त्यश्वरथपदातिरूपाङ्गचतुष्टययुते सैन्ये। "प्रयातेऽभिचरव्याघ्रे। बलेन महताहृत। कृष्णेन चतुरङ्गेण यत्तेन जितकाशिना" भा०व०२० अ०। रक्तहरितपीतश्यामलरूपाणि चत्वारि बलस्वरूपाणि क्रीडासाधनान्यङ्गान्यस्य। (चतुराजी) २क्रीडाभेदे। तत्क्रीडाप्रकार ति०त०व्यासयुधिष्ठिरसंवादे "युधिष्ठिर उवाच। अष्टकोष्ठ्याश्च या क्रीडा तां मे ब्रूहि तपोधन!। सकर्थ्येण मे नाथ! चतुराजी यथा भवेत्। व्यास उवाच। अष्टौ कोष्ठान् समालिख्य प्रदक्षिणक्रमेण तु। अरुणं पूर्वतः कृत्वा दक्षिणे हरितं बलम्। पार्थ! पश्चिमतः पीतमुत्तरे श्यामलं बलम्। राज्ञोवामे गजं कुर्य्यात् तस्मादश्वं ततस्तरिम्। कुर्य्यात् कौन्तेय! पुरतो युद्धे पत्तिचतुष्टयम्। कोणे नौका द्वितीयेऽश्वस्तृतीये च गजोवसेत्। तुरीये च वसेद्राजा पटिका पुरतः स्थिता। पञ्चकेन भटी राजा, चतुष्कोणेन कुञ्जरः। त्रिकोणेन चलत्यश्वः पार्थ! नौका द्वयेन तु। कोष्ठमेकं विलङ्घ्याथ सर्वतोयाति भूपतिः। अग्रएव भटी याति बलं हन्त्यग्रकोणगम्। यथेष्टं कुञ्जरोयाति चतुर्दिक्षु महीपते!। तिर्य्यक् तुरङ्गमो याति लङ्घयित्वा त्रिकोष्ठकम्। कोणकोष्ठद्वयं लङ्घ्य व्रजेन्नौका युधिष्ठिर!। सिंहासनं चतुराजी नृपाक्रुष्टञ्च षट्पदम्। काककाष्ठं वृहन्नौका नौकाष्टप्रकारकम्। घाताघाते वटी नौका बलं हन्ति युधिष्ठिर!। राजा गजोहयश्चापि त्यक्त्वा घातं निहन्ति च। अत्यन्तं स्वबलं रक्षेत् स्वराजबलमुत्तमम्। अबलस्य रक्षया पार्थ! हन्तव्यं बलमुत्तमम्"। नौकायाश्चत्वारि पदानि अश्वस्याष्टौ पदानि इत्याधिक्यमश्वस्य। "मतङ्गजस्य गर्वेण राजा क्रीडति निर्भरम्। तस्मात् सर्वबलं दत्त्वा रक्ष कौन्तेय! कुञ्जरम्। सिंहासनं चतुराजी यदश्वस्थानतो भवेत्। सर्वसैन्यैर्गजैर्वापि रक्षितव्यो महीपतिः। अन्यराजपदे गत्वा यदा याती युधिष्ठिर। तदा सिंहासनं तस्य भण्यते नृपसत्तम। राजा च नृपतिं हत्वा कुर्य्यात् सिंहासनं यदा। द्विगुणं वाहयेत् पणमन्यथैकगुणं भवेत्"। द्विगुणं पणं दातव्यत्वेन प्रापयेत्। "मित्रसिंहासनं पार्थ! यदारोहति भूपतिः। तदा सिंहासनं नाम सर्वं नयति तद्बलम्। यदा सिंहासनं कर्त्तुं राज्ञः पट-

यदाश्रितः। तदा घातेऽपि हन्तव्यो बलेनापि सुरक्षितः। विद्यमाने नृपे यत्र स्वकीये च नृपालयम्। प्राप्नोति तु यदा तत्र चतूराजी तदा भवेत्। नृपेणैव नृपं हत्वा चतूराजी यदा भवेत्। द्विगुणं वाहयेत् पण्यमन्यथैकगुणं भवेत्। स्वपदस्थं यदा राजा राजानं हन्ति पार्थिव।। चतुरङ्गे तदा भूप! वाहयेच्च चतुर्गुणम्। यदा सिंहासने काले चतूराजी प्रवर्त्तिता। चतूराजी भवत्यत्र गते सिंहासने नृप!"। अत्रेदं बीजम् उभयथा जयेऽपि परसिंहासनाधिकारात् परराजवधे शौर्य्याधिक्यनिष्कण्टकत्वदर्शनात् क्रीडायामपि तथा कल्प्यते। "राजद्वयं यदा हस्ते आत्मनोराशि संस्थिते। परेण सह तत्रैको बलेनाप्यपहार्य्यते। राजद्वयं यदा हस्ते न स्यादन्यकरे परः। तदा राजा हि राजानं घातेऽपि न हनिष्यति। नृपाकृष्टो यदा राजा गमिष्यति युधिष्ठिर!। घाताघाते पि हन्तव्यो राजा तत्र न रक्षकः। कोष्ठं राजपदं त्यक्त्वा घटिकान्तं यदा व्रजेत्। घटी च षट्पदं नाम तदा कोष्ठस्य भवेत्। यदा तस्य भवेत् पार्थ! चतूराजी च षट्पदम्। तदापि च चतूराजी भवत्येव न संशय। पदाति षट्पदे सिद्धे राज्ञा वा हस्तिना तथा। षट्पदं न भवेत्तस्य अवश्यं शृणु पार्थिव।। वृषभे कोष्ठके यत् स्याद्घटिका दण्डेन वै। तदाश्योऽन्यस्य हन्तव्य सुखाय दुर्बलं बलम्। त्रिपटीकस्य कौन्तेय! शुकपक्ष कदाचन। षट्पदं न भवत्येव इति गोतमभाषितम्। नौकैका वटिका यस्य विद्यते खेलने यदि। गाढ़ाघटीति विख्याता पद तस्य न दुष्यति"। पद राजपद कोषपदञ्च। "हस्ते रङ्गे बलं नास्ति काककाष्ठं तदा भवेत्। वदन्ति राक्षसाः सर्वे तस्य मध्ये जयाजयौ। प्रोत्थिते पञ्चमे राशि स्वते बलाच्च षट्पदे। अभीष्टं स्यात्तदा हन्ति चलिता भावित बलम्। द्विराश्यस्त्रागते तस्मात् हन्यात् परबलं जयी। पार्थ! सिंहासने काले काककाष्ठं यदा भवेत्। सिंहासनं भवत्येव काककाष्ठं न भण्यते। उपरिस्थाय वसुस्थानं तस्योपरि चतुष्टये। नौकाचतुष्टयं यत्र क्रियते तत्र नौकया। नौकाचतुष्टयं तत्र वृहन्नौकेति भण्यते। न कुर्य्यादेकदा राजन्! गजस्वामिसत्तमम्। यदि कुर्य्याद् धर्म्मच पापमस्तो भविष्यति। स्थानाभावे यदा पार्थ! हस्तिना हस्तिवारणम्। कुरिष्यति तदा राजन्! इति गोतमभाषितम्। प्राप्ते गजद्वये राजन्! हन्तव्योवामतोगजः"। इति चतुरङ्गक्रीड़नम्।

**चतुरङ्गिन्** त्रि० चत्वारि अङ्गानि हस्त्यश्वरथपदातयः भूम्ना सन्त्यस्य इनि। बाहुल्येन हस्त्यादिसेनाङ्गचतुष्टययुक्ते। "चालयन् वसुधां चेमां बलेन चतुरङ्गिणा" भा० आ० ६४अ०। स्त्रियां ङीप्। "प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम्" ७३अ०।

**चतुरङ्गुला** स्त्री चतस्रोऽङ्गुलय प्रमाणमस्य मध्ये च अच् समा०। १आरग्वधे (सोन्दाल)। अमरः। २चतुरङ्गुलमिते त्रि०। "स चतुरङ्गुलमेवोभयतोऽन्तरं उपकृति" शत० ब्रा० १०।२।२।१। "तत्राखात समा दीर्घा मारेणायतरङ्गुलाः" ज्या० त० छन्दोग०।

**चतुरम्ल** न० चतुर्णामम्लानां समाहारः पात्रा० न ङीत्वम्। "अम्लवेतसवृक्षाम्लबृहज्जम्बीरनिम्बुकैः। चतुरम्लं हि, पञ्चाम्लं बीजपूरयुतं भवेत्" भावप्र० उक्ते अम्लवेतसादिचतुष्के।

**चतुरशीति** स्त्री चतुरधिका अशीतिः। (चौराशी) १चतुरधिकाशीतिसङ्ख्यायां २तत्सङ्ख्यान्विते च। पूरणे डट्। चतुरशीत तत्स० सङ्ख्यापूरणे त्रि० स्त्रियां ङीप्।

**चतुरस्र** त्रि० चतस्रोऽस्रयः कोणा अस्य नि० अच्। १चतुष्कोणे वा० तालव्यमध्यस्यैव निपातनम्। दन्त्यमध्यत्वे चतुरस्रिरित्येव स्यात्। अस्य दन्त्यमध्यत्व मन्दकसङ्कोल चिन्त्यम् इत्याहुरस्येति" पा० ५।४।१ सू० तालव्यमध्यस्यैव ग्रहणात् "चतुरश्र त्रिकोणं वा वर्त्तुलं वार्द्धचन्द्रकम्। कर्त्तव्यमातृपूर्व्वेषु आह्नपादिषु मण्डलम्" बौधा०। २ब्रह्मसन्ताने केतुभेदे पु० "चतुरस्राः ब्रह्मसन्तानाः" वृ०स०११अ०। केतुशब्दे दृश्यम्। ३अन्यूनानतिरिक्ते त्रि०। "बभूव तस्याश्चतुरस्रशोभि" कुमा०। "चतस्रोऽस्रयोऽस्य तच्चतुरस्रमन्यूनानतिरिक्तम्" मल्लि०।

**चतुरात्मन्** पु० चतुरं निपुणम् आत्मा मनोऽस्य चत्वारो व्यूहाद्य आत्मानोऽस्य, चतस्रोविभूतय आत्मानोऽस्य वा। परमेश्वरे विष्णौ। "चतुरात्मा चतुर्व्यूहः" "चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्" इति च विष्णुस०। "रागद्वेषादिरहितत्वाच्चतुर मनोऽस्येति मनोबुद्धिरहङ्कारचित्त चतुष्टयमात्मा अस्येति वा चतुरात्मा। "ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयो हरेरेता जगतः सृष्टिहेतवः। विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज।। स्थितेर्निमित्तभूतस्य विष्णोरेता

चतुर्षु ह्स्तेषु चतुरस्रविन्यासभेदाच्चतुर्विंशतिसंख्यकाएव मूर्त्तिभेदा भवन्ति। "स्थानान्तमेकादिचयाङ्कघात संख्याविभेदा" लीला० उक्तदिशा १।२।३।४। २४संख्या इति तद्वृत्तौ उक्तम्।

**चतुर्विद्या** स्त्री चतस्रः विद्या समाहृताः कर्म०। १ऋग्यजुःसामाथर्वाख्यासु विद्यासु। चतस्रोवेदरूपा विद्याअस्य। २चतुर्वेदाभिज्ञे। तत स्वार्थे चतुर्वर्णा० ष्यञ् अनु-शतिका० उभयपदवृद्धि। चातुर्वैद्य चतुर्वेदाभिज्ञे

**चतुर्विध** त्रि० चतस्रो विधा अस्य। चतुःप्रकारे "एष वोऽभिहितो धर्म्मोब्राह्मणस्य चतुर्विधः"। "पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्" इति च मनु। चतुर्विधशरीराणि (जरायुजाण्डजस्वेदजोद्भिज्जाख्यानि) धृत्वा मुक्त्वा सहस्रशः। सुकृतात्मानवोभूत्वा ज्ञानी चेन्मोक्षमाप्नुयात्" शब्दार्थचि० धृतवाक्यम्।

**चतुर्वीज** न० समाहारद्विगु। "मेथिकाचन्द्रशूरश्च कृष्णाजाजी यवानिका। एतच्चतुष्टयं युक्तं चतुर्वीजमिति स्मृतम्" भावप्र० उक्ते बीजचतुष्टये। "तच्चूर्णं भक्षितं नित्यं निहन्ति पवनामयान्। अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम्" भावप्र० तद्गुणा उक्ता।

**चतुर्वेद** पु० चत्वारोवेदा प्रतिपादका अस्य, चतुरो वेदान् वेत्ति अधीते वा विद्–अण् उप० स० वा। १परमेश्वरे "चतुर्वेदश्चतुर्होत्रश्चतुरात्मा सनातन" हरिव०२२८अ०। २चतुर्वेदाभिज्ञे च। तत स्वार्थे ष्यञ्। चतुर्वेदस्तोभयपदवृद्धि। चातुर्वैद्य तदर्थे पु०।

**चतुर्वेदविद्** पु० चतुरो वेदान् वेत्ति विद्–क्विप् ६त०। १विष्णौ "चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपाद्" विष्णु स०। चतुर्वेदाभिज्ञमात्रे च।

**चतुर्व्यूह** पु० चत्वारो व्यूहा अस्य। १विष्णौ "चतुर्व्यूहश्चतुर्गतिः" विष्णु स०। "शरीरपुरुषः, छन्दः पुरुषोवेदपुरुषो महापुरुषः इयि बह्वृचोपनिषदुक्तास्चत्वारोव्यूहा अस्येति चतुर्व्यूहः" भा०। "चतुरात्मा चतुर्व्यूह" विष्णु स०। "सृष्ट्यादिकार्यार्थं चत्वारोव्यूहा विभागा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपा मूर्त्तयो यस्य स" भाष्यम्। उभयविधव्युत्पत्तियोगात्तु द्विनामतया द्विधा प्रयोगः। तथा। "व्यूह्यात्मानञ्चतुर्धा वै वासुदेवादिमूर्त्तिभिः। सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्द्दनः" इति विष्णु पु०। मार्कण्डेयपुराणे च "मूलकारणं वासुदेवाख्यं व्यूहमुक्तम् "द्वितीया पृथिवी मूर्द्ध्नि शेषाख्या धारयत्यधः। तामसी सा समाख्याता तिर्य्यक्त्वं समुपाश्रिता। तृतीया कर्म कुरुते प्रजापालनतत्परा। सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी। चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा। राजसास्तद्गुणः सर्गं सा करोति सदैव हि"। सांख्ये २मोक्षशास्त्रे। तत्र हि हेय हान हेयहेतु हानोपायश्चेति चत्वारोव्यूहाः प्रतिपाद्या सन्ति। तत्र त्रिविधं दुःखं हेयम्। तदत्यन्तनिवृत्तिर्हानम्। प्रकृतिपुरुषसयोगद्वारा चाविवेको हेयहेतु। विवेकख्यातिस्तु हानोपाय इति। ३चिकित्साशास्त्रे च न०। तत्र च रोग आरोग्य रोगनिदान भैषज्यमिति चत्वारोव्यूहा उक्ताः इति तस्य तथात्वम्।

**चतुर्हायन(ण)** त्रि० चत्वारोहायना अस्य। चतुर्वर्षेऽङ्गे जन्तौ वयोवाचित्वे स्त्रियां ङीप् णत्वञ्च। वयोऽन्यत्र न ङीप् णत्व वा। चतुर्हायना शाला।

**चतुर्होतृ** पु० कर्म०। चतुर्वेदोक्तहोमचतुष्टयकारिषु होतृषु "चतुर्होतार आप्रियश्चातुर्मास्यानि नीविद" अथ० ११।७।१९। चतुर्होतृणा कर्म्म अण्। चातुर्होत्र तत्कृतकर्म्मणि। "चतुर्भुजश्चतुर्मूर्त्तिश्चातुर्होत्रप्रवर्त्तक" हरिव० २७९ अ०।

**चतुर्होत्र** पु० चत्वारि होत्राणि होमा प्रोत्यर्थाः अस्य। १विष्णौ परमेश्वरे। चतुर्वेदश्चतुर्होत्रश्चतुरात्मा सनातन" हरिवं० २२८अ०।

**चतुर्होत्रक** न० चत्वारि होत्राणि यत्र कर्म्मणि कप्। चतुर्होत्रविधायके चतुर्वेदे "तथा चतुर्होत्रकविद्यया च" भाग० ७।१।२८।

**चतुल** त्रि० चत–उलच्। स्थापयितरि संक्षिप्तसा०।

**चतुश्चक्र** न० रुद्रयामलोक्ते दीक्षाङ्गे मन्त्रशुद्धिज्ञापके चक्रभेदे यथा "चतुश्चक्रं प्रवक्ष्यामि शृणु पार्वतीवल्लभ!। वामदक्षिणयोगेन रेखापञ्चकमालिखेत्। पूर्वपश्चिमभेदेन पञ्च रेखाः समालिखेत्। चतुष्कोष्ठे दक्षभागे चतुष्कोष्ठे च मन्त्रवित्। तदधश्च चतुष्कोष्ठे तद्वामस्थे चतुर्गृहे। प्रलिखेत् क्रमशश्चाद्ये चतुर्मन्दिरमध्यगे। ह्निग्धञ्च शीतलं जप्तं सिद्धञ्चापि ततः परम्। अकारञ्च उकारञ्च ऋमोकारं ततः परम्। ह्निग्धस्वमिति वर्णे च शीतस्वं शृणु प्रभो!। आकारञ्च ऊकारञ्च लृमोकारं ततः परम्। तदधोऽप्रगेहस्थं वर्णं शृणु महाप्रभो!।

इकारश्च ऋकारश्च एतमोङ्कारत परम्। सिद्धगेहस्थित वर्णं शृणु सर्वसुखप्रदम्। ईकारश्च ऋृकारश्च औकारश्च ततः परम्। इमे चतुर्गेहस्थितान् वर्णान् तव यद्यापि तान्। आह्लाद चापि प्रत्याय सुख्यश्च शुद्धमित्यपि। एतत्कोष्ठस्थितान् सर्वान् शुभाशुभफलप्रदान्। ककारश्च खकारश्च भकारश्च ञकारकम्। आह्लादस्य चिनि मोक्ष प्राप्तिमात्रेण सिद्धिदम्। प्रत्ययस्य गकारश्च चकार सप्तमित्यपि। सुख्यस्य हि डकारश्च टकार ठठमित्यपि। शुद्धस्यश्च ढकारश्च णकार सतमित्यपि। तदधःस्थं चतुर्गेह लौकिक सात्त्विकं तथा। मानसिक राजसिक चतुर्गेहस्थित त्विमम्। लौकिकस्य थकारश्च दकार च मकारकम्। सात्त्विकस्य धकारश्च नकारश्च यकारकम्। मानसिकस्य शृणु भो पकार च फकारकम्। तद्वामस्थचतुर्गेहं शृणु पद्मानन। प्रभो।। सुप्त च्छिन्नश्च छिन्नश्च दुष्टमन्द प्रकीर्त्तितम्। एतद्गेहस्थितान् वर्णमालान् स्पृशाति लोमरः। वर्जयित्वा सुप्तमन्त्रं छिन्न छिन्नश्च दुष्टकम्। ऐहिके सिद्धिमाप्नोति परे मुक्तिमवाप्नुयात्। यद्यभाग्यवशात् सुप्तादिषु गेहेषु लभ्यते। तदा मन्त्रं शोधयेत् वै सुप्तज्ञमितकीर्त्तितैः। वर्जितैर्दोषजालस्यै रशुभ सूतशुद्धये। भूतलिप्या पुटीकृत्य जपत्वा सिद्धि ततो लभेत्। न तु वा वर्जयेत् गेहं चतुष्क वर्णवेष्टितम्। सुप्तगेहस्थित वर्ण शृणुष्व पद्मकानन। बकारश्च भकारश्च ततोऽन्यष्टहस्थितम्। मकारश्च लकारश्च छिन्नगेहस्थित द्वयम्। वकारश्च शकारश्च छिन्नगेहस्थित द्वयम्। दुष्टगेह स्थितं नाथ। षकार गगन तथा। निजस्वभावयुक्त यत्तन्मन्त्र प्रत्युपाश्रयेत्"।

चतुश्चत्वारिंशत् स्त्री चतुरधिका चत्वारिंशत्। (चोयाल्लिश) १चतुरधिकचत्वारिंशत्संख्याया २तत्संख्यान्विते च। पूरणे डट्। चतुश्चत्वारिंश तत्संख्यापूरणे त्रि० स्त्रियां ङीप्।

चतुःशृङ्ग पु० चत्वारि शृङ्गाण्यस्य। १कुशद्वीपस्थ वर्षपर्वते "बभ्रुश्चतुःशृङ्गः कपिलश्चित्रकूटोदेवानीकऊर्द्ध्वरोमा द्रविण" भाग०५.२०।११ श्लो०। २परमेश्वरे च। "चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे" इत्यादि श्रुतौ तस्य चतुःशृङ्गत्वोक्तेस्तथात्वम्। ३शब्दशास्त्रे च तस्य नामाख्यातनिपातोपसर्गरूपचतुर्विधशब्दबोधकत्वात् तथात्वम्।

चतुष्क न० चतुरवयवं चत्वारोऽवयवाअस्य वा कन्। १चतुःसंख्यायां २तदन्विते च "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा। नामार्थो इति सर्वेऽमी पक्षाः शास्त्रे व्यवस्थिताः" हरि। "एतत् कष्टतमं विद्यात् चतुष्कं कामजे गणे" द्विकस्त्रिकश्चतुष्कश्च पञ्चकश्च शतं समम्" इति च मनुः। ३चतुस्तम्भे मण्डपभेदे "चतुष्कपुष्पप्रकरावकीर्णयोः" "मार्ग चतुष्काभिमुख व्यनैषु" इति च कुमा०। "नारीमनांसीव चतुष्कमन्तः" रघुः। ४चत्वरे (चाचारि) ५पुष्करिणीभेदे च स्त्री ङीप् मेदि०। ६यष्टिभेदे न० शब्दार्थ०।

चतुष्कर्णी स्त्री चत्वारः कर्णा अस्याः ङीष्। १कुमारानुचरमातृभेदे "क्षुरकर्णी चतुष्कर्णी कर्णप्रावरणा तथा" भा० श० ४७अ० कुमारानुचरमातृगणोक्तौ। चत्वारः कर्णाः श्रवणसाधनं यत्र। २द्वाभ्यां क्रियमाणे मन्त्रे पु० "षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णः स्थिरोभवेत्" पञ्चत०।

चतुष्कल पु० चतस्रः कला मात्रा यत्र। आर्य्यादिषु चतुर्मात्रायुते गणभेदे "ज्ञेया सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः। गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः" वृ०र०

चतुष्कोण त्रि० चत्वारः कोणा यत्र। १चतुरस्रे तदाकारे २क्षेत्रभेदे न०।

चतुष्टय त्रि०चत्वारोऽवयवा विधा यस्य तयप्। १चतुर्विधभागवति चतुष्के। स्त्रियां ङीप् "प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी" कुमार। "तदेषु सर्वेष्वेतत्प्रयुञ्जीत चतुष्टयम्" मनु। "चतुष्टयमर्थदेहादिदण्डम्"। चतुर्णामवयवं तयप्। २चतुःसंख्यायाम् "मुक्तमाणिक्यचतुष्टयेन" कुमा०। "केन्द्रं चतुष्टयं ज्ञेयम्" नील०ता० उक्तेषु ३लग्नचतुर्थसप्तमदशमस्थानेषु न०।

चतुष्टोम पु० चतुरुत्तर स्तोम त्रिवृत्पञ्चदशसप्तदशैकविंशाख्यः शाकपार्थिवादिवत् मध्यपदलोपी स०। चतुरुत्तरस्तोमे "त्रिवृतोऽष्टाचत्वारिंश धर्त्रं चतुष्टोमः" यजु० १४।२३। चतुर्दिक्षु स्तूयमानत्वात् ३वायौ च। "एष चतुष्टोमस्तोमस्तदुपदधाति तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं प्रतिष्ठा चतुष्टोमोऽयो वायुर्वै धर्त्रं चतुष्टोमः स आभिश्चतसृभिर्दिग्भि स्तुते वायुर्वै सर्वेषां भूतानां प्रतिष्ठा तदेतद्यत्तदुपदधातीति" शत० ब्रा० ८।४।१।२५। ३स्तोमभेदे। "समीचीर्दिश स्तुताश्चतुष्टोमः स्तोमः" यजु० १४।२५। "चतुष्टोमेन स्तोमेन समीचीः समीचा दिशः स्तुताः" वेददी०।

**चतुष्पञ्चाशत्** स्त्री चतुरधिका पञ्चाशत् । (चौयान्न) १चतुरुत्तरपञ्चाशत्संख्यायां २तत्संख्येये च । ततः पूरणे डट् । चतुष्पञ्चाश तत्संख्यापूरणे त्रि० स्त्रियां ङीप् ।

**चतुष्पत्री** स्त्री चत्वारि चत्वारि पत्राण्यस्याः जातित्वात् ङीप् । १सुनिषण्णके (सुसुनि) शाकभेदे "चाङ्गेरी सदृश पत्रैश्चतुर्दल इति स्मृतः । शाकोऽजलान्विते देशे चतुष्पत्रीति चोच्यते" शब्दार्थचि० । २क्षुद्रपाषाणभेदिनि च राजनि० ।

**चतुष्पथ** पु० चत्वारः पन्थानः ब्रह्मचर्य्यादयः आश्रमा यस्य अच् समा० । १ब्राह्मणे अमरः ब्राह्मणानां हि "एष वोऽभिहितो धर्म्मो ब्राह्मणस्य चतुर्विधः" मनुना चातुराश्रम्यस्य उक्तत्वात् तथात्वम् । चतुर्णां पथां समाहारः अच् । २चतुर्ष्वत्थे (चौमाथा) पथि ।

**चतुष्पथनिकेता** स्त्री चतुष्पथे निकेतोऽस्याः । कुमारानुचरमातृभेदे "चतुष्पथनिकेता च गोकर्णी महिषानना" भा० श० ४७अ० कुमारानुचरमातृगणोक्तौ ।

**चतुष्पथरता** स्त्री ७त० । कुमारानुचरमातृभेदे । "चतुष्पथरता चैव भूतितीर्थाऽन्यगोचरा" भा० श० ४७अ० ।

**चतुष्पद** पु स्त्री चत्वारि पदानि चरणा यस्य । १चतुश्चरणे गवादौ जन्तौ स्त्रियां जातित्वात् ङीप् । २तिथ्यर्द्धरूपे शकुन्यादिकरणभेदे न० । करणशब्दे १६८०पृ० दृ० वि० वाक्यद्वयम् । अस्य शब्दक० पुंस्त्वोक्तिः सौरागमविरुद्धा । "मृगचतुराद्यान्त्यार्द्धे दृष्टाजसिंहाश्चतुश्चरणाः" ज्यो० त० उक्तेः ३मकराद्यार्द्ध धनुरन्त्यार्द्ध मेषवृषसिंहराशिषु पु० । स्त्रीषा ४करणभेदे न० हेमच० ।

**चतुष्पदवैकृत** न० ६त० । वृ० सं० उक्ते चतुष्पदजन्तुप्रसवादिविकारे यथा

"परयोनावभिगमनं भवति तिरश्चामसाधु धेनूनाम् । उक्षाणो वान्योऽन्यं पिबन्ति श्वा वा सुरभिपुत्रम् । मासत्रयेण विद्यात् तस्मिन्नेव समय परागमनम् । तत्प्रतिघातायैतौ त्याज्यौ गर्गैश्च निर्दिष्टौ । त्यागो विवासनं दानं तत्सद्यश्च शुभं भवेत् । तर्पयेद् ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् । स्थालीपाकेन धातारं पशुना च पुरोहितः । प्राजापत्येन मन्त्रेण यजेद्बहुसुदक्षिणम्" ४६अ० ।

**चतुष्पदी** स्त्री चत्वारः पादा अस्याः अन्त्यलोपः समा० वा ङीप् पाद् पद्भावः । १पद्ये "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा" छन्दोम० । २प्राकृतभाषादिप्रसिद्धे (चौपाया) छन्दोभेदे ३चतुश्चरण स्त्रीपशौ च अन्यत्र चतुष्पादित्येव ।

**चतुष्पर्णी** स्त्री चत्वारि चत्वारि पर्णे पर्णे पर्णान्यस्याः ङीप् । (सुसनी) शाकभेदे । राजनि० ।

**चतुष्पाटी** स्त्री चतस्रो दिशः पाटयति पाटि—अण् उप० स० । नद्यां शब्दमाला

**चतुष्पाठी** स्त्री चतुर्णां वेदानां पाठोऽत्र गौरा० ङीष् । छात्राणामध्ययनमण्डपे (चौपाडी) ख्याते ।

**चतुष्पाणि** पु० चत्वारः पाणयोऽस्य । १विष्णौ हारा० २चतुर्भुजयुक्तमात्रे त्रि० ।

**चतुष्पाद्** त्रि० चत्वारः पादा अस्य अन्त्यलोप समा० । चतुश्चरणयुक्ते गवादौ स्त्रियां ङीप् पाद पद्भावः चतुष्पदीत्येव । समासान्तविधेरनित्यत्वात् अन्त्यलोपाभावे चतुष्पादोऽपि तत्रार्थे "भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम्" छन्दोम० ।

**चतुस्तन** स्त्री चत्वारः स्तना अस्याः वा न ङीप् । सुरभौ गवि । "तस्यै स्तनानुन्नयति । कथमस्तन् स्तनानुन्नयति सा चतुस्तना भवति चतुस्तना हि गौः" शत० ब्रा० ६।५।२।१८।२। गह्यादौ च पाठे ङीपि चतुस्तनीत्यपि ।

**चतुस्त्रिंशत्** स्त्री चतुरधिका त्रिंशत् । (चौतिश) १चतुरधिकत्रिंशत्संख्यायां २तत्संख्येये च । पूरणे डट् । चतुस्त्रिंश तत्संख्यापूरणे त्रि० स्त्रियां ङीप् ।

**चतुस्त्रिंशज्जातक** पु० बुद्धभेदे हेमच० ।

**चतुस्सन** पु० ब० व० चतुर्णां धर्म्मार्थकाममोक्षाणां सनः दाता सन—दाने अच् ६त० चत्वारः सनेतिशब्दा नाम्नि येषां वा । १सनकसनत्कुमारसनन्दसनातनेतिनामकेषु चतुर्षु ब्रह्मपुत्रेषु ऋषिषु तन्नाम्ना सनादित्वेन तथात्वम् । २तदवतारधारिणि चतुर्वर्गदातरि वा ३विष्णौ पु० "तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात् स्वतपसः स चतुःसनोऽभूत्" भाग० २।७।५।

**चतुस्स्रक्ति** पु० चतस्रः स्रक्तयः कोणादिरूपा अस्य । चतुर्दिगश्रिके । "चतुःस्रक्तिर्नाभिर्ऋतस्य" यजु० ३८।२० । "चतस्रः स्रक्तयः कोणा दिग्रूपा यस्य सः" वेददी० । "चतुःस्रक्तिरेव कूपो भवति" शत० ब्रा० ६।३।३।१६।

**चतूराजी** स्त्री चतुर्णां राज्ञां समाहारः टच् समा० । चतुरङ्गक्रीडायां क्रीडाभेदे चतुरङ्गशब्दे २८६२पृ० दृश्यम् ।

**चतूरात्र** न० चतसृणां रात्रीणां समाहारः चतसृभि रात्रिभिर्निर्वृत्तः अण् तस्य लुक् वा अच् समा० "सङ्ख्यापूर्वं

रात्रमिति" मा० ह्रीमत्वम्। ४चतुर्थ्याम् रात्रिषु ५तत्साध्ये क्रतुभेदे च। "चतूरात्रम्" कात्या०श्रौ० १६।११।१४। "अथ क्रतुर्भवतीति शेषः" कर्कः। चतूरात्रादिरधिकम्" कात्या० श्रौ० २४।११।७। "चतुस्त्रमधिक दक्षिणा" कर्कः।

**चत्वर** न० चत-ष्वरच्। १स्थण्डिले होमार्थं संस्कृत भूभागे २चतुष्पथादिरूपे (चौराह) (चाताल) इति च ख्याते ३स्थाने अमर "चत्वराणां चतुष्पथानि कार्याना लिकचत्वरा" हरि० ११३अ०। ४नानाजनस्थानानां वासस्थाने "वसति नेति चत्वरे प्रतिवसति" स्कन्द०। "न चत्वरे निशि तिष्ठेत् निगूढ" भा० उ० ३६अ०। (चोतारा) ५ख्याते स्थाने "चत्वरान् राजमार्गांश्च समानन्तःपुराणि च." हरिव० ११६अ०। ६चतुष्पथा रथ्यानां सङ्कुले मन्त्रार्थव०। "अनुरथ्यासु सर्वासु चत्वरेषु च कौरव।" भा० व० १५अ०।

**चत्वरवासिनी** स्त्री चत्वरे वसतु शीलमस्याः वस-णिनि ङीप्। कुमारानुचरमातृभेदे। "अध्मान्विका निष्कुटिका रामा चत्वरवासिनी" भा०श०४७अ०।

**चत्वारिंशत्** स्त्री चतस्रो दशतय परिमाणमस्य। "पङ्क्ति-विंशतिनि चत्वारिंशत्" इत्यादि" पा० नि०। (चालिश) १सङ्ख्यायां २तत्सङ्ख्येये च। ततः पूरणे तमप्। चत्वारिंशतम तत्सङ्ख्यापूरणे लि० स्त्रियां ङीप्।

**चत्वाल** पु० चत-वालञ् वृक्षापूर्वकत्वेन हृद्रेनिष्पत्वात् न वृद्धि। चात्वाले १होमकुण्डे २दर्भे च मेदि०।

**चद्** याचने भ्वा० द्विक० उभ० सेट्। चदति ते अदित् अचदीत् अचदिष्टाम्। चचाद चेदतु चेदे।

**चद्** आह्लादे दीप्तौ च भ्वा० अक० प० सेट् इदित्। चन्दति अचन्दीत् चचन्द चचन्दतु। चन्द्र।

**चदिर** पुंस्त्री चद-किरच्। १हस्तिनि २भुजगे च स्त्रियां जातित्वात् ङीष्। ३चन्द्रे ४कर्पूरे च पु० सिद्धान्त०।

**चन** हिंसे भ्वा० प० सक० सेट्। चनति अचनीत-अचानीत् चचान चेनतु। मित् णिचि चनयति ते।

**चन** शब्दे तु० प० अक० सेट्।० चनति अचा (च) नीत् चचान चेनतुः। णिचि चानयति।

**चन** अव्य० चन-शब्दे अच्। अप्यर्थे "अप्यर्थे तु चिच्चन" इत्यमर। अनुज्ञायार्थकचनशब्देन नञः समास इत्यन्ये "युवोरिदा यचन न मिपन्ति मन वाम्" ऋ०२।२४।१२। 'चनेत्येतत्पदद्वयसमुदायः। एकपद्य त्वव्यापक वाक्यादाविकम्। ३नेत्यर्थे "पूर्वेभिर्न प्रमितय चरन्ति" ऋ० ७।२१।३। "चनेति श्रृदायो नेत्यर्थे" भा०। ४अप्यर्थे "स्वप्नश्चनेदनृतस्य प्रयोता" ऋ० ७।८६।६। "स्वप्नश्च स्वप्नोऽपि" भा०। "संकृच्च एतां पितरश्चनेमिरे" ऋ० १०।५६।४। पितरश्च पितरोऽपि" यस्तु सर्वशो० "किम् स्वयन्त्राविषुनौ" विवक्षायामाह किमः चिच्चनप्रत्ययौ विहितौ तस्मिन्नयम् चनार्थकेन चनशब्दार्थेन सा चनशब्देन सतार्दत्वात् कदाचन चचश्चनेत्यादौ कदापि कथमपीत्यर्थलाभात् न प्रत्ययान्तरकल्पनम्। प्रागुक्तप्रयोगे किमोऽभावेऽपि प्रयोगदर्शनात् किम इत्यस्य सार्थिकत्वकल्पनेऽपि चनप्रत्यये परे पूर्वस्वरः लोपापत्तेश्च। तस्मात् चिच्चनेन प्रत्ययत्वाभ्युपगमत्वात् तयोश्चित्वाभावेनाभ्युपगतौ स्वरैकस्यप्राप्तत्वपत्तेश्च

**चनस्** न० चाय पूजादौ "चायतरसे सुनच" उणा० चकुन् चात् तुट्। १भक्ते उज्ज्व०। "चनो धा सहसो यहो" ऋ० १।२६।१०। "चनोदधिष्व पचतोत सोमम्" निरुक्तव्याख्याति।

**चनसित** न० च न सन्दे अच् चनः सित अस्यास्तमस्य। नाह्मणस्यामन्त्रणनामभेदे। "माध्यन्दनाद्ग्रा चनसितेत्यूह्य श्य। सम्मानमनो वाऽतिवक्ष्येतीतरैरिति" कर्काद्युतमतुवाक्यम्।

"आगम्यैते राजि क्रीत राजनि द्वितीयाश्च कन्यायां तृतीया चनसित विचक्षणमिति' नामधेयान्तेषु दधाति चनसितमिति ब्राह्मणं, विचक्षणेति राजन्यवैश्यौ" 'विचक्षणचनसितवर्तौ वाचम्' कात्या० श्रौ० ७।१।७। "विचक्षणशब्दवर्तौ चनसितशब्दवर्तौ च।" ब्राह्मणादिनामधेयभूता वाचौ वदेत्" कर्क।

**चनस्य** चनोऽन्नमिच्छति क्यच् नामधातु अञ्ज्यर्थं पर० अक० सेट्। चनस्यति अचनस्यीत्। "इदमु न चनस्यतम्" ऋ० १।३।१।

**चनिष्ठ** त्रि० चनोऽस्य उपचारात् तद्वान् तत अतिशये इष्ठन् विन्मतोर्लुक् टिलोप। अन्नवत्तमे "अश्वो गो अस्तु चनतिष्ठिष्ठा" ऋ०७।५७।४। "चनिष्ठा अन्नवत्तमा" भा०।

**चन्द्** पु० चदि आह्लादने णन्तात् अच्। १चन्द्रे २कर्पूरे च शब्दार्थर०।

**चन्द्(न्द्र)क** पु० चन्द्(न्द्र) इव कायति शुभ्रत्वात् कै-क। (चाँदा) मत्स्यभेदे "चन्द्(न्द्र)कोऽविज्ञान मत्स्यायमिषान्दनृदीपि" राजवल्लभ।

**चन्दन** पु०न० चदि-णन्तात् ल्यु। स्वनामख्याते वृक्षभेद

जले द्रव्यविशेषे तद्भेदगुणादिकं भावप्र० उक्तं यथा "श्रीखण्डं चन्दनं न स्त्री भद्रश्रीस्तैलपर्णिकः। गन्धसारो मलयजस्तथा चन्द्रद्युतिश्च सः। स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम्। ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते। चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु। श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहहृत्। अथ पीतचन्दनम् (कलम्बक)। "कालीयकन्तु कालीयं पीताभं हरिचन्दनम्। हरिप्रियं कालसारं तथा कालानुसार्य्यपि। कालीयकं रक्तगुणं विशेषाद्व्यङ्गनाशनम्"। अथ रक्तचन्दनम् "रक्तचन्दनमाख्यातं रक्ताङ्गं क्षुद्रचन्दनम्। तिलपर्णं रक्तसारं तत्प्रवालफलं स्मृतम्। रक्तं शीतं गुरु स्वादु छर्दितृष्णास्रपित्तहृत्। तिक्तं नेत्रहितं वृष्यं ज्वरभ्रमविषापहम्। तत्र पुंसि "सलवङ्गयस्तोऽपि दूषयते लघ्वासर्पशिशुनेव चन्दनः" माघ०। क्लीवे "विना मलयमन्यत्र चन्दनं न विवर्द्धते" पञ्चत०। "तत्र क्रतवङ्किका सर्व्वे दिव्यचन्दनभूषिताः" भा० स० ५७अ०। "चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्" सा०द० तस्य शृङ्गारोद्दीपकत्वमुक्तम्। २रक्तचन्दने न० मेदि० ३वानरभेदे पु० हेम०। ४शारिवौषधौ स्त्री राजनि०। (मधुखाली) नगरीसमीपस्थे ५नदीभेदे च स्त्री।

**चन्दनगिरि** पु० चन्दनस्योत्पत्तिस्थानं गिरिः। मलयाचले

**चन्दनगोपी** स्त्री चन्दनमपि गोपायति गुप—अण्। शारिवाभेदे राजनि०।

**चन्दनधेनु** स्त्री पतिपुत्रवत्या मृताया नार्य्या उद्देशेन पुत्रदातव्याया चन्दनाङ्कितधेनौ। तद्विधिमाह रत्नाकरे देवल "जीवद्भर्त्तरि तु या नारी पुत्रिणी म्रियते यदि। सवत्सामङ्कितां धेनुमार्य्याय प्रदापयेत्। पतिपुत्रवती नारी म्रियते यावतस्तयो। वृष नचोत् सृजेत् पुत्रः पिता यावच्च जीवति"। तथा कर्मोपदेशिन्यां ब्राह्मणसर्वस्वे च हलायुधधृतानि वचनानि स्मृतिः "पतिपुत्रवती नारी म्रियते भर्त्तुरग्रतः। चन्दनेनाङ्कितां "धेनुं तस्याः स्वर्गाय कल्पयेत्"। तथा जातूकर्ण्यः धेनुं चन्दनमालिप्य यो दद्यान्मातृहेतवे। यदि पापशतैर्युक्ता तथापि स्वर्गमाप्नुयात्"। तथा वशिष्ठ "न कुर्य्याद्वृषोत्सर्गः पिता यावत्तु जीवति। चन्दनेनाङ्किता धेनुमार्य्याय प्रदापयेत्"। "चतुर्हस्तो भवेद्यूपो वस्त्रवत्समन्वितः। चतुरस्रः शोभनः स्थूलः कर्त्तव्यो धेनु-मौलिकः। बिल्वस्य बकुलस्यैव कार्य्यो यूपः प्रशस्यते। अभावे वारुणेनापि यूपं कुर्य्याद्विधानतः"। "तरुणीरूपसम्पन्ना सुशीला च पयस्विनी। न्यायार्ज्जिता गृहे जाता देया सा श्रोत्रियाय गौः। नदीतीरे वने गोष्ठे देवतायतनेषु च। शौण्डिकेत्रे कुशमले राजद्वारे चतुष्पथे"। एषु वचनेषु वृषोत्सर्गनिषेधचन्दनधेनूत्सर्गविध्योर्युगपदुपसंहारदर्शनात् वृषोत्सर्गस्थाने प्रधानतया चन्दनधेनूत्सर्गः प्रतीयते अतोऽस्य वृषोत्सर्गकार्य्यकारित्वात् तत्फलहेतुत्वं लभ्यते। "एकोद्दिष्टं न कुर्व्वीत त्र्यासिनाश्चैव सर्व्वदा। अहन्यैकादशे प्राप्ते पार्व्वणं तु विधीयते" इति श्राद्धविवेकधृतोशनोवचने त्रिदण्डसन्न्यासिनाम् एकोद्दिष्टनिषेधपार्व्वणविध्योर्युगपदुपसंहारात् एकोद्दिष्टस्थाने पार्व्वणमिव। यद्वा पतिपुत्रवतीरूपप्रेतविशेषाधिकृतवृषं न चोत्सृजेदिति निषेधचन्दनधेनूत्सर्गविधिभ्यां प्रेतमात्राधिकृतसामान्यवृषोत्सर्गविध्यङ्गतफलभावनाकरणीभूतवृषकर्म्मकत्यागमनूद्य तत्कर्म्मीभूतवृषमपहाय तत्स्थाने धेनुमात्रगुणविधिर्न्यायादवगम्यते। पशुयागे सामान्यविध्यवगतायः प्रणयनीयाधिकरणचमसस्थाने "गोदोहेनापः प्रणयेदिति" विशेषविधिना गोदोहगुणविधिवत्। "नाभिभेऽपि प्रवेशिनीम्। उपोष्य द्वादशीं तत्र त्रयोदश्यान्तु पारणम्" इत्यत्र एकादशीरूपनिमित्तस्थाने द्वादशीमात्रगुणविधिवच्च। अन्यथा धेनूत्सर्गस्य पृथक्कर्म्मत्वे फलभावनातत्करणनियोज्यानां पृथक्कल्पने गौरवं स्यात्। उक्तविधिनिषेधयोरुपसंहारवैयर्थ्यञ्च स्यात्। ततश्च कारणैक्यात् फलैक्यमिति। चन्दनधेनूत्सर्गेऽपि प्रेतत्वविमुक्तिपूर्व्वकस्वर्गप्राप्तिः फलम्। एवं कपिलोक्तमन्त्रस्य पापव्यपगमस्वर्गप्रार्थनायाश्चापि तथैव तात्पर्य्यम्। तथा जातूकर्ण्यवचनस्थपापस्वर्गपदयोरपि तथैव तात्पर्य्यं बोध्यम्। भूतार्थानां विधिशेषिणामेव जैमिन्युक्तप्रामाण्येन प्रकृते सिद्धे विधिशेषित्वे लाघवात् "पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वेति" कात्यायनवचनस्थपापपदस्य प्रेतत्व एव तात्पर्य्यदर्शनाच्च। अत्र यद्यपि पतिपुत्रवतीत्यत्र पतिपुत्रवत्त्वस्य विधेयीभूतकर्त्तव्यत्वयि मरणानन्वयित्वेन न विशेषणत्वं किन्तूपलक्षणत्वमेव ततश्च काकवन्तो देवदत्तस्य गृहा इतिवत् कादाचित्कतद्वत्तामादायापि पतिपुत्रवतीति प्रयोग उपपद्यते। तथापि

'अपत्यतयोः' "भर्त्तुरग्रत" इत्याभ्यां मरणकालिकी पतिपुत्रसत्ताऽवगम्यते गवां गोष्ठे इतिवत्। अथ वा पदार्थान्वयेन धेनूत्सर्गकालिकीति। अथ "अपुष्पिता मृता काचित् तस्या धेनुर्विगर्हिता" इति कपिलवचने अपुष्पिताया पुत्रकर्त्तृकधेनूत्सर्गनिषेधस्याप्रसक्ततया सपत्नीपुत्रकर्त्तृकधेनूत्सर्गनिषेधप्राप्तौ तद्दृष्ट्या पतिपुत्रवतीत्वस्य सपत्नीपुत्रवतीपरत्वम् अवश्यं वाच्यम्। तदेकवाक्यतया पुत्रिणीत्यादावपि तथात्वमिति वाच्यम्। अपुष्पितेति कपिलार्द्धस्य प्रसक्तिपूर्वकमार्द्धं पतिपुत्रवदनिवृत्तरजस्कायाः धेनूत्सर्गनिषेधार्थत्वात् गत्यां सत्यां लक्षणाया बीजाभावात्। मतियोगिवत् ध्वंसप्रागभावयोरपि अत्यन्ताभावविरोधित्वमते तु अजातपुष्पस्त्रीपरत्वं वा भवतु तथात्वेऽपि "तस्या धेनुर्विगर्हितेति" अप्रसक्तार्थापि अपुष्पिताधेनुदाननिन्दा स्तुतिपरा। यथा हरेरुत्थाने "मौष्ण येषेण किन्तेन प्रतिपद्यथ योनिषि"इत्यप्रसक्तापि निन्दा एकादश्यादिपौर्णमास्यन्तपञ्चके देवत्यन्तपादयोगविधिस्तुतिपरा यथा वा वेदगाने "यो गिरा गिरेति ब्रूयात् स आत्मानमपि गिरेत्" इत्यप्रसक्तनिन्दा "पैर त्वा अवगिरेदिति विधेः स्तुतिपरा। अतएव उक्तं शावरभाष्ये "न हि निन्दा निन्द्यं निन्दितुं प्रवर्त्तते अपि तु इतरत् स्तोतुमिति"। स्तुतौ हि अप्रसिद्धगुणदोषारोपो न दोषाय। प्रधानं काम्यस्यैव कार्त्तिक्यादिवृषोत्सर्गस्य स्थाने धेनुदानं विधीयते इति वाच्यम्। तत्स्थानपरत्वे मानाभावात्। प्रत्युत म्रियत इति वर्त्तमानार्थकविभक्त्या वर्त्तमानसामीप्येनाचिरमृतोपस्थितेश्च। ये तु "बह्वीनामेकपत्नीनामेका चेत् पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति' मनुना पुत्रवतीत्वाभिधानादेव पतिपुत्रवतीत्वस्य सपत्नीपुत्रवती प्रतीयते इति ब्रुवते तेऽतीव भ्रान्ताः। पुत्रवतीतिपदस्याखण्डतया मतुपः प्रतिपदस्यान्वये तटस्थत्वापत्तेः। ननु इमतुल्यवयो वर्णाश्च स्याद्दक्षिणा द्विजाः। वृषोत्सर्गे तथा पुंसां स्त्रीणां स्त्रीणोर्विधियते" इति भविष्यवचनाद्धेनुदानमिदं पतिपुत्रवत्या वृषोत्सर्गे दक्षिणादानस्य विशेषरूपम्, न तु प्रधानकर्मान्तरं गौरवात्। स च दक्षिणाया अङ्गत्वेन फलाकाङ्क्षतिः। "यश्च पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोतीति" वत्तद्वचनेरिति चेत् न वृषोत्सर्गदक्षिणात्वचन्दनाङ्कितधेनुदानस्य प्रकरणान्तराम्नायेन प्रकरणान्तरन्यायतः प्रधानत्वसिद्धेः वृषोत्सर्गस्थानीयत्वे मानुषवर्त्मनिषिद्धाचारात्। धेनुदानयुगपद्वृषोत्सर्गनिषेधामात्रकृते कपिलपञ्चरात्रे चन्दनधेनुदानस्यापीति कर्त्तव्यतायां दृषरूपदक्षिणादानविधानाच्च। यथा कपिल उवाच "अतः परं प्रवक्ष्यामि धेनुदानमनुत्तमम्। पतिपुत्रवती नारी म्रियते भर्त्तुरग्रत। चन्दनेनाङ्कितां धेनुमाचार्याय निवेदयेत्"। तथा "जीवद्भर्त्री तु या नारी पुत्रिणी म्रियते यदि। चन्दनाङ्कितां धेनुमाचार्याय निवेदयेत्। साध्वी पतिव्रता नारी म्रियते यापत्ययोः। वृष नैवोत्सृजेत् पुत्र पितरं यावत् तु जीवति। मृतपुत्रा च या नारी संस्पृष्टा तु सा भवेत्। तस्या धेनुर्न दातव्या वृषोत्सर्गो विधीयते। "अपुष्पिता मृता काचित्तस्या धेनुर्विगर्हिता। दद्यात्तु सुतो ज्येष्ठः कनिष्ठो वृषमुत्सृजेत्। द्वयोः सोदरयोरेको भवेत् ज्येष्ठः प्रधानतः। त्रयाणां द्वौ सुतौ ज्येष्ठौ, चतुर्णाञ्च त्रयः स्मृताः। पञ्चानां सोदराणाञ्च त्रयो ज्येष्ठाः प्रकीर्त्तिताः। ज्येष्ठेनैव तु कर्त्तव्यं धेनुदानं विधानतः। हेमशृङ्गी खुरे रूप्यैः सुशीला वस्त्रसंयुताम्। कांस्योदोही ताम्रपृष्ठां घण्टाचामरभूषिताम्। प्रवालमालिकां दद्यात् कर्णयोरुभयोरपि। चन्दनेनाङ्कितां धेनुमाचार्याय निवेदयेत्। गवां लोकमवाप्नोति दिवि देवैश्च मोदते। चन्दनेनाङ्कितां धेनुं दत्त्वा शाश्वत् सुरालयम्। तावत्तिष्ठति स्वर्लोके यावदाहूतसंप्लवम्। नचोत्सर्गो वृषस्यात्र मतस्तस्यान्वितस्य च। वृषोत्सर्गविधानेन कर्त्तव्यं सर्वकर्म च। नाम स्त्रोऽसीति मन्त्रेण दक्षे वृषोऽस्यसीति च। धेनोश्च दक्षिणदेशे तु त्रिशूलाङ्कं समालिखेत्। वामभागे विशेषोऽयं दक्षे चक्रं समालिखेत्। तथान्यदर्थये द्विजाचार्यं तु विधानवित्। ततो वै सन्निवेश्यैकं पञ्चाङ्गुलप्रमाणकम्। शूलं पङ्कजं कार्यं दक्षे वामे यथाविधि। पूर्णयाभिमुखीं धेनुं यजमानोत्तरामुखः। मस्तकादिक्रमेणैव प्रतिमन्त्रैः प्रपूजयेत्"।

"एवंविधिं तां धेनुं दत्त्वा तर्पणमारभेत्। पुष्पं दत्त्वा पित्रादीन् वृषोत्सर्गविधानतः। ऐशान्यां भ्रामयेत् किञ्चित् आचार्याय च दक्षिणाम्। रजतञ्च ततो दद्यादाचार्याय गुणान्वितम्। पूर्ववत् ब्राह्मणांश्चैव

वस्त्रमाल्यादिभिस्ततः । कांस्यपात्रं वस्त्रयुग्मं सुवर्णञ्च विशेषतः । आचार्य्याय प्रदातव्यं ब्राह्मणे कनकन्तथा । आगतान् पूजयेद्भक्त्या यथाशक्ति विधानतः । होमान्ते-ऽपयादींश्च भक्ष्याद्यैः परिपोषयेत्" । पुस्तकान्तरे पाठाधिक्यं यथा

"एकादशाहे स्थिताया षण्मासे चाब्दिके तथा। त्रिपक्षे मासिके चापि दद्याद् गां चन्द्रमाङ्किताम्" तथा वराह-पुराणम् "अयने विषुवेऽष्टम्यां युगाद्यापूर्णिमासु च । दर्शे मन्वन्तरे चैव धेनुं दद्यात् सुपूजिताम्"। ननु "आद्यश्राद्धे त्रिपक्षे च" इत्यादिना आद्यश्राद्धकर्त्तव्यनित्यवृषोत्सर्गकालस्य परपरकालो गौणः । न वा सर्वे मुख्याः कालाः सु । तत्र नाद्यः त्रिपक्षादौ शिष्टाचारविरोधात् । नापि द्वितीयः त्रिपक्षादौ नित्यत्वबोधकाभावात् । वस्तुत आद्यश्राद्धे वृषोत्सर्गस्य नित्यत्वं त्रिपक्षादौ काम्यत्वम् । आद्यश्राद्धपदम् अशौचान्तद्वितीयदिनपरम् "अशौचान्तात् द्वितीयेऽह्नि" इत्याद्येकवाक्यत्वात् । अत्र च आद्यश्राद्धस्य विप्रपतितत्वेन एकादशाहादौ क्रियमाणत्वे वृषोत्सर्गमपि न कुर्य्यात् । आद्यश्राद्धदिने वृषोत्सर्गा-करणे त्रिपक्षाद्यान्यतमकालेऽपि वृषोत्सर्गस्यावश्यमेव तत्र प्रेतोपकारफलत्वेन तस्य पुनः- सम्वत्सरसाध्यसकृत्कृतस्य नित्यत्वं कल्प्यम् । एवं धेनुदानस्यापि । अतएव पूर्ण्णसंवत्सरे मलमासपातेऽपि प्रागकृतश्चेत् कार्य्य एव इति नवीनाः । एककर्त्तृकानेकवृषोत्सर्गोऽपि शिष्टा-चारादेकदिनेऽपि । तथा हि स्वर्गलोकगमनफलश्रुतेः काम्यत्वेन "यो भूय आरभते तस्मिन् फले विशेषः" इति न्यायादविरोधः । ननु नैमित्तिकत्वात् कथमावृत्तिः "सकृत् कृते कृतः शास्त्रार्थः" इति न्यायात् "न चैकत्र क्रियाद्वयम्" इति वचनाच्च । उच्यते विशेषः काम्य-नैमित्तिक फलविशेषार्थं भूय कार्य्यं, नैमित्तिकमात्रं तु सकृदेव । किञ्च । संक्रान्त्यादिनिमित्तकश्राद्धमपि पुनः पुनः स्यात् । नैवं तत्र पितृतृप्तिरूपप्रधानफलस्य सकृत्त्वेन चरितार्थत्वात् । अत्रोक्तानि सर्वाण्येतानि वचनानि तिर्य्यगधिकरणन्यायमूलानि तथा हि तिर्य्यगधिकरणे तिर्य्यक्पङ्गुमनुष्यादेर्देवतानामनधिकार इति यागमात्रे उक्तम् । तत्र हेतवः तिरश्चां विशिष्टान्नकरणविरहात् मनुष्याणाम् अन्धवधिरमूका-नामवेक्षणश्रवणोच्चारणविरहात् साङ्गयागासामर्थ्यं हेतुः तथा यागानधिकारकादिदम् "सपिण्डः पितृकार्य्येषु अधिकारो न विद्यते" इति छन्दोगपरिशिष्टे अग्नि-ष्वात्ताद्यन्तर्गणात्तथा "जीवत्पितृकर्तृकानन्वाधेतर" इति कात्यायनसूत्रे च जीवत्पितृकस्य पितृतर्पण-निषेधात् वृषोत्सर्गे तदङ्गभूततत्पुच्छगलितोदक-तर्पणविरहात् साङ्गकरणासामर्थ्यात् वृषोत्सर्गेऽनधि-कारः । अतएव द्वैतनिर्णयेऽपि स्त्रिया कर-णीभूतशृङ्गबाधेन यागवद्वृषोत्सर्गस्य बाध उक्तो वाच-स्पतिमिश्रेण । धेनुदानाङ्गतर्पणे तु प्रधानाधिकार-श्रुतेः जीवत्पितृकाधिकृतविशेषविधानाच्चाधिकार एवा-भ्युदयिकश्राद्धवत् जन्माद्युपनयनाङ्गसशिखवपनस्य अयन्तु सामान्यशास्त्रोपजीवित्वेन निषेधः पर्य्युदास एव । स यदि पतिपुत्रवतीभिन्नाया वृषोत्सर्गं कुर्य्यात् इत्ये-वमात्रस्तदा पूर्व्वभागवैयर्थ्यं स्यात् । यदि पतिपुत्रवत्याः जीवत्पितृकपुत्रभिन्नो वृषोत्सर्गं कुर्य्यादिति विशिष्ट-रूपस्तथापि पतिपुत्रवत्यास्तदुभयरहितायाश्च जीवत्-पितृकपौत्रादिना वृषोत्सर्गः स्यात् । स चायुक्त एव प्रागुक्तवचनन्यायविरोधात् । तस्मात् समुदायवचनसा-र्थक्याय पतिपुत्रवतीभिन्नाया वृषोत्सर्गं कुर्य्यात् । तथा जीवत्पितृकभिन्नो वृषोत्सर्गं कुर्य्यात् इति वचनन्याय-संवादाद्वाक्यद्वयमेव सिद्ध्यति प्रमाणवद्गौरवस्य स-र्वैरङ्गीकृतत्वात् दर्शपौर्णमासयो षट्प्रधानापूर्व्व-वत् । अथ योक्तदेवलादिवचने "ज्येष्ठेनैव तु कर्त्तव्यं धेनुदान विधानतः" इत्यन्तकापिलादिसकलवचनपर्य्यालोच-नया कनिष्ठपुत्रवतीभिन्नपतिपुत्रवतीतरजनस्य कापिलपति मृतकनिष्ठपुत्रभिन्नजीवत्पितृकादन्यो जनो वृषोत्सर्गं कुर्य्यात् इति सामान्यत एव वृषोत्सर्गविधिः । तथा पतिपुत्रवत्या ज्येष्ठपुत्रएव चन्द्रमाङ्कितधेनुमुत्सृजेदिति विधिश्च सिद्ध्यति । ततश्च पतिपुत्रवत्या कनिष्ठपुत्रसत्त्व-एव तदन्यस्तत्पितृकेण वा वृषोत्सर्गं कार्य्यः । कनिष्ठ-पुत्राभावे तु न केनापि । एवं पत्यादिना न चन्द्रधेनु-दानमिति । प्रतिप्रसूतकनिष्ठान्यजीवत्पितृकेण न क-स्यापि वृषोत्सर्गः कार्य्य इत्यपि च पर्य्यवसितम् । वस्तु-तस्तु पतिपुत्रवत्या वृषोत्सर्गनिषेधे तत्पुत्रस्य जीवत्पितृ-कत्वेनानधिकार एव हेतुः न तु स्त्रियाः पतिसत्त्वं पुत्रसत्त्वं वा "कृतपुत्रे"त्यादिप्रागुक्तकापिलवचने पतिसत्त्वे कनिष्ठपुत्रसत्त्वे च वृषोत्सर्गावगते तत्-पुत्रस्य पितुः सत्त्व एवानधिकारोक्त्या तन्मरणे वृषोत्-सर्गावगमात् । न वा तदुभयसत्त्व निषिद्धम् उक्त-

न्यायावगतस्य तत्पुत्रस्य जीवत्पितृकत्वहेतोरेव तादृश निषेधप्राप्तेः पतिपुत्रसत्त्वयोर्निषेधनिहेतुत्वकल्पना मौचित्यात् तयोरार्थनिकहेतुत्वे तु अदृष्टकल्पनाया अनाय्यत्वात्। सिद्धजीवत्पितृकनिषेधप्रपञ्चतया पतिपुत्रवत्या निषेधोपपत्तौ अधिकनिषेधकल्पने गौरवाच्च। यत्तु जीवत्पितृकवृषोत्सर्गनिषेधे पति-पुत्रवत्या पृथगुपसंहार सोऽपि तस्याः पुत्रानधिकार-मात्रप्रयुक्तसिद्धवृषोत्सर्गाभावमागित्वानुवाद पूर्व-वाक्यावगतधेनुदानस्य वृषोत्सर्गस्थानीयत्वज्ञापनार्थं एवेति प्रागपि निरूपितम्। ततश्चोक्तवचने तिर्य्य-गधिकरणन्यायप्राप्त जीवत्पितृकस्य वृषोत्सर्गकर्तृ-त्वाभावमनूद्य सपतिकाया वृषोत्सर्गस्थाने चन्दना-ङ्कितधेनूत्सर्ग एव विधीयते। एतेन वृषोत्सर्गकर्त्तरि कपिलप्रतिप्रसूतसपतिकावृषोत्सर्गकृतिमत्कनिष्ठपुत्रान्य जीवत्पितृकेतरत्वविशेषणा सपतिकाया वृषोत्-सर्गस्थाने ज्येष्ठपुत्रस्यैव चन्दनाङ्कितधेनूत्सर्गमात्रञ्च लभ्यते। अतोजीवत्पितृकेण काम्यवृषोत्सर्गं पतिते प्रव्रजिते वा पितरि जीवति पितामहादिवृषोत्सर्गश्च न कार्य्यः। एवं सपतिकाया अपि पुत्रस्य कर्मायो-ग्यत्वे असत्त्वे वा पत्या कन्यादिना वा वृषोत्सर्गः कार्य्य एवेति स्थितम्। इदन्तु रत्नाकरहलायुधा-चार्य्यचूड़ामणिविद्याभूषणशुभङ्करमहादेवभट्टाचार्य्यप्रभृ-तीनामपि सम्मतं तेषां पृथक् पृथक् पद्धतिरपि प्रसिद्धास्ति। क्वचिद्देशे वाचस्पतिभट्टाचार्य्यस्यापि सम्यक् पद्धतिर्दृश्यते। अत एवात्र विशेषादर्शिनामनाचारो-ऽनाचार एव। अत्र भविष्योक्तप्रकारस्तु वैकल्पिक एव "श्रुतिशास्त्रे विकल्पो हि आकाङ्क्षापूरणे सतीति" जैमि-न्युक्ते। तत्रत्यपूजाहोमाद्यङ्गेषु विशेषमन्त्रोक्ते। कपिलकल्पेन वृषोत्सर्गधर्मातिदेशेन विशेषोक्त-निरासाच्च मध्यमाचस्पतिमतम्। रघुनन्दनमते तु चन्द-नधेन्वोः काम्यत्वमात्रत्वात् वृषोत्सर्गं विहाय केवलचन्द-नधेनुदानं न शास्त्रसिद्धं काम्येन नित्यबाधायोगात् सति सामर्थ्ये उभयकर्त्तव्यतार्थं वृषोत्सर्गनिन्दा चन्दनधेनु-दानस्तुतिपरा। रघुनन्दनकृततत्त्वव्रतितत्त्वेऽपि तस्य काम्यस्यैव विधानार्थत्वम् इति साम्प्रदायिकाः

चन्दनपुष्प न० चन्दनमिव सुगन्धि पुष्पमस्य। लवङ्गे राजनि०

चन्दनमय त्रि० चन्दनात्मक मयट्। चन्दनकाष्ठनिर्म्मिते प-र्य्यङ्कादौ "य सर्वं चोपधानं पर्य्यङ्को निर्म्मित स चन्द-दाता" इत्युपक्रमे "चन्दनमयोरिपुघ्नो धर्म्मयशोदीर्घ जीवितकृत्" इ०स०७९अ० तन्मयपर्य्यङ्कस्य फलमुक्तम्।

चन्दनशारिवा स्त्री चन्दनमिव सुगन्धि शारिवा। शारिवा भेदे राजनि०। [ इत०। २मृगचन्दनसारे च।

चन्दनसार पु० चन्दनस्येव सारोऽस्य। १वज्रक्षारे राजनि०

चन्दनाचल पु० चन्दनस्याकरोऽचल। मलयाचले राजनि०। चन्दनाद्रिप्रभृतयोऽप्यत्र।

चन्दनादि पु० "चन्दनञ्च तथोशीरं कर्पूरोगन्धबाकुची। एलाकर्पूरगोक्षुराः सप्तैते चन्दनादयः" इति वैद्यकोक्ते पित्तोपशमने द्रव्यसप्तके।

चन्दनाद्य न० "चन्दनाद्य तथा चाप्य यष्टिशैलेयपद्मकम्। मञ्जिष्ठा सरलं दारु सठ्येलापूतिकेशरम्। पत्रं तैल मुरा मांसी कक्कोलं वनिताम्बुदम्। हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम्। त्वग्रेणुनलिकटुभिश्चैव मस्तु चतुर्गुणम्। लाक्षारससमं सिद्धं यत्नं बलवर्ण कृत्। अपस्मारज्वरोन्मादकृत्याऽलक्ष्मीविनाशनम्। आयुःपुष्टिकरं चैव वशीकरणमुत्तमम्" चक्रदत्तोक्ते तैलभेदे।

चन्दनीया स्त्री चन्दनतेऽनया बा० करणे अनीयर्। गोरो-चनयाम् राजनि०। [ पु० मेदि०।

चन्दिर पु स्त्री० चदि-किरच्। १गजे स्त्रियां ङीष्। २चन्द्रे

चन्द्र पु० चदि-आह्लादे णिच्-रक्। ब्योमस्थे जलमये च वर्त्तुलाकारे (चाँद) ख्याते पदार्थे। तन्नामकप्रमाणादि इन्दुशब्दे ९५५।५६ पृ०उक्तम्। स च पक्षभेदः तदधि ष्ठातृदेवादि पक्षयग्रब्दे २७५७ पृ० दर्शितम्। आधि कमिन्दुशब्दे ९३० पृष्ठादौ द्रष्टव्यम्। तस्योत्पत्ति अभिजशब्दे १११पृ०उक्तम्। तद्वयादि हरिवंशे भाग वते च द्रष्टव्यम्। चन्द्रस्य दिग्बलवर्णादिज्ञानाय सर्वग्रहा-णां दिग्बलाद्युच्यते तत्र ज्यो० त०

"रक्तश्यामोभास्करोगौरइन्दुर्नात्युच्चाङ्गोरक्तगौरोमही ज। दूर्वाश्यामोज्ञोगुरुर्गौरगात्रः श्याम शुक्रोभा स्करिः कृष्णदेहः"। "सूर्य्यः शुक्र क्षमापुत्रः सैंहि केय शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादि दिगधीश्वराः"। "प्राच्यां सौम्यसुराचार्य्यौ याम्यां भास्करभूमिजौ। प्रत्यक् सौरिरुदीच्यान्तु सितेन्दू दिग्बलान्वितौ"। "भौमार्कजीवाः पुरुषाः क्लीबौ सोम जभानुजौ। स्त्रियाख्यौ भार्गवचन्द्रौ द्वौ तत्पतिका-चयोच्यते"। "चन्द्रार्कजीवाधिपतौ कुजार्कौ ज्ञमाक्त

-सत्त्वरजस्तमांसि"। "कटुलवणतिक्तमिश्रितमधुराम्लौ च कषायकोऽर्कतः"। "ब्राह्मणे शुक्रवागीशौ क्षत्रिये भौमभास्करौ। चन्द्रो वैश्ये बुधः शूद्रे पतिर्मन्दोऽन्त्यजे जने"। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः। सामवेदाधिपो भौमः शशिजोऽथर्ववेदराट्"। "मधुपिङ्गलदृक् चतुरस्रतनुः पित्तप्रकृतिः सविताल्पकचः। तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्च शशी मृदुवाक् शुभदृक्। भूमिजस्तरुणमूर्त्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः। श्लिष्टवाक् सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च। बृहत्तनुः पिङ्गलमूर्द्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः। भृगुः सुखी कान्तवपुः सुलोचनः कफानिलात्मासितवक्रमूर्द्धजः। मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः स्थूलद्विजः परुषरोमकचोऽनिलात्मा" "मित्राणि सूर्य्याच्छशिभौमजीवाः सूर्येन्दुजौ सूर्य्यशशाङ्कजीवाः। आदित्यशुक्रौ रविचन्द्रभौमा बुधार्कजौ चन्द्रजभार्गवौ च। "सितासितौ चन्द्रसुतो न कश्चित् बुधः शशी सौम्यसितौ रवीन्दू। रवीन्दुभौमा रविजस्त्वमित्रा मित्रादिशेषस्तु समः प्रदिष्टः। बुधः कुजेज्यास्फुजिदर्कपुत्राः, शुक्रार्कजौ, भौमसुरेज्यमन्दाः। शनिः, कुजेज्यौ सुरराजमन्त्री रव्यादिकोऽमी समतामिताः स्युः"। तच्चारफलादिकम् ज्यो० त० उक्तम् तच्च इन्दुशब्दे ६३१।३२ पृ० द्रष्टव्यम् "अर्द्धोदुम शशी पाप" समयामृतम्। अत्रिजातसोमस्य चन्द्रलोकप्राप्तिकथा काशीख० १४अ०। "पिता सोमस्य भो विप्र! जज्ञेऽत्रिर्भगवानृषिः। ब्रह्मणो मानसात् पूर्वं प्रजासर्गं विधित्सतः। अनुत्तरं नाम तपो येन तप्तं हि तत् पुरा। त्रीणि वर्षसहस्राणि दिव्यानीति हि नो श्रुतम्। ऊर्द्ध्वमाचक्रमे तस्य रेतः सोमत्वमीयिवत्। नेत्राभ्यां तच्च सुस्राव दशधा द्योतयन् दिशः। तं गर्भं विधिना हृष्टा दश देव्यो दधुस्तदा। समेत्य धारयामासुर्नैव ता समशक्नुवन्। यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः। ततस्ताभिः सह सोमो निपपात वसुन्धराम्। पतितं सोममालोक्य ब्रह्मा लोकपितामहः। रथमारोपयामास लोकानां हितकाम्यया। स तेन रथमुख्येन सागरान्तां वसुन्धराम्। त्रिःसप्तकृत्वो द्रुहिणश्चकाराऽभिप्रदक्षिणम्। तस्य यत् च्यावितं तेजः पृथिवीमन्वपद्यत। तेनौषध्यः समुद्भूता याभिः सन्धार्यते जगत्। स लब्धतेजा भगवान् ब्रह्मणा वर्द्धितः स्वयम्। तपस्तेपे महाभाग! पद्मानां दशतीर्दश। अविमुक्त-

समासाद्य क्षेत्रं परमपावनम्। संस्थाप्य लिङ्गममृतं चन्द्रेशाख्यं स्वनामतः। बीजौषधीनां तोयानां राजाऽभूत् द्विजन्मनाम्। प्रसादाद्देवदेवस्य विश्वेशस्य पिनाकिनः। तत्र कुण्डं विधायैकममृतोदमिति स्मृतम्। यस्याम्बुपानस्नानाभ्यां नरोऽज्ञानात् प्रमुच्यते। तुष्टेन देवदेवेन स्वमौलौ योऽधृतः सदा। आदाय तत्कलामेकां जगत्सञ्जीवनीं पराम्। पक्षादुक्षीण शशोऽपि मासान्ते क्षयमाप्य च। आप्याय्यतेऽसौ कलया पुनरेव तया शशी। स तत् प्राप्य महद्राज्यं सोमः सोमवतां वरः। राजसूयं समाजह्रे सहस्रशतदक्षिणम्। दक्षिणामददत् सोमस्त्रीँल्लोकानिति नो श्रुतम्। तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च भो द्विज!। हिरण्यगर्भो ब्रह्मात्रिर्भृगुर्यत्रर्त्विजोऽभवन्। सदस्योऽभूद्धरिस्तत्र बहुभिर्मुनिभिर्वृतः। तं सिनी च कुहूश्चैव द्युतिः पुष्टिः प्रभा वसुः। कीर्त्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे। उमया सहितं रुद्रं सन्तर्प्याध्वरकर्मणा। प्राप सोम इति ख्यातिं दत्तां सोमेन शम्भुना। तत्रैव तप्तवान् सोमस्तपः परमदुष्करम्। तत्रैव राजसूयञ्च चक्रे चन्द्रेश्वराग्रतः। तत्रैव ब्राह्मणैः प्रीतैरित्युक्तोऽसौ कलानिधिः। सोमोऽस्माकं ब्राह्मणानां राजा त्रैलोक्यदक्षिणः। तत्रैव देवदेवस्य त्रिलोचनपदं कृतः। शम्भुना प्रीतमनसा त्रैलोक्याह्लाददेहतवे। त्वं ममापि परा मूर्त्तिरित्युक्तस्तपोबलात्। जगत्तवोदयं प्राप्य भविष्यति सुखोदयम्। त्वत्पीयूषमयैर्हस्तैः स्पृष्टमेतच्चराचरम्। भानुतापपरीतञ्च परां ग्लानिं विहास्यति"।

"इति दत्त्वा वरान् शम्भुस्तस्मै चन्द्रमसे द्विज!। अन्तर्हितो महेशानस्तस्मिन् चन्द्रेश्वरे पुरे। तदारभ्य च लोकेऽस्मिन् द्विजराजाऽधिपोऽभवत्"। तस्य मासमध्ये दक्षशापात् क्षयवृद्धी पाद्मे स्वर्गखण्डे उक्ते यथा "अश्विन्याद्यास्तु दक्षस्य उपयेमे सुताः शिवुः। रोहिण्या मेव सततं बहुप्रेम्णा रराम ह। दृष्ट्वा तदितरास्तास्तु तस्याः पितरमब्रुवन्। अस्माकं कामदस्तात! जामाता तव रोहिणीम्। रमयत्येव सततं तेन तप्ता वयं पितः!। तत् श्रुत्वा चाप्रियं दक्षः सोममाह भजस्व भोः। प्रेम्णा समेन सर्व्वास्त्वं दुहितॄर्मम मानद!। नाटद्रेन दक्षेणैव सोमः सप्रेम रोहिणीम्। तथैव रमयामास श्रुत्वा दक्षश्चुकोप ह। शशाप तेन भविताऽ पक्षीणोऽपक्षचोतिमः। यक्ष्मणा च परिक्लिष्टो भव त्वं क्षीणरेतकः।

अथ अयमिते तस्मिन् सर्व्वास्ताः शङ्किता स्त्रियः। पितरं शरणं प्राप्ता प्रोचुस्ते न पतिं पितुः॥ न वयं तेन वर्त्तामो विना सुखनिराकृताः। उवाच दक्षस्ताः सर्व्वाः शापो मे नान्यथा भवेत्। मासमध्ये पक्षमेकं वर्द्धतां स क्रमेण वै। क्षयं क्रमेण प्राप्नोतु पक्षमेकं व्यवस्थया। एवं शापं वरञ्चैव लेभे तस्य व्यवस्थया। तथैव राजते व्योम्नि क्षयवृद्धी दधद्विधुः"। ज्योतिषोक्ततत्कारणन्तु इन्दुशब्दे ८२२ पृ० दर्शितम्। २आह्लादजनकद्रव्यमात्रे त्रिका०। ३कर्पूरे ४स्वर्णे ५जले ६काम्पिल्ले पु० मेदि०। ७द्वीपभेदे शब्दमा०। ८विसर्गवर्णे तन्त्रसङ्केत चदि—दीप्तौ रक्। ९कमनीये त्रि० १०मयूरपिच्छे मेचके हेमच०। ११गोणस्फाफले व्याडिः। अन्त्यपदलोपे १२चन्द्रगुप्ते नृपे च। "क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम्" मुद्राराक्षस। "चन्द्रं गता पद्मगुणान्न भुङ्क्ते" कुमा०। "वधूजनचन्द्रमधश्चकार" माघः। "चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्" सा० द० तस्य शृङ्गाररसोद्दीपकत्वमुक्तम्। स्वर्णे "चन्द्ररथ" "होता मन्द्रः स्तुप्यमनु चन्द्ररथ" ऋ०१।१४१।१२। १३हीरके। चन्द्राधिष्ठातृके १४मृगशिरोनक्षत्रे १५एलाङ्के च।

चन्द्रक पु० चन्द्र इव कायति कै—क। मयूरपुच्छस्थे चन्द्राकारे १पदार्थे अमरः। २नखे शब्दच० ३मत्स्यभेदे (चाँदा) राजनि०। "चन्द्रकस्तनभिष्यन्दी मधुरो बलवर्द्धनः" राजनि०तद्गुणा उक्ताः। स्वार्थे क। ४चन्द्रशब्दार्थे जले पतितस्य तैलस्य चन्द्राकारे ५मण्डले च "या चन्द्रकैर्मदजलस्य महानदीनाम्" माघ। ६श्वेतमरिचे न० राजनि० ७शिग्रुबीजे न० शब्दार्थचि० चन्द्रकोजातोऽस्य तारका० इतच्। चन्द्रकित जातचन्द्रके त्रि०।

चन्द्रकला स्त्री ६त०। चन्द्रमण्डलस्य षोडशभागैकभागे तासां नामानि कलाशब्दे १७८४पृ० दर्शितानि तिथिभेदे स्त्रीणां देहभागभेदे स्थितानां तासां नामभेदाश्च काममाले उक्ता यथा

"पूषा यशा सुमनसा रतिः प्राप्तिस्तथा धृतिः। ऋद्धिः सौम्या मरीचिश्च तथा चैवांशुमालिनी। अङ्गिरा शशिनी चेति छाया सम्पूर्णमण्डली। तुष्टिश्चैवामृता चेति कला सोमस्य षोडश"।

चन्द्रकवत् पु स्त्री चन्द्रकोऽस्त्यस्य मतुप् मस्य व। मयूरे "प्रादुरभवत् सपदि चन्द्रकवान् द्रुमात्यात्" माघ। स्त्रियां ङीप्।

चन्द्रकाटुकि पु० मत्स्यभेदे हेमा० व्र० ख० मूलं दृश्यम्।

चन्द्रकान्त पु० चन्द्रः कान्तोऽभीष्टो यस्य। स्वनामख्याते १मणिभेदे तद्दर्शने हि तस्य जलस्रावात् तत्कान्तत्वम्। २कैरवे, ३श्वेतपद्मचन्दने च न०। ४रात्रौ, ५ज्योत्स्नायां, स्त्री मेदि० ६चन्द्रशोभायां, चन्द्रपत्न्याञ्च स्त्री हेमच०। "चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम्" सुश्रु०। "शाय शशाङ्ककिरणाहतचन्द्रकान्तः" "इहा तत्वासव यदुरिह चन्द्रकान्तानुसारि" अमरुश०। "चन्द्रकान्ताभिधा रौ तौ विरमे स्वराष्टौ" वृ० र० टी० उक्ते पञ्चदशाक्षरपादके ७छन्दोभेदे स्त्री। "दशग्रीवस्य चन्द्रकेतुराजधान्यां स्त्री चन्द्रकेतुशब्दे दृश्यम्।

चन्द्रकान्ति न० चन्द्रस्येव कान्तिरस्य शुभ्रत्वात्। १रजते रूप्ये, ६त०। तदुत्पत्त्यादि भावप्र० उक्ता यथा

"त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः। निरीक्षयामास शिवः क्रोधेन परिपूरितः। अग्निरुत्कालमपतत्तस्यैकस्माद्विलोचनात्। ततो रुद्रः स भव-दैश्वानर इव ज्वलन्। द्वितीयादपतन्नेत्रादश्रुबिन्दुस्तु वामकात्। तस्माद्रजतमुत्पन्नमुक्तकर्म्मसु योजयेत्। कृत्रिमञ्च भवेत्तद्धि वङ्गादिरसयोगतः। रूप्यन्तु रजतं तारश्चन्द्रकान्ति सितप्रभम्। गुरुस्निग्धं मृदुश्वेतं दाहे छेदे घनक्षमम्। वर्णाढ्यं चन्द्रवत् स्वच्छं रूप्यं नवगुणं शुभम्। कठिनं कृत्रिमं रूक्षं रक्तं पीतं दलं लघु। दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम्। रूप्यं शीतं कषायाम्लं स्वादु पाकरसं सरम्। वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित्। प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम्। तारं शरीरस्य करोति तापं विड्बन्धनं बलं यच्छति शुक्रनाशम्। वीर्य्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति त्वशुद्धम्"। चन्द्रस्य २दीप्तौ [ स्त्रियां ङीप्।

चन्द्रकिन् पु० स्त्री चन्द्रकोऽस्त्यस्य इनि। मयूरे त्रिका०

चन्द्रकुण्ड पुंन० ६त०। कामरूपस्थे चन्द्रकृते कुण्डभेदे चन्द्रकूटशब्दे दृश्यम्।

चन्द्रकूट पु०कामरूपस्थे पर्व्वतभेदे तत्कथा कालिका०८०अ० "पूर्व्वं वायुगिरेः शैलश्चन्द्रकूट इति स्मृतः। त्रिकोणाकारसङ्काशस्तदूर्द्ध्वे चन्द्रमण्डलम्। द्वितीयवर्णैस्तु विन्दुश्यामलङ्कृतम्। चन्द्रबीजमिति प्रोक्तं तेन चन्द्रं प्रपूजयेत्। अद्यापि प्रतिदर्शं तु पर्व्वतं तं निशापतिः। मूर्द्धाभूषीकरोत्येव दयभीरंशुभिः

र्युत । तस्यैव पूर्व्वभागे तु सोमकुण्डाह्वयं सरः । तत्र स्नात्वा च पीत्वा च नरः कैवल्यमश्नुते । स्वर्गादवप्लुतश्चन्द्रः कामाख्यासेवने यदा । तदा तद्रश्मिसंघातनि सृतास्तोयराशयः । तैस्तोयैर्व्यापितः कुण्डमकरोदिन्द्रचन्द्रयोः । मध्ये पुण्यतमस्थाने स्वयं ब्रह्मशिलोपरि । चन्द्ररश्मिसमुद्भूत । चन्द्रकुण्डमहोदधेः । सुधास्रवण ! साह्लाद ! त्वं चन्द्र ! कलुषं हर । इत्यनेन तु मन्त्रेण सुस्नातश्चन्द्रपाथसि । चन्द्रकूटं समारुह्य पूजयेद्दुयस्तु तं नरः । अविच्छिन्ना सन्ततिस्तु सुकान्ता तस्य जायते । परत्र चन्द्रभवनं भित्त्वा याति परं पदम् । तीरे तु चन्द्रकूटस्य नन्दनो नाम वै गिरिः । तस्मिन् वसति शक्रस्तु कामाख्यासेवने रतः । न्यस्तभावसमासाद्य सर्व्वदेवेश्वरो हरिः । सेवितं त्रिदशेशानैः सततं वर्त्तते नरः । चन्द्रकूटस्य तु गिरेर्नन्दनस्य तथा गिरे । प्रतिदर्शं तथा चन्द्रः प्रदक्षिणयति त्रिधा । चन्द्रकुण्डजले स्नात्वा समारुह्याथ नन्दनम् । आराध्य शक्रं लोकेशं महाफलमवाप्नुयात्” ।

**चन्द्रकूप** पु० चन्द्रकृतः कूपः । काशीस्थे कूपभेदे । “चन्द्रकूपजले स्नात्वा जपाद्द नियमव्रती” काशीख० १०अ० ।

**चन्द्रकेतु** पु० भारतप्रसिद्धे १सौवलानुचरे सैन्यभेदे “शतञ्जय चन्द्रकेतुं महामेघं सुवर्च्चसम् । सूर्य्यभासञ्च पञ्चैतान् हत्वा विव्याध सौबलम्” भा०द्रो०४८अ० । २लक्ष्मणात्मजभेदे । तस्य देशभेदे राज्याभिषेककथा रामा० उ०१०२स० “इमौ कुमारौ सौमित्रे । तव धर्म्मविशारदौ । अङ्गदश्चन्द्रकेतुश्च राज्यार्थे दृढविक्रमौ । इमौ राज्येऽभिषेक्ष्यामि देशं साधु विधीयताम् । रमणीयोह्यसम्बाधो रमेतां यत्र धन्विनौ । न राज्ञां यत्र पीडा स्यान्नाश्रमाणां विनाशनम् । स देशो दृश्यतां सौम्य नापराध्यामहे यथा । तथोक्तवति रामे तु भरतः प्रत्युवाच ह । अयं कारुपथो देशो रमणीयो निरामयः । निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः । चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम् । तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः । तञ्च कृत्वा वशे देशमङ्गदस्य न्यवेशयत् । अङ्गदीया पुरी रम्याप्यङ्गदस्य निवेशिता । रमणीया सुगुप्ता च रामेणाक्लिष्टकर्म्मणा । चन्द्रकेतोश्च मल्लस्य मल्लभूम्यां निवेशिता । चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा । ततोरामः परां प्रीतिं लक्ष्मणो भरतस्तथा । ययुर्युद्धे दुराधर्षा अभिषेकञ्च चक्रिरे । अभिषिच्य कुमारौ द्वौ प्रस्थाप्य सुसमाहितौ । अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम् । अङ्गदञ्चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह । चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह” । [अमावास्यायाम् मेदि० ।

**चन्द्रक्षय** पु० क्षीयतेऽस्मिन् क्षि—आधारे अच् । ६त० ।

**चन्द्रगिरि** पु० चन्द्रकूटाख्ये पर्व्वतभेदे

**चन्द्रगुप्त** पु० मौर्य्यवंश्ये राजभेदे तद्राज्याभिषेककथा वृहत्कथायां विस्तरतो दृश्या । “नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति । तेषामभावे जगतीं मौर्य्या भोक्ष्यन्ति वै कलौ । स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति” भाग० १२।१।७। श्लो० । “द्विजः कश्चित् चाणक्य” श्रीधर० “ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये । भविष्य नन्दराज्यञ्च चाणक्योयान् हनिष्यतीति” स्कान्दपुराणेकथाकथनात् तत्राथता ।

**चन्द्रगृह** न० ६त० । कर्कराशौ । चन्द्रमन्दिरादयोऽप्यत्र

**चन्द्रगोल** पु० चन्द्रएव गोलः । गोलाकारे चन्द्रमण्डले

**चन्द्रगोलस्थ** पु० ब०व० । चन्द्रगोले तिष्ठन्ति स्था—क । चन्द्रलोकस्थेषु स्वधाभोजिषु पितृलोकेषु त्रिका० । “विधूर्द्ध्वभागे पितरोवसन्ति” सू०सि०उक्ते स्तेषा तथात्वम् ।

**चन्द्रगोलिका** स्त्री चन्द्रगोलः साधनत्वेनास्त्यस्य ठन् । ज्योत्स्नायां हेम० ।

**चन्द्रचञ्चल** पु० चन्द्र इव चञ्चलः । (खलिसा) १मत्स्यभेदे जटा० । (चाँदा) २मत्स्ये स्त्री शब्दर० ।

**चन्द्रचार** पु० चन्द्रस्य चारः गतिभेदः । चन्द्रमण्डलस्य राशिविशेषे गतौ तत्फलम् इन्दुशब्दे ६११पृ० उक्तम्

**चन्द्रचूड** पु० चन्द्रः चूडायाम् यस्य । चन्द्रशेखरे शिवे ।

**चन्द्रज** पु० चन्द्रात्जायते जन—ड । बुधे चन्द्रजातादयोऽप्यत्र । इन्दुजशब्दे ६९४पृ० दृश्यम् । “रोहादीनि भवान्त्यन्युपाश्रिते चन्द्रजे प्रजापीडा” वृ०स०७।१।

**चन्द्रतापन** पु० दानवभेदे । “श्वेतशीर्षश्चन्द्रहन्तुश्चन्द्रहा चन्द्रतापन” हरिवं० २४०अ० दानवोक्तौ

**चन्द्रदार** पु० ब० व० ६त० । अश्विन्यादिषु १दक्षकन्यासु चन्द्रकलत्रेषु २तन्नामनक्षत्रेषु च ।

**चन्द्रदेव** पु० भारतप्रसिद्धे कुरुदलस्थे नृपभेदे “प्रत्युद्ययुस्त्रिगर्त्तास्तम् (अर्जुनम्) इत्युपक्रमे” “सत्यसेनश्चन्द्रदेवो मित्रदेवः श्रुतञ्जय” “शत्रुञ्जयञ्च निहत्य चन्द्रदेवं तथाष्टभि” इति च भा० क० २७अ० ।

**चन्द्रद्युति** पु० चन्द्रस्य द्युतिरिव द्युतिरस्य । चन्दने

अथ क्षयमिते तस्मिन् सर्व्वास्ताः शङ्किताः स्त्रियः। पितरं शरणं प्राप्ताः क्षीयते नः पतिः पितः!। स चायं तेन यक्ष्माख्ये विना सुखमिरालता०। उवाच दक्षः सर्व्वा शापो मे नान्यथा भवेत्। मासमध्ये पक्षमेकं वर्द्धतां स क्रमेण वै। क्षयं क्रमेण प्राप्नोतु पक्षमेकं व्यवस्थया। एवं शापं वरश्चैव लेभे तस्य व्यवस्थया। तथैव राजते व्योम्नि क्षयवृद्धी दधद्विधुः”। ज्योतिषोक्ततत्कारणन्तु इन्दुशब्दे ९९२ पृ० दर्शितम्। २आह्लादजनकद्रव्यमात्रे त्रिका०। ३कर्पूरे ४स्वर्णे ५जले ६काम्पिल्ले पु० मेदि०। ७द्वीपभेदे शब्दमा०। ८विसर्गवर्णे तन्त्रशेत चदि—दीप्तौ रक्। ९कमनीये त्रि० १०मयूरपिच्छे मेचके हेमच०। ११मोथाउक्ताफले व्याडि। चन्त्यपदलोपे १२चन्द्रगुप्ते नृपे च। “क्रूरग्रह सकेतु चन्द्रमसम्पूर्णमण्डलमिदानीम्” मुद्रारा०। “चन्द्रं गता पद्मगुणान्न भुङ्क्ते” कुमा०। “वधूजनचन्द्रमचकार” माघः। “चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्” सा० द० तस्य शृङ्गाररसोद्दीपकत्वमुक्तम्। मणौ “चन्द्ररथः होता मनुष्य गृहपतिरनुष्टरथ” ऋ०।।१४।।२।।१३हीरके। चन्द्राधिष्ठातृके १४मृगशिरोनक्षत्रे १५एकाङ्के च।

चन्द्रक पु० चन्द्र इव कायति कै—क। मयूरपुच्छस्थे चन्द्राकारे १पदार्थे अमर। २नखे शब्दच० ३मत्स्यभेदे (चाँदा) राजनि०। “चन्द्रकस्तनभिष्यन्दी मधुरो बलवर्द्धन” राजनि०तद्गुणाउक्ताः। स्वार्थे क। ४चन्द्रशब्दार्थे जले पतितस्य तैलस्य चन्द्राकारे ५मण्डले च “या चन्द्रकैर्मदजलस्य महानदीनाम्” माघ। ६सितमरिचे म० राजनि० ७शिग्रुवीजे म० शब्दार्थचि० चन्द्रकोजातोऽस्य तारका० इतच्। चन्द्रकित जातचन्द्रके त्रि०।

चन्द्रकला स्त्री ६त०। चन्द्रमण्डलस्य षोडशभागैकभागे तासां नामानि कलाशब्दे १७८४पृ० दर्शितानि तिथिभेदे स्त्रीणां देहागभेदे स्थितानां तासां नामभेदाश्च काम शास्त्रे उक्ता यथा

“पूषा यशा सुमनसा रतिः प्राप्तिस्तथा धृतिः। ऋद्धिः सौम्या मरीचिश्च तथा चैवांशुमालिनी। अङ्गिरा शशिनी चेति छाया सम्पूर्णमण्डली। तुष्टिश्चैवामृता चेति कलाः सोमस्य षोडश”।

चन्द्रकवत् पु स्त्री चन्द्रकोऽस्त्यस्य मतुप् मस्य व। मयूरे “प्राडुद्रुवत् सपदि चन्द्रकवान् द्रुमाग्रात्” माघ। स्त्रियां ङीप्।

चन्द्रकाटुलि पु० मत्स्यभेदे हेमा० अ० ख० मूलं मृग्यम्।

चन्द्रकान्त पु० चन्द्र कान्तोऽभीष्टो यस्य। स्वनामख्याते १मणिभेदे तद्दर्शने हि तस्य जलस्रावात् तत्कान्तत्वम्। २कैरवे, ३श्रीखण्डचन्दने च न०। ४रात्रौ, ५ज्योत्स्नायां, स्त्री मेदि० ६चन्द्रघोषायां, चन्द्रपत्न्याञ्च स्त्री हेमच०। “चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम्” सुश्रु०। “शय शशाङ्ककिरणाहतचन्द्रकान्तः” “इहा तवामल मधुरिद चन्द्रकान्तानुसारि” अमरुश०। “चन्द्रकान्ताभिधा रौ तौ विराम स्वराष्टौ” वृ० र० टी० उक्ते प्रश्नदशाक्षरपादके ७छन्दोभेदे स्त्री। “दशमुखालस चन्द्रकेतुराजधान्यां स्त्री चन्द्रकेतुशब्दे दृश्यम्।

चन्द्रकान्ति न० चन्द्रस्येव कान्तिरस्य शुभ्रत्वात्। १रजते रूप्ये, ६त०। तद्गुणादि भावप्र० उक्तं यथा

“त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः। निरीक्षयामास शिवः क्रोधेन परिपूरितः। अग्निकणाः पतत्तस्यैकस्माद्विलोचनात्। ततोरुद्रः सकलवह्निश्चामर इव ज्वलन्। द्वितीयादपतन्नेत्राद्बिन्दुरश्रु वामकात्। तस्माद्रजतमुत्पन्नमुक्तकर्म्मसु योजयेत्। कृत्रिमञ्च भवेत्तद्धि वङ्गादिरससंयोगतः। रूप्यन्तु रजतं तारश्चन्द्रकान्तिः सितप्रभम्। गुरुस्निग्धं मृदु श्वेतं दाहे छेदे घनक्षमम्। वर्णाढ्यं चन्द्रवत् स्वच्छं रूप्यं नवगुणं शुभम्। कठिनं कृत्रिमं रूक्षं रक्तं पीतं दलं लघु। दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितम्। रूप्यं शीतं कषायाम्लं स्वादु पाकरसं सरम्। वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित्। प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम्। तारं शरीरस्य करोति तापं विड्बन्धं बलं यच्छति शुक्रनाशम्। वीर्य्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति ह्यशुद्धम्”। चन्द्रस्य २दीप्तौ [ स्त्रियां ङीप्।

चन्द्रकिन् पु० स्त्री चन्द्रकोऽस्त्यस्य इनि। मयूरे त्रिका०

चन्द्रकुण्ड पु न० ६त०। कामरूपस्थे चन्द्रकृते कुण्डभेदे चन्द्रकूटशब्दे दृश्यम्।

चन्द्रकूट पु०कामरूपस्थे पर्व्वतभेदे तत्कथा कालिका०८१अ० “पूर्व्वं वायुगिरे शैलश्चन्द्रकूट इति स्मृतः। त्रिकोणकारसहृयस्तदूर्द्ध्वे चन्द्रमण्डलम्। द्वितीयवर्णसादृशन्तु विन्दिन्दुश्यामसङ्गतम्। चन्द्रवीजमिति प्रोक्तं तेन चन्द्रं प्रपूजयेत्। अद्यापि प्रतिदर्शे तु पर्व्वतं तं निशापतिः। मुदाभूषीकरोत्येव दृश्यैरश्मिभिः

यदुक्तं ब्रह्मवाक्यात् सर्व्वे ते त्रिदिवौकसः। तदा शीता जलं चन्द्रस्नानयोगाच्च शाश्वतम्। भूत्वा निपतितं तस्मिन् हृद्धोह्वितसंज्ञके। तद्दिव्यं तदा तोयम् तस्मिन् सरसि निर्म्मलम्। तद्दर्शं स्वयं ब्रह्मा विष्टब्धं चाशु तज्जलम्। तद्दर्शनाज्जलात्तस्मादुत्थिता कन्यकोत्तमा। चन्द्रभागेति तन्नाम विधिश्चक्रे स्वयं ततः। भार्य्यार्थं सागरस्तान्तु जग्राह ब्रह्मसम्मते। तत्रैवाधिष्ठितं तोयं गदाग्रेण निशापति। निर्भिद्य पश्चिमे पार्श्वे गिरिं तत्तु प्रवाहते। तत्स्थाम्बुजल श्रिष्टा हृद्धोह्वितसंज्ञकम्। कासारं सागरं जातं चन्द्रभागा नदी तु सा। सागरोऽपि तदा भार्य्यां चन्द्रभागां महानदीम्। तेन तोयप्रवाहेण निनाय भवनं स्वकम्। एवं तस्मिन् समुत्पन्ना चन्द्रभागाख्या नदी। चन्द्रभागे महाशैले गुणैर्गङ्गासमा सदा”।

**चन्द्रभूति** न० चन्द्रस्येव भूतिः कान्तिरस्य। रजते राजनि० तस्य चन्द्रतुल्यकान्तिमत्त्वात् तथात्वम्। [ हेमच०।

**चन्द्रमणि** पु० चन्द्रप्रियो मणिः शाक० त०। चन्द्रकान्तमणौ

**चन्द्रमण्डल** न० ६त०। गोलाकारे बिम्बे चन्द्रस्य तन्मानादि इन्दुशब्दे ९१२ पृ० दृश्यम्।

**चन्द्रमल्ली** स्त्री चन्द्र इव मल्ली। अष्टापद्यां शब्दचि०।

**चन्द्रमस्** पु० चन्द्रमाह्लादं मिमीते मि–असुन् मादेशः चन्द्रं कर्पूरं माति तुलयति मा–असुन् वा। १चन्द्रे २कर्पूरे च अमरः। “सितासितौ चन्द्रमसोन कश्चित्” ज्यो०त०। “राहुर्वै हस्ती भूत्वा चन्द्रमसं गृह्णाति” श्रुतिः। “क्रूरग्रहः सकेतुश्चन्द्रमसं पूर्णमण्डलमिदानीम्” मुद्रारा०। तस्येदमित्यण् चान्द्रमस तत्सम्बन्धिनि “तिथिश्चान्द्रमसं दिनम्” सू० सि०। स्त्रियां ङीप्। “पद्माश्रिता चान्द्रमसीमभिख्याम्” कुमा०।

**चन्द्रमा** स्त्री चन्द्रेण मीयते मा–घञर्थे क। नदीभेदे। “कौशिकी निम्नगा शोणा बाहुदामथ चन्द्रमाम्” भा० भी० ९अ० भारतवर्षे नदीकथने।

**चन्द्रमौलि** पु० चन्द्रो मौलावस्य। महादेवे इन्दुमौलिशब्दे ९१६ पृ० दृश्यम्। “चन्द्रमौलिं सदाशिव” विष्णुधर्मो०।

**चन्द्ररसा** स्त्री चन्द्र इवाह्लादको रसोऽस्याः। भारतवर्षस्थे नदीभेदे। “चन्द्ररसा ताम्रपर्णीत्यादि” भाग०५।१९।१८। मद्युक्तौ “तत्र चन्द्ररसा ताम्रपर्ण्यादय” भाग०४।२।११।

**चन्द्ररेखा** स्त्री ६त०। चन्द्रस्य मण्डलस्थकरेखाभेदे २अप्सरोभेदे च “चन्द्ररेखा तिलोत्तमा” काशीख०८अ०। ३वाकुचीलतायाम् राजनि०। ४चन्द्रशेखरस्य जायां चन्द्रशेखरशब्दे दृश्यम्। “नसरयुगलैश्चन्द्ररेखर्त्तुलोकैः” छ० र० टी० उक्ते ५छन्दोभेदे च

**चन्द्ररेणु** पु० चन्द्र आह्लादको रेणुरत्र। काव्यचौरे त्रिका०।

**चन्द्रला** स्त्री कर्णाटदेशख्याते १देवीभेदे २तत्स्थाने च शब्दार्थचि०

**चन्द्रलेखा** स्त्री चन्द्रं तत्कान्तिं लिखति लिख–अण् उप० स०। (हाकुच्) ख्याते १लताभेदे राजनि०। ६त०। २चन्द्ररेखायाम्। “म्रौ म्यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा” छन्दोम० उक्ते पञ्चदशाक्षरपादके ३छन्दोभेदे च।

**चन्द्रलोहक** चन्द्र इव शुभ्रं लोहकं धातुद्रव्यम्। रजतधातौ राजनि०।

**चन्द्रवंश** पु० ६त०। चन्द्रस्य सन्तानादिपरम्परायां स च हरिवं २५अध्यायादौ उक्तः। तत्र भवः यत्। चन्द्रवंश्य तद्वंशोद्भवे त्रि०। [ द्वादशाक्षरपादके छन्दोभेदे।

**चन्द्रवर्त्मन्** न० चन्द्रवर्त्म निगदन्ति रनभसैः छ० र० उक्ते

**चन्द्रवल्लरी** स्त्री ६त०। सोमलतायाम् भरतः।

**चन्द्रवल्ली** स्त्री चन्द्र इव वल्ली सुधातुल्यमधुत्वादित्वात्। १माधवीलतायाम् राजनि०। २सोमलतायां च।

**चन्द्रविन्दु** पु० चन्द्रः अर्द्धचन्द्रयुक्तो विन्दुः। अर्द्धचन्द्राकारोपरिगतविन्दुरूपसानुनासिकरूपे वर्णभेदे।

**चन्द्रविहङ्गम** पुंस्त्री चन्द्र इव श्वेताङ्गः शुभ्रः विहङ्गमः। (शङ्खचिल) शङ्खिनि खगे त्रिका०। स्त्रियां जातित्वात् ङीप्

**चन्द्रव्रत** न० चन्द्रस्य चन्द्रलोकप्राप्त्यै व्रतम् नियमः। चान्द्रायणसंज्ञके व्रते। चान्द्रायणशब्दे दृश्यम्।

**चन्द्रशाला** स्त्री चन्द्रः शालेवाधारो यस्याः। १ज्योत्स्नायाम् त्रिका०। चन्द्र इव शाला उच्चस्थितत्वात्। २प्रासादोपरिस्थे गृहे (चिलेघर) हारा०। “शियकृत पुष्पकचन्द्रशालाः” रघु। “गृहराजः षोडशकस्त्रिचन्द्रशाला भवेद्वलभी” “बहुरुचिरचन्द्रशाला षड्विंशपञ्चभौमश्च” वृ० स० ५६अ०। ततः स्वार्थे क। चन्द्रशालिका १घट्यां त्रिका०।

**चन्द्रशिला** स्त्री चन्द्रप्रिया शिला शाक०मध्यपद०स०। चन्द्रकान्ते प्रस्तरभेदे। “महाहिता चन्द्रशिलेव तूर्णम्” भट्टिः।

**चन्द्रशु(सू)र** पु० चन्द्रे तज्जे शीतले रोगे शु(सू)र इव। चादसूर) (हालौ) इति च ख्याते वृक्षभेदे तत्फले न०” भावप्र०। “चन्द्रशु(सू)रं हितं हिक्कावातश्लेष्मातिसारिणाम्”। तद्गुणा उक्ताः।

भावप्र० चन्दनशब्दे दृश्यम् ६त०। २चन्द्रस्य प्रकाशे स्त्री

चन्द्रनाभ पु० चन्द्रोनाभौ यस्य सञ्ज्ञायाम् अच्। भारतप्रसिद्धे दानवभेदे। "सूर्य्यनाभश्च विक्रान्तश्चन्द्रनाभश्च भारत!" हरिवं० २२४अ० दानवोक्तौ।

चन्द्रनामन् पु० चन्द्रस्य नामान्येव नामान्यस्य। कर्पूरे शब्दार्थचि०। चन्द्रसञ्ज्ञचन्द्राह्वयादयोऽप्यत्र

चन्द्रपाद पु० ६त०। चन्द्रकिरणे। "नियमितपरिखेदा तच्छिरश्चन्द्रपादैः" कुमा०। चन्द्रचरणादयोऽप्यत्र।

चन्द्रपुत्र पु० ६त०। बुधे चन्द्रनन्दनादयोऽप्यत्र।

चन्द्रपुष्पा स्त्री चन्द्र इव श्वेत पुष्पमस्याः। श्वेतकण्टकार्य्याम् राजनि०।

चन्द्रप्रभ पु० चन्द्रस्य प्रभेव प्रभाऽस्य। १जैनभेदे हेम०। "कर्मिरिपुदहनव्योषत्रिफलामरदारुचव्यभूनिम्बम्। मागधिमूलं मुस्तं सशटिवचामाक्षिकञ्चैव। लवणक्षारनिशायुगकुस्तुम्बुरुगजकरणातिविषं। कर्षांशकान्येतानि कुर्य्यात् पलाष्टकञ्चाश्मजतोर्विदध्यात्। निष्पलशुद्धस्य पुरस्य धीमान् पलद्वयं लौहरजस्तथैव। सिताचतुष्कं पलमत्र वंशगानिकुम्भकुम्भानिशुन्ति शुक्रम्। चन्द्रप्रभेयं गुटिका प्रयोज्या पाशांसि निर्यातयते प्रचेव। भगन्दरं पाण्डुरकामलाश्च निर्नष्ट वह्ने कुरुते च दीप्तिम्। हन्त्यामयान् पित्तकफानिलोत्थान् नाडीगते मर्म्मगतव्रणे च। घन्त्रार्बुदे विद्रधिराजयक्ष्मणोर्मेहे भगाख्ये प्रदरे च योज्या। शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे शुक्रप्रवाहेऽप्युदरामये च। भक्षस्य पूर्व्वं सततं प्रयोज्या तक्रानुपानं त्वथ मस्तुपानम्। धात्रीरसो वाकुलजो रसो वा पयोऽथ वा शीतजलानुपानम्। बलेन नागस्तुरगोजवेन दृष्ट्या सुपर्णः श्रवणे वराहः। बलीपलितनिर्मुक्तो वृद्धोऽपि तरुणायते। न पानभोजने परिहार्य्यमस्ति न शीतवातातपमैथुनेषु। शम्भुं समभ्यर्च्य कृतप्रसादेनाप्ता वटी चन्द्रमसः प्रसादादिति" सुखबोधोक्ते गुटिकाभेदे स्त्री चक्रदत्तोक्ते ३वर्त्तिभेदे स्त्री तत्प्रकारो यथा "त्रिफलाकुक्कुटाण्डत्वक्कासीसमयसोरजः। नीलोत्पलं विडङ्गानि फेनश्च सरितां पतेः। आजेन पयसा पिष्ट्वा भावयेत्ताम्रभाजने। सप्तरात्रं स्थितं भूयः पिष्टा क्षीरेण वर्त्तयेत्। एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः। चन्दनत्रिफलापूगपलाशतरुमूलितैः। जलपिष्टैरियं वर्त्तिः सर्व्वतिमिरापहा। निशाद्वयाभयामांसीकुष्ठकृष्णाविचूर्णिता। सर्व्वनेत्रामयान् हन्यादेतत् सौगतमञ्जनम्। व्योषोत्पलाभयाकुष्ठतार्क्ष्यैर्वर्त्तिः कृता हरेत्॥ अर्बुदं पटलं काचं तिमिराश्रुस्रुतिम्। सूत्रपत्र त्रिफलासावकसैन्धवशालमनं पिष्टा। क्लेदोपदेहकण्डूघ्नी वर्त्तिं श्रेष्ठा कफापहा। एकगुणा मागधिका द्विगुणा च हरीतकी। सलिलापिष्टा वर्त्तिरियं नयनसुखाख्यतिमिरपटलकाचास्रहरी। अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका। विभीतकस्य मध्यन्तु शङ्खनाभिर्मनःशिला। एतानि समभागानि अजाक्षीरेण पेषयेत्। छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत्। अर्बुदं पटलं काचं तिमिरं रक्तराजिकाम्। अधिमांसं मलश्चैव यश्च रात्रौ न पश्यति। वर्त्तिश्चन्द्रप्रभा नाम जाताध्रमपि शोधयेत्।"

चन्द्रबाला स्त्री चन्द्रस्य कर्पूरस्य बालेव तुल्यगन्धित्वात्। १स्थूलैलायाम् राजनि०। अत्रास्यवमध्य रत्नमं। २औषधभेदे ६त०। ३ज्योत्स्नायां ४चन्द्रपत्न्याञ्च।

चन्द्रभस्मन् न० चन्द्र इव शुभ्रं भस्म। कर्पूरे शब्दार्थचि०।

चन्द्रभाग पु० चन्द्रस्य भागोऽत्र। १पर्व्वतभेदे तत्र जातायां २नद्यां स्त्री। तयो कथा कालि०पु० २०।२२अ० यथा "ऋषय ऊचुः। "चन्द्रभागा कथं विप्र लोत्पन्ना महागिरौ। कीदृक्सरश्चाद्रिमेन्द्र! दृष्लोहितसंज्ञकम्। कथं स पर्व्वतश्रेष्ठश्चन्द्रभागाह्वयोऽभवत्। चन्द्रभागाह्वया कथं नदी जाता स्वयोदका। एतन्नः श्रोतुमाख्यानं जायते कौतुकं महत्। माहात्म्यं चन्द्रभागायाः कासारस्य गिरेस्तदा। मार्कण्डेय उवाच। श्रूयतां चन्द्रभागाया उत्पत्तिर्द्विज सत्तमाः॥ शुभाभिश्चन्द्रभागस्य महात्म्यनाम कारणम्। हिमवद्गिरिसंसक्तस्तत्पर्वतोत्तमस्तु त। योजनत्रिंशतोच्छ्राय कुन्देन्दुधवलोगिरि। तस्मिन् गिरौ पुरा वेधाश्चन्द्रं शुभ्रं सुधानिधिम्। विभज्य कल्पयामास देवार्थं स पितामहः। पितृपक्षे तथा तस्य तिथिवृद्धिक्षयात्मकम्। कल्पयामास जगतां हिताय कमलासनः। विभक्तश्चन्द्रमा यस्मात् तस्मिन् पर्व्वतसत्तमे। अतो देवाश्चन्द्रभाग नाम्ना चक्रुः पुरा गिरिम्" कालि० पु० २०।२२अ०। "मार्कण्डेय उवाच। "यत्र देवकला भूता वासौ तत्र महागिरे। तत्र जाता देवनदी सीताख्या स्वनामिके॥ स्नापयित्वा यदा चन्द्रं सीतातोयैर्मनोहरैः। चन्द्र

पयश्चक्रायात् सर्व्वे ते त्रिदिवौकसः। तदा सीता जल चन्द्रस्नानयोगाश्च सम्भृतम्। भूत्वा निपतितं तस्मिन् हृद्गलोहितसञ्ज्ञके। तद्दिव्य तदा तोयम् तस्मिन् सरसि निर्म्मलम्। तद्दर्शं स्वय ब्रह्मा विस्तृत स्वाशु मज्जलम्। तद्दर्शनाज्जलात्तस्मादुत्थिता कन्यकोत्तमा। चन्द्रभागेति तन्नाम विधिसक्तं स्वयं ततः। भार्य्यार्थे सागरस्तान्तु जयाह ब्रह्मसम्मते। तत्रैवाधिष्ठितं तोये गदाग्रेण निशापतिः। निर्भिद्य पश्चिमे पार्श्वे गिरिं तत्तु प्रवाहते। तत्पाश्चात्तजल भित्त्वा हृद्गलोहितसंज्ञकम्। कासार सागर जात चन्द्रभागा नदी तु सा। सागरोऽपि तदा भार्य्यां चन्द्रभागां महानदीम्। तेन तोयप्रवाहेण निनाय भवनं स्वकम्। एवं तस्मिन् समुत्पन्ना चन्द्रभागाख्या नदी। चन्द्रभागे महाशैवे पुण्यैर्गङ्गासमा सदा”।

चन्द्रभूति न० चन्द्रस्येव भूति कान्तिरस्य। रजते राजनि० तस्य चन्द्रतुल्यकान्तिमत्त्वात् तथात्वम्। [ हेमच०।

चन्द्रमणि पु० चन्द्रप्रियोमणिः शाक० त०। चन्द्रकान्तमणौ

चन्द्रमण्डल न० ६त०। गोलाकारे बिम्बे चन्द्रस्य तन्मानादि इन्दुशब्दे ९१२ पृ० दृश्यम्।

चन्द्रमल्ली स्त्री चन्द्र इव मल्ली। अष्टापद्या शब्दचि०।

चन्द्रमस् पु० चन्द्रमाह्लादं मिमीते मि—असुन् मादेशः चन्द्र कर्पूरं माति तुलयति मा—असुन् वा। १चन्द्रे २कर्पूरे च अमरः। “सितासितौ चन्द्रमसोन कश्चित्”ज्यो०त०। “राहुर्वै हस्ती भूत्वा चन्द्रमसं ग्लह्णाति”श्रुति।“क्रूरग्रहः सकेतुश्चन्द्रमसं पूर्णमण्डलमिदानीम्” मुद्रारा०। तस्येदमित्यण् चान्द्रमस तत्सम्बन्धिनि “तिथिश्चान्द्रमस दिनम्” सू० सि०। स्त्रियां ङीप्। “पश्चान्विता चान्द्रमसीमभिख्याम्” कुमा०।

चन्द्रमा स्त्री चन्द्रेण मीयते मा—घञर्थे क। नदीभेदे। “कौशिकी निम्नगा शोण बाहुदामथ चन्द्रमाम्” भा० भी० ९अ० भारतवर्ष नदीकथने।

चन्द्रमौलि पु० चन्द्रो मौलावस्य। महादेवे इन्दुमौलिशब्दे ९१६ पृ० दृश्यम्। “चन्द्रमौलिः सदाशिवः” विष्णुधर्मो०।

चन्द्ररसा स्त्री चन्द्र इवाह्लादको रसोऽस्याः। भारतवर्षस्थे नदीभेदे। “चन्द्ररसा ताम्रपर्णीत्यादि” भाग०५।१८।१८। नद्युक्तौ“तत्र चन्द्ररसा ताम्रपर्ण्यादय ” भाग०४।२।२१।

चन्द्ररेखा स्त्री ६त०। चन्द्रस्य मण्डलस्थपञ्चरेखाभेदे २अप्सरोभेदे च “चन्द्ररेखा तिलोत्तमा”काशीख०८अ०। ३वाकुचीलतायाम् राजनि०। ४चन्द्रशेखरसहजायां चन्द्रशेखरशब्दे दृश्यम्। “नसरयुगलैश्चन्द्ररेखत्तुलोकै” वृ० र० टी० उक्ते ५छन्दोभेदे च

चन्द्ररेणु पु० चन्द्र आह्लादकोरेणुरस्य। काव्यचौरे त्रिका०।

चन्द्रला स्त्री कर्णाटदेशख्याते १देवीभेदे २तत्स्थाने च शब्दार्थचि०

चन्द्रलेखा स्त्री चन्द्र तत्कान्तिं लिखति लिख—अण् उप० स०। (हाकुच्) ख्याते १लताभेदे राजनि०। ६त०। २चन्द्ररेखायाम्। “म्नौ म्यौ चेद्भवेता सप्ताष्टकैश्चन्द्रलेखा”छन्दोम० उक्ते पञ्चदशाक्षरपादके ३छन्दोभेदे च।

चन्द्रलोहक चन्द्र इव शुभ्रं लोहक धातुद्रव्यम्। रजतधातौ राजनि०।

चन्द्रवंश पु० ६त०। चन्द्रस्य सन्तानादिपरम्परायां स च हरिव २५अध्यायादौ उक्तः। तत्र भव यत्। चन्द्रवंश्य तद् वंशोद्भवे त्रि०। [द्वादशाक्षरपादके छन्दोभेदे।

चन्द्रवर्त्मन् न० चन्द्रवर्त्म निगदन्ति रनभसै वृ० र० उक्ते

चन्द्रवल्लरी स्त्री ६त०। सोमलतायाम् भरत।

चन्द्रवल्ली स्त्री चन्द्र इव वल्ली सुधातुल्यमधुरस्राविताम्। १माधवीलतायाम् राजनि०। २सोमलतायां च।

चन्द्रविन्दु पु० चन्द्र अर्द्धचन्द्रयुक्तोविन्दु। अर्द्धचन्द्राकारोपरिगतबिन्दुरूपसानुनासिकशब्दमे वर्णभेदे।

चन्द्रविहङ्गम पुंस्त्री चन्द्र इव अङ्गे शुभ्र विहङ्गम। (शङ्खचिल)शङ्खिनि खगे त्रिका०। स्त्रियां जातित्वात् ङीष्

चन्द्रव्रत न० चन्द्रस्य चन्द्रलोकप्राप्तये व्रतम् नियम। चान्द्रायणसंज्ञके व्रते। चान्द्रायणशब्दे दृश्यम्।

चन्द्रशाला स्त्री चन्द्र शालेयाधारो यस्याः। १ज्योत्स्नायाम् त्रिका०। चन्द्र इव शाला उच्चस्थितत्वात्। २प्रासादोपरिस्थे गृहे (चिलेघर) हारा०। “वियद्गत पुष्पकचन्द्रशालाः” रघु। “टहराजः षोडशकस्त्रिचन्द्रशाला भवेद्दलभी” “वस्तुरुचिरचन्द्रशाला षड्व पञ्चभौमस्य” वृ० स० ५६अ०। तत स्वार्थे क। चन्द्रशालिका १अट्टाल्या त्रिका०।

चन्द्रशिला स्त्री चन्द्रप्रिया शिला शाक०मध्यपद०स०। चन्द्रकान्ते प्रस्तरभेदे।“प्रह्लादिता चन्द्रशिलेव तूर्णम्”भट्टि।

चन्द्रशू(सू)र पु० चन्द्रे तज्जे सैंचिके रोगे शू(सू)र इव। चन्द्रसूर) (हालौ) इति च ख्याते हृक्षभेदे नखफले न०” भावप्र०। “चन्द्रशू(सू)रं हित हिक्कावातश्लेष्मातिसारिणाम्”। तद्गुणा उक्ताः

चन्द्रशेखर पु० चन्द्र चन्द्रकला शेखरेऽस्य। १महादेवे इन्द्रुभटच्छन्दे ८३५ पृ० दृश्यम्। "रहस्युपालभ्यत चन्द्रशेखर" कुमा०। चन्द्रयुक्त शेखरोऽस्य। २पर्वत भेदे। ३पौष्यनृपपुत्रे करवीरपुराधीशे नृपभेदे कालिका पु० ४६ अ० तत्कथा यथा

"तत पुत्रार्थिनं भूपं प्रसन्नो वृषभध्वज। प्रह्लादत्तफलं हस्ते प्रददौ तत्राब्रवीत् ह। ईश्वर उवाच। इदं फल मह्लादत्त विभज्य नृपते। त्रिधा। भोजयैता स्वजाया स्त्र प्रहृष्ट सुस्नाताः। तत प्रहृत्ते भवत एतासु ऋतुसङ्गमे॥ आधास्यन्ति च गर्भांस्तु भार्य्यास्ते युगपन्नृप॥ काले प्राप्ते च युगपत् प्रसवो योषितां तव। भविष्यति नृपश्रेष्ठ। तदेव त्वं करिष्यसि। एकस्या उदरे शीर्षं भार्य्यायास्ते भविष्यति। अपरस्यास्तथा कुक्षौ मध्यभागो भविष्यति। अधोभागस्तु यो भाग सोऽपरस्यां भविष्यति। ततः खण्डत्रयं भूप। यथास्थान पृथक् पृथक्। योजयिष्यसि पश्चात्ते पुत्र एको भविष्यति। तस्य शीर्षे चन्द्ररेखा सहजा सम्भविष्यति। तेनैव नाम्ना स ख्याति गमिष्यति च भूपते॥" इत्युपक्रमे "इत्युक्त्वा स महादेवस्तासां गर्भान् स्वयं तदा। सस्पृशुः जाह्नवीतोयमात्मन शिरसो न्यधात्। ततःफले स्वयं देव प्रविवेश वृषध्वजः। तत्क्षणात् तत्फलं भूत त्रिभाग स्वयमेव ह। पौष्यस्तत्फलमादाय मुदितः सह भार्य्यया। प्रययौ मन्दिरं हृष्टोऽथानुप्राप्य वृषध्वजम्। तत समुचिते काले प्राप्ते ताभिस्तु भक्षितम्। तत् फलं नृपशार्दूलात् गर्भांश्चाप्याहिता शुभा। सम्पूर्णे गर्भकाले तु गर्भेभ्य समजायत। खण्डत्रयं पृथक् राजा यथा भर्गेण भाषितम्। तत्र खण्डत्रय पौष्यो यथास्थान नियोज्य च। एकं पिण्डं चकाराशु तत पुत्रो व्यजायत। तस्य शीर्षे तदा राजन् शङ्खेन्दुकला शुभा। विरराज यथा स्वच्छा शरत्काले कला विधो। स सर्वलक्षणोपेत पीनोरस्क सुनासिकम्। सिंहग्रीव विशालाक्षं दीर्घायतभुज तदा। दृष्ट्वा पौष्योऽथ भार्य्याभिस्तिसृभि सह संमुदम्। लेभे दरिद्र सत्कोष प्राप्येव विपुल तत। तस्य नामाकरोद्राजा ब्राह्मणैः स्वैः पुरोहितैः। चन्द्रशेखर इत्येव कान्त्या चन्द्र इवा सम। ववृधे स महाभागः प्रत्यह चात्म रोच। कलाभिरिव तेजस्वी शरदीव निशाकरः। इदं त्रिस्त्र्यामम्भसां गर्भे आतो यतोहर। पुत्रस्त्र त्र्यकनामाऽ भूत् प्रथितो लोकदेवयो" इत्युपक्रमे "सम्यां क्षितिं वशे चक्रेऽमात्यैः स चन्द्रशेखर। सार्वभौमो नृपो भूत्वा राजभि परिषेवित। अमरैरिव देवेन्द्रो विजहार श्रिया युतः। एव पौष्यसुतो भूत्वा त्र्यम्बक प्राप्य निर्वृतिम्। ब्रह्मावर्त्ताह्वये रम्ये करवीराह्वये पुरे। दृषद्वतीनदीतीरे राजा भूत्वा सुमोद ह"। "जनविंशतिसङ्ख्याद्भिः सिद्धिदश्चन्द्रशेखरः। कथित. केन्द्रके तास्ते भवेत् शृङ्गारयोरयो" सगी० दा० उक्ते ४मुद्रकभेदे। ५चट्टलदेशस्थमहापीठे ६तत्रस्थे भैरवभेदे "चट्टले दक्षबाहुर्मे भैरवश्चन्द्रशेखर। व्यक्तरूपा भगवती भवानी तत्र देवता"। "विशेषत कलियुगे वसामि चन्द्रशेखरे" तन्त्रचूडामणि। [स्त्री गङ्गच०।

चन्द्रसम्भव पु० चन्द्रः सम्भवोऽस्य। १बुधे। २सुक्ष्मैलायाम्

चन्द्रसेन पु० चन्द्र। आह्लादिका सेनाऽस्य। भारतप्रसिद्धे समुद्रसेनपुत्रे राजभेदे "समुद्रसेनपुत्रञ्च चन्द्रसेन प्रता. पवान्" भा० आ० १८६अ०। "जघान स (द्रोणि) द्रुपदस्य चन्द्रसेनञ्च मानिनम्" भा० द्रो० १५६अ०। "समुद्रसेनं निर्जित्य चन्द्रसेनञ्च पार्थिवम्" भा० स० २८अ०। भीमप्राचीविजये।

चन्द्रहन् पु० चन्द्र हतवान् हन—क्विप्। १दानवभेदे राहौ "एकादशश्चन्द्रहा राहु संहारो नृदुरुस्वनः" हरिव० ४२अ०। श्वेतयोर्चन्द्रहन्तुश्चन्द्रहा चन्द्रतापनः २४ क०।

चन्द्रहनु पु० चन्द्र इव हनुरस्य। दानवभेदे चन्द्रहन् शब्दे उदा०।

चन्द्रहन्तृ पु० चन्द्र हन्ति हन—तृच् ६त०। असुरभेदे भारतयुद्धकाले सएव शुनकन्पक्रमेण प्रादुर्भूत। यथाह भा० आ० सम्भ० ६७अ०। "चन्द्रहन्तेति यस्तेषां कीर्त्तित प्रवरोऽसुर। शुनकोनाम राजर्षिः स बभूव नराधिप" "चन्द्रहन्ता कोपहन्ता कोपवञ्च न एव च" हरिव० ४२अ०। दानवकथने

चन्द्रहास पु० चन्द्रस्येव हास प्रभाऽस्य, चन्द्र हसति स्मितत्वात् हस—अण् वा। १खड्गे २रावणखड्गे च मेदि०। ३रौप्ये भ०राजनि०। ४गुडूच्यां स्त्री राजनि०।

चन्द्रा स्त्री चदि—आह्लादे रक्। १एलायां २विताने चन्द्रातपे च शब्दरत्ना० ३गुडूच्यां शब्दार्थचि०

चन्द्रांशु पु० चन्द्रस्यांशुरिवाह्लादकोऽ शुरस्य। १विष्णौ परमेश्वरे "अर्कः सदाचरोमन्त्रश्चन्द्रांशुर्भास्करद्युतिः" विष्णु स०। "संसारतापतिग्मांशुतापतापितचेतसां च

न्द्रांशुरिवाह्लादकत्वात्” भा० । ६त० । २चन्द्रस्य कि रणे च ।

**चन्द्रातप** पु० चन्द्रस्य आतो गमनं ततः पाति पा–क । (चाँदोया) १विताने चन्द्रस्य आतप इव किरण । २ज्योत्स्नायाम् हेम० । “चन्द्रातपमिव रसतालमेतम्” काद० । [तनयादयोऽप्यत्र ।

**चन्द्रात्मज** पु० ६त० । बुधे इन्दुजशब्दे दृश्यम् । चन्द्र-

**चन्द्रानन** पु० चन्द्र इवाननमस्य । कार्त्तिकेये “असोमस्त्वमसो रौद्र शिवचन्द्राननस्तथा” भा० व० २११ अ० । कार्त्तिकेयनामोक्तौ । २चन्द्रतुल्यवदने त्रि० ।

**चन्द्रार्द्ध** पु० ६त० । चन्द्रस्य कलाष्टमे भागे तुल्यभागार्द्धपरत्वे अर्द्धचन्द्र इत्येव स्यात् । “भुजासक्तेन शुशुभे गजदन्तेन केशवः । चन्द्रार्द्धबिम्बसंसक्तो यथैकशिखरो गिरिः” हरिव० ८७अ० । “मोहयस्यम्बुजाक्षीहन्त चन्द्रार्द्धचूडे । प्रभवति स महाघोरपापापसरे ।” श्यामास्तव० ।

**चन्द्रालोक** पु० पीयूषवर्षकविकृते अलङ्कारप्रबन्धभेदे । “चन्द्रालोकममुं स्वयं वितनुते पीयूषवर्षः कविः” इति इति तदारम्भपद्यम् ।

**चन्द्रावली** स्त्री वृन्दावनस्थे गोपीभेदे । “राधाचन्द्रावलीमुख्या प्रोक्ता नित्यं प्रिया व्रजे । कृष्णवन्नित्यसौन्दर्य्यवैदग्ध्यादिगुणाश्रया” उज्ज्वलमणिः । [ राजनि० ।

**चन्द्रास्पदा** स्त्री चन्द्र आस्पदं यस्याः । कर्कटशृङ्ग्याम् ।

**चन्द्रिका** स्त्री चन्द्रोऽस्त्यस्याः प्राशस्त्येन ठन् चदि–दीप्तौ रक् ततः स्वार्थे क वा । १ज्योत्स्नायाम् अमरः । २स्थूलैलायां(चाँदा)। ३मत्स्यभेदे ४चन्द्रभागानद्याञ्च शब्दर० । ५कर्णस्फोटालतायां ६मल्लिकायां० । ७श्वेतकण्टकार्य्यां ८मेथिकायां ९स्थूलैलायां राजनि० । १०चन्द्रसुरे भावप्र० । “मेघमुक्तविशदा स चन्द्रिकाम्” रघु० । “नवचन्द्रिकाकुसुमकीर्णतम” माघ । “न कस्य कुरुते चिरभ्रमचन्द्रिका” सा० द० । चन्द्रि चन्द्रयुक्तं कं शिरोऽस्य ११शिवे पु० । “चन्द्रिकानुप्रभावेन कृता दत्तकचन्द्रिका” १२ज्योत्स्नाया इव आह्लादिकायां स्त्रियां स्त्री स्मृतिचन्द्रिका अलङ्कारचन्द्रिका इत्यादि ।

**चन्द्रिकाद्राव** पु० चन्द्रिकया द्रावो निष्यन्दो यस्य । चन्द्रकान्तमणौ राजनि० ।

**चन्द्रिकापायिन्** पु स्त्री चन्द्रिका पिबति पा–णिनि । चकोरपक्षिणि शब्दार्थचि० स्त्रियां ङीप् ।

**चन्द्रिकाम्बुज** न० चन्द्रिकेव शुभ्रमम्बुजम् । सितोत्पले राजनि० ।

**चन्द्रिन्** त्रि० चन्द्रोऽस्त्यस्य इनि । १चन्द्रयुक्ते “चन्द्रिकानुप्रभावेण कृता दत्तकचन्द्रिका” २सुवर्णयुक्ते च “चन्द्री यजति प्रचेता” यजु० २०।३७। “चन्द्री” सुवर्णमय” वेददीप । [३माकन्दे च मेदि० ।

**चन्द्रिल** पु० चन्द्र+मा० अस्त्यर्थे इलच् । १शिवे । २नापिते

**चन्द्री** स्त्री चदि–रक् गौरा० ङीष् । वाकुच्याम् राजनि० ।

**चन्द्रेश्वर** पु० चन्द्रसेविते काशीस्थे शिवमूर्त्तिभेदे चन्द्रशब्दे दृश्यम् । चन्द्रेशोऽप्यत्र लिङ्गपरत्वे न०

**चन्द्रेष्टा** स्त्री चन्द्र इष्टोयस्याः निशायाः वा परनिपातः । उत्पलिन्याम् राजनि० ।

**चन्द्रोदकुण्ड** पु० चन्द्रकृतमुदक यत्र वा उदादेशः कर्म० । काशीस्थे कुण्डरूपे तीर्थभेदे “तथा चन्द्रोदकुण्डे च श्राद्धात् यान्ति पूर्व्वजा” काशीख० १४ अ० ।

**चन्द्रोदय** पु० चन्द्रस्योदयः । विधोः प्राथमिकदर्शनयोग्यस्थानेषु १प्रकाशे दिनेषु तिथिखण्डभेदस्थित्या तन्निरूपणं हरिभक्तिविलासे १६ वि० यथा

“प्रतिपद्यापराह्णिकत्रिमुहूर्त्तव्यापिन्यां द्वितीयायां चन्द्रदर्शनं सम्भाव्यते । तदुक्तमन्त्राधानविषये शङ्खशातातपेन । “द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी । अन्त्राधानं चतुर्दश्यां परतः सोमदर्शनादिति अपराह्णश्च पञ्चधा विभक्तस्याह्नश्चतुर्थो भागः । ततश्च यत्र प्रतिपदि अपराह्णे त्रिमुहूर्त्तव्यापिनी द्वितीया तत्र चन्द्रदर्शनसम्भावनमिति”

सुखबोधोक्ते २औषधभेदे तत्पाकप्रकारो यथा सुखबोधे “पल मृदुस्वर्णदलं रसेन्द्र पलाष्टकं षोडश गन्धकस्य । शोणैः सुकार्पासभवैः प्रसूनैः सर्व्वं विमर्द्याथ कुमारिकाद्भिः । तत्काचकुम्भे निहितं सुगाढ़े मृत्कर्पटै सद्दिवसत्रयञ्च । पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततो रजः पल्लवरागरम्यम् । निगद्य चैतस्य पल पलानि चत्वारि कर्पूररजस्तथैव । जातीफलं शोषणमिन्दुपुष्पं कस्तूरिकाया इह शाण एकः । चन्द्रोदयोऽयं कथितस्तु माषो भुक्तोऽहिवल्लीदलमध्यवर्त्ती ।” मदोन्मदानां प्रमदाशतानां गर्व्वाधिकत्वं श्लथयत्यकाण्डे । घृतं घनीभूतमतीव दुग्धं मृदूनि मांसानि समस्तकानि । माषान्नपिष्टानि भवन्ति पथ्यान्यामन्दशायीन्यपराणि स्यात् । वलीपलितनाशनस्तनुभृतां वयःस्तम्भनः समस्त-

गदखण्डन प्रचुररोगप्रशमनः। गदेषु रसराजश्च भवति यस्य चन्द्रोदय सपत्नगरदर्पितो मृगदृशां भवेद् यथा”। ३चक्रदत्तोक्ते वर्त्तिभेदे स्त्री तत्प्रकारो यथा “हरीतकी वचाकुष्ठं पिप्पली मरिचानि च। बिभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला। सर्वमेतत् समं कृत्वा छागीक्षीरेण पेषयेत्। नाशयेत्तिमिरं कण्डूं पटलान्यर्बुदानि च। अधिकानि च मांसानि यश्च रात्रौ न पश्यति। अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत्। वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी”।

चन्द्रोपल पु० चन्द्रप्रियः उपलः। चन्द्रकान्तमणौ हेमच० इन्दुकिरणसम्पर्कात् तस्य क्षरणात् तत्प्रियत्वम्।

चन्द्रौरस पु०६त०। १बुधे “भ्मौ न्यौ लौ चेदिह भवति च चन्द्रौरस” इ० र० टीकोक्ते चतुर्दशाक्षरपादके २वर्णवृत्तभेदे च

चप चूर्णीकरणे चु० उभ० सक० सेट् घटा०। चपयति ते अचीचपत्-त। मित्वाभावेऽपि स्वार्थे णिचि तद्रूपमित्यन्ये।

चप सान्त्वने भ्वा० पर० सक० सेट्। चपति अचापीत् अचपीत्। णिचि चापयति।

चप गतौ चु०उभ०सक०सेट् इदित्। चम्पयति ते अचचम्पत् त

चपट पु० चपेट+पृषो०। (चड) चपेटे अमरटीका।

चपल न० चुप—मन्दायां गतौ कल उपधोकारस्याकारः। १पौम्र मेदि० २क्षणिके त्रि० हेमच०। ३पारदे ४मत्स्ये ५चातके ६प्रस्तरभेदे च पु० मेदि०। ७चव्ये पु० राजनि०। ८तरले चञ्चले च त्रि० मेदि०। ९दोषमनिश्चित्य कर्मकारिणि त्रि०अम०। १०विकले त्रि० शब्दर०। ११चञ्चलायां स्त्री “निलय श्रिय सततमेतदिति प्रथितं यदेव जलजन्मतया। दिशतान्ययात्तदपि सुक्तमहो चपलाजनं प्रति न चोद्यमदः।” माघः। १२विद्युति १३चव्यां १४पिप्पल्याञ्च स्त्री मेदि०। १५जिह्वायां स्त्री शब्दच०। १६विजयायां १७मदिरायां स्त्री राजनि०।“मोघि नियतमिह यश्चपलो नियत स्फुट नभसि निम्नगासुत” माघ “मैघवाश्चचलमप्यशोभत” रघु। “न पाणिपादचपलो न नेत्रचपलोऽनृजुः” मनु। शौण्डा० ७त०। नेत्रचपलः। पादचपल। श्रेण्या० कृतादिभिः अभूततद्भावार्थे समासः। चपलकृत चपलभूत। विसृष्टा० गुणवचनशब्दे परे तत्पुरुषे अस्य प्रकृतिस्वरत्वात् अन्तोदात्तता। चपलकटुकम्। प्रियादि०तस्मिन् परे पूर्वस्य न पुंवत्। प्रकाशमाना चपला विद्युत् यत्र प्रकाशमानाचपल इत्यादि। चपलस्य भाव० अण् चापल न० ष्यञ् चापल्य न० त्व चपलत्व न० अनवस्थितत्वे “सकलचापलदोषसमुद्धत” माघ। “मा चापलायेति गणान् न्यषेधीत्” कुमा०। “उभयार्द्धयोर्जकारो द्वितीयतुर्यौ गमध्यगौ यस्याः। चपलेति नाम तस्याः प्रकीर्त्तितं नागराजेन” इ० र० उक्ते आर्य्याविशेषे १८मात्रावृत्तभेदे स्त्री। स्वार्थे क। चञ्चले त्रि०। भृशा० अभूततद्भावार्थे क्यङ्। चपलायते अचपलायिष्ट

चपलता स्त्री चपल—तल्। चाञ्चल्ये सा०द० उक्ते १व्यभिचारिगुणभेदे। “सधृतिचपलताग्लानिचिन्तावितर्काः” व्यभिचारिण उद्दिश्य “मात्सर्य्यद्वेषरागादेश्चापल्यमनवस्थितिः। तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादय” इति लक्षित्वा “अन्यासु तावदुपमर्दसहासु भृङ्ग! लोलं विनोदय मनः सुमनोलतासु। मुग्धामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमालिकायाः” सा० द० उदाहृतम्।

चपलाङ्ग पु० चपलमङ्गमस्य। शिशुमारे जलजन्तुभेदे। हारा०। [र० उक्ते छन्दोभेदे।

चपलातक्ष्म न० “चपलाप्रथमयुजोर्नकारयेत् पयोराशे” इ०

चपेट पु० चप-अच्यें क चपाय सान्त्वनाय एटति गच्छति इट क। विस्तृताङ्गुलिके हस्ते (चापड) स्त्रीत्वमीप्यते “दण्डकोपाध्याय शिष्याय चपेटां ददातीति” भाष्यप्रयोगात्। स्वार्थे क। अत्रैवार्थे पुंस्यमरः।

चपेटी स्त्री भाद्रशुक्लषष्ठ्याम्। “प्रकृत्या द्वादशे मासि सम्यक्चापत्यरक्षये। सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी। वैशाखे चान्द्रनी षष्ठी ज्यैष्ठे चारण्यसंज्ञिता। आषाढे कार्द्दमी ज्ञेया श्रावणे लुण्ठनी मता। भाद्रे चपेटी विख्याता दुर्गाख्याश्वयुजे तथा। माघाख्या कार्त्तिके मासि मार्गे मूलकरूपिणी। पौषे माल्यस्वरूपा च शीतला तपसि स्मृता। गोरूपिणी फाल्गुने च चैत्रेऽशोका प्रकीर्त्तिता,, स्कन्द० पु०

चप्य त्रि० चप—पवर्गान्तत्वात् कर्म्मणि यत्। आदरणीये। “चप्य भवत्यमाद्यसावरूढे” शत० ब्रा० १२।७।२।१। “चप्य न पायुर्भिषगस्य” यजु० १९। ८८।

चम अदने भ्वा० प० सक० सेट्। चमति आचामति। विचमति। अचमीत् चचाम चेमतुः। उदित् चमित्वा चान्त्वा। आचान्तः। आचमनम् आचमनीयम्। “आचान्तः पुनराचामेत्” स्मृतिः। “मनाग् मग्नोऽपि नाचामसि” प्रबोधच०। “चचाम मधु माध्वीकम्”

भट्टि॰ । णिचि चामयति । "इमां किमाचामयसे न चक्षुषी" नैष॰ ।

**चम** भक्षे स्वादि॰ वैदिक॰ प॰ सक॰ सेट् । चम्नोति उदित्
क्त्वा चमित्वा चान्त्वा । कविकल्पद्रुमे "कुशिर्चां गम्न गत्या
चम् न्रचम् जम् जिमु भक्ष" इति वाक्ये "परोऽनुबन्ध
पूर्व्वेषाम्" इति तदुक्तौ सर्व्वेषामुदित्त्वं तेन शब्द-
कल्पद्रुमे स्वादिगणीयस्य उदित्त्वानुक्तिः प्रामादिकी

**चमत्कार** पु॰ चमदित्यव्यक्तं क्रियते कृ—भावे घञ् । लोका-
तीतवस्तु दृष्ट्वा चित्तस्य आनन्दहेतौ १प्रकाशे विस्मये,
"लोकोत्तरचमत्कारप्राणदश प्रभाभ्रिः" । "चमत्कारश्च
चित्तविस्ताररूपो विस्मयापरपर्य्याय" सा॰ द॰ । "रसे
सारश्चमत्कारः सर्व्वत्राप्यनुभूयते" तद्गतधर्म्मदत्तवाक्यम् ।
"चमत्कारश्च लोकातीतार्थकलनेन किमेतदितिज्ञान
धाराजननेन चित्तवृत्तेः दीर्घविस्तारः । दृष्टहेतुभ्योऽ-
नुत्पादितस्यापनेन हेत्वन्तरानुसन्धानाय मनसो-
व्यापारभेद एव चित्तविस्तार इत्यन्ये । सुखविशेष एव
चमत्कार इत्यपरे । चमत्कारत्वञ्च आह्लादगतो जाति-
विशेष यथाह रसगङ्गाधरे "रमणीयार्थप्रतिपादकः
शब्दः काव्यं रमणीयता च लोकोत्तराह्लादजनकज्ञान-
गोचरता लोकोत्तरत्वञ्च आह्लादगतचमत्कारत्वापरपर्य्या-
योऽनुभवसाक्षिको जातिविशेष" इति । "इत्थं च चमत्-
कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वं यत्प्रतिपा-
द्यार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्व,
स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चम-
त्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्" इति च ।
कर्त्तरि अच् । २अपामार्गे त्रिका॰ ।

**चमर** पुंस्त्री चम—अरच् । १महिषाकृतौ मृगभेदे, यस्य पु-
च्छेन चामराख्यं व्यजनं भवति, स्त्रियां जातित्वात् ङीष् ।
"कुर्व्वन्ति बालव्यजनैश्चमर्य्यः" "बालप्रियत्व शिथिलं
चमर्य्यः" कुमा॰ । "स्फुरति चानुवनं चमरीचयः"
माघ । २दैत्यभेदे पु॰ । ३चमरबालजाते चामरे न॰ ।

**चमरपुच्छ** पुस्त्री चमरस्य पुच्छमिव पुच्छमस्य । (केकड़े)
बिडालये १पशुभेदे । राजनि॰ । हेम॰ । २चामरे न॰

**चमरिक** पु॰ चमरमिव केशरोऽस्त्यस्य ठन् । कोविदारवृक्षे
रक्तकाञ्चनारे वृक्षे अमरः

**चमरी** स्त्री चमरजातिस्त्री ङीष् चमरमिवाकारोऽस्त्यस्याः
अच् गौरा॰ ङीष् वा । १चमरजातिस्त्रियां चमरशब्दे
उदा॰ । २मञ्जर्यां मेदि॰ ।

**चमस** पुंन॰ अर्द्धर्चादि॰ चमन्त्यस्मिन् चम—असच् ।
१पलाशादिकाष्ठजाते यज्ञियपात्रभेदे तल्लक्षणभेदादिकं
यज्ञपार्श्वे उक्तं यथा
"चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः । त्र्यङ्गु-
लस्तु भवेत् खातो विस्तारश्चतुरङ्गुलः । विकङ्कतमयाः
श्लक्ष्णाभागभिन्नाश्चमसाः स्मृताः । अन्येभ्यो वापि वा
कार्य्यास्तेषां दण्डेषु लक्षणम् । होतुर्मण्डल एव स्या-
द्ब्रह्मणश्चतुरस्रकः । उद्गातुश्च त्र्यस्त्रिः स्याद्याजमान
पृथु स्मृतः । प्रशास्तुरयतः स्याद्गुत्तमो ब्राह्मणसिनः ।
पोतुरग्रे विशाखी स्यान्नेष्टुः स्यादिष्टहीतकः । अच्छा-
वाकस्य रास्नाय आग्नीध्रस्य मयूखकः । इत्येते चमसाः
प्रोक्ता ऋत्विजां यज्ञकर्म्मणि । पलाशाद्वा वटाद्वा-
न्यद्वाद्वा चमसाः स्मृताः" कात्या॰ श्रौ॰ १।२।२६।
सूत्रभाष्ये कर्क "स च चमसश्चतुरस्रो द्वादशाङ्गुल
दीर्घश्चतुरङ्गुलखातः सदन्तश्च भवति परिशिष्टात्
सूत्रकारप्रस्थानाच्च । चमसवत् स्रुवेणेति स्रुवस्य चतु-
रस्रता विधाद्वचमसवदित्येव चमसस्य सिद्धा चतु-
रस्रतामाह" कात्या॰ श्रौ॰ २।७।१। "चमसवदविशेषात्"
शारी॰ सू॰ । "अर्वाग्बिलश्चमस" इति तन्त्राप्रत्युक्तश्रुतिः ।
स्त्रीत्वमपि मेदि॰ । २सोमपानपात्रभेदे च । कर्म्मणि
असच् । ३पर्पटे पिष्टकभेदे ४लड्डुके च पु॰ "चूर्णं
यच्छुष्कमाषाणां चमसी साऽभिधीयते" भावप्र॰ उक्ते
(धूमसी) ख्याते ५माषचूर्णे च स्त्री गौरा॰ ङीष् ।

**चमसिन्** पु॰ चमस+अस्त्यर्थे इनि । चमसयुक्ते स्त्रियां ङीप् ।
तत नडा॰ अपत्ये फक् । चामसायन तदपत्ये पुस्त्री॰

**चमसोद्भेद** पु॰ भारतप्रसिद्धे प्रभासान्तिकस्थे तीर्थभेदे ।
"ततस्तु चमसोद्भेदमच्युतस्त्वगमद्बली । चमसोद्भेद इ-
त्येव य जना कथयन्त्युत" भा॰ शल्य॰ ३६अ॰ । "एष
वै चमसोद्भेदो यत्रादृश्या सरस्वती । यत्नेनाभ्यभवन्त
सर्व्वा पुण्याः समुद्रगा" भा॰व॰ १३०अ॰ । चमसोद्भ-
भवत न॰ "आम्नमान् सरितश्चैव सरांसि च नराधिप ।
चमसोद्भेदन विप्रास्तत्रापि कथयन्त्युत" ८८अ॰ ।
"स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत्" ८२अ॰।

**चमीकर** पु॰ कतस्वराभिधे स्वर्णस्योत्पत्तिस्थाने शब्दार्थचि॰
यद्योगात् स्वर्णं चामीकरमित्युच्यते ।

**चमू** स्त्री चम—ऊ । सेनामात्रे (गजा ७२९, रथा ७२९
अश्वा २१८७, पदातय ३६४५), एतत्सङ्ख्याभेदान्विते
सैन्यभेदे च अमरः । "अक्षौहिणीमष्टे ४६४॰ हंसम् ।

"रथाङ्केनाभिप्रयुज्यन्ता यात्रीमां चमूनाम्" मेघ०। ध्याधारे ज। ३चमसे स्त्री "इन्द्रा मधचमूषदः" ऋ० ॥ १।४।४। "चमूषदः चमसादिपात्रेषु अवस्थिता" भा०। ४द्यावापृथिव्यो द्वि० व० निघ०

चमूचर पु० चमूषु चरति चर-ट। २सैनिके शब्दार्थचि०।

चमूनाथ पु० ६त०। सैन्याध्यक्षे "युवतिचमूनाथमोक्ष प्रचारिणाम्" ए० स० १६श०। चमूपन्याटयोऽप्यत्र।

चमूरु पुंस्त्री चम-बर्जूरा० ऊर उणो० अत ऊत्वम्। मृग भेदे। "चकासत चारुचमूरुचर्मणा" माघः। "दृष्टः मृगयुग न चमूरुगण" प्रबचरा०।

चमूहर पु० चमु दैत्यसैन्यं हरति हृ-अच्। महादेवे 'चमूहर सुरेशय व्योमारि गङ्गरोभव' भा० आनु० ८१अ० शिवनामोक्तौ। [पुष्पाटौ म०।

चम्प पु० तु० चपि-अच्। १कोविदारवृक्षे शब्दमाला २तत्-

चम्पक पु० चपि-ण्वुल्। (चाँपा) प्रसिद्धपुष्पप्रधाने १वृक्षभेदे अमर०। "चम्पकः कटुकस्तिक्तः कषायो मधुरो हिमः। विषक्रिमिहरः क्षुद्रकफवातास्रपित्तहृत्" भावप्र० तद्गुणा उक्ताः। २तत्पुष्पादौ न० "ध्याशोकयच्च चम्पककोरकावली" नैष०। "उन्निद्रपुष्पचयचम्पकपिङ्ग-भासा" माघ०। ३पनसफलैकभागभेदे (चाँपी) ख्याते पदार्थे (चाँपाकला) प्रसिद्धे ४कदलीभेदे पु० तत्फले न० राजनि०। "चम्पकं वातपित्तघ्नं गुरु वीर्यकरं तथा। अतिशीतं रसे पाके मधुरं कथितं बुधैः" भावप्र० तद्गुणा उक्ताः। ५साङ्ख्यमतसिद्धे सिद्धिभेदे "अध्ययेन अय परीक्षितमर्थं तावन्न श्रद्धत्ते यावद्गुरुशिष्यब्रह्म-चारिभिः सह न संवादाते अत सुहृदां गुरुशिष्य-ब्रह्मचारिणा संवादकाना प्राप्तिः सुहृत्प्राप्तिः सा सिद्धिरुच्यते चम्पकमुच्यते इति" सांख्यशास्त्रम्।

चम्पकचतुर्दशी स्त्री ज्यैष्ठशुक्लचतुर्दश्याम् ज्यैष्ठमासे इत्युपक्रमे "चतुर्दश्यां च शुक्लाया चम्पकैः पूजयेत् शिवम्। अयुतैर्वा सहस्रैर्वा शतैर्वा परमेश्वरि!। पायसन्तु बलिं दद्यात् तस्मै नक्तं चरेद्व्रती। वृषस्थेऽर्के विशेषेण न भूयो जायते क्षितौ। लिङ्गद्वयं चम्पकैस्तु सहस्रं कुर्याद्विधिः। अयणीद् व्यरान् हन्ति तथा रोहांश्च यानि च। चम्पकचतुर्दशी ख्याता पूजयेत् सदाशिवम्। दशजन्मकृतं पापमश्वमादेव नश्यति" मत्स्यसू० ४५प०

चम्पकमाला स्त्री चम्पकपुष्पनिर्मिता माला ६त०। १चम्पकपुष्पमालायाम्। २चम्पकपुष्पाकारे स्त्रीणां कण्ठाभरण-भेदे। (चापकलि) शब्दार्थ०। "भौ सगयुक्तौ चम्पकमाला" छ० र० उक्ते दशाक्षरपादके ३वर्णवृत्तभेदे चम्पकमालेत्यत्र "रुक्मवतीयम्" इत्यपि पाठः।

चम्पकरम्भा स्त्री चम्पकोपपदा रम्भा शा० त०। (चाँपाकला) कदलीभेदे राजनि०।

चम्पकारण्य न० चम्पकप्रधानमरण्यम्। भारतवर्षस्थे तीर्थभेदे "ततो गच्छेत राजेन्द्र! चम्पकारण्यमुत्तमम्। तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत्" भा० व० ८४अ०। [छन्द। चम्पे (काँटाल) शब्दार्थचि०

चम्पकालु पु० चम्पकेन पनसावयवभेदेन अलति अल-

चम्पकावती स्त्री चम्पक+अस्त्यर्थे मतुप् मस्य वः संज्ञायां दीर्घः। चम्पापुर्यां कर्णराजधान्याम् (भागलपुर) ख्याते पुरीभेदे शब्दरत्ना०।

चम्पकुन्द पु० चम्पस्य कुन्दे कुदि-अच्। (चाँदकाँटा) मत्स्यभेदे राजनि०। [६त०। चम्पे त्रिका०।

चम्पकोष पु० चम्पस्येव कोषोऽस्य यत्र अच्-घञर्थे आधारे क

चम्पा स्त्री चम्प-अच्। कर्णपुर्यामङ्गदेशस्थे १पुरीभेदे। (चाँपाइ) ख्याते तत्पार्श्वस्थे २नदीभेदे ३पनसावयवभेदे (चाँपि) शब्दार्थचि० [मते ७८भृ० रामम्।

चम्पाधिप पु० ६त०। कर्णे तस्य तद्राज्यकथा अङ्गाधिप-

चम्पापुरी स्त्री चम्पानामिका पुरी। अङ्गदेशस्थे कर्णराजधान्याम्। चम्पानगर्यादयोऽप्यत्र।

चम्पालु पु० चम्पया अलति अल-उण्। पनसे शब्दरत्ना०।

चम्पावती स्त्री चम्पा अङ्गदेशस्था नदीभेद अस्त्यस्या मतुप् मस्य वः। चम्पापुर्यां शब्दरत्ना०।

चम्पू स्त्री चपि-ऊ। "गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते" इत्युक्ते काव्यभेदे अटा०।

चम्पेश पु० ६त०। कर्णे त्रिका०। [वाक्येषु व०व०

चम्पोपलक्षित पु० ३त०। १अङ्गदेशे हेमच० २तद्देश-

चम्ब गतौ भ्वा० पर० सक० सेट्। चम्बति अचम्बीत्। चचम्ब

चम्रिष् त्रि० चमूषु चमसेषु इष्यते गच्छति इष-क्विप् वेदे नि० वस्य र। चमसस्थे। "तस्य चम्रिषोऽश्वो न" ऋ० ११५६।११। "चमूषु चमसेषु इष्य गच्छमानाः" भा०। छान्दो दीर्घः चम्रीष इत्यप्यत्रार्थे। "चम्रीषो न शरद्दा पासुजन्यः" ऋ० ११०।१२।

चय गतौ भ्वा० आ० सक० सेट्। चयते अचयिष्ट चेये।

चय पु० चि-भावकर्मादौ अच्। १समूहे। २वप्रे ३प्राकारमूलमस्तके। यदुपरि प्राकारो निरूप्यते प्राकारमूलस्थित

वेदिकेति यावत् । तथा चार्थशास्त्रम् । “खातमुद्धृत मृदा वप्रं कारयेद् तस्योपरि प्राकारमिति” । पगार इति गौड़भाषा । ४परिखोद्धृतमृत्स्तूपे । तत्र-समूहे “स्फुरति चातुमन चमरीचय” । “निज नेषु नक्तमविनाशसमाश्रयै” “चयस्त्विषामित्यवधारितं पुर” इति च माघ । वप्रे “चयाट्टालकशोभिना” भा०व०१६०अ० । ५अग्न्यादेश्चयने संस्कारभेदे । “यज्ञांश्च प्रचयामचान्” हरिवं० ४१अ० । ६पुष्पादे समाहरणे ७पीठे मेदि० । चये कुशल आकर्षा० कन् । चयक चयनकुशले त्रि० ।

**चयन** न० चि—भावे ल्युट् । १पुष्पादेः समाहरणे २अग्न्यादे संस्कारभेदे च । चयनप्रकार कात्यीयादौ दृश्य “स यथा कामयेत तथा कुर्य्यादिति अचयनस्य तथाचयनस्येति” शत०ब्रा०८।५।२।११। चीयतेऽनेन करणे ल्युट् । ३संस्कारसाधने श्यूपादौ च । “येन भागीरथी गङ्गा चयनैः काञ्चनैश्चिता” भा० द्रो० ५१अ० ।

**चर** गतौ भ्वा० पर० सक० सेट् । चरति अचारीत् । चचार चेरतुः । “दिवा चरेयु कार्य्यार्थं चिह्निताराज शासनै” मनुः । “चेरतु खरदूषणौ” भट्टि, “हंस तनौ सन्निहितं चरन्तम्” नैष० । चर चार चरणम् चरित चरित्रम् । चरन् चर्च्यते “ततश्चूर्य माणाशौ” भट्टि । यङ्लुकि चञ्चुरीति चञ्चूर्त्ति ।

अति+अतिक्रम्य गमने “अतिचेरुर्भ्रंशात्मा युयुधुश्च परस्परम्” भाग० ३।१७।१४। “अयोगतश्चात्यचरत् योगं दिवि निशाकर” हरिवं० २२६अ० । “पुत्रा पितॄनत्यचरन्नार्य्यश्चात्यचरन् पतीन्” भा० शा० ८२८७श्लो० । अतिचारशब्दोक्तोऽर्थे अतिचारशब्दे ९९४प० दृश्यम् ।

वि+अति व्यतिक्रमे “त्वामहं न व्यतिचरे मनसाऽपि कदाचन” रामा० ल० १०१ । [१।८।११८।

अधि+आधिक्येन चरणे । “यासुपरिष्टादधिचरसि” शत०

अनु+अनुगमने पश्चाद्गमने उद्देश्यप्रकरणे । अनुचर ।

अप+अपकारे अनिष्टसम्पादने । “टीयस्तोपासमपचरेत् न साचक्षीत वै द्विजः” भा०शा० ९५८६ । “पितृदेवर्षि भक्तश्च न चापचरिता मया” मार्क० पु० ।

अभि+आभिमुख्येन चरणे अतिक्रमे व्यभिचारे च “पति या नाभिचरति मनोवाग्देहसंयता” मनु० “यथैवाहं नाभिचरे कदाचित” भा० वि० ४५७ अ० । अनिष्ट सम्पादने “श्येनेनाभिचरन् यजेत” श्रुति । अभिचारश्च मारणोच्चाटनादीनि षट्कर्माणि “प्रति तमभिचर योऽस्मान् द्वेष्टि” अथ० २।११।२। अभिचारशब्दे दृश्यम् ।

वि+अभि+विशेषेण अतिक्रमे । यस्य यथात्वमुचित तस्य तदतिक्रमे । “उष्मणा व्यभिचरतीव सप्तसप्ती” किरा० । “व्यभिचचार न तापकरोऽनलः” नैष० । हेतोः साध्याभाववद्वृत्तित्वं, साध्यस्य च हेतुसमानाधिकरणाभाव प्रतियोगित्वं व्यभिचार । “न तावदव्यभिचरितत्व तद्धि न साध्याभाववद्वृत्तित्वम्” अनुमानचिन्ता० । स्त्रीणाञ्च पतिमतिक्रम अन्यपुंसि गमनं व्यभिचार ।

अव+समन्तात् चरणे । “कषाय अवचारितम्” । “कफवातज्वरं हन्यात्क्षौद्रं काथेऽवचारितम्” “प्रमार्जनं धावनञ्च चोक्ष्य चोक्ष्यावचारयेत्” “दूर्वां पुनर्नवाञ्चैव उभे साध्ववचारयेत्” इति च सुश्रु० ।

आ+अनुष्ठाने । “प्रस्थितायां प्रतिष्ठेथा स्थितायां स्थितिमाचरे” रघु० । “यद्यदाचरति श्रेष्ठ” गीता । प्राप्ते षोडशे वर्षे पुत्रं मित्रवदाचरेत्” चाण० ।

अधि+आ+आधिक्येनाचरणे “शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत्” मनु ।

अनु+आ+अनुगमने तुल्यरूपानुष्ठाने “कोनु तत्कर्म राजर्षेर्नाभेरन्वाचरेत् पुमान्” भाग० ४।५।७।

सम्—उद्+आ सम्यगाचरणे । “बालानपि च मार्गस्थान् शान्त्वेन समुदाचरेत्” भा० शा० ३१अ० ।

उप+आ+उपासने । “उपाचरति तत्रस्थ भवानामीश्वरम् प्रभुम्” भा० स० १०अ० ।

सम्+आ+सम्यगाचारे । “त्वया पापानि घोराणि समाचीर्णानि पाण्डुपु” भा०क० ९१अ० । उपघातदृश्यम् । “उच्छिष्टान्ननिषेकञ्च दूरादेव समाचरेत्” मनु ।

उद्+उल्लङ्घ्य गतौ सक० आत्म० । धर्म्ममुच्चरते “धर्म्ममुल्लङ्घ्य गच्छतीति” सि० कौ० । उपरिष्टाद्गतौ अक० प० । बाष्प उच्चरति “उपरिष्टाद्गच्छति” सि० कौ० । “सौदामनीमुच्चरन्तीं यथैव” भा० व० ११६क० । “क्रोशाद्भिन्दैरुदचरत्” भट्टि “दिव्यस्तूर्य्यध्वनिरुदचरत् व्यञ्जुवानोदिगन्तान्” रघुः । कण्ठताल्वाद्यभिघातेन उत्पादने “सकृदुच्चरितः शब्द सकृदर्थं गमयतीति न्याय । “अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात्” रघु० ।

वि+उद्+विशेषेण उत्थितौ । "यथाऽग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्ति" शत० ब्रा० ४।१।।२३।

सम्+उद्+सम्यगुत्थितौ । "समुच्चरन्त्यपाटोपः" शिशु०६।११

उप+उपासने "गिरिशमुपचचार प्रत्यहं सा सुकेशी" कुमा०। अन्यथास्थितस्य वस्तुनोऽन्यथात्वप्रतिपादनरूपे शब्दादिव्यापारभेदे उपचारस्य लक्षणा अन्य वा । "यथा लोके सङ्ग्रामेषु योधेषु वर्त्तमानौ जयपराजयौ राज्ञि उपचर्य्येते" सा० द० । "तेनोपचर्य्यते राज्ञः" । "याम्योत्तरा ग्रहगतिगणितेऽप्युपचर्य्यते तेन" ह० म० ५।११।

दुर्+दुष्टाचरणे । "कामवृत्तव्यपहृदया भर्त्तारं दुश्चरन्ति या" रामा० आर० २।२५।

निर्+निर्गमने "इतश्चेतश्च निश्चेरुर्दृष्ट्वा सर्वे गुरुगुमर" हरिव० २२अ० । "यतोयतोनिश्चरति मनश्चञ्चलमस्थिरम्" गीता ।

परि+परितोगमने "कक्ष्या ग्रामास्तथा रथ्या वीथ्यः परिचरन्ति च" रामा० अ० १६।११। परितः सेवने "गात्रसंवाहनैश्चैव अमात्यमयमेकया । अन्न सर्वेषु कालेषु दिति परिचचार ह" रामा० आ० ४६ अ० ११ । "आम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु यः" रा० अयो० ३५।१४ । परिचर्य्या परिचारक ।

प्र+प्रकाशेन गतौ । "नाप प्राचीयस तत पुमय प्रचचार ह" भा०आनु०२३अ०। प्रकर्षेण चरणे च । "ये कर्मभि प्रचरितैः शुश्रूष्यन्ते द्विजातय" मनु । प्रचार ।

सम्+प्र+सम्यक् प्रकाशने । "अद्य प्रभृति चैवेह लोके सम्प्रचरिष्यति" भा० आनु० ८६अ० ।

वि+विशेषेण गतौ "विचरन्ति महीपाला यात्रार्थं विजिगीषव" रामा० आर० २२।७ । "ततोद्रौणिर्महावीर्य्यः पार्थस्य विचरिष्यत" भा० वि० ५८अ० । "राज्ञो न विचरेयुस्ते ग्रामेषु नगरेषु च" "इन्द्रियाणां विचरतां विषयेष्वपहारिषु" मनु । वि+चु० चर पर्य्यालोचनया निर्णये । "ध्यायति सर्वकार्य्याणां तदात्वञ्च विचारयेत्" मनु । "मित्रामित्र विचारयेत्" भा० शा० ९८२६ । "विचारदृक्चारदृगप्यवर्त्तत" "भविता न विचारचारु चेत्" नैष० ।

सम्+सम्यग्गतौ "नैव वाताः प्रवायन्ते न मेघाः सञ्चरन्ति च" हरिव० १०७५८ । "वामेतरं सञ्चरतां ममामास्" कुमा० "सञ्चाऽरतिमन्दिरावधि" रतिमञ्जरी करणविभक्तिसहकारे आत्म० । "रथेन सञ्चरते" सि० कौ० । "दंष्ट्रा न्तप सञ्चरमाण एव" नैष० ।

चुर् गतौ भक्षणे च चुरा० उभ० सक० सेट् । चारयति ते अचीचरत् त । विचारयति विचारणा विचारितः

चर पु० चर–अच् । स्वपरराष्ट्रवृत्तान्तज्ञानार्थं राजनियोगेन इतस्ततो भ्रमणकर्त्तरि चारे १प्रणिधौ, अमरः २कपर्दके, राजनि० । ज्योतिषोक्तेषु ३मेषकर्कटतुलामकरराशिषु ४स्वातिपुनर्वसुश्रवणादित्रिकरूपे नक्षत्रभेदे ५भौमवारे ६खञ्जनभेदे । ७चले अस्थिरे त्रि०मेदि०। ८पक्षभ्रमणे पुंस्त्री शब्दमा० । चरलक्षणादिकञ्च युक्तिकल्पतरौ "दिवस्थानिव तेजोभिर्भास्वानिव वेगत । राजा चरैर्जगत् सर्वं प्राप्नुयाल्लोकसम्मतः । तर्केङ्गितज्ञ प्रतिमान् लोकभावप्रकाशकः । क्लेशायाससहो दक्ष सर्वभयवर्जितः । सुभक्तो राजस्तथा कार्य्याणां प्रतिपत्तिमान् । तपोनिष्ठन्याकारेण परराष्ट्रं विचरेत् । कारुकान्मन्त्रकुशलान् सावयुवरचिकित्सकान् । तथान्यानपि युञ्जीत समर्थान् गुप्तचेतसः । अङ्कुशांश्च तथाऽन्धान् स्त्रीणार्थान् तथ्यभाषिण । पार्वणिकांश्च स्नापकादीन् परराष्ट्रे नियोजयेत् । स्वदेशपरदेशजान् सुशीलान् सुविचक्षणान् । वार्त्ताहर्य्यांश्च बहूंश्चैव चरान्वा विनियोजयेत् । नैकस्य वचने राजा चारस्य प्रत्ययं वहेत् । द्वयो संवादमाज्ञाय यद्युक्तं कार्य्यमारभेत् । तस्माद्राजा प्रयुञ्जीत चरान् बहुसङ्ख्यान बहून् । धीरेतोघामना कुलान्तर्द्विधा ये च कारव । भिक्षुक्य चारणा दास्यो मालाकार्य्यः कलाविद । अन्तःपुरगता दास्यो निश्चरेयुरलक्षिताम् । प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधो मत । अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूतसंज्ञक ।" "शत्रुप्रजाभृत्यवृत्त विज्ञाय कुरुवाच ये । ते गुह्यचारा कर्त्तव्या यथार्थश्रुतबोधकाः" शुक्रनीतिसा० । "चरस्थिरद्व्यात्मकनामधेया मेषादयोऽमी क्रमशश्चरा स्यु" ज्यो०त० । "वातादित्यहरिश्चय चरगण" ज्यो० त० १५।।२।२०।२३।२४ सङ्ख्यकनक्षत्राणि चराणि । "येऽनेन लङ्कोदयकालिकास्ते देशान्तरेण स्वपुरोदये स्यु । देशान्तरं प्रागपरं तथान्यद् याम्योत्तरं तच्चरसंज्ञकम्" सि शि० "यच्चद्यान्तरकर्म्मणा लङ्कायामौदयिका यत्र जाताश्च देशान्तरकर्म्मणा स्वपुरौदयिकाः स्यु । तच्च देशान्तरं द्विविधम् । एकं पूर्वापरमन्यद्याम्योत्तरम् । तच्चरसंज्ञकम्" प्रमि० उक्ते याम्योत्तरादौ देशान्तरे । चरानयनप्रकारादि सू० सि०र० नारायाभ्यां दर्शित यथा

"अथ दिनरात्रिमानज्ञानार्थं चरानयनं विवक्षुः प्रथमं तदुपयुक्तां स्पष्टक्रान्तिमाह" र० ना०
"विक्षेपापक्रमैकत्वे क्रान्तिर्विक्षेपसंयुता। दिग्भेदे वियुता स्पष्टा भास्करस्य यथाऽऽगता" सू०
"अस्य ग्रहस्य स्पष्टक्रान्तिरभीष्टा तस्य ग्रहस्यायनांशसंस्कृतस्य भुजज्यात परमापक्रमज्येत्यादिना क्रान्तिरयनांशसंस्कृतग्रहगोलदिक्का ज्ञेया। तस्य विक्षेपोऽपि पूर्वोक्तप्रकारेण पातोनगोलदिक्को ज्ञेयः। गोलस्तु मेषादिषट्कमुत्तरं तुलादिषट्कं दक्षिणः। अथ ग्रहक्रान्त्योरेकदिक्त्वेन क्रान्तिः कलाद्या कलात्मकविक्षेपेण युता तयोर्दिगन्यत्वे क्रान्तिर्विक्षेपेण वियुतान्तरिता शेषदिक्का स्पष्टा क्रान्तिः स्यात्। ननु सूर्य्यस्य विक्षेपाभावात् कथं स्पष्टा क्रान्तिर्ज्ञेयेत्यत आह भास्करस्येति। सूर्य्यस्य यथागता पूर्वागता क्रान्तिरेव स्पष्टा क्रान्तिः। अत्रोपपत्तिः। विषुवद्वृत्ताद्ग्रहाधिष्ठितकेन्द्रपर्य्यन्तं याम्यमुत्तरं वान्तरं स्पष्टक्रान्तिरिति तयोरेकदिक्त्वे तद्योगतुल्यमन्तरं, भिन्नदिक्त्वे तदन्तरमितमन्तरमिति। अत्र ग्रहस्य क्रान्तिसंस्कारयोग्यत्वसम्पादिका क्रिया लोकभ्रमभयात् स्वल्पान्तरत्वाच्चोपेक्षिता भगवता कृपावता। अन्यथा ग्रहस्य ध्रुवाभिमुखत्वे भगवदुक्तमायनदृक्कर्म कथमव्याहतं स्यादित्यलम्। अथ दिनरात्रिमानज्ञानार्थमहोरात्रासून् साधयति" र० ना०।
"ग्रहोदयप्राणहता खखाष्टैकोद्धृता गतिः। चक्रासवो लब्धयुता स्वाहोरात्रासवः स्मृताः" सू०।
"ग्रहस्य येऽयनांशसंस्कृतराशेर्लङ्कोदयासवस्तैर्गुणिता निजस्फुटगतिः कलाद्याष्टादशशतभक्ता फलेन युताश्चक्रासवः षष्टिघटिकानामसवः षट्शतयुतैकविंशतिसहस्रमिताः स्वस्य ग्रहस्याहोरात्रासवः कालतत्त्वज्ञैः कथिताः। अत्रोपपत्तिः। ग्रहः पूर्व्वगत्या स्वस्थितप्रदेशेन गतिभोगकालेन भचक्रपरिवर्त्तनान्तरमुदेत्यतो भचक्रपरिवर्त्तकालः षष्टिघटिकासुमितो ग्रहगतिकलासम्बद्धासात्मककालेनाधिको ग्रहाहोरात्रमसात्मकं नाक्षत्रप्रमाणेन भवति। तत्रैकराशिकलाभिर्यदि ग्रहस्थलङ्कोदयासवस्तदा गतिकलाभिः क इत्यनुपातेन गत्यसव इत्युपपन्नं ग्रहोदयेत्यादि। अनेनैव श्लोकेन ग्रहाणामुदयान्तरकर्मापीत्युक्तं भगवता। तथाहि। अनुपातानीतमध्यग्रहाणां नियताहोरात्रमानान्तरकाले पश्चाद्विहि रविमध्यगत्यसमा प्रतिराशौ भिन्नत्वेन मध्यग्रहाहोरात्रमानस्य नियतत्वाभावादतस्तेषां मध्यक्षितिजावगतग्रहा अनियतमध्यार्काहोरात्रकालान्तरेणार्धरात्रे यत्सम्बन्धकारेण भवन्ति तदेवोदयान्तरं तत्साधनं भगवता स्वल्पान्तरत्वादुपेक्षितम्। कथमन्यथा गतिकलासुना स्वगत्युपेक्ष्य गतिकलानामसवो भगवदुक्ताः सङ्गच्छन्ते उदयान्तरस्य गतिकलासुभेदोत्पन्नत्वात् अथ चरोपयुक्ता क्रान्तिज्या द्युज्ये चाह" र० ना०।
"क्रान्तेः क्रमोत्क्रमज्ये द्वे कृत्वा तत्रोत्क्रमज्यया। हीना त्रिज्या दिनव्यासदलं तद्दक्षिणोत्तरम्" सू०।
"स्पष्टक्रान्तेः क्रमोत्क्रमज्ये क्रमज्योत्क्रमज्ये द्वे अपि प्रसाध्य तत्र तन्मध्ये क्रान्त्युत्क्रमज्यया त्रिज्या हीना दिनव्यासदलमहोरात्रवृत्तस्य व्यासार्धं द्युज्येत्यर्थः। तद्दिनव्यासार्धं दक्षिणोत्तरं दक्षिणगोल उत्तरगोले च स्यात् क्रान्तेर्गोलद्वयेऽपि सत्त्वात्। अपरा क्रान्तिज्यैव। अत्रोपपत्तिः। क्रान्त्यग्रान्ते क्रमज्या क्रान्तिज्या भुजो विषुवद्वृत्तानुकाराहोरात्रवृत्तान्यु भयगोले तदुभयतस्तद्व्यासार्धं द्युज्या कोटिस्त्रिज्या कर्ण इति गोले प्रत्यक्षम्। त्रिज्याग्रवृत्त उन्मण्डले याम्योत्तरवृत्ते वा प्रत्यक्षम्। तत्र भुजकर्णयोर्वर्गान्तरपदं कोटिरिति क्रान्तिज्यावर्गोनात्त्रिज्यावर्गान्मूलं द्युज्या। तत्रापि भुजोत्क्रमज्यया हीना त्रिज्या कोटिक्रमज्या स्यादिति वृत्ते प्रत्यक्षदर्शनात् क्रान्त्युत्क्रमज्ययोना त्रिज्या द्युज्या स्यादिति लाघवेन वर्गमूलनिरासेनोक्तं भगवता क्रान्तेरित्यादि। अथ चरानयनपूर्वकदिनरात्रिमानसाधनं श्लोकत्रयेणाह" र० ना०।
"क्रान्तिज्या विषुवद्भाघ्नी क्षितिज्या द्वादशोद्धृता।
त्रिज्यागुणाहोरात्रार्धकर्णाप्ता चरजासवः।
तत्कार्मुकमुदक्क्रान्तौ धनहानी पृथक्स्थिते। स्वाहोरात्रचतुर्भागे दिनरात्रिदले स्मृते।
याम्यक्रान्तौ विपर्य्यस्ते द्विगुणे तु दिनक्षपे। विक्षेपयुक्तोनितया क्रान्त्या भानामपि स्वके" सू०।
"क्रान्तिज्या विषुवद्दिनीयमध्याह्ने द्वादशाङ्गुलशङ्कोश्छायया गुणया द्वादशभक्ता फलं कुज्या स्यात्। सा त्रिज्यया गुणिताहोरात्रार्धकर्णाप्ताहोरात्रवृत्तस्यार्धकर्णेन व्यासदलेन द्युज्यया भक्ता फलं चरसंज्ञा ज्या चरज्येत्यर्थः। अस्याश्चरज्याया धनुरसवश्चरासवो भवन्ति स्वाहोरात्रचतुर्भागे स्वस्य चरसम्बन्धिनो ग्रहस्याहोरात्रासवस्तेषां चतुर्थांशे पृथक्स्थिते स्थानद्वयस्थे उत्त-

दक्रान्तौ सत्यां चराद्धं प्रमाणाभ्यां युतहीनौ कार्यौ तौ क्रमेण दिनरात्रिदले दिनार्धरात्र्यर्धे कालविद्भिरुक्ते । दक्षिणक्रान्तौ सत्यां विपर्ययस्ते दिनरात्रिदले यत्र हीने तद्दिनार्धं, यत्र युते तद्रात्र्यर्धमित्यर्थः । तस्मात् ते दिनरात्र्यर्धे द्विगुणे दिनरूपे दिनमानरात्रिमाने भवतस्त । उक्तरीत्या नक्षत्राणामपि दिनरात्रिमाने साध्ये इत्याह । विक्षेपेत्यादि । नक्षत्रध्रुवाणामानीतया क्रान्त्या नक्षत्रविक्षेपैरेकभिन्नदिक्क्रमेण युक्तयान्तरितयोक्तप्रकारेण सिद्धया स्फुटे नक्षत्रदिनरात्रिमाने साध्ये इत्यर्थः । अत्रोपपत्तिः । द्वादशाङ्गुलशङ्कुः कोटिः पलभा भुजोऽक्षकर्णः कर्णः, क्रान्तिज्या कोटिः, कुज्या भुजोऽग्रा कर्णः इत्यक्षक्षेत्रद्वयं प्रसिद्धम् । तत्र यदि द्वादशकोटौ पलभा भुजः, तदा क्रान्तिज्याकोटौ को भुज इत्यनुपातेन कुज्या । तत्स्वरूपं तु निरक्षदेशक्षितिजस्वदेशक्षितिजान्तरालस्थिताहोरात्रवृत्तप्रदेशस्य द्युज्याप्रमाणेन सेयं त्रिज्याप्रमाणेन तज्ज्या चरज्येति द्युज्याप्रमाणेन कुज्या त्रिज्याप्रमाणेन केत्यनुपातेन चरज्या तद्धनुश्चरासवोऽहोरात्रवृत्तखण्डप्रदेशे निरक्षक्षितिजान्तराले उत्तरगोले स्वक्षितिजस्य निरक्षक्षितिजादधः स्थत्वा-न्निरक्षक्षितिजयाम्योत्तरवृत्तान्तरालेऽहोरात्रवृत्तचतुर्थांशत्वादहोरात्रवृत्तचतुर्थांशे चरासवो युता दिनार्धं हीना रात्र्यर्धं दक्षिणगोले स्वक्षितिजस्य निरक्षक्षितिजादूर्ध्वस्थत्वाद्धीना दिनार्धं, युता रात्र्यर्धमित्युपपन्नं सर्वं क्रान्तिज्येत्यादि" ।

तत्र प्रणिधौ । "राजन्यकान्युपायज्ञैरेकार्थानि चरैस्तव" माघः । "तैश्च वृत्तं परिच्छेदेत् सम्यग्राष्ट्रेषु तच्चरैः" मनु । चले "तत्र सर्वाणि भूतानि स्थावराणि चराणि च" "देवैश्च जगत् सर्वं चरं स्थाण्वनुपूर्वशः" मनुः । सुपि कर्मण्युपपदे "चरेष्टः" पा॰ ट चरणकर्त्तरि त्रि॰ । भूचर खचर । "शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः" मनुः । मेषादौ "चरलग्ने चरांशे वा स्थापनं च विवर्जनम्" ति॰ त॰ । स्वार्थे अण् । चार प्रणिधौ

चरक पु॰ चरएव स्वार्थे क सञ्ज्ञायां कन् वा । १चरे दूते । २आयुर्वेदकारकमुनिभेदे पु॰ । "देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलं स्यादस्या भवद विना न दहने तापस्य कोऽपि क्षमः" नैष॰ । तन्निर्मितेऽद्योयोरेष कृष्णोक्तौ । चरकनामनिरुक्तिः आयुर्वेदशब्दे ७८० पृ॰ दर्शिता । ३तत्कृते ग्रन्थे च भावप्रका॰ तत्र च ग्रन्थे सूत्रस्थानं निदानस्थानं विमानस्थानं शारीरस्थानम् इन्द्रियस्थानं चिकित्सितस्थानं कल्पस्थानं सिद्धिस्थानम् इत्यष्टौ स्थानानि । ४पर्पटे राजनि॰ । ५चक्रकरे ६भिक्षौ शब्दार्थचि॰ ।

चरकाल पु॰ "निरक्षदेशक्षितिजाख्यवृत्तस्वस्वक्षतक्ष-गुरन्यदेशे । स्वे स्वे कुजेऽर्कस्य समुद्गमोऽस्ताः परार्धम-कौदययोस्तु मध्ये" सि॰ शि॰ । "आदौ स्वदेशेऽथ निरक्षदेशे सूर्योदयो ह्यस्तमयोऽप्यथात्र । स्फुटं च चहोः कादृशे स्वमतो मत चरोत्थ रविसौम्यगोले । याम्ये विलोम स्तु तत्र पश्चादुन्मण्डल स्वक्षितिजादधस्तात् । मार्याद्ध्वद्युसरयाम्यभागौ गोलस्त तावुत्तरयाम्यगोलौ" सि॰ शि॰ उक्ते दिनमानज्ञानोपाये कालभेदे ।

चरटङ्क न॰ चरञ्च स्थरम् । मेषकर्कतुलामकरेषु राशिषु । चरगेहादयोऽप्यत्र । [ जातित्वात् ङीष् ।

चरट पु स्त्री चर-बा॰ अटच् । खञ्जनखगे शब्दमा॰ स्त्रियां

चरण पु॰ चर-करणे ल्युट् । १देहावयवभेदे पादे "सुतेन धातोश्चरणौ भुवस्तले" माघ "स्त्रीभिर्वै कृतचरणौ सतीर्थे सप्तमर्द्दति" मनु । २वेदैकदेशे शाखापर्याये "गोत्रं च चरणं सह" महाभाष्यका॰ । चरणव्यूह । ३म-कोटे किरणे । ४श्लोकानां चतुर्थभागे पादे च । "प्रथमाङ्घ्रिसमोयस्य तृतीयचरणो भवेत्" छन्दोम॰ । "५चतुर्थभागमात्रे । "पश्यन्ति खेटाश्चरणाभिवृद्धिम्" ज्योति॰ । ६एकदेशमात्रे "ज्योतिश्चरणाभिधानात्" शा॰ सू॰ । भावे ल्युट् । ७अनुष्ठाने "अहत्वा भैक्ष्यचरणम्" "तपश्चरणैश्चोग्रैः" मनु । "रमणीयचरणा अभ्याशोह रमणीयां योनिमापद्येरन्" श्रुतिः चरणमत्र आचारार्थकत्वेऽपि कर्ममात्रपरत्वमुक्तं शा॰ सू॰ भा॰ । तच्चानुशयशब्दे १८६ पृ॰ उक्तम् चरण+चतुरर्थ्यां दृण्या॰ स । चरणस तत्सन्निकृष्टादौ त्रि॰

चरणग्रन्थि पु॰ ६त॰ । गुल्फे हेमच॰ ।

चरणपर्वन् न॰ ६त॰ । गुल्फे त्रिका॰ ।

चरणव्यूह पु॰ चरणानां वेदशाखानां व्यूहोऽत्र । वेदशाखाविभाजके ग्रन्थभेदे ।

चरणायुध पु स्त्री॰ चरण आयुधं यस्य । कुक्कुटे अमरः "आकर्णयं सम्प्रति रुतं चरणायुधानाम्" शा॰ ट॰ । स्त्रियां जातित्वात् ङीष् ।

चरणि पु॰ चर-अनि । मनुष्ये "हविष्मांश्च तत्र चरणीनाम्" ऋ॰८।२४।२३। "चरणीनां मनुष्याणाम्" भा ।

**चरणित** त्रि० चरणेन निर्वृत्तादि काशादि० चतुरर्थ्याम् इल। चरणनिर्वृत्तादौ [ हेमच०।

**चरणिट** स्त्री चिरण्टि+पृषो०। चिरण्टा सुवासिन्याम्

**चरण्य** पु० चरणे इव गाधा० यत्। चरणतुल्ये पा०।

**चरण्य** चरण्य–गतौ कण्ड्वा० सक० पर० सेट्। चरण्यति अचरण्यीत्। चरणगतौ इति पाठान्तरम्

**चरण्यु** त्रि० कण्चरण्य–उण् "चरणशीले "चतुरं चरण्यम् चरण्युः" ऋ० १०।८५।१६ "चरण्यु चरणशीला" भा०।

**चरथ** त्रि० चर–गतौ अथ। जङ्गमे। "स्थातुश्चरथमक्तून्व्यूर्णोत्" ऋ० १।६८।१। "चरथ जङ्गमम्" भा०।

**चरभ** न० कर्म्म०। मेषकर्कट तुलामकरराशिषु चरराशिषु चरलग्नादयोऽप्यत्र।

**चरम** त्रि० चर–अमच्। १अन्त्ये २पश्चिमे ३शेषभवे "अब्रवीत् क्रियतामेषा सुताना चरमा क्रिया" भा० वि० २४अ०। चरमश्चाभ्रम्। जसि सर्व्वनामत्वात् वा जस शीभाव चरमे चरमा। ४अन्ते न०। "उच्छिन्द्यात् प्रथमं चैव चरमं चैव सर्व्वशः" मनु।

**चरमक्ष्माभृत्** पु० कर्म्म०। अस्ताचले पश्चिमस्थे पर्व्वते। अमर चरमाचलचरमगिर्य्यादयोऽप्यत्र।

**चरव्य** त्रि० चरवे हित उवर्णत्वात् यत्। चरुहिते तण्डुलादौ सि० कौ०।

**चराचर** त्रि० चर–अच् नि०। १जङ्गमे। २आकाशे धरणि। चरश्चाचरश्च समाहारद्व०। ३स्थावर जङ्गमरूपे जगति न० मेदि०। "त्वया विसृज्यते विश्वं जगदेतच्चराचरम्" देवीमा०। "एवं स जाग्रत्स्वप्नाभ्यामिदं विश्वं चराचरम्" मनु। इतरेतरद्व०। ४चरे अचरे च त्रि०। "सर्व्वे भावाश्चराचरा" रामा० कि० ४३।४४ श्लो०

**चरि** पु० चर इन्। पशौ उणादिकोषः।

**चरित** त्रि०चर–कर्म्मणि क्त। १अनुष्ठिते। भावे क्त। २चरित्रे ३स्वभावे। "सर्व्वं खलस्य चरितं मशकः करोति" हितो० "उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते"। उत्तररामच०। वीरचरितम्। चण्डीमाहात्म्ये प्रथमादिचरितादि बहुशब्दस्य उदा०। "वाग्देवताचरितचित्रितचित्तसद्मा" गीतगो०कर्म्मणि क्त। ४गते ५प्राप्ते ६ज्ञाते च।

**चरितार्थ** त्रि० चरितः कृत प्राप्तोऽर्थः प्रयोजनं येन। १कृतार्थे कृतप्रयोजने २प्राप्तफले सफले। "अभवत् कृतसत्कारा चरितार्थैव भारती" "रामरावणयोर्युद्धं चरितार्थमिवाभवत्" इति च रघु० "महत्तिराशी भ्रूद्रानां चरितार्था चतुष्टयी" "आश्वासयत् सुचरितार्थपदैर्वचोभि" इति च कुमा० "अन्योन्याभावतोनास्य चरितार्थत्वमुच्यते" भाषा०।

**चरित्र** न० चर–इत्र। १अनुष्ठाने २व्रतकर्म्माद्यनुष्ठाने ३स्वभावे ४चेष्टिते ५शीलादौ च शब्दरत्ना०। ६तिन्तिडीवृक्षे स्त्री शब्दर०।

"एतद्देशप्रसूतानां सकाशादग्रजन्मनाम्। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्व्वमानवाः" "स्त्री प्रसूतिं चरित्रं च कुलमात्मानमेव" मनुः। "चरित्रबन्धककृतम्" याज्ञ०। स्वार्थे अण्। चारित्र तत्रार्थे न०" पृषो० दीर्घे चरीत्रमप्यत्र न० शब्दरत्ना०।

**चरिष्णु** त्रि० चर–इष्णुच्। चरणशीले "यदा स्वमात्रको भूत्वा बीजं स्थास्नु चरिष्णु च" मनु।

**चरु** पु० चरति होमादिकमस्मात् भीमा० अपादाने चर–उन्। हव्यान्ने होमार्थं पाच्यान्ने, "अनवस्रावितान्तरूष्मपाकओदनश्चरुरिति याज्ञिका"। चरन्त्यत्रापोऽत्र आधारे उन्। २मेघे निघ०। ३चरुपाकपात्रे भाण्डे विश्व चरुलक्षणमुक्तं कर्म्मप्रदीपे

"सुशाखोक्तः प्रसृतिस्थो ह्यदग्धोऽकठिनः शुभः। न चातिशिथिलः पाच्यो न चरुश्चात्र चारसः" चरुपाकप्रकारः कातीये ४।१।५। सूत्रभाष्ययोर्दर्शितो यथा "अपरेण गार्हपत्यं चरुमपूर्णं स्रुवं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन्" ५सू०। "गार्हपत्यादपरस्यां दिशि अपूर्णं चरुं चरुस्थालीम् तूष्णीं मन्त्रस्याविधानाल्लौकिकवाग्व्यापारवर्जम् व्रीहीनुपत्तेन मुष्टिना प्राचीनावीती दक्षिणामुखोऽध्वर्युर्गृह्णीयात् अथ वा अपूर्णं स्रुवम् एवं गृहीत्वा दक्षिणाग्नेरुत्तरतो गार्हपत्यस्य पुरस्ताद्दक्षिणाभिमुखस्तिष्ठन्नवहन्ति अत्र शाखान्तराद्दक्षिणाग्नेरुत्तरत उदग्ग्रीवं कृष्णाजिनमास्तीर्य्य तत्रोलूखलं निधाय तस्मिन् व्रीहीणां प्रक्षेपं कृत्वा मुषलमादाय दक्षिणाभिमुखस्तिष्ठन्नवहननं कण्डनं व्रीहीणां करोति ततः शूर्पमादायोलूखलाद्व्रीहीन् निष्काश्य निष्पवनेन तुषान्निष्कासयेत्" कर्कः "सकृत् फलीकरोति" ६सू० "लोके तस्य पुनः पुनः क्रियमाणत्वात् सकृदित्युच्यते, कर्क "धारतण्डुलमपूर्णं श्रपयित्वाभिघार्य्योद्वास्य मेक्षणेन जुहोत्यन्वय इति सोमायेति च" ७सू० "इदमेव चरु

धारतराडुलमीषत्स्विन्नतण्डुलम् अपूर्णं यथा स्यात्तेन चरुणा स्थाल्याः पूरणं न भवति तथा श्रपयित्वा थाली दितेनाज्येनाभिघार्य्य दक्षिणत उद्वास्य दक्षिणाग्नेः पूर्वभागे बर्हिषि दक्षिणमुत्तरतः आनीय सव्यं कृत्वा तिष्ठन् स्रुवेण समिध आधायोपविश्य प्राङ्मुखो मेक्षणेन चरुं जुहोति' कर्कः ।

शाखान्तरे चरुपाकप्रकारो भवदेवपद्धत्यादौ दृश्यः । "यवमयश्चरुर्भवति" श्रुतिः । "श्यामाकगावीधुकनैवारयवमयः" तै० स० "चरवे देवानामन्नमोदनो हि चरुः" शत० ब्रा० ४।४।२।१। 'ये पूष्णो चरुं कुर्व्वन्ति प्रपिष्टानामेव कुर्व्वन्ति यथा दन्तकायैवम्" १।७।४।७। "यद्यप्यन्नतः पूषा पैष्टमत्ति सदा चरुम् । अग्नीन्द्रस्वराधमश्नाति तण्डुलोऽत्र विधीयते" कल्पद्रो० । "हेमपात्रगतं दोर्भ्याम् आददानः पयश्चरुम्" "स तेजो वैष्णवं पत्न्यौ विभेजे चरुसंज्ञितम्" "चरोरर्द्धार्द्धभागाभ्यां तामयोजयतामुभे" इति च रघुः ।

**चरुचेलिन्** चरुश्चेलमस्त्यस्य इनि । महादेवे । "चरुचेली मिली मल्ली" भा० श० २८६ अ० शिवनामोक्तौ

**चरुव्रण** पु० चरोर्व्रण इव । चित्रापूपे (पिताईपिठा) त्रिका० ।

**चरुस्थाली** स्त्री ६त० । चरुपाकार्थस्थाल्यां 'तिर्य्यगूर्द्ध्वसमिन्मात्रा दृढा नातिबृहन्मुखी । मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते" कर्म्मप्रदीपे तल्लक्षणमुक्तम् ।

**चर्च** अध्ययने चुरा० उभ० सक० सेट् । चर्चयति ते अचचर्चत्-त । चर्चितः चर्चा ।

**चर्च** उक्तौ भर्त्सने च तु० पर० सक० सेट् । चर्चति अचर्चीत् । उक्तिरत्र विचारार्थपरिभाषणम् ।

**चर्चरी** स्त्री चर्च-बा० अरन् गौरा० ङीष् । १गीतिभेदे । २अब्जुकेशे ३करध्वनौ च । "चर्चरी गीतिभेदे च केशभित्करशब्दयोः" रुद्र । ४हर्षक्रीडाया सुभूतिः । ५कार्प्पटिकाना सादरवचने ६तौर्यत्रिके ७वसन्तसमय क्रीडायाम् ८चर्चर्य्याम् । ९साटोपवाक्ये शब्दार्थचि० १०वर्णवृत्तविशेषे । यथा 'हारयुक्तसुवर्णकङ्कणपाणिपङ्क्तिविराजिता पादनूपुरसङ्गता सुपयोधरद्वयभूषिता । शोभिता वसनेन पिङ्गलपन्नगाधिपवर्णिता चर्चरी तरुणीव खेलति चारुगीतिसुसङ्गता" "अनन्तरे चर्चरी" "जलहर ! संहर एह कोपमइ आढत्तओ, अविरल धारा सारादिसामुहकन्तओ । ए । मज्जि पुहवि भमन्ते जइ पिअ पेक्खिहिमि, तवेअ जं जु करीहिहि, तं सहीहिमि" "अनन्तरे चर्चरी 'गन्धमादण-महुअर-गीएहिं वज्जन्तेहिं परहुअ-तूरेहिम् । पसरिअ-पवणुव्वेल्लिअ-पल्लव-णिअरु सुलण्ठिअ-विविहप्पआरेहिं णच्चइ कप्पअरू' इति च विक्रमोर्व० ।

स्वार्थे क अत ह्रस्वम् । चर्चरिकाप्यत्रार्थे

**चर्चरीक** पु० चर्च-ईकन् फर्फरी० नि० । १महाकालभैरवे २केशविन्यासे ३शाके च मेदि० ।

**चर्चस्** पु० चर्च-असुन् । १निधिभेदे त्रिका० निधिशब्दे दृश्यम्

**चर्चा** स्त्री चर्च-अङ् । १दुर्गायाम् । चुर० चर्च-भावे अङ् । २विचारणायां ३चिन्तायां ४चार्चिक्ये चन्दनादिना देहलेपने च मेदि० । स्वार्थे क । चर्चिका तत्रार्थे चर्चा सैषां तत्परं चन्य वाऽधीते उक्था० ठक् । चार्चिक विचारणाभिज्ञे तत्परग्रन्थाध्येतरि च त्रि०

**चर्चि** स्त्री चर्च-भावे इन् । विचारणायाम् "द्वे चर्चावतिरिच्येते एकया गौरतिरिक्तः एकयायुष्मान्" तै० ब्रा० १।२।२।२।

**चर्चिक्य** न० चार्चिक्य पृषो० ह्रस्वः । चार्चिक्ये हेम०

**चर्चित** त्रि चर्च-कर्म्मणि क्त । १चन्दनादिना कृतलेपे देहादौ । "पयोधराश्चन्दनपङ्कचर्चिताः" ऋतुसं० । 'भुजं चन्दनचर्चितम्' भा० व० २१७२ श्लो० । भावे क्त २तथालेपने न० ।

**चर्त्य** त्रि० चृत-कर्म्मणि यत् । हननीये ।

**चर्पट** पु० चौ० चृप-दीप्तौ अटन् । १चपेटे २क्लिन्ने ३पर्पटे ४पर्पटे च मेदि० । ५भाद्रशुक्लषष्ठ्यां चर्पटिकाम् स्त्री शब्दार्थचि० । ६पिष्टकभेदे चर्पटी स्त्री गौरा० ङीष् । त्रिका० । [र्वीत् । चर्वः ।

**चर्व** गतौ भक्षणे च भ्वा० पर० सक० सेट् । चर्वति अच-

**चर्भट** पु० चर-क्विप् भट-अच् कर्म्मधा० । १इर्वारौ कर्कट्याम् हला० गौरा० ङीष् २हर्षक्रीडायां ३साटोपवाक्ये ४चर्चर्याम् हेम० ।

**चर्म्म** न० चर्म्मन् शब्दार्थे अच् टिलोपः । चर्म्मनिर्म्मिते फलके (ढाल) भरतः ।

**चर्म्मकषा(सा)** स्त्री चर्म्म कष(स)ति कष-अच् । पश्चिमदेशप्रसिद्धे गन्धद्रव्यभेदे (चामरकषा) २सप्तलालतायां चर्म्मकषाप्यत्र भरतः

**चर्म्मकार** त्रि० चर्म्म तन्निर्म्मितं पादुकादि करोति कृ-अण् उप० स० । १पादुकादिकारके "चाण्डाल्यां तीव-

शूद्रायाञ्जातश्चर्म्मकार इति ख्यातः” पराशरोक्ते २सङ्कीर्ण्णजातिभेदे पुंसी स्त्रियां जातित्वात् ङीष्। “चर्म्मकारश्च द्वौ पुत्रौ गणकोमाल्यपूरकः”। “मनुना तु वैदेह्यां निषादाज्जातस्य कारावरास्यचर्म्मकारस्योक्ता यथा “कारावरो निषादात्तु चर्म्मकारः प्रसूयते” उत्तरत्र वैदेह्यामेवेत्युक्तेः अत्रापि तस्यामेवेत्यन्वयः। उशनसा तु “सूताद्विप्रप्रसूतायां सूतोवेणुक उच्यते। नृपायामेव तस्यैव जातीयचर्म्मकारक” इत्युक्तम्। एवञ्च त्रिविधप्रामाण्यात् त्रिविधैव चर्म्मकारजातिः। “चित्रकाणां चर्म्म कार्य्यम्” मनुना तेषां वृत्तिरुक्ता। चर्म्म करोति क्विप् चर्म्मकृदप्यत्र। ण्वुल् चर्म्मकारक तत्रार्थे [स्त्री मेदि० २चर्म्मकारजातिस्त्रियां च

**चर्म्मकारी** स्त्री चर्म्म किरति कॄ—अण्। १चर्म्मकषायामोषधौ।

**चर्म्मकील** पु० चर्म्मणि कील इव। गुह्यजाते रोगभेदे (आरिष) क्वाति रोगे “व्यानो मूढ्रीत्वा श्लेष्माणम्। करोत्यर्म्मसनो वहिः। कीलोपमंस्थिरखर चर्म्मकीलन्तु तद्विदुः। वातेन तोदपारुष्यं पित्तादसितरक्तता। श्लेष्मणा स्निग्धता तस्य ग्रथितत्वमवर्णता” भावप्र० तन्निदानाद्युक्तम्। “चर्म्मकीलं जतुमणिं मशकान् तिलकालकान्। उत्कृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः” भावप्र०। [पलायां हेमच०

**चर्म्मचटका** स्त्री चर्म्मणा चटकेव। (चामचिका) अजिन

**चर्म्मचटी** स्त्री चर्म्म चटति भिनत्ति चट—भेदे अच् गौरा० ङीष्। (चामचिका) अजिनपत्रायां शब्दरत्ना०। स्वार्थे क। चर्म्मचटिकाप्यत्र। [रोगे राजनि०।

**चर्म्मचित्रक** न० चर्म्म चित्रयति चित्र—ण्वुल्। श्वेतकुष्ठ-

**चर्म्मज** न० चर्म्मणि जायते जन—ड। १रोमणि। २रुधिरे च राजनि०।

**चर्म्मण्य** त्रि० चर्म्मणि भवः शरीरावयवत्वात् यत्। चर्म्मभवे। “चेष्टया चर्म्मण्य वाय्यद्वा विज्ञिष्टं संश्लेषयेत्” ऐत० ब्रा० ५।१२।

**चर्म्मण्वती** स्त्री चर्म्मन्+अस्त्यर्थे मतुप् मस्य वः संज्ञायां आसन्दीवदादिना नि०। नदीभेदे। सा च रन्तिदेवस्य यज्ञीयपशूत्तिगोराशिचर्म्मत उत्पन्ना यथाह “महानदी चर्म्मराशेरुत्क्लेदात् सुस्रुवे यत। ततश्चर्म्मण्वतीत्येवं विख्याता सा महानदी” भा० शा०२९अ०। “रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः। अतश्चर्म्मण्वती राजन्! गोचर्म्मभ्यः प्रवर्त्तिता” भा०अनु०६६अ०

नर्म्मदाफलं दक्षिणसिन्धुफलञ्चोक्तं भा० व० ८२अ० तन्माहात्म्य यथा “चर्म्मण्वतीं समासाद्य नियतो नियताशनः। रन्तिदेवाभ्यनुज्ञातो अग्निष्टोमफलं लभेत्”। अतस्तस्या दक्षिणदेशस्थत्वम्। अस्संज्ञायां तु चर्म्मवत् इत्येव। चर्म्मयुक्ते त्रि० स्त्रियां ङीप्। [राजनि०।

**चर्म्मतरङ्ग** पु० चर्म्मणि तरङ्ग इव। जरया पलिते बलौ।

**चर्म्मतिल** त्रि० चर्म्मणि तिला यस्य। चर्म्मोपरिजात कृष्णतिलके (तिल) युक्तदेहादौ [हेम०।

**चर्म्मदण्ड** पु० चर्म्मणा कृतो दण्ड। कशायाम् (कोडा)

**चर्म्मदल** न० चर्म्म दलयति दल—अण्। क्षुद्रकुष्ठभेदे। “सुष्येन कण्डूव्यथनौषचोषास्तलेषु तच्चर्म्मदलं वदन्ति” सुश्रुत। “चर्म्मदलाजगल्लीमशकाभिधाना” सुश्रुत।

**चर्म्मदूषिका** स्त्री चर्म्म दूषति दूषि—ण्वुल्। कोठरोगे राजनि०।

**चर्म्मद्रुम** पु० चर्म्म चर्म्माकारवल्कल तत्प्रधानोद्रुमः। भूर्जद्रुमे राजनि०। तस्य चर्म्माकारवल्कलत्वात् तथात्वम्।

**चर्म्मन्** न०चर—मनिन्। १देहावरिकायां त्वचि, २इन्द्रियभेदे येन स्पर्श उपलभ्यते तस्मिन् ३फलके (ढाल) च। “त्वगिन्द्रियन्तु वायवीय यथाह “देहव्यापि त्वगिन्द्रियम्” भाषा०। तस्य तथात्वं सि० मु० समर्थितं यथा “शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं तच्च वायवीय रूपादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनवातवत्”। मनसा त्वग्योगोज्ञानसामान्ये कारणं यथाह तत्रैव “त्वचोयोगो मनसा ज्ञानकारणम्” “त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः किं तत्र प्रमाणं सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति। ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूपं स्मरणरूपं वा। नाद्य अनुभवसामग्र्यभावात्तथाहि चाक्षुषादिप्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात् तदभावादेव न चाक्षुषादिप्रत्यक्षं, ज्ञानादेरभावादेव न मानसप्रत्यक्षं, ज्ञानाद्यभावे च नात्मनोऽपि प्रत्यक्षमिति। व्याप्तिज्ञानाभावात् नानुमितिः, सादृश्यज्ञानाभावात् नोपमितिः, पदज्ञानाभावात् न शाब्दबोध, इत्यनुभवसामग्र्यभावात् नानुभव। उद्बोधकाभावाच्च न स्मरणम्। नैवं सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षप्रसङ्गात् तदतीन्द्रियत्वे मानाभावात् सुषुप्तिप्राक्काले निर्विकल्पमेकं जीवन

कृते "अश्वत्थामाद्यास्ते सर्वे सुवर्णचात्मजारखे" भा० भी० ८१अ० इत्युक्तम् ।

चर्म्मवसन पु० चर्म्म गजासुरचर्म्म वसनमस्य । कृत्तिवाससि शिवे कृत्तिवासशब्दे २१८८ पृ० दृश्यम् ।

चर्म्मवृक्ष पु० चर्म्मप्रधान वल्कलत्वक्प्रधानो वृक्षः । भूर्जवृक्षे । "खर्ज्जूरा नारिकेलाश्च चर्म्मवृक्षो हरितकी" हरिवं० ११अ० ।

चर्म्मसम्भवा स्त्री चर्म्मणि त्वचि सम्भवति सम्+भू–अच् । स्थूलैलायां हारा० । तत्फलस्य त्वङ्मध्ये सम्भवात्तस्यास्तथात्वम् ।

चर्म्मसार पु० चर्म्मणः सारः । रसे राजनि० । भुक्ताहाररसस्य त्वङ्मध्ये जायमानत्वात् तस्य तथात्वम् ।

चर्म्माम्भस् पु० चर्म्मणोऽम्भ । चर्म्मान्तरस्थे रसे राजनि० । भुक्ताहारादिरसस्य चर्म्माभ्यन्तरस्थत्वात्तस्य तथात्वम् ।

चर्म्मार पु० चर्म्म शिल्पसाधनतया ऋच्छति ऋ–अण् । उप० स० । चर्म्मकारे जटा० ।

चर्म्मावकर्त्तिन् पु० चर्म्म अवकृन्तति स्वशिल्पनिर्वाहाय अव+कृती छेदे णिनि । चर्म्मकारे । तदन्नभक्षणं मनुना निषिद्धं यथा "आयुः सुवर्णकारान्नं यशश्चर्म्मावकर्त्तिनाम्" ।

चर्म्मिक त्रि० चर्म्म चर्म्ममय फलक (ढाल) । युद्धसाधनतयाऽस्त्यस्य ब्रीह्या० ठन् । चर्म्ममयफलकेन योद्धरि (ढाली) तस्य भावः कर्म्म वा पुरोहिता० यक् । चार्म्मिक्य तद्भावे न० ।

चर्म्मिन् त्रि० चर्म्म देहावरक (ढाल) फलक वा अस्त्यस्य वा इनि टिलोप । चर्म्मयुक्ते (ढाली) ख्याते चर्म्मिके । "नागे नागे दश रथा रथे रथे दश वाजिनः । अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्म्मिण" भा० भी० २० अ० । चर्म्माणि वल्कलान्यस्य सन्ति वा इनि । २भूर्जवृक्षे अमर । ३कदल्यां ४भङ्गरीटे च पु० शब्दर० ।

चर्य्या स्त्री चर–"परिचर्य्यापरिसर्य्येत्यादि" पा० सूत्रे निपातनात् भावे क्यप् । १आचारमात्रे "धनमाधस्य शूरस्य मम चर्य्या हि रोचते" रामा० अ० २८।१५ । २गतौ "चर्य्यायां कृपणसुखम्" भा० आ० ६१७ श्लो० । ३ईर्य्यापथस्थितौ परिव्राजकादीनां व्रतानुष्ठाने नियमपरित्यागे । "गदमदचरेत्यादि" पा० कर्म्मणि यत् । ४भक्षणीये आचरणीये त्रि० "षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्" मनु भावे यत् । ५पर्य्यसनरचे न० ।

चर्व भक्षणे दन्तैश्चूर्णने (चिवान) वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । चर्वयति ते चर्वति अचचर्वत् त अचर्वीत् चर्वयां बभूव आस चक्रे चचर्व । चर्व्य चर्वित्वा चर्वित । रसास्वादव्यापारे चर्वणशब्दे दृश्यम् ।

चर्व्वण न० चर्व–भावे ल्युट् । १दन्तैश्चूर्णने (चिवान) २रसास्वादव्यापारभेदे च सा० द० । युच् चर्व्वणाप्यत्र स्त्री । "प्रमाणं चर्व्वणैवात्र स्वाभिन्ने विदुषां मतम्" चर्व्वणाऽऽस्वादनम् । तच्च "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" । "निष्पत्त्या चर्व्वणस्यास्य निष्पत्तिरुपचारतः" "यद्यपि रसाभिन्नतया चर्व्वणस्यापि न कार्य्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपपद्यते" इति च सा० द० ।

चर्व्वा स्त्री चर्व–अङ् । १चर्वणे २तलप्रहारे शब्दार्थचि० ।

चर्व्वित त्रि० चर्व–कर्म्मणि क्त । १चर्विते दन्तैश्चूर्णिते २आस्वादिते च ।

चर्व्वितपात्र न० ६त० । चर्वितस्य ताम्बूलादेस्त्यागार्थम् पात्रम् (पिकदानी) ख्याते पतद्ग्रहे । "ताम्बूलं दर्पणं पानपात्रं चर्वितपात्रकम्" पद्मपु० पा० ख० ।

चर्व्य त्रि० चर्व–कर्म्मणि ण्यत् यत् वा । दन्तैश्चूर्णनीये भक्ष्यभेदे आहारशब्दे ८९९ पृ० भावप्रका० वाक्यम् यथा "भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद् यथोत्तरम् । चर्व्यं च चिपिटकचणकादि" । "षट्कोटि ब्राह्मणांश्च भोजयामास नित्यशः । चूष्यपेयलेह्यचर्व्यैः रसितैश्च दिने दिने" ब्र० वै० पु० ।

चर्षणि पु० कृष-अनि "आदेश्च च" उणा० । मनुष्ये निघ० । "यएकश्चर्षणीनां वसूनाम्" ऋ० १।७।९ "अर्य्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः । यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता" भाग० ६।६।४१ श्लोक, तद्व्याख्यायां "चर्षणयः कृताकृतज्ञानवन्तः" श्रीधरः । विचर्षणि विश्वचर्षणीत्यादिना निघण्टौ चर्षते पश्यतिकर्म्मसूक्तत्वेन तथार्थत्वम् । अस्यायमभिप्रायः "कृषेरादेश्च चः" उणा० २।१०३ सूत्रे उज्ज्वलदत्तेन "आदेश्च च" इति पठित्वा चर्षणि शब्दकीत्युदाहृतम् । अतश्चर्षणिरिप्य सिनिघण्टुश्चोक्तचषधातोरेव । सि० कौ० तु "आदेश्च च" इति पाठात् कृषधातोरेव तच्छब्दनिष्पत्तिरिति भेदः । तयोर्युक्तायुक्तत्वे सुधीभिर्भाव्ये । कादिकारान्तत्वात् स्त्रियां वा ङीप् । २असत्यां स्त्री "चर्षणीनामुटजाद् यो बबन्ध" भाग० १०।२८ १। वावदूकचर्षणी ४ चर्टोन्...

स्त्वर्थपरत्वं युक्तम् । मनुष्यजातिपरत्वे स्त्रियां वा ङीप् । "इदमुक्ता चर्षणीष्टता" ऋ० ८।८०।४। चर्षणी-ष्टताऽसुरहननसहाएेष मनुष्यजातिधारकयजूंष" भा०

चल गतौ भ्वा०पर०सक० सेट् । चलति अचालीत् । चचाल । चेलतु । चलन् चलित उज्ज्वलादि० चाल पचा०चलः । 'कम्पेन निहते चैद्ये चचाल च वसुन्धरा" भा० सा० ४४अ० । "चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्" चाण० । "तिलमात्रमपि चलितुं न शक्नोति" पञ्चत० । आर्षे आत्म० । "न धर्माच्चलते बुद्धिर्धर्मराजस्य धीमत" भा०स० ७८अ० । णिचि । चलयति चालयति । "चाल यन् वसुधां चेमां बलेन चतुरङ्गिणा" भा० आ० ६४अ० कम्पने अक० मित् । चलयति ते । अचीचलत् "चलयन् भृङ्गरुचस्तवालकान्" रघु "ता प्राविशत् कपिव्याघ्र-स्तरूनचलयन् घनै" भट्टि । "यूनां मनश्चलयति प्रसभं नभस्वान्" ऋ० स० गत्यर्थस्य न मित्त्वम् "मिद्ग्ले" इति कविकल्पद्रुमे कम्पार्थएव तस्य मित्त्वोक्तेः "आचालयेयुः शैलांस्ते क्रुद्धाभिन्द्युर्महीतले" हरिव० ५४अ० । पर्वतानाञ्च शिखराण्याचालयति वेगवान्" भा० शा० १५४अ० ।

उद्+अर्द्ध गमने उत्क्रम्य गतौ "पुष्पोच्चलितषट्पदम्" रघुः उत्थाय गतौ च । "उच्चलितः प्रयाताम्" रघु । वि+विशेषेण चलने । "व्यचालीदम्भसां पति" भट्टि ।

चल विलासे तु० प० अ० सेट् । चलति अचालीत् चचाल । चल भृतौ पोषणे चु० सक० उभ० सेट् । चालयति ते अचीचलत् ।

चल त्रि० चल वा पचा० अच् । १तरले, चञ्चले, २कम्प-युक्ते अमर । ३परमेश्वरे पु० । "भूतात्मीरचलश्चल" विष्णु स० । "न स्वरूपात् सामर्थ्यात् नच ज्ञानादि-कात् गुणात् । चलनं विद्यते यस्मादचल कीर्त्तितो-ऽच्युत" स्मृते । वायुरूपेण चलतीति चल" भा० । कम्पार्थकचलतेः स्वार्थे णिचि भावे अच् । ४कम्पने मेदि० । "निद्रुले" कविकल्प० । चलन च रसः कार्यं यथाह सा० का० "धत्ते चक्षु मुकुलकलिकासपद्मक चलश्च रस" । "सततमसौ सत्यभक्तियतया चलकार्यमहर्षि महर्षयो दृन्तौ रसपोषपदार्थे ते अमवादात् मध्याम चकार्यं ते कवृताहं प्रयत्न कार्यते । तदिदमुत्पलपत्मकम् इति । कणादिवत उक्त चलमिति । तदनेन रसः महत्त्वर्थस्य दर्शितम् । रसस्तु चलत् परितस्तं गुरुं चाक्षवद्गुरुरयाऽऽऽ स्वस्ता च तमसा तत्र तत्र प्रवृत्ति-प्रतिबन्धेन क्वचिदेव प्रवर्त्तते" । वा०त०कौ० । "भौमजौ धौ चेश्वरमिदर्शदित भुमेर्द्दभिर्भिः स्वरे" वृ० र० उक्ते अष्टादशाक्षरपादके ५वर्णवृत्तभेदे न० "स इतपूर्वसनकाकपक्षके" रघु । "यथाश्रया प्रव-सता तरवोऽपि चला इव" भाग० ७।११२१। न चक्षु प्रेम चल सुहृत्त्वने" "प्रायचलं गौरवमाश्रितेषु" कुमा०

चलकेतु पु० कर्म० । केतुभेदे स च "अपरस्यां चलकेतु शिखया याम्याग्रयाङ्गुलोच्छ्रितया । गच्छेत् यथा यथोदक् तथा तथा दैर्घ्यमायाति" वृ० स० ११अ० । उक्तः

चलचञ्चु पुंस्त्री चला चञ्चुरस्य । चकोरखगे हेम० ।

चलत्पूर्णिमा स्त्री चलन्ती पूर्णिमा तदुपलक्षित चन्द्र इव । (चाँदा) चन्द्रकमीने त्रिका० ।

चलदङ्ग पुंस्त्री चलन्ति अङ्गान्यस्य । (चेङ्‌ गा) मत्स्यभेदे राजनि० । वा कप् । चलदङ्गक तत्रार्थे जटा० ।

चलदल पु० चलानि चञ्चलानि दलान्यस्य । अश्वत्थवृक्षे अमर । चलपत्रादयोऽप्यत्र । "अङ्गेन (स्त्रीचिह्न-भेदेन) केनापि विजेतुमस्या गवेष्यते किं ? चलपत्र-पत्रम् । न चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतोभयेन" नैष० । तस्य कम्पयुक्तपत्रता वर्णिता ।

चलन न० चल-भावे ल्युट् । १कम्पे २गतौ च । कर्त्तरि ल्यु । ३कम्पयुक्ते त्रि० मेदि० । ४हरिणे पुंस्त्री जटा० जाति त्वात् स्त्रियां ङीप् । करणे ल्युट् । ५चरणे हेमच० ।

चलनक न० चलन+संज्ञायां कन् । चण्डातके हेमच ।

चलनी स्त्री चलत्यनेन चल-आधारे ल्युट् ङीप् । १गज-बन्धन्यां शाय्याम् २घर्घ्यां (घाघरा) वस्त्रभेदे हेमच० ।

चलसङ्क्रान्ति स्त्री कर्म० । अयनांशचलनभेदात् तत्त-दृग्विशेषांशे रव्यादे प्रभाचक्रसञ्चारे अयन सङ्क्रान्ति-शब्दे १२८पृ० विवृतिः । [कृष्णभेदे च रत्नमा० ।

चला स्त्री चल-अच् । १लक्ष्म्यां मेदि० २शिह्लके गन्ध-

चलाचल त्रि० चल-अच् नि० । १चञ्चले अमर २काके पुंस्त्री राजनि० स्त्रियां जातित्वात् ङीष् । "चलाचलै-रनुपदमाहता खुरे" माघः । "अभिनोऽस्य क्षितिं विहाय लक्ष्मीमिव चलाचलाम्" किरा० ।

चलातङ्क पु० चलस्य चलनस्यातङ्कोभयमस्मात् । वातरोग भेदे राजनि० ।

**चलित** त्रि० चल–कर्त्तरि क्त । १कम्पिते अमरः । २गते "चलितदुर्वचनपरिग्रह" "चलितः सुरः पतिरुमे-त्यमाकलम्"माघः । ३प्राप्ते ४ज्ञाते च त्रि० । भावे क्त । ५चलने ६गतौ च न० ।

**चलु** पु० चल–उन् । गण्डूषे हेमच० । [मेदि० ।

**चलुक** पु० चलुना पीयते कन् । १प्रसृतौ २भाण्डभेदे च

**चलेषु** पु० चलो लक्ष्यमार्गाच्च्युतः इषुर्यस्य । लक्ष्यमप्राप्तबाणके धन्विनि । अत्र "उदराश्वेषु क्षेपे" पा० इषु शब्दे परे क्षेपे पूर्वपदस्यान्तोदात्तताविधानात् पूर्वपदमन्तोदात्तम् ।

**चवर्ग** पु०च+प्रातिपदिकात्तद्वर्गीयसमुदाये वर्गप्रत्ययः इत० वा । तालुस्थानोच्चारितानां स्पर्शवर्णानां वर्गे (च छ ज झ ञ) वर्णेषु । ततः "वर्गान्ताच्च" पा० छ । चवर्गीय तद्वर्गभवे त्रि० ।

**चवल** पु० चर्व–बा० कलच् पृषो० । राजमाषे कलायभेदे शब्दार्थचि० । [ ङीप् । तत्रार्थे शब्दर०

**चवि** स्त्री चर्व–इन् पृषो० । चव्ये (चइ) शब्दर० । वा

**चविका** स्त्री चवि+स्वार्थे क । चव्ये अस्य स्त्रीत्वमाह वह्नः "कटूष्णा चविका लघ्वी रोचनी दीपनी मता । शलूकृम्यश्मकासघ्नश्वासशोषविनाशिनी" राजनि० । "भेदिनी कफनाशिनी" इत्यधिकं राजवल्लभेनोक्तम् ।

**चव्य** न० चर्व–कर्मणि यत् पृषो० । १चविकायाम् तस्य स्त्रीत्वमप्याह भरतः । स्वार्थे क चव्यका तत्रार्थे राजनि० । सा च २वचायां मेदि० । [ राजनि० ।

**चव्यजा** स्त्री चव्यमिव जायते जन–ड । गजपिप्पल्याम्

**चव्यफल** न० चव्यमिव फलति फल–अच् । गजपिप्पल्याम् राजनि० ।

**चव्यादि** न० "चव्यं त्रिकटुकं पाठा क्षारं कुस्तुम्बुरूणि च । यमानी पिप्पलीमूलमुभे च विडसैन्धवे । चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत् । शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे । प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् । गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति" चक्रदत्तोक्ते घृतभेदे ।

**चष** भक्षे भ्वा० उभ० सक० सेट् । चषति ते अचषीत् अचाषीत् अचषिष्ट चचाष चेषतुः चेषे ।

**चष** वधे भ्वा० प० सक० सेट् । चषति अच–(चा)षीत् ।

**चषक** पु०न० चष–करणे क्वुन् अर्द्धर्चादि । १मद्यपानपात्रे अमरः । तच्च पात्रादिकं युक्तिकल्पतरावुक्तम् यथा "यत् पानपात्रं भूपानां तच्चषकं बुधैः । काञ्चनं राजतं चैव स्फाटिकं काचमेव च । एवं स्वराष्ट्रिकं च चतुर्थं पृथिवीभुजाम् । इत्यप्यतन्त्रं तेषां निर्णयं पाठसम्मतः । रत्नपट्टिकाञ्चितं रत्नैश्चतुर्भिश्च सम-न्वितम् । मार्त्तिकं दारु काचं वा सर्वसाधारणं मतं । काञ्चनं धातुजं मैत्रं काकुवादिमहीभुजाम् । यत-श्चषकपानादिपात्रं पृथ्वीभुजां भवेत् । यत्र तत्रापि नियम इति भोजस्य सम्मतः" "काञ्चनं परिहृतं चष-कान्तः" माघ । कर्मणि क्वुन् । २मधुनि, ३मद्यभेदे च न० मेदि० [ च सि० कौ० ।

**चषति** पु० चष–भक्षे वधे वा भावे क्तिन् । १भक्ष्ये २वधे

**चषाल** पु०न० चष–चालच् अर्द्धर्चादि । यूपकटके यज्ञिय-पशुबन्धनार्थे यूपमध्यदेशे वलयाकारे काष्ठमये लौह-मये वा पदार्थे अमरः । तच्चषालादिकमुक्तं का० श्रौ० ६।१।२८ । सूत्रादौ "अष्टाश्रयाल पृथमात्रमष्टाश्रि मध्यसंगृहीतम्" २८सू० "यूपपरिमाणानन्तरं यदवशिष्टं पृथक्कृतमंशम् ततश्चषा-लं कर्त्तव्यम् प्रादेशिकाङ्गुलिः प्राच्छिदामधस्तनात् पृथक् इत्युच्यते चषालमिति संज्ञा सं व्यवहारार्था "या चषाले-चषालम्" इत्यादौ । अष्टाश्रि अष्टकोणम् तदपि तत्क्षेणाष्ट-कोणं कुर्यात् तथैव । उलूखलमध्ये संगृहीतम्" कर्क० । "अर्द्धमप्रे प्रतिमुञ्चति" २९सू० "तच्चषालं यूपस्याग्रे अर्द्धं प्रतिमुञ्चति चतमोर्द्धप्रतिमोकविधानाञ्चषालस्य तथा वेधः कार्यः । प्रतिमुञ्चतीति वचनात् चूडाग्रो यूप चषालं च सङ्गिरन्ति गच्छत इति हरिस्वामिन तथा चाह्रापस्तम्बः "मूलतोऽतष्टमपरम् अष्टाश्रिरन्नु पूर्वोऽग्रतोऽणीयान् प्रमाणात्राश्रिरिति" कर्क० "द्व्यङ्गुलं त्र्यङ्गुलं वा तदतिक्रान्तं यूपस्य" ३० सू० "यूपस्य यूपाग्रस्य द्व्यङ्गुलं त्र्यङ्गुलं वा चषालं तदति-क्रान्तं चषालच्छिद्रप्रवेशादतिक्रान्तं भवति अतिक्रम्योर्द्ध्वं निःसृतं भवति तथा चषालस्योर्द्ध्वं प्रवयणं कर्त्तव्यम् यथा चषालो यूपाग्राद्यो द्व्यङ्गुले त्र्यङ्गुले वा तिष्ठतीत्यर्थः" कर्क० "भूषणाश्चितचषालीयकम्" माघ ।

**चह** कल्के (शठतायाम्) भ्वा० पर० सक० सेट । चहति अचहीत् । चचाह चेहतुः ।

**चह** कल्के (शठतायाम्) अद० चुरा० उभ० सक० सेट् । चहयति–ते अचचहत् त । चहया, चहयाम् आस–चकार चक्रे ।

चाट पु॰ चट–भेदे अच्। आदौ विश्वासमुत्पाद्य पश्चात् धनापहर्त्तरि चौरे "चाटचारभटादिषु दत्तं भवति निष्फलम्" स्मृतिः। "चाटतस्करदुर्वृत्तमहासाहसिकादिभिः। पीड्यमानाः प्रजा रक्ष्याः कायस्थैश्च विशेषतः" याज्ञ॰। "चाटाः प्रतारकाः विश्वास्य ये परधनमपहरन्ति" मिताक्षरा

चाटपुट पु॰ "गुरुवंशु स तवैव भवेच्चाटपुटाभिधः" सङ्गीतदामोदरोक्ते तालभेदे।

चाटु पु॰न॰ चट–उण्। १प्रियवाक्ये २मिथ्याप्रियवाक्ये (खोसामुदेरकथा) च। "कुर्वन् चाटुशतान्यपि सम्भ्रमक्षया गिरा" हरिवं॰२०। "नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः" सा॰ द॰। स्वार्थे क। अल्पार्थे "विश्रब्धचाटुकशतानि रतान्तरेषु" सा॰ द॰

चाटुकार त्रि॰ चाटुं करोति। हेत्वादौ प्राप्तस्य टस्यापवादेन "न शब्दश्लोकेत्यादिना" पा॰ अण्। सतत चाटुवाक्यकर्त्तरि। "चाटुकारमपि प्राणनाथं रोषादपास्य या" सा॰ द॰।

चाटुपटु पु॰ ७त॰। भण्डे (भाँड़) हारा॰।

चाटु(टू)लोल त्रि॰ चाटुषु लोलः (चञ्चल)। (खोसामुदे) चाटुकारे हारा॰।

चाटुवटु पु॰ ७त॰। विदूषके क्रीडासहचरे भण्डे।

चाटूक्ति स्त्री ६त॰। प्रियकथने। चाटुवाक्यस्योक्तियत्र। २सेवायाम् हारा॰। [ व्यवहारे।

चाणक पुस्त्री चाणकस्य अपत्यं अण् यलोपः। चाण-

चाणकीन न॰ चणकस्य भवनं क्षेत्रं खञ्। चणकोत्पत्तियोग्यक्षेत्रे।

चाणक्य पु॰ चणकस्य मुनेर्गोत्रापत्यम् गर्गा॰ यञ्। १वात्स्यायने चन्द्रगुप्तमन्त्रिणि कौटिल्ये "तत नन्दा भविष्यन्ति चाणक्योयान् हनिष्यति" विष्णु पु॰। चन्द्रगुप्तशब्दे दृश्यम् सहि नन्दवंशोत्सादनेन मौर्यं चन्द्रगुप्तं राज्येऽभिषिक्तवान्। इयत् कथायां तद्विहितः। चाणक्येन प्रोक्तम् अण्। तत्कृतग्रन्थे २नीतिशास्त्रभेदे च। "चाणक्य सारसंग्रहम्" चाणक्यम्। चणक+स्वार्थे ष्यञ्। ३चणकशब्दार्थे।

चाणक्यमूलक न॰ चणक एव चाणक्यम् तदिव मूलमस्य। (चणकमूली) ख्याते मूलकभेदे। शब्दार्थचि॰

चाणू(नू)र पु॰ कंसानुचरे मल्लयुद्धाभिज्ञेऽसुरभेदे। "नागं कुवलयापीडं चाणू(नू)रं मुष्टिकं तथा" हरिवं॰४२अ॰। "वराहश्च किशोरश्च मतौ दानवसत्तमौ। मल्लौ रङ्गगतौ तत्र जातौ चाणू(नू)रमुष्टिकौ" हरिव ७५अ॰। अस्य दन्तवक्रनामध्येति केचित्।

चाणू(नू)रसूदन पु॰ चाणू(नू)रं सूदयति सूदि–ल्यु। वासुदेवे कृष्णे तद्वधकथा हरिवं॰ ८७अ॰। "तत क्रोधाभिताम्राक्षः कंसं परमकोपनः। चाणू(नू)रमादियुद्धे कृष्णस्य समाह्वयत्" इत्युपक्रमे "दोर्भ्यामानम्य कृष्णस्तु चाणू(नू)र पूर्वजीवितम्। प्राहरज्जानुना मूर्ध्नि वक्षस्याहत्य जानुना। निःसृते चास्य रुधिरे तस्य नेत्रे समञ्जने। तापनीये यथा घण्टे कक्षोपरि विलम्बिते। पपात स तु रङ्गस्य मध्ये निःसृतलोचनः। चाणू(नू)रो विगतप्राणो जीवितान्ते महीतले"। चाणू(नू)रमर्दनादयोऽप्यत्र।

चाण्ड पु स्त्री चण्डस्यापत्यं शिवा॰ अण्। १चण्डस्यापत्ये। चण्डस्य भावो युवा॰ अण्। २चण्डतायाम् न॰।

चाण्डाल पुंस्त्री चण्डाल एव स्वार्थे अण्। चण्डालशब्दार्थे अमरः। स्त्रियां जातित्वात् ङीप्।

चाण्डालकि पु॰ स्त्री चाण्डालस्यापत्यम् इञ् "व्यासवरुडनिषादचाण्डालेत्यादि" पा॰ अकङ्। चण्डालापत्ये।

चाण्डालिका स्त्री चण्डालेन निर्वृत्ता ठक्। वीणाभेदे अमरः। चण्डालेन कृता कुला॰ अण्। २चण्डालकृतवस्तुमात्रे त्रि॰

चाण्डालिकाश्रम न॰ भारतप्रसिद्धे तीर्थभेदे "कोकामुखे विगाह्याय गत्वा चाण्डालिकाश्रमे" भा॰आनु॰२५अ॰।

चाण्डाली स्त्री चाण्डमालाति आ+ला–क गौरा॰ ङीष्। १लिङ्गिनीलतायां राजनि॰ जातौ ङीप्। २चाण्डालजाति स्त्रियाञ्च।

चातक पुस्त्री चत–याचने कर्त्तरि ण्वुल्। सारङ्गे स्तोकक ख्याते खगभेदे स्त्रियां जातित्वात् ङीष्। अयञ्च पक्षी लट्वाह्वयेषु सुश्रुते पठितः। "लट्वाह्वया विष्किराश्चेत्युक्ता "मधुराः कषायो दोषघ्नाश्चेति" सामान्यतस्तद्गुणाश्चोक्ताः। "स्तनयन्तमतृप्तचातकाम्बुधराः" माघ। "किं चातकं फलमपेक्ष्य सवलु पाताम्" उद्भट।

चातकानन्दन पु॰ चातकमानन्दयति आ+नन्द–णिच्–ल्यु। १वर्षाकाले राजनि॰। २मेघे। इष्टजलपानस्य चातकप्रतत्वेन मेघस्य तथात्वम्।

चातकाष्टक न॰ काव्यभेदे काव्यशब्दे दृश्यम्।

चातन न॰ चत–णिच् ल्युट्। १अर्दने २पीडने च।

चातुर त्रि० चतुर एव स्वार्थे अण्। १चतुरे २नियन्तरि ३नेत्रगोचरे मेदि०। चतुर्भिरुह्यते वैनकोऽण्। “च-तुश्चक्रयुक्ते २शकटे न० सि० कौ०

चातुरक्ष न० चतुर्भिरक्षैर्निष्पाद्यते अण्। १क्रीडाभेदे २उपधानभेदे (गालवालिश) पु० मेदि०।

चातुरर्थिक पु० चतुर्षु अर्थेषु विहितः ठक्। “तद् अस्मिन्नस्तीति देशे तन्नाम्नि” पा० ४।२।६७। “तेन निर्वृत्तम्” ६८। “तस्य निवासः” ६९। “अदूरभवश्च” ७० पा० सूत्रचतुष्टयोक्तार्थेषु विहिते प्रत्ययभेदे। “जनपदे लुप्” पा०। जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात्” सि० कौ०।

चातुराश्रमिक त्रि० चतुर्षु आश्रमेषु विहित ठक्। ब्रह्मचर्य्याद्याश्रमविहिते धर्मे। “चातुर्वेद्यं यथावर्ण्यं चातुराश्रमिकान् परम्। तानहं सम्प्रवक्ष्यामि शाश्वतान् लोकभावनान्” भा० आ० ६५अ०।

चातुराश्रम्य न० चत्वार आश्रमाः संज्ञात्वात् कर्म्म० तत ब्राह्मणा० स्वार्थे ष्यञ्। ब्रह्मचारिगृहस्थवानप्रस्थ-भिक्षुरूपेषु आश्रमेषु “चातुर्वेद्यं चातुर्होत्रं चातु-राश्रम्यमेव च भा० शा० ४६अ०।

चातुरिक पु० चातुरीं वेत्ति ठक्। सारथौ जटाधरः।

चातुरी स्त्री चतुरस्य भाव ष्यञ् षित्वात् ङीष्यलोपौ। चतुरतायां “सङ्कटचातुरीतुरी” नैष०

चातुर्जातक न० चतुर्जातकमेव स्वार्थेऽण्। गुडत्वगेला-नागकेशररूपे गन्धचतुष्टये राजनि०।

चातुर्दश न० चतुर्दश्यां दृश्यते वैचिकोऽण्। १रक्षसि सि० कौ०। चतुर्दश्यां भवः सन्धिवेला० अण्। २चतु-र्दशीभवे त्रि०

चातुर्दशिक पु० चतुर्दशीम् अनध्यायेऽधीते ठक्। चतु-र्दश्यामध्येतरि। “शिष्यं हन्ति चतुर्दशी” मनुना तस्याः अनध्यायतोक्तेस्तथात्वम्।

चातुर्भद्र न० चतुर्भद्रमेव स्वार्थे अण्। नागरातिविषा-मुस्तागुडूचीरूपे द्रव्यचतुष्के राजनि०।

चातु(र्थ)र्थिक पु० चतुर्थे चतुर्थेऽह्नि भवः ठक् तुक् वा। चतुर्थचतुर्थदिनजाते ज्वरभेदे “चातुर्थ(र्थि)कोज्वरोद्दो ग्रन्थे चैव ज्वराश्रतः। जम्बूफलं हरिद्रा च सर्पस्यैव च कञ्चुकम्। सर्व्वज्वराणां धूपोऽयं हर-चातुर्थ(र्थि)कस्य च” गारुडे १८७अ०।

चातुर्वर्ण्य न० चत्वारो वर्णा एव चतुर्वर्णा० स्वार्थे ष्यञ्। ब्राह्मणादिषु चतुर्षु वर्णेषु “चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः” गीता।

चातुर्भद्रावलेह पु० चतुर्भिर्भद्रैर्निर्मितः अण् कर्म०। “कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह। कासश्वासज्वरहरः श्रेष्ठो लेहः कफान्तकृत्” चक्र-दत्तोक्ते अवलेहभेदे।

चातुर्भौतिक त्रि० चतुर्भिः पृथिव्यप्तेजोवायुभिर्निर्वृत्तः ठक् अनुश०द्विपदवृद्धि। चतुर्भिर्भूतैर्निष्पादिते देहादौ नैयायिकादिमते आकाशस्यारम्भकत्वाभावात् चार्वाक-मते आकाशस्याभावात् भौतिकानां चतुर्भूतारब्धता। वेदान्त्यादिमते देहस्य पाञ्चभौतिकत्वमिति भेद। यद्यपि मनुष्यदेहस्य पार्थिवत्वं नैयायिकैरङ्गीकृत तथापि अन्यभूतानां तत्रोपष्टम्भकत्वात् चातुर्भौतिकत्वम् इति विवेक।

चातुर्महाराजिक पु० चत्वारो महाराजिकाः आकार-त्वेनास्त्यस्य प्रशा० अण्। परमेश्वरे “महाराजिक चातुर्महाराजिक” भा० शा० २८० अ० नारदकृतविष्णु-स्तुतौ। महाराजिकानां च चतुःसंख्यकगणदेवतात्वात् तस्य तदात्मकत्वेन तथात्वम्।

चातुर्मास त्रि० चतुर्षु मासेषु भव० संज्ञायाम् अण्। चतुर्षु मासेषु भवे। २इष्टौ ३पौर्णमास्यां च स्त्री ङीप्। संज्ञायान्तु यज्ञे ण्यः। चातुर्मास्य इत्येव तत्रार्थे इत्यन्यम्

चातुर्मासिक त्रि० चतुरो मासान् व्याप्य ब्रह्मचर्य्यमस्य ठक्। चतुर्मासव्यापकब्रह्मचर्य्ययुक्ते वर्णिनि। यज्ञे तु “चतुर्मासात् ण्यो यज्ञे” वार्त्ति० ण्य चातुर्मास्य इत्येव।

चातुर्मास्य त्रि० चतुर्षु मासेषु भवो यज्ञः “चतुर्मासात् ण्यो यज्ञे” वार्त्ति० ण्य। चतुर्मासव्याप्ये यज्ञभेदे। चातुर्मास्ये च चत्वारि पर्व्वाणि वैश्वदेववरुणप्रघासशाक-मेधशुनासीरीयसंज्ञानि। तत्कर्त्तव्यप्रयोगादि का० श्रौ० ५अध्यायादौ दृश्यम्। तदारम्भकालश्च फाल्गुनीपूर्णि-मोत्तर प्रतिपदि तत्रोक्तः। २वार्षिकचातुर्मास्यकर्त्तव्ये व्रते च यथाह वराहपु० “आषाढशुक्लद्वादश्यां पौर्णमास्यामथापि वा। चातुर्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे। अभावे तु तुलार्केऽपि मन्त्रेण नियमं व्रती। कार्त्तिके शुक्ल-द्वादश्यां विधिवत् तत् समापयेत्। चतुर्षोपि हि तद्वीर्य्यं चातुर्मास्यं व्रतं नरः। कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत्समापयेत्”। मात्स्ये “चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि। [illegible] नरो ह्य

विवर्जनात्। तैलस्य वर्जनादेव सुन्दराङ्गः प्रजायते। कटुतैलपरित्यागात् शत्रुनाशः प्रजायते। लभते सन्ततिं दीर्घां स्थालीपाकमभक्षयन्। कटा भूमिं सदा-शोभी मधुमांसस्य वर्जनात्। पराधिनीर्वृतोभक्षी विष्णुभक्तश्च जायते। एकान्तरोपवासेन विष्णुलोकमवाप्नुयात्। धारण्यान्नखलोम्नाञ्च गङ्गास्नानं दिने दिने। ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते। घृतत्यागात् सुलावण्यं सर्वस्निग्धवपुर्भवेत्। फलत्यागेन मतिमान् बहुपुत्रश्च जायते। नमो नारायणायेति नक्तऽनशनजं फलम्। पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम्। एवमादिकृतैः पार्थ। तुष्टिमायाति केशव। "एकैव यतिमधिकृत्य काठकगृह्यम्। "एकरात्रं वसेत् ग्रामे नगरे पञ्चरात्रकम्। वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत्"। एतद्गन्तृविषयम्। "ऊर्द्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासी" इति शङ्खोक्तेः। "चातुर्मास्यगते या (द्वितीया) तु" ति॰त॰ धनञ्जयोक्तौ

**चातुर्मास्यद्वितीया** स्त्री "आषाढे फाल्गुनोर्ज्जे च या द्वितीया विधुक्षये। चातुर्मास्यद्वितीयाख्याः प्रयच्छन्ति मनोरथ" इति कृत्यतत्त्वोक्ते आषाढादिद्वितीयाचतुष्के

**चातुर्य्य** न॰ चतुरस्य भाव ष्यञ्। चतुरतायां दक्षतायाम् "चातुर्य्यं सुदृढमनोभवया रतेषु" सा॰ द॰ "सभोगश्चेह चातुर्य्यैश्चरिताद्भुतमनोहरैः" भा॰ आ॰ २९०५।

**चातुर्वर्ण्य** न॰ चत्वारो ब्राह्मणादयो वर्णाः ष्यञ् स्वार्थे ष्यञ्। ब्राह्मणादिषु चतुर्षु वर्णेषु "चातुर्वर्ण्यं मया सृष्टमिति" गीता। भावे-ष्यञ्। २चतुर्वर्णधर्मे। वर्णभेदेन धर्म-भेदा यद्वेन दर्शिता यथा।

"चातुर्वर्ण्यहितार्थाय ब्रह्म शास्त्रमथाकरोत्। यजनं याजनं दानं तथैवाध्यापनक्रियाम्। प्रतिग्रहञ्चाध्ययनं विप्रः कर्म्माणि कारयेत्। दानमध्ययनञ्चैव यजनञ्च यथाविधि। क्षत्रियस्य तु वैश्यस्य कर्मेदं परिभाषितम्। क्षत्रियस्य विशेषेण प्रजानां परिपालनम्। कृषिगोरक्ष वाणिज्यं वैश्यस्य परिकीर्त्तितम्। शूद्रस्य द्विज शुश्रूषा सर्व्वशिल्पानि चाप्यथ। क्षमा सत्यं दमः शौचं सर्व्वेषामविशेषतः। ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः। तेषां जन्म द्वितीयन्तु विज्ञेयं मौञ्जिबन्धनम्। आचार्य्यस्तु पिता प्रोक्तः सावित्री जननी तथा। नक्षत्रवतिथाश्चैव मौञ्जीबन्धनजन्मनि। विना शूद्रसमास्तावद्द्विजेनास्तु विध

र्णे। यावद्वेदे न जायन्ते द्विजाज्ञेया स्तु तत्परम्"। "ब्राह्मणः क्षत्रियोवैश्यः शूद्रश्चेति वर्णाश्चत्वारः। तेषामाद्यास्त्रिजातयः। तेषां निषेकाद्यः श्मशानान्तो मन्त्रवत् क्रियासमूहः। तेषाञ्च धर्मा, ब्राह्मणस्याध्यापनं क्षत्रियस्य शस्त्रनिष्ठता वैश्यस्य पशुपालनं शूद्रस्य द्विजातिशुश्रूषा। द्विजानां यजनाध्ययने। अथैतेषां वृत्तयः ब्राह्मणस्य याजनप्रतिग्रहौ, क्षत्रियस्य क्षिति-त्राणं, कृषिगोरक्षवाणिज्यकुसीदयोनिपोषणानि वैश्यस्य, शूद्रस्य सर्वशिल्पानि। आपद्यनन्तरा वृत्तिः" विष्णु स॰।

**चातुर्होत्रक** पु॰ चतुर्होत्रप्रतिपादकग्रन्थस्य व्याख्यानः कदस्यात् ठञ्। चतुर्होत्रप्रतिपादकग्रन्थव्याख्याने। चतुर्होतृणां कर्म्म अण्। चातुर्होत्र चतुर्णां होतॄणां कर्मणि। चतुर्होतृयज्ञे उदा॰।

**चातुष्टय** पु॰चतुष्टय कलापस्थमस्ति वेत्ति अधीते वा अण्। "तन्त्राच्च कोपधात्" पा॰ कोपधात् प्रत्ययस्य लुको-विधानात् अस्य च कोपधत्वाभावात् न लुक्। चतुष्टय ष्ट्यभिज्ञे

**चातुष्प्राश्य** न॰ चतुर्भिरध्वर्य्युब्रह्मादिभिर्ऋत्विग्भिः प्राश्यम् तत स्वार्थे ष्यञ्। चतुर्ऋत्विजां भोजनपर्य्याप्ते ओदने। "चातुष्प्राश्यमोदनं पचन्ति" शत॰ब्रा॰२।१।४।४। "दर्शपौर्णमासानीजानोदक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयेत्" का॰ श्रौ॰ ४।६।१०।

**चात्र** न॰ चाय–करणे ष्ट्रन्। अग्निमन्थनयन्त्रावयवभेदे। कात्यायनश्रौतसूत्रे ६१ पृष्ठे दृश्यम्। तत्र च पृष्ठे चत्र-मिति पाठः प्राचीनमुद्रितग्रन्थपाठानुसारेण प्रमादात् मुद्रितः सर्व्वत्र चात्रमित्येव पाठ साधुः का॰ श्रौ॰ ४।८।२६ सूत्रभाष्ये तत्स्वरूपादिकम् कर्कं आह।

"अग्ने पुरस्तात् प्रत्यङ्मुखे स्थिते मन्थनं कुर्य्यात्। तत्र च प्रथममधरारणिमुत्तराग्रां निधाय उत्तरारण्या ऐशानदिग्भागादष्टाङ्गुलदीर्घं द्व्यङ्गुलविपुलं प्रमन्थं छित्त्वा तस्य मूलं चात्रबुध्ने प्रवेश्य अधरारण्याः मूला-दष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्यक्त्वा तदन्तराले अङ्गुलचतुष्टयपरिमिते पर्शारण्यन्ते मध्याम काया चात्रबुध्नप्रोतस्य प्रमन्थस्याग्रं तत्र निधाय चात्राग्र कीलकापस्थोपस्थु दर्भपाशोदौर्ढ्यौ निधाय बन्ध चार-यित्वा चात्रं नेत्रेण प्रदक्षिणं निर्वेष्टयित्वा तथा मन्थनं कुर्य्यात् यथा जातोऽग्निः प्राच्यां पतति तत्र यज-मानः मातृमुखो मन्त्रधारण करोति पत्नी चात्र

सिन्धूद्भवं पाण्डु दीर्घं लघु घनं महत्। अस्य वातेन नश्यन्तु तृष्णामूर्च्छामदोभ्रमाः। नारिष्टं न भयं तस्य यस्येदं चामरं गृहे। क्षीरोदसम्भवं श्वेतं दीर्घं लघु घनं महत्। अस्य चामरवातस्य विशेषो गुण विस्तरः। माल्येन तपसा लभ्यो देवानामपि जायते। ध्रियतेऽभ्यन्तरे विष्णोर्नामैः सम्पत्तिलोलुपैः। एषां पूर्वयदुक्तेयं जातिदोषगुणादिकम्। स्थलजे जलजे चैव भाव्यमेतद्विशेषणम्। स्थलजं सुखदं छत्र्कि दाहे निपतिपायते। जलज यच्छिद्रदं छत्र महान्तं भूमषुह्रिरेत्। चामराणां समुद्दिष्टमित्येवं लक्षणद्वयम्। एवं विकल्प्य यो धत्ते स राजा सुख मन्यते। जलज चामरं राजा यो धत्ते जाङ्गलेश्वरः। तस्याचिरात् कुल वीर्यं लक्ष्मीरायुश्च नश्यति। अनूपाधीश्वरो राजा यो वहेत् स्थलजं तथा। तस्य तानि विनश्यन्ति लक्ष्मीरायुर्यशो बलम्। नालं वर्गद्वये तेषां विधेयं शिल्पिना क्रमात्। संस्कारो वालुकायन्त्रे मकरध्वजिकादिभिः। तद्रूपघनिलकायात् कलिमत्वं विपद्यते"।

"सचामरे देवमसेविषाताम्" कुमा०। "मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्त्तमानम्" (?) — "चलत्सुवर्णचामरचारुमध्यम्" माघः। "शशिप्रभं छत्रमुभे च चामरे" रघु। अस्य स्त्रीत्वमपि वा ङीप्। तत्रार्थे भरतः।

**चामरग्राह** त्रि० चामरं गृह्णाति ग्रह—अण् उप० स०। चामरेण वीजनकर्त्तरि स्त्रियां टाप् तत्वबोधमते अण् ङीप् इति भेदः। तत, रेवत्या० अपत्ये ठक्। चामरग्राहिक तदपत्ये पुंस्त्री। णिनि चामरग्राहिन् तत्रार्थे त्रि० स्त्रियां ङीप्।

**चामरपुष्प(क)** पु० चामरमिव पुष्पमस्य। १क्रमुके, २काशे, ३केतके ४आम्रे च मेदि०। एषां चामरतुल्यगुच्छवत्त्वात् तथात्वम्। वा कप्। तत्रार्थे जटा०।

**चामरिन्** पुंस्त्री चामरमिव केशरोऽस्त्यस्य इनि। १घोटके जटाध०। २चामरयुक्तमात्रे त्रि० स्त्रियां ङीप्।

**चामीकर** न० चमीकरे स्वर्णाकरभेदे भवम् अण्। १स्वर्णे २धूस्तूरे च अमरः। "जगतीरिव स्फुरितचारु चामीकराः" माघः। तस्य विकारः अण्। ३स्वर्णमये त्रि०। "सपद्मचामीकरकिङ्किणीक" कुमा०। अस्योत्पत्त्यादिकं कनकशब्दे १६४४ पृ० उक्तम्।

**चामुण्डा** स्त्री "यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता। चामुण्डेति ततो लोके ख्याता देवी भविष्यसि" देवीमा० निरुक्तनामके देवीभेदे। २परब्रह्मणः समष्टिरूपशक्तिभेदे ३ब्रह्मविद्यायाश्च गुप्तवती। तत्र (ऐं ह्रीं क्लीं चामुण्डायै विच्चे) इति चण्डिकानर्वाणार्थनिर्णये उक्तं यथा।

"निर्धूतनिखिलध्वान्ते। नित्यमुक्ते। परात्परे।। अखण्डब्रह्मविद्यायै चित्सदानन्दरूपिणि।। अनुसन्दध्महे नित्यं वयं त्वां हृदयाम्बुजे। इत्थं विज्ञापयत्येषा या कल्याणी नवाक्षरी। अस्या महिमलेशोऽपि गदितुं केन शक्यते। बहूनां जन्मनामन्ते प्राप्यते भाग्यगौरवात्। एनमर्थं गुरोर्लब्ध्वा तस्मै दत्त्वा च दक्षिणाम्। आशिषश्च परां लब्ध्वा मन्त्रसिद्धिमवाप्नुयादित्यादि"। अत्र प्रथमश्लोके संबुद्धित्रय ततश्चतुर्थ्यन्तत्तत पुन सम्बुद्धित्रयमिति सप्तभिः पदैः क्रमेण मन्त्रे सप्तधा परिच्छेदः। पदानां तत्तद्धि भक्त्यन्तता तत्तदर्थोद्येति कथित तदुत्तरपद्यार्द्धे नाकाङ्क्षित पदानामध्याहार उक्त। इतरत् सुस्पष्टम्। सच्चिदानन्दात्मकपरब्रह्मधर्म्मत्वाद्देवशक्तेरपि त्रिरूपत्वम्। तत्र चिद्रूपा महासरस्वती वाग्बीजेन (ऐं) सम्बोध्यते। ज्ञानेनैवाज्ञाननाशात् निर्धूतनिखिलध्वान्तपदेन तद्विवरणम् युक्तमेव। नित्यत्वं त्रिकालाबाध्यत्वम्। अतएव सत्त्वं कल्पितवियदादिप्रपञ्चनिराधाधिष्ठानत्वम्। एतेन सद्रूपात्मकलक्ष्मीरूपस्य हृल्लेखया (ह्रीं) सम्बोधनमिति व्याख्यातम्। पर उत्कृष्टः सर्वानुभवसंवेद्य आनन्द एव तस्यैव पुरुषार्थत्वात्। "आत्मन कामाय सर्वं प्रियं भवतीति" श्रुत्या तदितरेषामपि तदर्थत्वेनानन्दस्यैव सर्वशेषितया परत्वात्। स च मानुषानन्दमारभ्योत्तरोत्तर शतगुणाधिक्येन श्रुतौ बहुशोवर्णितः "तेषु परमातिशायी स एको ब्रह्मण आनन्द" इति परमावधित्वेनाम्नातएव परात्पर "स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्तति" इति पुराणे च तेन आनन्दप्रधानमहाकालीस्वरूपस्य कामबीजेन (क्लीं) सम्बोधनमुक्तम्। चामुण्डाशब्दो हि मोक्षकारणीभूतनिर्विकल्पकवृत्तिविशेषपरः तादर्थ्ये चतुर्थी चमूं सेना वियदादिसमूहरूपां पुद्गाति खण्डयो रैक्यात्मानि आदत्ते स्वात्मसाक्षात्कारेण नाशयतीति व्युत्पत्ते। पृषोदरादित्वात्सर्वं साधु" इत्याहु। "यया नयात्तोपहृतौ चण्डमुण्डौ महासुरौ" इति पद्ये द्विवचनयोः आरम्भेण तूलमूलभेदेनाज्ञानद्वयपरत्वम् "यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता।

चान्द्रायणम्" रघु० । ३चन्द्रकान्तमणौ पु० हेमच० । ४चन्द्रसम्बन्धिमात्रे त्रि० स्त्रियां ङीप् "गुरुकामग्रामुगां बिभ्रत् चान्द्रीमभिनभःश्रियम्" माघ । सा च ५श्वेतकण्टकार्य्यां राजनि० । ६आर्द्रके न० राजनि० । ७मृगशीर्षनक्षत्रे न० तस्य तद्देवताकत्वान्नक्षत्रशब्दे ३२०७ पृ० उक्तम् [ राजनि० ।

**चान्द्रक** न० चान्द्रमार्द्रकमिव कायति कै—क । शुण्ठ्याम्

**चान्द्रपुर** पु० १पूर्व्वदेशस्थे देशभेदे २तद्देशवासिषु ब० व० । स च देशः "अथ पूर्व्वस्याम्" इत्युपक्रमे "चान्द्रपुरा शूर्पकर्णाः" वृ० स० १४अ० कूर्म्मविभागे उक्तः ।

**चान्द्रभागा** स्त्री चान्द्रो भागोऽस्त्यस्याम् । चन्द्रभागानद्याम् चन्द्रभागाशब्दे दृश्यम् ।

**चान्द्रमस** त्रि० चन्द्रमस इदम् अण् । १चन्द्रसम्बन्धिनि दिनमासादौ । "तिथिश्चान्द्रमस दिनम्' ति० त० सूर्य्यसिद्धान्तीयमानकथने पठितम् । २मृगशिरोनक्षत्रे न० तस्य तद्देवताकत्वात्तथात्वम् । ३चन्द्रसम्बन्धिमात्रे त्रि० स्त्रियां ङीप् "कक्षोदया चान्द्रमसीव लेखा" । "पद्माश्रिता चान्द्रमसीमभिख्याम्" कुमा० । "सुरद्विपचान्द्रमसी सुधेव" रघु ।

**चान्द्रमसायनि** पु० चन्द्रमसोऽपत्यम् तिका० फिञ् । बुधग्रहे हला० । बुधे० । चान्द्रमसायनोऽप्यत्र ।

**चान्द्रमास** पु० कर्म्म० । चन्द्रसम्बन्धिमासे चान्द्रशब्दे दृश्यम्

**चान्द्रव्रतिक** पु० चान्द्रव्रतं चान्द्रायणं वा व्रतमस्त्यस्य ठन् । १चन्द्रतुल्यव्रताचारिणि नृपे । "परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः । तथा प्रकृतयो यस्मिन् स चान्द्रव्रतिको नृपः" मनुः । २चान्द्रायणव्रताचारिणि च

**चान्द्रायण** न० चन्द्रस्यायनमिवायनमत्र पूर्व्वपदात् संज्ञायां णत्वम् । संज्ञायां दीर्घः स्वार्थेऽण् वा । व्रतभेदे तल्लक्षणादिक मिता० उक्तं यथा । "तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान् । एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन्" या० । "चान्द्रायणाख्यमुत्तमं कुर्व्वन् मयूराण्डपरिमितान् पिण्डान् शुक्ले आपूर्य्यमाणपक्षे तिथिवृद्ध्या चरेद्भक्षयेत् यथा प्रतिपत्प्रभृतिषु तिथिषु चन्द्रकलानामेकैकस्योपचयवृद्धिरर्द्धमासे । तद्वत्पिण्डान् प्रतिपद्येको द्वितीयायां द्वाविति एवमेकैकस्य वर्द्धयन् भक्षयेद्यावत्पौर्णमासी तत्र पञ्चदश्यां पञ्चदश ग्रासान् भुक्त्वा ततः कृष्णपक्षे प्रतिपदि, चतुर्दश द्वितीयायां त्रयोदशेत्येवमेकैकशो ग्रासान् ह्रासयन्नमावास्याचतुर्दशी । ततश्चतुर्दशग्रासमेकं ग्रास पश्चिमेन्दुक्षयेऽथोपवसेत् । तथा च वशिष्ठ । "एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् । इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिरिति" । चन्द्रस्यायनमिवायनं चरणं यस्मिन् कर्म्मणि ह्रासवृद्धिभ्यां तच्चान्द्रायणम् संज्ञायां दीर्घः (णत्वञ्च) इदञ्च यववत् प्रान्तयोरणीयो मध्ये स्थवीय इति यवमध्यमिति कथ्यते । एतदेव व्रतं यदा कृष्णपक्षप्रतिपदि प्रक्रम्य पूर्व्वोक्तक्रमेणानुष्ठीयते तदा पिपीलिकामध्यमिव कृशमध्यत्वमिति पिपीलिकातनुमध्यमिति कथ्यते तथाहि । पूर्व्वोक्तक्रमेण कृष्णप्रतिपदि चतुर्दश ग्रासान्भुक्त्वैकैकग्रासापचयेन चतुर्दश्यां ग्रासं भुञ्जीत ततश्चतुर्दश्यामेकं ग्रासं पश्चिमामावास्यायामुपोष्य शुक्लप्रतिपद्येकमेव ग्रासमश्नीयात्तत एकैकोपचयभोजनेन पक्षशेषे निर्व्वर्त्यमाने पौर्णमास्यां पञ्चदशग्रासाः सम्पद्यन्त इति युक्तैव पिपीलिकामध्यता । तथाच वशिष्ठ । "मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश । ग्रासापचयभोजी सन् पक्षशेषं समापयेत् । तथैव शुक्लपक्षादौ ग्रासम्भुञ्जीत चापरम् । ग्रासोपचयभोजी सन् पक्षशेषं समापयेदिति" यदा त्वेकस्मिन् पक्षे तिथिवृद्धिह्रासवशात् षोडश दिनानि भवन्ति चतुर्दश वा तदा ग्रासानामपि वृद्धिह्रासौ वेदितव्यौ 'तिथिवृद्ध्या पिण्डांश्चरेदिति नियमात् । गौतमेन त्वत्र विशेषो दर्शितः "अथातश्चान्द्रायणं तस्योक्तो विधिः । कृच्छ्रे वपनं व्रतञ्चरेत् । श्वोभूतां पौर्णमासीमुपवसेत् । आप्यायस्व" (ऋ० १।९१।१६) 'सन्ते पयांसि (१७) नवोनव" (ऋ० १०।८५।१९) इति चैताभिस्तर्पणमाज्यहोमो हविषश्चानुमन्त्रणमुपस्थानं चन्द्रमसः । "यद्देवा देवहेडनम्" इति चतसृभिराज्यं जुहुयात् । देवकृतस्येति चान्ते समिद्भिस्तिसृभिः । ओं भूर्भुवः स्वः महः जन तपः सत्यं यशः श्रीः ऊर्क् इट् ओजः तेजः पुरुषः धर्म्मः शिव इत्येतैर्ग्रासानुमन्त्रणम् । प्रतिमन्त्रं मनसा नमः स्वाहेति वा सर्व्वान् एतैरेव ग्रासान् प्रतिभुञ्जीत ग्रासप्रमाणमास्याविकारेण चरुभैक्ष्यसक्तुकणयावकपयोदधिघृतमूलफलोदकानि हवींष्युत्तरोत्तरं प्रशस्तानि पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेनापरपक्षमश्नीयात् । अमावास्यायामुपोष्यैकैकोपचयेन पूर्व्वपक्षं विपरीतमेकेषाम् एवं चान्द्रायणो मासः' इति । अत्र

**चान्द्री** स्त्री चन्द्रस्येयम् अण्। १चन्द्रपत्न्यां २ज्योत्स्नायाञ्च। तत्तुल्यशुभ्रत्वात् ३श्वेतकण्टकार्य्याञ्च राजनि०। ४चन्द्रसम्बन्धिन्यां स्त्रियां चान्द्रशब्दे उदा०।

**चाप** पु० चपस्य वंशभेदस्य विकारः अण्। १धनुषि, अमरः मेषादवधिके नवमे राशौ च "इष्वासमाहते चापैरसिचर्मायुधे स्वके" मत्स्य। "स चापमुत्सृज्य विवृद्धमत्सरः" रघुः। "कश्चापमसितमाम पत्त्रगाद्रूपलक्षण" भा० वि० ४२अ०। ३वृत्तकलार्द्धे "दृष्टीकृत चक्रमुशन्ति चापम् कोदण्डखण्डं खलु तूर्य्यगोलम्" सि० शि०। ज्याभेदेन चापभेदा यथा च लोका० दर्शित० तच्च वाक्य ज्याशब्दे २४०४ दर्शितम्। [ शब्दार्थ चि०।

**चापपट** पु० चापस्याधायवद्रूप-पटः पत्त्रमस्य। पियालवृक्षे

**चापल** न० चपलस्य भाव कर्म्म वा अण्। अविमृश्य-कारिताकपे प्रयोजन विनाऽपि पादयादेश्चालनरूपे वा १चपलकर्म्मणि चपलशब्दे उदा० "मात्सर्य्य इव रागादेश्चापल स्मनवस्थिति" सा०द० २उक्तलक्षणे नव स्थाने च। ष्यञ्। चापल्यमप्यत्र।

**चापिन्** पु० चापोऽस्त्यस्य इनि। १धनुर्द्धारिणि योधभेदे। २शिवे पु०। "त्व गदी त्व शरी चापी खट्वाङ्गी झर्झरी तथा" भा०शा०२८६अ०। दचक्रतशिवस्तुतौ ३धनूराशौ च। "चापी नरोऽश्वजनो मकरोऽमृगास्य" ज्यो०त०

**चाफट्टि** पुंस्त्री चफट्टेरपत्यम् इञ्। चफट्टेरपत्ये स्त्रियां ङीप्। यूनि—तौल्वला० फक् तस्य न लुक्। चाफट्टायनि यूनि तदपत्ये स्त्रियां ङीप्।

**चामर** पु न० चमर्य्या विकार तत्पुच्छनिर्म्मितत्वात्। चमरीपुच्छकृतव्यजने अमरः। चामरलक्षणादिकमुक्त युक्तिकल्पतरौ यथा

"अथ चामरोद्देशः। "इस्तद्वयोन्नत शुक्लः सुवर्ण्णबलिभूषित। क्षीरेणाकलृतो राज्ञां भव्यमानसुखप्रद। अतश्चामरदैर्घ्योक्ता आयामत् प्रकाशितम्। भव्यो भट्टोऽजयः मीठः सुख सिद्धयक्षः स्थिरः। विंशत्यैकैकवृद्धा दिनेशादिदियों भुवाम्। सौवर्ण्ण राजत युग्म तैरेषामा महीभुजाम्। योजयेदिति निश्चित्य व विक्रमनकर्म्मणि। स्वज जाङ्गलोगजा कानूपो जलज यङ्कृत्। हीरञ्च पद्मरागञ्च वैदूर्य्य नीलएव च। मणिर्वेषु योक्तव्यो ब्रह्मादीनां यथाक्रमम्। शुक्लो रक्तोऽथ पीतञ्च नानावर्णौ यथाक्रमम्। चामरो राज-कीयस्य न सामान्यस्य भूपते। न भव्यमानतो भूमे चामर शुभमावहेत्"। अथ चामरपरीक्षा। "स्थलज जलज चेति चामर द्विविध विदुः। मेरौ हिमालये विन्ध्ये कैलासे मलये तथा। उदयेऽस्तगिरौ चैव गन्धमादनपर्व्वते। एतमेतेषु शैलेषु याश्चमर्य्यो भवन्ति हि। तासां बालय्य जायेत चामरेत्यभिधा भुवि। आपीताः कनकाद्रिजा हिमगिरे शुभ्रा मता विन्ध्यजाः कैलासादसिता सिता मलयजा शुक्लास्तथा पिङ्गलाः। आरक्ता उदयोद्भवाश्चमरजा श्वानीलशुक्लस्थित कृष्णा केचन गन्धमादनभवा पाण्डुस्थिपचामरा। अन्येषु प्रायश कृष्णाश्चामराः सम्भवन्ति हि। ब्रह्मक्षत्रियविट्शूद्रजातय स्थाचतुर्व्विधा। चमर्य्य पर्व्वतोद्भूता यथापूर्व्व शुभावहा। दीर्घबाला सुलघव स्निग्धाङ्गायापि कोमलाः। विरला तनुपर्व्वाणश्चमर्य्यो ब्रह्मजातय। यासा सस्कार सम्पाता चामर विमल भवेत्। दीर्घबाला सुगुरव क्षत्रियास्तु भ्वय घना। विज्ञेया स्थूलपर्व्वाणश्चमर्य्यो वैश्यजातय। सस्कारे चाप्यसंस्कारे न स्वभाव त्यजेदिदम्। खर्व्वबाला सुलघव कोमलाङ्गा भ्वय घना। चमर्य्यस्तनुपर्वाणो विज्ञेया शूद्रजातयः। सस्कारेणापि मलिनभासां चामरमिष्यते। दीर्घता लघुता चैव स्वच्छता घनता तथा। गुणाश्चत्वार इत्येते चामराणा प्रकीर्त्तिता। खर्व्वता गुरुता चैव वैरल्य मलिना कृता। दोषाश्चत्वार इत्येते चामराणां प्रकीर्त्तिता। दीर्घे दीर्घायुराप्नोति लघौ भीतिविनाशनम्। स्वच्छे-स्वाद्भुतकीर्त्तिश्च्यां घने सु स्थिरसम्पद। खर्व्वे खर्व्वायुरुद्दिष्ट गुरुर्दुःखभयप्रद। विरले रोगशोकाश्चा मलिने मृत्युमादिशेत्"। इति स्थलजम्। अथ जलजम्। "लवणेक्षुसुरासर्पिर्दधिक्षीरोदयोऽब्धिषु। चमर्य्यः सम्भवन्ति याः शुभलक्षणवर्णा। पुच्छानि तासां कृतानि जन्तुभिर्म्मकरादिभि। कदाचिदुपलभ्यन्ते तत्तीरे पुण्यशालिभिः। लवणाब्धिसमुद्भूत पीत शुक्ल तथा लघु। यङ्गो चिप्तश्च वाचयेत् किञ्चित् चटचटायते। इक्षुसिन्धुद्भव ताम्र चामर विमल लघु। मक्षिका मशकाश्चैव तस्मिन् व्रजन्ति चामरे। सुराब्धिजात कलुष कर्पूर पुष्पकर्कशम्। तद्गन्धेनैव माद्यन्ति अपि हस्ता मतङ्गजा। सर्पि सिन्धुभव स्निग्ध श्वेतापीत घन लघु। वायुरोगा प्रणश्यन्ति तस्य वीजनवायुना। अब-

सिक्थरूपं पाण्डु दीर्घं लघु घनं महत्। अस्य वातेन नश्यन्तु तृष्णामूर्च्छामदोभ्रमः। नारिष्टं न भयं तस्य यस्येदं चामरं गृहे। क्षीरोदसम्भवं श्वेतं दीर्घं लघु घनं महत्। अस्य चामरवातस्य विज्ञेयो गुणविस्तरः। नाल्पेन तपसा लभ्यो देवानामपि जायते। ह्रियतेऽप्यन्तरे सिद्धैर्नागैः सम्पत्तिलोलुपैः। एषां पूर्ववदुन्नेयं जातिदोषगुणादिकम्। स्थलजे जलजे चैव भाव्यमेतद्विशेषणम्। स्थलजं सुखदत्वं हि दाहे निधनमिष्यते। जलजं यज्ञिदत्वं महान्तं धूमसङ्गिरेत्। चामराणां समुद्दिष्टमित्येवं लक्षणद्वयम्। एवं विरूपं यो धत्ते स राजा सुखमश्नुते। जलजं चामरं राजा यो धत्ते जाङ्गलेश्वरः। तस्याचिरात् कुलं वीर्यं लक्ष्मीरायुश्च नश्यति। अनूपाधीश्वरो राजा यो वहेत् स्थलजं तथा। तस्य तानि विनश्यन्ति लक्ष्मीरायुर्यशो बलम्। नालं वर्णद्वये तेषां विधेयं शिल्पिना क्रमात्। संस्कारो वालुकायन्त्रे मसृणशिलकादिभिः। तदुष्णसलिलक्षायात् क्लिन्नत्वं विपद्यते"।

"सचामरे देवमसेविषाताम्" कुमा०। "यच्छन्तमुच्छ्रितचामरचारुमर्मम्" माघः। "शशिप्रभं छत्रमुभे च चामरे" रघुः। अस्य स्त्रीत्वमपि वा ङीप्। तत्रार्थे भरतः।

**चामरग्राह** त्रि० चामरं गृह्णाति ग्रह–अण् उप० स०। चामरेण वीजनकर्त्तरि स्त्रियां टाप् सुगवमोघमते अण् ङीप् इति भेदः। ततः रेवत्या० अपत्ये ठक्। चामरग्राहिक तदपत्ये पुंस्त्री। णिनि चामरग्राहिन् तत्रार्थे त्रि० स्त्रियां ङीप्।

**चामरपुष्प(क)** पु० चामरमिव पुष्पमस्य। १क्रमुके, २काशे, ३केतके ४आम्रे च मेदि० एषां चामरतुल्यपुष्पत्वात् तथात्वम्। वा कप्। तत्रार्थे जटा०।

**चामरिन्** पुंस्त्री चामरमिव केशरोऽस्त्यस्य इनि। १घोटके जटाध०। २चामरयुक्तमात्रे त्रि० स्त्रियां ङीप्।

**चामीकर** न० चमीकरे स्वर्णाकरभेदे भवम् अण्। १स्वर्णे २धुस्तूरे च अमर०। "जगतीरिह स्फुरितचारुचामीकराः" माघः। तस्य विकार अण्। ३स्वर्णमये त्रि० "सयन्दचामीकरकिङ्किणीक" कुमा०। अस्योत्पत्त्यादिकं कनकशब्दे १६४४ पृ० उक्तम्।

**चामुण्डा** स्त्री "यस्माच्चण्डञ्च मुण्डञ्च गृहीत्वा त्वमुपागता। चामुण्डेति ततो लोके ख्याता देवी भविष्यसि" देवीमा० निरुक्तनामके देवीभेदे। २परब्रह्मणः समष्टिरूपशक्तिभेदे ३ब्रह्मविद्यायाश्च गुप्तवती। तत्र (ऐँ ह्रीँ क्लीँ चामुण्डायै विच्चे) इति चण्डिकानवार्णार्थनिर्णये उक्तं यथा।

"निर्धूतनिखिलध्वान्ते। नित्यमुक्ते। परात्परे।। अखण्डब्रह्मविद्यायै चित्सदानन्दरूपिणि।। अनुसन्दध्महे नित्यं वयं त्वा हृदयाम्बुजे। इत्थं विज्ञापयत्येषा या कल्याणी नवाक्षरी। अस्या महिमलेशोऽपि गदितुं केन शक्यते। बहुना जन्मनामन्ते प्राप्यते भाग्यगौरवात्। एनमर्थं गुरोर्लब्ध्वा तस्मै दत्त्वा च दक्षिणाम्। आशिषञ्च परां लब्ध्वा मन्त्रसिद्धिमवाप्नुयादित्यादि"। अत्र प्रथमश्लोके संबुद्धित्रय ततश्चतुर्थ्यन्तन्ततः पुनः संबुद्धित्रयमिति सप्तभिः पदैः क्रमेण मन्त्रे सप्तधा परिच्छेदः। पदानां तत्त्वहि भक्त्यन्तता तत्तदर्थश्चेति कथितं तदुत्तरपद्यार्द्धे नाकाङ्क्षितपदानामध्याहार उक्तः। इतरत् स्पष्टम्। सच्चिदानन्दात्मकपरब्रह्मधर्मत्वाद्देवशक्तेरपि त्रिरूपत्वम्। तत्र चिद्रूपा महासरस्वती वाग्बीजेन (ऐँ)सम्बोध्यते। ज्ञानेनैवाज्ञाननाशात् निर्धूतनिखिलध्वान्तपदेन तद्विवरणम् युक्तमेव। नित्यत्वं त्रिकालाबाध्यत्वम्। अतएव सत्त्वं कल्पितवियदादिप्रपञ्चनिरासाधिष्ठानत्वम्। एतेन सद्रूपात्मकलक्ष्मीरूपस्य हृल्लेखया (ह्रीँ) सम्बोधनमिति व्याख्यातम्। पर उत्कृष्टः सर्वानुभवसंवेद्य आनन्द एव तस्यैव पुरुषार्थत्वात्। "आत्मन कामाय सर्वं प्रियं भवतीति" श्रुत्या तदितरेषामपि तदर्थत्वेनानन्दस्यैव सर्वशेषितया परत्वात्। स च मानुषानन्दमारभ्योत्तरोत्तरशतगुणाधिक्येन श्रुतौ मङ्गलोवर्णित "तेषु परमातिशायी स एको ब्रह्मण आनन्द"इति परमावधित्वेनाम्नातएव परात्परः "स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्तति" इति पुराणे च तेन आनन्दप्रधानमहाकालीस्वरूपस्य कामबीजेन (क्लीँ) सम्बोधनमुक्तम्। चामुण्डाशब्दो हि मोक्षकारणीभूतनिर्विकल्पकवृत्तिविशेषपरः तादर्थ्ये चतुर्थी चमू सेना वियदादिप्रपञ्चरूपा खण्डाति खण्डयो रैक्याज्ञानि आदत्ते स्वात्मसाक्षात्कारेण नाशयतीति व्युत्पत्तेः। पृषोदरादित्वात्साधु" इत्याहु। "भया तमालोपहृतौ चण्डमुण्डौ महासुरौ" इति पद्ये द्विवचनयो. ख्यारस्येन तूलमूलभेदेनाज्ञानद्वयपरत्वम् "यस्माच्चण्डं च मुण्डञ्च गृहीत्वा त्वमुपागता।

चामुण्डेति ततो लोके ख्याता देवी भविष्यतीति" पद्योऽपि तुलमूलाविद्यापरताऽवसेया इति रहस्यम्। विच्चे इति। वित् च, इ, इति पदत्रयात्मक बीजक्रमेणोक्ताभाश्चित्सदानन्दाना वाचक सम्बुद्ध्यन्त मस्य स्त्री ई इत्यस्य ह्रस्वे इ इति हे आनन्दमय-ब्रह्मणीत्यपि इत्यर्थ। चित्पद ज्ञानपरमसिद्धमेव चकारोऽपि नपुंसक सन् सत्पर इति बोध्यम् अनुस-न्धेयमित्यादिः शेष। इत्यस्य महासरस्वत्यादिरूपेण चिदादिरूपे। चण्डिके स्वात्मब्रह्मविद्याप्राप्त्यर्थं वय सर्वदा ध्यायेम इतिमन्त्रार्थः फलित। तथाच रुद्रः "महासरस्वति चिते। महालक्ष्मि। सदात्मिके।। महाकाल्यानन्दरूपे। तत्त्वज्ञानप्रसिद्धये। अनुसन्दध्महे चण्डि! वयन्त्वां हृदयाम्बुजे" इति। यद्यपि श्रीम त्येव बीजमहालक्ष्म्या प्रसिद्धम्। न ह्रीं वा (ह्रीं)। तथापि हकारशकारयोरूष्मवर्णत्वेन साजात्यान्ना-तीव भेद। अतएव "श्रीश्च ते लक्ष्मीश्च ते पत्न्याविति" श्रुतौ शाखान्तरे श्रीपदस्थाने ह्रीपदपाठ। एव काम-बीज एव लकारस्य स्थाने रेफयोजनेन कालीबी-जता रलयोरान्तस्थत्वेनैक्याम्नानात्यन्त भेद। तन्त्रान्तरेषु तु कालीसरस्वत्योर्गलविकभेदमभिप्रेत्य बीजयोर्वैपरी-त्यव्यवहारोऽपि दृश्यत इति द्रष्टव्यम्। अय चार्थ प्राचीनैर्वर्णितप्राय एव सम्यक्परिष्कृत्योक्तः। वस्तु-तस्तु लक्षणविरोधस्य छान्दसत्वेन पृषोदरादिपाठकल्पनया च समाधानस्यायिषादादन्योऽपि प्रकार उच्यते। चमु अदने इति धातोः उण् चामुरदनीय पदार्थ स च ब्रह्मातिरिक्तः सर्वोऽपि "अत्ता चराचरग्रहणात्" इत्यधिकरणे तथा निर्णयात् तन्मुण्डयति खण्डयति न विषयीकुरुते ब्रह्मात्मविषयिणीति यावत्। अथवा चकार एकाक्षरनिघण्टुरीत्या चन्द्रवाचक आह्लाद प्रकाशगुणयोगादिह ज्ञानपर आनन्दपरो वा सन् ब्रह्मैव वक्ति। तत् आसमन्तान्मुण्डयतीति चामुण्डा मुण्डन नामाधारामेधया न्यूनसाधकवस्तुनिरास शिर-स्थापेक्षया न्यूनत्वावस्थापेव केशानां वपने प्रयोगात्। गौडपादीयभाष्ये तु शरीरराहित्यलक्षणम् मुण्डन मुण्डकोपनिषदि प्रोक्त अथवा। चामाम्बुज्ञाना सुधाणां वा मुण्डमिव शीर्षमिव स्थिता सर्वोत्तमा परमदृष्टिरूपा ब्रह्मविद्येति यावत्। अथ चण्डिकाद्यपदेवतापरएव चामुण्डाशब्दः। अत एव मन्त्रान्ते चण्डिकाया योज-नेन होमे चामुण्डाया इष्टमित्येव त्यागो विभि-शब्दस्य मन्त्रत्वे इत्यधिकरणन्यायसिद्धो युज्यते। चतुर्थी वलाच्च नम शब्दस्याध्याहार। बीजत्रयमव्यय रूप चतुर्थ्यन्तमेव अभिदेवताप्रयत्याचकमभेदद्योतक तद्विशेषणम् विच्चे इत्यखण्डमव्यय स्वरादेरा-कृतिगणत्वात्। मन्त्रस्य पदखण्डशो न्यासप्रकरणेऽस्य युगलस्य विभजन विनैव न्यासविधानात्। भगमालिनी नित्यामन्त्रादिषु बहुषु तस्य प्रयोगदर्शनेन तन्त्रोक्तार्थ रीत्या निर्वाहाभावाच्च ततश्च हे अम्ब अज्ञानकरणीभूता-मिमा रज्जु ग्रन्थिविसर्जनादिना मोचयेति। स्त्री सम्बोध्यकमोक्षप्रार्थनारूपो विशिष्टस्तदर्थः। यदपि दक्षिणामूर्त्तिसंहितायां भगमालिनीमन्त्रस्य देवतागण-नावसरे "अमोघा चैव विच्चाद्य तथैवो क्लिन्नदेवतामिति" पाठाद्विच्चानामिका काचिद्देवतैवेत्यालोच्यते तदपि परि कराङ्कारेण साभिप्राय चामुण्डाविशेषणम्"।

**चाम्पिला** स्त्री चपि—भावे अङ् चम्पैव चाम्पा ततः अस्त्यर्थे इलच्। चम्पानद्याम् त्रिका०।

**चाम्पेय** न० चम्पायां नद्यां जम्बुनद्यां भव ढक्। १स्वर्णे २धुस्तूरे च अमर। ३चम्पके ४नागकेशरे च पु०किञ्जल्के न० स्वार्थे क तत्रार्थे राजनि०। तत्र स्वर्णे मणिमा-णिक्यचाम्पेयकुलभाण्डगोधनम्" काशी० ख० २४अ०। ५चम्पायां भवे त्रि०। ६विश्वामित्रात्मजभेदे पु० "अथाशिनौचिकश्चैव चाम्पेयोज्जयनौ तथा" भा० आ० ४अ०। विश्वामित्रात्मजोक्तौ।

**चाय** निशाने (चाक्षुषज्ञाने) पूजने च सक० उभ० सेट्। चायति ते अचायीत् अचासीत् अचायिष्ट अचास्त अदित्। अचचायत् त। "त पर्वतीया प्रमदाश्चायिरे" माघ०। "अनाद्यनन्त महत पर ध्रुव नि-चाय्य त मृत्युमुखात् प्रमुच्यते" कठोप०। यङि चेकी-यते। चायश्चिमाय। अपचितिः अपचित।

**चाय** त्रि०चयस्य विकारः तालाद्यण्। चयमये स्त्रियां ङीप्।

**चायनीय** त्रि० चाय—कर्मणि अनीयर्। पूजनीये "उप-तस्थिरमा मरागमस्यम्" इत्यस्यान्तिं चित्तयद्ध्निरुक्तौ चित्र चायनीय महनीयमिति" निरुक्तकार १२।६।

**चायमान** पु० चयमानस्य राज्ञोऽपत्यम् शिवा० अण्। १चयमानन्वपापत्ये। "अभ्यावर्त्ती चायमानो ददाति" ऋ० ६।२७।८। "चायमानश्चयमानस्य अपत्य पुत्रः" भा०। चाय—शानच्। २पूजयति ३पश्यति च त्रि०

चायु त्रि० चाय—उण् । पूजके । "यस्पेद् यज चायव" ऋ० १।२४।४। "चायवः पूजकाः" भा० ।

चार पु० चरएव अण् । १प्रणिधौ गुप्तचरे "चारैश्चाप्येकसंस्थानैः प्रोत्साद्य यशमानयेत्" "तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत्" "उपगृह्यास्पदञ्चैव चारान् सम्यग्विधाय च"—इति च मनुः । २प्रियालवृक्षे (पियाशाल) मेदि० ३कारागारे हेम० चर—भावे घञ् ४गतौ गोप्रचार पशुचार "चारोदयाः प्रयत्ना श्रवणमघादित्यमूलहस्तेषु" बृ० स० ६अ० "भगणार्धेनान्तरितो दृश्यते कथं नियतचार" ५अ० । कार्यभेदे दूतनियोगादिकं कालिकापु० ८५अ० उक्तं यथा । "कृषिर्दुर्गं च वाणिज्यं खन्यानां करसाधनम् । आदानं सैन्यकरयोर्बन्धनं गजवाजिनोः । शून्यस्य प्रसुप्तामार्गं भोजनं सततं जनैः । प्रजानां चारहेतूनां बन्धनं चेति चाष्टकम् । एतदष्टसु वर्गेषु चारान् सम्यक् प्रयोजयेत् । कार्याकार्यविभागाय चाष्टवर्गाधिकारिणाम् । अष्टौ चारान् नियुञ्जीयादष्टवर्गेषु पार्थिवः । दशस्वन्येषु युञ्जीत क्रमशः शृणु तानि मे । स्वामी सचिवराष्ट्राणि मित्रं कोषो बलं तथा । दुर्गन्तु सप्तमं ज्ञेयं राज्याङ्गं गुरुभाषितम् । दुर्गयुक्तमष्टवर्गे चारं नात्मनि योजयेत् । तस्मादिमानि शेषाणि षट् च चारपदानि तु । शुद्धान्तेष्वेव पुत्रेषु सम्यक् पृथगादौ महामते । शत्रूदासीनयोश्चैव बलाबलविनिश्चये । आदौ दशसु चैतेषु चारान् राजा प्रयोजयेत् । न यत् प्रकाशं जानीयात् तत्तु चारैर्निरूपयेत् । निरूप्य तत्प्रतीकारमथवा छिद्रतश्चरेत् । यथानियोगमेतेषां यो यो यत्नान्यथा चरेत् । ज्ञात्वा तत्र नृपश्चारैर्दण्डयेद्वा नियोजयेत् । चारांस्तु मन्त्रिणा सार्द्धं रहस्ये संस्थितो नृप । प्रदोषसमये पृच्छेत्तदानीमेव साधयेत् । स्वपुत्रे चाथ शुद्धान्ते ये तु चारा महामते । नियुक्तास्तान् मध्यरात्रे पृच्छेत् यद्यपि मन्त्रिणि । एतान् चारान् स्वयं पश्येत् नृपतिर्मन्त्रिणा विना । अन्यांश्च मन्त्रिणा सार्द्धं निरूप्य प्रदिशेत् फलम् । नैकवेशधरश्चारो नैको नोत्साहवर्जितः । असुप्तो नहि सर्वत्र नातिदीर्घो न वामनः । सततं न द्विजाचारी न रोगी नाप्यबुद्धिमान् । न चित्तविभवैर्हीनो न भार्य्यापुत्रवर्जितः । कार्य्यश्चारो नृपतिना गुप्तमन्त्रविनिर्णये । अनेकवेशधरश्चापलं भार्य्यापुत्रैर्युतम् । बहुदेशवचोभिज्ञं पराभिप्रायवेदकम् । हव भक्तं प्रगुणीतं चारं प्रज्ञमसाध्वसम् । अधितिष्ठेत् स्वयं राजा कृषिमात्मसमैस्तथा । वणिक्पथे च दुर्गादौ तेषु शक्तान्नियोजयेत् । अन्तःपुरे पितृस्तुल्यान् धीरान् वृद्धान् नियोजयेत् । षण्डान् षण्डान् तथा वृद्धान् स्त्रियो या वृद्धितत्परा । शुद्धान्तद्वारि युञ्जीयात् स्त्रियो बुद्धिमनीषिणी" । चरेण चरणेन निर्वृत्तम् अण् । ५कृत्रिमविषे—न० हेमच० ।

चारक त्रि० चारयति चर—णिच्—ण्वुल् । गवादीनां तृणादिषु गमयितरि १पशुपालके मेदि० चार—स्वार्थे क । २बन्धे ३गतौ च । ४प्रियालवृक्षे राजनि० । ५कारागारे । हेम० । "निगडितचरणा चारके निरोद्धव्या" दशकु० ।

चारकीण त्रि० चरकाय हितम् खञ् । चरकहिते ।

चारचक्षुस् पु० चारश्चक्षुरस्य । नृपे । "यस्मात् पश्यन्ति दूरस्थान् सर्वानर्थान्नराधिपाः । चारेण तस्मादुच्यन्ते राजानश्चारचक्षुषः" रामा० २।३७ । "प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः" मनु "गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति च द्विजाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः" नीतिसा० । "स्वपरमण्डलकार्य्यावलोकने चाराश्चक्षूंषि क्षितिपालानामिति" नीतिवाक्यामृतम् ।

चारटिका स्त्री चर—णिच् शकादि० अट् स्वार्थे कन् अतइत्त्वम् । नलीनामगन्धद्रव्ये राजनि० ।

चारटी स्त्री चर—णिच्—शकादि० अटन् गौरा० ङीष् । १पद्मचारिणीवृक्षे अमर । २भूम्यामलक्यां राजनि० ।

चारण पु० चारयति कीर्त्तिं चर-णिच्—ल्यु । कीर्त्तिसञ्चारके नटे अमरः । "चाटचारणदासेषु दत्तं भवति निष्फलम्" स्मृति । "गन्धर्वाणां ततो लोकः परतः शतयोजनात् । देवानां गायनास्ते च चारणाः स्तुतिपाठकाः" पद्म० पु० स्व० ख० । [राजपथे हेम० ।

चारपथ पु० चारार्थं बहुजनगमनार्थं पन्थाः अच् समा० ।

चारभट पु० चारे बुद्धिसञ्चारे भटः । धीरे हेम० ।

चारमिक त्रि० चरममधीते वसन्ता० ठक् । ग्रन्थसमाप्तिपर्य्यन्ताध्यायिनि । [घञ्जे वायौ त्रिका० ।

चारवायु पु० चारेण रवेरुदग्गतिभेदेन कृतो वायुः । निदाचारायण पु स्त्री चरस्य गोत्रापत्यम् नडा० फक् । चरगोत्रापत्ये । तेषां छात्रः अण् "इञश्च" पा० ४ ।

चारायणीय तच्छात्रे । चारायणेभ्य आगतं वुञ् । चारायणक तत आगते त्रि० ।

**चारिणी** स्त्री चर–णिनि ङीप् । करुणीवृक्षे राजनि० ।

**चारित्र** न० चर–"चरेर्वृत्ते" उणा० णित्रन् चरित्रमेव स्वार्थे अण् वा । १चरित्रे २स्वभावे हेम० । ३कुलक्रमागताचारे शब्दार्थचि० । "चारित्रं येन मे लोके दूषितं दूषितात्मना" हरिवं० १७० । ४तिन्तिडीवृक्षे स्त्री शब्दरत्ना० ५मरुत्वत्तनयपुत्रभेदे पु० "मरुत्वतो मरुत्वन्तो देवानजनयत् सुतान्" इत्युपक्रमे "नक्षत्र चाकृतिश्चैव चारित्रं मन्त्रपन्नगम्" हरिवं० २०४ अ० ।

**चारित्र्य** न० चरित्रमेव स्वार्थे ष्यञ् । चरित्रशब्दार्थे ।

**चारिन्** त्रि० चर–णिनि । सञ्चारकारिणि गन्तरि "सङ्गमाय निशि गूढचारिणम्" रघु० "प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ" गीता स्त्रियां ङीप् स्वैरचारिणी ।

**चारी** स्त्री चारो गतिभेदोऽस्त्यस्या अच् गौरा० ङीप् । गतिभेदयुक्तनृत्यक्रीडायां सङ्गी० दा० तद्भेदलक्षणादिकमुक्तं यथा

"न हि चारीं विना नृत्ये नृत्याङ्गं प्रवर्त्तते । शृङ्गारादिरसानान्तु भावोद्दीपनकारिकाम् । माधुर्य्यौद्धत्त्यमानृत्ये चारी चारुगतिर्मता" । अन्ये तु "एकपादप्रचारो यः सा चारी न निगद्यते । पादयोश्चारणं यत्र सा चारीति निगद्यते । करणानां समायोगः खण्डकः परिकीर्त्तितः । त्रिभिः खण्डैश्चतुर्भिर्वा मण्डलं समुदाहृतम् । समनखा नूपुरविद्धा तिर्य्यङ्मुखी मरला च । कातरा च कुवीरा च विश्लिष्टा रथचक्रिका । पार्ष्णिरेचितका तलदर्शिनी गजहस्तिका । परावृत्ततला चारुताडिताध्यर्द्धमण्डला । सम्भ्रक्रीडनिका अर्गलासिका चारुरेचिका । तलोद्वृत्ता सञ्चरिता स्फुरिकापि तथैव च । अड्डितमड्डा उत्कुट्टिता स्यादथैव मदालसा । उत्कुञ्चिता तिर्य्यगूर्द्ध्वं कुञ्चिता चापकुञ्चिका । षड्विंशति भौमचार्य्यः इत्याख्याता मनीषिभिः" । अन्ये तु । "समपादस्थिता विद्धा शकटस्याविंकापि च । विच्चावा ताडिताऽऽबद्धा एकैका कोड़िता तथा । अरटसा ऊ-स्मृता च जनिता स्यन्दिता तथा । स्यन्दितावत् समस्तौ समोत्सारितमक्षिता । उत्स्पन्दिता च विज्ञेया चार्य्यः षोड़श भूमिगाः । इति भूमिचारी । आकाशचारी यथा "चारीबाबाडणा नृत्ये विक्षेपा लघरी तथा । अड्डिताड़िता भ्रमरी पुरःक्षेपा च सूचिका । अपक्षेपा जङ्घावर्त्ता विद्धा च हरिणप्लुता "अलात-ऊर्द्ध्वजान्वोत्क्षिप्ता च जङ्घाजङ्घानिका तथा । विद्युद्भ्रान्ता भ्रमरिका दण्डपार्श्वेति षोड़श" । अन्ये तु । "विक्रान्तातिक्रान्ताऽपक्रान्ता च पार्श्वक्रान्तिका । ऊर्द्ध्वजानुदोलपादोत्क्षिप्ता नूपुरपादिका । भुजङ्गत्रासिका क्षिप्ताऽऽविद्धा ताडा च सूचिका । विद्युद्भ्रान्ता भ्रमरिका दण्डपादा तथैव च । आकाशचारिका एता षोड़शैव निरूपिताः" । एताश्चेव भूमिचारीष्वन्तरभेदोऽस्ति । "तिर्य्यक्चारी ऊर्द्ध्वचारी अधश्चारी ति ता उदीरिताः । "तैलाभ्यङ्गेन गात्रेषु लघ्वाहारो निवर्त्तनम् । सत्ये वा विविदेषे वा प्रथमं तां प्रयोजयेत् । कृत्वाहारं तथाम्बु भुक्त्वा वा न समाचरेत् । नृत्ये पादस्य विन्यासचारी सैवाभिधीयते । शृङ्गारादिरसानान्तु भवेद्दीपनकारणम् । माधुर्य्यं मूकता नृत्ये नृत्तताललयान्विताः । निगताद् विशेषाच्चारी सञ्चारतो भवेत्" सं० दामो० ।

**चारु** पु० चरति चित्ते–उण् । १बृहस्पतौ २मनोहरे त्रि० मेदि० "चकासतं चारुचमूरुचर्म्मणा" "अर्द्धमशासिन सुराधिपचापचारु" माघः । गुणवचनत्वेन स्त्रियां वा ङीप् चार्व्वी चारु । ३कुङ्कुमे न० शब्दार्थचि० । ४रुक्मिणीतनयभेदे पु० "चारुगर्भश्चन्द्रे इत्यम् ।

**चारुक** पु० चारु+संज्ञायां कन् । शरबीजरूपे क्षुद्रधान्यभेदे भावप्र० तद्गुणा उक्ता यथा "चारुकः शरबीजं स्यात् कथ्यन्ते तद्गुणा अथ । चारुको मधुरो रूक्षो रक्तपित्तकफापहः । शीतलो लघुरग्राही वातो वातकोपनः" ।

**चारुकेशरा** स्त्री चारवः केशरा अस्याः । नागरमुस्तायाम् राजनि० ।

**चारुगर्भ** पु० श्रीकृष्णात् रुक्मिणीगर्भजाते तनयभेदे यथा "तस्याम् (रुक्मिण्याम्) उत्पादयामास पुत्रान् दश महारथान् । चारुदेष्णं सुदेष्णञ्च प्रद्युम्नञ्च महाबलम् । सुषेणं चारुगुप्तञ्च चारुबाहुञ्च वीर्य्यवान् । चारुविन्दं सुचारुञ्च भद्रचारुं तथैव च । चारुञ्च बलिनां श्रेष्ठं सुतां चारुमतीं तथा" हरिवं० ११८ अ० । चारुगुप्तादयोऽप्यत्रोक्ताः तत्पुत्रभेदे ।

**चारुचित्र** पु० धृतराष्ट्रपुत्रभेदे "चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः" भा० आ० ११७ अ० ।

**चारुधारा** स्त्री चारु चारुतां धारयति धारि–अच् चार्व्वी धाराऽस्या वा । इन्द्रपत्न्यां शच्याम् त्रिका० ।

**चारुनेत्र** त्रि० चारु मनोहरं नेत्रमस्य । १सुलोचने

२हरिणे पुंस्त्री त्रिका०। ३अप्सरोभेदे स्त्री "चारु-नेत्रा घृताची च मेनका पुञ्जिकास्थली" काशीख० १०अ०)

**चारुपर्णी** स्त्री० चारूणि पर्णान्यस्याः ङीप्। (गन्धभादाल) प्रसारिण्याम् राजनि०।

**चारुपुट** पु० चारु-पुटमत्र। तालभेदे संगीतदा०।

**चारुफला** स्त्री चारु फलमस्याः। द्राक्षायाम् राजनि०।

**चारुयशस्** पु० श्रीकृष्णपुत्रभेदे "तया द्वादश वर्षाणि व्रती भूत्वेन शुश्रुषता। आराध्य पशुभर्त्तारं रुक्मिण्यां जनिताः सुताः। चारुदेष्णः सुचारुश्च चारुवेषो यशोधरः। चारुश्रवाश्चारुयशाः प्रद्युम्नः शम्भुरेव च। यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः" भा० अनु० १४अ०। चारुगर्भमद्रात्मजाः अशोकाश्च चारुश्रवस् इत्याद्योऽपि तत्पुत्रभेदे।

**चारुलोचन** त्रि० चारु लोचनमस्य। १सुन्दरनेत्रयुक्ते २हरिणे पुंस्त्री० स्त्रियां जातित्वात् ङीष् शब्दार्थचि०।

**चारुवक्त्र** त्रि० चारु वक्त्रमस्य। १सुमुखे २कुमारानुचरभेदे पु० "श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः" भा० श० ४६अ० कुमारानुचरोक्तौ

**चारुवर्द्धना** स्त्री चारु चारुतां वर्द्धयति वृध-णिच्-ल्यु। १नार्य्यां राजनि०। २मनोहरतावर्द्धकमात्रे त्रि०।

**चारुव्रता** स्त्री चारु व्रतमस्याः। १मासोपवासिन्यां स्त्रियां त्रिका० २तादृशव्रतयुक्ते पुरुषे पु०।

**चारुशिला** स्त्री नित्यकर्म०। १मणिमात्रे त्रिका०। कर्मधा०। २मनोहरशिलामात्रे स्त्री "कुट्टिमश्चारु-शिलोपवेशम्" भट्टिः।

**चारुशीर्ष** त्रि० चारु शीर्षमस्य। १मनोज्ञमस्तके २शक्रसखे आलम्बायने पु०। "चारुशीर्षस्तु तं प्राह शक्रस्य दयितः सखा। आलम्बायन इत्येव विश्रुतः करुणा-त्मकः" भा० अनु० १८अ०। स च आलम्बर्षेरपत्यम्।

**चारुहासिन्** त्रि० चारु हसति हस-णिनि। १मनोहर-हासिनि स्त्रियां ङीप्। सा च "अयुग्गश्च चारुहा-सिनी" वृ० र० उक्ते २वैतालीयभेदे छन्दसि।

**चार्च्चिक्य** न० चर्च्च-भावार्थे ण्वुल् चर्च्चिकैव स्वार्थे ष्यञ्। चन्दनादिना गात्रलेपने अमरः। [वेष्टिते रथे।

**[illegible]** पु० चर्म्मणा परिवृतो रथ अण्। चर्म्मणा सर्व्वतो

**चार्म्मण** न० चर्म्मणां समूहः अण्। चर्म्मसमुदाये।

**चार्म्मिक** त्रि० चर्म्मणा निर्वृत्तः ठक्। चर्म्मनिर्म्मिते भाण्डादौ। "चर्म्म चार्म्मिकभाण्डेषु" मनुः। ततः पुरोहिता० भावे यक्। चार्म्मिक्य तद्भावे न०।

**चार्म्मिकायणि** पुंस्त्री चर्म्मिणोऽपत्यम् वाकिनादि० फिञ् कुक् नलोपश्च। चर्म्मिणो (ढाली) नामकयोधस्यापत्ये।

**चार्म्मिण** न० चर्म्मिणां समूहः अण्। चर्म्मिणां समूहे।

**चार्व्वाक** पु० चारुः लोकसम्मतो वाको वाक्यं यस्य पृषो०। बृहस्पतिशिष्ये लोकायते नास्तिकभेदे तन्मतसिद्ध पदार्थादि सर्व्वद० स० दर्शितं यथा।

"अथ कथं परमेश्वरस्य निःश्रेयसप्रदत्वमभिधीयते बृह-स्पतिमतानुसारिणा नास्तिकशिरोमणिना चार्वाकेण दूरोत्सारितत्वात्। दुरुच्छेदं हि चार्वाकस्य चेष्टितम्। प्रायेण सर्व्वप्राणिनस्तावत् "यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः। भस्मीभूतस्य देहस्य पुनरागमनं कुतः" इति लोकगाथामनुरुन्धाना नीतिकामशास्त्रानुसारेणा-र्थकामावेव पुरुषार्थौ मन्यमानाः पारलौकिकमर्थमपह्नु-वानाश्चार्वाकमतमनुवर्त्तमाना एवानुभूयन्ते। अत एव तस्य चार्व्वाकमतस्य लोकायतमित्यन्वर्थमपरं नामधेयम्। तत्र पृथिव्यादीनि भूतानि चत्वारि तत्त्वानि तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुप-जायते, तेषु विनष्टेषु सत्सु स्वयं विनश्यति। "तदिह विज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय तान्येवानुविन-श्यति न प्रेत्य संज्ञास्तीति"। तत्र चैतन्यविशिष्टदेह एवात्मा देहातिरिक्त आत्मनि प्रमाणाभावात् प्रत्यक्षैक-प्रमाणवादितया अनुमानादेरनङ्गीकारेण प्रामाण्याभा-वात्। अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः। न चास्य दुःखसम्भिन्नतया पुरुषार्थत्वमेव नास्तीति मन्तव्यम् अवर्जनीयतया प्राप्तस्य दुःखस्य परिहारेण सुखमात्रस्यैव भोक्तव्यत्वात्। तद्यथा मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्त्तते। यथा वा धान्यार्थी सपलालानि धान्यान्याहरति यावदादेयं तावदादाय निवर्त्तते। तस्माद् दुःखभयान्नानु-कूलवेदनीयं सुखं त्यक्तुमुचितम्। न हि मृगाः सन्तीति शालयो नोप्यन्ते। न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। यदि कश्चिद् भीरुर्दृष्टं सुखं त्यजेत् तर्हि स पशुवन्मूर्खो भवेत्। तदुक्तम् "त्याज्यं सुखं विषयसङ्गमजन्म पुंसां दुःखोपसृष्टमिति मूर्खविचार-णैषा। व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान् को नाम भोस्तुषकणोपहितान् हितार्थी"। ननु पारलौकिक सुखाभावे बहुवित्तव्ययशरीरायाससाध्ये अग्निहोत्रादौ

विद्यादृष्ट्वा कथं प्रवर्त्तिष्यन्ते इति चेत् तदपि न
प्रमाणकोटिं प्रवेष्टुमीष्टे अनृतव्याघातपुनरुक्तदोषैर्दूषित
तया वैदिकम्मन्यैरेव धूर्त्तवकैः परस्परं कर्म्मकाण्डप्रामा
ण्यवादिभिर्ज्ञानकाण्डस्य, ज्ञानकाण्डप्रामाण्यवादिभिश्च
कर्म्मकाण्डस्य प्रतिक्षिप्तत्वेन त्रय्या धूर्त्तप्रलापमात्र
त्वेन अग्निहोत्रादेर्जीविकामात्रप्रयोजनत्वात् तथा चा-
भाणकः “अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः” ॥ अत एव
कण्टकादिजन्यं दुःखमेव नरकः लोकसिद्धो राजा
परमेश्वरः देहोच्छेदो मोक्षः। देहात्मवादे च कृशोऽहं
कृष्णोऽहमित्यादिसामानाधिकरण्योपपत्तिः। मम शरीर
मिति व्यवहारो राहोः शिर इत्यादिवदौपचारिकः।
तदेतत् सर्वं समग्राहि। “अत्र चत्वारि भूतानि भूमि
वार्य्यनलानिलाः। चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुप
जायते। किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्॥
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः। देहः
स्थौल्यादियोगाच्च स एवात्मा न चापरः॥ मम देहोऽय
मित्युक्तिः सम्भवेदौपचारिकीति”॥ स्यादेतत् स्यादेष मनो
रथो यद्यनुमानादेः प्रामाण्यं न स्यात् अस्ति च प्रा
माण्यं कथमन्यथा धूमोपलम्भानन्तरं धूमध्वजे प्रेक्षावतां
प्रवृत्तिरुपपद्येत। नद्यास्तीरे फलानि सन्तीति वचन
श्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति। तदे
तन्मनोराज्यविजृम्भणम्। व्याप्तिपक्षधर्म्मताशालि हि
लिङ्गं गमकमभ्युपगतमनुमानप्रामाण्यवादिभिः व्याप्ति
श्चोभयविधोपाधिविधुरः सम्बन्धः स च सत्तया चक्षुरादि
वन्नाङ्गभावं भजते किन्तु ज्ञाततया। कः खलु ज्ञानोपायो
भवेत्। न तावत् प्रत्यक्षं तच्च बाह्यमान्तरं वाऽभिमतम्।
न प्रथमः तस्य सम्प्रयुक्तविषयज्ञानजनकत्वेन भवति
(वर्त्तमाने) प्रसरसम्भवेऽपि भूतभविष्यतोस्तदसम्भवेन
सर्व्वोपसंहारवत्या व्याप्तेर्दुर्ज्ञानत्वात्। न च व्याप्तिज्ञानं
सामान्यगोचरमिति मन्तव्यं व्यक्त्योरविनाभावाभाव
प्रसङ्गात्। नापि चरमः अन्तःकरणस्य बहिरिन्द्रिय
तन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्त्यनुपपत्तेः। तदुक्तम्
“चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः” इति। नाप्यनुमानं
व्याप्तिज्ञानोपायः तत्र तत्राप्येवमित्यनवस्थादौःस्थ्य
प्रसङ्गात्। नापि शब्दस्तदुपायः काणादमतानुसारेणा
नुमानएवान्तर्भावात् अनन्तर्भावे वा वृद्धव्यवहाररूपलि
ङ्गावगतिसापेक्षतया प्रागुक्तदूषणलङ्घनत्वात् धूमध-

ध्वजयोरविनाभावोऽस्तीति वचनमात्रे मन्वादिवद्
विश्वासाभावाच्च। अनुपदिष्टाविनाभावस्य पुरुषस्यार्था
न्तरदर्शनेनार्थान्तरानुमित्यभावे स्वार्थानुमानकथायाः
कथाशेषत्वप्रसङ्गाच्च। उपमानादिकन्तु दूरापास्तं तेषां
संज्ञासंज्ञिसम्बन्धादिबोधकत्वेनानौपाधिकसम्बन्धबोधकत्वा
सम्भवात्, किञ्च उपाध्यभावोऽपि दुरवगमः उपाधीनां
प्रत्यक्षत्वनियमासम्भवेन प्रत्यक्षाणामभावस्य प्रत्यक्षत्वेऽपि
अप्रत्यक्षाणामभावस्याप्रत्यक्षतया अनुमानाद्यपेक्षायामुक्त
दूषणानतिवृत्तेः। अपि च साधनाव्यापकत्वे सति साध्य-
समव्याप्तिरिति तल्लक्षणं कक्षीकर्त्तव्यम्। तदुक्तम् “अव्या
प्तसाधनो यः साध्यसमव्याप्तिरुच्यते स उपाधिरिति”
शब्देऽनित्यत्वे साध्ये सकर्त्तृकत्वं घटत्वमश्रावणता च
व्यावर्त्तयितुमुपात्तान्यत्र क्रमतो विशेषणानि त्रीणि।
तस्मादिदमनवद्यं समासमेत्यादिनोक्तमाचार्य्यैश्चेति।
तत्र विध्यध्यवसायपूर्व्वकत्वान्निषेधाध्यवसायस्योपाधिज्ञाने
जाते तदभावविशिष्टसम्बन्धरूपव्याप्तिज्ञानं व्याप्तिज्ञाना-
धीनं चोपाधिज्ञानमिति परस्पराश्रयवज्रप्रहारदोषो वज्र
लेपायते। तस्मादविनाभावस्य दुर्बोधतया नानुमानाद्यव
काशः। धूमादिज्ञानानन्तरमग्न्यादिज्ञाने प्रवृत्तिः
प्रत्यक्षमूलतया भ्रान्त्या वा युज्यते। क्वचित् फलप्रति
लम्भस्तु मणिमन्त्रौषधादिवद् यादृच्छिकः। अतस्तत्साध्य-
मदृष्टादिकमपि नास्ति। नन्वदृष्टानिष्टौ जगद्वैचित्र्यमाक
स्मिकं स्यादिति चेत् न तद्भद्रं स्वभावादेव तदुपपत्तेः।
तदुक्तम् “अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिरिति”। तदे
तत् सर्व्वं बृहस्पतिनाप्युक्तम्। ‘न स्वर्गो नापवर्गो वा
नैवात्मा पारलौकिकः। नैव वर्णाश्रमादीनां क्रियाश्च
फलदायिकाः। अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्म-
गुण्ठनम्। बुद्धिपौरुषहीनानां जीविका धातृनिर्म्मिता।
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति। स्वपिता
यजमानेन तत्र कस्मान्न हिंस्यते। मृतानामपि जन्तूनां
श्राद्धं चेत्तृप्तिकारणम्। गच्छतामिह जन्तूनां व्यर्थं
पाथेयकल्पनम्। स्वर्गस्थिता यदा तृप्तिं गच्छेयुस्तत्र
दानतः। प्रासादस्योपरिस्थानामत्र कस्मान्न दीयते?।
यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिबेत्। भस्मीभूतस्य
देहस्य पुनरागमनं कुतः। यदि गच्छेत् परं लोकं देहा-
देष विनिर्गतः। कस्माद्भूयो न चायाति? बन्धुस्नेह
समाकुलः। ततश्च जीवनोपायो ब्राह्मणैर्विहितस्त्विह।

"जानता" सुश्रुतः "नव पदार्थं क्षिप्रन्ति चाचिणः प्रतिमू कृतम्। चत्वारश्च प्रदीयन्तो चित्र व्याघ्रो वचिद्भ्य" मनु

परि+परिचये पुनः पुनरनुशीलने। "चरणारविन्दम् ध्यान-परिचितभक्तियोगाः" भाग० ५।७।१। "सुत्राणामं चिर परिचित स्वाजितो देवगणा" नैष०। "देहः परिचय स्यैर्यं वक्रगुणपरिकेश वा" माघ।

प्र+प्रकर्षेण चयने समाहारे च सञ्ज० "कर्षिकारान् प्रचि-न्वती" भा० आ० ७७

वि+विशेषेण चयने। "पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्। मालाकार इवारामे न यथाङ्गारकारकः" भा० उ० १११।सो०

सम्+सम्यक् चयने समाहारे "संचिन्वन्ति तदा पुत्रा जा-तरूपस्य मौक्तिकम्" हरिव० ५२१६

चिकित त्रि० जु० चि—क्ते कर्मणि क्त "छन्दस्युभयथा" पा० निष्ठायाः सार्वधातुकत्वाभावात् शप् जुहोत्यादित्वात् तस्य श्लु द्वित्वम्, कित—क्ते यङ् लुक् पचाद्यच्। संज्ञापूर्वकत्वात् अभ्यासगुणाभाव इति माधवः। १ज्ञाते २ज्ञातिमार्गदर्शके च "त्वं सोम ! प्रचिकितो मनीषा" ऋ० १।९१।१। अत्र भाष्ये उक्ता व्युत्पत्तिर्दर्शिता। ३ऋषिभेदे। तस्यापत्यम् इञ् इञन्तात् यूनि फक्। चैकितायन तस्य यून्यपत्ये पुंस्त्री। "तयोर्होचुः कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः" छा० उ०।

चिकितान त्रि० कित—ज्ञाने कानच्। १ज्ञातरि "तपोवसो ! चिकितानो अचित्तान्" ऋ० ४।१२।२। "चिकितानः कर्माभिज्ञ" भा०। २ऋषिभेदे पु०। तस्यापत्यम् अण् ततः यूनि वा० ढक्। चैकितानेय तस्य यून्यपत्ये। "तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाच" छा०उ०।

चिकितु त्रि० कित—ज्ञाने उन् वेदे द्वित्वम्। ज्ञातरि "अचेत्यग्निश्चिकितुर्हव्यवाट् सुमद्रथः" ऋ० ८।५६।५।

चिकित्वन् त्रि० कित—ज्ञाने क्वनिप् वेदे नि० द्वित्वम्। ज्ञातरि। "केतेन शर्मन्त्सचते सुषामण्यग्ने तुभ्यं चिकित्वना" ऋ० ८।६०।१८।

चिकित्वित् त्रि० कित—ज्ञाने वा० क्विप् वेदे नि० द्वित्वम्। ज्ञातरि "यवयद्द्वेषस त्वा चिकित्वित्सूनृतावरि" ऋ० ४।५२।४। "चिकित्विन् मनस त्वा देव मर्तास ऊतये" ऋ० ५।२२।३।

चिकित्सक पु० कित—रोगापनयने स्वार्थे सन्—ण्वुल्। रोगापनयनकर्त्तरि वैद्ये अमरः। "पूय चिकित्सक-शावम्" मनुः। तद्भक्षणादि चिकित्साशब्दे दृश्यम्

चिकित्सा स्त्री कित—स्वार्थे सन्—भावे अ। रोगप्रती-कारे रोगनिराकरणोपाये अमरः। तस्य लक्षणभेदाद्या-दिकम् भावप्र० उक्तं यथा

"या क्रिया व्याधिहरणी सा चिकित्सा निगद्यते। दोषधातुमलानां या साम्यकृत् सैव रोगहृत्"। क्रियाञ्च कर्म व्याधिर्हन्यतेऽनयेति व्याधिहरणी "कर-णाधिकरणयोश्चेति" पा० सूत्रेण करणार्थे ल्युट् तथाच। "याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः। सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम्"। "या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च। सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्"। क्रियाञ्च चि-कित्सा। तथा चामरसिंहः "आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम्। उपायः कर्म चेष्टा च चिकित्सा च नवक्रिया इति। अथ चिकित्साविध्यु-पदेशः। "आतुरान्चिकित्सेत् शास्त्रोक्तेभ्योऽस्तगदा गदं। बहुश्रुतविवेकस्य भक्तोऽपि विकरो-त्यसौ। रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्। ततः कर्म भिषक् पश्चात् ज्ञानपूर्वं समाचरेत्"। अयं अर्थः भिषक् आदौ रोगं परीक्षेत विचारयेत्। ततः पश्चाद्रोगौषधविचारानन्तरं ज्ञानपूर्वं सावधानो न त्वर-णाय कर्म चिकित्सामौषधदानादिरूपां समाचरेदित्यर्थः। रोगाज्ञानेन चिकित्साकरणे दोषमाह

"यस्तु रोगमविज्ञाय कर्माण्यारभते भिषक्। अप्यौ-षधविधानज्ञस्तस्य सिद्धिर्यदृच्छया"। यदृच्छया सिद्धि-र्भवति नापि भवतीत्यर्थः। अन्यच्च

"भेषजं केवलं कर्त्तुं यो जानाति न चामयम्। वैद्यकर्म स चेत् कुर्याद्वधमर्हति राजतः"।

रोगज्ञाने भेषजाज्ञाने दोषमाह।

"यस्तु केवलरोगज्ञो भेषजेष्वविचक्षणः। तं वैद्यं प्राप्य रोगी स्याद्यथा नौर्नाविकं विना"। नाविक कर्णधार विना यथा नौः सङ्कटे पतति तथा स रोगीत्यर्थः। अन्यच्च

"यस्तु केवलशास्त्रज्ञः क्रियास्वकुशलो भिषक्। स मुह्य-त्यातुरं प्राप्य यथा भीरुरिवाहवम्"।

रोगौषधयोर्ज्ञाने गुणमाह।

"यस्तु रोगविशेषज्ञः सर्वभैषज्यकोविदः। देशकालविभा-

गच्छतो रोगिणः क्षते । न शुभं चौष्ययुक्तं प्रदीप्तस्तु सुखावहः" । प्रदीप्तोऽग्निः । दूतो रोगी च रिक्तहस्तो वैद्यं न पश्येत् । तथाच "रिक्तहस्तो न पश्येत्तु राजानं भिषजं गुरुमिति" । अथ वैद्यस्य लक्षणम् । "चिकित्सां कुरुते यस्तु स चिकित्सक उच्यते । स च स्यात् कुलीनस्तादृशोऽपि निगद्यते । तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयङ्कृती । लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः । प्रत्युत्पन्नमतिर्धीमान् व्यवसायी प्रियंवदः । सत्यधर्मपरो यश्च वैद्य ईदृक् प्रशस्यते" । दृष्टकर्मा दृष्टा परेण कृता चिकित्सा येन सः स्वयङ्कृती स्वयं चिकित्साकृतवान् । लघुहस्तः सिद्धहस्तः । अथ निषिद्धो वैद्यः । "कुचैलः कर्कशः स्तब्धो ग्रामीणः स्वयमागतः । पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा यदि । कर्कशः अप्रियवादी स्तब्धः साभिमानः । ग्रामीणः व्यवहाराचतुरः । अथ वैद्यस्य कर्माह । "व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः । एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः" । अस्यायमर्थः व्याधेः सम्यक्परिचयो व्यथाशान्तिकरणं वैद्यस्य कर्म नतु वैद्य आयुषः प्रभुरित्यर्थः । अपरे त्वेवं व्याचक्षते व्याधेस्तत्त्वतः परिचयो वेदनायाः शान्तिकरणं एतदेव वैद्यस्य वैद्यत्वं किन्तु वैद्य आयुषः प्रभुः आगन्तुमृत्युघातहरत्वात् । तथा च सुश्रुते धन्वन्तरिः "एकोत्तरं मृत्युशतमथर्वाणः प्रचक्षते । तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः" । अयमर्थः अथर्वाणः अथर्वतत्त्वज्ञानार्थं तुल्या मृत्युमेकोत्तरं शतं प्रचक्षते । तत्रैको मृत्युः कालसंयुक्तः । कालः आयुषोऽन्ते शरीरिणामवश्यं मृत्युः । सर्वैरुपायैर्निवारयितुमशक्यः । स ब्रह्मादीनामायुषोऽन्ते प्रहरति । यत आह लिङ्गपुराणे कार्त्तिकेयं प्रति महादेवः "ब्रह्मायुर्ग्रसते काले कुत्र पुत्र ।। रसायनमिति" । तेन कालेन संयुक्तः । संहाराय नियुक्तः सोऽवश्यं भावी शेषाः शतसंख्यकाः आगन्तवः आगन्तुहेतुजन्यान् कार्यकारणयोरभेदोपचारात् । आगन्तवो हेतवः यथा । "विषभक्षणमजीर्णेऽत्यन्नभोजनञ्च दुर्दैवजलपानम् । तथाऽतिबलवैरिव्याघ्रवनमहिषमत्तमातङ्गादिभिर्युद्धम् । दस्युकृतेन क्रोडनमस्युवृक्षाद्यारोहणं बाहुभ्याम् महानदीतरणमेकाकिनो रात्रौ दुर्गे मार्गे गमनम्" इत्यादि । आगन्तुहेतुजा मृत्यवो दुश्चिकित्स्या अपि भाग्यवशात्वादायुषि सत्यपि मारयन्ति । यथा तैलवर्त्तिवह्निषु विद्यमानेषु वात्या दीपं नाशयति । तथाच "यथा सत्यपि तैलाद्ये दीपं निर्वापयेन्मरुत् । एवमायुष्यहीनेऽपि हिंसन्त्यागन्तवोऽमयः" । किन्तु आगन्तुनिमित्तानि निवारयितुं शक्यन्ते । अत आह सुश्रुते धन्वन्तरिः "दोषागन्तुनिमित्तेभ्यः रसमन्त्रविशारदौ । रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ" । वैद्यपुरोहितौ नृपतिं नित्यं यत्नाद्रक्षेताम् । कुतः दोषागन्तुनिमित्तेभ्यः दोषाः मिथ्याहारविहारदूषिता वातपित्तकफरोगोत्पादकाः । आगन्तवः मिथ्याविहाराः अतिबलवैरिविषहरादयः ते निमित्तानि येषां तेभ्यः शतमृत्युभ्यः । वैद्यपुरोहितौ कथं शतमृत्यून् निवारयितुं शक्तौ तत्राह । रसमन्त्रविशारदौ प्रथमं वैद्येन दिनचर्यारात्रिचर्यर्तुचर्योक्ताहारविहाराभ्यां वातपित्तकफधातून् समानेव रक्षति ततो रसशास्त्रोक्तैर्नानारसादिभिर्मिथ्याहारविहारदूषितदोषजनितान् विकारान्मृत्युहेतून् प्रहरति । मन्त्री च षट्कर्मविधानेन मृत्युहेतुभ्यो निषिद्धविहारेभ्यो नृपतिं निवारयति । तत आगन्तुमृत्यवो निवारयितुं शक्या मन्त्रशास्त्रज्ञाभ्यामिति । अथायुर्विचारः । "भिषगादौ परीक्षेत रुग्णस्यायुः प्रयत्नतः । सत आयुषि विस्तीर्णे चिकित्सा सफला भवेत्" । सा च त्रिधा "आसुरी मानुषी दैवी चिकित्सा सा त्रिधा मता । सूत(पारद)प्रधाना दैवी स्यात् छेदभेदात्मिका ऽऽसुरी । मानुषी षड्रसा प्रोक्ता जपहोमादिसंयुता । कलौ चाल्पबले लोके मानुषी तत्र पूजिता" वैद्यकम् ।

**चिकित्सित** त्रि० कित–स्वार्थे सन् कर्मणि क्त । १कृतरोगप्रतीकारे । भावे क्त । २चिकित्सायां न० अमरः । "भूताभावमश्वारोग्यमश्वानां चिकित्सितम्" मनुना अश्वानां चिकित्सितदर्शिका । चिकित्सा जाताऽस्य तारका० इतच् । ३जातचिकित्से त्रि० । ४ऋषिभेदे पु० तस्यापत्यं गर्गा० यञ् । चैकित्सित्य तदपत्ये पुंस्त्री स्त्रियां ङीप् यलोपश्च चैकित्सिती ।

**चिकित्स्य** त्रि० कित–स्वार्थे सन् कर्मणि यत् । प्रतीकार्ये चिकित्सायाग्ये उदा० । "अविशय परत्रैव चिकित्स्य" मा० । भेषजे स चिकित्स्यः स्यात् य उन्मार्गेण गच्छति" भा० शा० १४७ । "अन्योऽचिकित्स्यरोगार्त्तः भस्म्याज्ये निरर्थकः" भा० ।

चिक्किन त्रि० निमता नासिका इनच् "पिटच्चिकचि च" वार्त्ति० इनच् प्रकृतेश्च चिक्कादेशः। निम्ननासिके (खाँदा)

चिक्किल पु० चि-बा० इलच् कुक् च। पङ्के हेम०।

चिकीर्षक त्रि० कृ-सन्-ण्वुल्। कर्त्तुमिच्छौ अत्र ण्वुलो-लित्त्वात् "लिति" पा० प्रत्ययात् पूर्वस्योदात्तता। अत्र "न पदान्तद्विर्वचनवरेयलोपस्वरेत्यादि" पा०। करोते' सन्नन्तात् ण्वुल् अतोलोप स च लितीति स्वरे कर्त्तव्ये न स्थानिवत्। इति मनोरमोक्ते स्वरे कर्त्तव्ये अल्लोपस्य न स्थानिवत्त्वम्।

चिकीर्ष्य त्रि० कर्त्तुमेष्यम् कृ-सन् कर्मणि यत्। कर्त्तु-मेष्ये अत्र यतस्तित्त्वात् "तित्स्वरितम्" पा० स्वरितस्वरः

चिकुर पु० चि इत्यव्यक्तं शब्द कुरति कुर-क। १केशे, अमर० "चिकुरनिकरा जयन्ति ते" नैष० २छदभेदे, ३पर्वते, ४सरीसृपे च। ५चपले, तरले, ६चञ्चले च त्रि० मेदिनी। चपलत्व दोषमनिश्चित्य बध बन्धनादिकारी। अत्र सर्प सर्पभेद सुमसर्पिता यथाह" भा० उ० १०२अ० "ऐरावतकुले जात सुमुखोनाम नागराट्। आर्य्यकस्य मत० पौत्रो दौहित्रो वामनस्य च। एतस्य हि पिता नागश्चिकुरो नाम मातले।। नचिराद्वैनतेयेन पञ्चत्वमुपपादित। ततो ऽब्रवीत् प्रीतमना मातलिर्नारद वच'। एष मे रुचितस्तात। जामाता भुजगोत्तम। क्रियतामत्र यत्नो हि प्रीतिमानस्म्यनेन वै। अस्मै नागाय वै दातु प्रिया दुहितर शुभे।"। कचार्थकात् अस्मात् समूहार्थे पक्ष पाश इत्या प्रत्यया'। चिकुरपक्ष चिकुरपाश चिकुरहस्त केशसमूहे पु०। चिकुर+अस्तौ णिच् कर्मणि क्त। चिकुरित चञ्चलीकृते त्रि०। "आरक्तचिकुरितेक्षणाम्" काद०।

चिकूर पु० चिकुर+पृषो०। केशे शब्दभेदप्रकाश।

चिक्क पीडने चु० उभ० सक० सेट्। चिक्कयति ते अचिचिक्कत् त। [ध्वाम। (छुँचो) त्रिका०

चिक्क पु० चिक् इत्यव्यक्तेन शब्देन कायति कै-क। छुछुन्द

चिक्कण पु० चिक्क-क्विप् चिक न कणति कण-शब्दे अच्। १गुवाकवृक्षे। २तत्फले न० राजनि०। ३मसृणे स्निग्धे (चिकण) त्रि०। शब्दमा० ४चिक्कणगुणवत्त्वात् उत्तमायां गवि स्त्री। अमर "कठिनचिक्कण सक्षण पिच्छिलो मृदु दारुण" भा० शा० १८४अ०। गौरा० ङीष्। पगड्यां हरीतक्या० तत्फले च स्त्री राजनि०। अस्य कन्नान्ते तत्पुरुषे क्लीवता चिह्नया० आद्युदात्तता च चिक्कणकन्यम्।

चिक्कस पु० चिक्क-असच्। यवचूर्णे हेमच०।

चिक्का स्त्री चिक्क-अच्। १पूगवृक्षे राजनि०। २तत्फलेऽपि स्त्री

चिक्किर पु० चिक्क-बा इरच्। मूषिकभेदे। उन्दुरशब्दे ११८८पृ० दृश्यम्। "लावण पुलक कृष्णोऽथ चिरचिक्किरस्तथा" सुश्रुत०।

चिक्लिद त्रि० क्लिद-यङ् लुक् अच् नि०। अतिशयक्लेदयुक्ते।

चिङ्गट पु० चिङ्गड+पृषो०। मत्स्यभेदे भावप्र०। "चिङ्गटस्तु गुरुर्ग्राही मधुरो मलवर्द्धनः। मेद पित्तास्र नाशी तु दृष्योरोचनकृत्तथा। कफवातकरो ज्ञेय" राजवल्ल०। स्वार्थे ङीप्। (गुर्चाचिङ्गडी) क्षुद्र-चिङ्गटे "चिङ्गटी मधुरा हृद्या कफवातविनाशिनी गुर्वी श्लेष्मकरी ज्ञेया" राजव०।

चिङ्गड पु० चिमित्यव्यक्तशब्देन गम्यते भण्यते गम भण-कर्मणि घञर्थे सञ्ज्ञायाम् क स्य ड। (चिङ्‌डी) मत्स्यभेदे शब्दमाला

चिचिण्ड पु० चि-बा० इण्डच् चुक् च। फलप्रधाने वृक्षे भावप्र०। "चिचिण्डो वातपित्तघ्न पथ्यो बलरुचिप्रद। शोषिणोऽतिहितोज्ञेय पटोलात् किञ्चिदूनक" तद्गुणा उक्ता।

चिच्चिटिङ्ग पु० चीयते चि-कर्मणि क्विप् चिदिति तत्र चिटिं प्रेषण गच्छति गम-ड पृषो० मुम्। कीट-भेदे कीटशब्दे २०५८पृ० सुश्रुतवाक्यं दृश्यम्।

चिच्छक्ति चिदेव शक्ति'। चैतन्ये सक्षेपशारीरकम् "चिच्छक्ति परमेश्वरस्य विमला चैतन्यमेवोच्यते"। "चिच्छक्तिरस्ति परमात्मनि तेन सोऽपि व्यक्तो जगत्सु विदितोभवबन्धकर्त्ता। कोऽन्यस्त्वया विरहित' प्रभ यत्नसुप्तिन् कर्त्तुं विकर्त्तुमपि सम्भवित स्वशक्त्या" देवीभागवतम्। "मायाश्रयस्य चिच्छक्त्या चैतन्य स्थितमात्मनि" भाग० १।७।२४।

चिच्छायापत्ति स्त्री चिति बुद्ध्यादे, बुद्ध्यादौ वा चिते छाया प्रतिबिम्ब तस्या आपत्ति। सांख्यमते १चितौ बुद्ध्यादे प्रतिबिम्बप्राप्तौ वेदान्तिमते २बुद्ध्यादौ चित प्रतिबिम्बप्राप्तौ च। चित्प्रतिबिम्बस्वीकारश्च सोपपत्तिक "अन्त करणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम्" सां० सू० भाष्ये समर्थितस्तत्र वाक्यं १९५। ९६पृ० उक्तम् तत्र शेषन्तु "ननु प्रतिबिम्बहेतुतया

संयोगविशेषाश्रयत्वे प्रतिबिम्बकल्पना व्यर्था प्रतिबिम्बकार्य्यस्यार्थभानादेः संयोगविशेषादेव सम्भवादिति । एवम् । बुद्धौ चैतन्यप्रतिबिम्बश्चैतन्यदर्शनार्थं कल्प्यते दर्पणे मुखप्रतिबिम्बवत् । अन्यथा कर्मकर्त्तृविरोधेन स्वस्य साक्षात् स्वदर्शनानुपपत्तेः । अयमेव च चित्प्रतिबिम्बो बुद्धौ चिच्छायापत्तिरिति चैतन्याध्यास इति चिदावेश इति चोच्यते । यत्र चैतन्ये बुद्धेः प्रतिबिम्बः स चाहङ्कारविषयैः सह बुद्धेर्भानार्थमिष्यते । अर्थाकारमयैवार्थग्रहणस्य बुद्धेरन्यत्र स्वत्वे हष्टत्वेन तां विना संयोगविशेषमात्रेणार्थभानस्य पुरुषेऽप्यनौचित्यात् अर्थाकारस्यैवार्थग्रहणशब्दार्थत्वाच्चेति । स चार्थाकारः पुरुषे परिणामो न सम्भवतीत्यर्थात् प्रतिबिम्बरूप एव पर्यवस्यतीति दिक् । स चायमन्योऽन्यप्रतिबिम्बो योगभाष्ये व्यासदेवैः सिद्धान्तितः । "चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते" इत्यादिना ।

अन्तःकरणस्यैकस्यापि वृत्तिभेदाद्भेदः सां॰ प्र॰ भाष्ये समर्थितस्तद्वाक्यञ्च अन्तःकरणशब्दे १९५पृ॰ उक्तम्

चिच्छिन्न पु॰ १देशभेदे २तद्वासिषु ब॰ व॰ । "मेखलैः पुरैश्चैव चिच्छिलैश्च समन्वित" भा॰भी॰ ८८अ ।

चिञ्चा स्त्री चिमित्यव्यक्तं शब्दं चिनोति चि—ड । १तिन्तिडीवृक्षे अमरः । तत्फले अण् हरितक्यादित्वात् लुपि व्यक्तिवचनत्वात् स्त्री । स्वार्थे क । २गुञ्जायां चिञ्चिकाप्यत्र गौरा॰ ङीष् । चिञ्चीत्यप्यत्र केचित्

चिञ्चिड पु॰ चिमित्यव्यक्तशब्देन चिडति चिड—पाके । चिचिण्डवृक्षे भावप्र॰ । चिञ्चिण्ड इत्यत्र चिञ्चिड इति पाठ शुद्धस्तु चिञ्चिण्डशब्देोक्तः

चिञ्चाटक पु॰ चिञ्चेवाटति अट—ण्वुल् । (चेँचको) तृणभेदे रत्नमा॰ । चिञ्चोटक इत्यपि पाठ तत्रार्थे प्रयो॰

चिञ्चाम्ल न॰चिञ्चेवाम्लम् । अम्लशाके । (आमरुल) राजनि॰।

चिञ्चासार पु॰ चिञ्चाया इव सारोऽस्य । अम्लशाके (आमरुल) राजनि॰ । [ चिचेट—चेट: चेटी ।

चिट प्रेषणे भ्वा॰ पर॰ सक॰ सेट् । चेटति अचेटीत् ।

चिट प्रेषणे चु॰उभ॰ सक॰ सेट् । चेटयति ते अचीचिटत् त

चिटी स्त्री चिट—क गौरा॰ ङीष् । चण्डालवेशधारिण्यां योगिन्याम् तन्मन्त्रप्रयोगः तन्त्रसारे उक्तो यथा । "तारचिटिद्वय ब्रूयाच्चाण्डालि च ततः परम् । महदाद्य ततो ब्रूयादमुक मे वश परम् । वशमानय ठ—द्वय चिटिमन्त्र उदाहृत (ओं चिटि । चिटि । महाचाण्डालि अमुक मे वशमानय स्वाहा) सप्तभिर्दिवसैर्वाम् वशयेद्विधिना जनः" । विधि माह । "विलिख्य तालपत्रे तु साध्यनामाग्निगर्भितम् । निक्षिप्य क्षीरसिन्धौ तु सवे तत्क्वाथयेद्बुधः । वश्यो भवति साध्योऽस्य नात्र कार्य्या विचारणा । तालपत्रे लिखित्वैव भद्रकालीगृहे खनेत् । अस्याप्यन्यत्र बहूनां प्रयोगा अप्युदाहृत" ।

चित ज्ञाने भ्वा॰पर॰ सक॰ सेट् । चेतति अचेतीत् । चिचेत ईदित् चित्तः । "य इन्द्र । सोमपातमो मद शविष्ठ चेतति" ऋ॰ ८।१२।१। "एष तेऽचेतिषु सर्वे" भट्टिः । "ततामीदस्य कर्त्ता चेतन्ते दस्युतर्हणाम्" ऋ॰ ८।४७।२। आ॰ वेदे पदव्यत्ययः । चेत च तम चित् । "क्रमरहितमचेतन्नीरजोकारितस्याम्" भट्टिः ।

चित ज्ञाने चु॰ आत्म॰सक॰सेट् । चेतयति ते अचीचितत् त चेतना चेतित । "पूर्वं चेतयते जन्तुरिन्द्रियैर्विषयान् पृथक्" भा॰ शा॰ ९८९॰ "किन्तु खल्वोऽसि जागर्मि चेतयामि न चेतये" भा॰ स्वर्गा॰ २अ॰ "राक्षसाश्चेतयन्ति न" भट्टिः । अस्य अदन्तत्वमपि । तथा चितयतीत्यादिरूपम् "इन्द्र न यशैश्चितयन्त आयवः" ऋ॰ १।१३१।२

चित स्मृतौ चु॰ उभ॰ सक॰ सेट् इदित् । चिन्तयति ते अचिचिन्तत् त चिन्तित चिन्तनम् चिन्ताचिन्ता । "यद्याह नैषधादन्य मनसापि न चिन्तये" भा॰ व॰ ६२अ॰ "तथाप्यस्य वध राजा मनसाऽपि न चिन्तयेत्" मनुः ।

चित् स्त्री चित—सम्पदा॰ भावे क्विप् । १ज्ञाने चेतनायाम् अमरः । २चैतन्ये । "सच्चिदानन्दरूपकम्" वे॰ सा॰ ३चित्तवृत्तिभेदे । "चिदसि मनासि धीरसि" यजु॰ ४।१९। "अचेतनदेहादिसङ्घातस्य चेतनत्व सम्पादयन्ती सान्त खलु निर्विकल्परूप सामान्यज्ञान जनयन्ती चित्तवृत्तिः तद्देशात् चिदित्युच्यते" महीध॰ ४निर्विशेषस्वरूपज्ञाने चेतने स्वतएव प्रकाशमाने ब्रह्मणि "निर्विकल्पं सर्वभासक ज्ञानं सत्यज्ञानरूपं चिदिति" आख्यातारः "चिदिहास्तीति चिन्मात्रमिद चिन्मयमेव च । चित्त्वं चिदहमेते च लोकाश्चिदिति भावयेत्" वेदान्तप्र॰ चिद्रूप

चिद्रूप० "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना" । "तस्मिं-श्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः । इमास्ताः प्रतिबि-म्बन्ति सरसीव तटद्रुमाः" योगवाशिष्ठः चिनोति चि—कर्त्तरि क्विप् । ५चयनकर्त्तरि त्रि० अग्निचित् । कर्म्मणि क्विप् । ६अग्नौ । ७असाकल्ये अव्य० अमर । कश्चित् कथञ्चित् जातुचित् । ८अव्यक्तानुकरणे च अव्य० चित्कार, "नहि करिणि दृष्टे चित्कारेण तमनुमिमतेऽनुमातार" वाचस्पतिमिश्र । मुग्धबोधे विभक्त्यन्तात् किमः चिच्चनौ प्रत्ययौ विहितौ इति-भेद । तच्चिन्त्यं चनशब्दे तद्धेतुरुक्तः जातुचित् इत्यादिप्रयोगासिद्धिश्च तस्य किमः प्रकृतिकत्वाभावात् ।

चित त्रि० चि—कर्म्मणि क्त । १छन्ने मेदि० २कृतचयने "अव-चितबलिपुष्पा वेदिसम्मार्गदक्षा" कुमा० ३संश्रिते ४सञ्चा-यिते च "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवा-मुत्र पुण्यचितः क्षीयते" श्रुतिः ५शवदाहाधारचुल्लीभेदे स्त्री अमर । "प्रणिपाताञ्जलियाचितां चिताम्" कुमा० "अद वामोरु । चिताधिरोहणम्" रघुः "त्वया न पठिता चण्डी मया नापि चिकित्सितम् । अकस्मान्नगरोपान्ते कथं धूमायते चिता" उद्भटः । "चिताग्नेरुद्धृ-ताज्यम्" भा० व० २१४अ० । "सगोत्रजैर्दहीत्वा तु चितामारोप्यते शव । अधोमुखो दक्षिणादिक्चरणस्तु पुमानिति । उत्तानदेहा नारी तु सपिण्डैरपि बन्धु-भिः । चाण्डालाग्नेरमेध्याग्नेः सूतिकाग्नेश्च कर्हि-चित् । पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्" शु०त० । अधिकं चितिशब्दे दृश्यम् । मन्त्रसाधनाङ्गचिता तन्त्र तन्त्रसारे उक्ता यथा "अधःकृता चिता ग्राह्या न तु संस्कारसंस्कृता । चाण्डालादिषु संप्राप्ता केवलं वीरसिद्धिदा" । चितासाधनप्रकारः वीरतन्त्रे 'अष्टम्यां च चतुर्द्दश्यां पक्षयोरुभयोरपि । कृष्णपक्षे विशेषेण साधयेद्वीरसाधनम् । तत्सार्द्धप्रहरे यामे गते च सुरसुन्दरि ! । तत्र वापि चिता वापि नीत्वा गत्वा यथासुखम् । साधयेत् अचिरेण मन्त्री मन्त्रध्यानपरा-यणः । भयं नैव तु कर्त्तव्यं हास्यलास्यं विवर्जयेत् । चतुर्दिक्षु न वीक्षेत मन्त्रमेव समभ्यसेत्" । तत्र पूजा द्रव्यम् "सामिषान्नं गुडं छागं सुरापायसपिष्टकम् । नानाफलञ्च नैवेद्यं स्वस्वकल्पोक्तसाधितम् । चितास्थाने समानीय सुहृद्भिः सहसाधिभि । समानगुणसम्प-न्नै साधयेत् वीतभीः स्वयम्" । [त्रिका० ।

चिताचूडक न० चितैव चूडकं चूलकमस्य ड । चितायां

चिति स्त्री चि+आधारे क्तिन् । १चितायाम् तत्कर-णदेशादि का० श्रौ० २५।७।१५। सूत्रोक्तौ यथा "वितानं साधयित्वा समे वल्कलहदेऽन्तराग्नौ चितिं चिनोति" १५सू० वितानसाधनमग्नीनां यथादेशमध्यायन कृत्वा समे तृणवल्कले देशेऽन्तराग्नौ काष्ठैः चितिं चिनो-ति" कर्क "पूर्वतरम् उद्धृत्य क्षीरिणी पुरुषाकृती १६सू० "पुरुषव्याह्वान यासामोषधीनाम् तादृशं" देव० "क्षीरयुक्ता पुरुषाकृती पुरुषनाम्नी पुंलिङ्गशब्दा-भिधेया अर्कादयः" कर्क । "विमास्वागराश्च गन्धाष्टश्चि पर्णश्च अश्वगन्धाश्च" १७सू० "उद्धृत्य वर्तते त्रिकाद्य दूर्वा शरोत्थ्य पृश्निपर्णी माषपर्णी अश्वगन्धा उपाद-चिका" देव० "अश्वगन्धा खारम्भि पृश्निपर्णी लक्ष्मणेत्य परे अश्वगन्धा च ब्रह्मपादुकेति निगमे" कर्क० चिति-यज्ञ" कात्या० श्रौ० २१।४।२१ "देशो भवति तद्रूपयुक्त इत्यर्थः । स चितिवत् कृतस्य दाहार्थं यादृशे काष्ठ-चितिर्विहिता तादृशे देशे" कर्क० । भावे क्तिन् । २समूहे मेदि० । अग्न्यादे ३चयने संस्कारभेदे । अग्नि-चयनप्रकार शत० ब्रा० ७।१।१।१। "गार्हपत्यं चेष्यन् पशूनालभ्य उद्धरति अवस्यति स्रौतट्ट गार्ह-पत्यं चिनोति इत्यादिके" विस्तरेणोक्तः । चीय-तेऽस्याम् आधारे क्तिन् अग्निचयनाधारे ४इष्टकाभेदे तासामुपधानादि संस्कारा शत० ब्रा० ८।१।१।१। "प्राणभृत उपदधाति । प्राणा वै प्राणभृत प्राणा-नेवैतदुपदधाति ता प्रथमायां चितावुपदधाति" 'एषोऽ-ग्नेर्यत् प्रथमा चिति पुरस्तात्तत् प्राणानुपदधाति तथा-ऽदिमे पुरस्तात् प्राणा इत्यादिके उक्ता इष्टका" । "प्रथमो-त्तमयो पादमात्रीरतिरिक्ता" कात्या० श्रौ० १७।७।२८। "प्रथमोत्तमयोश्चित्योरतिरिक्ता या पादमात्री भवति मात्रोऽतिरिक्ता चेति" कर्कः प्रथमापञ्चम्यो अतिरिक्ता या महत्य इष्टकास्ता पादमात्रीरुपदधाति" सं०व्या० । ५कु-ड्याद्येष्टकादीनां समूहविशेषे । इष्टकामानेन चितिमान-ज्ञानोपयोगिव्यवहारः चितिव्यवहारः । स च लीला० दर्शितो यथा चितौ करणसूत्रं सार्द्धवृत्तम् । "उच्छ्रयेण गुणितं चिते किल क्षेत्रसम्भवफलं घनं भवेत् । इष्टिका-घनहृते घने चितेरिष्टिकापरिमितिश्च लभ्यते । इष्ट-कोच्छ्रय ... हृते. उ... स्तराश्च दृषदां चितेरपि ।

उदाहरणम्। अष्टादशाङ्गुल दैर्घ्यं विस्तारो द्वादशाङ्गु०। उच्छ्रितिस्त्र्यङ्गुला यासामिष्टिकानां चितौ चित्त। यद्विस्तृतिः षड्ककराष्टहस्त दैर्घ्यं च यस्याः त्रिकरोच्छ्रितिश्च। तस्यां चितौ किं फलमिष्टिकानां सङ्ख्या च का ब्रूहि कति स्तराश्च। न्यासः।




दृष्टिकायाः घनहस्तमानम् १/६४चिते क्षेत्रफलम् ४०। उच्छ्रयेण गुणितं चितेर्घनफलम् १२०। लब्धा दृष्टिका सङ्ख्या २५६०। स्तरसङ्ख्या २४। एवं पाषाणचयेऽपि। “चितेः कपि” पा० कपि परे दीर्घः एकचितीकः “पञ्चचितिकोऽग्नि ”इत्यादौ छन्दसि न दीर्घः। चाय–दीप्तौ क्तिन् चिभावः। ६चैतन्ये स्वयप्रकाशे चिच्छब्दार्थे स्त्री “चाश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला” “सक्ते षधारी०। ७दुर्गायाम्। “चितिश्चैतन्यभावाद्वा चेतना वा चिति स्मृता। महान्त व्याप्य स्थिता सर्वान् महा वा प्रकीर्तिता” देवीभाग०पु० ४५ष०।

चितिका स्त्री० चितिरिव कायति कै–क। १कटिस्थसूत्रायाम् हारा०। चिति+स्वार्थे क। २चितिशब्दार्थे चिता+स्वार्थे क अतइत्त्वम्। ३चितायाम्।

चित्कण पु० त्रि० चिदित्यव्यक्तशब्दं कणति कण–अच्। चित्शब्दकारके। क्रोपक्रम्यशब्दे परे तत्पुरुषे चित्पादि० आद्युदात्तता। चित्कणकन्थम्।

चि(ची)त्कार पु० चित्+कृ–भावे घञ् पृषो० वा दीर्घ। चिदित्यव्यक्तशब्दकरणे। “न हि कश्चित्दृष्टे चि(ची)त्कारेण तमनुमिमतेऽनुमातार” वाचस्पति मिश्र। “स चिचीदति चित्कारात् वाञ्छितो गर्दभो यथा” हितो०।

चित्त न० चिती–ध्याने का० करणे क्त। १अन्तःकरणभेदे “मनोबुद्धिरहङ्कारश्चित्त करणमान्तरम्। संशयोनिश्चयोगर्वे स्मरणं विषया इमे” वेदा०प०। तस्य च कारणम् अनुसन्धानात्मक वृत्तिभेद। चित्शब्दे दृश्यम्। २अन्तःकरणमात्रे अमर “योगश्चित्तवृत्तिनिरोध” पात० सू०। “जनस्य चित्तेन भृशं मनात्मना” नैष०। “चन्द्रचतुर्मुखशङ्करच्युतै क्रमादधिष्ठितेन मनोबुद्ध्यहङ्कारचित्ताभिधानरिन्द्रियचतुष्केण क्रमात् संशयनिश्चयाहङ्कार्यचैतन्यांश्च सर्वानेतान् स्थूलविषयाननुभवतः” वे० सा० उक्ते। अस्याधिष्ठाता अच्युत। कर्मणि कर्तरि वा क्त। ३ज्ञाते ४ज्ञातरि च। चित्त च साङ्ख्यमते त्रिगुणप्रकृतिकार्यम्। तदेतत्योगसूत्रभाष्यादौ दर्शितम्। “योगश्चित्तवृत्तिनिरोधः” पात० १।१।सू०

“चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणम्। प्रख्यारूपं हि चित्त सत्त्वम्। रजस्तमोभ्यां संसृष्टम् ऐश्वर्यविषयप्रिय भवति। तदेव तमसानुविद्धमधर्माज्ञानावैराग्यानैश्वर्योपग भवति। तदेव प्रक्षीणमोहावरण सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति तदेव रजोलेशमलापेत स्वरूपप्रतिष्ठ सत्त्वपुरुषान्यताख्यातिमात्र धर्ममेघध्यानोपग भवति। तत्पर प्रसङ्ख्यानमित्याचक्षते ध्यायिनः। चितिशक्तिरपरिणामिन्यप्रतिसङ्क्रमा दर्शितविषया शुद्धा चानन्ता च सत्त्वगुणात्मिका चेयम्। अतो विपरीता विवेकख्यातिरित्यतस्तस्यां विरक्त चित्तन्तामपि ख्याति निरुणद्धि। तदवस्थ चित्त संस्कारोपग भवति। स निर्बीजः समाधि, न तत्र किञ्चित् सम्प्रज्ञायत इत्यसम्प्रज्ञातः द्विविध स योगश्चित्तवृत्तिनिरोध” इति भा०। “कुतः पुनरेकस्य क्षिप्तादिभूमिसम्बन्धः किमर्थं चैतस्य चित्तस्य वृत्तयोनिरोद्धव्या इत्याशङ्क्य प्रथम तावदस्याः सम्बन्धहेतुमुपन्यस्यति। चित्त हीति। प्रख्याशीलत्वात् सत्त्वगुणम्। प्रवृत्तिशीलत्वाद्रजोगुणम् स्थितिशीलत्वात् तमोगुणम्। प्रख्याप्रवृत्त्युपलक्षणार्थं तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादय सूच्यन्ते। प्रवृत्त्या च परितापशोकादयो राजसाः। स्थितिः प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिपदेनाहू गौरवावरणदैन्यादय उपलक्ष्यन्ते। एतदुक्तं भवति एकमपि चित्त त्रिगुणनिर्मिततया गुणानाञ्च वैषम्येण परस्परविमर्दवैचित्र्याद्विचित्रपरिणाम सदनेकावस्थमुपपद्यत इति। क्षिप्ताद्या एव चित्तस्य भूमय यथासम्भवमवान्तरावस्थाभेदवत्त्वा दर्शयति। प्रख्यारूप हीति चित्तरूपेण परिणत सत्त्वं चित्तसत्त्व, तदेव प्रख्यारूपतया सत्त्वप्राधान्य त्रिगुणस्य दर्शितम्। यत्र चित्ते सत्त्वात् किञ्चिद्दूने

रजस्तमसी यदा मिथःसमे भवतः तदैश्वर्य्यञ्च विषयांश्च शब्दादयस्तान्येव प्रियाणि यस्य तत्तथोक्तं सत्त्वप्राधान्यात् खलु चित्तं तत्त्वं प्रविविचिषुरपि तमस्तमसा पिहितत्वादणिमादिकमेव तत्त्वमभिमन्यमानं तत्प्रविविचिषति प्रणिधत्ते च क्षणम् अथ रजसा विध्यमानम्। तत्राप्यलब्धस्थिति तत् प्रियमात्रं भवति। शब्दादिषु पुनरस्य सरसवाही प्रेमा निरूढ एव। तदनेन विक्षिप्तं चित्तमुक्तम्। क्षिप्तं दर्शयन् मूढमपि सूचयति तदेव तमसेति। यदा हि तमो रजो विजित्य प्रवृत्तं तदा चित्तसत्त्वावरकतमःसमुत्सारणेऽसमर्थत्वात् रजसस्तमस्थगितं चित्तमधर्म्माद्युपगच्छति। अज्ञानञ्च विपर्य्ययज्ञानमभावप्रत्ययालम्बनञ्च निद्राज्ञानमुक्तम्। ततश्च मूढावस्थापि सूचितेति। अनैश्वर्य्यं सर्व्वत्रेच्छाप्रतिघातः। अधर्म्मादिव्याप्तं चित्तं भवतीत्यर्थः। यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वमपगततमःपटलं सरजस्कं भवति तदा धर्म्मज्ञानवैराग्यैश्वर्य्याण्युपगच्छतीत्याह प्रक्षीणेत्यादि। मोहस्तमस्तदेव चावरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम्। अतएव सर्व्वतो विशेषाविशेषलिङ्गमात्रालिङ्गरूपेषु प्रद्योतमानं तथापि न धर्म्मायैश्वर्य्याय च कल्पते प्रवृत्त्यभावादित्यत आह। अनुविद्धं रजोमात्रया रजसः प्रवर्त्तकत्वादिति धर्म्मादिरित्यर्थः। तदनेन संप्रज्ञातसमाधिसम्पन्नयोर्मधुभूमिकप्रज्ञाज्योतिषोर्ध्यानमयोर्योगिनोश्चित्तसत्त्वं संगृहीतम् अप्रत्यतिक्रान्तभावनीयस्य ध्यायिनश्चतुर्थीं चित्तावस्थामाह तदेव चित्तं रजोलेशमलादपेतम् अतएव स्वरूपप्रतिष्ठमभ्यासवैराग्यपुटपाकप्रध्वस्तविधूतरजस्तमोमयस्य हि बुद्धिसत्त्वतपनीयस्य स्वरूपप्रतिष्ठस्य विषयेन्द्रियप्रत्याहृतस्यानपसिताधिकारतया च कार्य्यकारिणो विवेकख्यातिं परं कार्य्यमवशिष्यत इत्याह सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्म्ममेघध्यानोपगं भवति। धर्म्ममेघश्च वक्ष्यते। अत्रैव योगिजनप्रसिद्धिमाह तदिति। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्म्ममेघपर्य्यन्तं परं प्रसंख्यानमिति आचक्षते ध्यायिनः। चित्तसामान्याधिकरण्यं च धर्म्मधर्म्मिणोरभेदविवक्षया द्रष्टव्यम्। विवेकख्यातेर्हानहेतुं चितिशक्तेश्चोपादानहेतुं निरोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसाधुताञ्च विवेकख्यातेर्दर्शयति चितिशक्तिरित्यादि। सुखदुःखमोहात्मकत्वमशुद्धिः। सुखमोहावपि विवेकिनं दुःखाकुरुतः। अतो दुःखवद्धेयौ तथाचातिशुद्धमप्यन्तवत् दुनोति। तेन तदपि हेयमेव विवेकिनः। सेयमविशुद्धिरन्तश्च चितिशक्तौ पुरुषे न स्त इत्युक्तं शुद्धा चानन्ता चेति। ननु सुखदुःखमोहात्मकशब्दादीन् इव चेतयमाना तदाकारापन्ना कथं विशुद्धा तदाकारपरिणामपरिवर्ज्जने च कुर्वती कथमनन्तेत्यत उक्तं दर्शितविषयेति। दर्शितो विषयः शब्दादिर्यस्यै सा तथोक्ता। भवेदेतदेवं यदि बुद्धिवच्चितिशक्तिर्विषयाकारतामापद्येत। किन्तु बुद्धिरेव विषयाकारेण परिणता सती अतदाकारायै चितिशक्तये विषयमादर्शयति तत पुरुषश्चेतयत इत्युच्यते। ननु विषयाकारां बुद्धिमानारूढाया चितिशक्तेः कथं विषयवेदनं। विषयारोहे वा कथं न तदाकारापत्तिरिति अत उक्तम् अप्रतिसंक्रमेति। प्रतिसंक्रमः सञ्चारः स चितेर्नास्तीत्यर्थः। स एव कुतोऽस्या नास्तीत्यत उक्तम् अपरिणामिनीति। न चितेस्त्रिविधोऽपि धर्म्मावस्थालक्षण परिणामोऽस्ति येन त्रितयरूपेण परिणता सती बुद्धिसंयोगेन परिणमेत। चितिशक्तेरसङ्क्रान्ताया अपि विषयसंवेदनमुपपादयिष्यते। तदिदं चितिशक्ति शोभनेति, विवेकख्यातिस्तु बुद्धिसत्त्वात्मिका अशोभनेत्युक्तम्। अतश्चितिशक्तेर्विपरीतेति। यदा च विवेकख्यातिरपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानामिति भावः। ततस्तद्धेतोर्निरोधसमाधेरवतारो युज्यते इत्याह अतस्तस्यामिति। ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः। अथ निरुद्धाशेषवृत्ति चित्तं कीदृशमित्यत आह तदवस्थमित्यादि। स निरोध अवस्था यस्य तत्तथोक्तम्। निरोधस्य स्वरूपमाह स निर्बीज इति। क्लेशसहित कर्म्माशयो जात्यायुर्भोगबीजं तस्मान्निर्गतं निर्बीजं अस्त्वेव योगिजनप्रसिद्धामन्वर्थसंज्ञामादर्शयति। न तत्रेति। उपसंहरति। द्विविधः स योगश्चित्तवृत्तिनिरोध इति" विवरणम्।

"तदवस्थे चेतसि विषयाभावात् बुद्धिबोधात्मा पुरुषः। किंस्वभाव ? इति—भा०

"तदा द्रष्टुः स्वरूपेऽवस्थानम्" स्रू०।

"स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये व्युत्थानचित्ते तु सति तथापि भवन्ती न तथा" भा०।

"संमत्युत्तरद्रष्मवतारयन् चोदयति। तदवस्थे चेतसीति

क्रियाचेमे तत्तदाकारपरिणतबुद्धिबोधात्मा स्वयं पुरुष सदानुभूयते न तु बुद्धिबोधरहितोऽतोऽस्य पुरुषस्य बुद्धिबोधस्वभाव सवितुरिव प्रकाश" । अथ संस्कारशेषे चेतसि सोऽस्ति, न च स्वभावमपहाय भावो वर्त्तितुमर्हति इति भाव । स्यादेतत् संस्कारशेषामपि बुद्धि कस्मात् पुरुषो न बुध्यते ? इत्यत आह विषयाभावादिति । न बुद्धिमात्र पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धि । विवेकख्यातिविषयभोगौ च पुरुषार्थौ तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभाव इत्यर्थ । सूत्रेण परिहरति "तदा द्रष्टु स्वरूपेऽवस्थानम्" सू० । "स्वरूप इत्यारोपितम् शान्तघोरमूढस्वरूप निवर्त्तयति पुरुषस्य हि चैतन्य स्वरूपमनौपाधिकम् नतु बुद्धिबोधः शान्तादिरूप औपाधिको हि स स्फटिकस्येव स्वभावत स्वच्छधवलस्य जपाकुसुमसन्निधानोपाधिररुणिमा नचोपाधिनिवृत्तावुपहितनिवृत्तिरतिप्रसङ्गादिति भाव । स्वरूपस्य चाभेदेऽपि भेदं विकल्प्य अधिकरणभाव उक्त इति । अयमेवार्थोभाष्यकृता द्योत्यते । स्वरूपप्रतिष्ठेति । तदानीं निरोधावस्थायां न व्युत्थानावस्थायामिति भाव । स्यादेतत् व्युत्थानावस्थायामप्रतिष्ठिता, स्वरूपे चितिशक्ति, निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी स्यात् व्युत्थाने वा स्वरूपप्रतिष्ठाने सति व्युत्थान निरोधयोरविशेष इत्यत आह व्युत्थानचित्ते त्विति न जातु कूटस्थनित्या चितिशक्ति स्वरूपात् च्यवते । तेन यथा निरोधे तथैव व्युत्थानेऽपि । न खलु शुक्तिकायाः प्रमाणविपर्य्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवत प्रतिपत्ता त्वतथाभूतमपि तथात्वेनाभिमन्यते । निरोधसमाधिमपेक्ष्य सम्प्रज्ञातोऽपि व्युत्थानमेवेति" विवरणम् ।

"कथन्तर्हि दर्शितविषयत्वात्"—भा०

"वृत्तिसारूप्यमितरत्र" सू०

"व्युत्थाने याः चित्तवृत्तयः तदविशिष्टवृत्तिः पुरुष । तथा च सूत्रं "एकमेव दर्शनं" "ख्यातिरेव दर्शनमिति" "चित्तम् अयस्कान्तमणिकल्प सन्निधिमात्रोपकारि दृश्यत्वेन स्व भवति पुरुषस्य स्वामिन । तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिसम्बन्धोहेतुः" भाष्यम् ।

"सूत्रान्तरमवतारयितु पृच्छति कथन्तर्हि इति । यदि भवति न तथा केन तर्हि प्रकारेण प्रकाशत इत्यर्थं । हेतुपदमध्याहृत्य सूत्र पठति । दर्शित विषयत्वात् । वृत्तिसारूप्यमितरत्र । इतरत्र व्युत्थाने याश्चित्तवृत्तय शान्तघोरमूढास्ता एव विशिष्टा अभिन्नावृत्तयो यस्य पुरुषस्य स तथोक्तः सारूप्यमित्यत्र सशब्द एकपर्य्यायः । एतदुक्तं भवति जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयो सन्निधानादभेदग्रहे बुद्धिवृत्ती पुरुषे समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढोऽस्मीति अध्यवस्यति । यथा मलिने दर्पणतले प्रतिबिम्बित मुख मलिनतामारोप्य शोचत्यात्मान मलिनोऽस्मीति । यद्यपि पुरुषसमारोपोऽपि शब्दादिविज्ञानवत् बुद्धिवृत्तिः यद्यपि च प्राकृतत्वेनाचिद्रूपतयाननुभाव्यस्तथापि बुद्धेः पुरुषत्वमापादयन् पुरुषवृत्तिरिवानुभव इवावभासते । तथाचायमविपर्य्ययोऽप्यात्मा विपर्य्ययवानिवाभोक्तापि भोक्तेव विवेकख्यातिरहितोऽपि तत्सहित इवाविवेकख्यातेः प्रकाशते । एतच्च चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनमित्यत्र सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयो प्रत्ययाविशेषोभोग इत्यत्र चोपपादयिष्यते । एतच्च मतान्तरेऽपि सिद्धमित्याह तथा चेति । पञ्चशिखाचार्य्यस्य सूत्रम् "एकमेव दर्शनमिति"। ननु कथमेकं दर्शनं यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जडत्वे नाननुभाव्या, दर्शनं ततोऽन्यत् पुरुषस्य, चैतन्यमनुभवो दर्शनमित्यत आह "ख्यातिरेव दर्शनमिति" उदयव्ययधर्मिणी वृत्ति ख्याति लौकिकीमभिप्रेत्यैतदुक्तमेवेति ऐकमत्य चैतन्यन्तु पुरुषस्य स्वभावो न ख्याति । तत्तु न लोकप्रत्यक्षगोचरोऽपि त्वागमानुमानगोचर इत्यर्थं । तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकसंयोगो भोगहेतु स्वस्वामिभावोऽपि सूचित इति तमुपपादयन्नाह । चित्त स्व भवति । पुरुषस्य स्वामिन इति सम्बन्धः । ननु चित्तजनितमुपकार भजमानो हि चेतनश्चित्तस्य स्वामिता न चास्य तज्जनितोपकारसम्भवस्तदसम्बन्धादनुपकार्य्यत्वात् तत्संयोगतदुपकारभागित्वे परिणामप्रसङ्गादित्यत आह अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेनेति । न पुरुषसंयुक्त चित्तमपितु तत्सन्निहित सन्निधिश्च पुरुषस्य न देशत कालतो वा तदसंयोगात् किन्तु योग्यतालक्षणोऽस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिः । तदुक्तम् दृश्यत्वेनेति । शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः । भोगश्च यद्यपि शब्दाद्याकारवृत्तिश्चित्तस्य धर्मस्तथापि चित्तचैतन्ययोरभेदसमारोपात्, चित्साक्ष्यात् पुरुषस्येत्युक्तम् । तथाचैतेनासंयोगेऽपि तज्जनितोपकारभागिता

पुरुषस्यापरिणामिता चेति सिद्धम् । ननु स्वस्वामिसम्बन्धो भोगहेतुरविद्यानिमित्तोऽविद्या तु किन्निमित्ता न खलु निर्निमित्तं कार्य्यमुत्पद्यते । यथाहुः "स्वप्नादिवदविद्याया प्रवृत्तिः, कस्य किंकृता" इति शङ्कामुपसंहारव्याजेनोद्धरति । तस्मात् चित्तवृत्तिबोधे शान्तघोरमूढाकारचित्तवृत्त्युपभोगे अनाद्यविद्यानिमित्तत्वादनादिसंयोग हेतु अविद्यावासनयोश्च सन्तानो बीजाङ्कुरसन्तानवदनादिरिति भावः" विवरणम् ।

अन्तःकरणशब्दे १८५१ पृ० अधिकमुक्तम् ।

कैवल्यपादे च ज्ञानज्ञेययोर्भेदव्यवस्थापनेन तद्विशेष उक्तो यथा "कुतश्चैतदन्याय्यम्" भा०

"वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः" सू० ।

"बहुचित्तावलम्बनीभूतमेकं वस्तु साधारणं तत् खलु नैकचित्तपरिकल्पितं नाप्यनेकचित्तपरिकल्पितं किन्तु स्वप्रतिष्ठितं कथं ? वस्तुसाम्ये चित्तभेदात्, धर्म्मापेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवति, अधर्म्मापेक्षं तत एव दुःखज्ञानम्, अविद्यापेक्षं तत एव मूढज्ञानं सम्यग्दर्शनापेक्षं तत एव माध्यस्थ्यज्ञानमिति । कस्य तच्चित्तेन परिकल्पितं ? नचान्यचित्तपरिकल्पितेनार्थेनान्यस्य चित्तोपरागो युक्तः तस्माद्वस्तुज्ञानयोर्ग्राह्यग्रहणभेदभिन्नयोर्विभक्तः पन्था नानयोः सङ्करगन्धोऽप्यस्तीति साङ्ख्यपक्षे पुनर्वस्तु त्रिगुणं चलञ्च गुणवृत्तमिति धर्म्मादिनिमित्तापेक्षं चित्तैरभिसम्बध्यते निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनात्मना हेतुर्भवति । केचिदाहुर्ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति त एतया द्वारा साधारणत्वं बाधमानाः पूर्वोत्तरेषु क्षणेषु वस्तुरूपमेवापह्नुवते" भा० तदेवमुत्सूत्रं भाष्यकृद्विज्ञानातिरिक्तस्थापने युक्तिमुक्त्वा सौत्रीं युक्तिमवतारयति कुतश्चैतदिति । वस्तुसाम्ये इति यन्नानात्वे यस्यैकत्वं ततोऽन्यत् भिद्यते यथा चैत्रस्य ज्ञानमेकं भिन्नेभ्यो देवदत्तविष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते ज्ञाननानात्वेऽपि चार्थो न भिद्यते इति भवति विज्ञानेभ्योऽन्यः अभेदश्चार्थस्य ज्ञानभेदेऽपि प्रमातॄणां परस्परानुसन्धानादवसीयते । अस्ति हि रङ्गाद्रिविसृष्टमध्यस्थानामेकस्यां योषिति प्रतीयमानायां प्रतिसन्धानं या त्वया दृश्यते सैव मयापीति । तस्माद्वस्तुसाम्ये चित्तभेदात् ज्ञानभेदात्तयोरर्थज्ञानयोर्विभक्तः पन्थाः स्वरूपभेदोपायः सुखज्ञानं कान्ताया कान्तस्य सपत्नीनां दुःखज्ञानं तामविन्दतो विषाद । स्यादेतत् यद्येकस्य चित्तेन परिकल्पितः कामिनीलक्षणोऽर्थः तेनैवान्येषामपि चित्तमुपरज्यते इति साधारणमुपपद्यते इत्यत आह नचान्येति तथा सत्येकस्मिन्नीलज्ञानवति सर्व्व एव नीलज्ञानवन्तः स्युरिति नन्वर्थवादिनामप्येकोऽर्थः कथं सुखादिभेदाद्भिन्नविज्ञानहेतुर्न ह्यविलक्षणात् कारणात् कार्य्यभेदो युक्त इत्यत आह साङ्ख्यपक्ष इति एकस्यैव वाह्यस्य वस्तुनस्त्रैगुण्यपरिणामस्य त्रैरूप्यमुपपन्नम् ।

एवमपि सर्वेषामविशेषेण सुखदुःखमोहात्मकं विज्ञानं स्यादित्यत आह धर्म्मादिनिमित्तापेक्षं रजःसहितं सत्त्वं धर्म्मापेक्षं सुखज्ञानं जनयति । एवमधर्म्मापेक्षं रजो दुःखं, तमस्तु तथाभूतं मूढज्ञानम् । सत्त्वमेव तु विगतरजस्कं विद्यापेक्षं माध्यस्थ्यज्ञानमिति ते च धर्म्मादयो न सर्वे सर्वत्र पुरुषे सन्ति । किन्तु कश्चित् क्वचिदिति अभ्युपपन्ना व्यवस्थेति । अत्र केचिदाहुः प्रवादुकाः ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति एतदुक्तं भवति भवत्वर्थो ज्ञानात् व्यतिरिक्तः तथाप्यसौ जडत्वात् न ज्ञानमन्तरेण शक्यं प्रतिपत्तुं ज्ञानेन तु भासनीयः तथाच ज्ञानसमयएवास्ति नान्यदा प्रमाणाभावादिति तदेतन्मतं तावत् दूषयति भाष्यकारः तत्र तया द्वारेति वस्तु खलु सर्वचित्तसाधारणमनेकक्षणपरम्परोह्यमानं परिणामात्मकमनुभूयते लौकिकपरीक्षकैः तच्चेद्विज्ञानेन सह भवेत् नूनमेवंविधमेव चेदिदमस्योपरि कोऽयमनुरोधः येन सोऽपि नापह्नूयेतेत्यर्थः" विव० ।

"नचैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात्" सू० ।

"एकचित्ततन्त्रं चेद्वस्तु स्यात्तदा चित्ते व्यग्रे निरुद्धे वा स्वरूपमेव तेनापरामृष्टमन्यस्याविषयीभूतमप्रमाणकमगृहीतस्वभावकं केनचित्तदानीं किं तत्स्यात् ? सम्बध्यमानं वा पुनश्चित्तेन कुत उत्पद्येत ये चास्यानुपस्थिता भागास्ते चास्य न स्युरेवं नास्ति पृष्ठमित्युदरमपि न गृह्येत तस्मात् स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्त्तन्ते तयोः सम्बन्धादुपलब्धिः पुरुषस्य भोग इति" भा० ।

"मा वा भूदिदमनस्यापह्नवो ज्ञानसहभूरेवास्त्वर्थः तत्राप्याह नचैक किं स्यात् यदि घटध्यायि चित्तं तद्यदा पटव्यग्रतया न घटे वर्त्तते यद्वा विवेकविषयमासीत् तदेव च निरोधं समापद्यते तदा घटज्ञानस्य वा विवेकज्ञानभेदमात्रजीवनस्याभावान्नष्ट एव स्यादित्याह एकचित्तेति किं तत् स्यात् न स्यादित्यर्थः । सम्बध्यमानञ्च चित्तेन तद्

वस्तु विवेकोवा घटो वा कुत उत्पद्यते नियतकारणान्वयव्यतिरेकानुविधायिभावानि हि कार्य्याणि न खकारणमतियन्ति कारणान्तरादाविर्भवन्तीति, मा भूदकारणत्वे तेषां कादाचित्कत्वव्याघात न च तज्ज्ञानकारणत्वमेव तत्कारणत्वमिति युक्तम्। धात्राभोदकस्य उपार्जितमोदकस्य वोपयुज्यमानस्य रसवीर्य्यविपाकादिसाम्यप्रसङ्गात् तस्मात् साधूक्तं सम्बध्यमान वा पुनश्चित्तेनेति। अपि च योयोऽर्वाग्भागः स सर्वोमध्यपरभागव्याप्त ज्ञानाधीने सत्त्वे त्वस्याननुभूयमानत्वान्मध्यपरभागौ न स्त इतिव्यापकाभावादर्वाग्भागोऽपि न स्यात् इत्यर्थाभावात् कुतो ज्ञानसहभूरर्थ इत्याह। ये चास्येति अनुपस्थिता अज्ञाता, उपसंहरति तस्मादिति सुगम शेषम्" विवरणम्।

"तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम्" सू०।

"अयस्कान्तमणिकल्पा विषया। अयःसधर्मकं चित्तमभिसम्बध्योपरञ्जयन्ति येन च विषयेणोपरक्तं चित्तं स विषयोज्ञातस्ततोऽन्य पुनरज्ञातोवस्तुनोज्ञाताज्ञातस्वरूपत्वात् परिणामि चित्तम्" भा०।

"स्यादेतत् अर्थश्चेत् स्वतन्त्रः स च जडस्वभाव इति न कदाचित् प्रकाशेत प्रकाशने वा जडत्वमस्यापगतमिति भावोऽप्यपगच्छेत् न जातु स्वभावमपहाय भावोवस्तुमर्हति न चेन्द्रियाद्याधेयो जडस्वभावस्यार्थस्य धर्म्मः प्रकाश इति साम्प्रतम् अर्थधर्म्मत्वे नीलत्वादिवत् सर्वपुरुषसाधारण्य इत्येक शास्त्रार्थश्च इति सर्व एव विद्वांसः प्रसज्जेरन् न जात्वनःकश्चिदस्ति। न चातीतानागतयोः धर्म्मः प्रत्युत्पन्नयुक्तः तस्मात् स्वतन्त्रोऽर्थउपलभ्यविषय इति मनोरथमात्रमेतदित्यत आह तदुपरागेति। जडस्वभावोऽप्यर्थः इन्द्रियप्रणालिकया चित्तमुपरञ्जयति तदेवम्भूत चित्तदर्पणमुपसङ्क्रान्तप्रतिबिम्बा चितिशक्तिश्चित्तमर्थोपरक्तं चेतयमानार्थमनुभवति नत्वर्थे किञ्चित् प्राकट्यादिकमाधत्ते नाप्यसंबद्धा चित्तेन, तत् प्रतिबिम्बसङ्क्रान्तेरुक्तत्वादिति। यद्यपि च सर्वगतत्वाच्चित्तस्य चेन्द्रियस्य चाहङ्कारिकस्य विषये नास्ति सम्बन्धस्तथापि यत्र शरीरे वृत्तिमच्चित्त तेन सह सम्बन्धो विषयाणामित्ययस्कान्तमणिकल्प इत्युक्तम् अयःसधर्मक चित्तमिति। इन्द्रियप्रणालिकयाभिसम्बध्योपरञ्जयन्ति अतएव चित्त परिणामीत्याह वस्तुन इति" विव०।

"यस्य तु तदेव चित्त विषयस्तस्य सदाऽपरिणामित्वात्" भा०।

"सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्" सू०।

"यदि चित्तवत् प्रभुरपि पुरुष परिणमेत् ततस्तद्विषयाश्चित्तवृत्तयः शब्दादिविषयवत् ज्ञाताज्ञाताः स्युः सदा ज्ञातत्वन्तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वमनुमापयति" भा०।

"तदेवं चित्तव्यतिरेकेणार्थमवस्थाप्य तेभ्य परिणतिधर्म्मकेभ्यो व्यतिरिक्तमात्मानमादर्शयितु तद्धर्म्मत्वमपरिणामित्वमस्य वक्तुं पूरयित्वा सूत्रं पठति 'यस्य तु तदेव चित्त विषयस्तस्य सदाऽपरिणामित्वात्'। क्षिप्तमूढविक्षिप्तैकाग्रतावस्थित चित्तमानिरोधात् सर्वदा पुरुषेणानुभूयते वृत्तिमत् तत् कस्य हेतो? यतः पुरुषोऽपरिणामी परिणामित्वे चित्तवत् पुरुषोऽपि ज्ञाताज्ञातविषयो भवेत्। ज्ञातविषय एव त्वयं तस्मादपरिणामी ततश्च परिणामिभ्योऽतिरिच्यते इति तदेतदाह यदि चित्तवदिति। सदा ज्ञातत्व तु मनसः सदाश्रितस्य तस्य य प्रभु स्वामी भोक्तेति यावत् तस्य प्रभोः पुरुषस्यापरिणामित्वमनुमापयति तथाचापरिणामिनस्तस्य परिणामिनश्चित्तात् पुरुषस्य भेद इति भाव" विव०।

"स्यादाशङ्का चित्तमेव स्वाभासं विषयाभासञ्च भविष्यति अग्निवत्" भा०।

"न तत् स्वाभासं दृश्यत्वात्" सू०।

"यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि तथा मनोऽपि प्रत्येतव्यम्। न चाग्निरत्र दृष्टान्त न ह्यग्निरात्मस्वरूपमप्रकाशं प्रकाशयति। प्रकाशश्चायं प्रकाश्यप्रकाशकसंयोगे दृष्ट न च स्वरूपमात्रेऽस्ति संयोगः किञ्च स्वाभास चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः। तद्यथा स्वात्मप्रतिष्ठमाकाशमिव्यप्रतिष्ठमित्यर्थः स्वबुद्धिप्रचारप्रतिसंवेदनात् सत्त्वानां प्रवृत्तिर्दृश्यते। क्रुद्धोऽहम्भीतोऽहमत्र मे रागोऽत्र मे क्रोध इत्येतत् स्वबुद्धेरग्रहणे न युक्तमिति" भा०।

"अत्र वैनाशिकस्त्वापतयति स्यादाशङ्केति अयमर्थः स्यादेतदेव यदि चित्तमात्मनो विषय स्यात् अपि तु स्वप्रकाशने तत् विषयाभास पूर्वचित्त प्रतीत्य समुत्पन्न तदुक्तः पुरुषस्य सदा ज्ञानविषयत्व कुतस्तरां चाऽपरिणामतया परिणामिनश्चित्ताद्भेद इति भवेदेतदेव यदि स्वसंवेदन चित्तं स्वाभासनं तदस्ति तत्तु परिणामितया नीलादिवदनुभवव्याप्यम्। यथाहुरत्र-

**चित्तज्ञ** त्रि० चित्तं चित्तवृत्तिं जानाति ज्ञा—क । आशयाभिज्ञे । "कलाकौशलसम्पन्ना भक्तिश्चित्तज्ञता तथा" शा० द० [न्यूनत्वे दोषे ।

**चित्तदोष** पु० ६त० । चित्तस्य विषयाकर्षणासामर्थ्यरूपे

**चित्तनदी** स्त्री चित्तवृत्तिरूपा नदी । पुण्यपापरूपोभयस्रोतोवाहिन्याम् चित्तवृत्तौ तत्र "विवेकनिम्ना कैवल्यप्राग्भारा पुण्यवाहिनी । अविवेकनिम्ना संसारप्राग्भारा पापवाहिनी" इति भेदः ।

**चित्तपरिकर्म्मन्** न० ६त० । पातञ्जलोक्ते चित्तप्रसादनाख्ये मैत्र्यादिभावनाभेदे चित्तप्रसादनशब्दे दृश्यम्

**चित्तप्रसन्नता** स्त्री ६त० । हर्षे हेम० ।

**चित्तप्रसादन** न० चित्तस्य प्रसादनं प्रसन्नताकरणम् । पातञ्जलोक्ते चित्तप्रसन्नतासम्पादके मैत्र्यादिभावनाजन्ये चित्तसंस्कारभेदे मैत्र्यादिभावनायां च तथात्वं पात० सूत्रभाष्यादावुक्तं यथा

"अस्य चित्तस्यावस्थितस्येदं शास्त्रेण परिकर्म्म निर्द्दिश्यते, तत्कथं ?— भा०

"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" सू० ।

"तत्र सर्व्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत् दुःखितेषु करुणाम्, पुण्यात्मकेषु मुदिताम् । अपुण्यशीलेषूपेक्षाम् ।—एवमस्य भावयतः शुक्लोधर्म्म उपजायते— ततश्च चित्तं प्रसीदति प्रसन्नमेकाग्रं स्थितिपदं लभते" भा० ।

"अपरिकर्म्मितमनसोऽसूयादिमतः समाधितदुपायसम्पत्त्यनुत्पादात् चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते अस्य चित्तस्यावस्थितस्येदमिति । मैत्रीकरुणेत्यादि प्रसादनान्तम् । सुखितेषु मैत्रीं सौहार्दं भावयत ईर्ष्याकालुष्यं निवर्त्तते चित्तस्य । दुःखितेषु च करुणामात्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसो निवर्त्तते । पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतः असूयाकालुष्यं चेतसो निवर्त्तते । अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं चेतसो निवर्त्तते । ततश्चास्य राजसतामसधर्म्मनिवृत्तौ सात्त्विकः शुक्लोधर्म्म उपजायते । सत्त्वोत्कर्षसम्पन्नं च भवति । वृत्तिनिरोधपक्षे तस्य प्रसादलाभाच्चित्तं प्रसीदति प्रसन्नं वक्ष्यमाणेभ्य उपायेभ्यः एकाग्रं स्थितिपदं लभते । असत्यां पुनर्मैत्र्यादिभावनायां न ते उपायाः स्थित्यै कल्पन्ते" विव० ।

करणे ल्युट् ङीप् । चित्तप्रसादनी मैत्र्यादिभावनायाम् । "तत् प्रवृत्तिषु चित्तप्रसादनीयतस्तो मैत्र्यादिभावना" योगवा० । [दयोऽप्यत्र ।

**चित्तभू** पु० चित्ते भवति भू—क्विप् ७त० । कामे चित्तभवा-

**चित्तभूमि** स्त्री चित्तस्य भूमिरवस्था । पातञ्जलप्रसिद्धे चित्तस्यावस्थाभेदे तद्भूमयश्च नानाविधाः तत्र चित्तशब्दे दर्शिता क्षिप्तमूढविक्षिप्तैकाग्रताः पञ्च उक्ताः । मधुमती ज्योतिष्मती विशोका ऋतम्भरा च समाधिभूमयः अन्यास्ताश्च चित्तनिक्षेपशब्दे वसन्तशब्दे च दृश्याः । साधनपादे च सूत्रभाष्यादौ सप्तान्त्या अभ्युक्ता यथा

"सप्तधा प्रान्तभूमिः प्रज्ञा" सू० ।

"तस्येति । प्रत्युदितख्यातेः प्रत्याम्नाय सप्तधेति अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति । तद्यथा परिज्ञातं हेयं, नास्य पुनः परिज्ञेयमस्ति क्षीणा हेयहेतवो न पुनरेतेषु क्षेतव्यमस्ति, साक्षात्कृतं निरोधसमाधिना हानम् । भावितो विवेकख्यातिरूपो हानोपाय इत्येषा चतुष्टयी कार्य्याविमुक्तिः प्रज्ञायाः । चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिगुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थाना स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति । न चैषां विलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुष इत्येतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति सिद्धा भवति विवेकख्यातिर्हानोपाय इति" भा० ।

"विवेकख्यातिनिष्ठायाः स्वरूपमाह सूत्रेण तस्येत्यादि । व्याचष्टे तस्येति प्रत्युदितख्यातेर्व्विवेकख्यातेर्योगिनः प्रत्याम्नायः परामर्शः अशुद्धिरेवावरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति विषयभेदात् प्रज्ञाभेदः । प्रकृष्टोऽन्तो यासां भूमीनामवस्थानां तास्तथोक्ता यतः परं नास्ति प्रकर्षं प्रान्ता भूमयः यस्याः प्रज्ञायाः विवेकख्यातेः सा तथोक्ता सा एव सप्त प्रकारा प्रज्ञाभूमीरुदाहरति तद्यथेति । तत्र पुरुषप्रयत्ननिष्पाद्याश्चतस्रः भूमिषु प्रथमाश्चतस्र उदाहरति परिज्ञातं हेयं यावत् किञ्च साधारणिकं तत्सर्वं परिणामतापस-

. . , तत्परिज्ञा-
पुनः किञ्चिदपरिज्ञेय-
माह क्षीणा इति । प्रान्तताभाह
तीयामाह साक्षात्कृत प्रत्यक्षेय
प्रज्ञातावस्थायामेव निरोधसमाधि
रस्मात् पर निरोद्धव्यमस्तीति शेष । ।
तो निष्पादितः विवेकख्यातिरूपोपा-
र भावनीयमस्ति इति शेष । यथा
क्ति, समाप्तिकार्य्य तया प्रयत्ननिष्पा-
त् पाठः कार्य्यविमुक्तिरिति कार्य्यान्त-
या इत्यर्थ. । प्रयत्ननिष्पाद्यापद्मा
यत्नसाध्या चित्तविमुक्तिमाह चित्त
इति । प्रथमामाह चरिताधिकारा
ार्येऽस्मिन्नर्थ । द्वितीयामाह गुणाइति
माभिति । तृतीयामाह एतस्या-
तस्यामवस्थायां जीवन्नेव पुरुषः
यते चरमदेहत्वादित्याह एतमिति ।
क्रमाह प्रतिप्रसवे प्रधानलयेऽपि
ह इत्येव भवति गुणातीतत्वादिति"
तमेव भूमि चेतम् । २चित्तरूपचेत
याउदितोपेयाल्पै सस्कारै सस्कृते
योगशास्त्रे प्रसिद्धम् ।
। पात० सूत्रभाष्यप्राप्तु क्तेषु योगा
यादिषु नवसु । ते च यथा
प्रमादालस्याऽविरतिभ्रान्तिदर्शनाऽलब्ध-
त्वानि चित्तविक्षेपास्तेऽन्तरायाः"सू० ।
? ये चित्तस्य विक्षेपकाः के पुनस्ते ?
भवन्ति नवान्तरायाश्चित्तविक्षेपा
, एतेषामभावे न भवन्ति पूर्व्वोक्ताश्चित्त-
धुरसकरणवैषम्यम् । स्त्यानम् अकर्म-
संशय उभयकोटिस्पृग्विज्ञानं स्या-
दिति । प्रमादः समाधिसाधनानाम-
—कायस्य चित्तस्य च गुरुत्वादप्रवृत्ति ।
विषयसम्प्रयोगात्मा गर्द्ध । भ्रान्तिद-
म् । अलब्धभूमिकत्व समाधिभूमेर-
स्थितत्व—प्राग्लब्धायां भूमौ चित्तस्या
तिलम्भे हि सति तदवस्थित स्यादिति
गव योगमला योगप्रतिपक्षा योगा-

न्तराया इत्यभिधीयन्ते" महर्षिवेदव्यास भाष्यम् ।
"पृच्छति—अथ के इति । सामान्योत्तर—ये इति । विशे-
षसंख्ये पृच्छति—के इति । उत्तरं—व्याधीत्यादिसूत्रम् ।
अन्तराया नव, एताश्चित्तवृत्तयोयोगान्तरायाः =योग-
विरोधिनश्चित्तस्य विक्षेपकाः । चित्त खल्वमी व्याध्याद-
योयोगाद्विक्षिपन्ति अपनयन्तीति विक्षेपा । योगप्रति-
पक्षत्वे हेतुमाह,—सहैत इति । संशयभ्रान्तिदर्शने
तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ, येऽपि न वृत्त-
योव्याधिप्रभृतयस्तेऽपि वृत्तिसाहचर्य्यात्तत्प्रतिपक्षा
इत्यर्थ । पदार्थान् व्याचष्टे,—व्याधिरिति । धात-
वोवातपित्तश्लेष्माण शरीरधारणात्, अशितपीता-
हारपरिणामविशेषोरस करणानीन्द्रियाणि तेषां
वैषम्य न्यूनाधिकभाव । अकर्मण्यता कर्म्मान-
र्हता । संशय उभयकोटिस्पृग्विज्ञान सत्यप्यत-
द्रूपप्रतिष्ठत्वेन संशयविपर्य्यासयोरभेदे उभयकोटि-
स्पर्शास्पर्शरूपाऽवान्तरविशेषविवक्षयाऽत्र भेदेनोपन्यास ।
अभावनमकरणं तत्राप्रयत्न इति यावत् । कायस्य गुरुत्व
कफादिना, चित्तस्य गुरुत्व तमसा । गर्द्ध तृष्णा । मधु-
मत्यादय समाधिभूमय तल्लब्धभूमेर्य्यदि तावतैव सुस्थित-
मन्यस्य समाधिभ्रेष स्यात्ततस्त्या अपि भूमेरपाय
स्यात् । यस्मात् समाधिप्रतिलम्भे तदवस्थित स्यात्-
आत्तत्र प्रयतितव्यमिति" विवरणम् ।

चित्तविद् पु० चित्तमात्मत्वेन वेत्ति विद्—क्विप् । बौद्धभेदे ।
आशयाभिज्ञे त्रि०          [उन्मादरोगे हेमच०
चित्तविप्लव पु० चित्तस्य विप्लवोऽनवस्थान यस्मात् ५ब० ।
चित्तविभ्रम पु० चित्तस्य विभ्रमो विशेषेण भ्रमणमनवस्थान
यस्मात् ५ब० । उन्मादरोगे अमर । "अहोचित्त-
विकारोऽयं स्याद्वा मे चित्तविभ्रम "भा० स्वर्गा० २अ०
चित्तल पु स्त्री चित्त लाति मनोहरत्वात् ला—क । मृगभेदे।
"असिततिलोद्भवतैलविपक्व लवणयुत नवहिङ्गुरसा-
द्यम् । त्रिकटुकयुक्तनिशार्द्रकमिश्र बहुगुणचित्तल
मांसमभीष्टम् । रसे पाके च मधुर रक्तपित्तविना-
शनम्" शब्दार्थचि० धृतवाक्यम् ।
चित्तवृत्ति स्त्री ६त० । चित्तस्य विषयाकारपरिणामभेदे
"योगश्चित्तवृत्तिनिरोध " पा० । तद्भेदाश्च पञ्चधा
क्लिष्टाशब्दे १२४४पृ० उक्ता ।
चित्तसमुन्नति स्त्री सम्+उद् नम—क्तिन् ६त० । १चित्तस्य
सम्यगुन्नमने दर्पे २गर्व्वे अमर ।

"स्यादेतत् यदि चित्तं न स्वाभासं नापि चित्तान्तरवेद्यमात्मनापि कथं भोक्ष्यते चित्तम्? न खल्वात्मनः स्वयंप्रकाशस्याप्यस्ति काचित् क्रिया न तामन्तरेण कर्त्ता न चाव्यवहितेन कर्मणा तस्य भोक्ता अतिप्रसङ्गादित्याशयवान् पृच्छति कथमिति। तत्रोत्तरमाह चितेरिति। यत् तदवोचत् दृशिरप्रतिसंक्रमेति तदित संस्थित चित्ते स्वबुद्धिसंवेदनं बुद्धेस्तदाकारापत्तौ चितिप्रतिबिम्बाधारतया तद्रूपतापत्तौ सत्यां यथाहि चन्द्रस्य क्रियामन्तरेणापि संक्रान्तचन्द्रप्रतिबिम्बमच्छं सलिलमचलं चलमिव चन्द्रमसमवभासयति एवं विनापि चितिव्यापारम् उपसंक्रान्तचितिप्रतिबिम्बं चित्तं स्वगतया क्रियया क्रियावतीमसङ्गतामपि सङ्गतां चितिशक्तिमवभासयत् भोग्यभावमापादयत्या भोक्तृभावमापादयति तस्या इति सूत्रार्थं भाष्यमप्येतदर्थमवगन्तव्यं तत्र प्रत्याख्यातम् इति न प्रत्याख्यातमत बुद्धिवृत्त्यविशिष्टत्वे आगमसंवादमाह इति तथाचोक्तं न पातालमिति यावत् तस्य शिवस्य ब्रह्मणो विशुद्धसत्त्वस्य चितिच्छायापत्त्या मनोवृत्तिमेव चितिच्छायापन्नत्वाच्चितेरव्यविशिष्टां गुहां वेदयन्ते तस्यामेव गुहायां तद् गुह्यं ब्रह्म तदपनयति स्वयंप्रकाशमनावरणमलुप्तदर्शनं प्रद्योतते परमदेवस्य भगवत इति तदेव दृश्यत न चित्तस्य परिणामिनः ततोऽतिरिक्तः पुमान् परिणतिधर्माऽभ्युपादितः" विव०।

"अथ चैतदभ्युपगम्यते" भा०।

"द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्" सू०।

"मनो हि मन्तव्येनार्थेनोपरक्तं तत् स्वयञ्च विषयत्वाद्विषयिणा पुरुषेणात्मीयया वृत्त्याभिसम्बद्धं तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यते। तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः अपरे चित्तमात्रमेवेदं सर्वं, नास्ति खल्वयं गवादिर्घटादिश्च सकारणो लोक इति, अनुकम्पनीयास्ते कस्मात्? अस्ति हि तेषां भ्रान्तिबीजं सर्वरूपाकारनिर्भासं चित्तमिति समाधिप्रज्ञायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतस्तस्यालम्बनीभूतत्वादन्यः स चेदर्थश्चित्तमात्रं स्यात् कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत तस्मात् प्रतिबिम्बीभूतोऽर्थः प्रज्ञाया येनावधार्य्यते स पुरुष इति एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात्त्रयमप्येतत्तज्जातितः प्रविभजन्ते ते सम्यग्दर्शिनस्तैरधिगतः पुरुष" वेदव्यासभाष्यम्

"सम्प्रति लोकप्रत्यक्षमप्यत्र प्रमाणयति। अत चैतदिति अर्थश्च चैतदित्यर्थः। इन्द्रियादि यथा हि नीलाद्यनुरक्तं चित्तं नीलाद्यर्थं प्रत्यक्षेणावस्थापयति एवं द्रष्टृच्छायापत्त्या तदनुरक्तं चित्तं द्रष्टारमपि प्रत्यक्षेणावस्थापयति अस्ति हि द्व्याकारं ज्ञानं नीलमहं सम्प्रत्येमि" इति तस्मात् ज्ञेयवत् ज्ञातापि प्रत्यक्षसिद्धोऽपि न विविक्ततयाऽवस्थापितो यथा सले चन्द्रमसो बिम्बं मस्येतावता तदप्रत्यक्षं न चास्य समगतत्वे तदप्रमाणमिति चन्द्ररूपेण प्रमाणं भवितमर्हति तत्राश्रिते प्रतिबिम्बिततया चैतन्यगोचरापि चित्तवृत्तिर्न चैतन्यागोचरेति तदिदं सर्वार्थत्वं चित्तस्येति तदेतदाह मनो हीति न केवलः तदाकारापन्ना मन्तव्येनार्थेनोपरक्तं मनः अपि तु स्वयं चेति चकारो भिन्नक्रमः पुरुषेणेत्यस्यानन्तरं द्रष्टव्यः तच्छायापत्ति पुरुषस्य वृत्तिः इयन्तु चैतन्यच्छायापत्तिश्चित्तस्य वैनाशिकैरभ्युपेतव्या कथमन्यथा चित्ते चैतन्यमेते आरोपयाम्बभूवुरित्याह तदनेनेति केचिद्वैनाशिका बाह्यार्थवादिनः। अपरे विज्ञानमात्रवादिनः। ननु यदि चित्तमेव ग्रह्याकारं दृश्याकारं चानुभूयते हन्त चित्तादभिन्नावेव तौ द्रष्टृदृश्यौ यथाहुः। "अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति तत्कथमेतेऽनुकम्पनीया इत्यत आह। समाधिप्रज्ञायामिति ते खलूक्ताभिरुपपत्तिभिश्चित्तातिरिक्तं पुरुषमभ्युपगमय्याष्टाङ्गयोगोपदेशेन समाधिप्रज्ञायामात्मगोचरायामवतार्य्य बोधयितव्याः। तद्यथा समाधिप्रज्ञायां प्रज्ञेयोऽर्थं आत्मप्रतिबिम्बीभूतोऽन्यः कस्मात्? तस्यात्मन आलम्बनीभूतत्वात् अथ चित्तादभिन्नमेव कस्मात्तदवलम्बनं भवतीति यदि युक्तिबोधितापि वैजात्याद्देशात् तत्र हेतुमाह स चेदात्मरूपोऽर्थं चित्तमात्रं स्यात् न तु ततो व्यतिरिक्तः तत कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत स्वात्मनि वृत्तिविरोधात्। उपसंहरति तस्मादिति। समीचीनोपदेशेनानुकम्पिता भवन्तीति आह। एवमेतदिति ज्ञापितं समाप्तः इत्यर्थ" वि०

"इतश्चैतत्—तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्" सू०।

"तदेतच्चित्तमसंख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं न स्वार्थं संहत्यकारित्वा-

न्तारैर्गुणवृत्तिविरोधात् दुःखमेवेति, हेय मलदिष्टा-न्तम्। प्रान्तां दर्शयति भाष्ये पुन. किञ्चिदवशेष्य-मस्ति। द्वितीयामाह क्षीणा इति। प्रान्ततामाह न पुनरिति। तृतीयामाह साक्षात्कृत प्रत्येय निरोधं यथा सम्प्रज्ञातावस्थायामेव निरोधसमाधि साध्यं हानं न पुनस्तस्मात् परं निरोद्धव्यमस्तीति शेष। चतुर्थीमाह भावितो विवेकख्यातिरूपोपा-योपायः, नाप्यतः परं भावनीयमस्ति इति शेष। एषा चतुष्टयी कार्याविमुक्तिः, समाप्तिकार्य्यतया प्रयत्ननिष्पा-द्या दर्शिता। क्वचित् पाठः कार्य्यविमुक्तिरिति कार्य्यान्त-रेभ्य विमुक्तिः प्रज्ञाया इत्यर्थः। प्रयत्ननिष्पाद्याश्चाता-तदनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह चित्त विमुक्तिस्तु त्रयी इति। प्रथमामाह चरिताधिकारा बुद्धिस्तन्भोगापवर्गकार्य्ये स्थिं। द्वितीयामाह गुणाश्चेति प्रान्ततामाह न चैषामिति। तृतीयामाह एतस्या-मवस्थायामिति एतस्यामवस्थायां जीवन्नेव पुरुषः कुशलोऽस्तु इत्युच्यते चरमदेहत्वादित्याह एतामिति। अनौपचारिक कुशलमाह प्रतिप्रसवे प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति" विवरणम्। चित्तैव भूमि क्षेत्रम्। २चित्तकल्पदोषे तस्मिंश्च मैत्रीकरुणामुदितोपेक्षासु सत्कारैः संस्कृते समाधिलाभः इति योगशास्त्रे प्रसिद्धम्।

चित्तविक्षेप पु० ६त०। पात० सूत्रभाष्यप्रसिद्धेषु योगा न्तरायभूतेषु व्याध्यादिषु नवसु। ते च यथा "व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनाऽलब्ध-भूमिकत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तराया" सू०। अथ केऽन्तराया ? ये चित्तस्य विक्षेपकाः के पुनस्ते ? कियन्तो वेति ? भवन्ति नवान्तरायाश्चित्तविक्षेपा सहैते चित्तवृत्तिभिः, एतेषामभावे न भवन्ति पूर्वोक्ताश्चित्त-वृत्तयः। व्याधिर्धातुरसकरणवैषम्यम्। स्त्यानम् अकर्म-ण्यता चित्तस्य। संशय उभयकोटिस्पृग्विज्ञानं स्या-दिदमेव, नैवं स्यादिति। प्रमादः समाधिसाधनानाम-भावनम्। आलस्यं–कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः। अविरतिः–चित्तस्य विषयसंप्रयोगात्मा गर्द्धः। भ्रान्ति-दर्शनं विपर्ययज्ञानम्। अलब्धभूमिकत्वं समाधिभूमेर-लाभः। अनवस्थितत्वं–लब्धायां भूमौ चित्तस्या प्रतिष्ठा। समाधिप्रतिलम्भे हि सति तदवस्थितं स्यादिति एते चित्तविक्षेपाः नव योगमला योगप्रतिपक्षा योगा न्तराया इत्यभिधीयन्ते" भाष्यविवेदव्यास भाष्यम्। "पृच्छति–अथ के इति। सामान्योत्तरं–ये इति। विशे-षसंख्ये पृच्छति–के इति। उत्तरं–व्याधीत्यादिसूत्रम्। अन्तराया नव, एताश्चित्तवृत्तयो योगान्तरायाः=योग-विरोधिनश्चित्तस्य विक्षेपकाः। चित्त एकस्मी व्याध्याद-यो योगाद्विक्षिपन्ति अपनयन्तीति विक्षेपाः। योगप्रति-पक्षत्वे हेतुमाह,–सहैत इति। संशयभ्रान्तिदर्शने तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ, येऽपि न वृत्त-यो व्याधिप्रभृतयस्तेऽपि वृत्तिसाहचर्य्यात्तत्प्रतिपक्षा इत्यर्थः। पदार्थान् व्याचष्टे,–व्याधिरिति। धातु-र्वातपित्तश्लेष्माणः शरीरधारणात्, अशितपीता-न्नरसपरिणामविशेषो रसः करणानीन्द्रियाणि तेषां वैषम्यं न्यूनाधिकभावः। अकर्मण्यता कर्मान-र्हता। संशय उभयकोटिस्पृग्विज्ञानं यद्यप्यत-द्रूपप्रतिष्ठत्वेन संशयविपर्य्यययोरभेदे उभयकोटि स्पर्शास्पर्शरूपाऽवान्तरविशेषविवक्षयाऽत्र भेदेनोपन्यासः। अभावनमकरणं तत्राप्रयत्न इति यावत्। कायस्य गुरुत्वं कफादिना, चित्तस्य गुरुत्वं तमसा। गर्द्धः तृष्णा। मधु-मत्यादय समाधिभूमय तल्लब्धभूमेर्यदि तावतैव सुस्थित-मन्यस्य समाधिभ्रंशः स्यात्तत्तस्या अपि भूमेरपाय स्यात्। यस्मात् समाधिप्रतिलम्भे तदवस्थितं स्यात्-स्मात्तत्र प्रयतितव्यमिति" विवरणम्।

चित्तविद् पु० चित्तमात्मत्वेन वेत्ति विद–क्विप्। बौद्धभेदे। प्रायशाभिज्ञे त्रि०

[उन्मादरोगे हेमच०

चित्तविप्लव पु० चित्तस्य विप्लवोऽनवस्थानं यस्मात् ५ब०।

चित्तविभ्रम पु० चित्तस्य विभ्रमो विशेषेण भ्रमणमनवस्थान यस्मात् ५ब०। उन्मादरोगे अमर। "अहोश्चित्र-विकारोऽयं स्याहा मे चित्तविभ्रम" भा० स्वर्गा० २अ०

चित्तल पु स्त्री चित्त लाति मनोहरत्वात् ला–क। मृगभेदे। "हरिततित्तिरपुत्रैर्वाषयकः सवणप्रत मघ्रिपुरमा-णम्। त्रिकटुकयुक्तनिगरूकमिन्न षड्गुणचित्तल मांसमनर्घम्। रसे पाके च मधुर रक्तचित्तविना-शनम" इत्यर्थचि० भावप्रका०म्।

चित्तवृत्ति स्त्री ६त०। चित्तस्य विषयाकारपरिणामभेदे "योगश्चित्तवृत्तिनिरोध." पा०। तद्भेदाश्च पञ्चधा क्लिष्टाक्लिष्टे १११४पृ० उक्ता।

चित्तसमुन्नति स्त्री सम्–उद्–नम–क्तिन् ६त०। १चित्तस्य समुन्नमने दर्पे गर्व्वे अमर।

**चित्तज्ञ** त्रि० चित्त चित्तवृत्तिं जानाति ज्ञा–क। आशयाभिज्ञे। "कलाकौशलसम्पन्नो भक्तिश्चित्तज्ञता कृता" सा० द० [शून्यत्वे दोषे।

**चित्तदोष** पु० ६त०। चित्तस्य विषयाद्याकर्षणासामर्थ्यरूपे

**चित्तनदी** स्त्री चित्तवृत्तिरूपा नदी। पुण्यपापरूपोभयस्रोतोवाहिन्याम् चित्तवृत्तौ तत्र "विवेकनिम्ना कैवल्यप्राग्भारा पुण्यवाहिनी। अविवेकनिम्ना संसारप्राग्भारा पापवाहिनी" इति भेदः।

**चित्तपरिकर्म्मन्** न० ६त०। पातञ्जलोक्ते चित्तप्रसादनाख्ये मैत्र्यादिभावनाभेदे चित्तप्रसादनशब्दे दृश्यम्

**चित्तप्रसन्नता** स्त्री ६त०। हर्षे हेम०।

**चित्तप्रसादन** न० चित्तस्य प्रसादनं प्रसन्नताकरणम्। पातञ्जलोक्ते चित्तप्रसन्नतासम्पादके मैत्र्यादिभावनाजन्ये चित्तस्य संस्कारभेदे मैत्र्यादिभावनायां च तथात्वं पात० सूत्रभाष्यादावुक्तं यथा

"अस्य चित्तस्यावस्थितस्येदं शास्त्रेण परिकर्म्म निर्दिश्यते, तत्कथं?— भा०

"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" सू०।

"तत्र सर्व्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत् दुःखितेषु करुणाम्, पुण्यात्मकेषु मुदिताम्। अपुण्यशीलेषूपेक्षाम्।—एवमस्य भावयतः शुक्लोधर्म्म उपजायते— ततश्चित्तं प्रसीदति प्रसन्नमेकाग्रं स्थितिपदं लभते" भा०।

"अपरिकर्म्मितमनसोऽसूयादिमतः समाधितदुपायसम्पत्त्यनुत्पादात् चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते अस्य चित्तस्यावस्थितस्येदमिति। मैत्रीकरुणेत्यादि प्रसादनान्तम्। सुखितेषु मैत्रीं सौहार्दं भावयत ईर्ष्याकालुष्यं निवर्त्तते चित्तस्य। दुःखितेषु च करुणामात्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसो निवर्त्तते। पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतः असूयाकालुष्यं चेतसो निवर्त्तते। अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं चेतसो निवर्त्तते। ततश्चास्य राजसतामसधर्म्मनिवृत्तौ सात्त्विकः शुक्लो धर्म्म उपजायते। सत्त्वोत्कर्षसम्पन्नः सम्भवति। इत्थं निरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति प्रसन्नश्च वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते। असत्यां पुनर्मैत्र्यादिभावनायां न ते उपायाः स्थितिं कल्पन्ते" विव०।

करणे ल्युट् ङीप्। चित्तप्रसादनी मैत्र्यादिभावनायाम्। "तत् प्रथितु चित्तप्रसादनीषतनो मैत्र्यादि भावना" पौरव०। [दयोऽप्यत्र।

**चित्तभू** पु० चित्ते भवति भू–क्विप् ७त०। कामे चित्तभवा-

**चित्तभूमि** स्त्री चित्तस्य भूमिरवस्था। पातञ्जलप्रसिद्धे चित्तस्यावस्थाभेदे तद्भूमयश्च नानाविधा तत्र चित्तशब्दे दर्शिता क्षिप्तमूढविक्षिप्तैकाग्रता अतसः उक्ता। मधुमती ज्योतिष्मती विशोका ऋतम्भरा च समाधिभूमयस्तान्यास्तावच्चित्तविक्षेपशब्दे वक्ष्यन्ते च दृश्याः। साधनपादे च सूत्रभाष्यादौ सप्ताख्या अभ्युक्ता यथा "सप्तधा प्रान्तभूमिः प्रज्ञा" सू०।

"तस्येति। प्रत्युदितख्यातेः प्रत्याम्नाय सप्तधेति च-अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति। तद्यथा परिज्ञातं हेयं, नास्य पुनः परिज्ञेयमस्ति क्षीणा हेयहेतवो न पुनरेतेषु क्षेतव्यमस्ति, साक्षात्कृतं निरोधसमाधिना हानम्। भावितो विवेकख्यातिरूपो हानोपाय इत्येषा चतुष्टयी कार्य्याविमुक्तिः प्रज्ञायाः। चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिगुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति। न चैषां विलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुष इत्येतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति सिद्धा भवति विवेकख्यातिर्हानोपाय इति" भा०।

"विवेकख्यातिनिष्ठाया स्वरूपमाह सूत्रेण तस्येत्यादि। व्याचष्टे तस्येति प्रत्युदितख्यातेर्वसमानख्यातेर्योगिनः प्रत्याम्नाय परामर्शः अशुद्धिरेवावरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति विषयभेदात् प्रज्ञाभेदः। प्रकृष्टोऽन्तो यासां भूमीनामवस्थानां तास्तथोक्ता यत्र परं नास्ति प्रकर्षः प्रान्ता भूमयः यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता ता एव सप्त प्रकाराः प्रज्ञाभूमीरुदाहरति तद्यथेति। तत्र दुःखप्रवृत्तिनिमित्तादीनां चतसृषु भूमिषु प्रथमामुदाहरति परिज्ञातं हेयं यावत् किञ्च प्राधानिकं तत्सर्वं परिणामताप-

ऽकारेषु शक्तिविरोधात् तु सम्भवेति, हेयं तत्परिज्ञातम्। प्रान्तता दर्शयति नास्य पुनः किञ्चिदपरिज्ञेयमस्ति। द्वितीयामाह क्षीणा इति। प्रान्ततामाह न पुनरिति। तृतीयामाह साक्षात्कृतं प्रत्यचेण निश्चितं यथा सम्प्रज्ञातावस्थायामेव निरोधसमाधिप्राप्त्यं हानं न पुनरस्मात् परं निषेव्यमस्तीति शेषः। चतुर्थीमाह भावितो विवेकख्यातिरूपो हानोपायः, नास्य परं भावनीयमस्ति इति शेषः। एषा चतुष्टयी कार्य्याविमुक्तिः, समाप्तिकार्य्यं तथा प्रयत्ननिष्पाद्या दर्शिता। क्वचित् पाठः कार्य्यविमुक्तिरिति कार्य्यान्तरेण विमुक्तिः प्राप्तया इत्यर्थः। प्रयत्ननिष्पाद्योक्ता तदनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह चित्तविमुक्तिस्तु त्रयी इति। प्रथमामाह चरिताधिकारा बुद्धिः कृतभोगापवर्गकार्य्येत्यर्थः। द्वितीयामाह गुणा इति प्रान्ततामाह न चैषामिति। तृतीयामाह एतस्यामवस्थायामिति एतस्यामवस्थायां जीवन्नेव पुरुषः कुशलो मुक्त इत्युच्यते चरमदेहत्वादित्याह एतस्मिति। अनौपचारिकं मुक्तमाह प्रतिप्रसवे प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति” विवरणम्। चित्तमेव भूमिः क्षेत्रम्। २चित्तरूपक्षेत्रे तस्मिंश्च मैत्रीकरुणामुदितोपेक्षारूपैः सत्कारैः संस्कृते समाधिलाभः इति योगशास्त्रे प्रसिद्धम्।

चित्तविक्षेप पु० ६त०। पात० सूत्रभाष्यप्रोक्तेषु योगान्तरायभूतेषु व्याध्यादिषु नवसु। ते च यथा

“व्याधिस्त्यानसंशयप्रमादालस्याऽविरतिभ्रान्तिदर्शनाऽलब्धभूमिकत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः” सू०। अथ केऽन्तरायाः? ये चित्तस्य विक्षेपकाः के पुनस्ते? कियन्तो वेति? भवन्ति नवान्तरायाश्चित्तविक्षेपाः सहैते चित्तवृत्तिभिः, एतेषामभावे न भवन्ति पूर्व्वोक्ताश्चित्तवृत्तयः। व्याधिर्धातुरसकरणवैषम्यम्। स्त्यानम् अकर्म्मण्यता चित्तस्य। संशयः उभयकोटिस्पृग्विज्ञानं स्यादिदमेवं, नैवं स्यादिति। प्रमादः समाधिसाधनानामभावनम्। आलस्यं—कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः। अविरतिः—चित्तस्य विषयसंप्रयोगात्मा गर्द्धः। भ्रान्तिदर्शनं विपर्य्ययज्ञानम्। अलब्धभूमिकत्वं समाधिभूमेरलाभः। अनवस्थितत्वं—प्राप्तायां भूमौ चित्तस्याप्रतिष्ठा। समाधिप्रतिलम्भे हि सति तदवस्थितं स्यादिति एते चित्तविक्षेपाः नव योगमला योगप्रतिपक्षा योगान्तराया इत्यभिधीयन्ते” भगवद्वेदव्यासभाष्यम्।

“पृच्छति—अथ के इति। सामान्योत्तर—ये इति। विशेषसंख्ये पृच्छति—के इति। उत्तरं—व्याधीत्यादिसूत्रम्। अन्तराया नव, एताश्चित्तवृत्तयोयोगान्तराया = योगविरोधिनश्चित्तस्य विक्षेपकाः। चित्त समुन्नतो व्याध्यादयो योगाद्विक्षिपन्ति अपनयन्तीति विक्षेपाः। योगप्रतिपक्षत्वे हेतुमाह,—सहैत इति। संशयभ्रान्तिदर्शने तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ, येऽपि न वृत्तयो व्याधिप्रभृतयस्तेऽपि वृत्तिसाहचर्य्यात्तत्प्रतिपक्षा इत्यर्थः। पदार्थान् व्याचष्टे,—व्याधिरिति। धातवः वातपित्तश्लेष्माणः शरीरधारणात्, अशितपीताहारपरिणामविशेषो रसः करणानीन्द्रियाणि तेषां वैषम्यं न्यूनाधिकभावः। अकर्म्मण्यता कर्म्मानर्हता। संशय उभयकोटिस्पृग्विज्ञानं सत्यप्यतद्रूपप्रतिष्ठत्वेन संशयविपर्य्यासयोरभेदे उभयकोटिस्पर्शास्पर्शरूपाऽवान्तरविशेषविवक्षयाऽत्र भेदेनोपन्यासः। अभावनमकरणं तत्राप्रयत्न इति यावत्। कायस्य गुरुत्वं कफादिना, चित्तस्य गुरुत्वं तमसा। गर्द्धः तृष्णा। मधुमत्यादयः समाधिभूमयः तल्लब्धभूमेर्य्यदि तावतैव सुस्थितम्मन्यस्य समाधिभ्रेषःस्यात्तत्तस्या अपि भूमेरपायः स्यात्। यस्मात् समाधिप्रतिलम्भे तदवस्थितं स्यात्तस्मात्तत्र प्रयतितव्यमिति” विवरणम्।

चित्तविद् पु० चित्तमात्मत्वेन वेत्ति विद—क्विप्। बौद्धभेदे। आशयाभिज्ञे त्रि०  [उन्मादरोगे हेमच०

चित्तविप्लव पु० चित्तस्य विप्लवोऽनवस्थानं यस्मात् ५ब०।

चित्तविभ्रम पु० चित्तस्य विभ्रमो विशेषेण भ्रमणमनवस्थानं यस्मात् ५ब०। उन्मादरोगे अमरः। “अहो चित्तविकारोऽयं स्यात्ता मे चित्तविभ्रमः” भा० स्वर्गा० २अ०

चित्तल पु स्त्री चित्तं लाति मनोहरत्वात् ला—क। मृगभेदे। “असिततिलोद्भवतैलविपक्वं लवणयुतं नवहिङ्गुरसाद्यम्। त्रिकटुकयुक्तनिशार्द्रकमिश्रं बहुगुणचित्तलमांसमनर्घम्। रसे पाके च मधुरं रक्तपित्तविनाशनम्” शब्दार्थचि० सुतवाक्यम्।

चित्तवृत्ति स्त्री ६त०। चित्तस्य विषयाकारपरिणामभेदे “योगश्चित्तवृत्तिनिरोधः” पा०। तद्भेदाश्च पञ्चधा क्लिष्टाक्लिष्टे ११४४पृ० उक्ताः।

चित्तसमुन्नति स्त्री सम्+उद्+नम—क्तिन् ६त०। १चित्तस्य सम्यगुन्नमने तद्धेतौ २गर्व्वे अमरः।

**चित्तहारिन्** त्रि० चित्तं हरति हृ–णिनि। मनोहरे स्त्रियां ङीप् अण्। चित्तहार अण् । चित्तहारक तत्रार्थे ताच्छील्ये ट। चित्तहर मनोहरणशीले त्रि० स्त्रियां ङीप्। [एकविषये स्थिरचित्ततायाम् अमरः।

**चित्ताभोग** पु० सम्यग् भोग आभोग एकविषयता ६त०।

**चित्ति** स्त्री चित–ज्ञाने भावे क्तिन्। १प्रज्ञायाम् "उद्‌ त्वा विश्वे देवा अग्ने। भरन्तु चित्तिभिः" यजु० १२। २चिन्तने च "चित्तिं जुहोमि मनसा घृतेन" १७।७८। "चित्तिं चिन्तनम्" वेददी०। ३कर्म्मणि च। "या चित्तिभिर्निचकार, इति प्रक्रमाधिकृत्य "चित्तिभिः कर्म्मभि" निरु० उक्तम् कर्त्तरि क्तिच्। ४ज्ञापयितरि ५ज्ञापके च त्रि० "चित्तिरपां दमे विश्वायु" ऋ० १।६७।५। "चित्तिश्चेतयिता ज्ञापयिता वा" भा०। भावे क्तिन्। ६ख्यातौ स्त्री। "चित्ति दधस्व सुभगमर्थो" ऋ० २। २१।६। चित्तिं ख्यातिम् भा०। [हेमच०।

**चित्तोन्नति** स्त्री ६त०। १चित्तस्योन्नतौ तद्वेतुत्वात् २गर्व्वे

**चित्पति** पु० ६त०। चितःज्ञानस्य पतिः। मनोभिमानिनि जीवे। अस्य "न भूवाक्‌चिद्दिधिषादि" पा० न पूर्वपद प्रकृतिस्वरः। "चित्पतिर्मा पुनातु" यजु० ४।४।

**चित्य** न० चि–क्यप्। १चितायां शवदाहस्थल्याम् त्रिका० स्तोत्रं तत्रार्थे अमरः। २चयनीये त्रि०। भावे क्यप्। ३चयने स्त्री

**चित्र** चित्रीकरणे–लेख्ये अद्भुते च अद० चु० उभ० सक० सेट्। चित्रयति ते अचिचित्रत् त। चित्रितः चित्रः।

**चित्र** न० चित्र–भावे अच् चि–ष्ट्रन् वा। १तिलके। २आलेख्ये ३अद्भुते ४कर्बुरवर्णे ५तद्युक्ते त्रि० मेदि०। ६आकाशे ७कुष्ठभेदे हेम०। ८यमभेदे पु० "वृकोदराय चित्राय" यमतर्पणमन्त्रः। ९एरण्डवृक्षे १०अशोकवृक्षे ११चित्रकवृक्षे राजनि० १२चित्रगुप्ते चित्रगुप्तशब्दे दृश्यम् १३शब्दालङ्कारभेदे न० अलङ्कारशब्दे ३९०पृ० दृश्यम्। "चित्रकमभीरित मकारचिकापदद्वयम्" वृ० र० उक्ते १५षोडशाक्षरपादके छन्दोभेदे। "निसर्गचित्रोज्ज्वल सूक्ष्मपक्ष्मणा" "चित्रं चकार पदमर्द्धपलायितेन" "रुचिरचित्रतनूरुहशालिभिः" इति च माघ।

**चित्रक** न० चित्रमिव कायति कै–क चित्–स्वार्थे क वा। १तिलके मेदि० चित्रेव कायति कै–क। २व्याघ्रे ३व्याघ्रभेदे (चिताबाघ)। पुस्त्री हेमच०। स्त्रियां जातित्वात् ङीप्। (चिरता)ख्याते ४ओषधिभेदे पु० "चित्रकः कटुकः पाके वह्निकृत् पाचनो लघुः। रूक्षोष्णो ग्रहणीकुष्ठशोथार्शःक्रिमिकासनुत्। वातश्लेष्महरो ग्राही वातार्शः-श्लेष्मपित्तहृत्। विशिष्य चैतक ग्राह कालमर्द्दित-मर्द्दितम्। तदन्तिके यथाङ्गोके माचिर्त तक्रकमतम्" भावप्र० तंडुलादि। चित्र–क्वुन्। ५चित्रकरे त्रि० ६शूरे ७कृशानुके शब्दार्थचि० ८एरण्डवृक्षे पु० अमरः।

**चित्रकण्ठ** पु० चित्रः कण्ठोऽस्य। १पारावते २तद्भेदे वनकपोते च (घुघु)। जटाधरः। स्त्रियां जातित्वात् ङीप्।

**चित्रकगुटिका** स्त्री चक्रदत्तोक्ते गुटिकाभेदे यथा "चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च। व्योष-हिङ्ग्वजमोदाश्च चव्यञ्चैकत्र चूर्णयेत्। गुटिका मातुलुङ्गस्य दाडिमाम्लरसेन वा। कृत्वा विपाचयेद् दुयामं दीपयत्याशु पावकम्। सौवर्च्चलं सैन्धवञ्च विड-मौद्भिदमेव च। सामुद्रेण सह पञ्च लवणान्यत्र यो-जयेत्"।

**चित्रकघृत** न० "चित्रकक्वाथकल्काभ्यां चाङ्गेरी सर्पिः। गुल्मप्लीहोदरश्लीपदार्शोघ्नं दीपनं परम्" इति चक्रदत्तोक्ते घृतभेदे।

**चित्रकतैल** न० "चित्रकं चविकं दीप्य' निदिग्धिकाकरञ्ज-बीजलवणार्कं। गोमूत्रयुक्तं सिद्धं तैलं नासार्शसां विहितम्" चक्रदत्तोक्ते तैलभेदे

**चित्रकम्बल** पु० कर्म०। कम्बलभेदे। (गालिचा)

**चित्रकर** त्रि० चित्रं लेख्यभेदम् आश्चर्यं वा करोति कृ-अच्। हेत्वादौ ट। लेख्यादौ १चित्रलिखके। विश्व-कर्म्मणः शूद्रागर्भजाते वर्णसंकरभेदे २तिलकवृक्षे पुंस्त्री अमरः।

**चित्रकर्म्मन्** त्रि० चित्रं कर्म्मास्य। १चित्रकरे २आश्चर्य-कारके च ३तिनिशवृक्षे पु० शब्दच०। ६त०। ४चित्र-लेखक्रियारूपे शिल्पे न०।

**चित्रकहरीतकी** स्त्री चित्रकयुक्ता हरीतकी। चक्रदत्तोक्ते औषधभेदे "चित्रकस्याथवक्याश्च गुडूच्या दशमूलकम्। शतं शत रस दत्त्वा पथ्याचूर्णादक गुडात्। शतं पचेद् घनीभूते तत्र द्वादशकं क्षिपेत्। व्योषत्रिजातयोः क्षारात् पलार्द्धं सपलं क्षिपेत्। प्रस्थार्द्धं मधुनो दत्त्वा यथाग्न्यादन-श्नितः। हन्त्यर्शांसि क्षयं कासं पीनसं दुस्तरं क्रिमीन्। गुल्मोदावर्त्तदुर्नामश्वासान् हन्ति रसायनम्"।

**चित्रकाय** पु० चित्रः कायोऽस्य। १व्याघ्रे हेमच० (चिता-बाघ) २व्याघ्रभेदे राजनि०।

**चित्रकार** त्रि० चित्रं करोति कृ–अण् उप० स० । १चित्रकर्म्मकारके । “स्थपतेरपि गान्धिकयां चित्रकारोऽभ्यजायत” पराशरोक्ते २सङ्कीर्णजातिभेदे पु० स्त्री० ।

**चित्रकुण्डल** पु० धृतराष्ट्रपुत्रभेदे । “चित्रचापश्चित्रवर्म्मा सुवर्म्मा दुर्विरोचनः । अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः” भा० आ० ११७ अ० । चित्रचाप, चित्रवर्म्मन् चित्रमण्डन चित्राङ्ग तत्पुत्रभेदे । तत्राध्याये दृश्यम् ।

**चित्रकूट** पु० चित्रं कूटं शृङ्गमस्य । पर्व्वतभेदे स च पर्वतः प्रयागक्षेत्रनिकटस्थभरद्वाजाश्रमात् अर्द्धतृतीययोजना-द्दक्षिणतस्तिष्ठति यथा रामा० अयोध्याकाण्डे ९२ स० भरत प्रति भरद्वाजवाक्यम् “भरतार्द्धतृतीयेषु योजनेष्व-जने वने । चित्रकूटो गिरिस्तत्र रम्यनिर्झरकाननः । उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी । पुष्पितद्रु-मसंछन्ना रम्यपुष्पितकानना । अनन्तरं तत्सरितश्चित्रकूटं च पर्वतम् । तयो पर्णकुटीं तात! तत्र तौ वसतोध्रुव-म्” । “ददर्श चित्रकूटस्थं सरामं सहलक्ष्मणम् । तापसानामलङ्कारं धारयन्तं धनुर्द्धरम्” भा० व० २७६ अ० । “ततो गिरिवरश्रेष्ठे चित्रकूटे विधास्यते” ५५ अ० । “मथुराया पूर्वेण हिमवद्गोमन्तचित्रकूटस्थाः” बृ० स० १६ अ० । “चित्रकूटवनस्थञ्च कथिता स्वर्गतिर्गुरोः” । “हप्त ककुद्मानिव चित्रकूट” इति च रघु० ।

**चित्रकृत्** त्रि० चित्रं करोति कृ–क्विप् । १चित्रलेख्यकारके २आश्चर्य्यकारके च । ३चित्रकरे पु० शब्दा० ४तिनिशवृक्षे पु० अमरः । तस्य भावः त्व । चित्रकृत्त्व चित्रकारित्वे अद्भुतत्वे च हेमच० ।

**चित्रकेतु** पु० १गरुडपुत्रभेदे । “सुमुखश्चित्रकेतुश्च चित्रबर्ह-स्तथाऽनघः” भा० उद्यो० ९९ अ० । गरुडपुत्रोक्तौ । २लक्ष्मणपुत्रभेदे “अङ्गदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृ-तौ” भाग० ९।११।७ । वसिष्ठस्य ऊर्जायां जाते ३पुत्र भेदे “ऊर्ज्जायां जज्ञिरे पुत्रा वसिष्ठस्य परन्तप ! । चित्र-केतुप्रधानास्ते सप्त सप्तर्षयोऽमलाः । चित्रकेतुः सुरो-चिश्च विरजा मित्र एव च । उल्वणो वसुभृद्यानोद्युमान् शक्त्यादयोऽपरे” भाग० ४।१।२३।२४। “देवभागस्य कंसायां चित्रकेतुबृहद्बलौ” भाग० ९।२४।२। उक्ते ४य-दुवंश्ये देवभागपुत्रभेदे । ५शूरसेनन्टपभेदे “आसीद्राजा सार्व्वभौम शूरसेनेषु वै न्टप ! । चित्रकेतुरिति ख्यातोयस्यासीत् कामधुङ्मही” भाग० ६।१४।६। तस्मै च पुत्रशोकतप्ताय नारद तत्त्वज्ञानार्थं वासुदेवमन्त्रादिक-मुपदिष्टवान् तत्कथा तत्र परेऽध्यायत्रये दृश्या । ६चित्र-पताके त्रि० । [ख्याते कीटभेदे २व्यघ्रयां शब्दर० ।

**चित्रकोण** पु० चित्रः कोणोऽस्य । १अञ्जनिकायाम् (अञ्जनी)

**चित्रगन्ध** न० चित्रो गन्धोऽस्य । १हरिताले राजनि० । २आश्चर्य्यगन्धयुक्ते त्रि० ।

**चित्रगत** त्रि० चित्रे गतः । १लेख्यलिखिते चित्रार्पिते “शुशु-भाते रथेऽतीव पटे चित्रगते इव” भा० भी० ४४ अ० ।

**चित्रगुप्त** पु० यमभेदे “चित्रगुप्ताय वै नमः” यमतर्पण-मन्त्रः । कायस्थशब्दे १९२२पृ० तद्गुप्तत्वादिकं दृश्यम् । यमनियुक्तस्यैव तस्य यातनाधिकारित्वं शा० सू० भा० व्यवस्थापितं यथा

“ननु विरुद्धमिदं यमायत्ता यातनाः पापकर्म्मिणोऽनु भवन्तीति, यावता तेषु रौरवादिषु अन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्य्यन्ते इति, नेत्याह” भा० । “तत्रापि च तद्व्यापारादविरोधः” शा० सू० “तेष्वपि सप्तसु नर-केषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमाद-विरोधः । यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधि-ष्ठातारः स्मर्य्यन्ते” ।

तस्य च संयमन्यां पापिनां प्रबोधनप्रकारः पुराणसमुच्चये धियधर्मोत्तरे उक्तो यथा

“निर्भर्त्सयति चात्यर्थं यमस्तान् पापकर्म्मिणः । चित्र-गुप्तश्च भगवान् धर्म्मवाक्यैः प्रबोधयेत् । भो भो दुष्कृ-तकर्म्माणः ! परद्रव्यापहारिणः ! । गर्व्विता रूप-वीर्य्येण परदारविमर्द्दकाः ! । यत् स्वयं क्रियते कर्म्म तत् स्वयं भुज्यते पुनः । तत् किमात्मोपता-पार्थं भवद्भिर्दुष्कृतं कृतम् । इदानीं किं प्रत-प्यध्वं पीड्यमानाः स्वकर्म्मभिः । भुङ्क्ष्वध्वं स्वानि कर्म्माणि नात्र दोषोऽस्ति कस्यचित् । एते ते पृथिवी-पालाः संप्राप्ता मत्समीपतः । स्वकीयैः कर्म्मभिर्घोरै र्दुष्कृता बलदर्पिताः । भो भो न्टपा ! दुराचाराः ! प्रजाविध्वंसकारिणः ! । अल्पकालस्य राज्यस्य कृते किं दुष्कृतं कृतम् ? । राज्यलोभेन मोहेन बलादन्यायतः प्रजाः । विध्वंसिताः फलं तस्य भुङ्क्ष्वध्वमधुना न्टपाः ! । क्व तद्राज्यं कलत्रञ्च यदर्थमशुभं कृतम् । तत्सर्वं सपरि-त्यज्य यूयमेकाकिनः स्थिताः । पश्यामि तद्बलं सर्वं येन त्यद्दृविलुप्ताः प्रजाः । यमदूतैस्ताड्यमाना अधुना कीदृश भवेत्” । अस्य यमलेखकत्वकथा स्क० पु० प्रभा० यथा “एवन्तु स्तुवतस्तस्य चित्रस्य विचक्षण । तथा तुष्ट

सहस्रांशुः कालेन महता विभुः। अब्रवीत्तुष्ट। भद्र ते वरं वरय सुव्रत!। सोऽब्रवीद्यदि मे तुष्टो भगवांस्तीक्ष्णदीधिते!। मौद्गल्य सर्वकार्य्येषु जायतां सन्मतिस्तथा। तत् तथेति प्रतिज्ञात सूर्य्येण वरवर्णिनि!। तत सर्वज्ञतां प्राप्तश्चित्रोमित्रकुलोद्भवः। तं ज्ञात्वा धर्म्मराजस्तु बुद्ध्या परमया युत। चिन्तयामास मेधावी लेखकोऽयं भवेद्यदि। जाता मे सर्वसिद्धिश्च निर्वृतिश्च परा भवेत्। एवं चिन्तयतस्तस्य धर्म्मराजस्य भामिनि!। अग्नितीर्थं गतश्चित्रः स्नानार्थं लवणाम्भसि। स तत्र प्रविशन्नेव नीतस्तु यमकिङ्करैः। सशरीरो महादेवि! यमादेशपरायणैः। स चित्रगुप्तनामाभूत् विश्वचारित्रलेखक। चित्रादित्येति नामास्य ततो लोके वरानने!। सप्तम्यां नियताहारोयस्तं पूजयते नर। सप्त जन्मानि दारिद्र्यं न दुःखं तस्य जायते"।

**चित्रघण्टा** स्त्री चित्रा घण्टाऽस्याः। काशीस्थे देवीभेदे "चित्रे! चित्रे! विश्वभुजे। नमोऽस्तु ते श्रीचित्रघण्टे! विकटे सुदर्शिके!" काशी० ५८अ०।

**चित्रघण्टेशी** स्त्री काशीस्थे देवीभेदे। "इयञ्च चित्रघण्टेशी घण्टाकर्णस्तथ ह्रद" काशीख० ३१अ०।

**चित्रचाप** पु० धृतराष्ट्रपुत्रभेदे "अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ" भा० आ० ६७अ०।

**चित्रजल्प** पु० उज्ज्वलमण्युक्ते वाक्यभेदे तल्लक्षणभेदादिक तत्रोक्तं यथा
"प्रेष्ठस्य सुहृदा लोके गूढरोषाभिजृम्भित। भूरिभावमयोजल्पो यस्तीव्रोत्कण्ठतान्वितः। चित्रजल्पो दशाङ्गोऽयं प्रजल्पः परिजल्पितम्। विजल्पोज्जल्पसंजल्पावजल्पोऽभिजल्पितम्। आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्त्तिता। एष भ्रमरगीतास्थोदयमे प्रकटीकृत। अस्यक्षुण्णमाधवैश्चित्रोद्यमः कान्तिसुन्दरः। अपि चेत्तिन्नजल्पोऽयं मनाक् तदपि कथ्यते। तत्र प्रजल्पः १। असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया। प्रियस्य कौशलोद्गारः प्रजल्पः स तु कीर्त्त्यते। यथा मधुप! कितवबन्धो! मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुम श्मश्रुभिर्नः। वहतु मधुपतिस्तन्मानिनीनां प्रसाद यदुसदसि विडम्ब्य यस्य दूतस्त्वमीदृक्। १। अथ परिजल्पितम् २। प्रभोर्निर्दयताशाठ्यचापलाद्युपपादनात्। स्वविचक्षणताव्यक्तिर्भङ्ग्या स्यात् परिजल्पितम् २। यथा सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यो दुस्त्यजेऽस्मान् भवादृक्। परिचरति कथं तत् पादपद्मं तु पद्मा ह्यपि बत हृतचेता ह्युत्तमश्लोकजल्पैः २। अथ विजल्पः ३। "व्यक्तयाऽसूयया गूढमानमुद्रान्तरालया। अघ द्विषि कटाक्षोक्तिर्विजल्पो विदुषां मत ३। यथा किमिह बहु षडङ्घ्रे! गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम्। विजयसखसखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः। ३। अथोज्जल्प ४। हरेः कुहकताख्यानं गर्व्वगर्भितयेर्ष्यया। सासूयश्च तदाक्षेपो धीरैरुज्जल्प ईर्य्यते ४। यथा दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापा कपटरुचिरहासभ्रूविजृम्भस्य या स्युः। चरणरजउपास्ते यस्य भूतिर्व्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः। ४। अथ संजल्पः ५। सोल्लुण्ठया गहनया कयाप्याक्षेपमुद्रया। तस्याकृतज्ञताद्युक्तिः संजल्पः कथितो बुधैः ५। यथा विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात्। स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किन्नु सन्धेयमस्मिन् ५। अथ अवजल्प ६। हरौ काठिन्यकामित्वधौर्त्त्यादासक्त्ययोग्यता। यत्र सेर्ष्यं भियेवोक्ता सोऽवजल्पः सतां मत ६। यथा मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्। बलिमपि बलिमत्त्वा वेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ६। अथाभिजल्पितम् ७ भङ्ग्या त्यागौचित्यं तस्य खगानामपि खेदनात्। यत्र सानुशयं प्रोक्तं तद्भवेदभिजल्पितम्। यथा यदनुचरितलीलाकर्णपीयूषविप्रुट् सकृददनविधूतद्वन्द्वधर्मा विनष्टाः। सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इव विहङ्गा भिक्षुचर्य्यां चरन्ति। ७। अथ आजल्पः ८। जैह्म्यं तस्यार्त्तिदत्वञ्च निर्वेदाद्यत्र कीर्त्तितम्। भङ्ग्यान्यसुखदत्वञ्च स आजल्प उदीरित। यथा वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः। ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन्! भण्यतामन्यवार्त्ता। ८। अथ प्रतिजल्प ९। दुस्त्यजद्वन्द्वभावेऽस्मिन् प्राप्तिर्नार्हेत्यनुद्धतम्। दूतसंमाननेनोक्तं यत्र स प्रतिजल्पकः। प्रियसख! पुन-

इत्येतत् कथितं देवि ! यथा चित्रपथा नदी । प्रभास क्षेत्रमासाद्य स्थिता पापनाशिनी” ।

**चित्रपदा** स्त्री चित्रं पदं स्थानमस्याम् यस्याः । १गोधालतायां शब्दमा० अष्टाक्षरपादके २छन्दोभेदे च । तल्लक्षणं “चित्रपदा यदि भौ गौ” छन्दोम० । चारुणि पदे शब्दभेदोऽत्र । ३चित्रपदयुक्ते वाक्यादौ त्रि० । “वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनी तथा वच” भा०व० १अ० । “अत्र यदा भगणाः परतो गुरुरन्तगतो यमु-कोजितदेश । चित्रपदेति तदा युधि विक्रमतो हत-वैरिधराधिपवेश ! । सा कथिताधिकमङ्गल ! पिङ्ग लनागवरेण दयाभिनिवेश ! । गौडकुलोज्ज्वल ! धारय चेतसि हे यशवन्त ! नरेश !” इत्युक्तलक्षणे ४छन्दोभेदे च

**चित्रपर्णी** स्त्री चित्राणि पर्णान्यस्याः । (चाकलिया) ख्याते पृश्निपर्ण्याम् अमर० । २जलपिप्पल्यां ३द्रोणपुष्प्यां च राजनि० । ४मञ्जिष्ठायां रत्नमाला । स्वार्थे क । चित्रपर्णिका चित्रपर्णीभेदे रत्नमाला ।

**चित्रपादा** स्त्री चित्रौ पादौ यस्याः । शारिकायां हारा० ।

**चित्रपिच्छक** पुंस्त्री चित्रं पिच्छमस्य । मयूरे राजनि० स्त्रियां ङीष् ।

**चित्रपुङ्ख** पु० चित्रः पुङ्खोऽस्य । शरभेदे राजनि० ।

**चित्रपुष्पी** स्त्री चित्राणि पुष्पाण्यस्याः ङीप् । अम्बष्ठालतायाम् राजनि० । [पक्षी स्त्रियां ङीष् ।

**चित्रपृष्ठ** पुंस्त्री० चित्रं पृष्ठमस्य । कलविङ्कपक्षिणि । हारा-

**चित्रफल** पु० चित्रं फलं फलकमिवाकारोऽस्यस्य अच् । (चितल) मत्स्ये राजनि० । स्वार्थे क । चित्रफलक मत्स्यार्थे ।

**चित्रफला** स्त्री चित्रं फलं यस्याः अजा० टाप् । १चि-र्भट्यां २मृगेर्वारौ ३लिङ्गिन्यां ४महेन्द्रवारुण्याम् ५वार्त्ताक्यां ६कण्टकार्य्याञ्च राजनि० । एतासां चित्र-फलत्वात्तथात्वम्” ।

**चित्रबर्ह** पुंस्त्री चित्रा बर्हा यस्य । १मयूरे स्त्रियां जाति-त्वात् ङीष् । “काकैर्मेनाश्चित्रबर्हान् शार्ङ्गान् क्रोष्टु-केन च । क्रौशीव्य पाण्डवान् राजन् ! मा भक्षी र्योफलागरे” भा०स०६०अ० । २गरुडात्मजभेदे । “सुमु-खश्चित्रकेतुश्च चित्रबर्हस्तथाऽनघ” भा० उ० १००अ० । गरुडात्मजोक्तौ । [६७अ० । तत्पुत्त्रोक्तौ ।

**चित्रबाहु** पु० धृतराष्ट्रपुत्रभेदे । चित्रबाहुश्चित्रवर्म्मा” भा० [आ०

**चित्रभानु** पु० चित्रा भानवो यस्य । १वह्नौ २सूर्य्ये, ३चित्रकवृक्षे, ४अर्कवृक्षे च मेदिनिः । ५भैरवे शब्द-रत्ना० । तत्राग्नौ “पुष्कैः शिरोभिश्च स्म चित्रभानु मुपेदिरे” भा० आ० ५२अ० । सर्यवन्हे । “किन्नवि मानवाः सर्वे दह्यन्ते चित्रभानुना” भा०शा० २२६अ० । ६अश्विनीकुमारयो द्वि० व० । तयोश्चित्रभानुसूर्य्य-जातत्वात् तथात्वम् “मपूर्वगापूर्वजौ चित्रभानू” भा० आ० ६०अ० अश्विनोःस्तुतौ । प्रभवादिषष्टिवर्षेषु ७षोड्षे वर्षे “वर्षाकाले तु समायातं धान्यं त्रिदश प्रिये ! । महार्घं जायते सर्वं चित्रभानौ वरानने !” । “श्रेष्ठं चतुर्थस्य (ऋतीयस्य) युगस्य पूर्वं यच्चित्रभानुं कथयन्ति वर्षम्” ह० सं० ८अ० ।

**चित्रभेषजा** स्त्री चित्रमाश्चर्यं भेषजं यस्याः ५ब० । काको-डुम्बरिकायाम् राजनि० ।

**चित्रमण्डल** पुंस्त्री० चित्रं मण्डलमस्य । मण्डलिनि सर्प-भेदे सुश्रुतः कल्पस्थाने १८१६० दृश्यम् ।

**चित्रमृग** पु० चित्रवर्णो मृगः । पृषते मृगभेदे शब्दार्थ-चिन्ता० । “षण्मासांश्छागमांसेन पार्षतेन च सप्त वै” मनुव्या० “पृषतश्चित्रमृगः” कुल्लू० ।

**चित्रमेखल** पुंस्त्री चित्रा मेखलास्य । मयूरे त्रिका० ।

**चित्रयोधिन्** त्रि० चित्रं युध्यति युध–णिनि । १आश्चर्य युद्धकारके स्त्रियां ङीप् । “यदा द्रोणोविविधानस्त्रमा-र्गान् निदर्शयन् समरे चित्रयोधी” भा० आ० १अ० । “विरूपाक्षश्च दैतेयश्चित्रयोधी महासुरः” भा० आ० ६७अ० । २अर्जुने तन्नामनामके ३अर्जुनवृक्षे पु० राजनि० ।

**चित्ररथ** पु० चित्रोरथोऽस्य । १सूर्य्ये २गन्धर्वभेदे च मेदि० । स च गन्धर्वः कश्यपात् मुनिनाम्न्यां दक्षकन्यायां बभूव यथाह “भीमोग्रसेनौ चेत्युपक्रमे “भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी” इत्युपक्रमे “इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिताः” भा० आ० ६५अ० । इत्युक्तम् स च अङ्गारपर्णनामा अर्जुनेन च तस्य दग्धरथ-त्वात् दग्धरथनामा बभूव यथाह भा० आ० १७०अ० । “गन्धर्व उवाच, “जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गार-पर्णताम् । न च श्लाघ्ये बलेनाङ्ग नाम्नाद्य जनस-सदि । साध्विमं लब्धवांल्लाभोयोऽहं दिव्यास्त्रधारिणम् । गान्धर्व्या मायेष्यामि सयोजयितुमर्जुन ! । अस्त्रा-ग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः । सोऽहं चित्र रथो भूत्वा नाम्ना दग्धरथोऽभवम्” ।

"गन्धर्वाणां चित्ररथः" गीता। "सागराणां नदीनाञ्च मेघानां वर्षितस्य च। गन्धर्वाणामधिपतिं चक्रे चित्ररथं विभुः" हरिवं० ४अ०। तस्य गन्धर्वाधिपत्य उक्तम्। ३नदीभेदे स्त्री ४उपप्लो० पुर्नं पु० चैत्ररथिशब्दे दृश्यम्। चित्ररथमधिकृत्य कृतो ग्रन्थः अण्। चैत्ररथ भारतस्यादिपर्वान्तर्गतेऽवान्तरपर्वणि। तच्च पर्व आदिपर्वणि १६५ अवधि १८२ अध्यायपर्य्यन्तम्।

चित्ररश्मि त्रि० चित्रा रश्मयोऽस्य। १नानावर्णरश्मियुक्ते २मरुद्गणभेदे पु० हरिवं० २०४अ० "अग्निवर्णविद्योतिः चापित्रं चित्रमेव च। अमर चर इदिच बहुयच महाभुजम्। विरजश्चैव शुक्रश्च विश्वावसुविभावसू। अश्वमन्तश्चित्ररश्मिश्च तथा निष्कुषितं नपम्। नभश्चाकृतिश्चैव चारित्रं भ्राजमनगम्। इन्द्रं तच्च इन्द्ररूपं तथैव परतापनम्। मरुत्वती तथा यश एत वै मरुतां गणम्"।

चित्ररेफ पु० शाकद्वीपाधिपस्य प्रैयव्रतस्य मेधातिथेः १पुत्रभेदे तथामके तत्कृते २वर्षभेदे च। शाकद्वीपोपक्रमे "तस्यापि प्रैयव्रत एवाधिपतिः नाम्ना मेधातिथिः। सोऽपि विभज्य सप्त वर्षाणि पुत्रनामाङ्कितेषु स्वात्मजान् पुरोजवमनोजव पवमान धूम्रानीक चित्ररेफ बहुरूप विश्वाधार सप्तान् निधाप्याधिपतीन् स्वयं भगवत्यनन्तआवेशितमतिस्तपोवनं प्रविवेश" भाग० ५।।२।।१९।

चित्रल पु० चित्रमाचर्य्य लाति ला—क। १कर्बुरवर्णे २तद्वति त्रि०शब्दरत्ना०। ३गोरक्षीवृक्षे स्त्री राजनि०।

चित्रलता स्त्री० नित्यकर्म्म०। मञ्जिष्ठायां राजनि०।

चित्रलेखनी स्त्री चित्रं लिख्यतेऽनया लिख ल्युट् करणे ङीप्। (तुली) कूर्च्चाम्। उज्ज्वलद०।

चित्रलेखा स्त्री चित्रं लेखयति लिख—अण् उप०स०। १बाणासुरमन्त्रिणः कुम्भाण्डस्य कन्यायाम् २अप्सरोभेदे च। तस्याश्च चित्रलेखनदक्षता हरिवं० १७६अ० वर्णिता यथा "उषायावचनं श्रुत्वा रामा वाक्यमिदं पुनः। उवाच वदतोश्चैव कुम्भाण्डतनया सखी। कुपला ते चित्रार्पिता। सर्वथा सन्निविष्टे। अप्सरा चित्रलेखा ने विश्वं विद्याभ्यतां सखि।। यस्याः सर्वमयेमं वै म लोकं विदितं सदा। एवमुक्ता तदैवोषा हर्षेणागतविस्मया। तामपृच्छयामास चित्रलेखां सखीं प्रियाम्। कृताञ्जलिपुटा दीना उषा वचनमब्रवीत्। परमं शृणु मे वाक्यं कृत्वा मत्रानि धर्म्माणि।। भर्त्तारं यदि मेऽद्य त्वं नानयिष्यसि मत्प्रियम्। कान्तं पद्मपलाशाक्षं मन्मातङ्गविक्रमम्। त्यक्ष्याम्यहं प्रियान् प्राणानत कमललोचने।। चित्रलेखाऽब्रवीद्वाक्यमूषां हर्षवती शनैः। नैषोऽर्थः शक्यतेऽन्वाभिर्वेत्तुं भाविनि। शुचिते।। न कुलेन न वर्णेन न शीलेन न रूपतः। न देशतस्य विज्ञातः सखि चोरो मया सखि।। किन्तु गन्तुं यथा कर्त्तुं बुद्धिपूर्वं मया सखि।। प्राप्नु त्वं शृणु मे वाक्यं यथाकाममवाप्स्यसि। देवदानवयक्षाणां गन्धर्वोरगरक्षसाम्। ये विशिष्टाः प्रभावेण रूपेणाभिजनेन च। यथाप्रधानतः सर्व्वानालिखिष्याम्यहं सखि।। मनुष्यलोके ये चापि प्रवरा लोकविश्रुता। सप्तरात्रेण ते भीरु। दर्शयिष्यामि तानहम्। ततो विज्ञाय पट्टस्थं भर्त्तारं प्रतिलप्स्यसे। सा चित्रलेखया प्रोक्ता उषा हितचिकीर्षया। क्रियतामेव मित्याह चित्रलेखां सखीं प्रियाम्। ततः कुशलहस्तत्वाद्याथालेख्यं समन्ततः। इत्युक्त्वा सप्तरात्रेण कृत्वा लेख्यगतांस्तु तान्। चित्रपट्टगतान् सख्यामानयामास शोभना। ततः प्रस्तीर्य्य पट्टं सा चित्रलेखा स्वयंकृतम्। उषायै दर्शयामास सखीनाञ्च विशेषतः"। "ततस्तु देवा रूपेण चित्रलेखा वराप्सरा" तत्राध्यायादौ। भाग० १०।६२ अ०। कुम्भाण्डकन्यया चित्रलेखयैव तथा चित्रं लिखितमित्युक्तं यथा "बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता। सख्यपृच्छत् सखीमूषां कौतूहलसमन्विता" इत्युपक्रमे। "चित्रलेखोवाच व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते। तमानेष्ये वरं यस्ते मनोहर्त्ता तमादिश। इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान्। दैत्यविद्याधरान् यक्षान् मनुजांश्च यथालिखत्। मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम्। व्यलिखद्रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता। अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया। सोऽसावसाविति प्राह स्मयमाना महीपते।। चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी। ययौ विहायसा राजन्। द्वारकां कृष्णपालिताम्" "मन्दाक्रान्ता नभरलघुयुता चित्रलेखा" छन्दोम० उक्ते ३अष्टादशाक्षरपादके "रुद्राश्वैर्नभनततसकैः कीर्त्तिता चित्रलेखेयम्" वृ० र०टी०उक्ते च ४छन्दोभेदे। "मसभा नयगा शुदिक्स्वरैर्भवति चित्रलेखा" वृ०र०टी० उक्ते ५छन्दोभेदे। ६प्रसाकृनामभेदे। "यद्वेऽशुभिन् जगति मृगदृशां सारतरं यदाशेदासब्दे मनुविकृतिसमा वेधसा

सा व्यधायि । नैताहक् चेत् कथमुदधिसुतामन्तरेणाच्यु-
तस्य प्रीत तस्यां नयनयुगमभूत् चित्रलेखाङ्कितायाम्”
उज्ज्वलमणि कर्म्म० । ७चित्राया रेखायाम् स्त्री
रत्नयोरेकत्वात् हेम० । ७चित्रस्य लेखने पु० । “अथा-
ऽभिरुद्धसमागममिव, चित्रलेखादर्शितविचित्रकलमुपना-
कारम् । (राजकुलम्) काद० । [जटाधर ।
**चित्रलोचना** स्त्री चित्रे लोचनमस्याः । शारिकाखगे
**चित्रवदाल** पु० चित्रपटु या समन्तात् वलति आ+वल-
अच् । पाठीनमत्स्ये (बोयाल) जटाधर ।
**चित्रवर्म्मन्** पु० १धृतराष्ट्रपुत्रभेदे “चित्राक्षश्चित्रवर्म्मा” भा०
आ० ६७अ० । चित्रं वर्म्मास्य । २चित्रकवचयुक्ते त्रि० ।
**चित्रवल्लिक** पु० वल्लीव कायति कै—क टाप्। ० सुख० कर्म्म० ।
पाठीनमत्स्ये हेमच० ।
**चित्रवल्ली** स्त्री० नित्यकर्म्म० । १महेन्द्रवारुण्याम्
राजनि० कर्म्म० । ३चित्राया लतायाम् ।
**चित्रवहा** स्त्री चित्रं वहति वह—अच् । भारतप्रसिद्धे
नदीभेदे “करीषिणीं चित्रवहां चित्रसेनाञ्च निम्नगाम्”
भा०भी० ९अ० । नानानद्युक्तौ “हरिश्रुत्या तथा मेध्या
नदी चित्रवहा तथा” भा० आनु०१६५अ० तीर्थोक्तौ ।
**चित्रवाण** पु० १धृतराष्ट्रपुत्रभेदे “चित्रवाणश्चित्रवर्म्मा सुवर्म्मा
दुर्विमोचनः” भा० आ० ११०अ० । २चित्रशरयुक्ते त्रि०
**चित्रवाहन** पु० मणिपूरेश्वरे नागभेदे । “मणिपूरेश्वर
राजन् ! धर्म्मज्ञ चित्रवाहनम्”भा०आ० २१५अ० ।
**चित्रवीर्य्य** पु० चित्रमाश्चर्य्यं वीर्य्यमस्य । रक्तैरण्डे । राजनि० ।
**चित्रवेगिक** पु० चित्रवेगोऽस्त्यस्य ठन् । नागभेदे “वराहको
वीरणकः सुचित्रश्चित्रवेगिकः” भा० आ० ५७अ० ।
नागोक्तौ ।
**चित्रशाला** स्त्री चित्रलेखननिर्म्माणार्थां शाला । चित्रलेखन-
निर्म्माणार्थायाम् शालायाम्, जालिन्याम् हेम० ।
**चित्रशिखण्डिज** पु० चित्रशिखण्डिनोऽङ्गिरसो जायते
जन ड । वृहस्पतौ अमर । चित्रशिखण्डिप्रसूतादयो-
ऽप्यत्र ।
**चित्रशिखण्डिन्** पु०चित्रं शिखण्डं चूड्यस्य इनि । “मरी-
चिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वशिष्ठश्चेति
सप्तैते ज्ञेयाश्चित्रशिखण्डिनः” इत्युक्तेषु सप्तसु ऋषिषु
अमर । “ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डि-
नः । तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्” ।
“मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वशिष्ठश्च
महातेजास्ते हि चित्रशिखण्डिनः । सप्त प्रकृतयो
ह्येतास्तथा स्वायम्भुवोऽष्टमः । एताभिर्धार्य्यते
लोकास्तास्य शास्त्रं विनिःसृतम्” भा० शा० ३३७अ० ।
**चित्रशिरस्** पु० चित्रं शिरोऽस्य । १गन्धर्व्वभेदे “महाद्युति
चित्रशिरा अर्व्वायुरनघस्तथा” हरिव० २६१अ० गन्धर्व्व-
भेदोक्तौ । २मूत्रपुरीषविषे शलभेदे सुश्रु० “चित्रशिर
सरावकुर्द्दिशतदारुकारिमेदकशारिकामुखास्तुपञ्चस्य वि
शर्द्दिता मूत्रपुरीषविषा ” सुश्रुत ।
**चित्रशीर्षक** पु० चित्रं शीर्षमस्य कप् । कीटभेदे सुश्रुत ।
कीटशब्दे २०५८पृ० दृश्यम् ।
**चित्रसर्प** पु० नित्यकर्म्म० । मालुधानसर्पे शब्दर० ।
**चित्रसेन** पु० धृतराष्ट्रपुत्रभेदे“तेषां धृतराष्ट्रस्य पुत्राणां चत्वा-
र प्रधाना बभूवुः । दुर्य्योधनो दुःशासनोविकर्ण-
श्चित्रसेनश्चेति” भा०आ० ९५अ० । २गन्धर्व्वभेदे । “चि
त्रसेनश्च शीतोष्णस्तथा चित्ररथोऽपि च । एते चान्ये
च गन्धर्वा धनेश्वरमुपासते” भा० स० १०अ० । ततस्ते
खेचराः सर्वे चित्रसेने न्यवेदयन् । गन्धर्व्वराजस्तान्
सर्वानब्रवीत् कौरवान् प्रति” भा० व० २४०अ० ।
अर्जुनेन तत्पराजयकथा तत्रैव दृश्यम् । “अहं वोगन्धर्व्व-
राजानं चित्रसेनमरिन्दमम् । विजित्य तरसा सख्ये
सेना प्राप्य सुदुर्जयाम्” भा० वि० ४९अ० । चित्रगुप्ता-
दिशितयान्तर्गते मर्त्यलोकविशेषके ब्रह्मपादकक्षत्रिय
भेदे कायस्थशब्दे १९२२पृ० दृश्यम् । ५नदीभेदे स्त्री
चित्रवहाशब्दे दृश्यम् ।
**चित्रहस्त** पु० चित्र आश्चर्य्यो हस्त हस्तक्रिया यत्र । मल्ल
युद्धाङ्गहस्तक्रियाभेदे “चित्रहस्तादिकं कृत्वा कक्षाबन्धं
च चक्रतुः” भा० स० २३अ० । भीमजरासन्धयोर्मल्ल
युद्धवर्णने ।
**चित्रा** स्त्री चित्र—अच् । १मूषिकपर्ण्यां २गोडुम्बायां ३दन्ती-
द्रुमायां ४दन्तिकायां ५मायायां ६सर्पभेदे ७नदीभेदे च
मेदि० । ८चित्रगुप्तस्य भगिन्यां सा च नदी भूत्वा चित्र
पथा नदी जाता सैव चित्रा नदी । चित्रपथाशब्दे दृश्यम्
९अप्सरोभेदे हेमच० । १०तालाङ्कनामके उज्ज्वलमणि ।
“परमप्रेमभध्ये तु कलिता समिधाश्रिका । अचिरा च-
म्पकलता सुवर्णबिम्बेन्दुरेखिका । रङ्गदेवी सुदेवी । चेत्यष्टौ
सर्वगुणाः प्रिया” “चित्रानाम यदन्त्योऽपि गुरुयो-
जाक्रतो यौ” छ० टी० उक्ते पञ्चदशाक्षरपादके
वर्णवृत्तभेदे । राशिचक्रस्थे १२नक्षत्रभेदे । सा च

राशिचक्रस्य १७३।२० अवधि १८६।४० पर्य्यन्तं १२।०० ष्ट शाद्यात्मिका तन्मध्यपादादिकम् अश्विन्यादिशब्दे ४९७पृ० उक्तम् । "दिवसनिशं क्रयोर्योगे चित्राचन्द्रमसोरिव" रघु । चित्रानामके चन्द्रकलत्रे १२दक्षकन्याभेदे च । १४मृगेर्वारौ १५श्वेतदूर्वायां १६मञ्जिष्ठाया राजनि० । चित्रायां जाता अण् "चित्रारेवतीरोहिणी हलिकारोहिणीभ्यः स्त्रियामुपसंख्यानम्" वार्त्ति० जातार्थाण्णो लुक् । १७चित्राजातायां स्त्रियां स्त्रीभिन्ने तु न लुक् चैत्रः इत्येव ।

चित्राक्ष त्रि० चित्रमक्षि यस्य षच् समा० । चित्रनेत्रयुक्ते स्त्रियां षित्त्वात् ङीष् । सा च १शारिकाख्यखगे त्रिका० २धृतराष्ट्रपुत्रभेदे पु० "चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदस्तथा" भा०आ० ६७अ० ।

चित्राक्षुप पु० नित्यक० पृषो० द्रोणपुष्प्याम् शब्दार्थ चि० ।

चित्राङ्ग पु० १धृतराष्ट्रपुत्रभेदे । "अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः" भा०११७अ० तत्पुत्रोक्तौ । २चित्राङ्गयुक्तमात्रे त्रि० । ३रक्तचित्रके ४सर्पभेदे ५चित्रके (चिते) राजनि० । चित्रमङ्गं यस्मात् । ६हरिताले ७मञ्जिष्ठायां ८हिङ्गुले च न० राजनि० ।

चित्राङ्गद पु० शान्तनोः सत्यवत्यां जाते पुत्रभेदे । "भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् यामाहुर्गन्धकालीमिति तस्यां पूर्वं कानीनो गर्भः पराशराद् द्वैपायनोऽभवत् । तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभूवतुः । विचित्रवीर्यश्चित्राङ्गदश्च तयोरप्राप्तयौवन एव चित्राङ्गदो गन्धर्वेण हतः विचित्रवीर्य्यस्तु राजासीत्" भा० आ० ९५अ० । २चन्द्रवंशचित्रगुप्तादिलिखितयान्तर्गते अधोलोकविचारके ३यमभेदे च । कायस्थभेदे चित्राङ्गदस्तपकस्य "कलेर्दश सहस्राणि नागलोकेश्वरोऽभवः । ततस्त्रिलोकनाथ स्त्वमिन्द्रतुल्यो भविष्यसि" इति प्रति त ब्राह्मणशापयुक्ता । "गत आनन्दमनसा गतश्चित्राङ्गदस्तलम्" इत्युक्तम् आचार निर्णयतन्त्रे । ४गन्धर्वभेदे । हरिव० १०८अ० उक्तम् । ५अप्सरोभेदे स्त्री । "अलम्बुषा घृताची च चित्रा चित्राङ्गदा रुचिः" भा० आनु० १९० । मणिपूरेश्वरचित्रवाहनस्य कन्यायाम् ६अर्जुनकलत्रभेदे च स्त्री "अभिगम्य महाराजं रथ्यगच्छत्प्रहीपतिम् । मणिपूरेश्वरं राजन् ! धर्म्मज्ञं चित्रवाहनम् । तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना । तां ददर्श पुरे तस्मिन् विचरन्तीं यदृच्छया । दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहिनीम्" भा० आ० २१५अ० "चित्राङ्गदा वरारोहा मनपराध्यति किञ्चन" भा० आश्व० ८१अ०

चित्राङ्गदसू स्त्री चित्राङ्गदं सूते सू–क्विप् ६त० । सत्यवत्यां शान्तनुरूपकलत्रभेदे राजनि० ।

चित्राटीर पु० चित्रां नक्षत्रमटति चित्रं वा अटति अट–बा० ईरच् । १चन्द्रे २घण्टाकर्णे ३गणाधिपभेदे ४वलितागरक्षाङ्कितभाले च मेदि० ।

चित्रादित्य पु० चित्रस्य चित्रगुप्तस्य आदित्यः तत्पूजितत्वात् । प्रभासतीर्थस्थे चित्रगुप्तस्थापिते आदित्यमूर्त्तिभेदे चित्रपथाशब्दे दृश्यम् ।

चित्रान्न न० नित्यकर्म० । चित्रौदने "दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च" याज्ञ० तल्लक्षणन्तु "अन्नाज्जीरेण संमिश्रा यवाश तिलतण्डुलाः । अन्नाकर्षेण रक्तेन रक्ताचित्रान्नमुच्यते" दीपिकोक्तम् ।

चित्रापूप पु० नित्यकर्म० । पिष्टकभेदे त्रिका० ।

चित्रामघा स्त्री० जपसि निघण्टु । [ राजनि० ।

चित्रायस न० कर्म० अच् समा० । तीक्ष्णलौहे (इस्पात) ।

चित्रायुध त्रि० चित्राण्यायुधान्यस्य । १आश्चर्यायुधयुक्ते २धृतराष्ट्रपुत्रभेदे पु० "चित्रायुधो निषङ्गी च पाशी वृन्दारकस्तथा" भा० आ० ११७अ० । "कार्य्यं चित्रान्तराचित्रा चित्रायुधश्चदारुहनुः" भा० द्रो० २१अ० । कर्ण० । आश्चर्यायुधे न० "चित्रायुधसुरक्षितम्" भा० स० १६अ० । [ चित्रलिखितपुत्तलिकादौ ।

चित्रारम्भ पु० आरभ्यते आ+रभ कर्मणि घञ् ७त० ।

चित्रार्पितारम्भ त्रि० चित्रेऽर्पित आरम्भोऽस्य । चित्रलिखिते "तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे" कुमा० ।

चित्रावसु पु० चित्राणि विविधानि चन्द्रार्कस्थानि वसूनि यस्या वस उ–पृ० दीर्घः । रात्रौ "रात्रिर्वै चित्रावसु सा चित्राणि सञ्चित्य वसतीति" शत० ब्रा० २।३।४।१२। "चित्राणि नक्षत्राणीति" भा० । "चित्रावसो ! स्वस्ति ते पारमशीय" यजु० ३।१८।

चित्रिक पु० चैत्रिक+पृषो० । चैत्रमासे शब्दरत्ना० चित्रा स्वार्थे क । चित्राशब्दे स्त्री ।

चित्रिन् त्रि० चित्र–णिनि चित्र+अस्त्यर्थे इनि वा । १आश्चर्यकारके २चित्रयुक्ते च । स्त्रियां ङीप् । "अमि चिद्धाणि हयजिरा चित्रिणीषु" ऋ० ४।२२।२।

"चित्रिणीषु चित्रकर्मयुक्तासु" मा०। ३नायिकाभेदे स्त्री रतिमञ्जरी। "भवति रतिरसज्ञा नातिदीर्घा न खर्वा तिलकुसुम सुनासा स्निग्धदेहोत्पलाक्षी। कठिनघनकुचाढ्या सुन्दरी या सुशीला सकलगुणविचित्रा चित्रिणी चित्रवक्त्रा। पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा। शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम्। शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम्। वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम्। पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी। शङ्खिनी क्षारगन्धा च मद्यगन्धा च हस्तिनी"।

चित्रेश पु० ६त०। १चन्द्रे शब्दच०। २चित्रेश्वरशिव लिङ्गे न०

चित्रेश्वर न० प्रभासक्षेत्रस्थे चित्रगुप्तस्थापिते शिवलिङ्गभेदे यथा "ततो गच्छेन्महादेवि। चित्रेश्वरमनुत्तमम्। चतुर्थ्या सम्प्रके तस्य स्थितमाग्नेयदक्षिणे। लिङ्गं महाप्रभाव हि सर्वपातकनाशनम्। तत्र चित्रेश्वरं पूज्य नरकाद्य न भवेद्भयम्। यत्तदस्थिगतं पापं चित्रो मार्जयति प्रिये! तस्मात् सर्वप्रयत्नेन चित्रेशं पूजयेत् सदा। तस्मात् पाप युतोऽपि नरकं नैव पश्यति"।

चित्रोक्ति स्त्री चित्रा आश्चर्यकरी उक्तिः। आकाशवाण्यां त्रिका०। २चित्रकथने च।

चित्रोपला स्त्री ६त०। चित्रा उपला यस्याम्। १नदीभेदे। "चित्रोपलां चित्रपर्णा मञ्जुलाम् मञ्जुवाहिनीम्" भा० भीष्म० ९अ०। नदीकथने। इयं चित्रोत्पलेति पुरुषोत्तमतत्त्वे उक्ता। "नदी तत्र महापुण्या विष्णुपादविनिर्गता। चित्रोत्पलेति विख्याता सर्वपापहरा शुभा" "चित्रोत्पला महानदी" रघुनन्दन।

चित्रौदन पु० नित्यकर्म०। केतुग्रहशान्तये चित्रान्ने चित्राकारे अन्नोपहारम्। "चित्रौदनञ्च केतुभ्यः सर्वभक्ष्यैः समर्चयेत्" मत्स्या० त०।

चित्र्य त्रि० चित्र-कर्मणि यत्। पूज्ये "स्वर्यमा मत्योदिवि चित्र्यं रथम्" ऋ०५।६३।७। "चित्र्य पूज्यम्" भा०।

चिद् अव्य०। चित्+क्विप्०। १असाकल्ये चिच्छब्दार्थे। तस्य असाकल्यार्थत्वेऽपि "अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्युपमार्थेऽपि" निरुक्तोक्तेः अव्ययानामनेकार्थत्वात् वा २उपमायाम्। "दधि चिदित्युपमार्थे" निरु०। ३निन्दायाम् "कुल्माषांश्चिदाहरेदिति कुत्सिते" निरु०। "अगश्चिद्विनगोत्रादितद्वितान्तेष्वि तेषु गते" पा० पदेषु परेषु तिङन्तं नानुदात्तम्। ४वै० यथाति चित्" सि० कौ० "किं इत्तं च चिदुत्तरम्" पा०। "अविद्यमानपूर्वं चिदुत्तरं यत् किंवृत्तं तद्युक्तं तिङन्तं नानुदात्तम्"। "चिमन्नम्नं कतरतमान्न किमोरूप कि इतम्" सि० कौ०।

चिदाकाश पु० न०। चिद् आकाशमिव निर्लेपत्वात् सर्वाधारत्वाच्च। आकाशवन्निर्लेपे शुद्धे ब्रह्मणि।

चिदात्मन् पु० चित् चैतन्यमात्मा स्वरूपमस्य। चैतन्य स्वरूपे परात्मनि प्रत्यगात्मनि परपुरुषे। "एतद्रूप भगवतोह्यरूपस्य चिदात्मनः" भाग० १।३।३१। श्लोक

चिदाभास पु० चित आभास प्रतिबिम्ब। बुद्ध्यादौ प्रतिबिम्बे जीवे "बुद्धिस्थचिदाभासाविति वेदान्तका०। चिदाभासं दोपयत्यद्वयम्। [२हृदयाकाशे हेमच०।

चिद्रूप पु० चिदेव रूपमस्य। १आत्मनि, २सुचिन्मति च।

चिन्तन न० चिति-भावे ल्युट्। अनुध्याने "परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्" मनुः। युच्। चिन्तना अप्यत्र स्त्री।

चिन्ता स्त्री चिति-भावे अ। १अनुध्याने सा० द० उक्ते २व्यभिचारिगुणभेदे च तत् "स्मृतिश्चपलताग्लानिचिन्ता वितर्काः" व्यभिचारिणो विभज्य "ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्" सा० द० उक्तम्। "चिन्ता ज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः" चाणक्यम्। "चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिता" गीता। "धर्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम्" मनु। ३दर्शनसम्भोगभावनाभेदे रसमञ्ज०।

चिन्तामणि पु० चिन्तायां सर्वकामदो मणिः शा० त०। चिन्तितार्थप्रदे मणिभेदे। "चिन्तामणीनुदारांश्च चिन्तिते सर्वकामदान्" हरिवं० १५२अ०। "सामर्थ्यसम्पादितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमान्" भट्टि। २सर्वकामदे परमेश्वरे च "आतुराणामर्थिने भोगार्थं यातुपक्षिकान्। ददाति ध्यायतां नित्यम् सर्वकामप्रदो हरिः" इत्युक्तेस्तस्य तथात्वम्। ३मन्त्रविशेषे "बकुल-स्यागमो भौमो भाग्यस्थश्च हृहस्पतिः। चिन्तामणिरसाख्योऽयं यातः सकलपूरकः" ज्यो० उक्ते ४यात्रायोगभेदे ५बुद्धभेदे त्रिका०। ६स्पर्शमणौ "यथा चिन्तामणि स्पृष्टा लौहं काञ्चनतां व्रजेत्"। पद्मोत्त०ख० कपिलदत्तप्रमादुर्भूते तदीयचिन्तामणिहारकगणदेशनायके ७गणेशभेदे तत्कथा "गच्छ कृत्वा महावीर्यं चिन्तामणिस्तथा-

ऽङ्कृत चिन्तामणिरिति ख्यात तव नाम भविष्यति। यन्तश्चिन्तामणिं नाथ। त्वमेव स्वीकुरु प्रभो"।। "मुनिना कपिलेनासौ प्रार्थितोऽभिजिताऽपि च। मणिश्चिन्तामणिस्त्वन्ता शुशुभे च विनायक। चिन्तामणिरिति ख्यातिस्ततोऽपि परमां दधौ। कपिलस्य गृहे जातः कपिलाख्यामतो ययौ" स्क० पु० गणपतिकल्पे

**चिन्तामणिविनायक** पु० काशीस्थे गणपतिमूर्तिभेदे "चतुर्थीस्यये काश्यां भक्तविघ्नविनायकाः। द्रष्टव्याः कुट चेतोभि सप्तमयौ विनायकाः" इत्युपक्रमे "क्षेत्रस्य दक्षिणदिग्भागे चिन्तामणिविनायकः। भक्तचिन्तामणिः साक्षात् चिन्तितार्थसमर्पकः" काशी० ५० अ०।

**चिन्तावेश्मन्** न० ६त०। मन्त्रणागृहे।

**चिन्ति** पु० चिति–इन्। देशभेदे तस्य सुराष्ट्रेण सह द्वन्द्वे कार्त्तकौजपा० पूर्वपदप्रकृतिस्वरः चिन्तिसुराष्ट्राः।

**चिन्तिडी** स्त्री तिन्तिडी+पृषो०। तिन्तिडीवृक्षे हिक्को०।

**चिन्तित** त्रि० चिति–कर्म्मणि क्त। चिन्ताकर्म्मणि "सख्या इव सखुपयास्यपि चिन्तितानि" किरा०। कर्त्तरि क्त। २चिन्तायुक्ते ३तत्त्वाभिज्ञायां स्त्रियां स्त्री। भावे क्त। ४चिन्तायाम् न०।

**चिन्तिति** स्त्री० चिति–क्तिन् बा० इट् णिचोऽपि च। चिन्तायाम् शब्दरत्ना०। [त्रिका०।

**चिन्तिया** स्त्री० चिन्ता+स्वार्थे प्रा० घ। चिन्तायां

**चिन्त्य** त्रि० चिति–कर्म्मणि यत्। चिन्तनीये "केषु केषु च भावेषु चिन्त्योऽसि भगवन्! मया" गीता। "अय हि सर्वधर्म्माणां धर्म्मश्चिन्त्यतमो मत" भा०आनु० ४४अ०।

**चिन्त्यद्योत** पु० चिन्त्यं सन् द्योतते द्युत–अच्। देवभेदे। "गणा देवानामृषपा सोमपाश्च लोकाः शुयामास्तुषिता महाकायाः। आभासुरा गन्धपा दृष्टिपाश्च वाचा विरुद्धाश्च मनोविरुद्धाः। शुद्धाश्च निर्माणरताश्च देवाः स्पर्शाधना दर्शपा आज्यपाश्च। चिन्त्यद्योता ये च देवेषु मुख्यास्तं चान्यादेवताश्चाजमीढ।। सुपर्णगन्धर्वपिशाचदानवा यक्षास्तथा चारणपन्नगाश्च" भा०अनु०१८अ०।

**चिपिट** पु० चि–पिटच् किच्च। (चिडा) ख्याते पृथुके हेमच०। तत्करणप्रकारादि भावप्र० उक्तं यथा "शालय सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः। कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि। शालयो यवमाषाद्याश्चिपिटा पुष्टिवर्द्धना"। अस्य भक्ष्याभक्ष्यत्वं यथा "द्विः स्विन्नं पृथुकं शूद्र देयविशेषके। नाश्नन्यस्य विप्राणां भोजने च निवेदने। अभक्ष्यं तत् यतीनाञ्च विधवाब्रह्मचारिणाम्" ब्रह्मवै० पु०। "नासिकाया नते इनच् पिटच् चिकचि च" पा० वार्त्ति० पिटच् प्रत्यये चि। २नतनासिकायां (खादा) ३तद्वति त्रि० (चेपटा) ४ख्याते पदार्थे "करतलपरिहतचिपिटी कृतश्रवणपुटेन" काद०। "उन्नतो मांसलोऽकृष्टो यर्त्तुलोऽलकभोगदः। नक्रोत्सव चिपिट सुखसौभाग्यभञ्जकः। चिपिटैभिर्भवेद्दासी" इति काशी० ख० २७। प्रान्ते अङ्गुल्यानिपीडनेन ५नेत्रस्याकुलतायाम्। "अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र भ्रान्तौ दृगन्तचिपिटीकरणादिरादि" नैष०। "दृगन्तचिपिटीकरणं नेत्रान्ताकुलीकरणम्" मल्लि०। अङ्गुल्या हि नेत्रप्रान्तनिपीडने एकपदार्थस्य द्विधा भान लोकप्रसिद्धम्। ६पुष्कराणिनीक्षणे स्त्री राजनि०। पृषो० चिपटोऽपि पृथुके हेमच०। स्वार्थे क। चिपिटक पृथुके अमरः।

**चिपिटनासिक** पु० चिपिटा नासिका यत्र। १देशभेदे स च देश "उत्तरः कैलास" इत्युपक्रमे "केशधरचिपिट नासिकदासेरकवाटधानाः" वृ०स० १४०अ० कूर्मविभागे उत्तरस्यामुक्तः। सोऽभिजनोऽस्य अण् तद्राजायोः बहुत्वे लुक्। २तद्देशवासिषु ३तन्नृपेषु च ब० व०।

**चिपुट** पु० चिपिट+पृषो०। पृथुके रत्नः।

**चिप्प** पु० "नखमांसमधिष्ठाय वातं पित्तं च देहिनाम्। करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्" भाव० उक्ते नखरोगभेदे। (आङ्गुल हाडा)

**चि(क्कि)प्पिका** पु० रात्रिचरजन्तुभेदे "लोमाशिकापिङ्गल चि(क्कि)प्पिकाख्यौ मद्गुल्युलूकौ शशकस्य रात्रौ" बृ० स० ८८अ०। "सर्वे स्वकालोत्क्रमचारिण स्युर्देशस्य नाशाय नृपस्य वा" तस्य दिवाचारेऽनिष्टफलमुक्तम् "नानाविधानि विरुतानि हि चि(क्कि)प्पिकायास्तस्याः शुभं कुलकुलु न शुभास्तु शेषाः" बृ० स० ८८अ०।

**चिप्य** पु० स्वरतोक्ते कृमिभेदे कृमिशब्दे दृश्यम्।

**चिमि** पु० चि–बा० मिक्। १शुकखगे शब्दरत्ना०। २पट्टवस्त्रे (पाटशाक) शब्दमाला। स्वार्थे क तत्रार्थे।

**चिर** न० चि–रक्। १दीर्घकाले। २तद्वर्त्तिनि पदार्थे त्रि०। लघादौ (।ऽ) त्रिकत्वे गणे शब्दार्थचि० "दीर्घसूत्रो चिरक्रिय" अमरः। चिरजीवी चिरकारी चिरकालादि।

**चिरकारिन्** त्रि० चिरेण करोति कृ–णिनि। १चिरेण कार्य्यकर्त्तरि दीर्घसूत्रे। २गौतमस्य पुत्रभेदे पु०।

तान्" । "अभीक्ष्णमावाद्य चिराय काम" माघ ।

चिरायुस् पु॰ चिरमायुर्यस्य । १देवे । २चिरजीविनि त्रि॰ त्रिका॰ "स्वल्पदोषैर्हृष्टा च वीर्यवन्तं चिरायुषं च पुत्रं जनयति" सुश्रुत॰ । [अचिरायीत् । वैदिकोऽयम् ।

चिरि हिंसे स्वादि॰ पर॰ सक॰ सेट् । चिरिणोति

चिरि पु॰ चि—बा॰ रिक् । शुकखगे त्रिका॰ । स्वार्थे क । तत्रार्थे हेमच॰ ।

चिरिण्टी स्त्री चिरण्टी+पृषो॰ । स्वासिन्यां पितृगेहस्थायां कन्यायाम् अमरे रिमध्यपाठान्तरम् ।

चिरिविल्व पु॰ चिरविल्व+पृषो॰ । करञ्जकवृक्षे भावप्र॰ ।

चिरु न॰ चीयते चि—बा॰ रुक् । बाहुसन्धौ शब्दच॰ ।

चिरे अव्य॰ चिरमेति इ—क्विप् । दीर्घकाले । "चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः" अमरटीकायाम् आद्यशब्देन चिरे चिरेण चिरात् इति स्वामी" भानुजदीक्षितः ।

चिरेण अव्य॰ चिर+ बा॰ एनप् । दीर्घकाले "निद्रा चिरेण नयनाभिमुखी बभूव" रघुः । "चिरेण मित्रं बध्नीयात् चिरेण च कृतं त्यजेत् । चिरेण च कृतं मित्रं चिरं धारणमर्हति" भा॰ शा॰ २६७अ॰ । [हेम॰ ।

चिर्भटी स्त्री चिरेण भटति भट-अच् गौ॰ ङीष् पृषो॰ । कर्कट्याम्

चिर्भिट पु॰ चिर्भटी+पृषो॰ । १कर्कटीभेदे गोरक्षकर्कट्याम् (गोरख) राजनि॰ । फले न॰ "चिर्भिटं मधुरं रूक्षं गुरु पित्तकफापहम् । अनुष्णं ग्राहि विष्टम्भि पक्वं तूष्णञ्च पित्तलम्" भावप्र॰ तत्फलगुणोक्तिः । [चिचेल ।

चिल वासे आच्छादने तु॰ पर॰ अक॰ सेट् । चिलति अचेलीत् ।

चिल(मि)मीलिका स्त्री चिर मिलति मीलति वा ण्वुल् । स्त्रुत्वः १कण्ठीभेदे २खद्योते ३विद्युति च मेदि॰ ।

चिलिचिम पु॰ चिल—इन् चिलिं वास चिनोति चि—मक् । (वेलेगुड़गुड़िया) मत्स्यभेदे अमरः । अस्य पृषो॰ चिलिचीम चिलीचिम चिलीचिमि चिलीचीम चेलिचीम चेलिम चिलिम चिलीचीमि इति रूपान्तराणि । (चेङ्गु) ख्याते मत्स्ये भरत ।

चिलमीनक पु॰ चिल—क कर्म॰ संज्ञायां कन् । (चेङ्गो) मत्स्ये भरत । [अचिल्लीत् । चिचिल्ल ।

चिल्ल शैथिल्ये भावकृतौ च भ्वा॰ पर॰ अक॰ सेट् । चिल्लति

चिल्ल पु॰ चिल्ल—अच् । १पक्षिभेदे (चिल) अमर॰ । क्लिन्न+पृषो॰ । २क्लिन्ने त्रि॰ मेदि॰ ।

चिल्लक पुं॰ स्त्री चिल्ल इव कायति शब्दायते कै—क । झिल्लिकायां शब्दरत्ना॰ चिल्ल+स्वार्थे क चिल्लशब्दार्थे पु॰ । "खरोष्ट्रमहिषा व्याघ्रा । बिडाला मूषकाश्चिल्लका" भा॰ द्रो॰ प॰ ।

चिल्लभक्ष्या स्त्री हेम॰ । कुक्कुटिलाङ्गिन्यां शब्दच॰ ।

चिल्लाभ पु॰ चिल्ल इव प्रसह्यहारित्वादाभाति आ+भा—क । ग्रन्थिभेदके चौरे त्रिका॰ ।

चिल्लि पु॰ चिल्ल—इन् । भ्रूमध्ये शब्दार्थचि॰ । स्वार्थे क तत्रार्थे । "ललितचलकेतनशरासनानतां चिल्लिकालताम्" काद॰

चिल्ली स्त्री चिल्ल—बा॰ ई । क्षुद्रवास्तुकशाके राजनि॰ । "तण्डुलीयकपोटिकाऽश्वबलाचिल्लीपालक्यावास्तूकप्रभृतीनि । सृष्टमूत्रपुरीषाणि सक्षारमधुराणि च । मन्दवातकफान्याहुः रक्तपित्तहराणि च । कटुर्विपाके क्रिमिहा मेधाग्निबलवर्द्धनः । सक्षारः सर्वदोषघ्नो वास्तूको रोचकः सरः । चिल्ली वास्तूकवत् ज्ञेया पालक्या तण्डुलीयवत्" सुश्रु॰ । २झिल्लिकायां शब्दर॰ । स्वार्थे क । चिल्लिकाप्यत्र ।

चिवि स्त्री चीव—इण् पृषो॰ । चिबुके जटाधर॰ ।

चिविट पु॰ चिपिट+पृषो॰ । चिपिटे त्रिका॰ ।

चिविल्लिका स्त्री रक्तदलायां क्षुद्रक्षुपभेदे राजनि॰ ।

चिबु(क) न॰ चीव—संवरणे उ पृषो॰ ह्रस्वः । ओष्ठाधोभागे अमरः । "वक्ति मातुदरं मीर्ये चिबुके मन्मथाङ्कुले" माघ॰ । स्वार्थे क तत्रैवार्थे । २मुचकुन्दवृक्षे पु॰ राजनि॰ ।

चिश्चा अव्य॰ इषुविशब्दविशेषानुकरणे । "चिश्चा कृणोति समनावगत्य" ऋ॰ ६।७५।५। चिश्चेति शब्दानुकरणे इषुधिर्यथायोषिषुधियुद्धायशब्दं करोति" भा॰ ।

चिहण त्रि॰ चिक्कण+पृषो॰ । चिक्कणे "आदिश्चिहणादीनाम्" पा॰ अस्य कौपकन्थशब्दे परे आद्युदात्तता । चिहणकन्थम् सि॰ कौ॰ ।

चिहणादि पु॰ कौपकन्थशब्दे परे आद्युदात्ततानिमित्ते शब्दगणे स च गण पा॰ ग॰ सूत्रे उक्तो यथा "चिहण मडर मद्गुर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण चिहणादिः ।

चिहुर पु॰ चिकुर+ पृषो॰ । चिकुरे शब्दार्थचिन्तामणि॰ ।

चिङ्क लक्षणे अ॰ चु॰ उभ॰सक॰ सेट् । चिङ्कयति ते अचिचिङ्कत् त । सौत्रोऽयमिति रमा॰ ।

चिङ्क न॰ चिङ्क-अच्, अङ्क-न अपधाया इत्त्वम् वा ।

लघ्वादिके (१ऽ) १लिकचे गन्धे शब्दार्थचि० । २लक्षणे च "यस्मै प्रजाः सा सनिमेषचिह्नाः" "ललामचिह्न मिव ध्याम सायकम्" रघु ।

**चिह्नकारिन्** त्रि० चिह्न करोति कृ–णिनि । १चिह्नकर्त्तरि २घोरदर्शने त्रिष स्त्रियां ङीप् ।

**चिह्नधारिन्** त्रि० चिह्न धारयति धारि–णिनि । १चिह्न-युक्ते स्त्रियां ङीप् सा च २प्रमाणवतायां शब्दच० ।

**चिह्नित** त्रि० चिह्न–कर्म्मणि क्त । १अङ्किते २लाञ्छिते । "दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः" मनुः ।

**चिह्न** पु० चिह्न+पर्णो० (गान्धारी) पर्व्वतभविदं वृक्षभेदे शब्दार्थचि० । स्वार्थे क । तत्रार्थे "चिह्नकोपातलि ष्टौरी क्षेत्रश्लोधालुपष्टिकम् । चाग्नेयो विपक्षस्य फलं मतृष्यनिषूदनम्" भावप्र० ।

**चीक** मर्षणे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चीकयति ते चीकति अचीचिकत् त अचीकीत् ।

**चीचीकूटि** अव्य० शारिकादिशब्दानुकरणे "चीचीकूटीति वाशन्ते शारिका हरिणेक्षण" भा० सौ० २अ० । "चीचीकूटीति वाशन्त त्वामद्य न शृणोमि किम्" हरिव० १०अ० । [राजनि० ।

**चीडा** स्त्री चिड–पृषो० । स्वनामख्याते गन्धद्रव्ये ।

**चीन** पु० चि–नक् पृषो० दीर्घः । "काश्मीरं तु समारभ्य कामरूपात्तु पश्चिमे । भोटान्तदेशोदेशिमि । मानसेशाश्च दक्षिणे । मानसेशादृशपूर्व्वे चीनदेशः प्रकीर्त्तितः" शक्तिसङ्गमतन्त्रोक्ते १देशभेदे । सोऽभिजनोऽस्य अण् तस्य राज्यो वा बहुत्वे लुक् । २तद्देशवासिषु तन्नृपेषु च ब० व० । "वाजिनां च सहस्राणि चीनदेशोद्भवानि च" भा० उ० २७अ० । अयञ्च देश' बृ० स० १४अ० कूर्म्मविभागे ऐशान्यामुक्त । ऐशान्यामित्युपक्रमे "यमराजकिरात चीनकौणिन्दा" "यवनाश्चीनकाम्बोजा दारुणा-म्लेच्छजातय" भा० भी० ९अ० जनपदोक्तौ । तद्देश-जनाश्च क्रियालोपात् शनैः श्वत्व गता यथाह मनु "शनकैस्तु क्रियालोपादिमाः क्षत्रियजातय । वृषलत्व गता लोके ब्राह्मणादर्शनेन च । पौण्ड्रकाश्चोड्रद्रविडाः काम्बोजाः यवनाः शकाः पारदाः पह्लवाश्चीनाः किरा-ताद्दरदाःखशाः" । ४तद्देशजे वस्त्रभेदे च "कार्पासीचीन चीनस्तनवसनदमान्दोलनबन्ध्दमन्दः" उद्भटः । ५व्रीहिभेदे क्षुद्रादयधान्यशब्दे ५१८४पृ० दृश्यम् । "चीनक कङ्गु भेदोऽस्ति स ज्ञेय कङ्गुवद्गुणैः" भावप्र० । ६तन्तौ ७मृगभेदे च मेदि० । ८पताकायां न० त्रिका० । ९सीसके न० रत्नमाला तन्त्रोक्ते १०तद्देशवासिजनानामाचारभेदे च०, पृषो० अस्य णत्वमपि पठन्ति । ११चीनकर्पूरे राजनि० ।

**चीनकर्पूर** पु० चीनोद्भव कर्पूर । कर्पूरभेदे राजनि० ।

**चीनज** न० चीने तद्देशे जायते जन–ड । १तीक्ष्णलौहे राजनि० । २चीनजातमात्रे त्रि०

**चीनपिष्ट** न० चीनस्य सीसकस्य पिष्ट चूर्णं इव (चीनेर सिन्दुर) १सिन्दूरभेदे हेमच० । चीन दिष्ट मिव । २सीसके राजनि० ।

**चीनवङ्ग** न० चीनमय वङ्गम् । सीसके राजनि० ।

**चीनांशुक** न० कर्म्म० । चीनाख्ये पट्टवस्त्रभेदे "चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य" कुमा० । "चीनांशुकमिव पीनस्तनस्तनाया कुलीनाया" उद्भट ।

**चीनाक** पु० चीन तदाकार म कति अक–अण् । (चीनिया) कर्पूरभेदे । "चीनाकसञ्च कर्पूर कफक्षयकर स्मृत । कुष्ठकण्डविषघ्नस्तथा तिक्तरसश्च स" भावप्र० ।

**चीनाकर्कटी** स्त्री चीनमिव स्वादु कर्कटी पृषो० दीर्घ । १राजकर्कट्यां चित्रकूटप्रसिद्धकर्कटीभेदे राजनि० ।

**चीभ** प्रशसायां भ्वा०आत्म० सक० सेट् । चीभते अचीभिष्ट । चिचीभे ऋदित् अचिचीभत् त ।

**चीर** न० चि–क्रन् दीर्घश्च । १वस्त्रखण्डे मेदि० । (कानि) "चीराणि किं पथि न सन्ति दिशन्ति भिक्षाम्" शान्तिश० । २वृक्षत्वचि सुभूति । ३गोस्तने ४वस्त्रभेदे ५रेखा लक्षणभेदे मेदि० । ६मस्तकमाले ७चूडायां ८सीसके हेमच० । ९लिखनभेदे १०वल्कले च शब्दार्थचि० "न कदाचित् तपस्यन्तमाद्ये चीरजटाधरम्" भा० व० १८७अ० । "वेदचीरपरिग्रहा" कुमा० । [स्वार्थे क । चीरवल्कार्द्दे

**चीरक** न० चीर+सञ्ज्ञायाम् कन् । विकारवेशने त्रिषः ।

**चीरपत्रिका** स्त्री चीरमिव पत्रमस्या कप् अत इत्त्वम् । चञ्चुशाके राजनि० ।

**चीरपर्ण** पु० चीरमिव पर्णमस्य । शालवृक्षे राजनि० ।

**चीरनिवसन** पु० चीर निवसनं वस्त्र यस्य । "ऐशान्या-मित्युपक्रमे "पौरवचीरनिवसनत्रिनेत्रमुञ्जाद्रिगन्धर्व्वाः" बृ०स०१४ उक्ते १देशभेदे २तद्देशवासिषु ३तन्नृपेषु ब०व । ४चीरधारिणि त्रि० [सर्पला" सुश्रुत ।

**चीरल्लि** पु० । पक्षिभेदे 'धारयेदपि जिह्वाय चाषचीरल्लि

**चीरि** स्त्री चि–बा० क्रि दीर्घश्च । १नेत्राच्छदके शब्दरत्ना० । २झिल्लिकायां ३कच्छटिकायां शब्दार्थचि०

चोरिका स्त्री चीरीति कायति कै—क । झिल्लिकायां हेमच० ।

चोरिणी स्त्री वैवस्वतमन्वन्तरपश्चात्स्थानसमीपस्थे वटरीक्षेत्रस्थे नदीभेदे। 'जम्बुशाखाविशालायां नद्यां स (वैवस्वत) नराधिप'। इत्युपक्रमे "तं कदाचित् तपस्यन्तमार्द्रचीर जटाधरम्। चीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत्" भा० व० १८७ अ० । [पालङ्क्यशाके भावप्र० ।

चीरितच्छदा स्त्री चीरवदाचरितः छदो दलं यस्याः ।

चीरीवाक पु० चीरीतिशब्दोवाको यस्य कोऽस्य । कीटभेदे "चीरीवाकस्तु लवणं वलाका शकुनिर्दधि" मनुना लवणहरणकर्मविपाके तद्योनिरुक्ता "क्षिली वस्त्र श्वा रसन्तु चीरी लवणहारक" याज्ञ० ऐकवाक्यात् अस्य चीरीसमानार्थकताऽवसेया ।

चीरुक स्त्री चीति-रौति-रु-बा० क । १झिल्लिकायां शब्दार्थचि० । सा बाहुल्येनास्त्यस्य अच् । २फल-प्रधानवृक्षभेदे न० ।

चीर्ण त्रि० चर नक् पृषो० अत इत्त्वम् । १कृते २योचिते, ३सम्पादिते "चीर्णं व्रतानपि सदा कृतसर्वहितानिमान्" याज्ञ० । ४विदारिते च । [ स्वरूते च मेदि० ।

चीर्णपर्ण त्रि० चीर्णं विदारितं पर्णमस्य । १खर्जूरवृक्षे २नि-

चील्लिका स्त्री चीति शब्दं लाति ला—क टापि अत इत्त्वम् चीरिका+रस्य लोवा । झिल्लिकायां शब्दरत्ना० ।

चील्लक पु०चीटिति शब्दं लक्कति लक्क-अच् पृषो० । झिल्लि-कायां शब्दर० ।

चीव प्रकृषे मदतौ च भ्वा० उभ० सक० सेट् । चीवति ते अचीवीत् अचीविष्ट । चिचीव चिचीवे ऋदित् । अचि-चीवत् त ।

चीव दीप्तौ चुरा०उभ०सक०सेट्। चीवयति ते अचीचिवत् त

चीवर न० चि-वरच् नि० दीर्घ चीव-अच् वा । भिक्षु प्रावरणे उत्तरीयवस्त्रे "कौपिनाच्छादनं यावत्तावदिच्छेच्च चीवरम्" भा० आ० ८१अ० । "प्रैतचीवरवसा स्वनो-मया" रघु । "पुच्छभाण्डचीवराण्णिङ्" पा० चीव-रादर्जने परिधाने च" वार्त्ति० चीवराणि अर्जयति परिधत्ते वा स चीवरयते भिक्षु सि० कौ०। [त्रिका० ।

चीवरिन् पु० चीवरमस्त्यस्य इनि । १भिक्षुके २बुद्धभिक्षुके

चुक्क पीड़ने चु० उभ०सक० सेट् । चुक्कयति ते अचुचुक्कत् त ।

चुक्कार पु० चुक्क—भावे—घञ् चुक्कं पीड़नमाराति अस्मात् दहादि आ+रा—क । सिंहनादे त्रिका० ।



चुक्र न० चक-रक् अत उत्त्वञ्च । १अम्लरसे २अम्लवेतसे पु० विश्वः ३शाकभेदे, (चुकापालङ्) ४वृक्षभेदे च शब्दार्थचि० । "चुक्रमत्यम्लमुष्णञ्च दीपन पाचन परम् । शूलगुल्मविबन्धामवातश्लेष्महरम् परम् । वमिहृष्णास्यवैरस्यहृत् पीडार्थाक्रिमान्द्यहृत्" भावप्र० । ५काञ्जिकभेदे । ६रक्ताम्ले ७सन्धानविशेषे शब्दार्थचि० "यन्मस्त्वादि शुचौ भाण्डे सगुड क्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते । द्विगुण गुडमध्वारनालमस्तुक्रमादिह" वैद्यकपरिभाषा । तत इला भावे इमनिच् । चुक्रिमन् अम्लत्वे पु० । स्वार्थे क सञ्ज्ञायां वा कन् । चुक्रक तदर्थे । (चुकपालङ्) शाके न० ।

चुक्रफल न० चुक्रं फलति फल—अच् । वृक्षाम्ले राजनि० ।

चुक्रवास्तुक न० चुक्रं वास्तुकमिव । (चुकपालङ्) शाकभेदे राजनि० । [ राजनि० ।

चुक्रवेधक न० चुक्रमिव विध्यति विध—ण्वुल् । काञ्जिकभेदे

चुक्रा स्त्री चक—रक् अत उत्त्वम् । १चाङ्गेर्याम् (आमरुल) मेदि० । २तिन्तिड्यां शब्दर० । स्वार्थे क चुक्रिका । अम्ल लोणिकायाम् (आमरुल) अमर ।

चुक्राम्ल न० चुक्रमिवाम्लम् । १वृक्षाम्ले .(चुकापालङ्) २शाके ३अम्ललोणिकायां (आमरुल) स्त्री राजनि० ।

चुक्री स्त्री चुक्र+गौरा० ङीष् । चाङ्गेर्याम् "चुक्री त्वम्ल-तरा स्वाद्वी वातघ्नी कफपित्तकृत् । रुच्या लघुतरा पाके ग्रन्थार्केशातिरोचनी" भावप्र० ।

चुण्टा स्त्री चप वधे बा० स पृषो० । १हिंसायां २हृदः शोलमस्य अच्ता० अ । चोष्य हिंसाशीले त्रि० । "शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकम् । लताविताननसंछन्नं चौण्ड(चण्ड)मित्यभिधीयते । अश्मादिभिरद-ढं यत् चु(चण्डे)ति च परे जगुः । तत्प्रत्यदक चौ (चण्डम्)च मुनिभिःसमुदाहृतम्" भावप्र० उक्ते जलाधारभेदे । सुश्रुतेन तज्जलस्य चौराटचत्वामा अर्थ-सवलिसमाहित येनिम्" इति सुश्रुते निदानस्थाने चोष्येति पाठास्तु लिपिकरप्रमादकृत भावप्र० यज्ञश्च पुस्तकेषु चौण्डमिति पाठ युक्तएव त्रिकाण्डे च चण्डा-शब्दस्य उपकूपजलाशयार्थकत्वात् तत्रत्यजलस्यैव चौण्ड-संज्ञौचित्यात्

चुचु(चू)क पु० न० चुचु इत्यव्यक्तशब्दं कायति पीयमानं कै—क । १कुचाग्रे अमर तत्र चूचुकमिति । दीर्घ-

नारदीये "ऽब्जे त्रिकोणोपगते वा क्षौरं सत् स्यात्
ऽमितनवमें । सौम्ये भेऽब्जे शोभने द्युतारा गण्डा
शेया क्षौरयात्रादिकार्ये (४) । अग्न्याहिता रुग्नीकाया
स्नमोधीजादि नाचरेत् । कर्णवेधापनयश्च न कार्ये
कैश्चिन्मार्गेऽपि नेष्यते" (५) । तत्कालचिन्तामणिः
"चूडा वर्षादिति । तृतीयाद्वर्षादित्र्यद्भागे पञ्चमी ।
तेन गर्भाधानकालाज्जन्मकालाद्वा तृतीये विषमे वर्षे
पञ्चमे सप्तमे वा चूडाकरणं प्रभवति तत्र सफलोदर्कं
भवतीत्यर्थः । यदाह वशिष्ठ "तृतीये पञ्चमेऽब्दे वा
स्वकुलाचारतोऽपि वा । चौलं शिशूनां यत्नेन स्व
स्वगृह्योक्तविधानतः । व्याधानतोऽन्यतो वा गर्भमासादेऽपि
कारयेत्" । स्वकुलाचारत इत्यनेन येषां कुले पादवर्षेण
चूडाकरणं तत्र मुहूर्तविचार । येषामुपनीत्या सहेष्यत
इति पञ्चवर्षोपनयनमुहूर्तेन सिद्धत्वात्र पृथक् मुहू
र्तविचारात्ताभेदः । अतएवोक्तं श्रीपतिकेन "चूडा
कार्या यथाकुलमिति" । मनुना प्रथमवर्षे उक्तम् ।
"चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे
तृतीये वा कर्त्तव्यं श्रुतिचोदनात्" एवं बहुवाक्योक्तौ
यथागृह्यं व्यवस्था द्रष्टव्या । स्मृत्युक्तो विशेषकालानुक्तौ
तु समबलत्वात्सर्वेषां विकल्पः । विशेषमाह गुरुः "तृती-
येऽब्दे विषोगर्भाज्जन्मतो वा विशेषतः । पञ्चमे सप्तमे
वापि स्त्रियाः पुंसोऽन्यथा समर्थमिति । षष्ठेति षष्ठाष्टमी
ष्वर्क्षे द्वादशी रिक्ताः प्रसिद्धाः आद्या प्रतिपत् षष्ठी
प्रसिद्धा पर्वाणि अष्टमीचतुर्दशीपूर्णिमामावास्यासङ्क्रा
न्तयः । एतैर्दिने रहितेऽहनि । अत्र तत्पुरुषसमासे
"राजाहःसखिभ्यष्टजिति" पा० टच् "न सङ्खिम" इति
टिलोप । षष्ठ्यादितिथीस्त्यक्त्वा शेषासु तिथिषु चूडा
स्यादित्यर्थः । यदाह गुरु "द्वादशीं षष्ठीं रिक्तां पर्व
प्रतिपदन्तथा । हित्वा शेषासु तिथिषु क्षौरकर्म
शुभावहम्" कश्यपः "षष्ठपर्वतिथि रिक्तां त्यक्त्वान्यदिवसे
शुभमिति" । अतएवाह वशिष्ठ "पञ्चमी सप्तमी चैव
दशम्येकादशी तथा । त्रयोदशी तृतीया च क्षुरकर्म
शुभावहा" इति । चकाराद्द्वितीयाऽपि । नतु सप्तमी
त्रयोदश्योर्गलग्रहत्वात्कथं तयोर्ग्रहणम्, यदाह गुरु
"विद्यारम्भोऽनध्यायेषु क्षौरञ्चैव विशेषतः । गलग्रहे न
कर्त्तव्यं यदीच्छेद्दीर्घजीवितमिति" चेत् उच्यते वैदिक
मुण्डनश्चौलमित्युच्यते तद्विषयको विधिः । अवैदिक
मुण्डन सूक्ष्मं यत् क्षौरमुच्यते क्षुरस्य कर्म क्षौरमिति
सामान्यमुत्तरं तद्विषयको निषेध इति वय
मूम । अन्ये देशाचारतो व्यवस्थामाहुस्तदयुक्त
विरोधाभावात् । विचिन्त्येति । चैत्रर्क्षे उत्तरा-
यणे चूडा स्यात् । शुभाशुभप्रकरणाभिहितो अन्ध-
मासनिषेधोऽत्रापि ध्येयः । तदाह राजमार्त्तण्डः
"उत्तरयनेऽपि सवितरि चूडाकरणं प्रगुर्गुणा सदा ।
चैत्रं हित्वा पापप्रहदिवस जन्ममासञ्च" । तथा
चेन्दुगुर्वेज्ञकाव्यानां वारे शस्तांशयोरिति सौम्यवारे
सौम्यग्रहाणां लग्ने कर्कमिथुनवृषकन्यातुलाधनुर्मीना-
नामन्यतमे लग्ने तेषामेव च नवांशे चूडा स्यात् । "चन्द्र-
गुरुबुधशुक्राणां वारलग्नांशकेषु चेति" काश्यपोक्तेः ।
विशेषमाह पराशरः "क्षितेज्यसौम्यवारेषु क्षौरं पक्ष-
द्वये हितम् । इन्दुवारः सिते पक्षे वारा शेषा न शो-
भनाः" । प्रयोगपारिजाते पापवारा अप्यपवाद
पठित "पापग्रहाणां वारेऽपि विप्राणां तु शुभो-
रविः । क्षत्रियाणां तु भूसुतविट्शूद्राणां शनि शुभः ।'
इति । तथा जन्मनिधनतो भ जन्म राशितश्च स
भे लग्ने वाष्टमं निधनमष्टमलग्नं तत्र विद्यते यस्मिन्
तस्मिन् स्वजन्मलग्नराशिभ्यामष्टमलग्नरहिते लग्ने
चूडा स्यादित्यर्थः । तथा नैधनेऽष्टमस्थाने शुद्धि
युक्ते शुद्धिः शुक्रव्यतिरिक्तसर्वग्रहराहित्यं तद्युक्ते
सति चूडा स्यात् । उक्तञ्च कश्यपेन "नैधने शुद्धि
संयुक्ते लग्नराशौ न नैधने" इति । पराशर "षष्ठ-
मस्था ग्रहा सर्वे नेष्टाः शुक्रविवर्जिताः । शुक्रश्च नि-
धने क्षौरे सर्वसम्पत्करः शिशोरिति" । शाक्रोपेतैरिति ।
शाक्रोपेतैर्ज्येष्ठायुक्तैर्विमैत्रैरनुराधारहितैर्लघुचरक्षिप्र
मिश्रादिगणभैर्नक्षत्रैरुपलक्षिते काले चूडा स्यात् । यदाह
वशिष्ठ "अदितिद्वितये पौष्णद्वितये श्रवणत्रये । हस्तात्
त्रितये शाक्रे चैन्द्रे चौलमीरितम्" । कश्यपोऽपि
"दास्रेऽदितिपुष्येन्द्रभेषु हस्तत्रयेऽपि च । विष्णुत्रये च
पौष्णार्क्षे चौलकर्म शुभप्रदमिति" अविहितनक्षत्रेषु
जन्मनक्षत्रमप्यस्तीत्याह कश्यपः "नवान्नप्राशने चौले
व्रतबन्धेऽभिषेचने । शुभदं जन्मनक्षत्रमशुभं त्वन्य-
कर्म्मसु चेति" नारदादिवाक्यान्यत्रप्रायेणेऽभिहितानि
अत्र केचित् जन्मनक्षत्रपदं ताराणां परमिवाहुः
तथाचोक्तं वृद्धेन "हित्वैकं जन्मर्क्षं तारे जन्म
संज्ञिते शुभदे । उद्वाहे चोपनये ग्रामावासप्रवेशने
क्षुरे कार्ये" इति । तत्र अवैदिकक्षुरविषयकत्वात् "जन्म

ऽपि कर्म्मनक्षत्रे" इति गुरुवचनमपि तद्विषयमेव वैदिकक्षुरपरत्वे तत्कश्यपादिवाक्यमिति समञ्जसम् । अथ लग्नबलमाह । आयेति । एकादशषष्ठतृतीयस्थानस्थितैः पापग्रहैरुपलक्षिते काले चूडा स्यात् । "आयषष्ठान्त्यारिगे चन्द्रे पापैरायारिसंस्थितैः" इति काश्यपोक्तेः । (१) क्षीणेति । तथा क्षीणचन्द्रः । कुजो मङ्गलः सौरिः शनिः भास्करः सूर्य्यः एतैः केन्द्रस्थैः क्रमेण यथासङ्ख्यं मृत्युः मरणं, शस्त्रमृतिः शस्त्रान्मृतिः, पङ्गुता खञ्जता ज्वरः प्रसिद्धः एतानि फलानि स्युः भवेयुः । बुधजीवभार्गवैस्तु केन्द्रस्थैः शुभकल्याणकारि फलं चूडाकर्त्तुः स्यात् तदुक्तं रत्नमालायां "क्षौरर्क्षेषु स्वकुलविधिना चौलमाहुर्मुनीन्द्राः केन्द्रं यातेषु ज्ञगुरुभृगुसुतेषु सूर्य्ये ज्वरः स्यात् । शस्त्राघातो मरणमिति तथा पङ्गुता चार्कपुत्रे शीतज्योतिष्यपचिततनौ निश्चितं नाशमेति" । केन्द्रव्यतिरिक्तस्थानफलमपि तत्रैव "धनव्ययत्रिकोणगैरसत्खगैर्न तावपि । क्षुरक्रिया न शोभना शुभैस्तु पुष्टिकारिणीति" अत्र तु शुक्र एव शस्तो नान्ये शुभग्रहाः प्रागुक्तपराशरवाक्यस्वरसात् । क्षुरक्रिया चौलम् इष्टतारयेति च पुनरिष्टतारया गोचरप्रकरणोक्तया शुभफलदतारया चूडा स्यात् । उक्तञ्च राजमार्त्तण्डेन "रविशुद्धौ ग्रहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ । क्षौरन्ताराशुद्धौ शेषञ्चन्द्राश्रितं कर्म्मेति" । ज्योतिर्निबन्धे "विवाहे सविता, शस्तोऽव्रतबन्धे बृहस्पतिः । क्षौरे ताराविशुद्धिश्च, शेषे चन्द्रबलम्बलमिति" । चौलप्रयोजनमाह वशिष्ठः "सर्व्वेषामेव वर्णानां चूडाकर्म्मविधिः स्मृतः । केशपक्षः पिता ज्ञेयः, केशाग्रं जननी तथा । चौलेनैवायुषो वृद्धिश्चौलेनैवायुषः क्षयः । तस्माच्चौलं प्रयत्नेन कारयेद्बुद्धिमान्नरः" व्यवहारनिबन्धे चौलारम्भे विशेषमाह श्रीपतिः "केशवमानर्त्तपुरं पाटलिपुत्रं पुरीमहिच्छत्राम् । दितिमदितिञ्च स्मरतां क्षौरविधौ भवति कल्याणमिति" । यत्तु कैश्चिदुक्तम् "चन्द्रशुद्धिर्यत्र नास्ति ताराया विशेषतः । अक्षौरेऽपि कर्त्तव्यं वारेषु बुधसोमयोः" इति तत्सामान्यक्षौरविषयम् (२) । पीयूषधारा ॥

अथ सगर्भायां स्वमातरि सत्यां शिशोश्चौलार्थं कालमनुष्टुभाह । पञ्चेति चौलाधिकारिणः शिशोर्मातुर्गर्भे पञ्चमासेभ्योऽधिके सति चौलं न सत् शुभफलदात् नैव स्यात् । अतः पञ्चमासेभ्यः पूर्व्वञ्चौलकृत तच्छुभफलमित्यर्थः तदुक्तं गृह्यपरिशिष्टे "चूडाकर्म्म न कर्त्तव्यं यस्य माताऽस्ति गर्भिणी । करोति यदि मन्दात्मा तदा गर्भस्य नाशनम् । पितोर्म्मृतिं वदन्त्येके चतुरब्दोत्तरे स्फुटम्" इति । वशिष्ठः "पुत्रचूडाकृतौ माता गर्भिणी यदि वा भवेत् । विपद्यते गुरुश्चैव दम्पती शिशुरब्दत । गर्भे मातुः कुमारस्य न कुर्य्याच्चौलकर्म्म च । पञ्चमासादधः कुर्य्यादतऊर्द्ध्वं न कारयेत्" इति । अस्यापवादमाह । पञ्चेति पञ्चवर्षाधिकस्योल्लङ्घितपञ्चमवर्षस्य शिशोर्मातरि गर्भिण्यामपि सत्यां पञ्चमासादथ ऊर्द्ध्वं विहितकाले चौलमिष्टकल्याणकारि भवेत् । अतो बालो यावत्पञ्चवर्षो न भवति तावत्पर्य्यन्तं निषेध इत्यर्थः । तदाह नारदः "सूनोर्मातरि गर्भिण्यां चूडाकर्म्म न कारयेत् । पञ्चमाब्दात् प्रागथोर्द्ध्वं गर्भिण्यामपि कारयेत्" । यदा तूपनयनेन सह चौलञ्चिकीर्षितं तदा विशेषमाह ज्योतिर्नारदः "सहोपनीत्या कुर्य्याच्चेत्तदा दोषो न विद्यते" इति । अत्र तु पञ्चवर्षाणां न्यूनाधिकभावो नापेक्षित सर्व्वापवादफलत्वादस्य । एवं पार्थक्येन मौञ्ज्यपि सगर्भायां स्वमातरि सत्यां न भवति । तदुक्तम् "सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेत् । गते तु पञ्चमे मासे गर्भादीनां क्षतिर्भवेत् (३) ।

अथ चौले ताराबलमावश्यकमित्युक्तं तत्र दुष्टायास्तारायाः सत्यामपवादं शालिन्याह तारादौष्ट्ये इति । ताराणां दुष्टत्वं गोचरप्रकरणेऽभिहितं तत्तत एवावधार्यम् । तस्मात्तारादौष्ट्ये सत्यपि क्षौरञ्चौलं सम्यक् शोभनं स्यात् । कस्मिन् सति ? अब्जे चन्द्रे त्रिकोणगे नवपञ्चमस्थानस्थिते, अथ सौम्यगे शुभराशिस्थे । अथ वा सौम्यानां बुधगुरुशुक्राणां वर्गे षड्वर्गे अथ वा स्वस्यैव षड्वर्गे सति । उक्तञ्च ज्योतिस्तत्त्वे "सौम्यग्रहस्ववर्गे चन्द्रे शुभगे त्रिकोणगे वापि । क्षौरादिकोपकरणे तारादोषो न दोषाय" । आदिशब्देन यात्रा । "विपत्तारे गुडं दद्यात्" इत्यादयोऽपि तारादौष्ट्यापवादाः प्रागुक्तास्तेऽप्यत्रोह्याः । अथ शुभतारायाङ्कृत्यमाह सौम्ये भे विहिते नक्षत्रे सति अब्जे शोभने चन्द्रे गोचरोक्तशुभस्थानस्थे सति दुष्टताराऽसमीचीनताराऽपि चेत् स्यात्तदा क्षौरयात्रादि मङ्गलकृत्येषु शस्ताऽतिप्रशस्ता निखिलदोषापवादिका स्यादित्यर्थः । तदप्युक्तं ज्योतिस्तत्त्वे "कृष्णेन्दुरवनिजश्नी रिक्ता चन्द्राष्टवक्षाया ।

२चुम्बने स्त्री "स्वेदोऽस्य चुम्बा प्रथमाऽभियोगे" "चुम्बाविरामे वदन प्रमार्ष्टि" ह० स० ७८अ० ।

**चुम्बक** पु० चुम्बति लौहम् चुबि–ण्वुल् । स्वनामख्याते अयस्कान्ते मणिभेदे "चुम्बको लेखन शीतो मेदोविष गरापहः" भावप्र० । २धटस्योपर्य्यवलम्बने ३ग्रन्थ-ग्रन्थैकदेशे । ४चुम्बनकर्त्तरि ५कामुके ६चुम्बनपरे ७धूर्त्ते च त्रि० शब्दार्थचि० ।

**चुम्बन** न० चुबि–भावे ल्युट् । मुखसंयोगविशेषे । "समाश्लिष्टा समाश्लेषैश्चुम्बिताश्चुम्बनैरपि । दष्टाश्च दशनैः कान्तं दासीकुर्वन्ति योषितः" सा० द० । चुम्बनस्थानमाह कामशास्त्रे "मुखे स्तने ललाटे च कण्ठे च नेत्रयोरपि । जघने कर्णयोश्चैव कक्षोरुभग-मूर्द्धसु । चुम्बनस्थानमित्युक्तम् विज्ञेय कामुकैरिह" । चु० चबि–भावे सुच् । चुम्बनाप्यत्र स्त्री

**चुर** स्तेये (परद्रव्यापहरणे) वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चोरयति-ते चोरति अचूचुरत्–त अचोरीत् "दत्ताग्निं चोरयेत् स्वकात्" याज्ञ० । "अचू-चुरत् चन्द्रमसोऽभिरामताम्" माघ ।

**चुर** त्रि० चुर–क । चौर्य्यकर्त्तरि [अचुरणीत् ।

**चुरण** चौर्य्ये कण्ड्वा० पर० सक० सेट् ।। चुरण्यति

**चुरा** स्त्री चुर–बा० भावे अ । चौर्य्ये शब्दरत्ना० । चुरा-शीलमस्य छत्रा० ण । चौर चुराशीले त्रि० ।

**चुरि(री)** स्त्री चुर बा०कि वा ङीप् । उपकूपे कूपसमीपस्थे जलाधारे हेम० ।

**चुरुचुर** पु० त्रि० चुर–कु चुर–क कर्म० । पिशुने अस्य कर्णे उपपदे पात्रसमि० स० । कर्णेचुरुचुर कर्णे-पिशुने युक्तारो आद्युदात्तताऽस्य । [त पा०

**चुल** समुच्छ्राये वा चुरा०उभ०सक०सेट् । चोलयति ते अचूचुलत्

**चुल** त्रि० चुर क रस्य लः । चारे तत चतुरर्थ्यां वला० य च । चुल्य तन्निर्वृत्तादौ त्रि० ।

**चुलका** स्त्री नदीभेदे "कावेरीं चुलका चापि वेणां शतबलामपि" भा० भी० ९अ० । नद्युक्तौ

**चुलुक** पु० चुल–उकञ् । १प्रसृतौ २निविडपङ्के, ३भाण्डभेदे च त्रिका० ४मात्रमात्रमज्जनयोग्ये जले न० हेमच० । "काश्यामुत्तरवाहिन्या एकेन चुलुकेन तत्" काशी० २९अ० । ६गोत्रप्रवर्त्तके ऋषिभेदे पु० तत गर्गा० गोत्रे यञ् । चौलुक्य चुलुकगोत्रापत्ये पु स्त्री० । स्त्रियां ङीप् यलोपश्च चौलुकी ।

**चुलुकिन्** पु० चुलुक+अस्त्यर्थे इनि । शिशुमाराकारे मत्स्यभेदे शब्दरत्ना० । चुलकशालिनि त्रि० स्त्रियां ङीप् ।

**चुलु(न्प)म्प** लौल्ये भ्वा० पर० अक० सेट् । चुलुम्पति अचुलुम्पीत् "अम्भोभिर्नाविकेलीरसमिव चुलुकैश्चुलुम्प-न्त्यपो ये" मञ्जावी० । कस्य नोपधत्वे क्विपि चुलुन् नोपधत्वे चुलुम् । [२छाग्या स्त्री त्रिका० ।

**चुलम्प** पु० चुलुम्प–भावे घञ् । १बाललालने जटा० ।

**चुलुम्पिन्** पु० चुलुम्प–णिनि । शिशुमाराकृतिमत्स्ये शब्दर० ।

**चुल्ल** भाव करणे भ्वा० पर० अक० सेट् । चुल्लति अचुल्लीत् चुचुल्ल । [२तद्युक्ते जने त्रि० मेदि० ।

**चुल्ल** न० क्लिन्नस्य चुल्लादेश लच्प्रत्यय । १क्लिन्ननेत्रे

**चुल्लकी** स्त्री० चुल्ल–ण्वुल् गौरा० ङीष् । शिशुमारे कुम्भी-रभेदे मेदि० ।

**चुल्ली(ल्लि)** स्त्री चुल्ल-इन् वा ङीप् । चुल–बा०लिक् वा । पाकार्थमग्निस्थापनस्थाने (चुला) अमर । "चुल्ली चिर रोदिति" उद्भट । "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युप-स्कर" मनु । अच् । चुल्लाप्यत्र । दीर्घान्त चितायां मेदि

**चूस्त** पुंन० चु–क्त वा० सुट् । १मुक्ते मांसपिण्डभेदे २स्थालीभ्रष्टमांसे च शब्दार्थचि० । पनसफलान्तर्गते (भुति) इति ख्याते पदार्थे भरत ।

**चूचूक** न० चूष्यते चूष-बा० ऊक पृषो० षस्य च । कुचाग्रे भरत २चूषणशक्तिरहिते त्रि० "वामयोनि समापन्नावाण्डालामूकचूचूका" भा० आश्व० २६ अ० ।

**चूडक** पु० चूडाऽस्त्यस्य वा० कन् । कूपे त्रिका० ।

**चूडा** स्त्री चुल-अङ् चुल-समुच्छ्राये अङ् उस्य ऊ नि०,दीर्घ । १मयूरशिखायां २शिरोमध्यस्थशिखामात्रे, कुटिकायाम् अमर । ३वडभ्यां ४बाहुभूषणे, मेदि० । ५अग्रे हेमच० । ६कूपे त्रिका० । ७संस्कारभेदे तद्विहि-तनक्षत्रादि मुहू० पी० धा० उक्त यथा ।

"चूडा वर्षात्तृतीयात् प्रभवति विषमेऽष्टार्करिक्ताद्यषष्ठी-पर्वोनाहे विचैत्रोदगयनसमये ज्ञेन्दुशुक्रेज्यकानाम् । वारे, लग्नांशयोश्चास्वभनिधनतनौ नैधने शुद्धियुक्ते शाक्रोपेतैर्विमैत्रैर्मृदुचरलघुभैरायषट्त्रिस्थपापैः (१)

क्षीणचन्द्रकुजसौरिभास्करैर्मृत्युशस्त्रमृतिपङ्गुताज्वरा । स्युः क्रमेण बुधजीवभार्गवैः केन्द्रगैश्च शुभमिष्टतारया (२)

पञ्चमासाधिके मातुर्गर्भे चौलं शिशोर्न सत् । पञ्च-वर्षाधिकस्येष्टं गर्भिण्यामपि मातरि । (३)

तत्सर्वं भाग्येप्तारा षट्पञ्च नवमी तथा । जन्माख्य-द्वष्टमी तारा न शुभा नापि निन्दितेति । (४) पी॰धा॰ ' अथ चौलादिकर्त्ये कालविशेषनिषेधमाह अन्त मत्या इति । अन्त स्त्रीधर्म स यस्या अस्तीति ऋतु-मती तस्यास्तथा सूतिकाया जातापत्याया' सूनो' पुत्रस्योपलक्षणत्वात्कन्याया वा चौलोपनयनविवाहा-द्युक्तवक्ष्यमाणकर्त्य नाचरेत् न कारयेत् । उक्तं च प्रचेतसा "यस्य माङ्गलिक कर्त्तव्यस्य माता रज-स्वला । वैधव्य जायते तत्र भार्यायाः पाणिपीडने" । पाणिपीडने वैधव्यमन्यत्र कार्य्यरित्यर्थः । सूतिकाया अपि कर्मानर्हकाल उक्तोविष्णुस्मृतौ । "सूतिकाम्बु न यतीं विंशतिरात्रेण कर्माणि कारयेत् मासेन स्त्री-जननीमिति" ।

अतएव सूतिकाया उक्तकालपर्य्यन्तं कर्मानर्हत्वात्तदपत्य-स्यापि मङ्गलकर्त्ये निषेधः । ज्येष्ठेति ज्येष्ठापत्यस्याद्य-गर्भस्य पुत्रस्य कन्याया वा व्रतबन्धविवाहादि शुभकर्त्य ज्येष्ठमासे न भवति उक्तञ्च रत्नमालायाम् "आद्यगर्भ-दुहितु सुतस्य वा ज्येष्ठमासि न च जातु मङ्गलमिति" केश्चिदिति । मार्गेऽपि मार्गशीर्षमासेऽपि केचिदाचार्य्या-राद्यगर्भसुतकन्ययोर्मङ्गलकर्त्य नेच्छन्ते तदाह वात्स्यः "मार्गे मासि तथा ज्येष्ठे विवाहं चौलमेव च । ज्येष्ठपुत्र दुहित्रोश्च न कुर्वीत व्रत तथा" । भरद्वाजोऽपि "मार्ग-शीर्षे तथा ज्येष्ठे क्षौरं परिणय व्रतम् । आद्यपुत्र-दुहित्रोश्च यत्नत परिवर्जयेत्" । अस्मादेव ज्ञापकात् द्वितीयादिगर्भपुत्रदुहित्रोर्ज्येष्ठे मार्गशीर्षे च न मङ्ग-लकर्मणां निषेधः किं तु विधिरिति प्रतिभाति" पी॰ धा॰ ।

चूडामणि पु॰ चूडास्थितोमणि शा॰ त॰ । १शिरस्थरत्ने अमर । "चूडामणीकृतविधुर्वलयीकृतवासुकि" शि॰ मु॰। "चूडामणिभिरुद्धृष्टपादपीठ महीक्षिताम्" रघु । चूडायां मणिरिवास्य । २काकमाचिकाफले मेदि । ३ग्रहणविशेषे यथा गारुडे । "सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहस्तथा । चूडामणिरयं योगस्तत्रानन्त फल स्मृतम् । अन्यस्माद् ग्रहणात् कोटिगुणमत्र फलं लभेत्"

चूडारत्न न॰ चूडायामर्प्यरत्नम् । इत्यास्ते राजनि॰ ।

चूडार लि॰चूडामृच्छति ऋ-अण् । चूडागते ततः । भगद्या॰ चतुरर्थ्यां अत्र । चौडार्य तत्रिवृत्तादौ लि॰ ।

चूडारक लि॰ चूडामृच्छति ऋ-ण्वुल्, चूडा+आ॰ धारके वा । १चूडायुक्ते २ऋषिभेदे पु॰ तस्य गोत्रापत्यम् इञ् । चौडारकि तद्गोत्रापत्ये पुंस्त्री । बहुत्वे तु इञो लुक् च इञो लुक् । चूडारकाः तद्गोत्रापत्येषु ब॰व॰ ।

चूडारत्न न॰ चूडाया रत्नम् । चूडामणौ हेमच॰ ।

चूडाल लि॰ चूडा अस्त्यस्य प्राणिस्थत्वात् ल । चूडायुक्ते "चूडालाः कर्णिकालाश्च मध्वाश्च पिठरोदरा" भा॰ सौ॰ ७अ॰ । २मस्तके न॰ शब्दरत्ना॰ । ३उच्चटातृणे स्त्री अमर ४श्वेतगुञ्जायां ५नागरमुस्तायां च राजनि॰ ।

चूडावत् लि॰ चूडा अस्त्यर्थे मतुप् मस्य व । चूडाविशिष्टे मत्वे इनि । चूडिन् तत्रार्थे पुरोहिता-दिगणे चूडिक इति निर्देशात् पक्षे ठनपि । चूडिक तत्रार्थे । ततः पुरोहिता॰ भावादौ यक् । चौडिक्य चूडाविशिष्टत्वे न॰ । [चूयात् स ।

चूण सङ्कोचे चुरा॰ उभ॰ सक॰ सेट् । चूणयति ते अचु-

चूत पु॰ चूष-क्त चोतति रसम् चुत-अच् वा पृषो॰ । १आम्रे अमर "नवचूतप्रसवोद्गमित्युति" "चूताङ्कु-राखादकषायकण्ठ" । "सहचरमधुहस्तन्यस्तचूता-ङ्कुरास्त्रः कुमारः । च्यु-क्त पृषो॰ । २गुह्यद्वारे न॰ । स्वार्थे क । चूतक आम्रे कूपके च ।

चूर दाहे दिवा॰ आत्म॰ सक॰ सेट् । चूर्य्यते अचूरिष्ट । चुचूरे ईदित् चूर्णः । [इस्वस् ।

चूरु पु॰ चूर-उण् । ऋषिभेदे सुश्रु॰ ऋषिशब्दे २१८४पृ॰

चूर्ण पेषे चु॰ उभ॰ सक॰ सेट् । चूर्णयति ते अचु चूर्णत् त । चूर्णः चूर्णित

चूर्ण न॰ चूर्ण-कर्म्मणि अच् । १पेषणजाते क्षोदे (गयदा) प्रभृतौ राजनि॰ "अष्टादष्टगुण चूर्णं चूर्णादष्टगुण पयः" वैद्य॰ । तल्लक्षणमुक्तं भावप्र॰ "अत्यन्तशुष्क तद्द्रव्य सुपिष्ट वस्त्रगालितम् । तत् स्याच्चूर्णं रजः॰ क्षोदस्तन्नाम्ना कथितस्मृता । चूर्णे गुड समो देय शर्करा॰ द्विगुणा मता । चूर्णे तु भर्जितं हिङ्गु देयं नो-त्क्लेदकृद्भवेत् । लिह्याच्चूर्णं द्रवैः सर्पिस्तद्यौर्हिगुणो-न्मितैः । पिबेच्चतुर्गुणैरेव चूर्णमालोडित द्रवैः । चूर्णावलेहगुटिका कल्कानामनुपानकम् । पित्तवात कफातङ्के त्रिद्व्येकपलमाहरेदिति" (आबीर) २क्षारे । क्षोदे "अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृत" रघुः । ३धूलौ तत्कृतोपकरणे ४क्षारे (चूण) मेदि॰ । "चूर्ण-मानीयतां तूर्णं पूर्णचन्द्रनिभानने । पर्णानि स्वर्णवर्णानि शीर्णशाकर्णलोचने" उद्भटः । भावे अच् ५पेषणे पु॰

चूर्णक न० चूर्ण+स्वार्थे क। १चूर्णने २चूर्णशब्दार्थे ३पद्यभेदे न० तल्लक्षणादिकं छन्दो०उक्तं यथा "अपादः पदसन्तानोगद्यं तत्तु त्रिधा मतम्। चूर्णकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः" "अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः। तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरम् भवेत्" ३सक्तौ (छातु) पु० त्रिका०।

चूर्णकार त्रि० चूर्णं करोति कृ–अण् उप० स०। पेषणकारके। (चूण) इति पदार्थनिष्पादके (चूनारी) इति ख्याते २सङ्कीर्णजातिभेदे पु स्त्री०। स च नटकन्यायां पुण्ड्रकाज्जात इत्याह पराशरः।

चूर्णकुन्तल पु० चूर्ण्यते इति चूर्णः कर्म०। शिरस्थे क्षुद्रकेशे अलके अमरः। [ख्याते कर्करे हारा०।

चूर्णखण्ड न० चूर्णस्य तदर्थं खण्डम्। (काँकरघूटिङ्)

चूर्णपारद पु० चूर्णं पारदस्य एकदेशिस०। पारदश्वेतभूते चूर्णरूपे हिङ्गुले राजनि०। [शाके राजनि०।

चूर्णशाकाङ्क पु० चूर्णं इव शाकं अङ्को यस्य। गौरसुवर्ण-

चूर्णादि न० अप्राणिषष्ठ्यन्तात् परस्य आद्युदात्ततानिमित्ते शब्दगणे स च पा० ग० स्० उक्तो यथा "चूर्ण करिव करिप शाकिन शाकट द्राक्षा तूस्त कुन्दुम दलप चमसी चक्कन चौल। "चूर्णादीनामप्राणिषष्ठ्याः" पा०। सक्तुचूर्णम्।

चूर्णि(र्णी) स्त्री अशेषविदुषां तर्कं चूर्णयति चूर्ण–इन्। पतञ्जलिकृते महाभाष्ये "चूर्णिभागुरियाभटा" व्या० का०। २कपर्दकशते सि० कौ० ३कार्षापणे पुराण परिमितकपर्दके "अशीत्युत्तरपरिमितधेनुशत देय तदशक्तौ चत्वारि शतपुराणोत्तरचूर्णीशतपञ्चकम्" प्रा० वि०। भावे इन्। ४चूर्णने स्त्री वा ङीप्।

चूर्णिदासी स्त्री चूर्णौ चूर्णने नियुक्ता दासी शा० त०। पेषणनियुक्तायां दास्यां शब्दार्थचि०।

चूर्णिका स्त्री चूर्णं चूर्णमस्त्यस्याः ठन्। सक्तुषु शब्दार्थचि०

चूर्णिकृत् पु० चूर्णिं महाभाष्यं करोति कृ–क्विप्। महाभाष्यकारके पतञ्जलिमुनौ। [त्रि० कौ०।

चूर्णिन् त्रि० चूर्णं सस्त्यस्य इनि। चूर्णसहिते अपूपादौ

चूर्त्ति स्त्री चर–भावे क्तिन् अत उत्त्वम्। चरणे

चूल पु० चुल–क पृषो० दीर्घ। केशे अमर०। "सुतस्नेयाच चूलिनः" शिशुपा०। "शिखिन चूलिनश्चैव तथा कुण्डलभूषणम्" हरिवं० ४५ अ०। "गृहीतचूलको विनोदीन्द्रक्रमेण रणकारिता" भट्टाग०।

चूला स्त्री चूडा+डस्य लः। गृहोपरिस्थिते चन्द्रशालायां (चिलेघर) शब्दार्थचि० २चूडायाञ्च। तस्या इदम् अण्। चौल चूडासम्बन्धिनि संस्कारभेदे चूडाशब्दे दृश्यम्।

चूलिक न० घृतभ्रष्टसमितायाम् (लुचि) शब्दार्थ०।

चूलिका स्त्री चुल समुच्छ्राये ण्वुल् पृषो० दीर्घः। १हस्तिकर्णमूले, २नाटकाङ्गभेदे च "अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ। चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि" सा० द०। अर्थोपक्षेप नाटकाङ्गानि विभज्य "अन्तर्जवनिकासंस्थैः सूचनाऽर्थस्य चूलिका" इति लक्षितम्। यथा वीरचरिते चतुर्थाङ्कस्यादौ "भो भो वैमानिकाः प्रवर्त्तन्तां रङ्गमङ्गलानी-त्यादि" रामेण परशुरामोजित इति नेपथ्ये पात्रैः सूचितम्। "अंशुलताजालजटिलचूलिकानाम्" काद०।

चूष पाने (चोषा) भ्वा० पर० सक० सेट्। चूषति। अचूषीत्। चुचूष। चूषत्रम्

चूषा स्त्री चूष्यते पीयते पृष्ठमांसेनाऽर्धाग्रता नीयते चूष–घञर्थे क। १हस्तिमध्यबन्धनरज्ज्वाम् कक्षायाम् अमर भावे अङ्। २चूषणे स्त्री

चूष्य त्रि० चूष–कर्मणि ण्यत्। जिह्वोष्ठाभ्याम्, संयोगभेदेन पेये आहारशब्दे चर्व्यशब्दे च दृश्यम्। "प्राप्निर्भक्ष्यभोज्यलेह्यपेयचूष्याभ्यवहार्याणाम्" भा० आ० १६१अ०।

चृत हिंसे ग्रन्थने च तुदा० सक० सेट्। चृतति अचर्तीत् चचर्त्त। चर्तिष्यति चर्त्स्यति।

चृत(प) संदीपने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। चर्त्त(र्त)यति ते। अचीचृत(र्त)त्-त अचचर्त्त(र्त)त् त। पक्षे चर्त्त(र्त)ति अचर्त्तीत्(र्तीत्)।

चेकित त्रि० कित–यङ् लुकि अच्। १अतिशयपापसदानाभ्यां युक्ते। २ऋषिभेदे पु तस्य गोत्रापत्यं गर्गा० यञ्। चैकित्य तद्गोत्रापत्ये पुं स्त्री०।

चेकितान त्रि० कित–यङ्लुकि ताच्छील्ये चानश्। १अत्यन्तज्ञानयुक्ते २महादेवे पु० "रुद्रमीशानमृषभं शिवं शम्भुं कपर्द्दिनम्। चेकितान परं योनिं तिष्ठतो गच्छतश्च ह" भा० द्रो० २०१अ०। ३नृपभेदे। "धृष्टद्युम्नश्चेकितानः काशीराजश्च वीर्यवान्" गीता।

चेट(ड) पु० चिट–परप्रैष्ये अच् वा टस्य डः। १दासे हेमच०। स्त्रियाम् उभयत्र ङीप्। २दास्याम्। ण्वुल् चेटक १दासे अमरः। उपपतिनायके २सन्धान-दक्षे रसम०। स्त्रियां चेटि(डि)का। "शृङ्गारस

मान । "गन्तुं नैव हि न शक्नोमि दृश्यमानापि चेष्ट विरम्" भट्टा०। "अत सत्त्व तान् योद्धुमभिचेष्ट राघवौ" भट्टिः "दृष्टचेष्टितमविद्" रघु । "आसो शेते चेष्टतेऽनितिष्ठति परिधावति" भाग० ५।२६। "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्" मनु । "चेष्टमानमनेऽखिलम्" मनुः । "तद्देव विहितं यन्न तथा चेष्टयिसुर्वेयं" भा० शा० ११४० ।

चेष्टक त्रि० चेष्ट–ण्वुल् । १चेष्टान्विते । २रतिबन्धभेदे पु० । "पादमेकं हृदि न्यस्य द्वितीयेन च चेष्टयेत् । कान्तक्रोडे स्थिता नारी बन्धोऽयं चेष्टकोमत" स्मरदीपिका ।

चेष्टा स्त्री चेष्ट–अङ् । "आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः । कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत्क्रिया" इत्युक्ते कृतिजन्ये क्रियासाधने कायिके व्यापारे । "चेष्टावदन्त्यावयविस्त्वं शरीरत्वम्" सि०मु० । "आकारैरिङ्गितैर्गत्या भावयेद्विङ्गभिर्भिरन्तर्गतं न्नृणाम् । स्वरवर्णेङ्गिताकारै श्चक्षुषा चेष्टितेन च । आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मन" मनु "चेष्टा हस्तास्फालनादि" कुल्लू० । "चेष्टाभोजन वाग्रोधे नेत्रादिप्रतिभेदने" याज्ञ० । "वायोस्तु स्पर्शम चेष्टां व्यूहन रौक्ष्यमेव च" याज्ञवल्क्येन तस्य वायुकार्य-त्वमुक्तम् ।

चेष्टानाश पु० चेष्टाया नाशोऽत्र । प्रलयकाले राजनि० ।

चेष्टावल न० ज्योतिषोक्ते ग्रहाणां बलभेदे तच्च वृहज्जा० उक्तं यथा

"उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः । विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः" वृ० जा० ।

"अधुना चेष्टाबलं दीपकेनाह उदगयने इति मकरादि राशिषट्कमुत्तरायणं कर्कटादिषट्कं दक्षिणायन-मिति । उदगयने उत्तरायणे रविशीतमयूखौ सूर्य-चन्द्रमसौ बलिनौ भवत । परिशेषाः भौमबुधगुरु-सितसौरा वक्रगाः विपरीतगतयो बलिनो भवन्ति तथा समागमगाश्चन्द्रेण सहिताः बलिन एव चन्द्रेण सयोगोग्रहाणां समागमसंज्ञस्य रविणा सहास्तमयो भौमादीनां परस्परं युद्धम् । उक्तञ्चाचार्यविष्णुचन्द्रेण "दिवसकरेणास्तमय समागमः शीतरश्मिसहितानाम् । कुजतादीनां युद्धमुनिगद्यतेऽन्योन्ययुक्तानामिति" विपु लकरा इति विपुला, करा येषां ते विपुलकरा,

विस्तीर्णरश्मयो बलिनो भवन्ति शीघ्रकेन्द्रे द्वितीय-तृतीयपदस्थे ग्रहस्य विपुलकरत्वं प्रायः सम्भवति वक्रासन्नत्वात् युधि संग्रामे चोत्तरसंस्था बलिन एव । कुजादीनां युद्धमित्युक्तम् तत्र य उत्तरदिग्भाग संस्थितो जयी स च बलवान् उत्तरसंस्थत्वमतोपलक्ष-णार्थम् । यश्चजयी स एव बलवान् । तल्लैतल्लक्ष्य लक्षणम् "दक्षिणदिक्स्थः परुषोवेपथुरप्राप्य संनिकृष्ट-तनु । अधिरूढोविकृतोनिःप्रभो विवर्णश्च यः स जितः । उक्तविपरीतलक्षणसम्पन्नो जयगतो विनिर्दिष्ट । विपुल स्निग्धोद्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्त" इति एतच्चोक्तस्य प्राय सम्भवति यस्मात्त्विषाचार्यः "सर्वे जयिन उदक्स्था दक्षिणदिक्स्थो जयी शुक्र" इति एतच्चेष्टाबलम् । एषामन्यतमेन संयुक्तश्चेष्टाबलयुक्तो भवति" भट्टोत्पलः ।

चेष्टित त्रि० चेष्ट–कर्त्तरि क्त । १चेष्टायुक्ते । भावे क्त २गतौ ३कायादिव्यापारे च न० मेदि० चेष्टाशब्दे उदा० ।

चैकितन पुंस्त्री चेकितस्य गोत्रापत्यम् । गर्गा० यञ् । चैकितयनौ तत्रापत्ये तस्य छात्त्रः कण्वा० अण् यञोप । चैकित तच्छात्रे ।

चैकित्सित पु स्त्री चिकित्सितस्यापत्यम् गर्गा० यञ् । चिकित्सितस्यापत्ये तत· कण्वा० छात्त्रे अण् । चैकित्-सित । तच्छात्त्रे । [स्त्रियां अणन्तत्वात् ङीप् ।

चैकीर्षित त्रि० चिकीर्षित एव प्रज्ञा० अण् । चिकीर्षिते

चैटयत त्रि० चेट इव यतते यत–अच् ततः स्वार्थे अण् । चेटतुल्ययत्नशीले तस्यापत्यं तिका० फिञ् । चैटय तायनि तदपत्ये पु स्त्री । स्त्रियां क्रोड्या० ष्यङ् । चैटयत्या । चैटयतानां विषयः भौरिक्या० विधल् । चैटयतविध तद्विषये न० ।

चैतन्य न० चेतन एव, चेतनस्य भावो वा ष्यञ् । वेदा-न्तिमते चित्स्वरूपे १परमात्मनि न्यायादिमते २आत्मधर्मे चेतनायाम् । "चैतन्यमात्मनोविद्याच्च बिभेति कुतश्चन" श्रुति वेदान्तिमते राहोः शिर इतिवद्भ अभेदे षष्ठी, अन्यमते भेदे । "शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः" भाषा० ३प्रकृतौ मेदि० । "प्रकृतिश्च दृष्टान्तानुपरोधात्" शा० सू० चैतन्यस्य जगत्प्रकृतित्वाङ्गीकारेण तथा-त्वम् । "चैतन्य परमाणूनां प्रधानस्यापि नेष्यते । ज्ञानक्रिये जगत्कर्त्र्यौ दृश्येते चेतनाश्रये" वेदा-न्तका० । चेतन एव स्वार्थे ष्यञ् । ४परलोकगमनेऽर्थजाते

मध्याया विटचेटविदूषकाद्याः स्युः"। "उत्तमा पीठमर्द्याद्याः मध्यौ विटविदूषकौ तथा। शकारचेटाद्या अधमा परिकीर्त्तिता" सा० द०। "ताम्बूलाक्तं दशनमसकृद् दर्शयन्तीह चेटी" सा० द०।

**चेत्** अव्य० चित–विच्। १यद्यर्थे २पक्षान्तरे, अमर ३असन्देहेऽपि सन्दिग्धतया कथने च शब्दार्थचि०। "सत्यं चेत् गुरुवाक्यमेव पितरो देवाश्च चेत् योगिनी प्रीता चेत् परदेवता च यदि चेत् वेदाः प्रमाणं हि चेत्। शास्त्रीयं यदि दर्शनं भवति चेदाम्नायबोधास्ति चेत् स्वातन्त्र्या अपि कौलिकाश्च यदि चेत् स्याम्ने जय सर्वदा" तन्त्रम्। "चेत्कण्ठके पणफरे तु यदा समस्ता" नीलक० ता०। अधिक (चेट्) शब्दे दृश्यम्

**चेतकी** स्त्री चेतयति उन्मीलयति बुद्धिमलेन्द्रियाणि चित–णिच् ण्वुल् गौरा० ङीप्। १हरीतक्याम् अमर। तस्या उत्पत्तिभेदादिक भावप्र० उक्तं यथा "पपात बिन्दुर्मेदिन्यां शक्रस्य पिबतोऽमृतम्। ततो दिव्या समुत्पन्ना सप्तजातिर्हरीतकी। हरीतक्यभया पथ्या कायस्था पूतनाऽमृता। हैमवत्यव्यथा चापि चेतकी श्रेयसी शिवा। वयस्था विजया चापि जीवन्ती रोहिणीति च। विजया रोहिणी चैव पूतना चामृताऽभया। जीवन्ती चेति पथ्याया विज्ञेया सप्त जातयः। अलाबुवृत्ता विजया १वृत्ता सा रोहिणी २स्मृता। ३पूतनास्थिमती सूक्ष्मा कथिता मांसलाऽमृता४। पञ्चरेखाऽभया५ प्रोक्ता जीवन्ती स्वर्णवर्णिनी६। त्रिरेखा चेतकी७ ज्ञेया सप्तानामियमाकृतिः। विजया सर्वरोगेषु रोहिणी व्रणरोहिणी। प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता। अक्षिरोगेऽभया शस्ता जीवन्ती सर्वरोगहृत्। चूर्णार्थे चेतकी शस्ता यथायोगं प्रयोजयेत्। चेतकी द्विविधा प्रोक्ता श्वेता कृष्णा च वर्णतः। षडङ्गुलायता शुक्ला, कृष्णा त्वेकाङ्गुला स्मृता। [illegible] काचिद् गन्धेन भेदयेत्। काचित् [illegible] भेदयेच्छिवा। चेतकी पाद [illegible] नरः। सिद्धान्ते तद्वशादेव [illegible] चेतकी तु धृता हस्ते यावत् [illegible] प्रभावात्तावत् सयत। [illegible] देवदारुवाम्। चेतकी [illegible]। सप्तानामपि जा [illegible] हस्तदोषा सवमा सर्वरोगेषु शस्यते। हरीतकी पञ्चरसा लवणा तु [illegible] परम्। रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी। चक्षुष्या लघुरायुष्या बृंहणी चानुलोमिनी। श्वासकासप्रमेहार्शःकुष्ठशोथोदरक्रिमीन्। वैस्वर्य्यग्रहणीरोगविबन्धविषमज्वरान्। गुल्माध्मानतृषाच्छर्दिहिक्काकण्डूहृदामयान्। कामलां शूलमानाहं प्लीहानञ्च यकृत्तथा। अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातञ्च नाशयेत्। स्वादुतिक्तकषायत्वात्पित्तहृत्कफहृत् तु सा। कटुतिक्तकषायत्वादम्लत्वाद्वातहृच्छिवा। पित्तकृत्कटुकाम्लत्वाद्वातकृन्न कथं शिवा। प्रभावाद्दोषहन्तृत्वं सिद्धं यत्तत् प्रकाश्यते। हेतुभिः शिष्यबोधार्थं न पूर्वं क्रियतेऽधुना। कर्म्मान्यत्व गुणैः साम्यं दृष्टमाश्रयभेदतः। यतस्ततो नेति चिन्त्यं धात्रीलकुचयोर्यथा। पथ्याया मज्जनि स्वादुः स्नाय्वाम्लो व्यवस्थितः। वृन्ते तिक्तस्त्वचि कटुरस्थिस्थस्तुवरो रसः। नवा स्निग्धा घनावृत्ता गुर्वी क्षिप्ता च याम्भसि। निमज्जेत् सा प्रशस्ता च कथितातिगुणप्रदा। नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता। हरीतक्याः फले यत्र द्वयं तच्छ्रेष्ठमुच्यते। चर्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी। स्विन्ना संग्राहिणी पथ्या भृष्टा प्रोक्ता त्रिदोषनुत्। उन्मीलिनी बुद्धिबलेन्द्रियाणां निर्मूलिनी पित्तकफानिलानाम्। विस्रंसिनी मूत्रशकृन्मलानां हरीतकी स्यात् सह भोजनेन। अन्नपानकृतान् दोषान् वातपित्तकफोद्भवान्। हरीतकी हरत्याशु भुक्तस्योपरि योजिता। लवणेन कफं हन्ति पित्तं हन्ति सशर्करा। घृतेन वातजान् रोगान् सर्वरोगान् गुडान्विता। सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात्। वर्षादिष्वभया प्राश्या रसायनगुणैषिणा। अध्वातिखिन्नो बलवर्जितश्च रूक्षः कृशो लङ्घनकर्शितश्च। पित्ताधिको गर्भवती च नारी विमुक्तरक्तस्त्वभयां न खादेत्"। तस्याः फलम् अण् हरीतक्या० तस्य लुप् लुपि व्यक्तिवचनत्वम्। २तत्फलेऽपि स्त्री। ३जातिपुष्पे राजनि०।

**चेतन** पु० चित–ल्यु। १आत्मनि जीवे २परमेश्वरे हेमच०। ३मनुष्ये राजनि०। ४प्राणिमात्रे अमरः। ५प्राज्ञमात्रे त्रि० मेदि०। "उन्मादयापरिच्छेदश्चेतनाचेतनेषु" च सा० द०। "चेतनं पुष्कर कोषैः क्षुधाघ्रातैः समन्ततः" हरिवं० ६७अ। तस्य भावः ष्यञ् चैतन्य न०। त्व चेतनत्व न० तल् चेतनता स्त्री चेतनायाम् "शरीरस्य न चैतन्यम्" भाषा० "चैतन्यमात्मनो विद्यात्" श्रुतिः।

**चेतनकी** पु० चेतनं करोति क ड गौ० ङीप्। हरीतक्याम् राजनि० ।

**चेतना** स्त्री ष्ट० चित–युच्। १बुद्धौ २ज्ञाने ३चैतन्ये चिति स्वरूपज्ञानव्यञ्जिकायाः प्रमाणासाधारणकारणिकायाः ४चित्तवृत्तौ "चेतनानामधिष्ठानं मनोदेहश्च सेन्द्रियः। केशलोमनखाग्रान्तमलद्रव्यगुणैर्विना" शब्दार्थचि० धृतवाक्ये केशादिव्यतिरिक्तस्यैव देहस्य चेतनाव्यञ्जकत्वमुक्तम्। गर्भस्थस्य सप्तमे मासि चैतन्ययोगं यथाह याज्ञ० "मनश्चैतन्ययुक्तोऽसौ नाडीस्नायुशिरायुतः। सप्तमे, चाष्टमे चैव त्वङ्मांसस्मृतिमानपि" असौ पूर्व्वोक्तो गर्भः सप्तमे मासि मनसा चेतनया च युक्तः" मिता०। "निमेषश्चेतना यत्न आदानं पाञ्चभौतिकम्" याज्ञ० "षष्ठस्तु चेतना धातुर्मन इत्यभिधीयते" भा० व० २०९ अ०। [जनि०। २ज्ञेये त्रि०।

**चेतनीया** स्त्री चेतनायै हिता छ। १ऋद्धिनामौषधे रा-

**चेतस्** न० चित–करणे असुन्। १चित्ते अमरः "चेतो नलं कामयते मदीयम्" "चेतोजन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्" नैष० "गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः" शकु०। २चित्तवृत्तौ निघ०। चित्तवृत्तेः साङ्ख्यमते पौरुषेयबोधकरणत्वात् तथात्वम्। ३कर्त्तरि असुन्। ३ज्ञातरि त्रि०। भावेऽसुन्। ४चैतन्ये ५प्रज्ञायाम् न०।

**चेतिष्ठ** त्रि० अतिशयेन चेतयिता इष्ठन् तृणो लोपे तन्निमित्तकेटो निवृत्तिः णिलोपश्च। अतिशयचेतयितरि "क्रत्वा चेतिष्ठो विशामुषर्भुत्" ऋ० १।६५।५। "चेतिष्ठोऽतिशयेन चेतयिता" भा०। "वसुश्चेतिष्ठो वसुधातमश्च" यजु० २७।१५।

**चेतोऽंशु** पु० चेतसश्चैतन्यस्यांशुरिव जीवे रवेरिव चिदात्मकस्य पुरुषस्य चेतोरूपा जलार्कसमाः प्रायशैजसबिम्बभेदेन देवतिर्य्यगादिदेहभेदेषु विभाव्यमाना इति वेदान्तप्रकरणोक्तेस्तस्य तथात्वम्

**चेतोजन्मन्** पु० चेतसि जन्मास्य। मनोभवे कन्दर्पे "चेतोजन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्" नैष०। चेतोभवादयोऽप्यत्र।

**चेतोमत्** त्रि० चेतस्+अस्त्यर्थे मतुप् बा० न मस्य वः। १चेतोयुक्ते २चैतन्ययुक्ते। "चेतोमन्ति च सर्वाणि भूतानीह भारत।" भा० व०।

**चेतोमुख** पु० चेतोमुखं द्वारं यस्य। चैतन्यदीप्ते प्राज्ञे "आनन्दभुक् चेतोमुखः प्राज्ञः" इति श्रुतिः। चेतसो सुखत्वञ्च चेतःकारणाज्ञानवृत्तिमुखत्वात्।

**चेत्तृ** त्रि० चित–अन्तर्भूतण्यर्थे ताच्छील्ये तृन् वेदे नि० इडभावः। ज्ञापयितरि। "स चेत्ता देवता पदम्" ऋ० १।२२।५। "चेत्ता ज्ञापयिता" भा० प्रक्रिया उक्तरूपैव

**चेत्य** त्रि० चित–कर्म्मणि ण्यत्। ज्ञेये। "न त्राता चरणे चेत्यः" ऋ० ६।१।५। "चेत्येन हृदयं चैत्त्यं क्षेत्रज्ञः प्राविशद्यदा" भाग० ३।२६।५अ०।

**चेदि** पु० देशभेदे सोऽभिजनोऽस्य अण् तद्राजाणश्च बहुत्वे लुक्। २तद्देशवासिषु ३तन्नृपेषु च ब० व०। "चेदिमत्स्यकरूषाश्च भोजाः सिन्धुकुलिन्दकाः" भा० भी० ९अ० जनपदोक्तौ। स च देशः शुक्तिमतीनदीतीरस्थः उपरिचरशब्दे ११२०पृ०। दृश्यम्। चेदि+स्वार्थे क। चेदिदेशे बृ० सं० १४अ० कूर्म्मविभागे अथ पूर्व्वस्यामित्युपक्रमे "शौलिकविदर्भवत्साम्ब चेदिकाश्चोर्द्ध्वकण्ठाश्च"।

**चेदिपति** पु० ६त०। १उपरिचरनामके वसुभेदे उपरिचरशब्दे ११२९पृ० दृश्यम्। २दमघोषसुते शिशुपाले च। "एवं तेषु निवृत्तेषु क्षत्रियेषु समन्ततः। चेदीनामधिपोऽधावत् बलवानन्तकोपमः। दमघोषसुतो वीरः शिशुपालो महीपतिः" भा० आ० १८७अ०। चेदिपादयोऽप्यत्र "वसुपूर्णा च वसुधा वस चेदिषु चेदिप।" भा० अ० १०६अ०।

**चेदिराज्** पु० चेदिषु राजते राज–क्विप्। चेदिपतौ १उपरिचरवसौ २शिशुपाले च त्रिका०। "मा वेदि यदसावेको जेतव्यश्चेदिराडिति" माघः।

**चेदिराज** पु० चेदीनां राजा टच् समा०। उपरिचराख्ये वसौ। तस्य भूमिविवरगतिकथादि भा० शा० ३३९अ०। "अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान्। स च छागोऽप्यजो ज्ञेयो नान्यः पशुरिति स्थितिः। ऋषय ऊचुः। बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः। अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ। नैष धर्म्मः सतां देवा। यत्र वध्येत वै पशुः। इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः। भीष्म उवाच। तेषां संवदतामेवमृषीणां विबुधैः सह। मार्गागतो नृपश्रेष्ठस्तं देशं प्राप्तवान् वसुः। अन्तरीक्षचरः श्रीमान् समग्रबलवाहनः। तं दृष्ट्वा सहसा यान्तं वसुं ते त्वन्तरीक्षगम्।

हितायाग्ने बलिं हरेत्” स्मृ०। “यदि धन्वन्तरि चैत्यो भवति तदा प्रद्यायकम्नि त्वन्तरा पुरोहिता- याग्ने बलिं हरेत् पुरोहिताय नम इति ततो धन्वन्तरये नम इति। धन्वन्तरौ विदेशस्थे त्वय विशेषः धन्वन्तरेश्च पुरोहितस्य चैक पिण्डः द्वितीयो दूतस्य”। ना० स्मृ०।

**चैत्यविहार** पु० चैत्यस्येव विहारोऽत्र। जिनसद्मे हेम०।

**चैत्र** न० चित्र–इण् चित्रमेव स्वार्थे अण् वा। १देवकुले (देउल) २मृते मेदि० ३बुद्धभिक्षुके पु० ४पर्वतभेदे पु० त्रिका० कुलपर्वतशब्दे २१२१पृ० दर्शिते विष्णुपु०वाक्ये “गोमेदश्चैव चन्द्रश्च्यत्र चैत्र इति पाठान्तरदर्शनात् त्रिकाण्डोक्तिः समञ्जसा। चित्रायां भवः अण्। बुधस्य कलत्रभेदचित्राबागर्भजे ५बुधपुत्रभेदे पु० ब्रह्मवै० पा० ख०। चित्रानक्षत्रयुक्ता पौर्णमासी अण् ङीप् चैत्री साऽस्मिन् मासे पुनरण्। चित्रानक्षत्रयुक्तपौर्णमासी युक्ते तदुपलक्षिते वा ६चान्द्रे मासि वार्हस्पत्ये ७वर्षभेदे ८तथाभूते चान्द्रमासे मीनस्थरविके ९सौरचैत्रे च कार्त्तिकशब्दे १९४८पृ० दृश्यम्। चित्रायां भवः अण्। १०चित्रानक्षत्रजाते त्रि० स्त्रियान्तु तस्याणो लुक्। चित्रा चित्राजातायां स्त्रियां स्त्री चित्राशब्दे दृश्यम्। स्वार्थे क तत्रार्थे शब्दरत्ना०। “फाल्गुनं वाथ चैत्रं वा मास प्रति यथाबलम्” मनुः। “मीनादिस्थो रविर्येषा- मारम्भः प्रथमक्षणे। भवेत् तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादशः स्मृता” व्यासः “चैत्रे मदोन्मादिनी” उद्भा०त०।

**चैत्ररथ** न० चित्ररथेन गन्धर्वेण निर्वृत्तम् अण्। १कुवेरस्योद्याने अमर०। “वभौ वकुलनाकीर्णं वनं चैत्ररथं यथा” हरिव० २२४अ०। “एकोययौ चैत्ररथप्रदेशान्” रघुः २मुनिभेदे पु० “आविक्षितमभिष्यन्तं तथा चैत्ररथं मुनिम्” भा० आ० ४४अ०। चैत्ररथे शशविन्दोरपत्यम् स्त्री अण् ङीप्। ११शशविन्दोः सुतायां स्त्री “मान्धातुर्यवनाश्वस्य त्रिलोकीविजयी सुतः। तस्य चैत्ररथी भार्य्या शशविन्दोः सुताऽभवत्” हरिव०१२अ०। चित्ररथ गन्धर्वमधिकृत्य कृतोग्रन्थः अण्। १२भारतपर्व्वान्तर्गतेऽवान्तरपर्वभेदे न० चित्ररथशब्दे दृश्यम्। “तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयंवरम्” भा० आ० १०अ० अवान्तरपर्वोक्तौ।

**चैत्ररथि** पु० चित्ररथस्य उपहुपुत्रस्यापत्यम् अञ्। उपहुपुत्र चित्ररथस्यापत्ये शशविन्दौ अपि “तत प्रकृतिमिच्छन् वै उपहुःकोऽप्यप्रभात्मजम्। जज्ञे चित्ररथस्तस्य पुत्र॰ कर्म्मभिरन्वित। आसीत् चैत्ररथिर्वीरो यज्वा विपुल दक्षिण। शशविन्दुः पर स्मृत राजर्षीणां समन्वित” हरिव० ३७अ०।

**चैत्ररथ्य** न० चैत्ररथमेव स्वार्थे ष्यञ्। चैत्ररथवने “मानसे चैत्ररथ्ये च स रेमे रामया रत” भाग०३।१।२८अ०।

**चैत्रमख** पु० चैत्रे कर्त्तव्यो मख इव महोत्सवः। चैत्रमासे मदनत्रयोदश्यादिकर्त्तव्ये वसन्तोत्सवे हेमच०।

**चैत्रायण** पुंस्त्री चित्रस्य गोत्रापत्यम् नडा०फक्। १चित्रस्य गोत्रापत्ये। चित्रेण निर्वृत्तादि पक्षा० फक्। २चित्र- निर्वृत्तादौ त्रि०।

**चैत्रावली** स्त्री चैत्रे आवलि सम्यक् वलिरत्र ङीप्। चैत्रपौर्णमास्यां त्रिका०। “चैत्रामस्याः परेऽपि या” ति० त०। “चैत्रावली मदनत्रयोदशीत्यपरे तस्यामेव मदनपूजाविधानात्तस्यास्तथात्वम्।

**चैत्रिक** पु० चित्रानक्षत्रयुक्ता पौर्णमासी साऽस्मिन् मासे पक्षे ठक्। चैत्रमासे अमरः।

**चैत्रिन्** पु० चैत्री विद्यतेऽस्मिन् व्रीह्या० इनि। चैत्रमासे राजनि०। तत्र चैत्रिरित्यपि तत्र वा० इञ्।

**चैत्री** स्त्री चित्रानक्षत्रयुक्ता पौर्णमासी अण् ङीप्। चित्रानक्षत्रयुक्तायां पौर्णमास्यां सा हि चैत्रमासे एव भवति योग्यत्वात् कार्त्तिकशब्दे १९४८ पृ० दृश्यम् “चैत्र्यां हि पौर्णमास्यां तु तव दीक्षा भविष्यति” भा० आश्व० ७२अ०। “चैत्र्यां वा मार्गशीर्ष्यां वा सेना- योगः प्रशस्यते” भा० शा० १००अ०।

**चैदिक** पु स्त्रि० चेदिदेशे भवः काश्या० ठञ् ञिठ् वा इदित्। चेदिदेशभवे स्त्रियां तु ठञि ङीप् ञिठि–टाप्।

**चैद्य** पु० चेदीनां जनपदानां राजा ष्यञ्। १शिशुपाले। “क्रुद्धस्य चैद्यं प्रति” “त्वया विप्रकृतश्चैद्य” माघः।

**चैन्तित** पुस्त्री० चिन्तितायाः तन्नामिकायाः स्त्रिया अपत्यम् “अव्यक्तग्राम्यो नदीमानुषीभ्यस्तन्नामिकाभ्य” पा० अण्। चिन्तितानामिकायाः स्त्रिया अपत्ये। चिन्तायुक्तायाः स्त्रिया अपत्ये तु ढक्। चैन्तितेय इत्येव।

**चैल** त्रि० चेलस्येदम् अण् १वस्त्रसम्बन्धिनि स्वार्थे अण्। २चेले वस्त्रे चे(चै)लाक्नशब्दे दृश्यम्। “चैलकम्बलवेश्मानि विचित्राणि महान्ति च” भा० आ० १२८अ०। “प्रदीप्तमिव चैलान्तं कक्षं देशं न सन्त्यजेत्” भा० शा० २८१अ०।

**चैलकि** पु० चेलकस्यर्षेरपत्यम् इञ्। जीवलनामर्षौ “तद-

चिह्ने इच्छाभावात् प्रसक्तस्य लिङ्गत्वेन इष्टसाधनत्वाभावात् वेदप्रतिपाद्यत्वेऽपि नातिव्याप्तिरिति बोध्यम्। ५चोदनाविषये यागादिप्रयत्ने च। "एकं वा संयोगरूपचोदनाऽऽख्याऽविशेषात्" जै॰ सू॰। "कर्म्मैक्यप्रतिपादकाः संयोगरूपचोदनाख्याख्याः पदार्थास्तेषामविशेषादैक्यम्। "तत्र चोदना प्रवर्त्तकं वचः चोदितप्रयत्नो वा" रत्नप्रभा। [ङः। कन्दुके त्रिका॰।

चोदनागुड पु॰ चोदनया नोदनया गुड्यते गुड–क रक्षे

चोद्य न॰ चुद्–ण्यत्। १प्रश्ने २पूर्वपक्षे च अमरः ताभ्यां हि उत्तरदानाय प्रवर्त्तनात् तयोस्तथात्वम्। "चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया। अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम्" वेदान्तका॰। ३आश्चर्य्ये च "अपवर्जनं प्रति न चोद्यमदः" माघः। "चोद्यं चोदनीयम् कथमित्याक्षेप्यम्" मल्लि॰ "सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च" भा॰ उ॰ ४२अ॰। ४अर्हे ते ५प्रेरणार्हे त्रि॰। "नित्योत्थिता गुरुकर्म्मस्वचोद्याः" भा॰ अनु॰ १०२अ॰।

चोपन न॰ चुप–ल्युट्। १मन्दगमने, २तूष्णीम्भवने, ३मौने च।

चोर पु॰ चुर–अच्। १स्तेयकर्त्तरि परद्रव्यापहारके शब्दर॰। २गन्धद्रव्यभेदे, हेमच॰ ३कृष्णपत्राख्ये हडहचन्द्र। ब्राह्मणा॰ कर्म्मणि ष्यञ्। चौर्य्यं तत्कर्म्मणि परद्रव्यापहरणे। "सा च द्रव्यनया कृतस्तव धनं द्यूतेन चौर्य्येण वा चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य काऽन्या गतिः" उद्भटः। चोरस्य भावः मनोज्ञा॰ वुञ्। चौरिका चोरभावे स्त्री। ४कविभेदे पु॰ कविरमरः कविरमरः कवी चोरमयूरकौ" उद्भट। तत्कृतग्रन्थश्च "चोरपञ्चाशिका"। तत्र चौर्य्यपदार्थो निर्णीय प्रदर्श्यते। परमात्मस्वत्ववद्द्रव्यहरणमेव चौर्य्यं तेन साधारणधनापहारे न चौर्य्यम्। तथाह दायभागे "य एव हि परस्येदमिति विशेषं जानानः परस्वे स्वत्वहेतुमन्तरेणैव स्वत्वमारोपयति स स्तेन इति लोकप्रसिद्धोऽयं न चानेन परकीयम् इदं वा ममेति विवेक्तुं शक्नोति द्रव्यस्याविभक्तत्वात्। यथा यदेव हि ममेदमिति विशेषं जानानः परस्वत्वापत्तये स्वामी त्यजति, परश्च विशेषेणेदं ममेति स्वत्वं मन्यते तत्रैव दाननिष्पत्तिः। न च साधारणधने तथा सम्भवतीति साधारणधनमदेयमुक्तं तथा स्तेयमपि नैतन्मम धनं परस्येदमिति जानत एव भवतीति न साधारणधनापहारे स्तेयनिष्पत्तिः"। "परद्रव्यहरणं स्तेयमिति परशब्दात् आत्मीयत्वव्यवच्छेदेनैव परकीयत्वस्यावगमात् साधारणासाधारणयोरसाधारणस्यैव शीघ्रप्रतीतेः। चोरचौर्य्यभेदतद्दण्डदण्डभेदादिकं च वीरमित्रोदये दर्शितं यथा।

"मनुः "स्यात् साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम्। निरन्वयं भवेत् स्तेयं हृत्वापह्नूयते च यदिति" अस्यार्थः। अन्वयवद्द्रव्यरक्षकराजाद्यध्यक्षादिसमक्षं बलावष्टम्भेन यत्परधनापहरणादिकं क्रियते तत् साहसम्। स्तेयं पुनर्निरन्वयं स्वाम्याद्यसमक्षं यद्वञ्चयित्वा परधनाद्यपहरणं तदुच्यते। यच्च राजाद्यध्यक्षादि समक्षमपहृत्य न मयेदं कृतमिति भयान्निह्नूयते तदपि स्तेयमिति। अतएव नारदः "उपायैर्विविधैरेषां छलयित्वाऽपकर्षणम्। सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः" इति॥ एवमित्यं तत् क्षुद्रादिनिर्दिष्टान्यन्याह स एव "मृद्भाण्डासनखट्वास्थिदारुचर्म्मतृणादि यत्। शमीधान्यं कृतान्नञ्च क्षुद्रं द्रव्यमुदाहृतम्। वासः कौषेयवर्ज्जञ्च गोवर्ज्जं पशवस्तथा। हिरण्यवर्ज्जं लोहञ्च मध्यं व्रीहियवादि च। हिरण्यरत्नकौषेयस्त्रीपुंगोगजवाजिनः। देवब्राह्मणराज्ञाञ्च विज्ञेयं द्रव्यमुत्तमम्" इति"। बलात्कारकृतमपहरणं साहसान्तर्गतं स्तेयमित्याह स एव "तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र तूच्यते। आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु" इति। तस्यैव साहसस्यैव। आधिः पीडा धनापहरणादिद्वारा आक्रम्य प्रसह्य परस्य क्रियमाणः क्लेशः साहसरूपं स्तेयम्। छलेन क्रियमाणः आधिः केवलस्तेयमित्यर्थः। तस्करज्ञानोपायमाह याज्ञवल्क्यः "ग्राहकैर्गृह्यते चोरो लोप्त्रेणाथ पदेन वा। पूर्वकर्म्मापराधी च तथा चाशुद्धवासकः। अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः। द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः। परद्रव्यगृहाणाञ्च पृच्छका गूढचारिणः। निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः" इति। ग्राहकैराजपुरुषैर्लोप्त्रेणापहृतभाजनादिना, अशुद्धवासः अप्रज्ञातस्थानवासी। जातिनिह्नवो नाहं शूद्रस्त्वेवरूपः। नामनिह्नवो नाहं डित्थ इत्येवरूपः। आदिग्रहणात् स्वदेशग्रामकुलाद्यपलापेन च शङ्किता ग्राह्याः। द्यूतपण्याङ्गनामद्यपानादिष्वतिप्रसक्ताः तथा कुतोऽसि त्वमिति चोरग्राहिभिः पृष्टो यदि शुष्कमुखोभिन्नस्वरो

वा भवति । बहुव्ययनात् खिद्रललाटादीनां ग्रहणम् । तथा ये निष्कारणछिद्रयदस्य द्रव्यं किं वास्य गृहमित्येव पृच्छन्ति ये चाकारणेनात्मानं गूहयित्वा चरन्ति । ये चायाभावेऽपि बहुव्ययकारिणः । ये च विनष्टद्रव्याणां जीर्णवस्त्रभिन्नभाजनादीनामविज्ञातस्वामिकानां विक्रयकारिणः, ते सर्वेऽपि चौर्यसम्भावनया ग्राह्या इत्यर्थः । एवंविधलिङ्गयुक्तान् पुरुषान् गृहीत्वैते चौरा भवन्ति नवेति सम्यक् परीक्षेत न तावन्मात्रेण निश्चिनुयात् अचौरस्यापि लिङ्गसम्बन्धसम्भवात् । अतएव नारदः "अन्यहस्तात्परिभ्रष्टमकामादुत्थितं भुवि । चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात् परीक्षयेत् । असन्तः सन्त्यसन्ताभाः सन्तश्चासन्त्यसन्निभाः । दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणमिति" । स्तेयस्य त्रैविध्यमाह स एव "तदपि त्रिविधं ज्ञेयं द्रव्यापेक्षं मनीषिभिः । क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणादिति" । चौरस्य द्वैविध्यमाह बृहस्पतिः "प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः । प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधेति" । प्रकाशतस्करानाह स एव । "नैगमा वैद्यकितवाः सभ्योत्कोचकवञ्चकाः । दैवोत्पातविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः । अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः । प्रकाशतस्करा ह्येते तथा कुहकजीविनः" इति प्रतिरूपकाः प्रतिरूपकराः । अतएव नारदः "प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः । उत्कोचकाः सोपधिका वञ्चकाः कितवास्तथा । प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः । इत्येवमाद्या विज्ञेयाः प्रकाशतस्करा भुवीति" । नैगमादिव्याजेन ये परद्रव्यापहारकास्ते नैगमाद्याः । अप्रकाशतस्करस्वरूपभेदानाह व्यासः "साधनाक्रान्तिता रात्रौ विचरन्त्यविभाविताः । अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः । उत्क्षेपकः सन्धिभेत्ता पान्थमुट् ग्रन्थिभेदकः । स्त्रीपुंसघ्नौ च पशुस्तेयी चौरो नवविधः स्मृतः" इति । रात्राविति प्रायिकम् अरण्यादौ दिवापि सम्भवात् । उत्क्षेपकः धनिनामनवधानतां निरीक्ष्य तत्समीपस्थधनमुत्कृष्य चाहरः । सन्धिभेत्ता गृहयोः सन्धौ स्थित्वा तमवभिद्य भेत्ता । पान्थमुट् कान्तारादौ पथिकानामप्रमत्तापहारकः । ग्रन्थिभेदकः परिधानीवादिग्रथितं धनं गृहीत्वा तद्ग्रन्थिमोचक इति । प्रकाशतस्कराणां दण्डमाह स एव "स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशवृत्तयः । गृह्णन्ति छद्मना चार्थं अनार्य्यास्त्वार्य्यलिङ्गिनः । नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः । यथा तेन नियच्छन्ते तिष्ठन्ति समये तथेति" । दोषानुरूपतो दण्ड्या न तु धनानुरूपत इत्यभिप्रायः । केषाञ्चित् प्रकाशतस्कराणां दण्डमाह बृहस्पतिः "पण्याद्य दोषं व्याभिश्र्य पुनः संस्कृत्य विक्रयी । पण्यं तद्द्विगुणं दाप्यो वणिग् दण्डं च तत्समम् । अज्ञातौषधिमन्त्रस्तु यश्च व्याधेरतत्त्ववित् । रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चोरवद्भिषक् । कूटाक्षदेविनः क्षुद्रा राजलभ्यहराश्च ये । गणका वञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः । अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः । विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते । ज्योतिर्ज्ञानभयोत्पातमविदित्वा तु ये नृणाम् । श्रावयन्त्यर्थलोभेन विनेयास्ते प्रयत्नतः । दण्डाजिनादिभिर्युक्तमात्मानं दर्शयन्ति ये । हिंसन्ति छद्मना नृणां वध्यास्ते राजपूरुषैः । अल्पमूल्यस्य संस्कृत्य नयन्ति बहुमूल्यताम् । स्त्रीबालकान् वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारतः । हेमरत्नप्रवालाद्यान् कृत्रिमान् कुर्वते तु ये । क्रेतुर्मूल्यं प्रदाप्यास्ते राज्ञा तद्द्विगुणं दमम् । मध्यस्थ वञ्चयन्त्येकं स्नेहलोभादिना यदा । साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दममिति" । राजलभ्यं करविशेषः । मनुरपि "सर्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः । प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैरिति ।" विष्णुरपि "द्यूते च कूटाक्षदेविनां करच्छेदः" इति । अप्रकाशतस्कराणां दण्डमाह स एव "उत्क्षेपकस्य सन्दंशश्छेत्तव्यो राजपुरुषैः" । सन्दंशोऽत्र करः तथा च याज्ञवल्क्यः "उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ । कार्य्यौ द्वितीयापराधे करपादैकहीनकाविति" । अङ्गुष्ठतर्ज्जन्योर्ग्रन्थिमोचने साधकतमत्वेनात्र सन्दंशत्वेन तयोर्ग्रहणम् । प्रथमापराधे तौ क्रमेण प्राप्ति सन्दंशाभाववन्तौ कर्त्तव्यौ, द्वितीयापराधे उभावप्येकपाणिपादाभाववन्तौ कर्त्तव्यावित्यर्थः । सन्धिभेत्तॄणां दण्डमाह मनुः "सन्धिं भित्त्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्कराः । तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेदिति" । तानिति शेषः । बृहस्पतिरपि "सन्धिच्छेदकृतो ज्ञात्वा शूलमाग्राहयेत् प्रभुरिति" । आग्राहयेत् आरोपयेदित्यर्थः । पान्थमुषि दण्डमाह स एव "तथा

चौरोपकारिण इत्याह याज्ञवल्क्य "भक्तावकाशा-ग्न्युदकमन्त्रोपकरणव्ययान्। दत्त्वा चौरस्य वा हन्तु र्जानतो दम उत्तम" इति। भक्तम् अशनम्। अवकाशो-निवासस्थानम्। अग्निश्चौरस्य शीतापनोदनाद्यर्थं। उदकन्तृषितस्य। मन्त्र चौर्यप्रकारोपदेश, उपकरण चौर्यसाधनम्। व्यय अपहारार्थन्देशान्तरङ्गच्छत पाथेयम्। एतानि चौरस्य हन्तुर्वा दुष्टत्वं जानन्नपि य प्रयच्छति तस्योत्तमसाहसोदण्ड इत्यर्थं। कात्यायनोऽपि "चौराणां भक्तदा ये स्युस्तथाग्न्युदकदायिन। दातारश्चैव भाण्डानां प्रतिग्राहिण एव च। समदण्डा स्मृता ह्येते ये च प्रच्छादयन्ति तानिति"। चौरोपेक्षाकारिणं तत्राह नारद "शक्ताश्च य उपेक्षन्ते तेऽपि तद्दोषभागिन। उत्क्रोशतां जनानाञ्च ह्रियमाणे धने तथा। श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिन" इति। द्रव्यभेदेन चौर्यप्रायश्चित्त प्रायश्चित्तशब्दे दृश्यम्। तत्कर्म्मविपाकश्च कर्म्मविपाकशब्दे १७४०पृ० दृश्य।

चोरक पु० चोर स्वनामख्यातगन्धद्रव्य कायति कै–क। १ग्रन्थिपर्णाख्ये रत्नमाला। स च "शैलेयकमांसीतगरकुष्ठ-रससैन्धवानि वक्षीजम्। मधुररसमधूच्छिष्टानि चोरक-इति जीवस्य" वृ० स० १६अ० जीवभक्तौ उक्त

चोरघात पु चोर हन्ति हन–अण्। राजा हस्तिभेदे शब्दार्थ०।

चोरपुष्पी स्त्री चोर इव पुष्पमस्या रात्रिविकाशित्वात्। शङ्खिन्याम्। स्वार्थे क अत इत्वम्। चोरपुष्पिका अत्र अमर। [भाषायाम् शब्दार्थचि०।

चोरस्नायु पु० चोरस्य गन्धद्रव्यभेदस्य स्नायुरिव। काक-चोरा स्त्री चोरवत् रात्रिविकाशित्वेन पुष्पमस्त्यस्या अर्श० अच्। शङ्खपुष्पिकायाम् शब्दार्थचि०।

चो(चौ)रिका स्त्री चोरस्य भावः मनोज्ञा० वुञ् ठन् वा। चौर्ये रायमुकुट।

चोल पु चुल समुच्छ्राये कर्म्मणि घञ्। १स्त्रीणां कञ्चुके २आप्रपदीने वस्त्रे ३कूर्पासके।(चोला)इति ख्याते पु स्त्री ४देशभेदे। "द्रविडद्वयोर्मध्ये चोलदेश प्रकीर्त्तित। सम-कर्याञ्च ते प्रोक्ताकल्पे दोऽपान्तरो भवेत्" इत्युक्ते ४देशे "अपरे जनपदा दक्षिणेन" इत्युपक्रमे "कौकुरकास्तथा चोलाः कोङ्कणा मालवानकाः" भा० भी ९अ०। जनपदोक्तौ। सच देश कुम्भकोण (ताञ्जोर) इति ख्यात। स च वृ०स०१४अ० कूर्म्मविभागे दक्षिणस्यामुक्तो यथा "अथ दक्षिणेन" इत्युपक्रमे "कर्णाटमहाटविचित्रकूट-नासिक्यकोल्लगिरिचोलाः"। तस्य राजाऽण्। चोऽभिजनोऽस्य वा अण्। चोल तद्राजे तद्देशवासिनि च। बहुत्वे तस्य लुक्। चोलाः ५तद्देशवासिषु ६तद्भूपेषु च ब ब०। तद्भूपाश्च क्षत्रिया अपि म्लेच्छतामाप्ता काम्बोजशब्दे १९०६पृ० दृश्यम्। ७वीनरेशस्यस्तुदभेदे शब्दार्थचि०।

चोलक पु० चोल इव कायति कै–क। १वाणवारे कवचे २वल्कले च शब्दर०।

चोलकिन् पु० चोलकमिवास्त्यस्य इनि। १करीरे (कांचेर-को ह) | २नागरङ्गे मेदि० ३किष्कुपर्णि हारा०।

चोलगणेश पु० कर्म्म०। करविक्रमतां जायिनां जपफल हारके तन्त्रोक्ते गणेशभेदे।

चोलण्डुक पु०चोलस्याण्डुक इव शक०। शिरोवेष्टे त्रिका०

चोलन न० चोलवदाचरति क्विप् तत कर्त्तरि ल्यु। १नागरङ्गे २करीरे ३किष्कुपर्व्वणि च शब्दार्थचि०।

चोली स० चुल–घञ् गौरा० ङीष्। स्त्रीणां १कञ्चुके आप्रपदीने वस्त्रे (चोला) इतिख्याते पु स्त्री २वस्त्रभेदे च शब्दार्थचि० [शब्दार्थचि०।

चोलोण्डुक पु० चोलवदण्डक इव। शिरोवेष्टे उष्णीषे

चोष पु०चोयते चः स भासाधुषोदाहरूवेति। पार्श्वस्थाग्नि-नेव जनिते सन्तापभेदे। "कृष्ण चपीडनयुतं पवनेन, पित्तात् तृड्दाहचोषबहुल सकफप्रसेकम्" "चोष पार्श्व-स्थिताग्निनेव सन्तापः" भावप्र०।

चोष्य न०चूष–ण्यत् घृणो० गुण। चूष्ये चूषणीये। "चर्व्व्य चोष्य चतुर्विधम्" गीताव्याख्यायां "प्राणिभिर्भुक्तं भक्ष्य भोज्य लेह्य चूष्यञ्चेति चतुर्विधमन्न पचामि। तत्र, यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यते अपूपादि तद्भक्ष्य, यत्तु केवल जिह्वया विलोड्य निगीर्य्यते पायसादि तद्भोज्यम्। यज्जिह्वायां निक्षिप्य, रसास्वादेन निगीर्य्यते द्रवीभूत गुडादि तल्लेह्यम्। यत्तु दशनैर्नि-ष्पीड्य रस निगीर्य्यावशिष्टं त्यज्यते इक्षुदण्डादि तच्चू-ष्यमिति चतुर्विधस्य भेद" श्रीधर। अत्र क्वचित्पुस्तके चूष्यमित्यत्र चोष्यमितिपाठदर्शनात् चोष्यशब्दस्य-ना केषाञ्चित् भाषादिको अनार्षवाक्ये घृणो० बहु-लाया अयुक्तत्वात्। किन्तु "भोजनीयानि पेयानि भक्ष्याणि विविधानि च। लेह्यान्यथरतकल्पानि चो-ष्याणि च तथाऽर्जुन" भा० आ० १७५अ०। अतोऽर्थ-

त्वात् प्रभो॰ कल्पना युक्तैव । एवं “भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यं तथैव च” हरिव॰ १४५ अ॰ ।

चोक्ष पु॰ १हयोत्तमे शब्दार्थचि॰ । २सिन्धुवारे (सेँदाल) वृक्षे च त्रिका॰ ।

चौड(ल) न॰ चूडा प्रयोजनमस्य चूडा॰ अ वा डस्य लः । चूडाकर्म्मणि चूडाशब्दे २९५७ पृ॰ दृश्यम् “गार्भैर्होमैर्जातकर्म्मचौडमौञ्जीनिबन्धनैः” मनुः । चूडैव स्वार्थे अण् । चूडायाम् “लिलिहानैर्जिह्वाग्रैः क्षतचौडमभिन्नहन्”भा॰ व॰ १७अ॰ ।

चौडि पुस्त्री चूडाया इदम् बाह्वा॰ इञ् । चूडासम्बन्धिनि स्त्रियां वा॰ ङीप् ।

चौरठ्र(रड्र) न॰ जलभेदे चुल्लाशब्दे पृ॰२९५५ दृश्यम् ।

चौदायनि पु॰ गोत्रप्रवर्त्तके प्रवराध्यायप्रसिद्धे ऋषिभेदे

चौपयत पु॰ चुप–अच् चोप सन् यतते यत–अच् ततः स्वार्थे अण् । ऋषिभेदे तस्यापत्यम् तिका॰ फिञ् । चौपयतायनि तदपत्ये स्त्रियां तु क्रौड्या॰ ष्यङ् । चौपयत्या । चोपयतानां विषयः भौरि॰ विधल् । चौपयतविध तद्विषये न॰ । गोत्रापत्ये अश्वा॰ फञ् चौपयतायन तद्गोत्रापत्ये पुस्त्री

चौपैया स्त्री मात्रावृत्तभेदे तल्लक्षण यथा “चौपैयाछन्दं त्रिगम्भात्र फणिपतिपिङ्गलभणितं कुरु सप्तदशरङ्गमतिहृदयङ्गम मन्ते गुरुरुपनीतम् । यदि दशवसुरविभिस्त्रिन्द्रैर्विरतिः क्रियते यतिरभिरामम् सपदि स्तवसमये न्टपतिः कमये वितरति सपदि कामम्” ।

चौर पु॰ चुरा शीलमस्य चूडा॰ ण । चोरएव अण् वा । प्रच्छन्नपरद्रव्याहारके अमरः । “सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम्” मनुः । २कविभेदे कवी चौरमयूरकौ” उद्भट तत्कृतपञ्चचौरपाञ्चाशिका ।

चौरपुष्पौषधि स्त्री चौरपुष्पिकानामौषधौ मेदि॰ ।

चौरिकाक पु॰ काकभेदे “लवणं चोरयित्वा तु चौरिकाकः प्रजायते” भा॰अनु॰ १११अ॰ ।

चौलि(डि) पु॰ चौलस्यापत्यम् इञ् । प्रवराध्यायप्रसिद्धे ऋषिभेदे ।

चौलुक्य पुस्त्री चुलुकस्य गोत्रापत्य गर्गा॰ यञ् । चुलुकर्षिगोत्रापत्ये तस्य छात्र कण्वा॰ अण् यलोप । चौलुक चौलुक्यच्छात्रे ।

च्यवन पु॰ च्यु–ल्यु । भार्गवे ऋषिभेदे तस्य नामनिरुक्तिः भा॰ आ॰ ६ अ॰ दर्शिता यथा ।

“भृगोः सुदयिता भार्य्या पुलोमेत्यभिविश्रुता । तस्यां समभवद्गर्भो भृगुवीर्य्यसमुद्भव । अस्मिन् गर्भेऽथ सम्भूते पुलोमायां भृगूद्वह । समये समशीलिन्यां धर्मपत्न्यां यशस्विन । अभिषेकाय निष्क्रान्ते भृगौ धर्मभृतां वरे । आश्रमं तस्य रक्षोऽथ पुलोमाऽभ्याजगाम ह । तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्य्यामनिन्दिताम् । हृच्छयेन समाविष्टो विचेता समपद्यत” । ५अ॰ इत्युपक्रमे “अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम् । ब्रह्मन् ! वराहरूपेण मनोमारुतरंहसा । ततः स गर्भो निवसन् कुक्षौ भृगुकुलोद्वहः । रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् । तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्चसम् । तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम् । सा तमादाय सुश्रोणी ससार भृगुनन्दनम् । च्यवनं भार्गवं पुत्रं पुलोमा दुःखमूर्च्छिता” ६अ॰ । २क्षरणयुक्ते त्रि॰ “यस्तु न च्यवते नित्यं यशसा वर्चसा श्रिया । अग्निर्निश्च्यवनो नाम” भा॰व॰२१८अ॰ । भावे ल्युट् । ३क्षरणे न॰ दुग्धच्यवन॰ ।

च्यवनप्राश पु॰ च्यवनेन प्राश्यते प्र+अश॰ कर्मणि घञ् । चक्रदत्तोक्ते औषधभेदे यथा

“बिल्वाग्निमन्थश्योनाककाश्मर्य्यः पाटली बला । पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् । शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करा गुरु । अभया चामृता ऋद्धिर्जीवकर्षभकौ शठी । मुस्तं पुनर्णवा मेदा सूक्ष्मैलोत्पलचन्दने । विदारी वृषमूलानि काकोली काकनासिका । एषां पलोन्मितान् भागान् शतान्यामलकस्य च । पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत् । ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम् । तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषो । पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक् । मत्स्यण्डिकायाः पूताया लेहवत् साधु साधयेत् । षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत् । चतुष्पलं तु गाक्षीर्य्याः पिप्पल्या द्विपलन्तथा । पलमेकं निदध्याच्च त्वगेलापत्रकेशरात् । इत्ययं च्यवनप्राशः परमुक्तो रसायनः । कासश्वासहरश्चैव विशेषेणोपदिश्यते । क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनम् । स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् । पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति । अस्य मात्रां प्रयुञ्जीत चोपरुन्ध्याच्च भोजनम् । अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा । मेधां स्मृतिं कान्तिमनामयत्व

२८७२ पृ॰ चोरगणेशशब्दपरिशिष्टम् ।

चोरगणेशमन्त्रादिकमुक्तं गणेशविमर्षिण्याम् “चक्षुर्द्वय तथा कर्णद्वय नासापुटद्वयम् । मुख नाभि लिङ्ग मूल गुदस्थान तथैव च । मनोद्वार भ्रुवोर्मध्ये दशैव द्वारसंज्ञिता । चक्षुष प्रथमं बीजं हृदये दशधा जपेत् । प्रजपान्ते ततो मात ! कपाट निक्षिपेत्तत । कर्णयोश्च तथा कूर्चं काकीं नासापुटे तत । मुखे ह्रीं द्विविधं बीज नाभौ वार्णीं ततो जपेत् । हसौ बीज लिङ्गमूलेव गुदे परिकीर्त्तितम् । चोंकारस्तु भ्रुवोर्मध्ये मनःस्थाने तथैव च । एतदेकादशं बीज प्रतिद्वारे कपाटवत् । चोरगणेशमन्त्र जप्त्वा कर्म मात्र न कुर्यात् । यदि कुर्यात्तदा दोष उक्तो वर्ण-विलासतन्त्रे । “गणेश उवाच । अधुनाहं प्रवक्ष्यामि चोरमन्त्रमत शृणु । चोरमन्त्रपरिज्ञान विना हे ब्रह्माण्डेश्वरि ।। पुराण प्रपठेद्यस्तु स एव मूर्त्तिमान् कलि । परजन्मनि पापिष्ठ स भवेच्चौरकुक्कुर । शिव पूजा विष्णुपूजा शक्तिपूजा तथैवच । सर्वपूजासु यत्तेजो हरते गणप स्वयम् । पञ्चाशद्गणदेवाना ज्योतींषि मुनिपुङ्गवा ।। प्रतिद्वारपथे गत्वा प्रतिपक्षेषु जृम्भते । हरन्ति जपतेजांसि प्रतिपक्षेषु संस्थिता । जपपूजा सु यत्तेजस्तत्र चौरो गणाधिपः । तस्माच्चौरप्ररोषार्थं चौरमन्त्र जपेद्बुध । ततस्तु पूजयेद्धीमान् यस्य या इष्टदेवता । तत फलमवाप्नोति प्रज्ञादिसिद्धिरैकत । चौरमन्त्रं महामन्त्र पञ्चाशद्गणतोषणम् । चोर-मन्त्र विना भद्रे । शान्तिस्वस्त्ययन कुत । कर्णद्वयं तथा चक्षुर्द्वय नासा मुख तत । नाभिस्थाने लिङ्ग-मूले गुदस्थाने तथैव च । मनोद्वार भ्रुवोर्मध्य दशैकं द्वारमीरितम् । प्रतिद्वारे न्यसेन्मन्त्र चौराख्य ब्रह्माण्डे-श्वरि ।। चौरमन्त्रश्चाह भद्रे । प्रतिद्वारे कपाटवत् । रहस्य ते प्रवक्ष्यामि पञ्चाशद्गणतोषणम् । चक्षुश्च पञ्चमं बीजं प्रथमे दशधा जपेत् । प्रजप्य सुभगे । मात । कपाटं निक्षिपेत्तत । अन्यथा अङ्कुशैर्बीजै कपाटं भेदिरे गणा । चन्द्रिकान्तर्गतानित्य शङ्कर परसुन्दरम् । चन्द्रिकासु समासीन शिञ्जिनी अणिमा गुण । चन्द्रबिम्बात्मिका नित्या गणेशपरिपूजिता । ह्रीं ह्रीं बीजद्वयमिति विन्यसेन्नयनद्वये । कर्णयोश्च तथा ह्रौं ह्रौं ङँ ङँ नासाद्वये तथा । मुखे ह्रीं द्विविध बीज नाभौ क्लीं सुभगेश्वरि ।। हसौ बीज लिङ्गमूले गुदेव परिकीर्त्तितम् । ङङ्कारश्च भ्रुवोर्मध्ये मन-स्थाने तथैव च । एतदेकादशद्वारे चौरमन्त्राणि विन्यसेत् । दशधा चौरमन्त्रञ्च एकधा वापि बीजकम् । अनेनैव जपेनापि प्रतिद्वारे कपाटकम्” । जपकालोऽपि तत्रैव । “शृणु चापि प्रवक्ष्यामि मन्त्रस्य जपनिर्णयम् । प्रात काले च शय्याया सुप्तस्याप स्वदेहके । पूर्वयन्त्रा-त्मकान्यास विन्यसेन्मातृकास्वपि । तथा एकादशद्वारे चौरमन्त्राणि विन्यसेत् । दशधा चौरमन्त्रञ्च एकधा वापि सञ्जपेत् । चौरमन्त्रजपात् तुष्टिर्गणेशस्य तदा भवेत् । यमस्य नाधिकारोऽपि चौरमन्त्रजपात् शिवे ।। सर्वमन्त्रजपात्तेज सर्वस्व तु समुपस्थितम् । तत्तेजो हरणे शक्तिर्गणेशस्य नचैव हि’ चोरगणेशोऽप्यत । अयञ्चशब्द उक्तग्रन्थे चारकशब्दात् पर बोध्य तत्र च कर छिद्रेत्यत्र करणच्छिद्रेति शुद्धम् करणं च नेत्रादि । छिद्र द्वारानावरणम् ।

---

## छ

छकारो व्यञ्जनवर्णभेद स्पर्शसप्तस्तस्योच्चारणस्थान तालु आभ्यन्तरप्रयत्न जिह्वामध्येन तालुस्पर्श । बाह्य-प्रयत्ना विवारश्वासाऽघोषा महाप्राणश्च । मातृका-न्यासेऽस्य वामकूर्परे न्यास । तन्त्रमते अस्य वाचक-शब्दा । “छन्दच्छन्दन सुसुमृणा च पशु पशुपति-स्तथेति । निर्मल तरल वह्निर्भूतमात्मा विलासिनी । एकनेत्रश्च चपलो द्विशिरा वामकूर्पर । गोकर्णो लाङ्गली राम काममाता सदाशिव । माता निशाचर पायुर्विघ्नत स्थितिशब्दक” वर्णाभिधानम् । “मातृका वर्णात्मिकायास्तस्या ध्यानमुक्त वर्णोद्धारतन्त्रे “ध्यानमस्या प्रवक्ष्यामि द्विभुजा तु त्रिलोचनाम् । पीताम्बरधरा नित्य वरदां भक्तवत्सलाम् । एव ध्यात्वा छकारन्तु तन्मन्त्र दशधा जपेत्” । काव्येऽस्य प्रथमनिर्द्देशफल ह॰ र॰ टी॰ उक्तं यथा “छ खोगो चश्च सप्त्यौं वितरति विघ्नोडस्तथा च: सुख छ: प्रीति जोमित्रलाभमित्यादि” ।

छ पु॰ ।छकारवर्णे । छो–घञर्थे भावे क । १छेदने स्त्री

कर्म्मणि घञर्थे क । ३निम्नदेशे लि० मेदि० । ४स्थट्टे न० शब्दार्थचि० । छद–भा० भावे ड । ५छादने ।

छग पुंस्त्री छं रोमभिश्छादनं गच्छति गम–ड । छागे छागे हेमच० । स्त्रियां जातित्वात् ङीष् ।

छगणा पुन० । छाय वह्नेश्छादनाय गण्यते गण–कर्म्मणि घञ् । करीषे हेमच०

छगल पुंस्त्री छो–कलच् गुक् ह्रस्वश्च । १छागे स्त्रियां जातित्वात् ङीष् । २नीलवस्त्रे न० । ३वृद्धदारकवृक्षे पु० हेमच० । ४छगलप्रधानदेशे पु० सोऽभिजनोऽस्य तक्षशिला० अञ् । ५तद्देशवासिनि त्रि० । ६मुनिपत्नीभेदे स्त्री छागली ७ऋषिभेदे पु० । ततो बाह्वा० अपत्ये इञ् । छागलि तदपत्ये पुंस्त्री । आत्रेये तु अण् । छागल आत्रेये छागलापत्ये । मङ्क्षिणे छागल्या अपत्ये च ढक् । छागलेय ऋषिभेदे सच स्मृतिकर्त्ता ।

छगलक पुंस्त्री छगल+स्वार्थे क । छागे अमर ।

छगलण्ड पु० दक्षिणदेशे समुद्रसन्निधौ प्रचण्डादेव्याः स्थाने शब्दार्थचि० ।

छगलाङ्घ्रि(न्त्री) स्त्री छगलस्येवान्त्रम् अङ्घ्रिः मूलं वा यस्याः अदन्तत्वात् गौरा० ङीष् । १वृद्धदारकौषधे अमर २वृके शब्दर० । स्वार्थे क । अत्र वार्थे ।

छगलिन् पु० ऋषिभेदे । स च कलाप्यन्तेवासी । "हरिद्रुश्छगली तुम्बुरुरुलपस्तत्वार कलाप्यन्तेवासिन" मनो० तत्र कलाप्यन्तेवासित्वात् अपि प्राप्ते विशेषविधिना तेन प्रोक्तमधीयते इत्यर्थे ढिनुक् । छागलेयिन् तद्ग्रन्थाध्येतृषु ब० व० ।

छच्छिका स्त्री "छच्छिका सरहीनं स्यादच्छा प्रचुरवारिका । छच्छिका शीतला लघ्वी पित्तश्रमहरा परी । वातनुत् कफकृत् सा तु दीपनी लवणान्विता" इत्युक्ते तक्रभेदे । भावप्र० । सरहीन दधीति शेष ।

छटा स्त्री छो–अटन् किच्च । १दीप्तौ, २परम्परायाञ्च शब्दार्थचि० "यस्यांशसदारिधिवारिवीचिच्छटोच्छलच्छङ्खकुलाकुलेन" "शठच्छटाभिसमनेन बिभ्रता" माघ । "स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा" काव्यप्र० । "केरेन्दीवरदामसुन्दरवपुस्तस्याः कटाक्षच्छटा" सा० द० ।

छटाफल पु० छटेव परम्परान्वितं फलं यस्य । गुवाके । त्रिका० ।

छटाभा स्त्री छटया दीप्त्या भाति भा०–क । विद्युति हारा० ।

छत्त्र पु० छद–णिच् ष्ट्रन् ह्रस्वश्च अर्द्ध र्चा० । छत्राकारपत्रे (छातारिया) १तृणभेदे रत्नमाला । २आतपत्रे न० । मेदि० । ३अतिच्छत्रायां (छत्रा) वृक्षे स्त्री । ४भूस्तृणे राजनि० । तत्र आतपत्रशब्दे ६६९पृ० उपचारशब्दे १२९०पृष्ठे च विवृति । "दयाश्च हस्तिनः छत्त्रं धनं धान्यं पशून् स्त्रियः" । "अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्त्रधारणम्" मनुः । "शशिप्रभं छत्त्रमुभे च चामरे" रघु । ५आवरणमात्रे च । छत्त्रं गुरोर्दैन्याच्छादनं शीलं यस्य छत्त्रा० ण । छात्र शिष्ये ।

छत्त्रक पु० छत्त्रमिव कायति कै–क । (राङ्गाकुकेंङाडा) १छत्त्रे, २मत्स्यरङ्गे पक्षिणि च रत्नमाला । स्वार्थे क ३छत्त्रे न० । ४रेजरस्तम्भभेदे शब्दार्थचि० ।

छत्त्रगुच्छ पु० छत्त्रमिव गुच्छोऽस्य । गुण्डतृणे राजनि० ।

छत्त्रध(धा)र पु० छत्त्रं धरति धारयति वा अच् अण् वा । छायाकरणाय नियुक्ते दासभेदे तत्र अणन्तस्य "अपि नियुक्ते" पा० पूर्व्वपदमाद्युदात्तम् ।

छत्त्रपत्र पु० छत्त्रमिव पत्रमस्य । १स्थलपद्मे, रत्नमाला २भूर्ज्जपत्रवृक्षे च त्रिका० ।

छत्त्रपुष्प(क)पु० छत्त्रमिव पुष्पमस्य वा कप् । तिलकवृक्षे शब्दार्थचि । [स्त्रातन्त्रेऽ] च मेदि० ।

छत्त्रभङ्ग पु छत्त्रस्य भङ्गो यत्र । १नृपनाशे २वैधव्ये ३स्व

छत्त्रा स्त्री छद–त्रण् टाप । (मौरि)इति मेदि० २अतिच्छत्त्रे (छत्रपा) ३कुस्तुम्बुरौ (धनिया) ४शिलीन्ध्रे च मेदि० । ५मञ्जिष्ठायां राजनि० ।

छत्त्राक न छत्त्रा अतिछत्त्रेव कायति कै–क । १शिलीन्ध्रे "छत्त्राकं विड्वराहञ्चेति" मनु । "पलाण्डुं विड्वराहञ्च छत्त्राकं ग्रामकुक्कुटम्" याज्ञ० । २जलमर्द्दुरकवृक्षे पु० राजनि० गौरा० ङीष् । ३राजार्यां स्त्री अमर ।

छत्त्रातिच्छत्र पु० छत्त्रमतिक्रम्य छत्त्रमावरकमस्त्यस्य अच् । छत्त्राकारे जलोद्भवे सुगन्धितृणभेदे शब्दरत्ना० ।

छत्त्रादि पु० "छत्त्रादिभ्योण" पा० शीलार्थे णप्रत्ययनिमित्ते पा० ग० सू० उक्ते शब्दभेदे स च गणो यथा छत्त्र शिक्षा प्ररोह स्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस् सत्य अनृत विशिखा, विशिका भक्षा उदस्थान पुरोडाश विक्षा चुक्षा मन्द्र" छात्र चौर इत्यादि राजनि० ।

छत्त्राधान्य न० छत्त्रा धान्यमिव । कुस्तुम्बुरौ धन्याके

**छत्रिका** स्त्री छत्रं तदाकारं पुष्प यास्त्यस्य ठन्। १शिलीन्ध्रे स्वेदजे शाकभेदे हारा० तस्या उत्पत्ति-स्थानादिकं भावप्र० उक्तं यथा "उक्तं ससंस्वेदजं शाकं भूमिच्छत्रं शिलीन्ध्रकम्। छिति गोमयकाष्ठेषु वृक्षादिषु तदुद्भवेत्। सर्वं ससंस्वेदजा शाकादोषला पिच्छलाश्च ते। गुरवश्छर्द्यतीसारज्वर-श्लेष्मामयप्रदाः। श्वेतशुभ्रस्थलीकाष्ठवंशगोमयसम्भवा। नातिदोषकरास्ते स्युः शेषास्तेभ्योविगर्हिता"। ७छत्र-विशिष्टे त्रि० ततः पुरोहिता० भावे यक्। छात्रिक्य छत्रयुक्तत्वे न०

**छत्रिन्** त्रि० छत्रमस्त्यस्य। १आतपत्रयुक्ते। "छत्रिणो गच्छन्ति" सा० द०। "वर्षातपे च छत्री दण्डी रात्र्य टवीषु च" भावप्र० "मौञ्जी यज्ञोपवीती च छत्री दण्डाजिनी तथा" (वामन) हरिवं० ७६२अ०। २नापिते पु० शब्दरत्ना० [सि० कौ०

**छत्वर** पु० छद–ष्वरच् नि० दस्य तः। १गृहे २कुञ्जे च

**छद्** सहतौ अद०चु०उभ०सक०सेट्। छदयति ते अचिच्छदत् त

**छद्** संवृतौ वा चु० पक्षे भ्वा० उभ० सक० सेट्। छाद-यति ते छदति ते अचिच्छदत् त अच्छादीत्–अच्छदीत् अच्छदिष्ट। ऊर्ज्जने बलाधाने जीवने चायं मित्। छदयति ते इति भेदः। छन्न–छादित। णे ह्रस्व छद। "अग्निमन्तश्छादयसि" अथ० ८,३१४, "अन्त छाद वेदाज्येन" कात्या० श्रौ० ४,६,१, "छादयन्निषु जालेन" भा० द्रो० १२८३अ०। उपसर्गपूर्व्वकस्य तत्तदुपसर्ग-द्योत्यार्थयुक्तसंवरणे "आच्छाद्य चार्च्चयित्वा च" मनु०।

**छद्** सहतौ चु० उभ० सक० सेट् इदित् पाणि०। छन्द-यति ते अचिच्छन्दत् त। छन्द।

**छद** पु० छद–घ संज्ञाया घ० ह्रस्व। १पत्राटिपत्रे २खगपक्षे अमर ३पर्ण्यपर्णवृक्षे ४तमालवृक्षे च मेदि० "हतां विन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम्" (नलिनीम्) भा० स० ४९अ०। "नित्यपुष्पफलाक्रान्त पादपा, हरि-तच्छदा" भा० व० ८९अ०

**छदन** न० छद–ल्युट्। १पत्रे, २पक्षे मेदिनि (तेजपात) ३त्वचे राजनि०। भावे ल्युट्। ४पिधाने न०। "विम-लस्फाटिकाभानि पाण्डुरच्छदनानि" हरिवं० २३९अ०। "विमलस्फाटिकाभानि प्राण्डुरच्छदनैर्द्विजैः" भा० व० १५८अ०।

**छदपत्र** पु० छदार्थं पत्रमस्य। भूर्जपत्रे रत्नमाला।

**छदि** स्त्री छद कि। छदिषि पटले (चाल) अमर "छदिः स्त्रियाम्" पा० उक्तेरिदन्तताप्य।

**छदिस्** न० छद–इसि। पटले शाला क्लीबं रायमुकुट। "इन्द्रस्य छदिरसि" यजु० ४,२८,२ गृहे निघण्टु

**छद्मतापस** पु० छद्मना छलेन तापसः। लोकप्रतार-णार्थं तापसताख्यापनाय तापसलिङ्गधारिणि तत्कर्मा-ननुष्ठायिनि वैडालव्रतिके शब्दार्थचि०

**छद्मन्** न० छाद्यते स्वरूपमनेन छद मनिन्। १कपटे २छले। ३स्वरूपाच्छादने मेदि०। "जगाद वदनच्छद्मपद्मपर्य्यन्त पातिना" माघ। "छद्मना चरितं च नत्" मनु "शकांश्च यवनांश्चैव अजयच्छद्मपूर्वकम्" भा०स० २९अ०

**छद्मिका** स्त्री छद्म अस्त्यस्या व्रीह्या० इनि संज्ञाया कन्। गुडूच्या राजनि०।

**छद्मिन्** त्रि०छद्म अस्त्यर्थे व्रीह्या० इनि। छद्मयुक्ते "ब्राह्म-णच्छद्मिने देवलोके गन्ता परा गतिम्" भा०अ०२९९अ०। "शार्ङ्गकच्छद्मिनं नयम्" ७७अ०। स्त्रियां ङीप्।

**छन्द** पु० छदि–संवरणे धातोरनेकार्थत्वात् इच्छायाम् अच्। १अभिलाषे, २वशतायाम्, "स्वच्छन्दोच्छलदच्छ कुहरच्छातेतराम्बुच्छटा" काव्यप्र०। ३विषभेदे च अमर० ४विषे शब्दच०। ५रहसि त्रि० अमरटीका। "छन्दा-नुवृत्तिदु साध्याः सुहृदोविमनीकृता" माघ०। "वर-दानात् पितु कामं छन्दमृत्युरसि प्रभो!" भा० शा० ५१अ०।

**छन्दक** त्रि० छन्दयति संवृणोति रक्षति छदि–ण्वुल्। १रक्षके २वासुदेवे पु०। "वासुदेव! सर्वच्छन्दक! हरि-हय! हरिमेध! महायज्ञ"। भा०शा०३४०अ० नारद-कृतनारायणस्तवे।

**छन्दःपक्ष** पु० छन्दांसि वेदविहितकर्म्माणि पक्षानीव यस्य। मायामये संसारे। "छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्" गीता छन्दांसि छादनात् तत्त्ववस्तुप्रावरणात् संसारवन्धनादीनि कर्म्माणि ऋग्यजुःसामवेदविहितानि पक्षाणीव यस्य यथा वृक्षस्य छादनार्थानि रक्षणार्थानि च पर्णानि एव धर्म्माधर्म्मोपार्ज्जनेन कर्म्मभि संसार वृक्षोरक्ष्यते इति तस्य तथात्वम्।

**छन्दश्चिति** स्त्री ६त० छन्दसां समूहे। तत्र छन्दोभेदे एकादिगुरुज्ञानाय करणसूत्र लीला० उक्तं यथा "छन्दश्चित्यादौ करणसूत्र श्लोकत्रयम् "एकाद्येकोत्त-राश्चाङ्का व्यस्ता भाज्या क्रमस्थितैः। पर पूर्वेण सङ्गु-

१।१।७। “छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते” इति।

छन्दोग्रन्थस्य वेदोपयोगिता ऋग्वेदभाष्ये दर्शिता यथा छन्दोग्रन्थोऽप्युपयुज्यते छन्दोविशेषाणां तत्र तत्र विहितत्वात्। “तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते” इति ह्याम्नातम्। गायत्र्युष्णिगनुष्टुब् बृहतीपङ्क्तित्रिष्टुब्जगत्यश्चेतानि सप्त छन्दांसि। चतुर्विंशत्यक्षरा गायत्री। ततोऽपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक्। एवमुत्तरोत्तराधिका अनुष्टुबादयोऽवगन्तव्याः। तथान्यत्रापि श्रूयते। “गायत्रीभिर्ब्राह्मणस्य दध्यात्, त्रिष्टुब्भी राजन्यस्य, जगतीभिर्वैश्यस्येति”। तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरेण न सुविज्ञेयः। किञ्च “यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति। गर्त्तं वा पद्यते। प्र वा मीयते पापीयान् भवति तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति” श्रूयते। तस्मात्तद्वेदनाय छन्दोग्रन्थ उपयुज्यते।

६ सामभेदे “छन्दांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत” ऋग्वे० छन्दोग।

छन्दोऽधीते “श्रोत्रियंश्छन्दोऽधीते” पा० घन् वा श्रोत्रियादेशः। श्रोत्रियः छन्दोऽध्येतरि पक्षे अण् छान्दसः तदर्थे “श्रोत्रियश्छान्दसौ समौ” अमरः।

छन्दसा इच्छया निर्मितम् यत्। छन्दस्य इच्छया निर्मिते त्रि०। छन्दसो व्याख्यानो ग्रन्थः यत् अण् वा। छन्दस्य छान्दस वेदव्याख्यानग्रन्थे। तत्र गायत्र्यादौ छन्दसि “सप्त छन्दांसि क्रतुमेकं तन्वन्ति” भा० व० १३४अ०। “गायत्री छन्दसामहम्” गीता। “छन्दोभिरच्छादयन् यदेभिरच्छादयन् तच्छन्दसां छन्दस्त्वम्” छा० उ०। वेदे “छन्दसि बहुलम्” पा०। “युक्तश्छन्दांस्यधीयत” मनुः “हिरण्यगर्भो भगवान् यस्य छन्दसा स्तुत” हरिवं० २२६अ०। “आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव” रघुः। इच्छायाम् छन्दस् । छन्दस इदम् अण्। छान्दस वेदसम्बन्धिनि त्रि० एवं छन्दसि समार्द्धसमविषमभेदादित्रयम्। लीलावत्युक्त यथा

“समादिवृत्तज्ञानाय कथ्यतेऽत्र गणाऽर्ध्याः। पादाक्षरमितगच्छे गुणवर्गफलद्वये द्विगुणे॥ समवृत्तानां सङ्ख्या तद्वर्गो वर्गवर्गेण। स्वपदोनौ स्यातामर्द्धसमानाञ्च विषमाणाम्। उदाहरणम्। समानामर्द्धतुल्यानां विषमाणां पृथक् पृथक्। वृत्तानां वद मे सङ्ख्यामनुष्टुप्छन्दसि द्रुतम्॥ न्यासः। उत्तरगुणः।२। गच्छः।८। लब्धा समवृत्तानां सङ्ख्या।२५६। तथार्द्धसमानाम्।६५२८०। विषमाणाञ्च।४२९४९१७६०। “अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः। तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते॥ प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्। द्वितीयस्तुर्यवद्वृत्तं तदर्द्धसममुच्यते॥ यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्। तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः” ॥

छन्दस्तुभ् पु० छन्दसा पक्षेण स्तुभ्नाति सूर्य्यम् स्तुभ—क्विप्। गरुडाग्रजेऽरुणे तस्य तत्कथा “पितामह उवाच। एष लोकविनाशाय रविरुद्यन्तमुद्यतः। पश्यन्नेव हि लोकान् स भस्मराशीकरिष्यति। तस्य प्रतिविधानञ्च विहितं पूर्वमेव हि। कश्यपस्य सुतो धीमानरुणेत्यभिविश्रुतः। महाकायो महातेजाः स स्थास्यति पुरो रवेः। करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति। लोकानां स्वस्ति चैव स्यादृषीणाञ्च दिवौकसाम्। प्रमतिरुवाच। ततः पितामहाज्ञप्तः सर्वं चक्रे तदाऽरुणः। उदितश्चैव सवितारुणेन समावृतः” भा० आ० २४अ०।

छन्दु त्रि० छदि—उण्। उपच्छन्दयितरि। “कथा छन्दुर्भवति हर्य्यतः” ऋ० १।९४।४। “छन्दुरुपच्छन्दयिता” भा०।

छन्दोग पु० छन्दः सामवेदं गायति गै—क। “सामवेदज्ञे “यत्नेन भोजयेत् श्राद्धे बह्वृचं वेदपारगम्। शाखान्तगमथाध्वर्युं छन्दोगन्तु समाप्तिकम्” मनुः। “छन्दोगैर्विविधैः पृथक्” गीता। छन्दोगपरिशिष्टम्।

छन्दोदेव पु० ब्राह्मण्यां नापितेन जाते मतङ्गनामके चण्डालभेदे तपस्यया इन्द्रदत्तवरेण छन्दोदेवनामतां प्राप्ते स्त्रीणां पूज्ये देवभेदे तत्कथा भा० अनु० २७अ०। “ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह। जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत्” २७अ० इत्युपक्रमे तेन निर्विद्य तपश्चरन्तं प्रति इन्द्रस्य वरदानात् “नूनं दैवं न शक्यं हि पौरुषेणातिवर्त्तितुम्। यदयं यत्नवानेवं न लभे विप्रतां विभो॥ एवं गते तु धर्म्मज्ञ दातुमर्हसि मे वरम्। यदि तेऽहमनुग्राह्यः किञ्चिद्वा

सुव्रत मम । वैशम्पायन उवाच । इत्युक्तेति तदा प्राह ततस्तं बलवृत्रहा । चोदितस्तु महेन्द्रेण मतङ्गः प्राह नोदितम् । यथा कामविहारी स्यां कामरूपी विहङ्गमः । ब्रह्मक्षत्राविरोधेन पूजाञ्च प्राप्नुयामहम् । यथा ममाक्षया कीर्त्तिर्भवेच्चापि पुरन्दर । । कर्त्तुमर्हसि तद्देव । शिरसा त्वां प्रसादये । शक्र उवाच । छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि । कीर्त्तिश्च तेऽतुला वत्स । त्रिषु लोकेषु यास्यति । एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत । प्राणांस्त्यक्त्वा मतङ्गोऽपि सम्प्राप्तः स्थानमुत्तमम्" भा॰अनु॰ २९अ॰ ।

छन्दोभाषा स्त्री छन्दसां भाषा । १छन्दसां कथने ततोभवे तद्व्याख्याने ग्रन्थेऽर्थे ऋगयनादि॰ अण् । छान्दोभाष तत्रभवे तद्व्याख्याने ग्रन्थे च । २उपाङ्गशास्त्रभेदे "उपाङ्गानि शृणु प्रभो ।" इत्युपक्रमे "प्रतिपदमनुपदं छन्दोभाषासमन्वितम् । मीमांसान्यायतर्कांश्च उपाङ्गं परिकीर्त्तितम्" हेमा॰ दा॰ ख॰ देवीपु॰ ।

छन्दोम पु॰ त्रिवृत्त्ये अहीने यागभेदे "त्र्यहा॰ पञ्च गर्गत्रिरात्र छन्दोमान्तर्मसुपराकाः" कात्या॰ श्रौ॰ २३।२।८। त्र्यहास्त्रिवृत्या पञ्च अहीनाः॰ "द्वितीये त्रिवृतोऽतिरात्रा सर्वे राज्यकामस्य" ६।१०। सू॰ । "त्रिवृतस्त्रिवृत्स्तोमयुक्ताः अतिरात्रा (सर्वे गर्गादय) पञ्च राज्यकामस्य क्रतवो भवन्ति" कर्कः ।

छन्दोमदशाह पु॰ दशाहसाध्ये यागभेदे "छन्दोमदशाह पशुकामस्य" कात्या॰ श्रौ॰ । २३।५।२८। छन्दोमदशाह इति सत्त्रं स पशुकामस्य भवति" कर्कः। तत्राहान्याह । "पृष्ठावलम्बाश्चत्वारश्छन्दोमा" २९सू॰ । "चतुर्थे दशरात्रे पृष्ठ्यावलम्बादूर्द्ध्वं द्वादशाहिकाश्चत्वारश्छन्दोमा भवन्ति तत्र पूर्वं इष्टृत्वन्तरष्टमा पञ्चाहाः ततश्चत्वारश्छन्दोमा ततोदशमोविश्वजिदतिरात्र" स॰ व्या॰ ।

छन्दोमान न॰ ६त॰ । छन्दसां माने ततो भवे व्याख्याने च ऋगयनादि॰ अण् । छान्दोमान तत्र भवे तद्व्याख्याने च ।

छन्दोविचिति स्त्री ६त॰ । छन्दसां गायत्र्यादीनां १समुदाये । छन्दसां विचितिर्विचयोयत्र । छन्दःशास्त्रे च । "छन्दोविचितिरित्येवं षडङ्गोवेद उच्यते" तत्र ऋगयना॰ भवे व्याख्याने चार्थे अण् । छान्दोविचित तद्भवे तद्व्याख्याने च ।

छन्न त्रि॰ चु॰ छद-क्त नि॰ । १आच्छादिते । २निर्ज्जने ३रहसि न॰ "छन्नेष्वपि स्पष्टतरेषु यत्र" माघ॰ । पक्षे छादित तत्रार्थे त्रि॰ ।

छप गतौ वा चुरा॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् इदित् । छम्पयति ते छम्पति अचच्छम्पत् त अच्छम्पीत् । चच्छम्प ।

छम अदने भ्वा॰ पर॰ सक॰ सेट् । छमति अच्छमीत् । उदित् छमित्वा—छान्त्वा छान्त । छमण्डः [द्विकोष ।

छमण्ड पु॰ छम—अण्डच् । मातापितृविहीने (कोँड) उणा

छर्द्द वमने चुरा॰ उभ॰ सक॰ सेट् । छर्दयति ते अचच्छर्द्दत् त । छर्दितः । छर्दि ।

छर्द्द न॰ छर्द-भावे अच् । वमने हेम॰ । क्लीवत्वमभिधानात् ।

छर्द्दन न॰ छर्द-भावे ल्युट् । १वमने । हेमच॰ । "छर्द्दन दध्युदश्विद्भ्रामथ वा तवक्षीरेण वा" सुश्रु॰ । कर्त्तरि ल्यु । २वमनकर्त्तरि त्रि॰ । ३अलम्बुषराजौ पु॰ । हेतौ णिच्—ल्यु । ४निम्बवृक्षे पु॰ हेमच॰ ५मदनवृक्षे भावप्र॰ ।

छर्द्दापनिका स्त्री छर्द्द वमनमापयति आपि-ल्यु स्वार्थे क अत इत्वम् । कर्कट्याम् राजनि॰ ।

छर्द्दि स्त्री छर्दयति छर्द-हेतौ णिच्-इन् । वमनरोगे तन्निरुक्तिनिदानादि च सुश्रुते उक्तं यथा ।
"अथातश्छर्द्दिप्रतिषेधमध्यायं व्याख्यास्यामः । अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि । अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः । श्रमात् भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः । नार्य्याश्चापन्नसत्त्वायास्तथाऽतिद्रुतमश्नतः । बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् । छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः । निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावित । दोषानुदीरयन् वृद्धानुदानो व्यानसङ्गतः । ऊर्द्ध्वमागच्छति भृशं विरुद्धाहारसेविनाम् । हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः । द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणम् । प्रच्छर्द्दयेत् फेनिलमल्पमल्पं शूलार्द्दितोऽभ्यर्द्दितपार्श्वपृष्ठः । श्यामं च घोषं बहुशः कषायं जीर्णेऽधिकं साऽनिलजा वमिस्तु । योऽम्लं भृशं वा कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद्वा । सदाहचोषज्वरवक्त्रशोषमूर्च्छान्विता पित्तनिमित्तजा सा । यो हृष्टरोमा मधुरं प्रभूतं शुक्लं हिमं सान्द्रकफानुविद्धम् । अभक्तरुग्गौरवसादयुक्तो वमेद्वमी सा कफकोपजा स्यात् । सर्व्वाणि रूपाणि भवन्ति यस्यां सा सर्व्वदोषप्रभवा मता तु । बीभत्सजा दौर्हृदजाऽऽमजा च याऽसात्म्यतोया क्रिमिजा च या हि । सा पञ्चमी तां च विभावयेत्तु दोषोच्छ्रयेणैव यथोक्तमादौ ।

आमाशयोत्क्लेशभवाश्च सर्व्वास्तस्माद्धितं लङ्घनमेव तासु। स्थूलकृमाश्च बहुला क्रिमिजा च विशेषतः। क्रिमि-हृद्रोगतुल्येन लक्षणेन च लक्षिता। क्षीणस्योपद्रवैर्युक्तां सासृक्पूयां सचन्द्रिकाम्। छर्द्दिं प्रसक्तां कुशलो नार-भेत चिकित्सितुम्। सर्व्वासु बहुदोषासु छर्द्दनं हित-मुच्यते। विरेचनं वा कुर्व्वीत यथादोषोच्छ्रयं भिषक्। संसर्गाञ्चानुपूर्व्येण यथास्वं भेषजाय तान्। लघूनि परिशुष्काणि सात्म्यान्यन्नानि वाऽऽचरेत्। यथास्वञ्च कषायाणि ज्वरघ्नानि प्रयोजयेत्"।

"कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्यमेव च। हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः" इति माधवकरः। वा ङीप्। तत्रार्थे "आमाशयोत्क्लेशभवा हि सर्व्वाश्छर्द्द्यो मता लङ्घनमेव तस्मात्" सुश्रुत।

छर्द्दिका स्त्री छर्द्द–णिच् ण्वुल्। १उत्कासिकायां, २विष्णु-क्रान्तायाञ्च। धात्वर्थे ण्वुल्। ३वमने। राजनि०। स्वार्थे क दृशो०। छर्द्दीकाप्यत्र। [च शब्दच०।

छर्द्दिकारिपु स्त्री पु० ६त०। १सुक्ष्मैलायाम्। २छर्द्दिनाशके

छर्द्दिघ्न पु० छर्द्दिं हन्ति–हन–टक्। १निम्बभेदे। २छर्द्दिना-शके त्रि० रत्नमाला स्त्रियां ङीप्।

छर्द्दिस् स्त्री छर्द्द–भावे इसि। १वमने। कर्त्तरि इसि। २वमिरोगे ३छद्दारे च। छर्द्द–कर्म्मणि इसि। ४गृहे निघ०। "यात छर्द्दिष्या उत नः परस्पा" ऋ०८।९।११। "छर्द्दिरिति गृहनाम तस्य पालकाः" भा०। "अग्निष्टा-भिपातु मह्या स्वस्त्या छर्द्दिषा" यजु० १३।१९। "छर्द्दिषा गृहेण" वेददी०। छृद–दीप्तौ इसि। ४तेजसि "वायु-ष्ट्वाभिपातु मह्या स्वस्त्या छर्द्दिषा" यजु० १४।१२। "छर्द्दिषा तेजोविशेषेण" वेददी०।

छल न० छल–अच्। १स्वरूपाच्छादने २व्याजे ३यथार्थगूहने ४कूटयुद्धादिना तन्मर्य्यादायाश्चलने ५शाठ्ये ६कापट्ये न्यायमतसिद्धे कार्य्यान्तरेण प्रयुक्तस्य वादुक्तशब्दस्यार्थान्तर-कल्पनया प्रतिवादिना दत्ते ७दूषणभेदे तल्लक्षणभेदा-दिकं गौ० सू० वृत्तौ दर्शितम्। यथा "वचनविघातोऽर्थ-विकल्पोपपत्त्या छलम्। १। तत् त्रिविधं वाक्छलं सा-मान्यच्छलमुपचारच्छलञ्चेति। २। अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्। ३। सम्भ-वतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्य-च्छलम्। ४। धर्म्मविकल्पनिर्द्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्। ५। वाक्छलमेवोपचारच्छलं तदवि-शेषात्। ६। न तदर्थान्तरभावात्। ७। अविशे-षे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः। ८। गौ० सू०

"क्रमप्राप्तं छलं लक्षयति। अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः कल्पो अर्थान्तरकल्पनेति यावत् तदुप-पत्त्या युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो दूषणं तच्छलमित्यर्थः यद्वा तात्पर्य्याविषयार्थकल्पनेन दूषणाभिधानमिति फलितं तात्पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा यथा नेपालादागतोऽयं नवकम्बल-त्वादित्यत्र नवसङ्ख्यापरत्वकल्पनयाऽसिद्ध्यभिधानं, प्रमेयं धर्म्मत्वादित्यत्र प्रमाधर्थकल्पनया भागासिद्ध्यभिधानम् वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम्॥ वृ० लक्षितं छलं विभजते। २। तत्र वाक्छलं लक्षयति। यत्र शक्यार्थद्वये सम्भवति एकार्थनिर्णायकविशेषाभावा-दनभिप्रेतशक्यार्थकल्पनेन दूषणाभिधानं तद्वाक्छलं, लक्ष-णन्तु शक्त्या एकार्थबोधतात्पर्य्यकशब्दस्य शक्या-र्थान्तरतात्पर्य्यकत्वकल्पनया दूषणाभिधानं यथा नेपाला-दागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य नवसङ्ख्यका कम्बला इति एवं गौर्विषाणीत्युक्ते कुतो गजस्य शृङ्गं श्वेतो धावतीति श्वेतरूपवदभिप्रायेणोक्ते श्वेतो न धाव-तीत्यभिधानमित्यादिकमूह्यम्॥ ३ वृ०। सामान्यछलं लक्षयति। सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्य अतिसामान्ययोगादसम्भवदर्थकत्वकल्पनया दूषणाभिधानं सामान्यच्छलम्। यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसम्पद साधयतीति कल्पयित्वा परो वदति कुतो ब्राह्मणत्वेन विद्याचरण-सम्पत्त्वात्ये व्यभिचारात्॥ ४ वृ०। उपचारच्छलं लक्ष-यति। धर्म्मशब्दस्यार्थेन विकल्पो विविधः कल्पः शक्ति-लक्षणान्यतररूपस्तया शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलं यथा मञ्चाः क्रोशन्ति नीलो घट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चाः एव घटस्य कथं नीलरूपाभेद। एवम् शङ्खं नित्य इति शक्त्या प्रयुक्ते अस्तुकस्यादत्यस्त कथं नित्य इति प्रतिषेधोऽप्युपचारच्छलम् वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वम्। न च श्लिष्टशब्दविकप्रयोगाद्वा-दिन एवापराधः स्यादिति वाच्यं तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात् अन्यथा पर्व्वतो वह्निमानित्युक्ते पर्व्वतोऽयं कथमवह्निमानित्यादि-दूषणेन तथानादुच्छेदः स्यात्॥ ५ वृ०। प्रसङ्गाच्छल-

परीक्षित पूर्वपक्षयति । शब्दस्यार्थान्तरकल्पनाऽविशेषा-द्वाक्छलमेवोपचारच्छलं स्यादिति द्वित्वमेव न तु त्रित्व-मिति गङ्कार्थं ॥ ६ सू० ॥ समाधत्ते । उपचारच्छलस्य वाक्छलाभेदो न, तयोरर्थान्तरभावात् भिन्नत्वात् भिन्न तया प्रमाणसिद्धत्वादिति फलितार्थं । पूर्व्वोक्तभेदकधर्म्मेण भेदसत्त्वेऽपि यत्किञ्चिद्धर्म्मेणाभेदे सामान्यधर्म्मेणाभेदस्य सर्व्वत्र सत्त्वात्शाद्विभाग प्रसक्तोपि न स्यादिति । ७ सू० । विपक्षे बाधकमभिप्रेत्याह यत्किञ्चिद्धर्मादविशेषे कि-ञ्चिद्धाधर्म्यात्कल्पनादिरूपात्छलत्रैक्य स्यात्र तु त्वद-भिमत द्वित्वमपीति भाव" ॥ ८ सू० वृत्तिः "ब्याचिषमकेतकृपयेत्यगतच्छलेन" माघ । "धर्म्मेण व्यवहारेण छलेनाचरितेन च । प्रयुक्तं साधयेदर्थं पञ्च मेन बलेन च" मनु । "मुजगच्छितच्छलेन यम्" भट्टि "अध्यारूरोचेव रजश्छलेन" रघुः । "छल मिरस्य भूतेन व्यवहारान्वयेन पः" याज्ञ० । "भूत तत्त्वार्थ सम्बद्ध प्रमादाभिहित छलम्" नारदोक्ते च प्रमादा भिहिते च । छलकारिणि त्रि० । स्वार्थे क । तत्रार्थे "याभ्यां (मधुकैटभाभ्याम्)छाद्यते विश्व रजसा तमसा तथा । रजस्तमोमयावेतौ यतोना तु समच्छलौ । छलकौ धर्म्मशीलानां दुर्जरौ सर्वदेहिनाम्" हरिव०२०अ० । १०नाटकप्रभेदवीथ्यङ्गभेदे न० "वीथ्यामेको भवेदङ्ग" इत्युपक्रमे "अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनी षिण । उद्घात्यकावलगितेत्यादिना विभज्य सा० द० र्लाक्षत यथा "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलना छलम्" "यथा वेणुसं भीमार्ज्जुनौ" "कर्त्ता द्यूत-च्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् । कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः क्वास्ते ? दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुमभ्या गतौ स्व" ।

छल नामधातु छल+करोति णिच् सक० सेट् । छलयति "छलयति विक्रमणे बलिमद्भुत वामन" गीतगो० "द्यूत छलयतामस्मि" गीता ।

छलन न० छल+करोति णिच्—भावे ल्युट् । १प्रतारणे 'यथापर यथायोग न च स्यात् छलनं पुन" भा० भी० १अ० । युच् । २वञ्चनायां स्त्री शब्दार्थचि० । "छलना छलम्" सा०द० ।

छलिक न० नाटकभेदे अमरुशतकस्य टीकायाम् १९२ पृ० उक्ते दृश्य काव्यभेदे दृश्यम् । "देवि । शर्म्मिष्ठाया कृत चतुष्पदीम् छलिक दुष्प्रयोज्यमुदाहरन्ति" मालविका० ।

छलित छल+नामधा० कर्म्मणि क्त । १प्रतारिते "छलितराम नाटकम् । भावे क्त । २प्रतारणे न० ।

छल्ली स्त्री छद-क्विप् तं लाति ला-क गौरा०ङीष् । १सन्ताने (छाल) शब्दरत्ना० २लतायाम् ३सन्ततौ च । मेदि० ला-बा० कि । छल्लिरपि तत्रार्थे ।

छवि (वी) स्त्री छाति अपार छिनत्ति तमो वा छो-वि-क्विन्न वा ङीप् । १शोभायां २कान्तौ च अमरः । "छायामण्डलछवि" रघु । "छायापल्लवीभूतसब-च्छविनाम्" कुमा० ।

छष वधे भ्वा० उभ० सक० सेट् । छषति ते अच्छा(च्छ)षीत् अच्छषिष्ट । चच्छाष चच्छषे । [त्रि० ।

छा पु० छो-क्विप् । १पारदे एकाक्षरको० २छेदनकर्त्तरि

छाग पुंस्त्री छो-गन् स्वनामख्याते पशुभेदे अमर' । जाति-त्वात् स्त्रियां ङीष् । २पुरोडाशे न शब्दार्थचि० । छागया दुग्धम् अण् । २छाग्या दुग्धे न० छागस्येद-मण् । ४छागसम्बन्धिनि त्रि० स्त्रियां ङीप् । छागस्य लक्षणादिक बृ० सं० दर्शित यथा

"छागशुभाशुभलक्षणमभिधास्ये नवदशाष्टदन्तास्ते । धन्या स्थाप्या वेश्मनि सन्त्याज्याः सप्तदन्ता ये । दक्षिणपार्श्वे मण्डलमसित शुक्लस्य शुभफल भवति । ऋश्यनिभकृष्णलोहितवर्णानां श्वेतमपि शुभदम् । स्तनवदवलम्बते यः कण्ठेऽजानां मणिः स विज्ञेयः । एकमणिः शुभफलकृज्ज्ञेयतमा द्वित्रिमणयो ये । मुण्डाः सर्वे शुभदाः सर्वसिताः सर्वकृष्णदेहाश्च । अर्द्धासिता सिताद्धा धन्या कपिलार्द्धकृष्णाश्च । विचरति यूथस्याग्रे प्रथमं चाम्भोऽवगाहते योऽजः । स शुभः सितमूर्द्धा वा मूर्द्धनि वा टिक्किका यस्य । स पृषतकण्ठशिरा वा तिलपिष्टनिभश्च ताम्रदृक् यश्च । कृष्णचरणः सितो वा कृष्णो वा श्वेतचरणो यः । यः कृष्णाण्डः श्वेतो मध्ये कृष्णेन भवति पट्टेन । यो वा चरति सशब्दं मन्दं च स शोभनश्छागः । ऋश्यशिरोरुहपादो यो वा प्राक्पाण्डुरोऽपरे नीलः । स भवति शुभकृच्छागः श्लोकश्चाप्यत्र गर्गोक्तः । कुट्टकः कुटिलश्चैव जटिलो वामनस्तथा । ते चत्वारः श्रिय पुत्रा नालक्ष्मीके वसन्ति ते । अथाप्रशस्ताः खरतुल्यनादाः प्रदीप्तपुच्छाः कुनखा विवर्णाः । निकृत्तकर्णा द्विपमस्तकाश्च

भवन्ति ये चासिततालुजिह्वा । वर्णैः प्रशस्तैर्मणिभिश्च युक्ता मुण्डाश्च ये ताम्रविलोचनाश्च । ते पूजिता वेश्मसु मानवानां सौख्यानि कुर्वन्ति यशः श्रियं च" । वल्लौ तस्य शुभाशुभत्वं युक्तिकल्पतरौ दर्शितं यथा "तेषां शुभाय निर्दिष्टं पशुश्रेष्ठत्वय वल्लौ । ये कृष्णा शुचयश्छागा पशवोऽन्ये तथैव च । देवजातिभिरुत्सृज्यास्ते सर्वार्थोपसिद्धये । ये पीता हरिता वापि नरजातेरुदीरिता । ये शुक्लाश्च महान्तो वा रक्ता जातेः शुभप्रदा । यो मोहादथ वाऽज्ञानाद्वलिमन्यं प्रयच्छति । यच्च दद्यात्फलं तस्य नान्यत् किञ्चित् फलं भवेदिति" । तन्मांसगुणा भावप्र० उक्ता यथा "छागलो वर्करश्छागो वस्तोऽज छेलकः स्तुभः । अजा छागी स्तुभा चापि छेलिका च गलस्तनी । छागमांसं लघु स्निग्धं स्वादुपाकं त्रिदोषनुत् । नातिशीतमदाहि स्यात् स्वादु पीनसनाशनम् । परं बलकरं रुच्यं बृंहणं वीर्य्यवर्द्धनम् । अजाया अप्रसूताया मांसं पीनसनाशनम् । शुष्ककासेऽरुचौ शोषे हितमग्नेश्च दीपनम् । अजासुतस्य बालस्य मांसं लघुतरं स्मृतम् । हृद्यं ज्वरहरं श्रेष्ठं सुखदं बलदं भृशम् । मांसं निष्कुषितारुण्यस्य (खासि) छागस्य कफकृद्गुरु । स्रोतःशुद्धिकरं बल्यं मांसदं वातपित्तनुत् । वृद्धस्य वातलं रूक्षं तथा व्याधिहतस्य च । मर्द्दजन्तुविकारघ्नं छागमुण्डं रुचिप्रदम् ।" तद्दुग्धादिगुणास्तत्रोक्ता यथा "छागं कषायं मधुरं शीतं ग्राहि पयो लघु । रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् । अजानां लघुकायत्वात्तथा नानाद्रव्यनिषेवणात् । नात्यम्बुपानाद्व्यायामात् सर्वव्याधिहरं पयः । छागं दध्युत्तमं ग्राहि लघु दोषत्रयापहम् । शस्यते श्वासकासार्शःक्षयकासेषु दीपनम् । तद्घृतगुणा घृतशब्दे २७६८ पृ० द्रष्टव्याः । तन्मूत्रगुणाः "गोजाविमहिषीणां तु स्त्रीणां मूत्रं प्रशस्यते । खरोष्ट्रेभनराश्वानां पुंसां मूत्रं हितं स्मृतम् ।" "अमादेये पशुश्छागः" ति० त० "मातृस्वहारिणकौरभ्रशशाकुमच्छागलार्षभैः" याज्ञ० । "षण्मासांश्छागमांसेन" मनुः "अमादेये यज्ञे स एव पशुशब्दवाच्य यथाह कात्या०श्रौ०६।१।२०।"छाग मन्त्राम्नानात्" सू० । "अजं पशुमुपाकरोति होता यक्षदग्निमी छागस्येत्यादिषु मन्त्रेषु छागस्याम्नानात् तथा "अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति" यदि च छागो यागसाधनं भवति तदा अयं मन्त्रः सगतार्थो भवति नान्यथा । पुनः कीदृशम् । "पन्नदम्" सू० । "पन्नदो जातदन्त इति निगमेपूक्तम्" । "अव्यङ्गम्" सू० । विगतमङ्गं चक्षुःकर्णादिकं यस्यासौ व्यङ्गः अन्यूनाङ्गम् शाखान्तरात्" कर्क "वायव्यं श्वेतमालभेत "श्रुतौ छाग एवालभ्य "छागो वा मन्त्रवर्णात्" जै०सू० तथा निर्णयात् ।

**छागण** पु० छया छादनेन गण्यते गण–कर्म्मणि अच् । छगण+स्वार्थे अण्–वा । करीषाग्नौ त्रिका० ।

**छागभोजिन्** पु० छागं भुङ्क्ते भुज–णिनि । १वृके राजनि० । २छागमांसभक्षके त्रि० स्त्रियां ङीप् ।

**छागमय** न० छाग+मयट् । स्कन्दस्य षष्ठे वक्त्रे "षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तत् । षट्शिरोऽभ्यन्तरं राजन् ! नित्यं मातृगणार्चितम् । "षण्णान्तु प्रवरं तस्य शीर्षाणामिह शब्द्यते । शक्तिं येनासृजद्दिव्यां भद्रशाख इति स्म ह" भा० व० २२७अ० ।

**छागमुख** पु० छागस्य मुखमिव मुखमस्य । १कुमारानुचरभेदे २कुमारे कार्त्तिकेये च तस्य षष्ठशिरसश्छागमुखाकारत्वात् तथात्वम् "कुमारास्ते विशाखञ्च पितृत्वे समकल्पयन् । स भूत्वा भगवान् संख्ये रक्षंश्छागमुखस्तदा" भा० व० २२७अ० ।

**छागमित्र** पु० छागस्य मित्रम् । देशभेदे तत्र भवः काश्या० ठक् ञिठ् वा इति । छागमित्रिक तद्भवे त्रि० स्त्रियां ठञि ङीप् ञिठि टाप् ।

**छागरथ** पु० छागो रथोऽस्य । छागवाहने वह्नौ हेमच० ।

**छागल** पुस्त्री छगल एव प्रज्ञा० अण् । १छागे पशुभेदे । छगलस्यार्षे गोत्रापत्यम् अण् । २आत्रेये ऋषिभेदे आत्रेयभिन्ने तु छागलिरित्येव छगलशब्दे दृश्यम् । स्वार्थे क । तत्रार्थे संज्ञायां कन् । "श्वेतं सुपाकं समदीर्घवृत्तंमि शल्कलं छागलकं वदन्ति । गवे हिकरटं फिल तस्य पृष्ठे कपटं सुपथ्यो रुचिदोऽन्तमद" राजनि० उक्ते ४मत्स्यभेदे

**छागलाद्यघृत** न० चक्रदत्तोक्ते छागमांसपक्वे घृतभेदे यथा "छागमांसतुलां गृह्य साधयेन्नल्वणाम्भसि । पादशेषेण तेनैव घृतप्रस्थं विपाचयेत् । ऋद्धिवृद्धी च मेदे द्वे जीवकर्षभकौ तथा । काकोली क्षीरकाकोली पृथक् कल्कैः पलोन्मितैः । सम्यक् सिद्धे स्ववतार्य्य शीते तस्मिन् प्रदापयेत् । शर्कराया पलान्यष्टौ मधुनः कुडवं क्षिपेत् । पलं पलं पिबेत् प्रातर्यक्ष्माणं हन्ति

दुर्ज्जयम्। चतुर्थयश्च कासश्च पार्श्वशूलमरोचकम्। स्वरक्षयक्षतोरोग्न श्वास हन्यात् सुदारुणम्”।

“तोयद्रोणद्वितये मांस छागलस्य पलशत पक्त्वा। पाद-शेषं शृतं तस्मिन् विपचेद् घृत प्रस्थम्। कल्केन जीवनीयानां कुडवेन तु मांसरसैर्विरिदम्। पित्तानिल निहन्यात् तच्चापि रक्तयोनिज पीतम्। श्वास कासारुचौ यक्ष्माणं पार्श्वरुजां घोराम्। ऊर्ध्वप्रवाय-शोष शमयति चैवापरं किञ्चित्। छागपलदशमूलक्षीरे दंष्ट्रा च साधित सर्पिः। सक्षार यद्महत् कास-श्वासोपशान्तये परमम्’। भैषज्यरत्नावल्यां विशेषो यथा “छाग चर्म्म विनिर्मुक्तं खुरशृङ्गमलादिकम्। पञ्चमूली द्वयञ्चैव जलद्रोणे विपाचयेत्। तेन पादावशेषेण घृत प्रस्थं विपाचयेत्। जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरी। छागलाद्यमिद नाम्ना सर्ववातविकारनुत्। अर्द्दिते कर्णशूले च बाधिर्य्ये मूकमिन्मिने। जडगद्गद-पङ्गूनां खञ्जे स्तम्भविशुद्धयो। अपतानेऽपतन्त्रे च बधिरेतत् प्रशस्यते। गृध्रसीं तथा पङ्गुमूकहन्याजर्गा-षयो। भिक्काद्य सन्निरुद्धेष्वे क्वाचे पादापगेपिते’। “छागमांसतुलां गृह्य दशमूल्या पल शतम्। चत्र गन्धपलशतं पाषाणभेदक तथा। एतावत् पचेत्तो यैवत्तुभींगावशेषिते। क्षीरं स्नेहसम दद्यात् शता वर्य्या रस तथा। ताम्रपात्रे दृढे चैव मन्देनाग्निना पचेत्। अस्यौषधस्य कल्कस्य प्रत्येक शुक्तिसम्मितम्। जीवन्ती मधुक द्राक्षा काकोल्यौ नीलकुल्लवम्। सचन्दनं रास्ना पर्णिनीद्वय शारिवे। मेदे द्वे च तथा कुष्ठ जीवकर्षभकौ शटी। दार्व्वी प्रियङ्गु त्रिफला नत तालीसपद्मकौ। एलाम्न मरी नागजातीकुसुम धान्यकम्। मञ्जिष्ठा दाडिमं दारु रेणुकं शैल-वालुकम्। विड़ङ्ग जीरकञ्चैव पेषयित्वा विनिः-क्षिपेत्। वस्त्रपूते च शीते च शर्करापस्थसंयुतम्। निधापयेत् स्निग्धभाण्डे चार्द्रे वा भाजने शुभे। अस्यौ-षधस्य सिद्धस्य शृणु वीर्य्यमतःपरम्। देवदेवं नमस्कृत्य सपूज्य गणनायकम्। पिवेत् प्राणिनस्तस्य व्याधि मीष्मानुपानतः। सर्ववातविकारेषु अपस्मारे विशेषतः। उन्मादे पक्षघाते च आध्माने चोष्ठभिद्गे। कर्णरोगे शिरोरोगे बाधिर्य्ये चापतन्त्रके। भूतोन्मादे च स्तम्भस्तो क्रोष्टुके चाक्षिपातजे। पार्श्वशूले च कुब्जे वाह्यायामहिते तथा। वातकण्टकहृद्रोगमूत्रकृच्छ्रे सपङ्गुके। क्रोष्टुशीर्षे तथा खञ्जे कुब्जे चाध्मानमिन्मिने। अपतानेऽन्तरायामे रक्तपित्ते तथोरुगे। आनाह-ऽर्शोविकारेषु चातुर्थकज्वरेऽपि च। हनुभङ्गे तथा शोषे क्षीणे चैवापचाण्डुके। दन्तापतानके भग्ने दाहे चाक्षेपके तथा। जीर्णज्वरे विषे कुष्ठे शेफसश्च मदात्यये। आढ्यवातेऽग्निमान्द्ये च वातरक्तगदेषु च। एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे। हस्त कम्पे शिर कम्पे जिह्वाकम्पे जडे भ्रमे। क्षीणेन्द्रिये नष्टशुक्रे शुक्रनि सरणे तथा। स्त्रीणां गर्भाशपाते च षण्ढे चालिङ्गन्ते। एकाङ्गस्पन्दने चैव सर्वाङ्गस्पन्दने तथा। नानाविधजनिते वाते स्रोपामलाप्रिदेश्च। आभिचारिकदोषे च धनमन्त्रापहारे। ये वातप्रभवा रोगा ये च पित्तसमुद्भवा। शिरोमध्यगता ये च अङ्गप्रत्यङ्गसम्भिता। नानावर्णाभिभूतश्च विशुध्य विशुच्यति। प्रक्षीणशुक्रमांसस्य न कर्म गमनक्षम। एतेनानेन सिध्यन्ति यक्षुनक्तिदिवाकरान्। निहन्ति सकलान् रोगान् घृत परमदुर्लभम्। रसायनं वह्नि-बलप्रदञ्च वपुप्रकर्षं विदधाति रूपम्। दन्ता-वलेन्द्रैश्च समानतेजा दीर्घायुष पुत्रवत करोति। स्त्रीणां शत गच्छति वातिरेक न याति क्षीण वसन्त समाहुः। अपुत्रिणो पुत्रशतं करोति शतायुष कामसमं बलिष्ठम्। महत् घृत नाम तु छागलाद्य विनिर्मितं वातनिषूदनञ्च। शिव शुभ रोगशताप-हञ्च चकार हारीतमुनिर्विशिष्टः। स्नानावसाने च पाके सुगन्धं तत्र दापयेत्। मयूरो जम्बुको छागो वीर्य्यहीना स्वभावत। भाषित काशिराजेन छाग-मेव नपुंसकम्’। [छागपु०।

छागवाहन पु० छागो वाहनमस्य। वह्नौ त्रिका०। [स्फुटा

छात त्रि० छो-क्त। १छिन्ने २दुर्बले अमरः। “छाततरास्तु-

छात्त्र पु० छत्त्र गुरोर्दोषावरणं शीलमस्य अण्। च। १अन्तेवासिनि शिष्ये २मधुभेदे न “वरटाः कपिलाः पीताः प्रायोहिमवतोवने। कुर्वन्ति छत्त्राकारं तु तज्जं छात्त्रं मधु स्मृतम्। छात्त्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु। स्वादुपाक क्रिमिघ्न च रक्त-पित्तप्रमेहजित्। भ्रमतृण्मोहविषहृत् तर्पणञ्च गुणा-धिकम्” भावप्र०। [अल्पके मन्दे मिश्रे हारा०।

छात्त्रगण्ड पु० छात्त्रो गण्ड इव। पद्यस्य पादमात्रवेत्तरि

छात्त्रदर्शन न० छात्त्र मधुभेद इव दृश्यते दृश-कर्म्मणि

ल्युट्। १मधुरत्याखादे हैयङ्गवीने शब्दच०। ६त० २शिशस्य दर्शने च।

**छागश्यंसक** पु० छागो ध्वंसक मयू० परनि०। मन्द्रशिपद्रे

**छात्रि** स्त्री पु०छद-क्तिन्। छादने। कर्त्तरि क्तिप्। २छादके अस्य शालाशब्दे परे "छात्र्यादयः शालायाम्" पा०। आद्युदात्तता। छात्रिशाला "यद्यपि शालान्त तत्पुरुषे नपुंसकलिङ्गोभवति तदापि "तत्पुरुषे शालायां नपुंसके" पा० इत्येतस्मात् पूर्वविप्रतिषेधेनायमेव स्वर छात्रिशालम्" सि० कौ०

**छात्र्यादि** पु० "छात्र्यादय शालायाम्" पा० शालान्त तत्पुरुषे आद्युदात्तत्वनिमित्ते शब्दगणे स च गण छात्रि पेलि भाण्ड व्याडि व्यासण्डि व्याटि गोमि" छात्रिशाला छात्रिशालम्।

**छाद** न० छादयति चु० छद-अच्। पटले (छात्) चाल। इतिख्याते पदार्थे जटाधरः।

**छादन** पु० चु०—छद-ल्यु। १नीलाम्लानवृक्षे। भावे ल्युट्। २छादने। "छादनार्थं प्रकीर्णश्च कटैश्च तृणसङ्कुलैः" हरिवं० ६६अ०। करणे ल्युट्। ३पत्रे न० राजनि०। "छादने पक्षदारुणि" अमरनिर्देशात् कर्त्तरि ल्यु। ४छादके त्रि०। "फणाभृता छादनमेकमोकसाम्" माघ.।

**छादित** त्रि० छद-क्त "वादान्तत्यादिना पक्षे णिलोभाव। आच्छादिते वस्ते। [ठक्। स्वणे।

**छादिषेय** न० छदिषे हितम् "छदिरुपधिबलेर्ढञ्" पा०।

**छाद्मिक** त्रि० छद्मना चरति व्यवहरति ठक्। १कापटिके कपटव्यवहारिणि "धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भक" मनु।

**छान्दड** पु० ऋषिभेदे

**छान्दस** पु० छन्दोऽधीते वेत्ति वा पत्ते अण्। वेदाध्येतरि १श्रोत्रिये अमरः। छन्दसो व्याख्यानो ग्रन्थः तत्रभवो वा अण्। २वेदव्याख्याने ग्रन्थे ३वेदभवे च त्रि०। तस्येदम् अण्। ४वेदसम्बन्धिनि त्रि० स्त्रियां सर्व्वत्र ङीप्। "छान्दसीभिरुदाराभि स्तुतिभिः (ऋर्षौ) समलङ्कृत (वराह)" हरिव० २२३अ०। छान्दसः प्रयोगः। ततो मनोज्ञा० भावे वुञ्। छान्दसिका छान्दसभावे स्त्री।

**छान्दोग्य** न० छन्दोगानां धर्म्मं आम्नाय समूहो वा "चरणेभ्यो धर्म्मवत् पा० छन्दोगोक्थेभ्योञ्य" पा०ञ्य। छन्दोगानामाम्नायभेदे उपनिषद्रूपे। उपनिषच्छब्दे १२२३४० द्रष्टव्यम्। तेषां २धर्म्मे ३समूहे च।

**छान्दोमिक** त्रि० छन्दोमस्येदम् ठक्। यज्ञभेदसम्बन्धिनि १सूक्ते २अहनि च "छान्दोमिक सूक्तम्" निरु० ७।२१। "अहनी च्छान्दोमिके" २२।६।२२ कात्या० श्रौ०कर्क

**छाया** स्त्री छो—ण। १आतपाभावे २प्रतिबिम्बे ३सूर्य्यपत्नीभेदे संज्ञाप्रतिकृतौ ४कान्तौ च अमरः ५पालने ६उत्कोचे ७पङ्क्तौ मेदि०। ८कात्यायन्या शब्दरत्ना०। ९तमसि हेमच०। तत्र अनातपे "छायामिव शान्तुगता मिषेव्य" कुमा०। "छायामच्छामच्छति सलिलस्य" माघः "छायेव तस्यानुगतिश्च पश्चात्" नैष०। "स्वं रागादुपरि वितन्वतोत्तरीयम्। कान्तेन प्रतिपदवारितातपाया। स च्छत्रादपरविलासिनीसमूहाच्छायासीदधिकतरा तदा परस्या" माघ।

"गुहा प्रविष्टौ सुकृतस्य लोके छायातपौ ब्रह्मविदो वदन्ति" श्रुति संज्ञाप्रतिकृतिच्छायाकथा हरिव०९अ०। "स वै विवस्वत पूर्व्वं त्वाष्ट्रदेव० प्रजापति। यमश्च यमुना चैव यमजौ संबभूवतु। श्यामवर्णं च तद्रूपं संज्ञा दृष्ट्वा विवस्वतः। असहन्ती तु स्वां छायां सवर्णां निर्ममे तत। मायामयी तु सा संज्ञा तस्याश्छायासमुत्थिता। प्राञ्जलि प्रणता भूत्वा छाया संज्ञा नरेश्वर!। उवाच किं मया कार्य्यं कथयस्व शुचिस्मिते!। स्थिताऽस्मि तव निर्देशे शाधि मां वरवर्णिनि!। संज्ञोवाच अहं यास्यामि भद्रन्ते स्वमेव भवनं पितुः। त्वयेह भवने मह्यं वस्तव्य निर्व्विकारया।

इमौ च बालकौ मह्यं कन्या चेयं सुमध्यमा। सभाव्यास्ते न चाख्येयमिदं भगवते क्वचित्। छायोवाच। आ कचग्रहणाद्देवि! आ शापान्नैव कर्हिचित्। आख्यास्यामि मत तुभ्य गच्छ देवि। यथासुखम्। वैशम्पायन उवाच। समादिश्य सवर्णान्तु तथेत्युक्ता तया च सा। त्वष्टु समीपमगमद्व्रीडितेव तपस्विनी। पितु समीपगा सा तु पित्रा निर्भर्त्सिता तदा। भर्त्तु समीप गच्छेति नियुक्ता च पुन पुन। अगच्छद्वडवा भूत्वाऽऽच्छाद्य रूप मनिन्दिता। कुरूनथोत्तरान् गत्वा तृणान्यथ चचार ह। द्वितीयायान्तु संज्ञाया संज्ञेयमिति चिन्तयन्। आदित्यो जनयामास पुत्रमात्मसमं तदा। पूर्वजस्य मनोस्तात सदृशोऽयमिति प्रभु। मनुरेवाभवन्नाम्ना सावर्ण इति चोच्यते। द्वितीयोयः सुतस्तस्या स विज्ञेयः शनैश्चरः। सतत पार्थिवो तात। स्नेह पुत्रस्य वै तदा। चकाराभ्यधिक स्नेह न तथा पूर्व्वजेषु वै। मनुस्तस्याश्च

सतस्तु यमस्तस्या न चक्षमे । तां स रोषाच्च बाल्याच्च भाविनोऽर्थस्य गौरवात् । पदा सन्तर्जयामास छायां वैवस्वतो यमः । स शशाप ततः क्रोधात् सावर्णिजननी यमः । चरणः पततामेष तवेति भृशदुःखिता" ।

छाया च तमोरूपद्रव्यान्तरमिति मीमांसकाः । तेन "त्व दूरमपि गच्छन्ती हृदयं न जहासि मे । दिवावसानच्छायेव पुरोमूलं वनस्पतेः" शकु० । छाया नीलतरुस्था चलच्छते" नैयायिकास्तु तेजःसामान्याभाव एव तमश्छायादिकमङ्गीचक्रुः तत्र नीलादिकमौपचारिकम्" "अत्र च तेजःसामान्याभावप्रयोजकस्य छायासम्बन्धित्वम् यथा वृक्षस्यातपसम्बन्धनिरोधात् छायासम्बन्धित्वं तथा च वृक्षप्रयुक्तातपाभावः" इति बोध्यम्

"छाया बाहुल्ये" पा० । छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वपदार्थबाहुल्ये" इक्षूणां छाया इक्षुच्छायम् सि० कौ० । अत्र बाहुल्यमित्यपेक्षायां छायायां निमित्तभूतावरकद्रव्याणामेव बाहुल्यमपेक्षितम् तत्र षष्ठी तत्पुरुषे पूर्वपदार्थगतमित्याशयेन पूर्वपदार्थस्योक्तम् । "इक्षुच्छायानिषादिन्य" इत्यत्र व्याचक्षते" सि० कौ० । "आवरकद्रव्यस्यैकत्वे तु "विभाषा सेनासुराच्छायेत्यादि" पा० वा क्लीवत्वम् कुड्यच्छाया कुड्यच्छायम् ।

आतपाभावश्च तेजःसामान्याभावस्तदाभावे तेन प्रदीपप्रभावरकपदार्थस्य प्रभानिरोधसम्बन्धित्वात् शङ्कुच्छाया नरच्छाया इत्यादि । दीपादिच्छायामानसाधनार्थो व्यवहारः छायाव्यवहारः तत्र करणसूत्रं लीला० उक्तं यथा । "अथ छायाव्यवहारे करणसूत्रं वृत्तम् । छाययोः कर्णयोरन्तरे ये तयोर्वर्गविश्लेषभक्ता रसाद्रीषवः । सैक लब्धे पदघ्नन्तु कर्णान्तरं भान्तरेणोनयुक्तं दले स्तः प्रभे । उदाहरणम् । नन्दचन्द्रैर्मितं छाययोरन्तरं कर्णयोरन्तरं विश्वतुल्यं ययोः । ते प्रभे वक्ति यो युक्तिमान् वेत्त्यसौ व्यक्तमव्यक्तयुक्तं हि मन्येऽखिलम् । न्यासः




छायान्तरं । १९ । कर्णान्तरम् । १३ । अनयोर्वर्गान्तरेण । १९२ । भक्ता रसाद्रीषव ।५७६। लब्धं ३। सैक ४ । पदम् । २ । अनेन कर्णान्तर ।१३। गुणित । २६ । द्विष्ठ । २६ । भान्तरेण । १९ । ऊनयुत ।७। ४५ । तदर्द्धे क्रमेण छाये ७/२ ४५/२ तत्कर्णयोर्योगपदमित्यादिना जातौ कर्णौ २५/२ ५१/२ । छायान्तरे करणसूत्रं वृत्तार्द्धम् । शङ्कुः प्रदीपतलशङ्कुतलान्तरघ्नश्छाया भवेद्विनरदीपशिखौच्च्यभक्तः ।

उदाहरणम् । शङ्कुप्रदीपान्तरभूस्त्रिहस्ता दीपोच्छ्रितिः सार्द्धकरत्रया चेत् । शङ्कोस्तदा काङ्गुलसम्मितस्य तस्य प्रभा स्यात् कियती वदाशु । न्यासः




शङ्कुः १/२ प्रदीपशङ्कुतलान्तर ३ अनयोर्घात ३/२ विनरदीपशिखौच्च्येन । ३ । भक्तो लब्धानि छायाङ्गुलानि । १२ । अथ दीपोच्छ्रयानयनाय करणसूत्रं वृत्तार्द्धम् । छायाहृते तु नरदीपतलान्तरघ्ने शङ्कौ भवेन्नरयुते खलु दीपकौच्च्यम् ।

उदाहरणम् । प्रदीपशङ्क्वन्तरभूस्त्रिहस्ता छायाङ्गुलैः षोडशभिः समा चेत् । दीपोच्छ्रितिः स्यात् कियती वदाशु प्रदीपशङ्क्वन्तरमुच्यतां मे । न्यासः




शङ्कुः । १२ । छायाङ्गुलानि । १६ । शङ्कुप्रदीपान्तर

हस्ताः । २ । लब्धं दीपकौच्च्यं हस्ताः ११/४ । प्रदीपशङ्क्वन्तरभूमानानयनाय करणसूत्रं वृत्तार्द्धम् । विशङ्कुदीपोच्छ्रयसङ्गुणा भा शङ्कूद्धृता दीपनरान्तरं स्यात् । उदाहरणम् । पूर्वोक्तएव दीपोच्छ्राये ११/४ शङ्कुश्चानि । १२ । छाया । १७ । लब्धाः शङ्कुप्रदीपान्तरहस्ताः । ७ ।

छायाप्रदीपान्तरदीपौच्च्यानयनाय करणसूत्रं सार्द्धवृत्तम् । छाययोरन्तरसङ्गुणा भा छायाप्रमाणान्तरहृद्भवेद्भूः । भूशङ्कुघात प्रभया विभक्त प्रजायते दीपशिखौच्च्यमेवम् । त्रैराशिकेनैव यदेतदुक्तं व्याप्तं स्वभेदैर्हरिणेव विश्वम् । उदाहरणम् । शङ्कोर्भार्कमिताङ्गुलस्य सुमते । दृष्टा किलाष्टाङ्गुला छायाग्राभिमुखे करद्वयमिते न्यस्तस्य देशे पुनः । तस्यैवार्कमिताङ्गुला यदि तदा छायाप्रदीपान्तरं दीपौच्च्यञ्च कियद्वद व्यवहृतिं छायाभिधां वेत्सि चेत् । न्यासः




अत्र छाययोरन्तरमङ्गुलात्मकं । ५२ । छाये च । ८ । १२ । अनयोरन्तरा । ८ । इयमनेन । ५२ । गुणिता । ४१६ । छायाप्रमाणान्तरेण । ४ । भक्ता लब्धं भूमानम् ।१०४। इदं प्रथमच्छायाप्रदीपतलयोरन्तरमित्यर्थः । एवं द्वितीयच्छायाप्रमाम । १५६ । भूशङ्कुघात प्रभया विभक्तइति जातमुभयतोऽपि दीपौच्च्यं सममेव हस्ताः ६/१/२ एवमित्यत्र छायाव्यवहारे त्रैराशिककल्पनयाऽऽनयनं वर्त्तते तद्यथा । प्रथमच्छायातोद्वितीयच्छाया । । १२ । यावताधिका तावता छायावयवेन यदि छायापान्तरतुल्या भूर्लभ्यते तदा छायया किमिति एवं पृथक् पृथक् छायाप्रदीपतलान्तरप्रमाणं लभ्यते । ततोद्वितीयत्रैराशिकं यदि छायातुल्ये भुजे शङ्कुः कोटिस्तदा भूतुल्ये भुजे किमिति लब्धं दीपकौच्च्यमुभयतोऽपि तुल्यमेव । एवं पञ्चराशिकादिकमखिलं त्रैराशिककल्पनयैव सिद्धम् ।

"भवेत्सैव (मेघविस्फूर्जितैव) च्छाया तयुगगयुता स्याद्द्वादशान्ते यदा" इत्युक्ते ऊनविंशत्यक्षरपादके १० छन्दोभेदे च ।

शङ्कुछाया हि दिग्देशकालज्ञानोपायः यथोक्तं त्रिप्रश्नाधिकारे सूर्यसिद्धान्तरङ्गनाथाभ्याम् । तत्र च त्रयाणां दिग्देशकालानां प्रश्ना त्रिप्रश्नाः तेषामधिकार इति त्रिप्रश्नशब्दार्थः । तत्रादौ दिग्ज्ञानमाह ।

"शिलातलेऽम्बुसंशुद्धे वज्रलेपेऽपि वा समे । तत्र शङ्क्वङ्गुलैरिष्टैः समं मण्डलमालिखेत् । तन्मध्ये स्थापयेच्छङ्कुं कल्पनाद्वादशाङ्गुलम् । तच्छायाग्रं स्पृशेद्यत्र वृत्ते पूर्वापरार्द्धयो । तत्र बिन्दू विधायोभौ वृत्ते पूर्वापराभिधौ । तन्मध्ये तिमिना रेखा कर्त्तव्या दक्षिणोत्तरा । याम्योत्तरदिशोर्मध्ये तिमिना पूर्वपश्चिमा । दिङ्मध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि" । सू॰ सि॰ "तत्र दिक्साधनोपक्रमे प्रथममम्बुसंशुद्धे जलवत्समीकृते शिलाप्रदेशे । अपि वाथ वा तदभावेऽन्यत्र वज्रलेपे चत्वरादौ घर्षणादिना समस्थाने कृते शङ्क्वङ्गुलैः शङ्कुस्थाङ्गुलविभागमानग्रहीतैरभीष्टसङ्ख्याकाङ्गुलैर्व्यासार्द्धरूपैर्वृत्तमण्डलमालिखेत् । सर्वत केन्द्राद्वृत्तपरिधिरेखा तुल्या यथा स्यात् तथेत्यर्थः । ततस्तन्मध्ये तस्य वृत्तस्य केन्द्ररूपमध्ये कल्पनया द्वादशसङ्ख्याकाङ्गुलानि तुल्यानि यस्मिन्स्त द्वादशविभागाङ्कितमित्यर्थः । शङ्कुं समतलमस्तकपरिधिकाष्ठदण्डं स्थापयेत् । तत्र पूर्वापरार्द्धयोर्दिनस्य प्रथमद्वितीयभागयोस्तच्छायाग्रं स्थापितशङ्कोश्छायान्तप्रदेशो मण्डलपरिधौ यस्मिन् विभागे स्पृशेत् । दिनस्य प्रथमविभागेऽनुच्चा छायाह्रासाद्वृत्ते यत्र प्रविशति, दिनस्यापरार्द्धे छायावृद्ध्या वृत्ते यत्र निर्गच्छतीत्यर्थः । तत्र निर्गमनप्रवेशस्थानयोरुभौ द्वौ बिन्दू पूर्वापरसञ्ज्ञौ क्रमेण वृत्ते परिधिरेखायां कृत्वा तन्मध्ये पूर्वापरबिन्द्वन्तरमध्ये तिमिना मत्स्येन रेखा कार्या सा दक्षिणोत्तररेखा भवति । मत्स्यस्तु बिन्द्वन्तरालस्वल्पितेन व्यासार्द्धेन बिन्दुद्वयकेन्द्रकल्पनेन वृत्तद्वयं निष्पाद्य वृत्तद्वयसंयोगाभ्यां वृत्तद्वयपरिधिविभागाभ्यामन्तर्गतं मत्स्याकारं स्थानं भवति । तत्रैकः संयोगो मुखं पाश्चात्त्यभागसम्मार्जनेन, अपरसंयोगस्तु पुच्छमितरवृत्तभागद्वयसम्मार्जनेन । मुखपुच्छाग्रस्पृग्वी रेखा दक्षिणोत्तररेखा । तत्र पूर्वबिन्दोः सव्यं रेखाग्रं दक्षिणा दिक् । पश्चिमबिन्दोः सव्यं रेखाग्रमुत्तरा दिक् ।

स्यमन्तरं पूर्ववत् मत्स्यद्वयं सम्पादनीयम् । शङ्कुरपि तत्स्थानादविचाल्य इति केवला दक्षिणोत्तररेखा स्थितेति तात्पर्य्यम् । दक्षिणोत्तरदिशोर्मध्यस्थाने तिमिना दक्षिणोत्तररेखामितेन व्यासार्द्धेन दक्षिणोत्तरस्थानाभ्यां पूर्ववत् प्रत्येकं वृत्तं विधाय पूर्ववत् सिद्धेन मत्स्येनेत्यर्थः । पूर्वपश्चिमा रेखा कार्या । तत्र पूर्वविन्दोरासन्न रेखाग्रं पूर्वा, पश्चिमविन्दोरासन्न रेखाग्रं पश्चिमेति मत्स्यद्वयमानेन केवला पूर्वापररेखापि सिद्धा । अथ रेखाद्वयो-गस्थानाद्दिक्साधनोपक्रमोक्त पूर्ववृत्तप्रवेशेन तद्वृत्तप-रिधौ यत्र रेखा लग्ना तत्र दिगिति तद्वृत्तमध्यस्य दिक्-चतुष्टयं वृत्ते सिद्धम् । तद्वत् यथा दक्षिणोत्तराभ्यां पूर्वापरा साधिता तत्प्रकारेणैवेत्यर्थः । एवकारोऽन्य-प्रकारनिरासार्थः । हि निश्चयेन । 'विदिशः कोण-दिशो दिशां पूर्वादिविदिशां ये मध्यमत्स्या व्यवस्थितदिग्द्वयान्तरोत्पन्ना लघववृत्ते तैः साध्या सम्यक्प्रकारेण साध्या । रेखाद्वयसम्पातयोगस्थानेन ज्ञेया । अत्रोपपत्तिः । क्षितिजपूर्वापरवृत्त सम्पातौ पूर्वापरविभागस्थौ पूर्वापरदिशौ तत्र पूर्वापरविभाग-ज्ञानं सूर्य्योदयास्ताभ्यां तत्र क्षितिजे पूर्वापरवृत्त-स्थलज्ञानमिति ज्ञानं तु विषुवद्वृत्तक्रान्तिवृत्तसम्पा-तस्थसूर्य्यस्योदयास्तस्थलज्ञानेन विषुवद्वृत्तस्य पूर्वापर क्षितिजवृत्तसम्पातयोः सम्बद्धत्वात् । अथान्यस्मिन् दिने सूर्य्यस्योदयास्तावग्रान्तरेण याम्योत्तरे भवत इति सूर्य्योदयास्तस्थानाभ्यामग्राग्रान्तरेणोत्तरयाम्ये पूर्वापर-स्थानं भवतीति क्षितिजस्य मण्डलत्वाद्दूरत्वाच्च तद्दानेन पूर्वापरज्ञानमयथार्थत्वात् सूक्ष्मेण स्वाभीष्टप्रदेशे तज्ज्ञा-नार्थमभीष्टसमस्थले क्षितिजानुकारं वृत्तं कृतम् । तत्रापि सूर्य्योदयास्तसमसूत्रेण स्थलज्ञानस्य दुःशकत्वात् छायार्थं शङ्कुः स्थाप्यः । तथापि सूर्य्योदये छायानन्त्याद्वृत्तपरिधौ तत्प्रवेशाभावः । परन्तु यथा यथा सूर्य्य ऊर्द्ध्वं भवति तथा तथा छायाह्रासात्तत्र छाया वृत्तपरिधौ यदा प्रविशति तत्स्थानात् तात्कालिको वक्ष्यमाणभुजो व्यस्तोऽर्द्धज्याकारेण देयस्तद्वृत्तक्रमज्या यत्र परिधिप्रदेशे लगति तत्र शङ्कुस्थानस्य पश्चिमा । छायायाः पूर्वा परसूत्राद्भुजान्तरेण याम्योत्तरपतनात् सूर्य्यापरदिशि छायापतनाच्च । एवं दिनापरार्द्धे सूर्य्यो यथा यथाध-श्चरति तथा तथा छायावृद्धेः शङ्कुच्छायावृत्तपरिधौ यत्र यदा निर्गच्छति तात्कालिको वक्ष्यमाणभुजो व्यस्तो-ऽर्द्धज्याकारेण तत्स्थाने देयस्तद्वृत्तक्रमज्या यत्र परिधि-प्रदेशे लगति तत्र शङ्कुस्थानस्य पूर्वा । तत्सूत्रं पूर्वापर-सूत्रम् । इदं शङ्कोरुपलक्षणत्वेन ज्ञानं तथा छायोप-लक्षणेनापि प्रदेशस्य पूर्वापरसूत्रज्ञानम् । तथा हि । यत्र छाया प्रविशति तत्रापरा, छाया यतो निर्गच्छति तत्र पूर्वा । तत्रापि प्रवेशनिर्गमयोरेककालत्वाभावात्ता-त्कालिक प्रवेशतत्काले छायायाः पश्चिमत्व तत्र वस्तु-भूत तत्काले निर्गमनस्य पूर्वत्वाभावः । एवं निर्गम काले निर्गमस्थानस्य पूर्वत्व वस्तुभूत तत्काले प्रवेशस्य पश्चिमत्वासम्भव । एककालिकचिह्नद्वयसम्भयोरेकतर चिह्नं चाल्यं तात्कालिकभुजयोरन्तरेण तत्र पूर्वचिह्नं भुजान्तराङ्गुलैरयनदिशि चाल्यम् । पश्चिमचिह्नं वा व्यस्तायनदिशि चाल्यम् । तत्सूत्रं तन्मध्यदेशस्य पूर्वा-परसूत्रम् । एतन्मध्ये स्थापितशङ्कोश्छायाप्रवेशनिर्गम-चिह्नाभ्यां यथोक्तरीत्या भुजदानेन सिद्धपूर्वापरसूत्रेणा-भिन्नत्वात् । तदुक्तं सिद्धान्तशिरोमणौ "तत्काला-पमजीवयोस्तु विवराङ्गाकर्णभिन्या हतात् लम्बज्याप्त-मिताङ्गुलैरयनदिश्यैन्द्री स्फुटा चालिता" इति । तदेतद्भगवता शोकानुकम्पया स्वल्पान्तरत्वादेकतरविन्दु-चालनं नोक्तं सुधाधि किञ्चित्स्थूलत्वेन निर्गमप्रवेश-विन्दू पूर्वापराभिधावुक्तौ । एवञ्चाभीष्टस्थान प्रवेश-निर्गमसूत्रमध्ये यथा भवति तथानेन प्रकारेण वक्ष्यमाण-केन्द्रशङ्कुस्थापनादिनाऽभीष्टप्रदेशे पूर्वापरदिशौ साध्ये इति । तन्मध्ये दक्षिणोत्तररेखाविन्दुद्वयोत्पन्नमध्य-मत्स्यरेखयैवेति । याम्योत्तरमध्ये पूर्वापरा रेखा तद्वृ-त्तमध्यमत्स्येनेति याम्योत्तरदिशोरित्यादि सम्यगुक्तम् । ननु पूर्वापरविन्दुभ्यां मत्स्येन या दक्षिणोत्तररेखा तद-ग्राभ्यां मत्स्येन रेखा पूर्वापरविन्दुस्पृष्टैवेति पूर्वं तथा एव विन्वन्तरत्वेन सिद्धत्वात् पुनः साधनं व्यर्थ-मन्यथा दक्षिणोत्तररेखाया अव्यवस्थितत्वापत्तेरिति चेत् सत्यम् । दक्षिणोत्तररेखाग्रद्वयमेव पूर्वापरविन्दुस्पृष्ट-रेखाया पुनः साधनमिति केचित् । वस्तुतस्तु दक्षि-णोत्तरपूर्वापरसूत्रसम्पातरूपाभीष्टस्थानात् केन्द्रात् प्रा-गुक्तवृत्तस्य वक्ष्यमाणोपयोगित्वेनावश्यकत्वात् तस्य च पूर्वापरविन्वन्तरसूत्राधिकव्यासत्वाद्विन्वन्तररेखा भुजा-पयोर्वर्द्धनीया सा तत्र वृत्ते पूर्वापररेखा भवति । तस्या विन्द्वोरुपर्यधश्च मत्स्य कदाचित् स्यादतः प्रथम-मेव पूर्वरेखाग्रद्वयं विन्वन्तरविस्तृतवृत्तवशुद्धत-

रेखाया विच्छिन्नतराधिकत्वेन तदुत्पन्नमत्स्यरेखाया ऋज्व्याः सुतरामधिकत्वेन पुनः पूर्व्वापररेखासाधनं युक्ततरमिति तत्त्वम् । एवमेवाव्यवहितदिग्द्वयान्तरोत्पन्नलघुमत्स्यैश्चतुर्भिः सूत्रैः कोणा इति । तदिदमभीष्टस्थानकेन्द्रकमण्डले दिगष्टक सिद्धम् ॥ अथ दिक्सूत्रसम्पातरूपाभीष्टस्थानात् तात्कालिकच्छायाप्रसाधनमाह" र°ना°

"चतुरस्रं बहिः कुर्य्यात् सूत्रैर्मध्याद्विनिर्गतैः । भुजसूत्राङ्गुलैस्तत्र दत्तैरिष्टप्रभा स्मृता" सू° सि° ।

'मध्यादभीष्टस्थानाद्दिग्रेखासम्पातरूपाद्विनिर्गतैर्निःसृतैर्दिग्रेखारूपैः । बहिर्दिक्सूत्रसम्पातकेन्द्रवृत्ताद्बहिः । अनेनैव वृत्तकरणं पूर्व्वमुक्तं द्योतितम् । अन्यथा बहिरित्यस्यानुपपत्तेः । पूर्व्ववृत्ताग्रहणे तु दिग्रेखासम्पातस्य मध्यत्वानुपपत्तेः । चतुरस्रं कोणरेखाधिकसूत्रकर्णद्वयतुल्यं समचतुर्भुजं कुर्य्यात् । यथा च तद्दर्शनम् । तत्र चतुरस्रे भुजसूत्राङ्गुलैर्वक्ष्यमाणभुजमितसूत्रस्याङ्गुलैर्निर्गमप्रवेशकालिकैर्दत्तैः पूर्व्वापरसूत्रतदर्धव्यासवृत्तीयमानैस्तत्र वृत्ते यस्मिन् प्रदेशे भुजाग्रं तत्प्रदेशे इष्टप्रभा निर्गमप्रवेशान्यतरकालिकच्छायाप्रसक्ता । प्रतीतिस्तु दिक्सूत्रसम्पातस्थशङ्कुना ज्ञेया । अत्रोपपत्तिः । वक्ष्यमाणभुजस्य छायाग्रपूर्व्वापरसूत्रान्तरत्वेन प्रतिपादितत्वादिष्टच्छायाप्रसक्तादिशा स्यात् सम्यक् । चतुरस्रकरणं वक्ष्यमाणोपसाधकप्राच्यपररेखानुकाररेखाया वृत्तान्तस्थाद्बहिर्यां ऋजुत्वसिद्ध्यर्थमिति । अथ पूर्व्वापररेखायाः संज्ञान्तरमाह" र° ना° ।

"प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डलम् । उन्मण्डलञ्च विषुवन्मण्डलं परिकीर्त्त्यते" सू° सि° ।

"प्राक्पश्चिमाश्रिता पूर्व्वपश्चिमसम्बद्धा साधिता रेखा सममण्डलमुच्यते । सैव रेखोन्मण्डलं विषुवन्मण्डलम् । चः समुच्चये । उभयसंज्ञक कथ्यते । अत्रोपपत्तिः । क्षितिजपूर्व्वापरवृत्तसंयोगौ पूर्व्वापरे तत्सूत्रं पूर्व्वापरसूत्रमिति । पूर्व्वापरवृत्तस्य भूमावूर्ध्वाधरानुकारित्वेनादर्शनाद्रेखाकारतयैव दर्शनाच्च पूर्व्वापरवृत्तमपि तत्सूत्रम् । पूर्व्वापरवृत्तस्य सममण्डलत्वेनाभिधानात् तद्रेखासममण्डलसंज्ञोक्ता । अथ स्वनिरक्षदेशक्षितिजवृत्तस्योन्मण्डलाख्यस्य तत्संयोगयोः संलग्नत्वात् तन्मध्यसूत्रत्वेन पूर्व्वापरसूत्रस्यापि सत्त्वात् पूर्व्वापरसूत्रस्योन्मण्डलसंज्ञत्वम् । एतेनान्यदेशक्षितिजसंज्ञया स्वदेशक्षितिजसंज्ञा सुतरां सिद्धेति पूर्व्वापरसूत्रस्य क्षितिजवृत्तसंज्ञा द्योतिता । पूर्व्वापरस्थानयोः क्षितिजवृत्तस्य संलग्नत्वादुन्मण्डलवृत्तस्य क्षितिजानुकारित्वाच्च । एवं निरक्षदेशपूर्व्वापरवृत्तं विषुवन्मण्डलाख्यं पूर्व्वापरस्थानयोः संलग्नमिति तन्मध्यसूत्रत्वेनापि पूर्व्वापरसूत्रस्य सिद्धत्वात् पूर्व्वापरसूत्रं विषुवन्मण्डलसंज्ञं क्रान्तिवृत्तस्य इव तस्य च चलत्वात् कादाचित्कत्वेन पूर्व्वापरस्थानसंलग्नत्वात् तत्संज्ञा नोक्तेति ध्येयम् अथाग्राज्ञानमाह" र°ना° ।

"रेखा प्राच्यपरा साध्या विषुवद्भाग्रगा तथा । इष्टच्छायाविषुवतोर्मध्यमग्राऽभिधीयते" सू°सि° ।

"तस्मिन् चतुरस्रे पूर्व्वापररेखातः उत्तरभागे विषुवद्भाग्रगा अक्षभाप्रदेशस्थाक्षभाङ्गुलान्तरितेत्यर्थः । प्राच्यपरा रेखा पूर्व्वापररेखानुकारा रेखा तथा सर्व्वतस्तुल्यान्तरेण यथेष्टच्छायापरेखाभुजान्तरेण तथाक्षभान्तरेण कार्य्या । अनन्तरमिष्टच्छायाविषुवतोरिष्टच्छायाग्ररेखाक्षभारेखयोरित्यर्थः । मध्यं चतुरस्रेऽङ्गुलात्मकमन्तरालं सर्व्वतस्तुल्यम् । अग्रा कर्णवृत्ताग्रोच्यते । अत्रोपपत्तिः । भुजस्य कर्णवृत्ताग्रा पलभासञ्चारेणाग्रे उक्तत्वादुत्तरगोले पलभाधिकोत्तरभुजसद्भावेन पलभोनो भुजोऽग्रेति, प्राच्यपरसूत्रादुत्तरभागेऽक्षभाग्ररेखा भुजमध्ये भवतीति द्वयो रेखयोरन्तरमग्रा पलभोनभुजरूपा । एवमुत्तरगोले उत्तरभुजस्य पलभाल्पत्वाद्भुजोनपलभाग्रेति पलभारेखा प्राच्यपरसूत्रादुत्तरभागस्था भुजरेखातोऽप्यग्रान्तरेणोत्तरदिश्येति द्वयो रेखयोरन्तरं भुजोनपलभारूपं कर्णवृत्ताग्रा । एवं दक्षिणभुजस्य पलभोनाभावात् पलभायुतो भुजोऽग्रेति प्राच्यपरसूत्राद्भुजाग्रपलभाग्ररेखयोः क्रमेण याम्योत्तरत्वात् तयोरन्तरालं पलभाभुजैक्यरूपमग्रा, पलभाया शङ्कुतलानुकल्पत्वात् सदोत्तरत्व छाया सम्बन्धादुक्तम् गोले शङ्कुतलस्य दक्षिणत्वादुत्तरापरदिशि छायासञ्चाराच्च । अतएव प्राच्यपरसूत्राद्दक्षिणभागे दक्षिणभुजवशादक्षभाग्ररेखाकल्पने उक्तानुपपत्त्या उत्तरभागे पूर्व्वापरसूत्रादिति विषुवद्भाग्रगेत्यत्र व्याख्यातम्" अथ प्रसङ्गाज्ज्ञातच्छायातः कर्णज्ञानं तच्चतुर्भिराह र° ना° ।

"शङ्कुच्छायाकृतियुतेर्मूलं कर्णोऽस्य वर्गतः । प्रोज्झ्य शङ्कुकृतिं मूलं छाया शङ्कुर्विपर्य्ययात्" सू° सि°

"द्वादशाङ्गुलशङ्कुच्छाययोर्वर्गयोगात् पदं छायाकर्णः स्यात् । अथास्य प्रतिरूप छायासाधनमाह । अस्येति । छायाकर्णस्य वर्गात् शङ्कुवर्गं चतुश्चत्वारिंश-

दक्षिणं शङ्कुं विशोध्य मूलं छाया। प्रकारान्तरेण छायाकर्णशुद्धिमाह। शङ्कुरिति। विपर्ययाच्छायासाधनवैपरीत्यात् छायाकर्णवर्गात् छायावर्गं विशोध्य मूलमित्यर्थः। शङ्कुर्द्वादशाङ्गुलमितः स्यात्। अत्रोपपत्तिः। द्वादशाङ्गुलशङ्कुः कोटिश्छाया भुजस्तत्कृत्योर्योगपदं कर्णः इत्यत्र कर्णः कर्णे इत्याद्युक्तरीत्योपपन्नम्। ननु दिक्साधनोत्तरमिष्टप्रभायाः कर्णसाधनं भगवता सर्वज्ञेन किमर्थमुक्तमग्रेऽप्यादौ वा स्वतन्त्रतयोक्तत्वात्। न च विना गणितक्रममप्यास्थानार्थमिदं युक्तमुक्तमिति वाच्यम्। वक्ष्यमाणभुजज्ञानस्यापेक्षोपजीव्यत्वेन तस्य च भुजोपजीव्यत्वेनान्योन्याश्रयात् गणितज्ञानापायात् पुनः साधनस्य व्यर्थत्वाच्च। न च भुजसूत्राङ्गुलैर्दत्तैरित्यनेनेष्टच्छायाग्रज्ञानमिति न, किन्त्वेतदुक्त्या दिक्सूत्रसम्पातस्य छायावृत्तपरिधौ छायाग्रज्ञानात् तत्पूर्वापरसूत्रान्तरे भुजसङ्ख्याधिगमा गणितभुजोऽपि ज्ञात इति नान्योन्याश्रय इति वाच्यम्। तथापि भगवतः सर्वज्ञस्य निष्प्रयोजनतोक्तेरनुचितत्वात्। विना प्रयोजनं मन्दोक्तेरप्यभावाच्च। न हि दिक्साधनेऽप्याभुजादिकमावश्यकं येन तदुक्तिर्युक्ता। किन्तु कर्णसाधनस्य गणितोक्त्या वक्ष्यमाणकर्णसाधनतुल्यत्वेनात्र कथनमनुचितम्। न हि दिक्साधनार्थं “आकर्णमित्या वृत्तादिति” सिद्धान्तशिरोमण्युक्तिवद्वा छायाकर्ण उपयुक्तो येन तदुक्तिर्युक्तेति चतुरस्रमित्यादिश्लोकचतुष्टयमन्येन मन्दबुद्धिना क्षिप्तं न भगवतोक्तमिति चेन्नैवम्। भुजसाधनोपजीव्यापाया एतदुक्तप्रकारेण सिद्धौ दिशः सम्यक् सिद्धा इति दिक्साधनशुद्धत्वप्रयासाधनत्वम्। प्रकारान्तरेणापि वक्ष्यमाणत्रिज्यावृत्तीयापया त्रिज्या लभ्यते तत्रानया गतया केन्द्रानुपातेन साधितकर्णस्य यादेन शुद्धत्वगमार्थं कर्णसाधनं प्रोक्तम्। अनयापया कर्णस्तदा त्रिज्यावृत्तीयापया क इति फलस्य त्रिज्यावृत्तस्यानयनार्थं वा कर्णसाधनमिति केचित्। वस्तुतस्तु मण्डले छायाप्रवेशनिर्गमस्थानस्थितपूर्वापरबिन्दुभ्यां प्रत्येकं रेखेभि रेखाद्वयं सर्वत्र तुल्यान्तरं कार्यं रेखान्तरेणायतरौ बिन्दुसाध्यस्तौ पूर्वापरबिन्दू तद्रेखाबध्यस्थानस्य पूर्वापररेखेति। ततोभयबिन्दुरेखयोरन्तराङ्गुलमानं स्वल्पत्वादगणयित्वमशक्यमतः प्रत्येकं रेखे प्राच्यपररेखे प्रकल्प्य तन्मध्यकेन्द्रात् पूर्ववन्मत्स्यद्वयमिति वृत्तद्वयं कुर्यात्। तत्र स्वस्ववृत्ते स्वस्वप्राच्यपररेखास्पृष्टा कार्या ताभ्यां स्वस्वकालिकौ भुजौ स्वस्ववृत्ते देयौ तदग्रे छायापररेखे स्वस्ववृत्ते कार्ये स्वस्वप्राच्यपरसूत्रात् स्वस्ववृत्ते उत्तरभागेऽक्षभाङ्गुलान्तरेण रेखे कार्ये तत्र स्वस्ववृत्ते स्वस्वतद्रेखयोरन्तरं स्वस्ववृत्ते उभयकालिककर्णस्वसाम्ये यद्वत्त्वेन गणयितुं शक्ये तदन्तरं पूर्वबिन्द्वोर्याम्योत्तरमन्तरं कर्णवृत्ताग्रासाधनकथनेनानीतं भुजान्तरस्य बिन्द्वन्तरत्वात् तस्य चापान्तरत्वेन फलितत्वात्। विषुवद्दिने गोलभेदे तु भुजान्तरमप्रयोग इति बिन्द्वोर्याम्योत्तरमप्रयोग इति। तेनोक्तरीत्या बिन्दुसाध्यस्तत्पूर्वापरसूत्रं स्फुटमित्याशयेन भगवतापि निरूपिता तस्याः शुद्ध्यर्थं कर्णोऽपि साधित इति तत्त्वम्’ र० ना०। अत परं “त्रि शतृकल्पो युगे भानामित्यादिः” पद्यम्। स च अयनशब्दे २२६।२२७ पृ० दर्शितः। सोऽत्रानुसन्धेयः।

“स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्द्वये। प्राक् चक्रं चलितं हीने छायार्कात् करणागते। अन्तरांशैरथावृत्य पश्चाच्छेषैस्तथाधिके” सू० सि०।

“अयने दक्षिणोत्तरायणसन्धौ विषुवद्द्वये गोलसन्धौ चलितं चक्रं दृक्तुल्यतां दृष्टिगोचरतां स्फुटमनायासं गच्छेत्। तत्र प्रत्यक्षतस्तज्ज्ञितमन्तरं दृश्यत इत्यर्थः। तथा च स्पष्टादिभावे रेवतीयोगताराऽसन्नावधि मेषतुलादौ कर्कमकराद्योर्विषुवायनप्रवृत्तेरिटाभौ स्वन्यत, तत्स्वरूपे प्रत्यक्षे हरि क्रान्तिवृत्तं चलितमन्यथा तदनुपपत्तेरिति भाव। ननु पूर्वतोऽपरतो वा चलितमिति कथं ज्ञेयमित्यत आह। प्रागिति। छायार्कादुयद्दिने सूर्यस्यायनदिक्परावर्तनसमये प्राच्यपरसूत्रस्य वा तस्मिन् दिनेऽन्यस्मिन् दिने वा मध्याह्नच्छायातो वक्ष्यमाणप्रकारेण सूर्यं साध्यस्तस्मादित्यर्थः। करणागते प्रागुक्तप्रकारेणानीत स्पष्ट सूर्यस्तस्मिन्नित्यर्थः। न्यूने सति। अन्तरांशैः सूर्ययोरन्तरांशैश्चक्रं क्रान्तिवृत्तं प्राक् पूर्वस्मिन् चलितमिति ज्ञेयम्। अथ यद्यधिके सति ज्ञेये सूर्ययोरन्तरांशैश्चक्रमावृत्त्य परिवृत्य पश्चात् पश्चिमाभिमुखं तथा चलितमिति ज्ञेयम्। अत्रोपपत्तिः। छायातो वक्ष्यमाणप्रकारेण सूर्यो यन्मानस्थः स्मादागणितागतस्तु रेवतीयोगताराऽसन्नावधितोऽन्तरयोरन्तरमयनांशास्तत्र क्रान्तिवृत्तस्य पूर्वचलने गणितागतार्काच्छायार्कोऽधिको भवति। पश्चिमचलने तु न्यूनो भवतीति सम्यगुपपन्नम्। अथ चराद्युपजीव्यां पलभामाह” र० ना०।

एव विषुवती छाया स्वदेशे या दिनार्डजा । "दक्षिणोत्तररेखायां सा तत्र विषुवत्प्रभा" सू० सि० ।

"स्वाभीष्टदेशे एवं विषुवती चलितविषुवद्दिनसम्बन्धादेवत्यासन्नत्वाद् विषुवद्दिनत्वमुपचारात् तद्व्यावर्त्तकमेवमिति । दिनार्डजा माध्याह्निकी या यन्निता द्वादशाङ्गुलशङ्कोश्छाया दक्षिणोत्तररेखायां निरक्षोत्तरदक्षिणदेशक्रमेणोत्तरस्थां दक्षिणस्थां प्रभायां दक्षिणोत्तररेखास्थत्वं विना मध्याह्नासम्भवात् सा सन्निता तत्र तस्मिन्नभीष्टदेशे विषुवत्प्रभाऽक्षभा भवति । एतेन द्वादशाङ्गुलशङ्कुकोटि पलभा भुजस्तद्वर्गयोर्योगपदं कर्ण इत्यक्षकर्णः कथं इत्यक्षक्षेत्रं वक्ष्यमाणोपयुक्तं प्रदर्शितम् । तदा सूर्य्यस्य विषुवद्वृत्तस्थत्वाद्विषुवत्प्रभेति सम्प्रोक्ता । अथ लम्बाक्षयोरानयनमाह" र० ना० ।

"शङ्कुच्छायाहते त्रिज्ये विषुवत्कर्णभाजिते । लम्बाक्षज्ये तयोश्चापे लम्बाक्षौ दक्षिणौ सदा" सू० सि० ।

"त्रिज्ये द्विस्थानस्थे शङ्कुच्छायाहते एकत्र द्वादशगुणिताऽपरत्र प्रागुक्तया विषुवत्प्रभया गुणिता विषुवत्कर्णभाजितोभयत्राक्षकर्णेन भक्ता फले क्रमेण लम्बज्याक्षज्ये तयोर्ज्ययोर्धनुषी क्रमेण लम्बाक्षौ सदोभयगोले दक्षिणदिक्स्थौ भवतः । अत्रोपपत्तिः । याम्योत्तरवृत्ते निरक्षस्वदेशपूर्वापरवृत्तयोर्यदन्तरं तदक्षः । याम्योत्तरवृत्ते दक्षिणक्षितिजप्रदेशाद्विषुवद्वृत्तस्य यदन्तरं तल्लम्बः । उभावृष्णगोले सपूर्वापरवृत्ताद्दक्षिणौ तज्ज्ये अक्षलम्बज्ये भुजकोटी त्रिज्याकर्ण इत्यक्षक्षेत्रादक्षकर्णकर्णौ द्वादशपलभे कोटिभुजौ तदा त्रिज्याकर्णे काविल्यनुपाताभ्यां लम्बाक्षज्ये तद्धनुषी लम्बाक्षावित्युपपन्नम् । अथ मध्याह्नच्छायातोऽक्षानयनं श्लोकाभ्यामाह" र० ना०

"मध्यच्छाया भुजस्तेन गुणिता त्रिभमौर्विका । स्वकर्णाप्ता धनुर्लिप्ता नताख्या दक्षिणे भुजे । उत्तराश्चोत्तरे याम्यास्ताः सूर्य्यक्रान्तिलिप्तिकाः । दिग्भेदे मिश्रिताः साम्ये विश्लिष्टाश्चाक्षलिप्तिकाः" सू० सि० ।

"अभीष्टदिने माध्याह्निकी छाया भुजसंज्ञा ज्ञेया । तेन भुजेन त्रिज्या गुणिता मध्याह्नच्छायाकर्णेन भक्ता फलस्य धनु कला नता नतसंज्ञास्ता नतकला दक्षिणे भुजे मध्याह्नच्छायारूपभुजे प्राच्यपरसूत्रमध्याद्दक्षिणदिक्स्थे सति, उत्तरदिक्का उत्तरे भुजे दक्षिणा । चो विपर्य्ययव्यवस्थार्थक । ता नतकला सूर्य्यक्रान्तिकला प्रागुक्ताः । दिग्भेदे नतक्रान्त्योर्भिन्नत्वे मिश्रिताः संयुक्ताः साम्येऽभिन्नदिक्त्वे विश्लिष्टा अन्तरिताः । चो विपर्य्ययव्यवस्थार्थकः । अक्षकला भवन्ति । अत्रानावश्यकभुजसंज्ञया भगवतोपपत्तिरुक्ता । तथाहि । द्वादशाङ्गुलशङ्कुकोटौ मध्याह्नच्छायाकर्णे या मध्यच्छायाभुजस्तथा खस्वस्तिकान्मध्याह्नकाले सूर्य्यस्य याम्योत्तरवृत्ते यदन्तरेण नतत्वं ता नतकलास्तज्ज्या नतांशज्या मध्याह्नोन्नतांशज्यारूपशङ्कौ त्रिज्याकर्णे का भुज इति मध्याह्नच्छायाकर्णे कर्णे मध्याह्नच्छाया भुजस्तदा त्रिज्याकर्णे को भुज इत्यनुपातेन नतज्या तद्धनुरत्र कलात्मकत्वान्नतकलास्ता यह्यसम्बद्धा इति छायादिग्विपरीतदिक्काः । अथ क्रान्त्यंशाक्षांशयोरेकदिक्त्वे योगेन नतांशा इति दक्षिणा नतकला दक्षिणक्रान्तिकलाभिर्हीना अक्षांशा भवन्ति । क्रान्त्यंशाक्षांशयोर्भिन्नदिक्त्वेऽन्तरेण नतांशा यदि दक्षिणास्तदा क्रान्त्यूनाक्षांशस्य नतत्वादुत्तरक्रान्तियुता अक्षांशा । यदि तूत्तरास्तदाक्षोनक्रान्तेर्नतत्वात्ततोत्तरक्रान्तिरक्ष इति सम्यगुपपन्नम् । अथाक्षात् पलभानयनमाह" र० ना० ।

"ताभ्योऽक्षज्या च तद्वर्गं प्रोज्झ्य त्रिज्याकृते पदम् । लम्बज्यार्कगुणाक्षज्या विषुवद्भा च लम्बया" सू० सि० ।

"ताभ्योऽक्षकलाभ्योऽक्षज्या भवति । चः समुच्चये । अक्षज्यावर्गं त्रिज्यावर्गात् त्यक्त्वा शेषान्मूलं लम्बज्या । अनन्तरमक्षज्या द्वादशगुणा लम्बया लम्बज्यया गुणनस्य भजनसम्बन्धादुक्तेत्यर्थसिद्धम् । अक्षभा स्यात् । अत्रोपपत्तिः । अक्षकलानां याक्षज्या तस्यास्त्रिज्याकर्णे भुजत्वात् तद्वर्गोनात् त्रिज्यावर्गान्मूलं लम्बज्या कोटिः । तयाक्षज्या भुजस्तदा द्वादशकोटौ को भुज इत्यनुपातेन विषुवच्छायेति । अथाक्षांशानेनतभागेभ्यः क्रान्तिद्वारा सूर्य्यसाधनं सार्द्धश्लोकाभ्यामाह" र० ना० ।

"स्वाक्षार्कनतभागानां दिक्साम्येऽन्तरमन्यथा । दिग्भेदेऽपक्रमः शेषस्तस्य ज्या त्रिज्यया हता । परमापक्रमज्याप्ता चापं मेषादिगो रविः । कर्क्कादौ प्रोज्झ्य चक्रार्द्धात् तुलादौ भार्द्धसंयुतात् । मृगादौ प्रोज्झ्य भगणान्मध्याह्नेऽर्कः स्फुटो भवेत्" सू० सि० ।

"स्वदेशाक्षांशेष्टदिनीयमध्याह्नसूर्य्यनतांशयोर्भागात्मा बहुत्वाद्भुजवचनम् । एकदिक्त्वेऽन्तरमन्यदिक्त्वेऽन्यथा योगः कार्य्यः । शेष उक्तसंस्कारसिद्धोऽङ्कः क्रान्तिः स्यात् । तस्यापक्रमस्य ज्या त्रिज्यया गुण्या परमक्रान्तिज्यया प्रागुक्तया भक्ता फलस्य धनुर्भागादिकं मेषादिगो मेषादि-

राशिस्थितत्वान्मार्गतोऽर्कः स्यात्। कर्कादित्रयेऽर्के चक्रार्धात् षड्राशित आगतार्कं त्यक्त्वा शेष मध्याह्नकाले स्फुटोऽर्कः स्यात्। तुलादित्रितये षड्भयुतादागतार्कात् स्फुटोऽर्को ज्ञेय। आगतोऽर्कः षड्भयुतं स्फुटोऽर्कः स्यादित्यर्थ। मकरादित्रयेऽर्के द्वादशराशिभ्य आगतार्कं त्यक्त्वा शेषमयनांशसंस्कृतः स्फुटोऽर्कः स्यात्। करणागतसायनार्थं व्यस्तायनांशसंस्कृत इत्यर्थसिद्धम्। पूर्वं तत्र सम्भूतप्रकारात् क्रान्ति साध्येत्यर्थस्योक्तेः। अत्रोपपत्ति। एकदिशि क्रान्त्यक्षयोगात्मक दक्षिणनतोऽक्षोन क्रान्तिर्दक्षिणा। भिन्नदिशि क्रान्त्यूनाक्षो नतं दक्षिणमनेनाक्षो हीन क्रान्तिरुत्तरा। अक्षोनक्रान्तिर्नतं तूत्तरनतोऽक्षयुत क्रान्तिरुत्तरा। यस्या ज्या क्रान्तिरर्कज्या। यदि परमक्रान्तिज्यया त्रिज्याभुज स्यात् तदानया केतीष्टा सायनार्कभुजज्या तद्धनु सायनार्कभुज। भुजस्य चतुर्षु पदेषु तुल्यत्वात् प्रथमपदे मेषादित्रये सूर्यस्यैव भुजत्वाद्भुज एव सूर्य्य। कर्कादित्रये द्वितीयपदे षड्भाद्रूनमध्यार्कस्य भुजत्वाद्भुजोनषड्भमर्कः। एवं तृतीयपदे तुलादित्रये षड्भेन हीनार्कस्य भुजत्वात् षड्युतो भुजोऽर्कः। चतुर्थपदे मकरादित्रये सूर्योनभगणस्य भुजत्वात् सूर्योनभगणयोऽर्क इति सर्वं वैपरीत्यात् सुगमतरम्। यथागतस्फुटसूर्यस्य करणागतस्फुटतुल्यत्वज्ञानमागतस्फुटसूर्यान्मध्यमस्य करणागतमध्यमार्कतुल्यत्वेन विशेष वक्तु श्लोकार्धेनाह र० ना०।

“तन्मान्दमसकृद्वाम फल मध्यो दिवाकर”। सू०सि०।

“तस्मादागतस्फुटसूर्य्यान्मान्द फल मन्दफलमसकृदनेकवार वाम व्यस्त संस्कृत स्फुटसूर्योऽहर्गणानीतः स्फुटसूर्य्य स्यात्। अयमर्थ। स्फुटसूर्य्य मध्यम प्रकल्प्य पूर्वमन्दोच्चात् मागुक्तरीत्या मन्दफल धनऋणमानीय स्फुटसूर्ये ऋणं धन कार्य्य मध्यमसूर्यः। अस्मादपि मन्दफल स्पष्टसूर्ये व्यस्तं संस्कृत मध्यमोऽस्मादपि मन्दफल स्पष्टे व्यस्त मध्यमार्क इति यावदविशेषस्तावदसकृत् साध्योऽर्को मध्योऽहर्गणानीतो भवतीति। तथा च मध्यमार्कात् स्फुटार्कसाधनमेकवार मन्दफलसंस्कार स्फुटार्कान्मध्यार्कसाधने त्वनेकवारं मन्दफलव्यस्तसंस्कार इति विशेषोऽभिहितः। अत्रोपपत्तिः। मध्यमसूर्य्यादानीतमन्दफलेन संस्कृतो मध्यःस्फुटोऽर्को भवति। अथ वा तेनैव मन्दफलेन व्यस्तं संस्कृतो मध्यो भवति। अत्र स्फुटार्कान्मध्यार्कसाधने मध्यमज्ञानाभावात् तदानीतमन्दफलज्ञानाभावादतः स्फुटसूर्य्य मध्यमं प्रकल्प्यानीतमन्दफलेनाभिमतासन्नेन स्फुटोऽर्कोऽव्यस्तं संस्कृतो मध्यमासन्नः। अस्मादपि मन्दफलमभिमतासन्नमपि पूर्व्वस्मात् सूक्ष्ममिति यावदविशेषे मध्यार्कसाधितं मन्दफलं भवतीति निरवद्यं सर्वमुक्तम्। अथ मध्याह्ने छायाकर्णयोरानयन विवक्षु प्रथम तात्कालिकनतांशज्ञान कथयन्नाद्ध कोटिज्ये कार्य्ये इत्याह” र० ना०।

“स्वाक्षार्कापक्रमयुतिर्दिक्साम्येऽन्तरमन्यथा। शेष नतांशाः सूर्यस्य तद्बाहुज्या च कोटिजा” सू० सि०।

“दिक्साम्ये एकदिक्त्वे स्वदेशाक्षांशमध्याह्नकालिकसूर्य्यक्रान्त्यंशयोर्योग। अन्यथा यत उक्तादेकदिक्त्वाद्विपरीते भिन्नदिक्त्वे इत्यर्थः अक्षांशक्रान्त्यंशयोरन्तरं कार्य्यं शेषं संस्कारोत्पन्नं सूर्यस्य मध्याह्ने नतांशास्तेषां नतांशानां भुजरूपाणां ज्या कोटिजा तद्या नवतिशुद्धाः कोटिस्तत उत्पन्ना ज्या। च समुच्चये। साध्या। अत्रोपपत्ति। याम्योत्तरवृत्ते सूर्य्यस्य मध्याह्ने खस्वस्तिकादन्तरं नतांशा विषुवद्वृत्तपश्चिमनतांशाः। विषुवद्वृत्तसूर्य्ययोरन्तर क्रान्त्यंशा। अतो दक्षिणक्रान्तौ क्रान्त्यक्षयोगो नतांशा उत्तरक्रान्तौ क्रान्त्यूनाक्षोऽक्षोनक्रान्तिर्वा दक्षिणोत्तरनतांशास्तेषां ज्या दृग्ज्या भुजत्वात्कोटिज्या महाशङ्कुः कोटिस्थितज्या कर्ण इति छायाक्षेत्रे तद्‌ग्रामां भुजत्वात्” अथ छायाकर्णयोरानयनमाह। र०ना०।

“शङ्कुमानाङ्गुलाभ्यस्ते भुजत्रिज्ये यथाक्रमम्। कोटिज्यया विभज्याप्ते छायाकर्णावहर्दले” सू० सि०।

“भुजत्रिज्ये नतांशज्यात्रिज्ये इत्यर्थ। शङ्कोः प्रमाणाङ्गुलानि द्वादश तैर्गुणिते कार्य्ये। उभयत्र कोटिज्यया नतांशोननवत्या ज्यया उद्देत्यर्थः। भक्ता यदाप्ते यथाक्रमं भुजज्यात्रिज्यास्थानीयफलक्रमेण मध्याह्ने छायातत्कर्णौ भवतः। अत्रोपपत्ति। द्वादशाङ्गुलशङ्कोः कोटिरिष्टच्छायाभुजस्तत्त्वयोर्योगपद कर्ण इति छाया कर्णे कर्ण इति छायाक्षेत्रे। महाशङ्कुकोटौ दृग्ज्याभुजत्रिज्ये भुजकर्णौ तदा द्वादशाङ्गुलशङ्कुकोटौ कावित्यनुपातेन मध्याह्नकाले छायातत्कर्णौ भवत। वास्तवोऽस्तात्कालिकत्वादित्युपपन्नम्” र० ना०।

अथ भुजसाधन विवक्षुः प्रथममग्रा कर्णाग्रे आनयति।

“क्रान्तिज्या विषुवत्कर्णगुणाप्ता शङ्कुजीवया। अर्काग्रा स्वेष्टकर्णघ्नी मध्यकर्णोद्धृता स्वका” सू० सि०।

"त्रिज्यावर्गार्धतोऽग्रज्या वर्गोनाद्द्वादशाहतात्। पुनर्द्वादशनिघ्नाच्च लभ्यते यत् फलं बुधैः। शङ्कुवर्गार्धसंयुक्तविषुवद्वर्गभाजितात्। तदेव करणीनाम तां पृथक् स्थापयेद्बुधः। अर्कघ्नी विषुवच्छायाऽग्रज्यया गुणिता तथा। भक्ता फलाख्यं तद्वर्गसंयुक्तकरणीपदम्। फलेन हीनसंयुक्तं दक्षिणोत्तरगोलयोः। याम्ययोर्विदिशोः शङ्कुरेवं याम्योत्तरे रवौ। परिभ्रमति शङ्कोस्तु शङ्कुरुत्तरयोस्तु सः। तत्त्रिज्यावर्गविश्लेषान्मूलं दृग्ज्याभिधीयते" सू॰ सि॰।

"पूर्वप्रकारानीतैस्तात्कालिकाग्रज्याया न तु कर्णाग्राया पूर्वं कर्णस्यैवासिद्धेः। वर्गेण हीनात् त्रिज्यावर्गार्धाद्द्वादशगुणात् पुनर्द्वितीयवारं द्वादशगुणात्। च समुच्चये। तेन द्वादशगुणितस्य द्विधा स्थापनमिराशा चतुश्चत्वारिंशदधिकशतगुणितादित्यर्थः। पृथक् गुणक्रियास्तु गुणनसुखार्थम्। शङ्कोर्द्वादशाङ्गुलात्मकस्य वर्गार्धेन द्विसप्तत्या युक्तेन पलभावर्गेण भाजिताद् यैर्गणितकर्मभिर्यत्स्फुटग्रामितं फलं प्राप्यते तत्स्फुटग्रामितं करणीनामसंज्ञया करणी। तां करणीं बुधो गणकः पृथगेकत्र स्थाने स्थापयेत्। ततो द्वादशगुणिता पलभाग्रज्यया पूर्वंतद्धीनया गुणिता तया द्विसप्ततियुतेन पलभावर्गेण भक्ता लब्धं फलसंज्ञं तस्य फलस्य वर्गेण युतायाः करण्या मूलं दक्षिणोत्तरगोलयोः क्रमेण फलेनोनयुतम्। एवमुक्तप्रकारेण सिद्धं शङ्कुं शङ्कोर्गणितकर्तुः सकाशाद्दक्षिणोत्तरे सूर्ये परिभ्रमति सति तत्प्रकार क्रमार्थे क्रमेण याम्ययोरुत्तरयोर्विदिशोराग्नेयनैरृत्योरैशानीवायव्योः कोणयोरित्यर्थः। द्वितीयतकार पूर्वापरदिने विभागक्रमाद्यैकत्वेन विदिशोरित्यत्रान्वेति तेन दिनपूर्वार्धे आग्नेयैशान्योर्दक्षिणोत्तरक्रमेण, दिनापरार्धे नैरृत्यवायव्योर्दक्षिणोत्तरक्रमेणेति फलितार्थः। स कोणसंज्ञः शङ्कुः स्यात्। कोणशङ्कुत्रिज्ययोर्वर्गान्तरान्मूलं दृग्ज्योच्यते" र॰ ना॰।

अथैनच्छायाच्छायाकर्णयोरानयनमाह।

"स्वशङ्कुना विभज्याप्ते दृक्त्रिज्ये द्वादशाहते। छाया कर्णौ तु कोणेषु यथास्वं देशकालयोः" सू॰ सि॰।

"कोणीयदृग्ज्यात्रिज्ये द्वादशगुणे दृग्ज्यासम्बन्धिकोणशङ्कुना भक्ते लब्धे दृग्ज्यात्रिज्याक्रमेण छायाच्छायाकर्णौ स्तः। तकारादेव कोणेषु चतुर्षु देशकालयोः यथास्वं स्वमनतिक्रम्येति यथास्वं यथादेशं यथाकालं छायाच्छायाकर्णौ साध्यौ। अयमर्थः। क्वचिद्देशे चतुर्षु कोणेषु क्वचिच्च कोणद्वये क्वचिच्च दिनार्धं एव कोणद्वय इत्यादि देशकालानुरोधेन यथायोग्यमिति। अत्रोपपत्तिः प्रागुक्ता स्पष्टा च। अथ दिक्प्रदेशसम्बन्धेन छायाकर्णावुक्त्वा कालसम्बन्धेन सार्धश्लोकाभ्यामाह" र॰ ना॰।

"त्रिज्योदक्चरजायुक्ता याम्यायां तद्विवर्जिता। अन्त्या नतोत्क्रमज्योना स्वाहोरात्रार्धसङ्गुणा। त्रिज्याभक्ता भवेच्छेदो लम्बज्याघ्नोऽथ भाजितः। त्रिभज्यया भवेच्छङ्कुस्तद्वर्गं परिशोधयेत्। त्रिज्यावर्गात् पदं दृग्ज्या छायाकर्णौ तु पूर्ववत्"। सू॰ सि॰

"उत्तरगोले चरोत्पन्नया ज्यया चरज्ययेत्यर्थः। ...चरानयने चरज्यायाश्चरजेति संज्ञोक्ता। युता त्रिज्याऽन्त्या स्यात्। याम्यगोले तया चरज्ययोना त्रिज्याऽन्त्या स्यात्। नतोत्क्रमज्योना सूर्योदयाद्दिनगतघटी दिनशेषघटी वा दिनार्धान्निर्गता उन्नतसंज्ञाः तद्धीनं दिनार्धं नतकालो घट्यात्मकस्तस्मात्तस्यो लिप्तास्तत्त्वयमैरित्यादिविधिना, सुनयो रूपयमा इत्याद्युत्क्रमज्यापिण्डैर्नतोत्क्रमज्या। पञ्चदशघट्यधिकनते तु पञ्चदशघट्यूननतस्य क्रमज्याखण्डं क्रमज्या तया युक्ता त्रिज्योत्क्रमज्या भवति। तया हीनेत्यर्थः। स्वाहोरात्रार्धसङ्गुणा। स्वाहोरात्रव्यासार्धं द्युज्या तया गुणिता त्रिज्यया भक्ता फलं छेदसंज्ञं स्यात्। अथानन्तरं छेदो लम्बज्यया गुणितस्त्रिज्यया भाज्यः फलमिष्टकाले शङ्कुः स्यात्। तस्य शङ्कोर्वर्गं त्रिज्यावर्गाच्छोधयेत्। शेषस्य मूलं दृग्ज्या। आभ्यां छायाकर्णौ तु पूर्ववत्। पूर्वोक्तरीत्या भवतः। अत्र छायाकर्णावित्यनेन कोणच्छायाकर्णसाधनश्लोकान्तर्भागस्य ग्रहणात् तच्छ्लोकोक्तरीत्याऽभीष्टशङ्कुदृग्ज्याभ्यां छायाकर्णौ साध्याविति सूचितम्। अत्रोपपत्तिः। याम्योत्तरवृत्तोर्ध्वभागस्थाधिस्थितध्रुवात् स्वसम्पातात् क्षितिजध्रुवान्तरवृत्तसम्पातद्वयमध्योदयास्तसूत्रं क्षितिजसम्बन्धयाम्योत्तरवृत्तसम्पातपर्यन्तमहोरात्रवृत्ते सूत्रं त्रिज्यातुल्यमन्त्या। सा तूत्तरगोले चरज्यायुता त्रिज्या दक्षिणगोले चरज्योना त्रिज्या। उन्मण्डलयाम्योत्तरसूत्रावध्यहोरात्रवृत्तव्यासार्धं त्रिज्यात्वात् उन्मण्डलस्योत्तरदक्षिणक्रमेण क्षितिजादूर्ध्वाधःस्थत्वेन तद्याम्योत्तरसूत्रयोर्मध्ये चरज्यात्वाच्च।

क्रमेणादितो बुधैः ॥ सर्व्वोक्तान्यदिने भागहारे छद्री न्नरे यथा” । प्रकारान्तरन्तु, “पञ्चाब्धिरामयुग्मैक शून्यैकयुग्मषट्कृय । चत्र पञ्चगर्भो) ५,४,३,२,१,०।१, २,३,४,५,६, मासात् छायापादा दिनार्द्धके । अयना मूलमासान्ते विपादगणनक्रमात् । दिने दिने भागहारो मध्यच्छायापदे मतः । कर्कट्यां पदं शको व्यक्तिर् रहुलेव्यङ्कुलिकाया । सहूरन हिंपत हीन मध्यमादैष पञ्चगुणैः । छायापादैश्च मध्योनै पञ्चयुतैर्हि-गुणैर्हरेत् । प्राक्समादिपदार्द्ध तु लब्धा दण्डा गतैष्यका । प्राक् पश्चिमर्द्दिनार्द्धान्तु शेषात् षष्टिगुणात् पलम्” । इदञ्च देशभेदविषयं स्थूलं च सूक्ष्मन्तु सू० सि० उक्ता तच्च छायाशब्दे द्रष्टव्यम् ।

**छायापुरुष** पु० छायाया दृश्यः पुरुषः पुरुषाकृतिः । आकाशे द्रष्टव्ये निजच्छायारूपे पुरुषाकृतियुक्ते पदार्थे । तद्दर्शनोपायमाह योगप्रदीपिकायाम् ५पटले

शिव उवाच । निरभ्रं गगनं देवि । यदा भवति निर्म्मलम् । तदा छायास्थितो भूत्वा निश्चल प्रयतो धिया । स्वच्छायाकल्पमालोक्य स्वगुरूक्तक्रमेण वै । सम्मुख गगनं पश्येन्निर्निमेषतयैकधी । शुद्धस्फटिकसङ्काश पुरुषस्तत्र दृश्यते । न दृश्यते यदा तत्र पुनस्तद्वत् परीक्षयेत् । बहुधा दर्शनेनैव साक्षात्कारो भवेद् ध्रुवम् । कस्यचित् भाग्यतो दृश्येत यदि बिम्बोऽक्षिगोचरः । अत्र त्वेव न सन्देहो गुरुविश्वासत शिवे ॥ गुरु सम्यक् पूजयित्वा पश्येच्छाया समाहित । तथा षण्मासपर्यन्त मृत्युस्तस्य न विद्यते । शिरोहीन यदा पश्येत् षण्मासाभ्यन्तरे मृतिः । यदा पादौ न दृश्येते भार्य्याहानिर्न संशय । न दृश्येते यदा पाणी भ्रातृहानिर्न संशय । एतज् ज्ञात्वा सुधी सम्यक् गङ्गातीर समाश्रयेत । योगाभ्यासेन सतत प्राणायामेन सुस्थित । यथा वा सतृसमीपस्थो वच मृत्युञ्जय जपेत् । योग्य भुक्तो हविष्याशी यतवाग् यतमानसः । मृत्युञ्जयेच्च सन्देहो अन्यथा मृत्युमृच्छति । यदा तु मलिन पश्येत् ज्वरपीडा भवेत्तदा । तस्य शान्ति प्रकुर्व्वीत शिवसेवा समाहितः । रक्तवर्णं यदा पश्येद्दैश्वर्य्यं भवति ध्रुवम् । मध्यच्छिद्रं यदा पश्येत् शत्रुघातो भवेत्तदा । एवं सन्दर्शनं देवि । ज्ञानवान् भवति ध्रुवम् । नारदाय पुरा प्रोक्त मया पुरुषदर्शनम् । मत्प्रसादान्महायोगी भूत्वा लोकांश्चरत्यसौ । स्वच्छायादर्शन देवि । कली पुरुषलक्षणम् । दीर्घायुः समवाप्नोति ज्ञानञ्चापि सुनिर्मलम्” ।

**छायायन्त्र** न० छायया कालज्ञानसाधक यन्त्रम् । कालज्ञानसाधकेषु शङ्कुयष्टिचक्रप्रभृतिषु यन्त्रभेदे । “शङ्कुयष्टिधनुश्चक्रैश्छायायन्त्रैरनेकधा । गुरूपदेशाद्विज्ञेय कालज्ञानमतन्द्रितैः” सू० सि० ।

**छायामान** पु०छायया सूर्य्यप्रतिबिम्बेन मीयते मा-कर्म्मणि ल्युट् । १चन्द्रे हेमच० ३त० । २छायाया प्रमाणे न० ।

**छायामित्र** न० छायाया मित्रमिव । आतपत्रे शब्दरत्न० ।

**छायामृगधर** पु० छायारूपं मृग धरति धृ-अच् । चन्द्रे-त्रिका० । छायामृगधरादयोऽप्यत्र ।

**छायाविप्रतिपत्ति** स्त्री छायानां देहकान्तीनां नखप्रभृतीनां विप्रतिपत्तिर्विरुद्धा प्रतिपत्ति । सुश्रुतोक्ते यथा मरणसूचके देहकान्त्यादीनामन्यथाभावे यथाह सुश्रुत । “अथातश्छायाविप्रतिपत्तिमध्यायं व्याख्यास्याम । श्यावा लोहितिका नीला पीतिका वापि मानवम् । अभिद्रवन्ति यं छाया स परासुरसंशयम् । ह्रीश्रियौ नश्यतो यस्य तेज ओजः स्मृतिः प्रभा । अकस्माद्य भजन्ते नो स परासुरसंशयम् । यस्याधरौष्ठ पतित क्षिप्तश्चोर्द्ध्वं तथोत्तर । उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् । आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति च । खञ्जनप्रतिमा वापि त गतायुषमादिशेत् । कृष्णा स्तब्धावलिप्ता वा जिह्वा शूना च यस्य वै । कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् । कुटिला स्फुटिता वापि शुष्का वा यस्य नासिका । अवस्फूर्जति मग्ना वा न स जीवति मानव । सङ्क्षिप्ते विषमे स्तब्धे रक्ते स्रस्ते च लोचने । स्यातां वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् । केशा सीमन्तिनो यस्य सङ्क्षिप्ते विनते भ्रुवौ । लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे । नाहरत्यन्नमास्यं न धारयति य शिरः । एकाग्रदृष्टिर्मूढात्मा सद्य प्राणान् जहाति सः । बलवान् दुर्बलो वापि सम्मोह योऽधिगच्छति । उत्थाप्यमानो बहुशस्तं धीर परिवर्जयेत् उत्तान सर्व्वदा शेते पादौ विकुरुते च यः । विप्रसारणशीलो वा न स जीवति मानवः । शीतपादकरोच्छ्वासश्छिन्नश्वासश्च यो भवेत् । काकोच्छ्वासश्च यो मर्त्यस्तं धीर परिवर्जयेत् । निद्रा न च्छिद्यते यस्य यो वा जागर्त्ति सर्व्वदा । मुह्येद्वा वक्तुकामस्तु प्रत्याख्येय·

रक्तहरी शुष्कमिवातकफापहा" भावप्र० तद्गुणोक्तिः।

**छिक्कर** पु० छिक् इत्यव्यक्तं शब्दं करोति कृ—ट। हे० च० ८६४० उक्ते छिक्कारे मृगभेदे "कुक्कुटेभपिरीसुत्रव गिच्छिकृश्चच्छिक्कराः" "स्त्रीपशा भापमपककपिश्वीकर्ण-छिक्कराः" "छिक्करः कटपूरी च पिरीली चाक्षि दक्षिणा"। [शब्दरत्ना०।

**छिक्का** स्त्री छिक् इत्यव्यक्तं शब्दं करोति कृ—ड। क्षुते।

**छिक्कार** पु० छिगित्यव्यक्तं शब्दं करोति कृ—अण्। मृगभेदे। "छिक्कारो मृगजातिः क्रकवाकुः कुक्कुटः प्रोक्तः" हे० च० ८६४०।

**छिक्किका** स्त्री छिक्का क्षुतं साध्यत्वेनास्त्यस्या बा० ठन्। छिक्कन्यां (नाकछिकनी) भावप्र०। स्वार्थे कन् तत्रार्थे।

**छित** त्रि० छो—क्त वा इत्। छिन्ने अमरः इस्वभावपक्षे

**छित्ति** स्त्री छिद—क्तिन्। १छेदने कर्त्तरि क्तिच्। २करञ्जवृक्षे शब्दर०।

**छित्वर** त्रि० छिद—ष्वरप् ह० दस्य तः। १वैरिणि, २धूर्त्ते ३छेदके च उणादिको०। पित्त्वात् स्त्रियां ङीप्।

**छिद** द्वैधीकरणे रुधा० उभ० सक० अनिट्। छिनत्ति छिन्ते इरित्। अच्छिदत्, अच्छेत्सीत् अच्छित्त। "न छिन्द्यान्नखरोमाणि" "न च्छिन्द्यात् करजैर्नखम्" मनु "अच्छिन्दस्य समाङ्गानि" भा० व० १२।६१श्लो०। भिदादित्वात् अङ् छिदा। "कर्मवत् कर्मणा तुल्यक्रियः" "कर्मस्थ भावकानां कर्मस्थक्रियाणाम् भिदादय" इत्युक्ते तत्र कर्मकर्त्तरि प्रत्ययः छिद्यते काष्ठं स्वयमेव। छिदुरः स्वयंछिन्नः।

अप+अपकृष्य छेदने "एतस्मै वा एषापच्छिद्यैवैव पुनर्भवत्यपि" शत० ब्रा० ५।१।४।८। [४२० पृ० दृश्यम्।

अव+ विभागभेदे। स च दैशिकः कालिकश्च अवच्छेदशब्दे

वि+अव+व्यावर्त्तने निरासने व्यवच्छेदः।

आ+आलभ्य हरणे। (काड़ियालओया) अपहरणे "आच्छिन्द्युरितराश्च च" नारद। "नियतामाच्छिनत्ति न" कुमा०। सम्यक्छेदे च। "आच्छेतुमाशु हृतमेतस्य मनुष्याणामपि चाहवे" भा० व० १६६श्लो०।

उद्+समूलनाशने। "किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति" रघु "उच्छेत्तु प्रभवति यन्न सप्तसप्तिः" शकु०।

परि+इयत्तया विभागे। परिच्छेदः। "यशःपरिच्छेत्तुमियत्तयालम्" रघुः। "परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना" कुमा०।

वि+ विभागे भेदे च "विच्छिद्य तौ शरैर्वीरौ" हरिवं० ८५१०श्लो०। "यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत्" शकु०। [च्छिद" रामा० सु० २७।१०।

**छिद्** त्रि० छिद—क्विप्। छेदनकर्त्तरि। "रामस्य हृदयच्छिद्

**छिद्रक** न० छिद—क्वुन्। वज्रे उणादिको०।

**छिदा** स्त्री छिद—भावे भिदा० अङ्। छेदने।

**छिदि** स्त्री छिद्—इन् किच्च। १परशौ २वज्रे उज्ज्वल०। ३छेत्तरि त्रि०। [४करवाले च मेदि० ५अस्रौ उज्ज्वल०।

**छिदिर** पु० छिद—किरच्। १कुठारे २पावके, ३रज्जुभेदे,

**छिदुर** त्रि० छिद—कुरच्। १वैरिणि, २धूर्त्ते ३छेदके, ४छेदनकर्त्तरि च मेदि०। कर्मकर्त्तरि कुरच्। ५स्वयंछिन्ने त्रि०। "समस्यते न च्छिदुरोऽपि हारः" रघुः।

**छिद्र** भेदने अद० चुरा० उभ० सक० सेट्। छिद्रयति ते अचिच्छिद्रत् त। छिद्रित छिद्रम्।

**छिद्र** न० छिद—रक् छिद्र—अच् वा। १दूषणे, २गर्त्ते, ३अवकाशे ४ज्योतिषोक्ते लग्नतोऽष्टमस्थाने। "छिद्राख्यमष्टमस्थानम्" ज्यो० त०। "छिद्रं निधारयेत् सर्वं श्वाकारसखानुगम्" मनु। "छिद्रेष्वनर्था बहुलीभवन्ति" शकु० "नास्य छिद्रं परोविद्यात् विद्याच्छिद्रं परस्य तु" मनु। देहे छिद्रसंख्यामाह याज्ञ० मिताक्षरयो "रोमणां कोटयस्तु पञ्चाशच्चतस्रः कोट्य एव च। सप्तषष्टिस्तथा लक्षाः सार्द्धाः स्वेदायनैः सह। वायवीयैर्विगण्यन्ते विभक्ताः परमाणवः" याज्ञ०। "पूर्वोदितशिराकेशादिसहितानां रोमणाम्परमाणवः सूक्ष्मसूक्ष्मतररूपा भागाः स्वेदवहवच्छिद्रैः सह चतुष्पञ्चाशत्कोट्यः तथा सप्तोत्तरषष्टिलक्षाः सार्द्धाः पञ्चाशत्सहस्रसहिताः वायवीयैर्विभक्ताः पवनपरमाणुभिः पृथक् कृता विगण्यन्ते" मिता०। एता सूक्ष्मच्छिद्रसंख्या। स्थूलच्छिद्रसंख्या तु नव श्रवणनेत्रघ्राणानां वाह्यपायूपस्थस्थानभेदात् नवसंख्या तुल्यत्वेन ५नव संख्यायां च

**छिद्रकर्णं** त्रि० छिद्रयुक्तः कर्णोऽस्य। दुर्लक्षणरूपच्छिद्रयुक्तकर्णविशिष्टे छिन्नकर्णशब्दे दृश्यम्।

**छिद्रदर्शिन्** त्रि० छिद्रं पश्यति दृश—णिनि। १रन्ध्रान्वेषिणि रिपौ। कण्डरीकशब्दे १६२१ पृ० दर्शिते योगभ्रष्टे बाभ्रव्यपुत्रे २विप्रभेदे च "छिद्रदर्शी सुनेत्रश्च तथा बाभ्रव्यवत्सयो। जातौ श्रोत्रियदायादौ वेदवेदाङ्गपारगौ" हरिवं० २१अ०। [राजनि०

**छिद्रवैदेही** स्त्री छिद्रप्रधाना वैदेही। गजपिप्पल्याम्

**छिद्रान्तर्** पु० छिद्रमन्तर्मध्ये यस्य। नडे। राजनि०।

छुरा स्त्री छुर–क। सौधलेपनद्रव्ये सुधायाः चूर्णे (कलि चुन्) हारा०।

छुरिका स्त्री छुर–छेदे क स्वार्थे क टापि अत इत्वम् छुर–बा० कुन् वा। स्वनामख्याते शस्त्रभेदे।

छुरिकापत्री स्त्री छुरिकेव पत्रमस्याः ङीप्। श्वेतावतायाम् राजनि०।

छुरित त्रि० छुर–क्त। १खचिते जटाधरः। २लिप्ते ३लिखिते च त्रि० "परस्परेण छुरितामलच्छवी" माघ०।

छुरी स्त्री छुर–क गौरा० ङीष्। छुरिकायाम् असिधेनौ भरतः।

छूरिका स्त्री छुरिका+पृषो०। १छुरिकार्थे २वन्ध्यायां गवि "गोषु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने" छूरिकाया वन्ध्याया गोर्भेदनार्थं माषाभेदने" कुल्लू०

छूरी स्त्री छुरी–पृषो०। छुरिकायां हेम०।

छृद सन्दीपने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। छर्दयति ते छर्दति अचिच्छृदत्–त अचच्छर्दत् त अच्छर्दीत्।

छृद देवने दीप्तौ च अक० वमने सक० रुधा० उभ० सेट्। छृणत्ति छृन्ते इरित्। अच्छृदत् अच्छर्दीत्। अच्छर्दिष्ट छर्दिष्यति–छर्त्स्यति उदित् छर्दित्वा छृत्वा छृन्न

छृप याचने चिक० मन्त्रे अक० वा चुरा० उभ० पक्षे भ्वा० पर० सेट्। छर्पयति ते छर्पति। अचिच्छृपत् त अच च्छर्पत् त। अच्छर्पीत्

छेक पु० छो–बा० डेकन्। १गृहासक्ते मृगपक्ष्यादौ २नागरे विदग्धे त्रि० मेदि०। विदग्धप्रिये शब्दालङ्कारभेदे ३अनुप्रासभेदे अनुप्रासशब्दे १७८पृ० दृश्यम्। ४भक्तायां स्त्रियां स्त्री शब्दार्थचि०। [दृश्यम्

छेकापह्नुति स्त्री अर्थालङ्कारभेदे। अलङ्कारशब्दे पृ० ३९८

छेद छेदने अद० चु० उभ० सक० सेट्। छेदयति ते अचिच्छेदत् त।

छेद पु० छिद–भावे घञ् अच् वा। १छेदने "अभिघातच्छेदपातानां क्रियन्ते मन्दरङ्गमा" कुमा०। कर्त्तरि अच्। २छेदके, भाजके "छेद गुण गुण छेदमिति" लीलावती। कर्मणि घञ्। ३खण्डे, त्रि० "पत्राङ्कच्छेदविभक्तरागाम्" कुमा०। "बिसकिसलयच्छेदपाथेयवन्तः" मेघ०। भवकार्यस्य तु निमित्तत्वेन स्त्रियां गौरा० ङीष्। ततोनित्यमर्हति ठञ्। छैदिक नित्यच्छेदार्हे वेतसादौ।

छेदन न० छिद–भावे ल्युट्। १द्विधाकरणे "करपाददतोभङ्गे छेदने कर्णनासयोः" याज्ञ०। करणे ल्युट्। २छेदनसाधने "तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम्" भा० स० ५४अ०। कर्त्तरि ल्यु। ३छेदके त्रि०

छेदनीय पु० छेदनाय जलकालुष्यभेदनाय हित–छ। १कतकवृक्षे राजनि०। छिद–कर्मणि अनीयर्। २छेद्ये त्रि०

छेदादि पु० नित्यमर्हतीत्यर्थे ठञ्प्रत्ययनिमित्ते शब्दगणे स च गणः "छेद भेद द्रोह दोह नर्त्त कर्ष तीर्थ सम्प्रयोग विप्रयोग प्रयोग विप्रकर्ष प्रेषण सम्प्रश्न विप्रश्न विकर्ष प्रकर्ष (विराग विरङ्ग च)" पा०ग०सू०। छैदिक

छेदि पु० छिद–इन्। १वज्रे उज्ज्व०। २छेत्तरि त्रि०। ३वर्द्धकौ पु० धरणि। [हेमच०।

छेदित त्रि० छेदो जातोऽस्य तारका० इतच्। द्विधाकृते

छेद्य त्रि० छेत्तुं योग्यं कर्मणि योग्यार्थे ण्यत्। भेत्तुं योग्ये "धीरं छेद्यमतोऽहं त्वाम्" भट्टिः। छेद्याक्षिरोगप्रतिषेधोपायाः सुश्रुतोक्ता यथा "अथातश्छेद्यरोगप्रतिषेधं व्याख्यास्यामः। स्निग्धं भुक्तवतो ह्यन्न उपविष्टस्य यत्नतः। संरोपयेत् नयनं भिषक्चूर्णैस्तु लावणैः। ततः संरोपितं तूर्णं सुस्विन्नं परिघट्टितम्। अर्म्म यत्र वलीजातं तत्रैतद्ग्राहयेद्भिषक्। अपाङ्गं प्रे समापाद्य वडिशेन समाहितः। मुचुण्ड्याग्रगृहीतं मे भायी सूचीसूत्रेण वा पुनः। नचोन्नापयता छिन्न कार्य्यमभ्युन्नतं तु तत्। शस्त्रपातभयाच्चास्य वर्त्मनी चाह्वयेद् दृढम्। ततः प्रशिथिलीभूतं त्रिभिरेव विलम्बितम्। उत्क्षिप्य मण्डलाग्रेण तीक्ष्णेन परिशोधयेत्। विमुक्तं सर्वतश्चापि कृष्णाच्छुक्लाच्च मण्डलात्। नीत्वा कनीनकोपान्तं छिन्द्यान्नाविकनीनकम्। चतुर्भागस्थिते मांसे नाक्षि व्यापत्तिमर्च्छति। कनीनकवधादस्रं नाडी चाप्युपजायते। हीनच्छेदात् पुनर्वृद्धिं शीघ्रमेवाधिगच्छति। अर्म जालवद्यापि तदप्युन्नाम्य लम्बितम्। छिन्द्याद्वडिशेन यत्नेन वर्त्मशुक्लान्तमाश्रितम्। प्रतिसारणमक्ष्णोस्तु ततः कार्य्यमनन्तरम्। यवनालस्य चूर्णेन त्रिकटोर्लवणस्य च। स्वेदयित्वा ततः पश्चाद्बध्नीयात् कुशलो भिषक्। देशर्तुबलकालज्ञः स्नेहं दद्याद्यथाहितम्। त्र्यहात्तु विधानज्ञः ततः कुर्य्यादतः परम्। त्र्यहान्मुक्त्वा करस्वेदं दत्त्वा शोधनमाचरेत्। करञ्जबीजामलकमधुकैः साधितं पयः। हितमाश्च्योतनं शूले द्विरक्तं चोदधायुतम्। मधुकोत्पलकिञ्जल्कदूर्वा

कल्कैश्च मूर्द्धनि। प्रलेपः सततं शीतं क्षीरपिष्टं प्रशस्यते। लेख्याञ्जनैरपहरेदर्मशेषं भवेद्यदि। अर्म चाल्पन्तु धिनिभं नीलं रक्तमथापि वा। धूसरन्तु यच्चापि शुक्रवत्तदुपाचरेत्। चर्माभं बहलं यत्तु स्नायुमांसघनावृतम्। छेद्यमेव तदर्म स्यात् कृष्णमण्डलगञ्च यत्। विशुद्धवर्णमक्लिष्टं क्रियास्वविगतक्लमम्। छिन्नेऽर्मणि भवेत्सम्यग्यथास्वमनुपद्रवम्। सिराजाले सिरायास्तु कठिनास्ताश्च बुद्धिमान्। उत्क्षिप्य मण्डलाग्रेण बडिशेनावलम्बिता। सिरासु पिडका जाता या न सिध्यन्ति भेषजैः। अर्मवन्मण्डलाग्रेण तासाञ्छेदनमिष्यते। रोगयोरनयो कार्यमर्मोक्तं प्रतिसारणम्। विधिश्चापि यथादोषं लेखनद्रव्यसम्भृतः। मन्त्रो सस्नेद्य शस्त्रेण पर्वणीकां विचक्षण। उत्तरे च त्रिभागे च बडिशेनावलम्बिताम्। छिन्द्यात्ततोऽर्द्धमध्ये स्यादश्रुनाडी ह्यतोऽन्यथा। प्रतिसारणमत्रापि सैन्धवक्षौद्रमिष्यते। लेखनीयानि चूर्णानि व्याधिशेषस्य भेषजम्। शङ्खसमुद्रफेनस्य मण्डूकीस्य समुद्रजाम्। स्फटिक कुरुविन्दस्य प्रवालाश्मन्तकन्तथा। वैदूर्यपुलकं मुक्तामयस्ताम्ररजांसि च। समभागानि सम्पिष्य सार्द्धं स्रोतोऽञ्जनेन तु। चूर्णाञ्जनं कारयित्वा भाजने मेषशृङ्गजे। संस्थाप्योभयतः कालमञ्जयेत्तत बुध। अर्मादि पिडकां कुर्यात्सिराजालानि तेन वै। अर्शस्तथा यच्च नाम्ना शुष्कार्शोऽर्बुदमेव च। अभ्यन्तर वर्त्मगया विधानं तेषु वक्ष्यते। वर्त्मोपस्वेद्य निर्भुज्य सूच्योत्क्षिप्य प्रयत्नतः। मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषग्वरः। ततः सैन्धवकासीसकणाभिः प्रतिसारयेत्। स्थिते च रुधिरे वर्त्म दग्ध्वा सम्यक्शलाकया। क्षारेणावलिखेच्चापि व्याधिशेषो भवेद्यदि। तीक्ष्णैरुभयतो भागैस्ततो दोषमथोत्क्षिपेत्। वितरेच्च यथादोषमभिष्यन्दक्रियाविधिम्। शस्त्रकर्मण्युपरते मासञ्च स्यात्सुयन्त्रित"।

छेमण्ड पु० क्षमण्ड+पृषो० अत एत्वम्। मातृपितृहीने बालके (काँड) उज्ज्वलदत्तः।

छेलक पु स्त्री छो—कर्म्मणि वा० एलकन्। १छागे २छाग्यां स्त्री टाप्। भावप्र० छागशब्दे दृश्यम्।

छेलु पु० छो—बा० एलु। सोमराज्याम् शब्दच०

छैदिक त्रि० छेद नित्यमर्हति ठञ्। नित्यच्छेदार्हे वेतसे पु० सि० कौ०।

छो छेदने दि० पर० सक० अनिट्। छ्यति अच्छात्—अच्छासीत्। चच्छौ। छात—छितः। ( देशोया)।

छोटिका स्त्री छुट—ण्वुल्। तर्जन्यङ्गुष्ठध्वनौ (तुडी-

छोटिन् पु० छुट—णिनि। कैवर्त्ते त्रिका०।

छोरण न० छुर—भावे ल्युट्। परित्यागे त्रिका०।

छोलङ्ग पु० छुर—बा० अङ्गच् रस्य लः। मातुलुङ्गे (टावा-लेबु) शब्दरत्ना०।

छोहारा स्त्री द्वीपान्तरखर्जूरिकायाम्। "खर्जूरी गोस्तनाकारा परद्वीपादिहागता। जायते पश्चिमे देशे सा छोहारेति कीर्त्यते" भावप्र० खर्जूरशब्दे २४६८पृ० तद्गुणा दृश्याः।

छ्यु गतौ भ्वा० आत्म० सक० अनिट्। छ्यवते अच्छ्योष्ट णौ चङि अचि(चु)च्छ्यवत् त। णौ सनि चु(चि)च्छ्यावयिषति ते।

इति वाचस्पत्ये छकारादिशब्दार्थनिरूपणम्।

# ज

जकारो व्यञ्जनवर्णभेदः स्पर्शवर्णस्तस्योच्चारणस्थानं तालु, आभ्यन्तरप्रयत्नः जिह्वामध्यभागेन तालुस्पर्शः बाह्यप्रयत्नाश्च घोषसंवारनादाः अल्पप्राणश्च । मातृकान्यासेऽस्य वामगुल्फमध्ये न्यासः । तन्त्रोक्ता अस्य वाचकशब्दा यथा "जः स्तुरामनः शूली योगी च विजया स्थिरा । बलदेवो जयो जेता धातकी सुमुखो विभुः । लम्बोदरी मतिः शाखा सुप्रभा कम्बुकाधरा । दीर्घबाहुश्चित्ररूपो नन्दी तेजः सुरप्रिय । जयनो वेगितो वामगुल्फश्चन्द्रवदात्मकः । इच्छा कुलेश्वरो वेणी चामोदी मदविह्वल" वर्णोद्धारतन्त्रम् । अस्य ध्येयरूपं यथा "जकारं परमेशानि ! या स्वयं मध्यकुण्डली । शरच्चन्द्रप्रतीकाशं सदा त्रिगुणसंयुतम् । पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा । त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं प्रिये ।" कामधेनुतन्त्रम् । काव्येऽस्य प्रथमविन्यासफलम् वृत्त० र० टी० उक्तं "जोमित्रलाभमित्यादि" ।

ज पु० जि–जन–जु–वा ड । १मृत्युञ्जये २जन्मनि ३पितरि ४जनार्द्दने त्रि० मेदि० ५विषे ६मुक्तौ ७तेजसि ८पिशाचे च । शब्दरत्ना० ९वेगे एकाक्षरकोष "जो गुरुमध्यगत" इत्युक्ते गुरुमध्ये प्रान्तयोर्लघुद्वययुक्ते छन्दःशास्त्रप्रसिद्धे (।ऽ।) त्रिवर्णे १० गणे तस्य काव्यप्रथमविन्यासे । "भुजगोरुज ज" इत्युक्ते रोग फलम् सर्वोऽस्य देयः' ११जाते त्रि० "प्रावृट्शरत्कालदिवां जे" पा० अलुक् स० । प्रावृषिज शरदिज कालेज दिविज । "विभाषा वर्षक्षरशरेत्यादि" पा० । वर्षेज वर्षज इत्यादि । "तत्पुरुषे कृति बहुलम्" पा० । मनसिज मनोज सरसिज सरोजमित्यादि । जरायुज अण्डज स्वेदज उद्भिज्जाः" । १२वेगिते १३जेतरि त्रि शब्दरत्ना० । [कृपणे न०मेदि० ।

जकुट पु० ज जात कुटति कुट–क । १मलयाचले २वार्त्ताकौ

जक्ष भक्ष सक० हासे अक० अदा० स्वपादि० प० सेट् । स्वपादित्वात् रुदादिगणान्तर्गणत्वेन अन्तादेः सार्वधातुकस्य इट् । जक्षिति जक्षित अभ्यस्तसंज्ञा तेन जक्षति । अजक्षीत् "ज्ञतेव स्त्रीभिः सह मोदमानो जक्षन्ते वापि मयानि पश्यन्" शत०ब्रा० १४।७।१।१४। "अन्नत्यां कश्चिदन्नाति जक्षत्यां सह जक्षिति" भाग० ४।२५।५७।

"कृविर्जक्षिति नि शङ्कोमखेषु मघवासकौ" अत्तिनोऽनपराधेऽपि" भट्टि । अस्यान्तःस्थादितां केचित् मन्यन्ते । "यक्षतामिति येऽप्युक्तास्ते वै यक्षास्तु यक्षणात्" विष्णुपु० यक्षनामनिरुक्तौ तथादर्शनात् ।

जच्च दाने भ्वा० इदित् आ०सक०सेट् । इदित्करणसामर्थ्यात् अनुपधस्यापि नुम् । जञ्चते अजञ्चिष्ट । मित् । अजञ्चि अजा(ञ्चि) (जा) जञ्चम् । इदित्करणात् जञ्च्यते ।

जचण न० जच्च–भावे ल्युट् । भक्षणे हेमच० ।

जगच्चक्षुस् पु० जगतां चक्षुरिव प्रकाशकत्वात् । सूर्ये हेमच०

जक्षादि पु० "जक्ष जागृ दरिद्रा च चकासृ शास्तिरेव च । दीधी वेवी च विज्ञेयो जक्षादि पञ्चकोगण" इत्युक्ते अभ्यस्तसंज्ञे धातुपञ्चके "नाभ्यस्ताच्छतुः" पा० जक्षत् जाग्रत् इत्यादि ।

जगत् पु०गम–क्विप् नि० द्वित्वम् तुक् च । १वायौ २जङ्गमे त्रि० मेदि० । ३विश्वे न० अमर । ४लोके सचराचरे प्रपञ्चभूते भोगोपयोगिपरिकरसहिते मायामये संसारचक्रे यथोक्तमभियुक्तैः "न निरूपयितुं शक्या विस्पष्ट भासते च या । सा मायेतीन्द्रजालादौ लोकाः सम्प्रतिपेदिरे । स्पष्टं यथा जगच्चेदमशक्यं तन्निरूपणम् । मायामयं जगत् भाति वीक्ष्यस्वापक्षपातत" । "जगद्योनिरयोनिस्त्वं जगदन्तोनिरन्तकः । जगदादिरनादिस्त्वं जगदीशोनिरीश्वर" कुमा० । "जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ" रघु० । "यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्" मनु । लोके "जगत्यपर्याप्तसहस्रभानुना" "युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत" माघ । जङ्गमे "जगतां तस्थुषश्च" सन्ध्यामन्त्र । शिवन्तत्वात् जगत् जगती इत्यादिरूपम् "वृषन्महज्जगच्छतवच्च" पा० निपातनपक्षे जगन् जगन्तौ इत्यादिरूपमिति केचिदाहुस्तच्चिन्त्यम् तस्य शतृतुल्यत्वेऽपि "नाभ्यस्ताच्छतुरिति" पा० निषेधात् न नुम् । शतृतुल्यत्वयोगात्तु स्त्रियां ङीप् जगती [हेमच० ।

जगत्कर्त्तृ पु० ६त० । १ईश्वरे तदभेदात् २चतुर्मुखादौ

जगच्छन्द पु० जगती छन्दोऽस्य वेदे नि० पुंवद्भावः । जगत्या छन्दसा स्तुत्ये । "त्वरोऽसि गयोऽसि जगच्छन्दा" ता० ब्रा० १।५।१५ ।

जगत्पति पु० ६त० । १परमेश्वरे तदभेदात् २हरिहरादौ "यदा च तस्याधिगमे जगत्पते", कुमा० जगदीशादयोऽप्यत्र । जगदीशो निरीश्वरः" कुमा०

जगत्प्राण पु० जगत् प्राणित्यस्मात् प्र+अन्—अपादाने घञ् ६त०। वायौ अमर० "जगत्प्राण। मायानयहरसि किन्ते व्यवसितम्" सा० द०।

जगत्साक्षिन् पु० ६त०। १ईश्वरे २सूर्ये च हेमच०।

जगत्सेतु पु० जगतः सेतुरिव सर्वमर्य्यादाकारकत्वात्। परमेश्वरे जगतां सन्तारणहेतुत्वादसम्भेदकरत्वाच्च वर्णाश्रमादीनां, "एष सेतुर्विधरणो लोकानामसम्भेदाय" श्रुतेस्तस्य तथात्वम्। अलुक् समा०। जगतःसेतुरप्यत्र "औषधं जगतः सेतुः" विष्णु स०।

जगती स्त्री गम—क्विप् "द्युतम्ब्रह्मज्जगच्चेत्यादिवत्" पा० गत शुद्धत्वात् ङीप्। १भुवने। २पृथिव्याम् "आर्यभट्टमते भूमेश्चलत्वात् गतिमत्त्वेन तथात्वम्। अन्यमते जगदाधारत्वात् तस्यास्तथात्वमिति भेदः। ३द्वादशाक्षरपादके छन्दोभेदे छन्द शब्दे दृश्यम्। ४जम्बुवृक्षे हेमच०। ततोऽभवादौ जगता० अञ्। जागत जगतीभवादौ। स्त्रियां टाप्। छन्द शब्दे उदा०।

जगदम्बा स्त्री ६त०। दुर्गायां स्वार्थे क। जगदम्बिकाप्यत्र। "सृष्टिस्थितिविनाशानां विधात्री जगदम्बिका" देवीगीता। जगद्धात्रीशब्दे उदा०

जगदादि पु० ६त०। १परमेश्वरे। २तद्भेदाद्गुरानमादौ "जगदादिरनादिस्त्वम्" कुमा०

जगदादिज पु० हिरण्यगर्भरूपेण जगतामादौ जायते जन—ड। परमेश्वरे। "भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः" विष्णु स०।

जगदाधार पु० ६त०। १वायौ शब्दच०। २जगदाश्रये काले च "कालोऽहि जगदाधारः" ति० त०। जगदाश्रया दयोऽप्यत्र "अन्यानां जनक कालो जगतामाश्रयोमतः" भाषा०।

जगदायु(स्) पु० जगतामायुः साधनत्वात् आयुः प्राणो० वा समाप्त। वायौ। "अथ केसरिणः क्षेत्रे वायुना जगदायुना" भा० व० १४७अ०। "वायुना द्विपदां श्रेष्ठ क्षिप्तो जगदायुषा" भा० शा० ३४०अ०।

जगद्गुरु पु० ६त०। १परमेश्वरे। "स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" पात० सू०। तस्य सर्वगुरुत्वाद्यथा तथात्वम्। २शिवादौ "अत ते गुरवः सर्वे मातापिता जगद्गुरुः" (शिवम्) कुमा०। "मेने पराद्धर्यमात्मानं गुरुणा जगद्गुरोः" रघु। ३जगतामुपदेष्टरि नारदादौ। "नारदम् जगतोगुरुभूर्विरुवाय गगन विचरन्"

मैव० जगद्गुरोर्गुरुः पद्ममील०। ४जगद्गुरोर्गुरुर्ब्रह्मेव।

जगद्गौरी स्त्री जगतां मध्ये गौरी। मनसादेव्यां शब्दर०।

जगद्दीप पु० जगतोदीपस्य प्रकाशकत्वात्। परमेश्वरे "तस्य भासा सर्वमिदं विभाति" श्रुतिः तद्भेदात् २शिवादौ "जगद्योनिः जगद्दीप जयिन जगतोगतिम्" भा० द्रो० २०२ शिवस्त०।

जगद्धात्री पु० ६त०। १परमेश्वरे। दुर्गामूर्तिभेदे स्त्री ङीप्। तस्याः पूजाकालव्यवस्था।

निगमकल्पसारे शाक्तसारतन्त्रे कल्ये च दुर्गाकल्पे "श्रीशिव उवाच। प्रसीद जगतां मातर्जगद्धात्रि जगत्प्रकारिणि।। अतएव महेशानि! तवाहं शरणागत। त्वया यत् कथितं पूर्वं तत्सर्वं श्रुतं मया। जगद्धात्री महादुर्गा चतुर्वर्गफलप्रदा। तस्याः पूजाविधिर्दिनं कालस्तत्र प्रकाशितम्। तदेव कथयेशानि! श्रोतुमिच्छामि साम्प्रतम्। श्रीदेव्युवाच। कथयामि महेशान! सावधानावधारय। तस्याः पूजाविधिर्दिनं समय भावभेदतः। कार्त्तिके शुक्लपक्षे च या दुर्गानवमी तिथिः। सा प्रशस्ता महादेव! महादुर्गाप्रपूजने। प्रातश्च सात्त्विकी पूजा मध्याह्ने राजसी मता। सायाह्ने तामसी पूजा त्रिविधा परिकीर्त्तिता। जपयज्ञादिभिर्देव! इति त्रैकालिकी मता। अथान्यत् सम्प्रवक्ष्यामि शृणुष्व परमेश्वर!। सप्तम्यादि नवम्यान्तं पूजाकाम इतोरितः। त्रिदिने त्रिविधा पूजा दशम्यान्तु विसर्जनं येन। पूजा परेऽह्नि देवेश! इत्थमाहु विसर्जनम्। वेदितायां प्रकारेण तत्र पूजा प्रकीर्त्तिता। शिव उवाच त्रिसन्ध्याव्यापिनी सा तु यदि स्यान्नवमी तिथिः। त्रिकाले त्रिविधा पूजा कथं देव्या जगन्मयि!। कथयस्व महेशानि! इति मे संशयोऽहृदि। श्रीदेव्युवाच। या प्रातः व्यापिनी यत्र वासरे नवमी तिथिः। त्रिसन्ध्य पूजयेत्तत्र वासरे जगदम्बिकाम्। सम्पूर्णव्यापिनी चेद्यदि तत्र प्रातः महेश्वर!। एककाले त्रिधा पूजां कारयेदेव कारयेत्"।

तत्पूजायां दशम्यां बलिदाननिषेधः तन्त्रान्तरे "श्रीपार्वत्युवाच। दशम्यां बलिदानन्तु निषिद्धं जगदीश्वर!। कथं त्रिकाल पूजा वा कथयेत् परमेश्वर!। शिव उवाच "नवमीतिथिमाश्रित्य तत्र पूजाविधिर्भवेत्। निषिद्धं बलिदानन्तु दशम्यां तत्र सुन्दरि!। नवमीदिनमाश्रित्य पूजाविधिरिहोदितः। दशम्यां

र्च्चितामन्तु निषिद्धं नात्र पार्वति"। ध्यानामृतसारे पूर्वं प्रकारमुक्त्वा "मुहूर्त्तव्यापिनी चापि प्रातर्वे नवमी तिथिः। तद्दिने पूजनं कार्य्यं त्रिसन्ध्यं वरवर्णिनि॥ त्रिकालं पूजयेत्तत्र नैककाले कदाचन"। कात्यायनीतन्त्रे ७पटले। "कुम्भराशिगते चन्द्रे नवम्यां कार्त्तिकस्य च। उपसर्गोदिते भ्रातुर्गौमाराध्य यत्नतः। पुत्रारोग्यं बहु लेभे लोकसाक्षित्वमेव च। तां तिथिं प्राप्य मनुजः शनिभौमदिने यदि। प्रपूजयेन्महादुर्गां धर्म्मकामार्थमोक्षदाम्"। शक्तिसङ्गमतन्त्रे "कार्त्तिकस्य सिते पक्षे नवम्यां जगदीश्वरीम्। त्रिकालमेककालं वा वर्षे वर्षे प्रपूजयेत्। स्वर्णमयीं प्रतिमां शक्त्या जगद्धात्र्या विधानतः। पूजयित्वा परदिने प्रतिमां तां विसर्ज्जयेत्। पुत्रपौत्रधनैश्वर्य्यं संयुतोऽस्य भवेत् पुरी"। तन्त्रान्तरे। "कुजवारे युगाद्यायां नवम्यान्तु जगत्प्रसूः। प्रादुर्भूता महेशानी तत्र तां परिपूजयेत्" तन्त्रान्तरे। "त्रिकालं पूजयेद्दुर्गां मूलेनैकाक्षरेण च(दूं)। नानारत्नविधानेन गीतवाद्यपुरःसरम्। कार्त्तिकस्य सिते पक्षे नवम्यान्तु विशेषतः। लभेत् साधकश्रेष्ठो लभेद्राज्यमकण्टकम्"। योगिनीतन्त्रे "कार्त्तिकेऽमलपक्षे तु नवम्यान्तु विशेषतः। उद्बुद्धान्तु जगद्धात्रीं पूजयेद्दीपमालया" आगमतत्त्वसारे "कार्त्तिकेऽमलपक्षे तु नवम्यां भौमवासरे। आविर्भूता जगद्धात्री युगादौ दैत्यनाशिनी"। उत्तरकामाख्यातन्त्रे "कार्त्तिके शुक्लपक्षे तु त्रेतायाः प्रथमेऽहनि। त्रिसन्ध्यं पूजयेद्देवीं दुर्गां सम्पत्प्रवृद्धये"। कुब्जिकातन्त्रे "कार्त्तिके शुक्लपक्षे तु नवम्यां जगदम्बिकाम्। दुर्गां प्रपूजयेद्भक्त्या धर्म्मकामार्थसिद्धये। दुर्गाकल्पे विद्योत्पत्तौ "कार्त्तिके शुक्लपक्षेऽह्नि भौमवारे जगत्प्रसूः। सर्वदेवहितार्थाय दुष्टसंशमनाय च। आविरासीत् जगच्छान्त्यै युगादौ परमेश्वरी"। व्रतकालविवेकधृतवचनम् "कार्त्तिकेऽमलपक्षस्य त्रेतायां प्रथमेऽहनि। पूजयेत्तां जगद्धात्रीं सिंहपृष्ठे निषेदुषीम्"। स्मृतिः। "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता"। कृत्यतत्त्वार्णवे "कार्त्तिकेऽमलपक्षे तु युगाद्या नवमी स्मृता। पूर्वाह्णसमये तत्र पूजाविधिरिहोदितः"। कृत्यतत्त्वार्णवे भविष्यपुराणम् "कार्त्तिके शुक्लपक्षे तु युगाद्या नवमी स्मृता। पूर्वाह्णसमये कालात्मिका परदिने यदि। तत्र पूजादिकं कुर्य्यात् पितृनिर्वपणादृते"। स्मृतिसागरे "कार्त्तिकस्य युगाद्यायामम्बिकामर्च्चयेदुमाम्"। ततश्च उक्तवचनेषु तत्तिथेर्युगादित्वेन कीर्त्तनात् तत्पूजायाश्च युगादिदिनकर्त्तव्यत्वेन विधानात् पूर्वापरदिनयोस्तस्याः सम्बन्धे परदिन एव कर्त्तव्यता न तु युग्मशास्त्रेण अष्टमीविद्धाया ग्राह्यता युगाद्या वर्षवृद्धिश्चेत्यादि वचनात् यत्तु "श्रावणी दौर्गनवमी दूर्वा चैव हुताशिनी। पूर्वविद्धैव कर्त्तव्येत्यादि" वचनं तत् एतद्भिन्ननवमीकर्त्तव्यदुर्गाव्रतपरम् तच्च व्रत व्रतशब्दे वक्ष्यमाणं द्रष्टव्यम्। जगद्धात्रीविद्योत्पत्तिमाह कात्यायनीतन्त्रे ७६पटले। "पार्वत्युवाच। भगवन्! प्राणनाथेश! सर्वतत्त्वविशारद!। श्रुता कात्यायनीविद्यासम्पत्परिक्लिन्नलोचन!॥ महादुर्गाजगद्धात्रीविद्योत्पत्तिर्भवेद्यतः। तत् सर्वं ब्रूहि भगवन्! कृपया परमेश्वर!॥ इति देवीप्रश्ने "श्रीशिव उवाच। शृणु पार्वति! वक्ष्यामि रहस्यं परमाद्भुतम्। यत् श्रुत्वा लभते देवि! सौभाग्यसुखमुत्तमम्। पुरा पुरन्दरमुखाः स्वेश्वरत्वाभिमानिनः। प्राहुः किमीश्वरोऽस्त्यस्मानतिरिच्य सुरानिति। अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी। एतेषां धर्मसेतूनामिन्द्रादीनां नियन्त्रणम्। करिष्यामीति निश्चित्य ज्योतीरूपं दधावलम्। तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी। कोटिसूर्य्यप्रतीकाशं चन्द्रकोटिसमप्रभम्। ज्वलन्तं पर्वतमिव सर्वलोकभयङ्करम्। तद्दृष्ट्वा सुराः सर्वे भयमापुर्महौजसः। किमेतच्च विनिश्चेतुं शक्तास्ते ह्यभवन् सुराः। वायुमाह समाहूय किमेतत् परमाद्भुतम्। विजानीहि महाबीर मातरिश्वन्! दिशां पते!। ततो वायुर्द्रुतं तत्र गतस्तेजोऽन्तिकं ततः। तमन्तिकमुपायातं प्राह तेजोमयी तनुः। भगवन्! कस्त्वमायातो वीर्य्यं किञ्चास्ति वा त्वयि। आदातुं शक्यते सर्वं पृथिवीतलसम्भवम्। इति प्रत्युक्तवान् वायुः क्षणं तत्रैव तिष्ठति। आदत्स्वैतत् तृणमिति निदधौ वायवे तृणम्। वायुः सर्वप्रयत्नेन नादातुं तत्क्षमोऽभवत्। ततो देवाः प्राहुरग्निं भीता उद्विग्नमानसाः। अग्ने! एतद्विजानीहि किमेतत् कर्म्म चाद्भुतम्। इत्युक्तो देवतावृन्दैरग्निस्तेजोऽन्तिकं गतः। तमरो जातवेदा वा तेजोवाणिमुवाच तम्। स प्रोक्तवानग्निरस्मि सर्वदाहकशक्तिकः। दहैतत् तृणमत्रस्थमिति तस्मै तृणं ददौ। अग्निः सर्वप्रयत्नेन दग्धुं नैव तत्क्षमोऽभवत्। ततो निवृत्ते वह्निर्भूत्वा सोऽपत्र-

प्रार्थित । एकतस्या सुरा सर्वे मन्त्रयामासुरुत्तमम् । इयमेवेश्वरी नून नोपयामोनेश्वरा वयम् । इति निश्चित्य ह्यधियस्तुष्टुवु परमेश्वरीम् । प्राहुर्देवगणा सर्वे स्वमीया नेश्वरा वयम् । ईश्वरत्वाभिमानेन यदस्माकं समुत्पन्नम् । जन्तुमर्हसि तत् सर्वं कृपया जगदम्बिके । तत्-रूप सुगोप्य यन्मङ्गल्य सर्वमङ्गलम् । तद्द्रष्टु वयमिच्छामो देहि दर्शनमुत्तमम् । इत्युक्तानां सुमुखीनामाविरासीच्छिवाम्बरे । तेजस्तन्मध्यगते तस्मिन् चमत्कारि कलेवरे । इन्द्रेऽपरि सुस्मेरा सर्वालङ्कारभूषिता । चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा । बालार्क-सदृशी देहे नागयज्ञोपवीतिनी । त्रिनेत्रा कोटिचन्द्राभा देवर्षिगणसेविता । दर्शयामास देवानामेव रूपं जगन्मयी । ततस्ता तुष्टुवुर्देवा जगद्धात्रीं महेश्वरीम् । सर्व प्राप्य सुरगणायथेष्ट त्रिदशालये । तत्रैवान्तर्हिता देवी महादुर्गा जगन्मयी" । इत्येव कथा प्रायश केनोपनिषदि स्थिता तद्वाक्यस्य इन्द्रशब्दे ९४२ पृ० दर्शितम् । इयांस्तु विशेष तत्र इन्द्रादिप्रबोधनाय प्रादुर्भूतया ब्रह्मशक्त्या हैमवत्या ब्रह्ममहात्म्यं नैव इन्द्रादीनामसुरजयशक्तिरुक्ता अत्र तु शक्तिशक्तिमतोरभेदेन जगद्धात्रीरूपेणाविर्भूताया देव्या माहात्म्योक्तिरिति ।

जगद्बल पु० जगतां बलमस्मात् । वायौ त्रिका० । तस्यैव प्राणरूपस्य वृत्तिभेदात् सर्वबलक्रियाहेतुत्वस्य श्रुत्या छान्दोग्ये उक्तत्वात् तस्य तथात्वम् यथा "अथोयान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत" । बलस्य च सर्वक्रियाहेतुत्वं छान्दोग्ये भूमविद्यायामुक्तं यथा "बल वाव विज्ञानाद्भूयोऽपि ह शत विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृणवनस्पतय श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति" । सर्वक्रियाणां वायुकार्य्यत्व च स्मर्य्यते दर्शित यथा "वायव्या स्पर्शः स्पर्शेन्द्रिय सर्वचेष्टादयः सर्वशरीरस्पन्दन लघुता च" तेन सर्वचेष्टानां वायुकार्य्यत्वोक्त्या बलस्य च तत्र हेतुत्वोक्त्या च वायोरेव बलहेतुत्वमवसीयते ।

जगद्योनि स्त्री जगतां योनिरिवोत्पत्तिस्थानत्वात् । १परमेश्वरे तस्य जन्मादिहेतुत्वात् तथात्वम् । २शिवे ३विष्णौ ४चतुर्मुखे तु तदभेदोपचारात् "जगद्योनिरयोनिस्त्वम्" कुमा० ब्रह्मस्तवे । "जगद्योनि जगद्बीज जयिन जगतोगतिम्" भा० भी० २०अ० शिवस्तवे । "नारायण जगद्योनि पुराणं पुरुषं ध्रुवम्" हरिव० १०७अ० । विष्णुस्तवे । ५पृथिव्यां शब्दच० तस्याः भूतचतुष्टयोत्पत्तिस्थानत्वात् तथात्वम् ।

जगद्वहा स्त्री जगन्ति वहति धारयति वह—अच् । सर्वंसहायां मेदिन्याम् त्रिका० ।

जगद्विनाश पु० जगतोऽखिलकर्मवतो विनाशोऽत्र । कल्पान्ते प्रलयकाले । प्रलये च सर्वं क्रियाशून्यत्व यथाह मनुः । "यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति । तस्मिन् स्वपिति तु स्वस्थे कर्मात्मानः शरीरिणः । स्वकर्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति । युगपत्तु प्रलीयन्ते यदा तस्मिन् महात्मनि । तदायं सर्वभूतात्मा सुखं स्वपिति निर्वृतः । तमोऽयन्तु समाश्रित्य चिरन्तिष्ठति सेन्द्रियः । न च स्वं कुरुते कर्म तदोत्क्रामति मूर्त्तितः" ।

जगनु(न्) पु० जगता नश्यते नश—बा० कर्मणि कु वा पृ० षो० नलोप । १जन्तौ वैश्वानरे २वह्नौ च मेदि० । जगत्नुरिति पाठस्तत्रार्थे । तत्र जन्तोर्जगत्त्वेन जगता नश्यमानत्वात् वह्नेस्तु सर्वनश्यमानत्वात् तथात्वम् ।

जगन्नाथ पु० ६त० । १परमेश्वरे "एष सर्वेश्वर" इत्यादिश्रुतेस्तस्य सर्वेश्वरत्वात् तथात्वम् । तदभेदात् २विष्णौ । अर्श०अच् । ३तद्दीयस्थानभेदे न० तत्क्षेत्रस्य तन्नामताकारणं स्कन्दपु० उत्कलखण्डे यथा "एतत्क्षेत्रवर चास्य वपुर्भूतं महात्मनः । स्वयं वपुष्मान् यत्रास्ते स्वनाम्ना ख्यापितं हि तत्" । तत्स्थानसीमातीर्थभेदादि पुरुषोत्तमतत्त्वे उक्तं यथा

ब्रह्मपुराणे "पृथिव्यां भारतं वर्षं कर्मभूमिरुदाहृता । न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते । तस्मात्ते भारते वर्षे दक्षिणोदधिसंस्थित । ओड्रदेश इति ख्यात स्वर्गमोक्षप्रदायक । समुद्रादुत्तरे तीरे यावद्विरजमण्डलम्" । तीर्थकाण्डकल्पतरौ वामनपुराणम् "उपोष्य रजनीमेकां विरजां च नदीं गतो । स्नात्वा

परे । तावत् सर्व्वंगमाभा तु केरलः परिकीर्त्तितः । शारदामठमारभ्य कुङ्कुमाद्रितटान्तकम् । तावत्काश्मीरदेशः स्यात् पञ्चाशद्योजनात्मकः । कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतम् । कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि । त्रिपस्तकं समारभ्य मध्ये चोज्जयिनी शिवे । मार्ज्जारतीर्थं रागेन्द्र । कोलापुरनिवासिनी । तावद्देशो महाराष्ट्र कर्णाटस्यापि गोचर । जगन्नाथादूर्द्ध्वभागादर्व्वाक् श्रीभ्रमराम्बिकात् । तावदन्ध्राभिधो देश सौराष्ट्र शृणु सादरम् । कोङ्कणात् पश्चिमं तीर्थं समुद्रान्तगोचरम् । हिङ्गुलाटान्तको देवि । दशयोजनदेशत । सौराष्ट्रदेशो देवेशि । तस्मात्तु गुर्ज्जराभिध । श्रीशैलन्तु समारभ्य चोलेशानुमध्यभागत । तैलङ्गदेशो देवेशि । ध्यानाध्ययनतत्परः । शराम्बिका समारभ्य मलयाद्र्यन्तग शिवे । । मलयाख्याभिधोदेशो मन्त्रसिद्धिप्रवर्त्तक । रामनाथ समारभ्य श्रीरङ्गान्तं कुलेश्वरि । । कर्णाटदेशो देवेशि । साम्राज्यभोगदायकः । ताम्रपर्णीं समारभ्य शैलार्द्धशिखरोर्द्धत । अवन्तीसञ्ज्ञको देश कालिका तत्र तिष्ठति । भद्रकाली महापूर्व्वे रामदुर्गाञ्च पश्चिमे । श्रीविदर्भाभिधो देशो वैदर्भी तत्र तिष्ठति । गुर्ज्जरात् पूर्व्वभागे तु द्वारकातो हि दक्षिणे । मरुदेशो महेशानि । ऊष्ट्रोत्पत्तिपरायणः । श्रीकोङ्कणादधोभागे तापीत पश्चिमे परे । आभीरदेशो देवेशि । विन्ध्यशैले व्यवस्थितः । अवन्तीतः पूर्व्वभागे गोदावर्य्यास्तथोत्तरे । मालवाख्यो महादेशो । धनधान्यपरायणः । द्रविड़तैलङ्गमध्ये चोलदेश प्रकीर्त्तित । लम्बकर्णाश्च ते प्रोक्तास्तद्देशान्तरा भवेत् । कुरुक्षेत्रात् पश्चिमे तु तथा चोत्तरभागतः । इन्द्रप्रस्थान्महेशानि । दशयोजनकद्वये । पाञ्चालदेशो देवेशि । सौन्दर्य्यगर्व्वभूषितः । पाञ्चालदेशमारभ्य म्लेच्छाद्दक्षिणपूर्व्वतः । काम्बोजदेशो देवेशि । वाजिराजिपरायणः । वैदर्भदेशादूर्द्ध्वञ्च इन्द्रप्रस्थाच्च दक्षिणे । मरुदेशात् पूर्व्वभागे वैराट परिकीर्त्तितः । काम्बोजाद्दक्षभागे तु इन्द्रप्रस्थाच्च पश्चिमे । पाण्ड्यदेशो महेशानि । महाशूरत्वकारकः । गण्डकीतीरमारभ्य चम्पारण्यान्तक शिवे । । विदेहभूः समाख्याता तैरभुक्ताभिध स तु । काम्बोजदेशमारभ्य महाम्लेच्छात्तु पूर्व्वके । वाह्लीकदेशो देवेशि । अश्वोत्पत्तिपरायण । तप्तकुण्ड समारभ्य रामक्षेत्रान्तक शिवे । । किरातदेशो देवेशि । विन्ध्यशैलेऽव

तिष्ठति । करतोयां समारभ्य हिङ्गुलाटान्तगः शिवे । सुनतानदेशो देवेशि । महाम्लेच्छपरायणः । हिङ्गुपीठं समारभ्य मक्केशान्त महेश्वरि । । खुरसानाभिधो देशो म्लेच्छमार्गपरायण । तन्मध्ये चोत्तरे देवि । ऐराकः परिकीर्त्तितः । काश्मीरन्तु समारभ्य कामरूपात्तु पश्चिमे । भोटान्तदेशो देवशि । मानसेशाच्च दक्षिणे । मानसेशा दक्षपूर्व्वे चीनदेशः प्रकीर्त्तितः । कैलागीर समारभ्य सरयू परित परे । अमरगान्महेशानि । महाचीनाभिधो भवेत् । नटेश्वरं समारभ्य योगिन्यन्त महेश्वरि । नेपालदेशो देवेशि । शिवहट्ट शृणु शिवे । गणेश्वर समारभ्य महोदध्यन्तगं शिवे । । शिवहट्टाभिधो देशः पर्व्वते तिष्ठति शिवे । । वङ्गदेश समारभ्य भुवनेशान्तगं शिवे । गौड़देश समाख्यातः सर्व्वविद्याविशारद । गोकर्णशात् पूर्व्वभागे आर्य्यावर्त्तात्तु चोत्तरे । तैरभुक्तात् पश्चिमे तु महाशुर्य्याश्च पर्व्वत । महाकोशलदेशश्च सर्व्वंसत्त्वपरायणः । व्यासेश्वर समारभ्य तप्तकुण्डान्तक शिवे । । मगधाख्यो महादेशो यात्रायां न हि दुष्यति । दक्षोत्तरक्रमेणैव क्रमात् कीकटमागधौ । चरणाद्रिं समारभ्य गृध्रकूटान्तकः शिवे । तावत् कीकटदेशः स्यात्तदन्तर्मागधो भवेत् । जगन्नाथप्रान्तदेशश्चोत्कलः परिकीर्त्तितः । कामगिरिं समारभ्य द्वारकान्त महेश्वरि । श्रीकुन्तलाभिधो देशोह्रप शृणु महेश्वरि । । कामगिरेर्द्दक्षभागे मरुदेशात्तथोत्तरे । रेणुदेशः समाख्यात शूराश्च रमन्ति च । अयाध्यङ्कं समारभ्य कोटिदेशस्य मध्यगे । समुद्रान्तदेशो हि कोङ्कणः परिकीर्त्तित । ब्रह्मपुत्रात् कामरूपात् मध्यभागे तु कैकयः । मागधाद्दक्ष भागे तु विन्ध्याद्रात् पश्चिमत शिवे । । शौरसेनाभिधो देशः सूर्य्यंयशप्रकाशकः । हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे । पाञ्चालपूर्व्वभागे तु कुरुदेश प्रकीर्त्तितः । कुरुदेशात् पूर्व्वभागे कामाद्रेर्द्दक्षिणे शिवे । । सिंहलाख्यो महादेशः सर्व्वदेशोत्तमोत्तम । शिवहट्टात् पूर्व्वभागे कामरूपात्तथोत्तरे । पुलिन्ददेशो देवेशि । नरमारणतत्परः । गणेश्वरात् पूर्व्वभागे समुद्राद्उत्तरे शिवे । । कच्छदेश समाख्यातः सुदेव शृणु सादरम् । पुलिन्दाद्उत्तरे भागे कच्छाच्च पश्चिमे शिवे । । मत्स्यदेशः समाख्यातो मत्स्यमाङ्गल्यकारक । वैराटपाण्ड्ययोर्मध्ये पूर्व्वदक्षक्रमेण तु । मद्रदेश समाख्यातो माद्री च तत्र तिष्ठति । शूरसेनात् पूर्व्वभागे गण्डक्याः पश्चिमे । शिवे । ।

सौवीरदेशो देवेशि ! सर्व्वदेशाधमाधम । अवन्तीतः पश्चिमे तु वैदर्भाद्दक्षिणोत्तरे । लाटदेशः समाख्यातो वर्व्वरं शृणु पार्व्वति ।। मायापुरं समारभ्य सप्तशृङ्गान्तथोत्तरे । वर्व्वराख्यो महादेशः सैन्धवं शृणु सादरम्। लङ्काप्रदेशमारभ्य मक्कान्तं परमेश्वरि ।। सैन्धवाख्यो महादेशः पर्व्वते तिष्ठति प्रिये ।। एते षट् पञ्चाशद्देशा मया प्रोक्ता महेश्वरि। एतन्मध्येऽपि देवेशि! देशभेदा ह्यनेकशः । कोटिशः सन्ति देवेशि ! एते मुख्याः प्रकीर्त्तिताः । रहस्यातिरहस्यञ्च गोप्तव्यं पशुसङ्कटे । इति सङ्क्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि" ।

तत्र भवः उत्सा० अञ् । जनपदादागतः अण् तस्येदम् अण् वा । जानपद तत्र भवे तत आगते तत्सम्बन्धिनि च। "नीवारपाकादिकडङ्गरीयैरामृश्यते जानपदैर्न कश्चित्।" "देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु" याज्ञ० स्त्रियां तु वृत्तौ जानपदेत्यादि पा० ङीप् । वृत्तावेव ङीपो नियमात् अन्यत्र जानपदा अजन्तस्य ङीपि जानपदी तत्रभवस्त्रियां पित्त्वात् आद्युदात्तता । "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" नीतिसार ।

**जनपदिन्** त्रि० जनपदाः सन्त्यस्य स्वत्वेन इनि । जनपदस्वामिनि । "जनपदिना जनपदेन समानशब्दानाम्" पा० "जनपदिनां जनपदस्वामिनाम्" सि० कौ० । स्त्रियां ङीप् । [ तायां हेमच० ।

**जनप्रवाद** पु० जनेषु प्रवादः ७त० । जनापवादे वचनीय

**जनप्रिय** पु० ६त० ।१ शोभाञ्जनवृक्षे २धन्याके च राजनि० । ३लोकप्रियमात्रे त्रि० ।

**जनभक्ष** पु० जनाना भक्षः भज—वा० कर्म्मणि स । २यजमानानां कामदानेन भजनीये । "सत्रासाहो जनभक्षो जनं सह" ऋ०२।२।१।२। २जनानां भक्षणे च ।

**जनमेजय** पु० जनमेजयति एज—णिच्—खश् । १परीक्षितो नृपतेः पुत्रे २कुरुनामभूपपुत्रभेदे च ।"ततः संवरणात्सौरी तपती सुषुवे कुरुम् । राजत्वे तं प्रजाः सर्व्वा धर्म्मज्ञ इति वव्रिरे । तस्य नाम्नाऽभिविख्यातं पृथिव्यां कुरुजाङ्गलम् । कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः । अविक्षितमभिष्यन्तं तथा चैत्ररथं मुनिम् । जनमेजयञ्च विख्यातं पुत्रांश्चास्यानुशुश्रुम । पञ्चैतान् वाहिनी पुत्रान् व्यजायत मनस्विनी । जनमेजयस्य तनया भुवि ख्याता महाबलाः" भा०आ०९४अ० । ३पुरुनृपपुत्रे च "पुरोः पुत्रो महावीर्य्यो राजासीज्जनमेजयः" हरिवं० ३१अ० । तत्र परीक्षित्पुत्रो जनमेजयः सर्पसत्रे भारतं श्रुतवान् तत्कथा भा० आ० ५०अ० ।

"मन्त्रिणाञ्च वचः श्रुत्वा स राजा जनमेजयः । पर्य्यतप्यत दुःखार्त्तः प्रत्यपिंषत् करं करे । निःश्वासमुष्णमसकृद्दीर्घं राजीवलोचनः । मुमोचाश्रूणि च तदा नेत्राभ्यां प्ररुदन्नृप । दुर्द्धरं बाष्पमुत्सृज्य स्पृष्ट्वा चापो यथाविधि । मुहूर्त्तमिव च ध्यात्वा निश्चित्य मनसा नृप । अमर्षी मन्त्रिणः सर्व्वानिदं वचनमब्रवीत् । जनमेजय उवाच । श्रुत्वैतद्भवतां वाक्यं पितुर्मे स्वर्गतिं प्रति । निश्चितेयं मम मतिर्या च तां मे निबोधत । अनन्तरञ्च मन्येऽहं तक्षकाय दुरात्मने । प्रतिकर्त्तव्यमित्येवं येन मे हिंसितः पिता । ऋतेर्हि शृङ्गिणोवाक्यं कृत्वा दग्ध्वा च पार्थिवम् । इयं दुरात्मता तस्य काश्यपं यो न्यवर्त्तयत् । यद्यागच्छेत् स वै विप्रो ननु जीवेत् पिता मम । परिहीयेत किं तस्य यदि जीवेत् स पार्थिवः । काश्यपस्य प्रसादेन मन्त्रिणां विनयेन च । स तु वारितवान्मोहात् काश्यपं द्विजसत्तमम् । सञ्जिजीवयिषुं प्राप्तं राजानमपराजितम् । महानतिक्रमो ह्येष तक्षकस्य दुरात्मनः । द्विजस्य योऽददद्द्रव्यं मा नृपं जीवयेदिति । उत्तङ्कस्य प्रियं कर्त्तुमात्मनश्च महत् प्रियम् । भवताञ्चैव सर्व्वेषां गच्छाम्यपचितिं पितुः" ।

"सौतिरुवाच । एवमुक्त्वा ततः श्रीमान्मन्त्रिभिश्चानुमोदितः । आरुरोह प्रतिज्ञां स सर्पसत्राय पार्थिवः । ब्रह्मन् ! भरतशार्दूलो राजा पारीक्षितस्तदा । पुरोहितमथाहूय ऋत्विजो वसुधाधिप । अब्रवीद्वाक्यसम्पन्नः कार्य्यसम्पत्करं वचः । यो मे हिंसितवांस्तातं तक्षकः स दुरात्मवान् । प्रतिकुर्य्यां तथा तस्य तद्भवन्तो ब्रुवन्तु मे । अपि तत्कर्म्म विदितं भवतां येन पन्नगम् । तक्षकं तु प्रदीप्तेऽग्नौ प्रक्षिपेयं सबान्धवम् । यथा तेन पिता मह्यं पूर्वं दग्धो विषाग्निना । तथाहमपि तं पापं दग्धुमिच्छामि पन्नगम् । ऋत्विज ऊचुः । अस्ति राजन् महत् सत्रं त्वदर्थं देवनिर्म्मितम् । सर्पसत्रमिति ख्यातं पुराणे परिपठ्यते । आहर्त्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिप ।। इति पौराणिकाः प्राहुरस्माकं चास्ति स क्रतुः । सौतिरुवाच । एवमुक्तः स राजर्षिर्मेने दग्धं हि तक्षकम् । हुताशनमुखे दीप्ते प्रविष्टमिति सत्तम ।। ततोऽब्रवीन्मन्त्रविदस्तान्राजा ब्राह्मण०।५१।८।

व्याहरिष्यामि तत् सर्वं कथान्ते वर्णितन्तु मे" ५८अ०। "श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम्। अभ्याजगाम तद्विद्वान् कृष्णद्वैपायनस्तदा"। तदुपक्रमे "इद यथाद्विजश्रेष्ठं पर्यपृच्छत् कृताञ्जलिः। जनमेजय उवाच। कुरूणां पाण्डवानाञ्च भवान् प्रत्यक्षदर्शिवान्। तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज!। कथं समभवद्भेदस्तेषामक्लिष्टकर्मणाम्। तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत्। पितामहानां सर्वेषां दैवेनाविष्टचेतसाम्। कार्त्स्न्येनैतत्समाचक्ष्व यथावृत्तं द्विजोत्तम!॥ सौतिरुवाच। तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा। शशास शिष्यमासीनं वैशम्पायनमन्तिके। व्यास उवाच। कुरूणां पाण्डवानाञ्च यथा भेदोऽभवत् पुरा। तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि। गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा। आचचक्षे ततः सर्वमितिहासं पुरातनम्। राज्ञे तस्मै सदस्येभ्यः पार्थिवेभ्यश्च सर्वश। भेदं सर्वविनाशञ्च कुरुपाण्डवयोस्तदा"। ६० अ० "वैशम्पायन उवाच। गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः। सम्पूज्य च द्विजान् सर्वांस्तथाऽन्यान् विदुषो जनान्। महर्षेर्विश्रुतस्येह सर्वलोकेषु धीमतः। प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यास्य महात्मनः। श्रोतुं पात्रञ्च राजंस्त्वं प्राप्येमां भारतीं कथाम्। गुरोर्वक्त्रपरिस्पन्दो मनः प्रोत्साहतीव मे। शृणु राजन्! यथा भेदः कुरुपाण्डवयोरभूत्। राज्यार्थे द्यूतसम्भूतो वनवासस्तथैव च"। ६१ अ०। "स कदाचिन्मृगयां गतः पारीक्षितो जनमेजयः कस्मिंश्चित् स्वविषये आश्रममपश्यत्" भा० आ० ३अ०। "परीक्षितस्तु दायादो धार्मिकोजनमेजयः। जनमेजयस्य तनयास्त्रय एव महारथाः। श्रुतसेनोग्रसेनौ च भीमसेनश्च भारत"। "द्वावश्वौ तव वंशेऽस्मिन् द्वावेव च परीक्षितौ। भीमसेनास्त्रयो राजन् द्वौ चापि जनमेजयौ"। "कक्षस्य च द्वितीयस्य भीमसेनोऽभवत् सुतः।" "अभिमन्योः परीक्षित्तु पिता तव जनेश्वर!" भा०आ०९४अ०। ४पुरञ्जयनृपपुत्रे "जनमेजयो महाराज! पुरञ्जयसुतोऽभवत्। जनमेजयस्य राजर्षेर्महाशालोऽभवत्सुतः" हरिवं० ३१अ०।

**जनयति** स्त्री जन–णिच्–भा० भावे क्तिन् वेदे नि० णि० लोपाभावः। उत्पादने "जनयत्यै त्वा संयौमि" यजु० १।२२।

**जनयितृ** पु० जन–णिच्–तृच्। १पितरि २उत्पादके त्रि० ३मातरि स्त्री ङीप्।

**जनरव** पु० ६त०। लोकापवादे। "परीवादस्तथ्यो भवति वितथोवाऽपि महतां तथाप्युच्चैर्धाम्नो हरति महिमानं जनरवः" उद्भट।

**जनराज** पु० जनेषु राजते राज–क्विप् ७त०। जनाधिपे "जनराडसि रक्षोहा" यजु० ५।२४। जनराजादयोऽप्यत्र। [प्रिये त्रि०।

**जनवल्लभ** पु० ६त०। १श्वेतरोहितवृक्षे राजनि० २लोक-

**जनवाद** पु० ७त०। लोकापवादे। "द्यूतं च जनवादश्च परीवादं तथानृतम्" मनुः। तत्र साधु कथा० ठञ्। जानवादिक जनवादसाधौ त्रि०। अनुकूल। जने वादोऽस्त्यस्य तत्र साध्वर्थे कथादि० ठञ्। जानवादिक तत्साधौ त्रि०।

**जनश्रुत** त्रि० जने श्रुतं विख्यात। १लोकविख्याते २राजभेदे पु० तस्यापत्यम् इञ्। जानश्रुति तदपत्ये पौत्रायणे "जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी आस" छा०उ०।

**जनश्रुति** स्त्री जनेभ्यः श्रूयते श्रु–क्तिन्। सत्यासत्यसाधारणलोकप्रसिद्धायां किंवदन्त्याम् अमर०।

**जनस्** स्त्री द्वि०व०। जनयत जन–णिच्–असुन्। सर्वभूतजनयित्र्योः द्यावापृथिव्योः। "पातु जनसी उभे अनु" ऋ० २।२।४।२ २जनलोके न० "जनस्तपःसत्यनिवासिनो जनाः" भाग० ३।११।२५।

**जनस्थान** न० १दण्डकारण्ये जटाधरः। २तदन्तःस्थानभेदे तत्र स्थानं पूर्वम् इक्ष्वाकुराजपुत्रदण्डस्य राजधानी आसीत् दण्डेन च शुक्राचार्यकन्या बलात्कारेणाक्रान्ताधर्षिता तेन कुपितेन पितृणा शप्तोदण्डस्तत्कथा रामा० उत्त० यथा "सप्तरात्रेण राजासौ सभृत्यबलवाहनः। पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः। सर्वसत्त्वानि यानीह जङ्गमानि स्थिराणि च। सर्वेषां पांशुवर्षेण क्षयः क्षिप्रं भविष्यति। दण्डस्य विषयो यावत् तावत् स वनमाश्रमम्। पांशुभूतमिवाकस्मात् सप्तरात्राद् भविष्यति। इत्युक्त्वा क्रोधसन्तप्तस्तदाश्रमनिवासिनम्। जनं जनपदस्यान्ते स्थीयतामित्यथोचत। सप्ताहात् भस्मसाद्भूतः स चापि ब्रह्मतेजसा। तस्य दण्डस्य विषयो विन्ध्यशैवलस्य सानुषु। तपस्विनः स्थिता यत्र तज्जनस्थानमुच्यते"। "प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम्" "असौ जनस्थानमपोढ

विन्नम्' रघु'। "जनस्थाने भिरंन्विद्य राक्षसस्य दुरात्मनः"। भा॰ व॰ ४०अ॰ "खरेणासीन् महद्वैरं जनस्थाननिवासिना" भा॰ आ॰२७६ अ॰। ३जनानां स्थाने च "जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया" सा॰ द॰।

**जथा** स्त्री जन-बा॰ अक्। उत्पत्तौ। [नीते।

**जनातिग** त्रि जनमतीत्य गच्छति अति+गम-ड। लोका-

**जनाधिनाथ** पु॰ ६त॰। लोकाधिपे राजनि॰। "जनाधिनाथो न ययौ विलक्ष्यताम्" माघः जनाधिपादयोऽप्यत्र

**जनान्त** पु॰६त॰। १जनसमीपे २जनमर्य्यादायाञ्च। (देशा) स्याते ३सीमाभेदान्विते देशभेदे धनञ्जयः।

**जनान्तिक** न॰ "त्रिपताककरेणान्यानपवार्य्यान्तरा कथा। अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम्" सा॰ द॰ उक्ते १मन्त्रकथने नाटकेऽस्य भूरि-प्रयोग'। ६त॰। २जनसमीपे च।

**जनार्द्दन** पु॰ जनैरर्द्द्यते याच्यते पुरुषार्थलाभाय अर्द्द—याचने कर्म्मणि ल्युट्। जन जननमर्द्दति हिनस्ति नाशयति जनान् समुद्रवासिनोऽसुरभेदान् अर्द्दति वा कर्त्तरि ल्यु। "१विष्णौ परमेश्वरे "सर्वग सर्वलिङ्गानुर्द्धिवक्सेनो जनार्द्दनः" विष्णु स॰ २जनपीडके त्रि॰। "जनावनायोद्यमिनं जनार्द्दनम् स्तुये जगज्जीवनपिवं वदन् शिवम्" नैष॰ गयातीर्थस्थे ३विष्णुमूर्त्तिभेदे तद्धस्ते जीवत्पुरुषेण स्वपिण्डस्य दानविधि' वायु पु॰ गयामाहात्म्ये यथा

"जनार्द्दनो भस्मकूटे तस्य हस्ते तु पिण्डद'। आत्मनोऽप्यथ वान्येषां सव्येनापि तिलैर्विना। जीवता दधिसमिश्रं सर्वे ते विष्णुलोकगाः। यस्तु पिण्डो मया दत्तस्तव हस्ते जनार्द्दन। मात्तद्दिश्य त्वया देव! तस्मिन् पिण्डे मृते प्रभो। एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन। अन्तकाले गते मह्यं त्वया देयो गयाशिरे। जनार्द्दन! नमस्तुभ्यं नमस्ते पितृमोक्षद!। पितृमात्रे नमस्तुभ्यं नमस्ते पितृरूपिणे। गयायां पितृरूपेण स्वयमेव जनार्द्दन। त्वां दृष्ट्वा पुण्डरीकाक्ष मुच्यते च ऋणत्रयात्"। ४शालग्रामभेदे शालग्रामशब्दे दृश्यम्। तन्नाम्ना भोजनकाले हरे स्मरणीयता भोजने च जनार्द्दनम्' इत्युक्ते' "श्राद्धिनामाद्य जनार्द्दनस्य" माघ

**जनाशन** पु॰जनानश्नाति अश-भोजने ल्यु। १वृके राजनि॰। २लोकभोजिनि त्रि॰। भावे ल्युट् ६त॰।३लोकभक्षणे न॰।

**जनाश्रय** पु॰ जनानां लोकानामाश्रयः। मण्डपे अमर'।

**जनाषाह्** पु॰जनान् सहते सह-ण्वि पूर्वदीर्घ'। लोकसहिष्णौ "चर्षं जनाषाडिन्द्र। तव्यम्" ऋ॰ १।५४।११। "सहे साड" पा॰ अत्र षत्वम्।

**जनि(नी)** स्त्री जन-भावे इन् वा ङीप्। १उत्पत्तौ "जनिः कर्त्तुः प्रकृति" पा॰ २अभूतप्रादुर्भावे। जायते अस्य गर्भो वाऽस्याम्, आधारे इ। २नार्य्याम्। ३मातरि ४स्नुषायां च अमर ५जायायाम्। जायते आरोग्यमनया। ६ओषधिभेदे ७जतुकायाञ्च शब्दरत्ना॰। ८जनीनामगन्धद्रव्ये रायमुकुट। "उदीर्य्य मुखे कपटाज्जनी जन" नैष॰।

**जनिका** स्त्री जनि(नी)+स्वार्थे क। १जनिशब्दार्थे। जनयति जन-णिच्-ण्वुल् कापि अत इत्वम्। २उत्पादिकायां स्त्रियां स्त्री।

**जनित** त्रि॰ जन-णिच्-क्त। उत्पादिते "सेनाचरीभवदिभाननदानवारिवासेन यस्य जनिता सुरभिरणश्री" नैष॰। "शातिजनजनितनामपदाम्" माघ।

**जनितृ** पु॰ जन-अन्तर्भूतण्यर्थे तृच्। १पितरि शब्दरत्ना॰। २मातरि स्त्री ङीप् शब्दच॰।

**जनित्व** पु॰ जन-णिच्-इत्वन्। १पितरि २मातरि स्त्री उज्ज्वल॰। जन-भविष्यति इत्वन्। ३जनिष्यमाणे "अदितिर्जातमदितिर्जनित्वम्" यजु॰ २५।२३। "जनित्वं जनिष्यमाणम्" वेददी॰।

**जनित्वन** न॰ जन-भावे बा॰ इत्वन। जनने। "जनित्वनाय मामहे" ऋ॰ ८।२।४२। "जनित्वनाय जननाय" भा॰।

**जनिनीलिका** स्त्री जन्या नीलिका।१महानीलीवृक्षे राजनि॰

**जनिमत्** त्रि॰ जनिर्जन्मास्त्यस्य मतुप्। जन्मयुक्ते स्त्रियां ङीप् वेदे मस्य व'। जायायुक्ते "अस्मद्र्यग्मेनाधिज्जनिवतश्चकर्थ" ऋ॰ ५।३१।२ जनिवतोजायावत" भा॰।

**जनिमन्** पु॰ जन-भावे मनिन्। जन्मनि उज्ज्व॰।

**जनिष्णु** त्रि॰ जन-बा॰ भविष्यति-ष्णु। जनिष्यमाणे "कुतएव जनिष्णवोऽस्तु श्रमाणादपरायण" भा॰ शा॰ १९९अ॰। "जातो वापि जनिष्णुर्वा" रामा॰ आर॰ ६६।१४।

**जनेष्ट** पु॰ ६त॰। १वृद्धरलक्षे राजनि॰ २जतुकायां ३वृद्धिनामौषधौ ४हरिद्रायां ५जातीपुष्पवृक्षे स्त्री राजनि॰ ६जनाभिमते त्रि॰।

**जनोदाहरण** न॰ जनैरुदाह्रियते उद्+आ+हृ-कर्म्मणि ल्युट्। यशसि धनञ्जयः।

जन्तो त्रि० जनानर्षति ऋष–क्विप् ऊठि वृद्धिः । जनार्द्धके ।

जन्तु पु० जन–तुन् । १जननमीले प्राणिनि अमरः अविद्यादोषात् देहात्माभिमानिनि २जीवे । "एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः" मनुः । "ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे" देवीमा० "स्वेदजा कृमय प्रोक्ता जन्तवश्च यथाक्रमम्" भा० आनु० ११२६श्लो० । सोमकस्य न्टपस्य भार्य्यागते जायमाने पुत्रभेदे "युधिष्ठिरासीन् न्टपतिः सोमको नाम धार्म्मिकः" इत्युपक्रमे "कदाचित्तस्य वृद्धस्य यतमानस्य यत्नतः । जन्तुर्नाम सुतस्तस्मिन् स्त्रीशते समजायत" इत्युक्त्वा "तस्य राज्ञ एकपुत्रत्वदुःखनिवारणाय सोमकेन यज्ञे जन्तुवपाया हवने कृते जन्तुपूर्व्वक पुत्रशतं स्त्रीशते तस्याजायत इत्युक्तम् भा० व० १२७। २२८अ० । जन्तूपाख्याने दृश्यम् । ४जतुपेत्र म व०" निघण्टुः ।

जन्तुक पु० जन्तु+स्वार्थे क । जन्तुशब्दार्थे जन्तुकस्य गोत्रापत्यम् इञ् । जान्तुकि तद्गोत्रापत्ये उपका०दित्वात् तस्य इञो लुक् द्वन्द्वे बहुत्वे च । जन्तुक २तद्गोत्रापत्येषु ब व० ।

जन्तुकम्बु पु० जन्तुरूप कम्बु । कृमिशङ्खे राजनि० ।

जन्तुका स्त्री जन्तुभिः कायति प्रकाशते कै–क । १लाक्षायां, तस्याहि कीटे प्रकाश । २नाडीहिङ्गुनि च राजनि० ।

जन्तुघ्न पु० जन्तून् कृमीन् हन्ति हन–क । १बीजपूरे । राजनि० २प्राणिघातके त्रि० । ३विडङ्गे, ४हिङ्गुनि च न० । शब्दमा० ५विडङ्गे स्त्री ङीप् राजनि० । [राजनि० ।

जन्तुनाशन न० जन्तून् नाशयति नश–णिच्–ल्यु । हिङ्गुनि

जन्तुपादप पु० जन्तुप्रधान पादप । कोषाम्रवृक्षे राजनि० ।

जन्तुफल पु० जन्तव फलेऽस्य । उडुम्बरे अमर । [क्षितौ ।

जन्तुमती स्त्री जन्तव सन्त्यस्यां बाहुल्येन मतुप् ङीप् ।

जन्तुमारी स्त्री जन्तून् कृमीन् मारयति मृ–णिच्–अण् उप०गौ०ङीप् । निम्बूके (निमकी) । राजनि० [त्रिका० ।

जन्तुला स्त्री जन्तून् कीटान् लाति ला–क । काशतृणे

जन्तुहन्त्री स्त्री जन्तून् हन्ति हन–तृच् ङीप् । १विडङ्गे राजनि० २जन्तुनाशके त्रि० ।

जन्त्व त्रि जन–कृत्यार्थे त्वन् । जनितव्ये "यज्ञात यश्च जन्त्वम्" ऋ० ८।८६।६। "जन्त्वम् जनितव्यम्' भा०

जन्म न० जन–भा० मन् । जन्मनि भरत ।

जन्मकील न० जन्म नः कील इव रोधकत्वात् । विष्णौ त्रिका

जन्मतिथि पु स्त्री जन्मनस्तिथि । जन्मकालिकतिथिसजा-

तीयतिथौ स्त्रीत्वे वा ङीप् तत्र कृत्यानां गोणचान्द्रे- णैव कर्त्तव्यता । तद्विधानादि ति० त० दर्शित यथा

"तत्र मलमासे न कर्त्तव्य चान्द्रमासीयत्वेन सावकाशत्वात् । अत्र तस्य सौरमासीयत्वं तथात्वे तन्मासे तत्तिथे कदाचिदप्राप्तौ तद्वर्षे तत्कृत्यलोपापत्तेः नचेष्टापत्ति प्रतिवत्सरमुत्सवविधानात् यथा ब्रह्मपुराणे गर्गः "वर्षे च जन्मदिवसे स्नातैर्मङ्गलपाणिभि । गुरुदेवाग्निविप्राश्च पूजनीया प्रयत्नत । स्वनक्षत्रञ्च पितरौ तथा देव प्रजापति । प्रतिसंवत्सरञ्चैव कर्त्तव्यश्च महोत्सवः" । स्नातैस्तिलस्नातैः तथाच तत्तिथिमधिकृत्य 'तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः । तिलभुक् तिलपायी च षट्तिली नावसीदति ।' प्रजापतिर्ब्रह्मा । मङ्गलपाणिभि अभिप्रेतार्थसिद्धिर्मङ्गलं तद्धेतुतया गोरोचनादिकमपि मङ्गलं तेन युग्गुल्वादिपाणिभिरित्यर्थ । तथाच कृत्यचिन्तामणौ 'गुडदुग्धतिलानद्याज्जन्मपर्व्वणि च वन्दनम् । गुग्गुलु निम्बसिद्धार्थ दूर्वागोरोचनायुतम् । सपूज्य भानुदिक्षो मार्कण्डेयं प्रार्थयेदिदम् । चिरजीवी यथा त्वं भो भविष्यामि तथा मुने ।। रूपवान् वित्तवांश्चैव श्रियायुक्तश्च सर्व्वदा । मार्कण्डेय महाभाग! सप्तकल्पान्तजीवन ।। आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव" । स्वनक्षत्रमिति स्वमक्षत्र अश्विन्याद्यन्तर्गतजन्मकालीनचक्र नामकरणे तथादर्शनात् वक्ष्यमाणब्रह्मपुराणोक्तप्रथमादिनमोऽन्तेन नाम्नैव पूजाविधानाच्च तदधाने स्वनक्षत्राय नम इत्युल्लेख्यम् । पूजायामर्घ्यानन्तर पाद्यमाह मत्स्यपुराणम् "अर्घ्यं पाद्यादिकन्तत्र मधुपर्क प्रयोजयेत् ।' पाद्यानन्तरमर्घ्यमाह नरसिंहपुराणम् । 'पाद्य चैव तृतीयया चतुर्थ्यार्घ्य प्रदापयेत् ।' तृतीयया पुरुषसूक्तीयतृतीयया ऋचा उभयक्रमदर्शनादिच्छाविकल्पः इति श्रीदत्त । श्रीपतिव्यवहारनिर्णये 'नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् ।' तथा 'द्विभुज जटिल सौम्य सुवृद्ध चिरजीविनम् । मार्कण्डेय नरो भक्त्या पूजयेत् प्रयतस्तथा, ततो दीर्घायुष व्यास राम द्रौणि कृप बलिम् । प्रह्लादञ्च हनूमन्त विभीषणमथार्च्चयेत् ।' रामोऽत्र परशुरामः चिरजीविसाहचर्य्यात् द्रौणिरश्वत्थामा । तथा 'स्वनक्षत्र जन्मतिथि प्राप्य सम्पूजयेन्नर । षष्ठीञ्च दधिभक्तेन वर्षे वर्षे पुन पुन '। 'एकैका देवतां राम! समुद्दिश्य यथाविधि । चतुर्थ्यन्तेन सर्व्वेषां नाम्ना च प्रणवादिना । होमकृष्णमथैकैक

शतमष्टौ तु होमयेत्" इति विष्णुधर्मोत्तरदर्शनात्। एष होमे स्वाहान्तता च मन्त्रस्य "स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेवताम्" इति स्मृते। अयमर्थो तु देवीपुराणम् "होममहादिपूजायां शतमष्टोत्तरं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते"। स्कान्दे "खण्डनं नखकेशानां मैथुनाध्वानमेव च। आमिष कलहं हिंसां वर्षवृद्धौ विवर्जयेत्"। अध्वानम् अध्वगमन कलहमित्यत्र वह्वरणमिति क्वचित् पाठ स्तत्र युक्तम्। वर्षवृद्धौ जन्मदिने। इदमत्र "मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा। अस्पृश्यस्पर्शने चैव न स्नाया-दुष्णवारिणा"। जन्मनि पुत्रजन्मनि। ज्योतिषे "स्नात्वा जन्मदिने स्त्रिय परिहरन् प्राप्नोत्यभीष्टां श्रियम् मत्-स्यान्नोपयतो द्विजाय ददतोऽप्यायुश्चिरं वर्द्धते। सक्तून् खादति यस्तु तस्य रिपवोनाशं प्रयान्ति ध्रुव भुङ्क्ते यस्तु निरामिषं स हि भवेत् जन्मान्तरे पण्डित"। दीपिकायाम् "जन्मर्क्षयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेच्च। भवन्ति तद्वत्सरमेव यावन्नैरुज्यसम्मान-सुखानि तस्य। कृतान्तकुजयोर्वारे यस्य जन्मदिनं भवेत्। अन्तश्चयोगसंप्राप्तौ विघ्नस्तस्य पदे पदे"। कृतान्तकुजयो शनिमङ्गलयो। "तस्य सर्वौषधिस्नानं मह-विप्रसुरार्चनम्। महात्तुद्दिश्य होमोऽत्र महाणां प्रीति-मिच्छता। सौरारयोर्दिने शस्ता देयान्दद्यात्तु काञ्चनम्। मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। शठीचम्पक-मुस्ताश्च सर्वौषधिगणः स्मृत"॥ सौरारयो शनि-भौमयो। रजनीद्वयं हरिद्रादारुहरिद्रे। एषां पद्मादी-नामपि महणम्। कषायावयवमहणमाह मत्स्यपुराणम् "एषां पत्राणि साराणि मूलानि कुसुमानि च। एवमा-दीनि चान्यानि कषायाख्योगणः स्मृतः"। तत्र क्रम। तिलोद्वर्त्तनं तिलयुक्तजलेन स्नानं नववस्त्रपरिधानं गुग्गुलुनिम्बन्वेतसर्षपदूर्वागोरोचनात्मकजन्मग्रन्थि दक्षिणपाणौ बध्नीयात्। गुरुदेवाग्निविप्रा पूजनीयाः स्वनक्षत्रमपि पूजनीयम्। अत्र च "हस्तास्वातौ श्रवणा अक्लीबे मृगशिरोमपुंसि स्यात्। पुंसि पुनर्वसुपुष्यौ मूलं पुंसी स्त्रियः शेषाः" इत्यनेन लिङ्गनिर्णयः। जनुमन-स्थानादीनां शोपनमाह विष्णुधर्मोत्तरे "शोपयेच्च-नुमनस्थलं धनसार स्फुटे मतम्। प्रभोरप्यपमानञ्च तस्य दुश्चरितञ्च यत्"। धनसार घनश्चेव मलं छिद्रम्। चिरञ्जीवी प्रजापति सूर्यो गणपतिर्मार्कण्डेयस पूजनीयः। "सतिलं गुडसंयुक्तमञ्जल्यर्द्धमितं पयः। मार्क-ण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे" इति गुडतिलदुग्ध-पानमन्त्रः। तत्र प्रार्थनामन्त्रो। "चिरजीवी यथा त्वं भो भविष्यामि तथा मुने। रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा। मार्कण्डेय! महाभाग! सप्तकल्पान्त जीवन!। आयुरिष्टार्थसिद्ध्यर्थमस्माक वरदोभव"। ततो-व्यासपरशुरामाश्वत्थामकृपबलिप्रह्लादहनूमद्विभीषणाः पूजनीया। षष्ठ्यपि। "त्रैलोक्ये यानि भूतानि स्थाव-राणि चराणि च। ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे"। इति मत्स्यपुराणीयं पठेत्। पितृमातृ-पादग्रहणक्रमस्तु विष्णुपुराणाद्बोध्यः यथा "कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः। देवक्याश्च महा-बाहुर्बलदेवसहायवान्"। एवञ्च "सहस्रन्तु पितृ-र्माता गौरवेणातिरिच्यते" इति मनुवचने सहस्रं पितृ-नपेक्ष्य बहौरवहेतु तदुपोदबलकस्यादेम्। अतएव मनु "मृते भर्त्तरि पुत्रस्तु वाच्यो मातुररक्षिता"। वाच्यो-गर्हणीयः। अत्र वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकार "वेदमन्त्रवर्जम् शूद्रस्य" इति छन्दोगाह्निकाचारचिन्तामणि-धृतस्मृतौ वेदेति विशेषणात्। एवञ्च पुराणमधिकृत्य "श्रव्यं तव्यं न चान्येन ब्राह्मणं क्षत्रियं विना। श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" इति भविष्यपुराणवचन पुराणमन्त्रेतरपरम्। पञ्चयज्ञस्नानश्राद्धेषु पौराणिक-मन्त्रोऽपि निषिद्ध। शूद्रमधिकृत्य "नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्" इति याज्ञवल्क्येन "ब्राह्मणविधा-नेन मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य स नम-स्कारकं मतम्" इति योगियाज्ञवल्क्येन श्राद्धमधिकृत्य "अयमेव विधि प्रोक्तः शूद्राणां मन्त्रवर्जित"। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति वराहपुराणेन च नमस्कारेणेति तूष्णीमिति मन्त्रवर्जित इति चाभि-धानादेतत्पर वैदिकपरश्च शूद्राधिकारे गौतमवचन "अनुमतोऽस्य नमस्कारो मन्त्र" इति। अनुपनीतस्यापि शूद्रसमत्वेन श्राद्धातिरिक्तवेदपाठनिषेधमाह मनु "नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावत् यावद्वेदे न जायते"। स्त्रीणामपि वैदिक-मन्त्रनिषेधमाह स्मृतिकृतापनीयम् "सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्रोयदि जानीयात्स मृतोऽधोगच्छति" इति नेच्छन्तीतिपर्यन्तं पराशरमाधवेऽपि लिखनम्।

जन्मतिथे प्रागुक्तमत्स्यपुराणीयत्वात् पौर्णमास्यन्तमासादर । गृह्यपरिशिष्टम् "उपाकर्म तथोत्सर्गः प्रसवाहोऽष्टकादय । मासवृद्धौ परा कार्य्या वर्जयित्वा तु पैतृकम्" । अत्राष्टकासाहचर्य्यादन्वष्टक्या तथा दर्शनाच्च प्रसवाहो जन्मदिनम् ।"द्वादश मासाः संवत्सर क्वचित्त्रयोदश मासाः संवत्सर" इति श्रुत्या वर्षे मासवृद्धिरूपा मासवृद्धिरुक्ता सैवात्र ग्राह्या न तु सौरे मासि तिथिद्वयलाभानुमासवृद्धिर्भूतयाऽनोक्ता ग्राह्या तिथिद्वयलाभस्य मासवृद्धित्वे प्रमाणाभावात् । मासवृद्धावित्यत्र मासवृद्धाविति हेमाद्रिणा धृतम् । पैतृकमपिण्डीकरणं मलमासमृतस्य मत्स्याष्टिकस्य तयोर्मलमासेऽपि विधानात् । ज्योति पराशरोऽपि "उपाकर्म तथोत्सर्गं प्रसवाहोऽष्टकादयः । मासवृद्धौ परा कार्य्या वर्जयित्वा तु पैतृकम्" । जन्मतिथेरुभयदिनलाभे तु दैवीपुराणम् "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वती प्रिया । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता । पक्षद्वये जन्मतिथिर्यदि स्यात् पूज्या तदा जन्मभसंयुतैव । असङ्गता भेन दिनद्वयेऽपि पूज्या परा या भवतीह यत्नात्" । भ नक्षत्र परपक्ष एकादशमात्तपक्षेऽपि । पूर्वोक्तवचने तिथिनक्षत्रलाभ एवेद् बाध्यते "नक्षत्रे खण्डिते येन माप्त कालस्तु कर्म्मणः । नक्षत्र कर्म्माण्यत्रैव तिथिकर्म तथैव च" इति वृद्धवशिष्ठवचनात्। खण्डिते खण्डद्वययुक्ते येन नक्षत्रखण्डेन विहितकाल माप्त । नक्षत्रद्वैधे तु बौधायनमार्कण्डेयौ "तन्नक्षत्रमहोरात्र यस्मिन्नस्तं गतोरविः । यस्मिन्नुदेति सविता तन्नक्षत्र दिन स्मृतम्" । पूर्वार्द्धं नक्षत्रे अहोरात्रसाध्योपवासन क्तैकभक्तेषु "तत्रैवोपवसेत्तस्मिं यस्मिन्नीयाद्भोभवेत् । उपवासे यदन्तं स्यात् तद्धि नक्तैकभक्तयो" इति स्कन्दपुराणात् निशीथादधस्त्वनेन यावद्रात्रपूर्व कालत्वेन सूर्य्यास्तमयकालस्यापि लाभात् । "उपोषितव्य नक्षत्रं येनास्तं याति भास्करः । यत्र वा युज्यते राम ! निशीथे शशिना सह" इति विष्णुधर्म्मोत्तराच्च । उपवास वदन्नक्तादौ नाहोरात्रसाध्यता अहोरात्रसाध्यभोजनद्वयस्यैकतरपरित्यागसङ्कल्पकालविशेषनियामकत्वात् । यस्मिन्नुदेतीति तु दिवसकर्त्तव्यस्नानदानादाविति बोध्यम् । पितृकार्य्येऽपि शुक्लकृष्णपक्षाभ्यां व्यवस्थामाह बौधायनः "या तिथिस्तच्च नक्षत्र यस्मिन्नभ्युदितोरवि । वर्द्धमानस्य पक्षस्य क्षीणे त्वस्तमन प्रति" । क्षीणे चन्द्रस्य क्षीणत्वात् कृष्णपक्षे, वर्द्धमानस्य चन्द्रस्य वर्द्धमानत्वेन शुक्लपक्षस्य । कालमाधवीयोऽप्येवम् । भोजराज "योऽजन्मभमासे क्षुरकर्मयात्रां कर्णस्य वेध कुरुते च मोहात् । नून स रोग धनप्रनाश प्राप्नोति मूढोवधबन्धनानि । जात दिन दूषयते वशिष्ठस्त्वष्टौ च गर्गोयवनोदयाहम् । जन्माख्यधिष्ण्ये भागुरिश्च चूडे विवाहे क्षुरकर्म्मभेदे" । एतद्विषयभेदस्तु राजमार्त्तण्डे "उक्तानि प्रतिषिद्धानि पुन सम्भावितानि च । सापेक्षनिरपेक्षाणि श्रुति वाक्यानि कोविदै" । सापेक्षनिरपेक्षाणि समर्थासमर्थविषयकाणि । क्षुरेति क्षुरिकर्म । राजमार्त्तण्डे "दैवकार्य्ये पितृश्राद्धे रवेरयपरिवर्त्ते क्षुरिकर्म न कुर्वीत जन्ममासेऽथ जन्मभे" । एवञ्च चूड़े इति चूड़ाकरणे अधिकदोषाय । नार्य्यास्तु जन्ममासे विवाहमाह ज्योतिर्व्यवहारसमुच्चये "स्नान दान तपो विद्या सर्वमङ्गल्यवर्जनम् । उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते" । एव "जन्मोदये जन्मसु तारकासु मासेऽथ वा जन्मनि जन्मभे वा । व्रतेन विप्रो नक्षत्रस्नातोऽपि विद्याविशेषैः प्रथितः पृथिव्याम्" इति व्यासवचनेन जन्ममासे उपनयनविधानात्तदङ्गक्षौरवपनेऽपि न दोष । उदये लग्ने मे राशौ नक्षत्रस्नातोऽपि सत्स विद्योऽपि । अत्र जन्ममासत्याज्यत्वे क्षौरादरो यात्रादिसाहचर्य्यात् व्यवहारोऽपि तथा । प्रतिमासे जन्मनक्षत्रकृत्यमाह विष्णुधर्म्मोत्तरम् 'जन्मनक्षत्रगे सोमे शिर स्नानेन यत्नत । पूजा सोमस्य कर्त्तव्या नक्षत्रस्य तथात्मन । श्राद्धं कुर्य्यात् प्रयत्नेन वह्निब्राह्मणपूजने । सङ्गनासुधरस्याथ पूजनीय प्रयत्नत । कुराणामर्थनं कार्य्य वैष्णवस्य विशेषत " ।

जन्मद पु॰ जन्म ददाति दा–क । पितरि शब्दच॰।

जन्मदिन न॰ जन्मनोदिनम् । जन्मदिवसे तच्च तिथिरूप जन्मतिथिशब्दे दृश्य॰ ।

जन्मन् न॰जन–भावे मनिन् । १उत्पत्तौ २आद्यक्षणसम्बन्धे, ३गर्भवासततोयोनिद्वाराान्निःसरणे ४व्याख्यातु क्ते अपूर्वदेहग्रहणे, अपूर्वदेहादिभिरात्मन सम्बन्धे ज्योतिषोक्त ५जन्मनक्षत्रे, तदर्षाधिके ६दशमे ७अनर्थे च नक्षत्रे । तत्र मनुष्याणां जन्मप्रकारस्तु गर्भशब्दे २५४८ पृ॰ उक्तप्रायोऽपि अत्र विशेष कश्चित् प्रदर्श्यते । "ऋतौ विकाया भवति योनिः कमलवत् सदा । गर्भाधानकाल: शुक्र स्त्री रक्तवर्ण्मनतम् । अन्यत्र काले कुक्षा

योनिर्भवति योषिताम्। ऋतौ शुक्रमतो योनौ नैति गर्भाशयं प्रति। ऋतावपि तु योनिश्चेद्वातपित्तकफावृता। भवेत्तदा विकारत्वं नैव तस्यां प्रजायते। ऋतुकाले यदा शुक्रं निर्दोषं योनिसंस्थितम्। तदा तद्वायुना स्पृष्टं स्त्रीरक्तेनैकतां व्रजेत्। निषेकं मानवः स्त्रीणां बीजं प्राप्य रजस्तथा। शुक्लमात्रोऽपि नरकात् स्वर्गाद्वापि प्रपद्यते। विसर्गकाले शुक्रस्य जीवः कारणसंयुतः। इच्छया प्रविशते योनिं कर्मभिः स्वैर्नियोजितः। तच्छुक्ररक्तमेकस्थमेकाहात् कललं भवेत्। पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत्। बुद्बुदं सप्तरात्रेण मांसपेशी भवेत्ततः। द्विसप्ताहाद्भवेत् पेशी रक्तमांसान्विता दृढा। बीजस्येवाङ्कुराः पेश्यः पञ्चविंशतिरात्रतः। भवन्ति मासमात्रेण पञ्चधा जायते पुनः। ग्रीवा शिरश्च स्कन्धश्च पृष्ठवंशस्तथोदरम्! पाणिपादं तथा पार्श्वं कटिगात्रं तथैव च। मासद्वयेन सर्वाणि क्रमशः सम्भवन्ति हि। त्रिभिर्मासैः प्रजायन्ते सर्वाङ्गाङ्कुरसन्धयः। मासैश्चतुर्भिरङ्गुल्यः प्रजायन्ते यथाक्रमम्। स्थैर्यं चतुर्थे चाङ्गानां पञ्चमे शोणितोद्भवः। षष्ठे बलस्य वर्णस्य नखलोम्नाञ्च सम्भवः। दन्तपङ्क्तिस्तथा गुह्यं जायन्ते च नखाः पुनः। कर्णयोश्च भवेच्छिद्रं षण्मासाभ्यन्तरेण च। पायुर्मेढ्रमुपस्थञ्च नाभिश्चैवोपजायते। सन्धयो ये च गात्रेषु जायन्ते मासि सप्तमे। अतस्तु चेतनायुक्तो नाभीस्नायुशिराततः। सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि। छन्नप्रत्यङ्गसम्पूर्णः शिरःकेशसमन्वितः। विभक्तावयवः स्पष्टं पुनर्मासाष्टमेन च। नवमे दशमे मासि प्रबलैः सूतिमारुतैः। निःसार्यते बाण इव जन्तुश्छिद्रेण सज्वरः। अनन्तश्च स्खलत्वेन यदा गर्भस्थितिर्भवेत्। तदा विकृतिरूपेण पापात्मा हि प्रजायते। पुटद्वयं समासाद्य यदा वहति मारुतः। तदा प्रसूते पापिष्ठान् षण्डान् कर्म्मबहिष्कृतान्। मातृरक्तोत्तरा नारी पितृशुक्रोत्तरो नरः। उभयोर्बीजसामान्ये जायते वै नपुंसकम्। विषमायां तिथौ विप्र कुर्य्याद्बीजन्तु कन्यकाम्। समायां पुरुषं नूनं केचिदाहुर्मनीषिणः। वामाङ्गेन भवेन्नारी दक्षिणेन पुमान् भवेत्। रक्ताधिक्ये मातृरूपं शुक्राधिक्ये तु पैतृकम्। शुक्रशोणितसंघाते वायुना च द्विधा कृते। यमौ स्यातां त्रिधा चेति चतुर्धा बहुधापि वा। ततो हीनाधिकस्थूलकृशवामनकादयः। जायन्ते सर्पकुण्डाण्डा विकृताश्चापि योनयः"। "गर्भात् कोटिगुणं दुःखं योनियन्त्रनिपीडने। संमूर्च्छा तस्य जठराज्जायमानस्य देहिनः। जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः। प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः। अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः। क्लेशात् निष्क्रान्तिमायाति जठरान्मातुरातुरः। ततस्तं वैष्णवी माया समास्कन्दति मोहिनी। तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्नुयात्। स्पृष्टमात्रस्य घोरश्च ज्वरः समुपजायते। तेन ज्वरेण महता महामोहः प्रजायते। कण्टकैरिव भिन्नाङ्गः क्रकचैरिव दारितः। पूतिव्रणान्निपतितो धरण्यां क्रिमिको यथा। कण्डूभुक्षापरीताङ्गः कथञ्चित्तिष्ठति वा रटन्। विण्मूत्रभक्ष्याद्यञ्च गतज्ञानः समाचरेत्। कण्डूयनेऽपि चाशक्तः परिवर्त्तेऽप्यनीश्वरः। स्नानपानादिकाहारमवाप्नोति परेच्छया। अशुचौ संस्तरे सुप्तः कीटदंशादिभिस्तथा। भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे। केन बन्धेन बद्धोऽहं कारणं किमकारणम्। किं कार्य्यं किमकार्य्यं वा किं वाच्यं किञ्च नोच्यते। कोऽधर्म्मः कश्च वै धर्म्मः कस्मिन् वा वर्त्तते कथम्। किं कर्त्तव्यमकर्त्तव्यं किं वा किं गुणदोषवत्। सम्मूढस्य स्मृतिभ्रंशः शीघ्रं संजायते पुनः। मतिः संजायते तूर्णं जन्तोस्तत्रैव जन्मनि। रक्तो मूढश्च लोकोऽयमकार्य्ये सम्प्रवर्त्तते। देही देहं परित्यज्य नेन्द्रस्थानमपीच्छति। तस्मात् कीटोऽपि जन्तूनां सुमूढो जायते स्वयम्। न चात्मानं विजानाति न परं न च दैवतम्। न शृणोति परं श्रेयः सति चक्षुषि नेक्षते। मुखो सत्यां न जानाति बोध्यमानो बुधैरपि। संसारे क्लिश्यते तेन रागलोभवशानुगः" सुखबोध।

अन्यच "जायतेऽस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यति" यास्कोक्तेषु षट्सु भावविकारेषु आद्यो भावविकारः। "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" गीता। "जन्मसम्पद्विपत्क्षेमप्रत्यरिः साधको वधः। मित्रं परममित्रञ्च निराहत्या पुनः पुनः" ज्यो॰ त॰। "श्राद्धं दद्यात् त्रिजन्मनि"। "जन्मर्क्षे निधनेऽपि च" ज्यो॰त॰। कर्त्तरि मनिन्। ८जनके निरु॰। आधारे मनिन्। ९जन्मलग्ने १०जन्मराशौ च "जन्मनीत्य विचिन्त्यतान्" "जन्मनीष्टितयुक् शुभे" नी॰कृ॰ता॰।

**जन्मप** पु० जन्म जन्मलग्नं पाति पा–क । १जन्मलग्नपतौ २जन्मराशिपतौ च जन्मपत्यादयोऽप्यत्र । "जन्मप क्रूरितोऽशुभे" नी० ता० ।

**जन्मभ** न० ६त० । १जन्मनक्षत्रे २जन्मलग्ने ३ जन्मराशौ च ४जन्मनक्षत्रादिसजातीये नक्षत्रादौ जन्मर्क्षादयोऽप्यत्र । "जन्मर्क्षे निधनेऽपि च" ज्यो०त० ।

**जन्मभूमि** स्त्री ६त० । जन्मस्थाने । "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" उद्भट ।

"यद्गमीया वय नूनं त्वया यादवनन्दन ! । अथ वा प्राणिनस्तात ! रमन्ते जन्मभूमिषु" हरिवं०१०२ अ० ।

**जन्ममास** पु० ६त० । १जन्माधारमासे २तत्सजातीये मासे च "न जन्ममासे न च चैत्रपौषे क्षौरं विवाहो न च कर्णवेध "ज्यो०त० "जन्मर्क्षे जन्ममासे वा तारायामथ जन्मनि । जन्मलग्ने भवेद्दूढा धनाढ्या जन्मभोदये" चण्डेश्वर । जन्ममासश्च यस्मिन् चान्द्रे मासे जनुः स मास इत्येके जनुस्तिथिमारभ्य त्रिंशत्तिथ्यात्मको मासो जनुर्मास इति पक्षान्तरं यथाह मु० चि० व्याख्याया पी० धा० "जनुर्भमासतिथयो व्यतिपातभद्रावैधृत्यमापितृदिनानि तिथिक्षयर्द्धी । न्यूनाधिमासकुलिकप्रहरार्द्धपातविष्कम्भवज्रघटिकात्रयमेव वर्ज्यम्" मु० चि० । जनुर्भमासतिथिप्रभृतय पदार्थाः सर्वेषु कर्मसु वर्ज्या इति द्वितीयश्लोकेनान्वय तान् पदार्थानाह जनुर्भमिति यस्मिन्नक्षत्रे जनुः भवेत् तज्जनुर्भं यस्मिन् मासे जन्म भवेत् स जन्ममास यस्यां तिथौ जन्म भवेत् सा जन्मतिथिः एते वर्ज्या यदाह वसिष्ठः "स्वजन्ममासर्क्षतिथिक्षणेषु वैनाशिकाद्युक्तगणेषु भेषु । नोद्वाहयात्राभ्युदयाभिषादी नैवाद्यगर्भं द्विजय कदाचित्" । अयं च जन्मनक्षत्रमासतिथिनिषेध आद्यगर्भस्यैव यदाह नारद "जन्ममासे न जन्मर्क्षे न जन्मदिवसेऽपि वा । आद्यगर्भसुतस्यापि दुहितुर्वा करग्रह" इति अनेनाद्यगर्भव्यतिरिक्तकन्यायास्तादृशपरस्य जन्मर्क्षमासतिथिषु शुभफलप्रदत्वं भवति अतएवाह च्यवन "जन्मर्क्षे जन्ममासे वा तारायामथ जन्मनि । जन्मलग्ने भवेदूढा पुत्राढ्या पतिवल्लभा" । अथ जन्ममासलक्षणं जगन्मोहने हलगर्गः "आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनं भवेत् । स जन्ममासो विज्ञेयो गर्हितः सर्वकर्मसु" इति अत्रापि विशेषस्तत्रैव "आद्यं दिनं दूषयते वसिष्ठ षडेव गर्गस्त्रिदिनं तथात्रिः । तज्जन्मपक्षं किल भागुरिश्च मते विवाहे गमने क्षुरे चेति" । वस्तुतस्तु यस्मिंश्चान्द्रमासे चैत्रादौ जन्माभूत् स चान्द्रमासो जन्ममासतया त्याज्य इति युक्तमुत्पश्याम: "इन्द्राग्नी यत्र हूयेते मासादि स प्रकीर्त्तित । अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकाविति" हारीतवचनात् "उपवासव्रतोद्वाहा यात्रा क्षौरोपनायनम् । तिथिवर्षादिनिखिलं चान्द्रमानेन गृह्यते" इति कश्यपोक्तेश्च । अत्र चान्द्रमासस्यैव चूडादौ निषेध इति स्थितम् ।

जन्ममासस्य जन्मतिथिघटित्वे चान्द्रपरता क्षौरादिनिषेधे सौरपरतेति म० त० रघु० । "विवाहादौ स्मृतः सौर" इति तद्धृतवचनात् । आचारभेदात् देशभेदाच्च व्यवस्था । उपयमशब्दे १२४४ पृ० अधिकं दृश्यम् ।

**जन्मराशि** पु० ६त० । जन्मकालिकराशिसजातीये राशौ ।

**जन्मवर्त्मन्** न० ६त० । योनौ त्रिका० । "योनेः शरीरम्" शा०सू० तस्याः शरीरोत्पत्तिस्थानत्वकीर्त्तनात् तथात्वम् ।

**जन्मशय्या** स्त्री जनुर्निमित्त शय्या । प्रसवार्थशय्यायाम् । "स ददर्श महात्मानं शरतल्पगतं प्रभो ! । जनुःशय्यागतं वीरं कार्त्तिकेयमिव प्रभुम्" भा० भी० १२५ अ० ।

**जन्मान्तर** न० अन्यत् जनुः मयू०स० । भवान्तरे परलोके । तत गहा०भवार्थे छ । जन्मान्तरीय परजन्मभवे त्रि० । "जन्मान्तरीयतनुपापवत सङ्कर्षणेनोद्धार" शु०त०रघु० ।

**जन्माष्टमी** स्त्री कृष्णस्य जन्माधारोऽष्टमी । कृष्णजन्माष्टम्याम् कृष्णाष्टमी शब्दे२२२०पृ० विवृति । हरिभक्तिविलासमते तु तत्व्रतकालव्यवस्था यथा

"जन्माष्टमी पूर्वविद्धा न कर्त्तव्या कदाचन । पलवेधे तु विप्रेन्द्र ! सप्तम्या चाष्टमीं त्यजेत् । सुराया बिन्दुना स्पृष्टं गङ्गाम्भः कलसं यथा । विना ऋक्षेण कर्त्तव्या नवमी संयुताष्टमी । सऋक्षापि न कर्त्तव्या सप्तमी संयुताष्टमी । तस्मात् सर्वप्रयत्नेन त्याज्यमेवाशुभं बुधैः । वेधे पुण्यक्षयं याति तमः सूर्योदये यथा । यच्च वह्निपुराणादौ प्रोक्तं विद्धाष्टमीव्रतम् । अवैष्णवपरं तच्च ज्ञेयं वा देवमायया" ।

[ जीवे अमर ।

**जन्मिन्** त्रि० जनुरस्त्यस्य व्रीह्यादि० इनि । प्राणिनि

**जन्मेजय** पु० जनमेजय+पृषो० । जनमेजयशब्दे हारा० ।

**जन्य** त्रि०जन "शक्यगदेत्यादि"पा०कर्त्तरि यत् । १जायमाने । जन-णिच्–कर्मणि यत् । २उत्पाद्ये "जन्यानां जनकाय" भाषा० । कर्त्तरि यत् । ३जनके च मेदि० । जनीं वधूं वहति नयति वा यत् । ४नवोढाज्ञातिभिन्नभृत्य

स्निग्धे पु० त्रि० मेदि०। ५हट्टे, ६परीवादे, ७युद्धे च न० मेदि० "तत्र जन्यं रघोर्घोरं पार्वतीयगणैरभूत्" रघु० ८देशे पु० शब्दचि०। भावे यत्। ९जनने न०। १०मातृवयस्यायां स्त्री मेदि०। जनाय हितं यत्। ११जनहिते त्रि०। "हुताय जन्य निधनम् जनार्हनम्" भाग० १।९।२ जन्ययज्ञात् उत्करा० चतुरर्थ्यां छ। जन्यीय तन्निर्वृत्ते त्रि०। "याहीति जन्यामवदत् कुमारी" रघु०। १२प्रीतौ स्त्री हेम०। जनस्य जल्प० जन+जल्पे ऽर्थे यत्। १३जनवाद जल्पे पु०।

जन्यु पु० जन—युच् बा०—न अनादेश। १धातरि २वह्नौ ३प्राणिनि च मेदि०। भावे युच्। जनने पु० "अस्ततायाः द्वितीयोऽयं जन्युर्हि मम सर्वथा" हरिवं० १२५ अ०।

जप उच्चारणे वाचि च भ्वा० पर० सक० सेट्। जपति अजापीत्-अजपीत्। जजाप जेपतुः। जप्तः। "एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्" मनुः। "ततः सप्रणवां सव्याहृतिकां गायत्रीं जपेत्" गोभि० "जपेत् सप्तशतीं मध्ये" चण्डीशब्दे दृश्यम्।

अभि+आभिमुख्येन जपे "चकार रक्षां कौशल्या मन्त्रैरभिजजाप च" रामा० अयो० २५।२०। अस्पष्टकथने च उप+भेदने। (कानफुसकि देओया) "असार कुरुराजस्तु यात् कर्णमुपाजपत्" भा० वि० ७२१६ "उपजप्यान् उपजपेत्" मनुः "उपजाप" शब्दे न शाद्य।

जप त्रि० जप–कर्त्तरि अच्। १जपकारके। "कर्णे जपैराहितराज्यलोभा" भट्टि०। ततस्तु "विगते काले लभते जपतामपि" भा० आनु० २८ अ०। काराष्टशब्दे १८६० पृ० दृश्यम्। भावे अप्। २मन्त्रादेरावृत्तौ चण्डीशब्दे दर्शित सप्तशत्याः ३पाठे च। तत्प्रकारो यथा तन्त्रसा० "मनः संहृत्य विषयान्मन्त्रार्थगतमानसः। न द्रुतं न विलम्बञ्च जपेन्मौक्तिकपङ्क्तिवत्। जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः। धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम्। उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः। जिह्वोष्ठौ चालयेत् किञ्चिद्देवतागतमानसः। किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः। मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः। उच्चैर्जपादविशिष्टः स्यादुपांशुर्दशभिर्गुणैः। जिह्वाजपः शतगुणः सहस्रो मानसः स्मृतः। जिह्वाजप च विज्ञेयः केवलम् जिह्वया बुधैः"। तत्र वर्ज्यानि "विजृम्भोत्कृष्टमधुरादियुक्तं कर्म करोति च। जपार्द्धमादिकं सर्वमपवित्रं भवेत् प्रिये!। मलिनाम्बरकेशादिमुखदौर्गन्ध्ययुत। यो जपेत्तं दहत्याशु देवता गुप्तिसंस्थिता। आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम्। नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत्"। देवताभेदे करमालाविशेषनियमो यथा

"तर्जनीमध्यमानामा कनिष्ठा चेति ताः क्रमात्। तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका। पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत्। अनामामध्यमारभ्य कनिष्ठादित एव च। तर्जनीमूलपर्यन्तं दश पर्वसु संजपेत्। अनामामूलमारभ्य कनिष्ठादित एव च। तर्जनीमध्यपर्य्यन्तमष्टपर्वसु संजपेत्"। एतद्वचनन्तु अष्टोत्तरशतादिविषयम्। शक्तिविषये पुनः। "अनामिकात्रयं पर्व कनिष्ठादित्रिपर्विका। मध्यमायाश्च त्रितयं तर्जनीमूलपर्वणि। तर्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत्। अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च। मध्यादिमूलपर्य्यन्तमष्टपर्वसु संजपेत्"। श्रीविद्याविषये तु। "अनामामध्यमयोश्च मूलाग्रस्थं द्वयं द्वयम्। कनिष्ठायास्तु तर्ज्जन्यास्त्रयं पर्व सुरेश्वरि!। अनामामध्यमयोश्च मेरुः स्यात् द्वितयं शुभम्। प्रदक्षिणक्रमाद्देवि! जपेत् त्रिपुरसुन्दरीम्। कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण च। तर्जनीमूलपर्य्यन्तमष्टपर्वसु संजपेत्। इदमपि अष्टोत्तरशतादिविषयम्। "अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चिते तले। अङ्गुलीनां वियोगाच्च छिद्रे च स्रवते जपः। अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने। पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत्। गणनाविधिसङ्ख्या योजयेत्तज्जपं यतः। रहस्यानि रक्षयासेन गणयेत् सर्वथा बुधः। हृदये हस्तमारोप्य तिर्यक् कृत्वा कराङ्गुलीः। आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत्"। जपसंख्यासाधने द्रव्यभेदनिषेधौ यथा। "नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न च पुष्पकैः। न चन्दनैर्मृत्तिकया जपसंख्यान्तु कारयेत्"। तत्र विहितद्रव्याणि "लाक्षा कुशीदसिन्दूरं गोमयञ्च करीषकम्। एभिर्निर्माय वटिकां जपसंख्यान्तु कारयेत्"। वर्णमाला जपनियमो यथा। "सबिन्दुं वर्णमुच्चार्य्य पश्चान्मन्त्रं जपेद्बुधः। अकारादिक्षकारान्तं बिन्दुयुक्तं विभाव्य च। वर्णमाला समाख्याता अनुलोमविलोमतः। पञ्चाशल्लिपिभिर्माला विहिता सर्वकर्मसु। अका-

देवीं पूजयेद्‌ धनाप्तये । क्रीम् । ककारः शिववाची स्यात् रेफः प्रकृतिरुच्यते । महामायार्थ ईशब्दो नादो विश्वप्रसूः स्मृतः । दुःखहरार्थको बिन्दुः भुवनां तेन पूजयेत् । ह्रीम् । महादेवार्थकः ह व्याप्यर्थो रेफ उच्यते । ई तुष्ट्यर्थोऽपरो नादो बिन्दुर्दुःखहरार्थकः । लक्ष्मीदेव्या बीजमेतत्तेन देवीं प्रपूजयेत् । श्रीँ । सरस्वत्यर्थ ऐशब्दो बिन्दुर्दुःखहरार्थकः । सरस्वत्या बीजमेतत्तेन वाणीं प्रपूजयेत् । ऐँ । क कामदेव उद्दिष्टोऽप्यथवा कृष्ण उच्यते । ल इन्द्र ई तुष्टिवाची सुखदुःखप्रदश्च मः । कामबीजार्थ उक्तस्ते तव स्नेहान्महेश्वरि । क्लीँ । ह शिवः कथितो देवि । ऊ भैरव इहोच्यते । परार्थो नादशब्दस्तु बिन्दुर्दुःखहरार्थकः । वर्मबीजत्रयोऽप्यत्र कथितस्तव यत्नतः । हूँ । गणेशार्थे ग उक्तस्ते बिन्दुर्दुःखहरार्थकः । गबीजार्थस्तु कथितस्तव स्नेहान्महेश्वरि ॥ गँ । ग गणेशो व्यापकार्थो लकारस्तेज औमतः । दुःखहरार्थको बिन्दुर्गणेशं तेन पूजयेत् । ग्लौँ । क्षौ नृसिंहो ब्रह्म रः व ऊर्द्धदन्तार्थकश्च औः । दुःखहरार्थको बिन्दुर्नृसिंहं तेन पूजयेत् । क्षौँ । नामादिवर्णैः सर्वेषां नाम उक्तं स्वयम्भुवा । तेनैवार्थन्तु जानीयादर्थमभ्यन्तु चिन्तयेत् । यथार्थं विभजन् मन्त्रं मन्त्रार्थं चिन्तयेद्बुधः ॥ तत्तद्वर्णादियोगेन संक्षेपात् कथितं त्वयि । दुर्गोत्तारणवाचीत्तारकार्थस्तकारकः । मुक्त्यर्थो रेफ उक्तोऽत्र महामायार्थकश्च ई । विश्वमात्रार्थकोनादो बिन्दुर्दुःखहरार्थकः । वधूबीजार्थ उक्तोऽत्र तव स्नेहान्महेश्वरि ॥ स्त्रीँ । यत्र बिन्दुद्वयं मन्त्रे एकं दुःखहरार्थकम् । अन्यत् सुखप्रदं देवि । ज्ञात्वा चार्थं विचिन्तयेत् । यत्र बिन्दुद्वयं मन्त्रे अन्यत् पर्यायिकं मतम् । स्वाहामात्रार्थका देवी परार्था वा प्रकीर्त्तिता । प्रणमाता वषट्प्रोक्ता हरिप्रियार्थका गिरा । सुरार्था फट्‌कारबीजे विघ्नबीजं विनिर्दिशेत् । वबीजं वायुरपि स्यात् खगेन्द्र परिकीर्त्तितम् । अनेकाक्षरबीजे च स्वस्वबीजं समानकम् । एवं ज्ञात्वा महेशानि मन्त्रार्थं परिचिन्तयेत् । एकबीजद्वयं यत्र पृथगर्थं प्रकाशयेत् । नीपसार्थं वा महेशानि ज्ञात्वा मन्त्रं जपेद्धिया । इति ते कथितो देवि मन्त्रार्थः परमेश्वरि ! ईबीजेनैव पुटितं मूलमन्त्रं जपेद्यदि । तदेव मन्त्रचैतन्यं भवत्येव सुनिश्चितम्" । सरस्वतीतन्त्रे प्रथमपटले "ईश्वर उवाच । मन्त्रार्थं परमेशानि ! सावधानावधारय । मूलाधारे मूलविद्यां भावयेदिष्टदेवताम् । शुद्धस्फटिकसङ्काशां भावयेत् परमेश्वरीम् । भावयेदक्षरश्रेणीमिष्टविद्यां सनातनीम् । मुहूर्त्तार्द्धं विभाव्यैतां पश्चाज्ज्ञानपरो भवेत् । ध्यानं कृत्वा महेशानि । मुहूर्त्तार्द्धं तत परम् । ततो जीवो महेशानि । मनसा कमलेक्षणे ॥ स्वाधिष्ठानं ततो गत्वा भावयेदिष्टदेवताम् । बन्धूकारुणसङ्काशां जवासिन्दूरसन्निभाम् । विभाव्य चाक्षरश्रेणीं पद्ममध्यगतां पराम् । ततो जीवः प्रसन्नात्मा पक्षिणा सह सुन्दरि ॥ मणिपूरं ततो गत्वा भावयेदिष्टदेवताम् । विभाव्य चाक्षरश्रेणीं पद्ममध्यगतां पराम् । शुद्धस्फटिकसङ्काशां शिरःपद्मोपरिस्थिताम् । ततो जीवो महेशानि ! पक्षिणा सह पार्वति ॥ हृत्पद्मं प्रययौ शीघ्रं नीरजायतलोचने ॥ इष्टविद्यां महेशानि भावयेत् कमलोपरि । विभाव्य चाक्षरश्रेणीं महामरकतप्रभाम् । ततो जीवो वरारोहे । विशुद्धं प्रययौ प्रिये ॥ तत्पद्मगह्वरं गत्वा पक्षिणा सह पार्वति ॥ इष्टविद्यां महेशानि आत्मांशे परिचिन्तयेत् । पक्षिणा सह देवेशि आज्ञानाख्ये शुचिस्मिते ॥ इष्टविद्यां महेशानि ! साक्षात्सूर्यस्वरूपिणीम् । विभाव्य चाक्षरश्रेणीं हरिद्वर्णां वरानने ॥ आज्ञाचक्रे महेशानि । षट्चक्रे ध्यानमाचरेत् । षट्चक्रे परमेशानि ! ध्यानं कृत्वा शुचिस्मिते ॥ ध्यानेन परमेशानि ! यद्रूपं समुपस्थितम् । तदेव परमेशानि ! मन्त्रार्थं विद्धि पार्वति" अथ कुल्लुकादि । सरस्वतीतन्त्रे तृतीयपटले "ताराया कुल्लुका देवि ! महानीलसरस्वती । पञ्चाक्षरी कालिकायाः कुल्लुका परिकीर्त्तिता । कालीकूर्चं वधूमाया फट्‌कारान्ता महेश्वरि ॥ छिन्नायास्तु महेशानि ! कुल्लुकाष्टाक्षरी भवेत् । वज्रवैरोचनीये च अन्ते वर्म च पूरयेत् । सम्पत्प्रदाया प्रथमं भैरव्याः कुल्लुका भवेत् । श्रीमत्त्रिपुरसुन्दर्याः कुल्लुका द्वादशाक्षरी । वाग्भवं प्रथमं बीजं कामबीजमनन्तरम् । लज्जाबीजं ततः पश्चात् त्रिपुरेति ततःपरम् । भगवतीति ततः पश्चादन्ते ठद्वयमुद्धरेत् । अथ कामबीजस्य कुल्लुका परिकीर्त्तिता । प्रासादबीजं मध्ये च मञ्जुघोषे षडक्षरम् । एकाक्षरी भुवनेश्वर्या विष्णोः स्यादष्टवर्णकम् । नमो नारायणायेति प्रणवाद्यञ्च कुल्लुका । मातङ्ग्याः प्रथमं बीजं बाला धूमावतीं प्रति । वाराह्याश्च वधूबीजं चण्डायाश्च निजबीजकम् । सरस्वत्या वाग्भवञ्च अन्नदाया अनङ्गकः ॥ अपरेषाञ्च

वर्षा उपयन्तीव तरवो जम्भगा· खगाः" तर्पणमन्त्रः ।

**जम्भद्विष्** पु० जम्भमसुरं द्वेष्टि द्विष–क्विप् । इन्द्रे हेमच० ।

**जम्भभेदिन्** पु० जम्भमसुरं भिनत्ति भिद–णिनि ६त० । इन्द्रे अमरः जम्भारिप्रभृतयोऽप्यत्र । मार्क० पु० तन्मूलं दृश्यम् ।

**जम्भर** पु० जम्भं भक्षणमपि राति ददाति रा–क । १जम्बीरे शब्दच० । भा रस्य भः । जम्भल १तदर्थे २बुद्धभेदे च मेदि० । ३राक्षसीभेदे स्त्री । "समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी । तस्याः स्मरणमात्रेण विशल्या गर्भिणी भवेत्" ज्यो० त० ।

**जम्भा** स्त्री जभि–जृम्भायां भावे घञ् । जृम्भायां राजनि० ।

**जम्भारि** पु० जम्भस्य भक्षस्य असुरभेदस्य वा अरिः । १वह्नौ २वज्रे च मेदि० ३इन्द्रे च । "जम्भारिदम्भोलयः" नैष० ।

**जम्भिन्** पु० जभ–णिनि नुम् । १जम्बीरे शब्दच० तदर्थे न० हेमच० । २जृम्भायुक्ते त्रि० । [३मरुबके भरत ।

**जम्भीर** पु० जभ–गम्भीरा० ईरन् नुम् च । १जम्बीरे अमरः

**जम्भ्य** पु० जम्भ एव स्वार्थे यत् जभ–कर्मणि ण्यत् वा दन्ते । "यस्माद्दर्शपूर्णमासयोर्विद्यमादिमा· प्रजा अदन्तका जायन्ते यस्मादासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां संतिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते यस्मादधर एवाग्रे जायन्तेऽथोत्तरे यस्मादणीयांस एवाधरे प्रथीयांस उत्तरे यस्माद्दंष्ट्रा वर्षीयस्यो यस्मात् समा एव जम्भ्याः" शत०ब्रा०११।४।१।५। "दंष्ट्राभ्यां मलिम्लून् जम्भ्यैस्तस्करान्" यजु०११।७८ "दन्ता जम्भ्याः जम्भावर्त्तिभाग्निता जम्भ्याः" वेददीपोक्तार्थे च ।

**जय** पु० जि–भावे अच् । परापेक्षया १उत्कर्षलाभे (जित ह्योया) २वशीकरणे इन्द्रियजयः । "मौनं सदारम्भजयः स्थैर्यं प्राणजय शनै" भाग०१२८।६ । ३शत्रुपराङ्मुखीकरणे ४सपत्नादिजये । "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च" मनुना तस्य धर्म्यत्वोक्तेस्तत्त्वञ्च तत्र क्षत्रियस्यैव "स्वामी ऋक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरिति" गौतमस्मृतेः । "जयो रन्ध्रप्रहारिणाम्" रघु । "सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ" गीता । जि–कर्त्तरि अच् । ५परमेश्वरे पु० तस्य सर्वभूतजयित्वात् तथात्वं "नयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः" विष्णुस० । ६जयन्ते इन्द्रपुत्रे असुरजयात्तस्य तथात्वम् ७युधिष्ठिरे क्रोधजयात् गुप्ततन्नामकत्वाद्वा तस्य तथात्वम् । विराटनगरे छद्मवेशेन स्थायिनः युधिष्ठिरस्य यथा गुप्तं तन्नाम तथोक्तं "जयो जयन्तो विजयो जयत्सेनो जयद्बलः । इति गुप्तानि नामानि तेषां चक्रे युधिष्ठिरः" भा०वि०५अ० । ८अग्निमन्थवृक्षे रोगजयात्तस्य तथात्वम् । ९दानवभेदे "जयो निकुम्भ कुपथ दानवो रस्भुरेते दयदानवाधिपम्" हरिव० २४२अ० । १०विश्वामित्रसुतभेदे । "मधुच्छन्दा जयश्चैव देवलश्च तथाष्टक । कच्छपो हारितश्चैव विश्वामित्रस्य ते सुताः" २७अ० । ११सोमवंश्ये सृञ्जयनृपपुत्रभेदे "ऐलपुत्रा बभूवुस्ते सप्त देवसुतोपमाः । दिविजाता महात्मान आयुर्धीमानमावसुः" इत्युपक्रमे "आयोः पुत्रास्तथा पञ्च सर्वे वीरा महारथाः । स्वर्भानुतनयायाञ्च प्रभाया जज्ञिरे नृप ॥ नहुषः प्रथमं जज्ञे वृद्धशर्मा ततः परम् । रम्भो रजिरनेनाश्च त्रिषु लोकेषु विश्रुतः" इति आयुपुत्रभेदात्तुक्ता "अनेनसः सुतो राजा प्रतिक्षत्रो महायशाः । प्रतिक्षत्रसुतश्चापि सृञ्जयो नाम विश्रुतः । सृञ्जयस्य जयः पुत्रो विजयस्तस्य चात्मजः" हरिव०२९अ० । ऐलस्योर्वशीगर्भजाते १२सुतभेदे । "ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप ॥ आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः" भाग० ९।१५।१ । दशमे ब्रह्मसावर्णिमन्वन्तरे १३द्विजभेदे "दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् । तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः । हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः" भाग० ८।१३।१० । १४जनकवंश्ये मैथिले नृपभेदे । "जन्मना जनकः सोऽभूद् वैदेहस्तु विदेहजः । मिथिलो मथनाज्जातो मिथिला येन निर्मिता" इत्युपक्रमे "श्रुतस्ततो जयस्तस्माद्विजयोऽस्मादृतः सुतः" भाग०९।१३।१६ । सोमवंश्ये १५सृञ्जयसुते १६संकृतिनृपसुते च । "कुशात् प्रतिक्षत्रस्तस्मात् सृञ्जयस्तत्सुतो जयः । ततः कृतस्तस्यापि जज्ञे हर्य्यवनो नृपः । सहदेवस्ततो हीनो जयत्सेनस्तु तत्सुतः । संकृतिस्तस्य च जयः क्षत्रधर्मा महारथः" भाग० ९।१७।१० । अत्र जयस्य द्विधा कीर्त्तनात् तत्र ये द्वौ जयौ ॥ १७इक्ष्वाकुवंश्ये विजयनन्दननृपभेदे हेम० । १८विष्णुदौवारिकभेदे । जयविजयौ हि विष्णुद्वारपौ भगवद्दिदृक्षया वैकुण्ठगतान् सनकादीन् भगवदभ्यन्तरे गमनाय निवार्य तैरेव ताड्यन्तौ तैरभिशप्तौ हिरण्याक्षाद्यसुरभावेन जातौ तत्कथा भाग० ३।१६ अ० ।

"मानसा मत्सुता युष्मत्पूर्वजाः सनकादयः । चेरुर्विहायसा लोकान् लोकेषु विगतस्पृहाः ॥ त एकदा भगवतो वैकुण्ठस्यामलात्मनः । ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम्" इत्युपक्रमे ।

"तस्मिन्नतीत्य मुनयः षडसज्जमाना कक्षाः समानवयसावथ सप्तमायाम् । देवावचक्षत गृहीतगदौ परार्द्ध्यकेयूरकुण्डलकिरीटविटङ्कवेशौ ॥ मत्तद्विरेफवनमालिकया निवीतौ विन्यस्तयासितचतुष्टयबाहुमध्ये । वक्त्रं भ्रुवा कुटिलया स्फुटनिर्गमाभ्यां रक्तेक्षणेन च मनाग्रभसं दधानौ ॥ द्वार्य्येतयोर्निविविशुर्मिषतोरपृष्ट्वा पूर्वा यथा पुरटवज्रकपाटिकायाः । सर्वत्र तेऽविषमया मुनयः स्वदृष्ट्या ये संचरन्त्यविहता विगताभिशङ्काः ॥ तान् वीक्ष्य वातरशनांश्चतुरः कुमारान् वृद्धान् दशार्द्धवयसो विदितात्मतत्त्वान् । वेत्रेण चास्खलयतामतदर्हणांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ताभ्यां मिषत्स्वनिमिषेषु निषिध्यमानाः स्वर्हत्तमा अपि हरेः प्रतिहारपाभ्याम् । ऊचुः सुहृत्तमदिदृक्षितभङ्ग ईषत्कामानुजेन सहसा त उपप्लुताक्षाः ॥ श्रीमुनय ऊचुः । को वामिहैत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणां निवसतां विषमस्वभावः । तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां को वात्मवत्कुहकयोः परिशङ्कनीयः ॥ न ह्यन्तरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः । पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥ तद्वाममुष्य परमस्य विकुण्ठभर्त्तुः कर्त्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम् । लोकानितो व्रजतमन्तरभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र ॥ तेषामितीरितमुभाववधार्य्य घोरं तं ब्रह्मदण्डमनिवारणमस्त्रपूगैः । सद्यो हरेरनुचरावुरु बिभ्यतस्तत्पादग्रहावपततामतिकातरेण ॥ भूयादघोनि भगवद्भिरकारि दण्डो यो नौ हरेत सुरहेलनमप्यशेषम् । मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य सदतिक्रममार्य्यहृद्यः । तस्मिन् ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन् सहश्रीः" । ततः कुमारैः भगवन्तं दृष्ट्वा कृतां तत्स्तुतिमुपवर्ण्योक्तम् ।

"इति तद्गृणतां तेषां मुनीनां योगधर्मिणाम् । प्रतिनन्द्य जगादेदं वैकुण्ठनिलयो विभुः । श्रीभगवानुवाच । एतौ तौ पार्षदौ मह्यं जयो विजय एव च । कदर्थीकृत्य मां यद्वो बह्वक्रातामतिक्रमम् । यस्त्वेतयोर्धृतो दण्डो भवद्भिर्मामनुव्रतैः । स एवानुमतोऽस्माभिर्मुनयो देवहेलनात्" । ततः कथाशेषो यथा

"श्रीभगवानुवाच । एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरम्भसम्भृतसमाध्यनुबद्धयोगौ । भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव निमितस्तदवैत विप्राः ॥ श्रीब्रह्मोवाच । अथ ते मुनयो दृष्ट्वा नयनानन्दभाजनम् । वैकुण्ठं तदधिष्ठानं विकुण्ठञ्च स्वयंप्रभम् । भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च । प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् । भगवाननुगावाह यातं मा भैष्टमस्तुताम् । ब्रह्मतेजः समर्थोऽपि हन्तुं नेच्छे मतन्तु मे । मयि संरम्भयोगेन निस्तीर्य्य ब्रह्महेलनम् । प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनः । द्वास्थावादिश्य भगवान् विमानश्रेणिभूषणम् । सर्वातिशयया लक्ष्म्या जुष्टं स्वधिष्ण्यमाविशत् । तौ तु गीर्वाणऋषभौ दुस्तराद्धरिलोकतः । हतश्रियौ ब्रह्मशापादभूतां विगतस्मयौ । तदा विकुण्ठधिषणात्तयोर्निपतमानयोः । हाहाकारो महानासीद्विमानाग्र्येषु पुत्रकाः ॥ तावेव ह्यधुना प्राप्तौ पार्षदप्रवरौ हरेः । दितेर्जठरनिर्विष्टं काश्यपं तेज उल्बणम् । तयोरसुरयोरद्य तेजसा यमयोर्हि वः । आक्षिप्तं तेज एतर्हि भगवांस्तद्विधित्सति" ।

भाग० ३।१५ अ०—१६ अ० । जयति सर्वानेन । नि-करणे अच् । १९भारतादौ ग्रन्थभेदे । "ब्रह्मचारिकाण्डे भविष्यपुराणम् "अष्टादश पुराणानि रामस्य चरितं तथा । विष्णुधर्म्मादिशास्त्राणि शिवधर्म्माश्च भारत ! । कार्ष्णञ्च पञ्चमो वेदो यन्महाभारतं स्मृतम् । सौराश्च धर्म्मा राजेन्द्र ! मानवोक्ता महीपते ! । जयेति नाम एतेषां प्रवदन्ति मनीषिणः" इति "नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् । देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्" सर्वपुराणारम्भे पाठ्यश्लोकः । २०द्यूतपहारे भट्टो मल्लार्यादि० । षष्टिवर्षमध्ये अष्टाविंशतितमे २१वत्सरे । तत्फलं यथा "क्षत्रियाश्च तथा वैश्याः शूद्राश्च भटनर्त्तकाः । पीडितास्ते वरारोहे ! जये सर्वं न संशयः" ज्यो०त० । जये कुशलः आकर्षा० कन् । जयकः जयकुशले त्रि० । २२कुमारानुचरनागभेदे । "प्रददावग्निपुत्राय महापारि-

त राजा पाण्डवैर्दासो मुच्यतामिति चाब्रवीत् । राजा-प्यब्रवीद्भीमो द्रौपद्याः कथ्यतामिति । दासभावं गतो ह्येष पाण्डूनां पापचेतन । तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः । मुञ्चेममधमाचार प्रमाणं यदि ते वयम् । द्रौपदी चाब्रवीद्भीममभिवीक्ष्य युधिष्ठिरम् । दासोऽयं मुच्यतां राजंस्त्वया पञ्चसटः कृत । स मुक्तोऽभ्येत्य राजानमभिवाद्य युधिष्ठिरम् । ववन्दे विह्वलो राजंस्तांश्च दृष्ट्वा मुनींस्तदा । तमुवाच घृणी राजा धर्मपुत्रो युधिष्ठिर । तथा जयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना । अदासो गच्छ मुक्तोऽसि मैव कार्षीः पुनः पुनः । स्त्रीकामस्त्वं धिगस्तु त्वां क्षुद्रः क्षुद्रसहायवान् । एवंविधं हि कः कुर्यात्त्वदन्य पुरुषाधम । गतसत्त्वमिव ज्ञात्वा कर्त्तारमशुभस्य तम् । सम्प्रेक्ष्य भरतश्रेष्ठ कृपाञ्चक्रे नराधिप । धर्मे ते वर्द्धतां बुद्धिर्मा चाधर्मे मनः कृथाः । साश्वः सरथ पादात स्वस्ति गच्छ जयद्रथ ॥ एवमुक्तस्तु सव्रीडस्तूष्णीं किञ्चिदवाङ्मुखः । जगाम राजा दुःखार्त्तो गङ्गा-द्वाराय भारत । स देवं शरणं गत्वा विरूपाक्षमुमा-पतिम् । तपश्चचार विपुलं तस्य प्रीतो वृषध्वज । बलिं स्वयं प्रत्यगृह्णात् प्रीयमाणस्त्रिलोचनः । वर-ञ्चास्मै ददौ देवः स जग्राह च तच्छृणु । जयद्रथ उवाच । समस्तान् सरथान् पञ्च जयेयं युधि पाण्ड-वान् । इति राजाब्रवीद्देवं नेति देवस्तमब्रवीत् । महेश्वर उवाच । अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान् युधि । ऋतेऽर्जुनं महाबाहुं नरं नाम सुरे-श्वरम् । बदर्य्यां तप्ततपसं नारायणसहायकम् । अजितं सर्वलोकानां देवैरपि दुरासदम् । मया दत्तं पाशुपतं दिव्यमप्रतिमं शरम् । अवाप लोकपालेभ्यो वज्रादीन् स महाशरान् ” ।

“प्रधानं सर्वविदुषां तेन कृष्णेन रक्ष्यते । सहाय पुण्डरीकाक्षः श्रीमानतुलविक्रमः । समासृन्दने वार्त्तमास्थाय परवीरहा । न शक्यते तेन जेतुं त्रिदशैरपि दुःसहः । कः पुनर्मानुषो भावो रणे पार्थं विजेष्यते । तमेकं वर्जयित्वा तु सर्वं यौधिष्ठिरं बलम् । चतुरः पाण्डवामात्यान् । दिनैकं जेष्यसे रिपून्” । स च भारतयुद्धकाले द्रोणरचितचक्रव्यूहद्वारे स्थित्वाऽर्जुनमृते युधिष्ठिरादीन् चतुरो भ्रातॄन् जिगाय । अभिमन्युञ्च जघान । तद्वधकुपितेनार्ज्जुनेन श्व

सूर्य्यास्तमयात् प्रागेव त्वां हन्ता तथा त्वामहत्वा स्वयं वा मर्त्तेति प्रतिज्ञाय स निहतः तच्छिरश्च अन्यत्र तपस्यतस्तत्पितुर्वृद्धक्षत्रस्याञ्जलौ शरपरम्परया पातितं तेन च तस्य शिरसो भूमौ पातनेन स्वशिरः शतधा भूतं तत्कथा यथा भा० द्रो० १४४ अ० ।

“एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे । अब्र-वीत् पाण्डवं राजंस्त्वरमाणो जनार्द्दनः । एष मध्ये कृतः षड्भिः पार्थ ! वीरैर्महारथैः । जीवितेप्सु-र्महाबाहो ! भीतस्तिष्ठति सैन्धवः । एताननिर्जित्य रणे षड्रथान् पुरुषर्षभ ! । न शक्यः सैन्धवो हन्तुं यत्तो निर्व्याजमर्ज्जुन । योगमत्र विधास्यामि सूर्य्यस्यावरणं प्रति । अस्तं गत इति व्यक्तं प्रेक्ष्यत्येकः स सिन्धु-राट् । हर्षेण जीविताकाङ्क्षी विनाशार्थं तव प्रभो ! । न गोपयिष्यति दुराचारः स आत्मानं कथञ्चन । तत्र छिद्रे प्रहर्त्तव्यं त्वयास्य कुरुसत्तम । व्यपेक्षा नैव कर्त्तव्या गतोऽस्तमिति भास्करः । एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत । ततोऽसृजत्तमः कृष्णः सूर्य्यस्या-वरणं प्रति । योगी योगेन संयुक्तो योगिनामीश्वरो हरिः । सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः । त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप ! । ते प्रहृष्टा रणे राजन्नापश्यन् सैनिका रविम् । उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः । वीक्षमाणे ततस्तस्मिन् सिन्धुराजे दिवाकरम् । पुनरेवाब्रवीत् कृष्णो धनञ्जय-मिदं वचः । पश्य सिन्धुपतिं वीरं प्रेक्षमाणं दिवा-करम् । भयं विपुलमुत्सृज्य त्वत्तो भरतसत्तम ! अयं कालो महाबाहो ! वधायास्य दुरात्मनः । इत्येवं केशवेनोक्तः पाण्डुपुत्रः प्रतापवान् । न्यवधीत्तावकं सैन्यं शरैरर्काग्निसन्निभैः ” ।

“एवं तान् व्याकुलीकृत्य त्वदीयान् स महारथान् । उज्जहार शरं घोरं पाण्डवोऽनलसन्निभम् । इन्द्रा-शनिसमप्रख्यं दिव्यमन्त्राभिमन्त्रितम् । सर्वभारसहं शश्वद्गन्धमाल्यार्च्चितं महत् । वज्रेणास्त्रेण संयोज्य विधिवत् कुरुनन्दन । समाधत्त महाबाहुर्गाण्डीवे क्षिप्रमर्ज्जुनः । तस्मिन् सन्धीयमाने तु शरे ज्वलन-तेजसि । अन्तरीक्षे महानादो भूतानामभवन्नृपः । अब्रवीच्च पुनस्तत्र त्वरमाणो जनार्द्दनः । धनञ्जय ! शिरश्छिन्धि सैन्धवस्य दुरात्मनः । अस्तं महीधर-श्रेष्ठं यियासति दिवाकरः । शृणुष्वैतच्च कार्य्यं मे

**जयपुत्रक** पु॰ पुत्र इव पुत्रकः जयसूचकः पुत्रकः। पाशक-भेदे शब्दर॰।

**जयप्रिय** पु॰ विराटनृपभ्रातृभेदे। "शतानीकः श्रुतानीको वीरभद्रः सुदर्शन। श्रुतध्वजो बलानीको जयानीको जयप्रिय। विजयो लब्धलक्ष्यश्च जयाश्वो रथवाहन। चन्द्रोदयः कामरूपो विराटभ्रातरः शुभाः" भा॰ द्रो॰ १५८ अ॰। २कुमारानुचरमातृभेदे स्त्री "अशाऽ-स्विका निष्कुटिका वामा चत्वरवासिनी। सुमङ्गला स्वस्तिमती वृद्धिकामा जयप्रिया" भा॰ शल्य॰ ४७ अ॰।

**जयमङ्गल** पु॰ जयेन मङ्गलमस्मात्। १राजवाह्ये हस्तिभेदे शब्दरत्ना॰। "चतुर्भिर्दन्तिवर्णाद्यैः कथितो जयमङ्गल। शृङ्गारवीरयोरेव ताले चाचपुटे च सः" सङ्गीतदा॰ उक्ते २ध्रुवकभेदे च।

**जयमङ्गलरस** पु॰ जयेन रोगजयेन मङ्गलं यस्मात् तादृशो रस। वैद्यकोक्ते सर्वज्वरनाशके औषधभेदे। "हिङ्गुल-सम्भव सूत गन्धक टङ्कण तथा। ताम्र वङ्ग माक्षिकञ्च सैन्धव मरिच तथा। सम सर्वं समाहृत्य द्विगुण स्वर्ण भस्मकम्। तदर्द्धं कान्तलौहस्य रूप्यभस्मापि तत्समम्। एतत् सर्वं विचूर्ण्याथ भावयेत् कनकद्रवैः। शेफाली-दलजैश्चापि दशमूलरसेन च। किराततिक्तकक्काथैस्त्रिवार भावयेत् सुधी। भावयित्वा तु तत्कार्य्या गुञ्जाद्वयमिता वटी। अनुपान प्रयोक्तव्य जीरक मधुसंयुतम्। जीर्णं ज्वर महाघोर चिरकालसमुद्भवम्। ज्वरमष्टविध हन्ति साध्यासाध्यमथापि वा। पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान्। १मेदोगत २मांसगतमस्थि३मज्जा४गत तथा। ५अन्तर्गत महाघोरं ६बहिःस्थञ्च विशेषतः। ७नानादोषोद्भवञ्चैव ज्वर ८शुक्रगत तथा। निखिल ज्वरनामान हन्ति श्रीशिवशासनात्। जयमङ्गलनामाय रस श्रीशिवनिर्म्मित। बलपुष्टिकरश्चैव सर्वरोगनिबर्हण" भैषज्यरत्नावली। अत्र द्विगुण स्वर्णभस्मकमित्यत्र सर्वेषां समस्तानां यन्मान ततो द्विगुण स्वर्णमिति सुप्रत्र कल्प। प्रत्येकापेक्षया द्विगुणमिति कश्चित् कल्प।

**जयरात** पु कलिङ्गराजसुतभेदे। कलिङ्गसुतयुद्धोपक्रमे "जयरातरथश्चाप्य सुद्ध शिर दशामदत्। जयरात मथाविश्यामदत् सव्येन पाणिना" भा॰ द्रो॰१५५अ॰।

**जयवाराहतीर्थ** न॰ तीर्थभेदे शिवपु॰।

**जयवाहिनी** स्त्री जयस्य जयन्तस्य वाहिनी। १शच्याम् २इन्द्राण्याम् हेमच॰। "आखण्डला महेन्द्राणी चेन्द्राणी जयवाहिनीति" पाठान्तरम्। कम्॰। २ज य युक्तसेनायां स्त्री शब्दार्थचि॰।

**जयशब्द** पु॰ जयसूचकः शब्द शाक॰त॰। १जयध्वनौ। "उद्घुष्टमैक्षजयशब्दविराविताशाम्" इ॰ १॰ अ॰।

**जयसिंह** पु॰ जयपुराधीश्वरे जयसिंहकल्पद्रुमाख्यस्मृतिनिबन्धकारके नृपभेदे।

**जयसेन** पु॰ जययुक्ता सेनाऽस्य। १मागधे नृपभेदे "श्रुता-युधश्च कालिङ्गो जयसेनश्च मागध" भा॰ द्र॰ ४अ॰। आयुर्नृपवंश्ये २अहीनसुते नृपभेदे। "सहदेवस्ततो-ऽहीनो जयसेनस्तु तत्सुत" भाग॰ ६।१७।१०।

**जयस्तम्भ** पु॰ जयसूचक स्तम्भ। देशान्तरजयानन्तर स कीर्त्तिस्थापनाय राज्ञा स्थाते जयसूचके स्तम्भे। "नि कूटमेव तत्रोच्चैर्जयस्तम्भ चकार स" "निचखान जय स्तम्भान् गङ्गास्रोतोऽन्तरेषु स" रघुः।

**जयस्वामिन्** पु॰ कात्यायनकल्पसूत्रव्याख्यातृभेदे। "तत्र गिर कर्षौ पाणाहतो तद्व्यतिरिक्त सर्व शरीरमा च्छादनीयमिति जयस्वामिन" कात्या॰ श्रौ॰ १०।६।२ सूत्रभाष्ये कर्क॰।

**जया** स्त्री जि—अच्। १जयन्तीवृक्षे अमरः। रोगजयात् तथा-त्वम्। २दुर्गासहचरीभेदे। जयन्तिकाशब्दे दृश्यम्। "नन्दा भद्रा जया रिक्ता पूर्णा च प्रतिपत्क्रमात्" ज्यो॰उक्ते ३उभयपक्षीयतृतीयाष्टमीत्रयोदशीरूपे ३तिथि भेदे ४हरीतक्यां मेदि॰। ५विजयायां (भाङ्) ६नील-दूर्वायाम्। ७अग्निमन्थवृक्षे राजनि॰। ८पताका भेदे युक्तिकल्पतरु। "जय कल्याणवचन आकारो दातृवाचक। जय ददाति या नित्य सा जया परि-कीर्त्तिता" ब्रह्मवै॰ उक्तनिरुक्तियुक्तायां ९दुर्गायाम्। "जया त्व विजया चैव सङ्ग्रामे च जयप्रदा। ममापि विजय देहि वरदा त्वञ्च साम्प्रतम्" मा॰वि॰५अ॰ दुर्गास्तुतिः। सा च गौर्य्यादिषु षोडशसु मातृषु अन्यतमा। यथाह ब्रह्मपरिशिष्टम् "गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोक मातरः। शान्ति पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह। आदौ विनायकः पूज्यो ह्यन्ते च कुलदेवता"।

**जयादित्य** पु॰ व्याकरणग्रन्थकारके विद्वद्भेदे।

**जयानीक** पु॰१द्रुपदपुत्रभेदे जयशब्दे दृश्यम्। २विराटभ्रातृ-भेदे जयप्रियशब्दे दृश्यम्।

**जयावती** स्त्री जय—अस्त्यर्थे मतुप् मस्य वः अस्यां दीर्घः

ङीप्। कुमारानुचरमातृभेदे। "जयावती मालतिका ध्रुवरत्ना भयङ्करी" भा० श० ४७ अ०। कुमारानुचरमातृगणोक्तौ।

**जयावहा** स्त्री जयं रोगजयमावहति आ+वह–अच्। भद्रदन्तीवृक्षे राजनि०। [राजनि०।

**जयाश्रया** स्त्री जयेनाश्रयति आ+श्रि–अच्। जरडीतृणे

**जयाश्व** पु० विराटभ्रातरि जयप्रियशब्दे दृश्यम्।

**जयाह्वा** स्त्री जयस्याह्वा आह्वा यस्याः। भद्रदन्तीवृक्षे राजनि०

**जयिन्** त्रि० जि–शीलार्थे इनि। जयशीले। "उद्धता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः" काव्यप्र० "जगति जयिनस्ते ते भावा नवेन्दुकलादयः" सा० द०। "पौरस्त्यानेवमाक्रामन् तांस्तान् जनपदान् जयी" रघु स्त्रियां ङीप्।

**जयिष्णु** त्रि० जि–वा० इष्णुच्। १जयशीले। "आसन्नात्र यथा वीरा दुर्गायाराजयिष्णवः" भा० द्रो० २३ अ०।

**जयुस्** त्रि० जि–उसि। जयशीले। "वि जयुषा रथ्या यातमद्रिम्" ऋ० ६।६२।७ "वि जयुषा ययथुः सान्वद्रेः" १।११७।१६ "जयुषा जयशीलेन" भा०।

**जय्य** त्रि० जेतुं शक्यः जि–यत् "क्षय्यजय्यौ" तदर्थे पा०नि०। जेतुं शक्ये अमरः। "सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा" शत० ब्रा० १४।४।३।२४।

**जर** पु० जॄ–भावे अप्। १जरायां वयोहानौ "द्वादशारं नहि तज्जराय वर्वर्त्ति चक्रम्" ऋ० १।१६४।११ २विनाशने च। "मित्र जराय जुरतामदाभ्या" ऋ०२।३४।१०। "जराय विनाशनाय" भा०।

**जरठ** त्रि० जॄ–बा० अठ। १कर्कशे कठिने २पाण्डुवर्णे पु० मेदि०। ३जीर्णे त्रि०हेम० ४जरायां विश्व।"नीरन्ध्रास्तनुमाश्रिषन्तु जरठच्छेदानलग्रन्थयः" सा० द०। "अयमतिजरठाः प्रकामगुर्वीः" माघ। ५प्ररिणते च। "जरठकमलकन्दच्छेदगौरैर्मयूखैः" माघ।

**जरडी** स्त्री जॄ–बा० अड गौरा० ङीष्। गर्म्मोटिकायां तृणभेदे राजनि०। "जरडी मधुरा शीता सारिका रुचिकारिणी। दाहरक्तदोषहृत् सा पशूनां दुग्धदायिनी" राजनि०।

**जरण** त्रि० जॄ–ल्यु। १जीर्णे २जीरके ३कृष्णजीरके ४सौवर्च्चलवणे च पु० शब्दर०। ५हिङ्गुनि ६कुष्ठौषधौ न०। ७कासमर्दे पु० राजनि०। ८कृष्णजीरके स्त्री राजनि०। "भद्रं जीवन्तो जरणामशीमहि" ऋ० १०।३७।६। ९जरायां स्त्री "विप्रस्य जरणामुपेयुषः" १०।३९।८ "प्रातर्जरेथे जरणेव कापया" १०।४०।३। स्तुत्यर्थक–जरते–युच्। १०स्तुतौ "वक्षा जरणा अनाकृतः" ऋ०१।१४१।७। "जरणा स्तुतिः" भा०।

**जरणद्रुम** पु० नित्यक०। अश्वकर्णवृक्षे।

**जरणि** त्रि० जॄ–अनि। स्तोतरि। "सन्ति ह्यर्य्य आशिष इन्द्र आयुर्जनानाम्। अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषम्" इति ऋग्वेदे। "जरणिप्राः" ऋ०१०।१०।१२ "जरणिमा स्तोतृणां पूरयितारः"

**जरण्या** स्त्री जरणमर्हति "अन्त्यावस्था छन्दसि च" पा०यत्। जरायाम्। "युवं वन्दनं निरृतं जरण्यया" ऋ०१।११९। ७। "जरण्यया जरया" भा० तत्र उक्तैव व्युत्पत्तिर्दर्शिता। जरण्ययेति शब्दकल्पम प्रामादिकमेव।

**जरण्यु** त्रि०जरणं स्तुतिमिच्छति क्यच्–उन्। आत्मनः स्तवनेच्छौ "सरन्सरण्यू कारवे जरण्यू" ऋ० १०।६१ २२ जरण्यू स्तुतिमिच्छन्" भा०।

**जरत** त्रि० जॄ–अतृ। १जीर्णे २वृद्धे जरन्नैयायिकः जरन्मीमांसकः जरद्गवः। स्त्रियां ङीप् जरती वृद्धजरती।

**जरत्कर्ण** पु०ऋषिभेदे "अग्निर्हुत्य जरतः कर्णमावाग्निः" ऋ० १०।८०।३। "जरत् कर्णं जरत्कर्णनामानमृषिम्" भा०।

**जरत्कारु** पु०१मुनिभेदे तत्पत्न्यां २मनसादेव्यामास्तीकमातरि च। तत्कथा "सौतिरुवाच। एतच्छ्रुत्वा जरत्कारुर्भृशं शोकपरायणः। उवाच तान् पितॄन् दुःखाद्वाष्पसन्दिग्धया गिरा। जरत्कारुरुवाच। मम पूर्वे भवन्तो वै पितरः सपितामहाः। तद्ब्रूत यन्मया कार्य्यं भवतां प्रियकाम्यया। अहमेव जरत्कारुः किल्विषी भवतां सुतः। ते दण्डं धारयत मे दुष्कृतेरकृतात्मनः। पितर ऊचुः। पुत्र! दिष्ट्यासि सम्प्राप्त इमं देशं यदृच्छया। किमर्थञ्च त्वया ब्रह्मन्! न कृतो दारसंग्रहः। जरत्कारुरुवाच। ममायं पितरो! नित्यं हृद्यर्थः परिवर्त्तते। ऊर्द्ध्वरेताः शरीरं वै प्रापयेयममुत्र वै। न दारान् वै करिष्येऽहमिति मे भावितं मनः। एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः। मया निवर्त्तिता बुद्धिर्ब्रह्मचर्य्यात् पितामहाः!। करिष्ये वः प्रियं कामं निवेक्ष्येऽहमसंशयम्। सनाम्नीं यद्यहं कन्यामुपलप्स्ये कदाचन। भविष्यति च या काचित् भैक्षवत् स्वयमुद्यता। प्रतीपग्रहीता तामस्मि न भरेयञ्च यामहम्। एवंविधमहं कुर्य्यां निवेशं प्राप्नुयां यदि। अन्यथा न करिष्येऽहं सत्यमेतत् पितामहाः!। तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै। शाश्वताश्चाव्य-

जयद्रथवधं प्रति। वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः। स कालेनेह महता सैन्धवं प्राप्तवान् सुतम्। जयद्रथममित्रघ्न! तस्मिंश्चैव तदा नृप!। अन्तर्हिता पुरा वाणी मेघदुन्दुभिनिस्वना। तवात्मजो मनुष्येन्द्र! कुलशीलदमादिभिः। गुणैर्भविष्यति विभो! सदृशो वंशयोर्द्वयोः। क्षत्रियप्रवरो लोके नित्यं शूराभिसत्कृतः। शत्रुभिर्युध्यमानस्य संग्रामे त्वस्य धन्विनः। शिरश्छेत्स्यति संक्रुद्धः शत्रुरालक्षितो भुवि। तच्छ्रुत्वा सिन्धुराजश्च ध्यात्वा चिरमरिन्दम!। ज्ञातीन् सर्वानुवाचेदं पुत्रस्नेहाभिनोदितः। संग्रामे युध्यमानस्य वहतो महतीं धुरम्। धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः। तस्यापि शतधा मूर्द्धा फलिष्यति न संशयः। एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथम्। वृद्धक्षत्रो वनं यातस्तपश्चोग्रं समास्थितः। स तप्यते च तेजस्वी तपो घोरं दुरासदम्। समन्तपञ्चकादस्माद्बहिर्वानरकेतन!॥ तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महाहवे। दिव्येनास्त्रेण रिपुहन्! घोरेणाद्भुतकर्म्मणा। सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज!॥ उत्सङ्गे पातयाशु त्वं वृद्धक्षत्रस्य भारत!। अथ त्वमस्य मूर्द्धानं पातयिष्यसि भूतले। तवापि शतधा मूर्द्धा फलिष्यति न संशयः। यथा चेदं न जानीयात् स राजा तपसि स्थितः। तथा कुरु कुरुश्रेष्ठ! दिव्यमस्त्रमुपाश्रितः। न ह्यसाध्यमकार्य्यं वा विद्यते तव किञ्चन। समस्तेष्वपि लोकेषु त्रिषु वासवनन्दन!॥ एतच्छ्रुत्वा तु वचनं सृक्किणी परिसंलिहन्। इन्द्राशनिसमस्पर्शं दिव्यमन्त्राभिमन्त्रितम्। सर्वभारसहं शश्वद्गन्धमाल्यार्च्चितं शरम्। विससर्जार्जुनस्तूर्णं सैन्धवस्य वधे वृतम्। ततो धनञ्जयः शीघ्रं शरं तं भास्करत्विषम्। उज्जिहीर्षुः शिरः कायात् सैन्धवस्य महात्मनः। स गाण्डीवभुजनिर्मुक्तः शरः श्येन इवाशुगः। छित्त्वा शिरः सिन्धुपतेरुत्पपात विहायसि। तच्छिरः सिन्धुराजस्य शरैरूर्द्ध्वमवाहयत्। दुर्हृदामप्रहर्षाय सुहृदां हर्षणाय च। शरैः कदम्बकीकृत्य काले तस्मिंश्च पाण्डवः। योधयामास तांश्चैव पाण्डवः षण्महारथान्। ततः सुमहदाश्चर्य्यं तत्रापश्याम भारत!। समन्तपञ्चकाद्बाह्यं शिरो यदहरत्ततः। एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः। सन्ध्यामुपास्ते तेजस्वी सम्बन्धी तव मारिष!॥ उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम्। सिन्धुराजस्य मूर्द्धानमुत्सङ्गे समपातयत्। तस्योत्सङ्गे निपतितम् शिरस्तच्चारुकुण्डलम्। वृद्धक्षत्रस्य नृपतेरलक्षितमरिन्दम!॥ ततो भीतस्य तस्याथ वृद्धक्षत्रस्य भारत!। उत्तिष्ठतस्तत् सहसा शिरोऽगच्छद्धरातलम्। ततस्तस्य नरेन्द्रस्य पुत्रमूर्द्धनि भूतलम्। गते तस्यापि शतधा मूर्द्धागच्छदरिन्दम!। ततः सर्वाणि सैन्यानि विस्मयं जग्मुरुत्तमम्। वासुदेवश्च बीभत्सुं प्रशशंसुर्महारथम्। ततो विनिहते राजन्! सिन्धुराजे किरीटिना। तमस्तद्वासुदेवेन संहृतं भरतर्षभ!॥ पश्चाज्ज्ञातं महीपाल! तव पुत्रैः सहानुगैः। वासुदेवप्रयुक्तेयं मायेति नृपसत्तम!॥"

"जयद्रथवधे राजन्! दुर्य्योधनधनञ्जयौ। सवितारं मिरीचिते शौटा माया बभूविव" उद्भटः।

**जयद्रथवध** पु॰ जयद्रथस्य वधमधिकृत्य कृतो ग्रन्थः अण् तस्य आख्यायिकायां लुपि व्यक्तिवचनत्वात् पुंस्त्वम्। भारतद्रोणपर्व्वान्तर्गते अवान्तरपर्व्वभेदे तच्च द्रोणपर्व्वणि ८५ अध्यायादि १५२ अध्यायपर्य्यन्तम् "जयद्रथवधः पर्व्व घटोत्कचवधस्ततः" भा॰ आ॰ १अ॰। अवान्तरपर्व्वोक्तौ।

**जयद्रथविमोक्षण** न॰ जयद्रथस्य विमोक्षणमधिकृत्य कृतो ग्रन्थः अण् तस्य आख्यायिकायां लुपि व्यक्तिवचनत्वात् क्लीवता। भारतवनपर्व्वान्तर्गते अवान्तरपर्व्वभेदे तच्च पर्व्व वनपर्व्वणि १७ अध्यायात्मकम्। "द्रौपदीहरणं तत्र जयद्रथविमोक्षणम्" भा॰ आ॰ १अ॰ अवान्तरपर्व्वोक्तौ।

**जयधर्म्मन्** पु॰ कुरुसेनानीभेदे। "कमलाक्षः परक्राथी जयधर्म्मा सुदर्शनः। एते त्वामनुयास्यन्ति पत्तीनामयुतानि षट्" भा॰ द्रो॰ ११६ अ॰।

**जयध्वज** पु॰ कार्त्तवीर्य्यार्जुनस्य तनये आवन्त्ये नृपभेदे "शूरसेनश्च शूरश्च धृष्णोक्तः कृष्ण एव च। जयध्वजश्च नाम्नासीदावन्त्यो नृपतिर्महान्। कार्त्तवीर्य्यस्य तनया वीर्य्यवन्तो महाबलाः। जयध्वजस्य पुत्रस्तु तालजङ्घो महाबलः" हरिवं॰ ३४ अ॰।

**जयन** न॰ जि—करणे ल्युट्। १हयादिसन्नाहे "तुरङ्गमो जयनयुजश्च वाजिनः" माघ। भावे ल्युट्। २जये मेदि॰।

**जयनी** स्त्री इन्द्रकन्यायाम् त्रिका॰।

**जयन्त** पु॰ जि—झ। १इन्द्रपुत्रे अमरः २शिवे ३चन्द्रे च त्रिका॰। विराटावासे छद्मवेषिणि ४भीमे तस्य तथाख्यानामता जयन्त इत्या। ५विष्णौ "जयन्तः सर्वविज्जयी" विष्णुस॰। ६रुद्रभेदे "अजैकपादहिर्बुध्नो विरूपाक्षोऽथ रैवतः। हरश्च बहुरूपश्च त्र्यम्बकश्च

सुरेश्वरः । सावित्रश्च जयन्तश्च पिनाकी चापराजितः" भा० शा० २०८ अ० । रुद्रोक्तौ "अजैकपादहिर्बुध्न्यो विरूपाक्षश्च रैवतः । हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः । रुद्रा एकादश प्रोक्ता जयन्तश्चापराजितः" विष्णुध० "यथा जयन्तेन शचीपुरन्दरौ" "त्रिविष्टपस्येव पतिं जयन्तः" इति च रघुः । ७तालभेदे "चादिताले जयन्तः स्यात् शृङ्गाररससंयुतः । रुद्रसंख्याक्षरपदः चायुर्वृद्धिकरः परः" सङ्गीतदामोदरः ।

जयन्ती स्त्री जि—झच् गौरा० ङीष् । १दुर्गाशक्तिभेदे "जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते" कालिपु० । २जयन्तभगिन्यां शक्रपुत्र्यां ३पताकायां च मेदि० । ४स्वनामख्याते वृक्षभेदे सा च नवपत्रिकान्तर्गता "कदली दाडिमी धान्यं हरिद्रा मानकं कचुः । बिल्वोऽशोको जयन्ती च विज्ञेया नव पत्रिकाः" दुर्गोत्सवतत्त्वम् । तदधिष्ठात्री देवता च कार्त्तिकी मूले तत्रैव दृश्यम् । "जयन्ती मदगन्धाढ्या तिक्ता चैव कटूष्णका । कृमिभूतामजित् श्याना कण्ठशोधनकृन्मता । कृष्णा रसायनी तत्र सैव सर्वत्र पूज्यते" राजनि० । "तच्छाकं विषदोषघ्नं चक्षुष्यं मधुरं हिमम्" राजव० "जयं पुण्यञ्च कुरुते जयन्तीमिति तां विदुः । रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी । अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत् । जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी" ति० त० स्कान्दोक्ते ५श्रावणकृष्णाष्टमी रोहिणीयोगे कृष्णाष्टमीशब्दे २२२१ पृ० विवृतिः । "अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्वरी । मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः" हरिव० ६० अ० "यत्र स्वोच्चगतश्चन्द्रो लग्नादेकादशे स्थितः । जयन्तो नाम योगोऽयं शत्रुपक्षविनाशकृत्" ज्योतिषोक्ते ६यात्रायोगविशेषे पु० । "प्रभायनीके तनये जयन्ती" माघ । स्वार्थे क । जयन्तिका तत्रार्थे सञ्ज्ञायां कन् । हरिद्रायां राजनि० । दुर्गासखीभेदे च । तद्भेदाश्च काशी० ४७ अ० दर्शिता यथा । "यथा जया च विजया यथा चैव जयन्तिका । शुभानन्दा सुनन्दा च कौमुदी च यथोर्मिला । यथा चम्पकमाला च यथा मलयवासिनी । कर्पूरतिलका यद्वद्गन्धधारा यथा शुभा । अशोका च विशोका च यथा कमलगन्धिनी । यथा च मन्दनिमाला यथा मृगमदोत्तमा । यथा च कोकिलालापा यथा मयूरभाषिणी । गन्धपद्मनिधिर्यद्वदुत्तमा यथा च सा । हंसपक्षेक्षिता च यथा कृतमनोरथा । पानचित्तहरा यद्वत्तथा श्रेया सुलक्षणा" ।

जयपत्र न० जयसूचकं पत्रम् । राज्ञा दत्ते जयसूचके पत्ररूपे राजकीयलेख्यभेदे । राजलेख्यं पत्रं च चतुर्विधं यथाह वशिष्ठः "राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा । राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् । शासनं प्रथमं ज्ञेयं जयपत्रं तथाऽपरम् । आज्ञाप्रज्ञापनापत्रं राजकीयं चतुर्विधम्" । जयपत्रलक्षणभेदादिकं वीरमि० दर्शितं तत्राह व्यासः

"व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः । जयपत्रं ततो दद्यात् परिज्ञानाय पार्थिवः । जङ्गमं स्थावरं येन प्रमाणेनात्मसात्कृतम् । भागाभिशापसन्दिग्धे यः सम्यग्विजयी भवेत् । तस्मै राज्ञा प्रदातव्यं जयपत्रं सुनिश्चितम् । पूर्वोत्तरक्रियापादं तत्प्रमाणपरीक्षणम् । निगदस्मृतिवाक्यञ्च यथासम्यग्विनिश्चितम् । एतत्सर्वं समासेन जयपत्रेऽभिलेखयेदिति" । प्रमाणस्य पृथगुपादानात् क्रियापादेन प्रत्याकलितमत्र गृह्यते । परिज्ञानाय प्राङ्न्यायस्य बोधनाय । भागेऽभिशापे वा सन्दिग्धे । विवादपदमात्रोपलक्षणम् । तेन विवादविषयो यो यत्र विवादे स तत्र लेखनीयः । जयपत्रं राजमुद्राङ्कितं कार्यमित्याह वृहस्पतिः "यथोपन्यस्तसाध्यार्थं संयुक्तं सोत्तरक्रियम् । सावधारणकञ्चैव जयपत्रकमुच्यते । प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया" । अत्र च राज्ञः सभ्यानाञ्च हस्ताङ्कोऽप्यपेक्षित इत्याह कात्यायनः "सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् । लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः । सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः । यथा लेख्यविधौ तत्र स्वहस्तान्दद्युरेव ते" । क्वचित्पश्चात्काराख्योऽपि जयपत्रभेद उक्तस्तेनैव "अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः । निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना । पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते । अन्यवादादिहीनेभ्य इतरेषां प्रदीयते । वृत्तानुवादसंसिद्धं तच्च स्याज्जयपत्रकमिति ।"

जयपाल पु० जयं पालयति पालि—अण् उप० स० । १विधौ २विष्णौ ३भूपाले च शब्दच० (जमालगाटा) ४स्वनामख्याते वृक्षभेदे । "जयपालः कटुः पाके उष्णश्चैव विरेचनः । कृमिश्लेष्मामजठरामयहृत् दीपनो मतः" राजनि०

याश्चैव तिष्ठन्तु पितरो मम। सूत उवाच। एव मुक्ता तु स पितॄन् चचार पृथिवीं मुनिः। न च स लभते भार्य्यां वृद्धोऽयमिति शौनक!। यदा निर्वेदमापन्नः पितृभिश्चोदितस्तथा। तदारण्यं स गत्वोच्चैः चुक्रोश भृशदुःखितः। स त्वरण्यगतः प्राज्ञः पितॄणां हितकाम्यया। उवाच कन्यां याचामि तिस्रो वाचः शनैरिमाः। यानि भूतानि सन्तीह स्थावराणि चराणि च। अन्तर्हितानि वा यानि तानि शृण्वन्तु मे वचः। उग्रे तपसि वर्त्तन्तं पितरश्चोदयन्ति माम्। निर्विशस्वेति दुःखार्त्ताः सन्तानस्य चिकीर्षया। निदेशाद्याखिलां भूमिं कन्याभैक्षं चरामि भोः। दरिद्रो दुःखशीलश्च पितृभिः सन्नियोजितः। यस्य कन्यास्ति भूतस्य ये मयेह प्रकीर्त्तिताः। ते मे कन्यां प्रयच्छन्तु चरतः सर्वतो दिशम्। मम कन्या सनाम्नी या भैक्षवच्चोद्यता भवेत्। भरेयञ्चैव यां नाहं तां मे कन्यां प्रयच्छत। ततस्ते पन्नगा ये वै जरत्कारौ समाहिताः। तामादाय प्रवृत्तिन्ते वासुकेः प्रत्यवेदयन्। तेषां श्रुत्वा स नागेन्द्रस्तां कन्यां समलङ्कृताम्। प्रगृह्यारण्यमगमत् समीपं तस्य पन्नगः”। भा॰ आ॰ ४६ अ॰ इत परमास्तीकशब्दे ८८२ पृ॰ दृश्यम्। “यो जरत्कारुणा जातो जरत्कारौ महायशाः” तत्रैव। [मन्दर॰।

**जरत्कारुप्रिया** स्त्री ६त॰। मनसादेव्यामास्तीकमातरि

**जरतिन्** जॄ—अतच् जरत तत अस्त्यर्थे इनि। जरायुक्ते तत शुभ्रा॰अपत्ये ढक्। जारतिनेय तदपत्ये पु स्त्री॰।

**जरद्गव** पु॰ कर्म॰ टच् समा॰। १वृद्धवृषे अमर जरन् गौरिव टच्समा॰।२गृध्रविशेषे “अज्ञातकुलशीलस्य वासो देयो न कस्यचित्। मार्ज्जारस्य हि दोषेण हतो गृध्रो जरद्गवः” हितो॰। जरन् क्षीयमाणो गौर्धर्म्मरूप। शास्त्रप्रतिपादिते क्षीयमाणे ३धर्म्मरूपवृषे। “नैतस्येह यथाभाव यस्यास्त जरद्गव। अलसः क्षुत्परो मूर्खस्तेन पीवान् गुणा सह” भा॰ अनु॰ १२ अ॰। “शास्त्र तत्प्रतिपादित जरन् क्षीयमाणो धर्म्म” नीलक॰। आकाशस्थे ४वीथिभेदे स्त्री ङीप्। “नाग गजैरावतवृषभगोजरद्गवमृगाजदहनाख्या” इत्युपक्रमे “जरद्गव्या श्रवणात् त्रिभ मृगाख्या त्रिभस्तु मैत्राद्यम्” वृ॰स॰९अ॰।

**जरद्विष्** त्रि॰ जरतो वृद्धान् वेवेष्टि विष—क ६त। जरत् विषं जल यस्माद्वा। १जीर्णशुष्कद्रव्यापके २जीर्णोदकके वह्नौ। “त्वामग्ने अतिथ पूर्व्यम् ऋग्मास्तरस जरद्विषम्” ऋ॰५।८।२ “जरद्विष जरतां वृक्षाणां विष व्यापक जीर्णोदक वा” भा॰। [त्रिका॰।

**जरन्त** पु स्त्री जॄ—झच्। १महिषे स्त्रियां ङीप्। २वृद्धे त्रि॰

**जरमान** पु॰ ऋषिभेदे ततो गर्गा॰ गोत्रे यञ्। जारमाण्य तद्गोत्रापत्ये पु स्त्री स्त्रियां ङीप् यलोप। जारमाणी।

**जरसान** पु॰ जॄ—असानच्। पुरुषे उज्ज्वलदत्त।

**जरा** स्त्री जॄ—अङ् गुण। १वय कृतजरावस्था विशेषे “कण्ठावलम्बिनि गुणान् गणयन्ती जीवनेषु लभवन्त्युत्तरागम्। आगता मत जरेव हिमानी सेव्यतां सुरसरिद्भगिनी” उद्भट “मदेकपुत्रा जननी जरातुरा” नैष॰ २जराहेतौ “या हृष्टमनसा नित्य स्थानमानविचक्षणा। भर्त्तुं प्रीतिकरी नित्य सा भार्य्या हीतरा जरा” ३जराधिष्ठातृदेवताभेदे। सा तु कालकन्या। यथा “कालकन्या जरा साक्षात् लोकस्तां नाभिनन्दति। स्वसार जगृहे मृत्युः क्षयाय जगतामिह” भागवतम्। जरातिक्रमोपायाश्च दर्शिता यथा “मृत्यू रोगाः सुताश्चैव जरा तस्य च कन्यका। जरा च भ्रातृभिः सार्द्धं भ्रमत्यत्र महीतलम्। एते चोपायवेत्तार न गच्छन्ति च साम्प्रतम्। पलायन्ते च त दृष्ट्वा वैनतेयमिवोरगा। चक्षुर्जलञ्च व्यायाम पादाधस्तैलसेवनम्। कर्णे तैल मूर्द्ध्नि तैल जराव्याधिविनाशनम्। वसन्ते भ्रमण वह्निसेवा स्वल्प करोति य। बालाञ्च सेवते काले जरा त नोपगच्छति। स्वातशीतोदकस्नायी सेवते चन्दनद्रवम्। नोपयाति जरा तञ्च निदाघेऽनिलसेविनम्। प्रावृड्णोदकस्नायी घनतोय न सेवते। सम ये च समाहारी जरा त नोपगच्छति। शरद्रौद्र न गृह्णाति भ्रमण तत्र वर्जयेत्। स्वातस्नायी समाहारी जरा त नोपतिष्ठते। स्वातस्नायी च हेमन्ते काले वह्नि निषेवते। भुङ्क्ते नवान्नमुष्णञ्च जरा त नोपगच्छति। शिशिरेऽशुष्कवह्निञ्च नवोष्णान्नञ्च सेवते। य एवोष्णोदकस्नायी जरा त नोपगच्छति। सद्योमांस नवान्नञ्च बालस्त्रीं क्षीरभोजनम्। घृतञ्च सेवते यो हि जरा त नोपगच्छति। भुङ्क्ते सदन्न क्षुत्काले तृष्णाया पीयते जलम्। नित्य भुङ्क्ते च ताम्बूल जरा त नोपगच्छति। दधि हैयङ्गवीनञ्च नवनीत तथाशुभम्। नित्य भुङ्क्ते संयमी यो जरा त नैव गच्छति। शुष्कमांस स्त्रियो वृद्धा बालार्कस्तरुण दधि। त दिवस

ाति गत्वा भाषन्ति सख। रात्रौ ये दधि पुंश्चलीषु रजस्वलाम्। तमुपैति जरा वृद्धा सह सुन्दरि! इतिब्रह्मवैपु०ब्रह्मख०। ४राक्षसी राक्षसम्गन्धे दृग्गम्। ५स्तोत्रियोरुच्चे मन्त्र-स्तुतौ निरु०।"जराबोध। तद्विविड्ढि" ऋ०१।२७।१० ख्यपि निरुक्ते ४।८।२। "जरा स्तुतिर्जरतेः स्तोम" इत्य न्तम।

दौ प्रत्यये परे स्वर्थे गौणे च वा जराया जरस्। जरे जरया जरसा। "न ह्यस्य अपरं चन जरसा पति "निरु०१।१२८ "धृता स्रक् "सुद्धत्व जरसा "स्तगैरजैर्थं जरसोपदिष्टम्" रघु० गौणे "मीत-जरसं परं शुचि " किरा० निर्जरसम् निर्जरम्। नेर्वि च वस्त्राणि धारयन्ति गतक्लमा" भा०अनु० ०। अव्ययीभावसमासे नित्यम् अच् जरस् च भा० ०ः अभावः अजरसम्। सह जरया सजरसम्। दभेदे। "जरानामनिषादाना प्रभुः सर्वधनुष्मताम्" ० १६२ अ०। जरेति नाम येषां तेषां निषादानाम्। तत्र स्तुतौ "ताभ्य जरां प्रसुवचेति"। ऋ० ८"सप्ताथदा तमा गिरा जरायै ब्रह्मणस्तिम्"। १२। [ जेराढरा" मैम०। ०रू० २त०। १जीर्णे २जरापस्वे शब्दर० "जमनी ०२त०। जरासन्धे न्टपे शब्दर०।

पु०जरया स्तुया बुध्यति बुध-अच्। स्तुत्याबोधमा । "जराबोध तद्विड्ढिविशे विश्र यज्ञियाय" ऋ० ५। "जरया स्तुत्या बोधमानाग्ने" भा० तत्र बोधित्यस्याम्यपि भव० ह। जराबोधीय जराबोधेत्य चि गीयमाने सामभेदे"अग्नेः सुड्व्या ह्रियेत चेति बोधीयमग्निष्टोमसाम कार्यम्" ताण्ड्य० ४।२।१५। पु० जरातो भीरु ५त०। १कामदेवे हेमच०। जीर्णश्यपि ह्रीयमानत्वात् तथात्वम्। २जरातो तेषे त्रि०।

पु० जराया राक्षस्या अपत्य तया पाल्यत्वात् फि। जरासन्धे मागधे न्टपे शब्दर०।

० जरानेति इ-अुण्। १गर्भावरणचर्मणि २गर्भे "जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते। मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति" सुश्रु०। "या चर्मावृति सूक्ष्मा जरायुः सा निगद्यते" देवीभाग०। रायौ पक्षिणि च मेदि०। ४अग्निजारवृक्षे राजनि०।

५कुमारानुचरमातृभेदे। "पञ्चालिका मतृकुलिका जरायुर्ज्जर्जरानना" भा० श० ४७ अ०।

जरायुज त्रि० जरायौ जायते जन–ड ७त०। जरायु-मध्यजाते मनुष्यादौ अमर। जरायुजभेदाश्च मनुना दर्शिता यथा "पशवश्च मृगाश्चैव व्यालाश्चोभयतो दतः। रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः" "पशव गवाद्या मृगा हरिणाद्या व्याला सिंहाद्याः" कुल्लू०। "त्रीणि स्थानानि भूतानां चतुर्थं नोपपद्यते। स्थलमापस्तथाकाश जन्म चापि चतुर्विधम्। अण्डजो-द्भिज्जसंस्वेदजरायुजमथापि वा। चतुर्धा जन्म इत्येतद्भूतग्रामस्य लक्षणम्" इत्युपक्रमे "द्विपादबहुपा-दानि तिर्यग्गतियुतानि च। जरायुजानि भूतानि" भा० आनु०४२अ०। सक्षेपेणोक्ता। "या तु चर्मावृति सूक्ष्मा जरायुः सा निगद्यते। शुक्रशोणितयोर्योगस्तस्मिन् सञ्जायते यत। तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरा-युजः" इति देवीभाग०।

जरासन्ध पु० जरया राक्षस्या सन्धा देहयोजनमस्य। बृहद्रथभूपसुते मागधे न्टपे तस्योत्पत्तिकथा यथा। "राजा बृहद्रथो नाम मगधाधिपतिर्बली" इत्युपक्रमे। "नाससाद न्टपश्रेष्ठ पुत्र कुलविवर्द्धनम्। अथ काक्षीवतः पुत्र गौतमस्य महात्मनः। शुश्राव तपसि श्रान्तमुदारं चण्डकौशिकम्। यदृच्छयागत तन्तु वृक्ष-मूलमुपाश्रितम्। पत्नीभ्यां सहितो राजा स च रत्नै-रतोषयत्। तमब्रवीत्सत्यधृति सत्यवाक् ऋषिसत्तम.। परि-तुष्टोऽस्मि राजेन्द्र! वर वरय सुव्रत!। ततः सभार्यः प्रणतस्तमुवाच बृहद्रथः। पुत्रदर्शननैराश्याद्बाष्पसन्दि-ग्धया गिरा। राजोवाच। भगवन्राज्यमुत्सृज्य प्रस्थितोऽहं तपोवनम्। किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे। कृष्णउवाच। एतत् श्रुत्वा मुनिर्ध्यानमगमत् क्षुभितेन्द्रिय। तस्यैव चाम्रवृक्षस्य छायायां समुपाविशत्। तस्योपविष्टस्य मुनेरुत्सङ्गे निपपात ह। अवातमशुकादष्टमेकमाम्रफल किल। तत् प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च। राज्ञे ददावप्रतिम पुत्रसंप्राप्तिकारणम्। उवाच च महाप्राज्ञस्त राजान महामुनि। गच्छ राजन्! कृतार्थोऽसि निवर्त्तस्व नराधिप!। एतत् श्रुत्वा मुने-र्वाक्य शिरसा प्रणिपत्य च। मुने पादौ महाप्राज्ञः स न्टप. स्वगृह गत। यथासमयमाज्ञाय तदा स

ततस्तमजितं तेन जरासन्धं वृकोदर । संरब्धं बलिना श्रेष्ठो जग्राह कुरुनन्दन । भीमसेनस्ततः कृष्णमुवाच यदुनन्दनम् । बुद्धिमास्थाय विपुलां जरासन्धवधेप्सया । नायं पापो मया कृष्ण ! युक्तः स्यादनुरोधितुम् । प्राणेन यदुशार्दूल ! बद्धकक्षेण वाससा । एवमुक्तस्ततः कृष्ण प्रत्युवाच वृकोदरम् । त्वरयन् पुरुषव्याघ्र ! जरासन्धवधेप्सया । यत्ते दैवं परं सत्त्वं यच्च ते मातरिश्वन ! बलं भीम ! जरासन्धे दर्शयाशु तदद्य वै । एवमुक्तस्तदा भीमो जरासन्धमरिन्दम । उत्क्षिप्य भ्रामयामास बलवन्तं महाबल । भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ ! । बभञ्ज पृष्ठं संक्षिप्य निष्पिष्य विननाद च । करे गृहीत्वा चरणं द्वेधा चक्रे महाबल । तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्जतः । अभवत्तुमुलो नादः सर्वप्राणिभयङ्करः । वित्रेसुर्मागधाः सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः । भीमसेनस्य नादेन जरासन्धस्य चैव ह । किं नु स्याद्धिमवान् भिन्नः किं नु स्विद्दीर्यते मही । इति वै मागधा जज्ञुर्भीमसेनस्य निःस्वनात् । ततो राज्ञः कुलद्वारि प्रसुप्तमिव तं नृपम् । रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिन्दमाः । जरासन्धरथं कृष्णो योजयित्वा पताकिनम् । आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान् ।”

जरित त्रि॰ जरा जाताऽस्य तारका॰ इतच् । १जातजरे वृद्धे मन्दपालर्षिकलत्रे २पक्षिणीभेदे तत्कथा

“तच्छ्रुत्वा मन्दपालस्तु वचस्तेषां दिवौकसाम् । क्व नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत् । स चिन्तयन्नभ्यगच्छत् सुबहुप्रसवान् खगान् । शार्ङ्गिकां शार्ङ्गको भूत्वा जरितां समुपेयिवान् । तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिन । तानपास्य स तत्रैव जगाम लपितां प्रति । बालान् सुतानण्डगतान् सह मात्रा मुनिर्वने । तस्मिन् गते महाभागे लपितां प्रति भारत ! । अपत्यस्नेहसंयुक्ता जरिता बह्वचिन्तयत्” “तेन त्यक्तान् असन्त्याज्यानृषीनण्डगतान् वने । न जहौ पुत्रशोकार्त्ता जरिता खाण्डवे सुतान् भा॰ आ॰ १२८ अ॰ ।

जरितृ त्रि॰ जॄ–तृच् । “स्तोतरि निघण्टुः “इमा ब्रह्माणि जरिता वो अर्चत्” ऋ॰ १।१६५।१४ “अभीषु च सखी नामविता जरितृणाम्” ४।३१ । २जीर्णे च स्त्रियां ङीप् ।

जरितारि पु॰ जरितायां जाते मन्दपालर्षेः सुते पुत्रभेदे “जरितारी कुलं ह्येतत् ज्येष्ठत्वेन प्रतिष्ठितम् भा॰आ॰२३ ।

जरिन् त्रि॰ जराऽस्त्यस्य इनि । १वृद्धे जरायुक्ते हेमच॰ स्त्रियां ङीप् ।

जरिमन् पु॰ जॄ–भावे इमनिच् । जराया म् “मा नो न इव जरिमा भिनाति” ऋ॰ १।७१।१० । “अस्तमिनेत् जरिमाणं जगम्याम्” १।११६।२५ ।

जरूथ पु॰ जॄ–ऊथन् १मांसे त्रिका॰ । २अरण्ये च । गृ–बा॰ ऊथन् पृषो॰ । ३परुषभाषिणि । “जरूथं हन्यक्षि राये पुरन्धिम्” ऋ॰ ७।९ ६ । “जरूथ परुषभाषिणं अरणीय वा रक्षोगणम्” भा॰ । इत्यादृशमभिप्रेत्य निरु॰ ६।१७ । उक्तं “जरूथं गरूथं गृणाते” । “विश्वा अग्ने ऽपदहारातीर्येभिस्तपोभिरदहो जरूथम्” ऋ॰७।१।७ “येभिर्यैस्तपोभिर्जरूथ परुषमल्पकारिणं राक्षसम्” भा॰

जर्च(र्छ) वचने भ्वा॰ प॰ सक॰ सेट् । जर्च (र्छ)ति अज र्चीं(र्छीं)त् । जजर्च(र्छ) । [ जजर्ज जर्जर ।

जर्ज वचने भर्त्सने च तु॰ प॰सक॰ सेट् । जर्जति अजर्जीत्

जर्जर पु॰ जर्ज–बा॰ अर । १शैवले २शक्रध्वजे ३जीर्णे त्रि॰ मेदि॰ । “जर्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकाः” भा॰ शा॰ ५६अ॰ । “लघु जर्जरं दधिनिभं इहाद्विप स्नान मपि हैमम्” वृ॰ ८४अ॰।३चर्चिते च “हृत्वा पुरन् यात सुरेभ्यो मूर्ध्नि पादपा जर्जरा निर्झरौघाः”माघः।

जर्जरानना स्त्री कुमारानुचरमातृभेदे । “पृथुवक्त्रा मधुलिका मधुकुम्भा तथैव च । पक्षालिका मत्कुलिका जरायुर्जर्जरानना” भा॰ श॰ ४७ अ॰ ।

जर्जरित त्रि॰ जर्जरं करोति जर्ज+णिच–कर्मणि क्त । १जीर्णीकृते २खण्डीकृते । “कृष्णो जर्जरिताङ्गस्य क्रुद्ध रक्षार्त्तचेतस” हरि॰ ८६ अ॰ । “जराजर्जरितं पतिम्” भा॰व॰ १२१ अ॰ । [२जरातुरे च मेदि॰।

जर्जरीक त्रि॰ जर्ज–ईक फर्फरीका॰ नि॰ । १बहुच्छिद्रयुक्ते

जर्भ वधे भर्त्सने च तु॰ पर॰ सक॰ सेट् । जर्भति अजर्भीत् जजर्भ । [ हेमच॰

जर्ण पु॰ जॄ–नन् । १चन्द्रे २वृक्षे च मेदि॰ । ३जीर्णे त्रि॰

जर्त्तिक जॄ–बा॰तिक । १वाहीकदेशे । सोऽभिजनोऽस्य अण् बहुषु अत्रपदे लुप् । २तद्देशवासिषु ब॰ व॰ । “जर्त्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम्”भा॰क॰४४अ॰ ।

जर्त्तिल पु॰ जॄ–त्तिच् नि॰ । १आरण्यतिले “जर्त्तिलः कथ्यते सद्भिररण्यप्रभवस्तिलः” शब्दार्थचि॰ । “जर्त्तिलै र्जुहोति” शत॰ ब्रा॰ ९।१।१।३ । “जर्त्तिला आरण्यतिलाः” भा॰ “जर्त्तिलमिश्रान् गवेधुकासक्तून् वा

नृपसत्तमः । ताभ्यामेकं फलं प्रादात् पत्नीभ्यां भरतर्षभ ॥ ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे । भावित्वादपि चार्थस्य सत्यवाक्यतया मुनेः । तयोः समभवद्गर्भः फलप्राशनसम्भवः । ते च दृष्ट्वा स नृपतिः परां मुदमवाप ह । अथ काले महाप्राज्ञ ! यथा समयमागते । प्राजायेतामुभे राजन् ! शरीरशकले तदा एकाक्षिबाहुचरणे अर्द्धोदरमुखस्फिचे । दृष्ट्वा शरीरशकले प्रवेपतुरुभे भृशम् । उद्विग्ने सहसम्मन्त्र्य ते भगिन्यौ तदाऽबले । सजीवे प्राणिशकले तत्यजाते सुदुःखिते । तयोर्धात्र्यौ सुसंवीते कृत्वा गर्भसंप्लवे । निर्गम्यान्तःपुरद्वारात् समुत्सृज्याभिजग्मतुः । ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी । जग्राह मनुजव्याघ्र ! मांसशोणितभोजना । कर्त्तुकामा सुखवहे शकले सा तु राक्षसी । संयोजयामास तदा विधानबलचोदिता । ते समानीतमात्रे तु शकले पुरुषर्षभ ॥ एकमूर्त्तिधरो वीर कुमारः समपद्यत । ततः सा राक्षसी राजन् ! विस्मयोत्फुल्ललोचना । न शशाक समुद्वोढुं वज्रसारमयं शिशुम् । बालस्ताम्रतलं मुष्टिं कृत्वा चास्ये निधाय सः । प्राक्रोशदतिसंरब्धः सतोय इव तोयदः । तेन शब्देन सम्भ्रान्तः सहसान्तःपुरे जनः । निर्जगाम नरव्याघ्र ! राज्ञा सह परन्तप ॥ ते चाबले परिम्लाने पयःपूर्णपयोधरे । निराशे पुत्रलाभाय सहसैवाभ्यगच्छताम् । ते तु दृष्ट्वा तथाभूते राजानञ्चेष्टसन्ततिम् । तञ्च बालं प्रबलिनं चिन्तयामास राक्षसी । नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः । बालं पुत्रमिमं हन्तुं धार्मिकस्य महात्मनः । सा तं बालमुपादाय मेघलेखेव भास्करम् । कृत्वा च मानुषं रूपमुवाच वसुधाधिपम् । राक्षस्युवाच । बृहद्रथ ! सुतस्तेऽयं मया दत्तः प्रगृह्यताम् । तव पत्नीद्वये जातो द्विजातिवरशासनात् । धात्रीजनपरित्यक्तो मयायं परिरक्षितः । कृष्ण उवाच । ततस्ते भरतश्रेष्ठ ! काशिराजसुते शुभे । तं बालमभिपद्याशु प्रस्रवैरभ्यषिञ्चताम् । ततः स राजा संहृष्टः सर्वं तदुपलभ्य च । अपृच्छद्धेमगर्भाभां राक्षसीं तामराक्षसीम् । राजोवाच । का त्वं कमलगर्भाभे ! मम पुत्रप्रदायिनी । काम्यया ब्रूहि कल्याणि ! देवता प्रतिभासि मे ।"

राक्षस्युवाच । जरा नामास्मि भद्रन्ते राक्षसी कामरूपिणी । तव वेश्मनि राजेन्द्र ! पूजिता न्यवसं सुखम् । गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी । गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयम्भुवा । दानवानां विनाशाय स्थापिता दिव्यरूपिणी । यो मां भक्त्या लिखेत् कुड्ये सपुत्रां यौवनान्विताम् । गृहे तस्य भवेद्वृद्धिरन्यथा क्षयमाप्नुयात् । त्वद्गृहे तिष्ठमाना तु पूजिताहं सदा विभो ॥ लिखिता चैव कुड्येषु पुत्रैर्बहुभिरावृता । गन्धपुष्पैस्तथा धूपैर्भक्ष्यभोज्यैः सुपूजिता । साहं प्रत्युपकारार्थं चिन्तयाम्यनिशं तव । तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक ॥ संश्लेषिते मया दैवात् कुमारः समपद्यत । तव भाग्यान्महाराज ! हेतुमात्रमहं त्विह । मेरुं वा खादितुं शक्ता किं पुनस्तव बालकम् । गृहे सम्पूजनात् तुष्ट्या मया प्रत्यर्पितस्तव । कृष्ण उवाच । एवमुक्त्वा तु सा राजंस्तत्रैवान्तरधीयत । स संगृह्य कुमारं तं प्रविवेश गृहं नृपः । तस्य बालस्य यत् कृत्यं तच्चकार नृपस्तदा । आज्ञापयच्च राक्षस्या मगधेषु महोत्सवम् । तस्य नामाकरोच्चैव पितामहसमः पिता । जरया सन्धितो यस्माज्जरासन्धो भवत्वयम् । सोऽवर्द्धत महातेजा मगधाधिपतेः सुतः । प्रमाणबलसम्पन्नो हुताहुतिरिवानलः । मातापित्रोर्नन्दिकरः शुक्लपक्षे यथा शशी" भा० स० १७।१८ अ० ।

**जरासन्धवध** पु० जरासन्धस्य वधमधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुपि व्यक्तिवचनत्वात् पुंस्त्वम् । भारतसभापर्वान्तर्गते अवान्तरपर्वभेदे तच्च पर्व सभापर्वणि १९अध्यायावधि २७अध्यायपर्यन्तम् । "जरासन्धवधः पर्व तथा दिग्विजयस्ततः" भा० आ० १ अ०

**जरासन्धजित्** पु० जरासन्धं जितवान् जि—क्विप् ६त० । भीमे पाण्डवे तज्जयकथा भा० स० २३अ०

"कार्त्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि । अनाहारं दिवारात्रमविश्रान्तमवर्त्तत । तद्वृत्तं तु त्रयोदश्यां समवेतं महात्मनोः । चतुर्दश्यां निशायान्तु निवृत्तो मागधः क्लमात् । तं राजानं तथा क्लान्तं दृष्ट्वा राजन् ! जनार्दनः । उवाच भीमकर्माणं भीमं सम्बोधयन्निव । क्लान्तः शत्रुर्न कौन्तेय ! लभ्यः पीडयितुं रणे । पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मनः । तस्मात्तेनैव कौन्तेय ! पीडनीयो जनाधिपः । सममेतेन युध्यस्व बाहुभ्यां भरतर्षभ ! ॥ एवमुक्तः स कृष्णेन पाण्डवः परवीरहा । जरासन्धस्य तद्रूपं ज्ञात्वा चक्रे मतिं वधे ।

फलम् । राजा दैत्यगुरुः कुर्य्यात् सर्व्वशस्यं धरातलम् । क्षयाभो वातवृष्टिश्च रोगोपद्रव एव च । मन्दा वृष्टिः यदा जातो राजा संवत्सरे शनिः । शाकस्य काल त्रिगुणीकृतस्य द्विबाणवह्निक्षितिभिर्न्विशस्य । राजा च मन्त्री च जलाधिपश्च शस्याधिपः स्यान्मुनिभाजितेन । (शाकस्य कालं त्रिगुणीकृतस्य पञ्चेण युक्तं मुनिभा हरेत् । सूर्य्यादि वर्षाधिपतिश्च शेषो मन्त्री चतुर्थो भवति प्रसिद्धः ।) पाठान्तरम् । यथा वृष्टिफलं प्रोक्तं वत्-सरे चन्द्रभूपतौ । तथा वृष्टिफलं ज्ञेयं विश्वमेत्सर-मन्त्रिणि ।" अथ मेघानयनम् । "शाकं वह्निसमायुक्तं वेदेन भागमाहरेत् । शेष मेघं विजानीयादावर्त्तादि यथाक्रमम् । आवर्त्तश्चैव संवर्त्तः पुष्करो द्रोण एव च । चत्वारो जलदा प्रोक्ता आवर्त्ताद्या मनीषिभिः । एकदेशेन चावर्त्ते संवर्त्ते सर्व्वतो जलम् । पुष्करे दुष्करं वारि द्रोणे बहुजला मही ।" अथ जलाढक-निर्णयः । "शतयोजनविस्तीर्णं त्रिंशद्योजनमुच्छ्रि-तम् । आढकस्य भवेन्मानं मुनिभिः परिकीर्त्तितम् । युग्माजगोमीनगते शशाङ्के रविर्यदा कर्कटकं प्रयाति । शताढक कं हरिकार्मुकेऽर्द्धं वदन्ति कन्यामृगयोरशी-तिम् । कुलीरकुम्भालितुलाभिधाने जलाढक षण्णवतिं वदन्ति । अनेन मानेन तु वत्सरस्य निरूप्य नीरं कृषि-कर्म्म कार्य्यम्" । एतत्सर्व्वं विंशत्या हरणीयम् । समुद्रे दश भागांश्च षड्भागानपि पर्व्वते । पृथिव्यां चतुरोभागान् सदा वर्षति वासवः ।" अथ पौषादि-मासीयवृष्टिलक्षणम् । "सार्द्धं दिनद्वयं मानं कृत्वा पौषादिना बुध । गणयेन्मासिकीं वृष्टिमवृष्टिं वानिल-क्रमात् । सौम्यवारुणयोर्वृष्टिरवृष्टिः पूर्व्वयाम्ययोः । निर्ऋते वृष्टिहानिः स्यात् वायव्ये बहुलं जलम् । एकैक पञ्चदण्डेन मासस्य दिवसो मतः । पूर्व्वार्द्धे वासरो वृष्टि-रपरार्द्धे च नैशिकी । दत्त्वा दण्डे पताकान्तु वात-स्यानुक्रमेण च । विज्ञेया मासिकी वृष्टिर्द्दश वात दिवानिशम् । धूलीभरैश्च शबलीकृतमन्तरीक्षं विद्यु-च्छटाच्छुरितयारुणदिग्विभागम् । पौषे यदा भवति मासि सिते च पक्षे तोयेन तत्र सकला प्लवते धरित्री । पौषे मासि यदा वृष्टिः कुज्झटिर्व्वा यदा भवेत् । तदादौ सप्तमे मासि तां तिथिं प्लाव्यते मही । अथ माघादिफलम् ।

माघस्य सितसप्तम्यां वृष्टिर्व्वा मेघदर्शनम् । तदा संवत्सरो धन्य सर्व्वशस्यफलप्रद । सप्तम्यां स्वातियोगे यदि पतति जलं माघपक्षेऽन्धकारे वायुर्व्वा चण्डवेगः सजलजलधरो गर्ज्जितो वासरे वा । विद्युन्मालाकुलं वा यदि भवति नभो नष्टचन्द्रार्कतारं तावद्वर्षन्ति मेघा प्लुतधरणितलं यावदाकार्त्तिकान्तम् । माघे बहुलसप्तम्यां तथैव फाल्गु-नस्य च । चैत्रशुक्लतृतीयायां वैशाखे प्रथमेऽहनि । एतासु चण्डवातो वा तड़िद्वृष्टिरथापि वा । तदा स्यात् शोभना प्रावृट् भवेत् शस्यवती क्षिति । मनुर्मकरकुम्भेषु यदा वर्षति वासवः । तदादि सप्तमे मासि वारिपूर्णा भवेन्मही ।"

अथ चैत्रलक्षणम् । प्रतिपदि मधुमासे भानुवारः सितायां यदि भवति तदा स्याच्छिन्नला वृष्टिरब्दे । अविरलपृथुधारासान्द्रवृष्टिप्रवाहैर्धरणितलमशेषं प्लाव्यते सोमवारे । "अथमितनयवारे नास्ति वृष्टिर्न शस्य कवि-गुरुभृगुजानां वासरे शस्यपूर्त्तिः । जलनिधिरपि शोषं याति वारेण शौरेर्भवति खलु धरित्री धूलिजालैरदृश्या । चैत्राद्यभागे चित्रायां भवेच्छिन्नजला क्षितिः । शेषे-ऽपि चैव चात्यर्थं स्वाती मध्ये बहुवर्षिणी ।

अथ वैशाखलक्षणम् । प्रवाहयुक्तनद्यान्तु दण्डं न्यस्य जले निशि । वैशाखशुक्लप्रतिपन्निशायां वृष्टिं निरू-पयेत् । ओं सिद्धिरिति मन्त्रेण मन्त्रयित्वा शतद्वयम् । आहूयित्वा तु त दण्डमब्दतुल्ये जले क्षिपेत् । प्रातरु-त्थाय सहसा तदब्दन्तु निरूपयेत् । सम चैवाधिक नूनं भविष्यज्जलकाङ्क्षया । गतवत्सरवद्वारि वन्या चैव समे भवेत् । हीने हीनं भवेद्वारि भवेद्वन्या च तादृशी । अङ्गाधिक्ये च द्विगुणा वृष्टिर्वन्या च जायते । इट पराशरेणोक्तं भविष्यद्वृष्टिलक्षणम् । सूर्य्योदये विषुवतो जगतां विपत्तिर्मध्य गते दिनकरे बहुशस्यहानिः । अस्त गते दिनकरे तु तदर्द्धशस्यमैश्वर्य्यभोगमतुलं खलु चार्द्ध-रात्रौ । तदा संवत्सरो धन्यो बहुशस्यफलप्रदः ।

अथ ज्यैष्ठलक्षणम् । ज्यैष्ठादौ च सिते पक्षे आर्द्रादौ दशभक्षके । सजला निर्जला यान्ति निर्जला सजला इव । रेखाश्चय मध्यस्थस्य नाभिस्तास्य विवर्द्धयेत् । त्रिशृङ्गं सर्व्वकोणेषु पर्व्वत तत्र दापयेत् । ईशानादि दक्षिणाङ्गान् वच्छिखेदनमादितः । येन येनाजसक्रान्ति स्तेन प्रावृट्फल भवेत् । अतिवृष्टिः समुद्रे स्यादना-वृष्टिस्तु पर्व्वते । कक्षयोश्चित्तला वृष्टि सुवृष्टि शैल सन्धिषु । (मतान्तरे । रेखात्रयं समुल्लिख्य ताड़ित वेद-सम्भवे । ईशानदक्षिणे शृङ्गं विलिखेदनलभादितः । येन

**जलजन्तुका** स्त्री जलजन्तु+स्वार्थे कन्। जलौकायां भरत।

**जलजन्मन्** न॰ जले जन्म यस्य। पद्मे हेमच॰। "नियतः श्रिय सततमेतदिति प्रथित यदेव जलजन्मतया" माघः।

**जलजम्बुका** स्त्री जलजाता जम्बूका। भूजम्बूाम् शब्दचि॰

**जलजाजीव** पु॰ जलं जलजमत्स्यवधविक्रयादिकमाजीवति आ+जीव–अण्। जलचरघातके (जेले) शब्दार्थचि॰। [हारा॰।

**जलजिह्व** पु॰ जला जडा स्वादे असमर्था जिह्वाऽस्य। नक्रे

**जलजीविन्** पु॰ जलेन तज्जातमत्स्यादिना जीवति जीव–णिनि। (जेले) मत्स्योपजीविनि। "जलजालैर्यथा मत्स्यान् बध्नन्ति जलजीविनः" भा॰ शा॰ २०२अ॰।

**जलडिम्ब** पु॰ जले डिम्ब इव। शम्बूके। (शामुक) हारा॰,

**जलतण्डुलीय** पु॰ जलजातस्तण्डुलीयः। कम्बटे शाकभेदे शब्दार्थचि।

**जलतापिन्** पु॰ जलतां स्वेदरूपजलमयतामाप्नोति पाककाले आप+णिनि। (इलिश) मत्स्यभेदे शब्दर॰। स्वार्थे क। जलतापिक तत्रार्थे। स्वार्थे कन्। काकमाचीदले च शब्दर॰। [(इलिश) मत्स्यभेदे शब्दर॰।

**जलताल** पु॰ जलतायै अलति पर्याप्नोति अल–अच्।

**जलतिक्तिका** स्त्री जलस्य तिक्ता कन् तिक्तिका जलप्रधाना तिक्तिका। शल्लकीवृक्षे राजनि॰।

**जलत्रा** स्त्री जलात् त्रायते त्रै–क। १छत्रे २जङ्गमकुटीरे च हारा॰।

**जलत्रास** पु॰ जलात् तद्दर्शनात् त्रासः, सोऽस्य वा। दष्ट्रिणा दंशनोत्तरं जलं दृष्ट्वा १त्रासे २तद्युक्ते त्रि॰। "येन चापि भवेद्दष्टस्तस्य चेष्टारुतं नरः। बहुशः प्रति कुर्वाणः क्रियाहीनो विनश्यति। दष्ट्रिणा येन दष्टश्च तद्रूपं यदि पश्यति। अप्सु वा यदि वाऽऽदर्शे रिष्टं तस्य विनिर्द्दिशेत्। त्रस्यत्यकस्माद्योऽभीक्ष्णं श्रुत्वा दृष्ट्वापि वा जलम्। जलत्रासन्तु विद्यात रिष्टं तदपि कीर्त्तितम्। अदष्टो वा जलत्रासी न कथञ्चन सिध्यति। प्रसुप्तोऽथोत्थितो वापि स्वस्थोऽस्वस्थो न सिध्यति" सुश्रु॰

**जलद** पु॰ जलं ददाति दा–क। १मेघे, २कर्पूरे च ३जलदातरि त्रि॰ मेदि॰। "अमतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्बुदस्य पयसोऽनुकृतिम्"। "प्रौढ़ध्वान्तं दिनमिह जलदाः" माघ "सन्देशं मे तदनु जलद। श्रोष्यसि श्रोत्रपेयम्" मेघ॰।



**जलदकाल** पु॰ ६त॰। वर्षाकाले "जलदकालसमोधकृतं दिशाम्" माघ।

**जलदक्षय** पु॰ जलदानां क्षयोऽत्र। १शरत्काले "सर्वाणि तनुतां यान्ति जलानि जलदक्षये" हरिव॰ ७१अ॰।

**जलदर्दुर** पु॰ जल दर्दुर इव। जलरूपे दर्दुरवाद्यभेदे (तालिदिया जलबाजान) "अथाद्यस्ता जलदर्दुराश्च वाद्यानुरूपं जगुरेव हृष्टाः" हरिव॰ १४८ अ॰।

**जलदागम** पु॰ जलदानां मेघानामागमो यत्र। वर्षाकाले।

**जलदाशन** पु॰ जलदैरश्यते अश–भोजने कर्मणि ल्युट्। शालवृक्षे शब्दच॰। तत्पत्राणां मेघैर्भोजनस्य लोकप्रसिद्धेस्तस्य तथात्वम्।

**जलदुर्ग** न॰ जलवेष्टितं दुर्गम्। दुर्गभेदे। दुर्गशब्दे विवृतिः।

**जलदेव** पु॰ जलं देवः अधिष्ठात्रीदेवता अस्य। १पूर्वाषाढ़ानक्षत्रे तस्य जलदैवतत्वम् अश्लेषाशब्दे ४९७ पृ॰ दृश्यम्। "मूलेऽम्बुमत्स्यपतिर्जलदेवे काशिपोऽमरणमेति" वृ॰ ११अ॰ केतुचाराक्रान्तनक्षत्रभेदे फलोक्तौ। "दृष्टामन्दकलत्रो धीरो दृढसौहृद इव जलदेवे" वृ॰ स॰१०१ अ॰ वैवाहिकनक्षत्रफलोक्तौ। ७त॰। २जलस्थिते देवे च। जलदेवताश्चात्र "अन्वीयमानो जलदेवताभिर्निषेव्यमाणो जलजैश्च सर्वैः" हरिव॰ २४१ अ॰।

**जलद्राक्षा** स्त्री जले द्राक्षेव। शालिञ्चीशाके शब्दार्थचि॰।

**जलद्रोणी** स्त्री जलस्य जलसेचनार्थं द्रोणीव। नौकाया जलसेचनपात्रे शब्दार्थचि॰।

**जलद्वीप** पु॰ जलप्रधानो द्वीपः। द्वीपभेदे। "गिरिभिर्ये च गम्यन्ते प्लवनेन प्लवेन च। यत्नवन्तो जलद्वीप सप्तराज्योपशोभितम्। सुवर्णरूप्यकद्वीप सुवर्णाकरमण्डितम्। जलद्वीपमतिक्रम्य शिशिरो नाम पर्वतः। दिवं स्पृशति शृङ्गेण देवदानवसेवितः। एतेषां गिरिदुर्गेषु प्रपातेषु वनेषु च। मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम्" रामा॰ कि॰ ४० अ॰। क्वचित् पुस्तके यवद्वीप इति पाठः।

**जलधर** पु॰ जलं धरति धृ–अच्। १मेघे २मुस्तके च अमर ३समुद्रे हेमच॰। ४तिनिशवृक्षे राजनि॰। तस्य रसरूपजलाधिक्यात्तथात्वम् ४जलधारकमात्रे त्रि॰। "नभो जलधरैर्हीनं साङ्गारक इवांशुमान्" भा॰ व॰ ११४अ॰ "अभ्यर्थिता जलधर। महाकालमासाद्य काले" मेघ॰।

**जलधरमाला** स्त्री॰ ६त॰। १मेघपङ्क्तौ द्वादशाक्षरपादके २छन्दोभेदे च। "अब्ध्यष्टाभिर्जलधरमाला म्भौ स्मौ" छ॰

र० "या भक्तानां कलिदुरितोत्तप्तानां तापच्छेदे जलधरमाला नव्या। भव्याकारा दिनकरपुत्रीकूले केलिलोला हरितनुरव्यात् सा व" छन्दोम०।

**जलधार** पु० जलं धारयति धारि—अण् उप० स०। १शाकद्वीपस्थे गिरिभेदे। शाकद्वीपोपक्रमे "तथैव पर्वता राजन्! सप्तात्र मणिभूषिताः। रत्नाकरास्तथा नद्यस्तेषां नामानि मे शृणु। अतीव गुणवत् सर्वं तत्र पुण्यं जनाधिप!। देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते। प्रागायतो महाराज! मलयो नाम पर्वतः। यतो मेघाः प्रवर्त्तन्ते प्रभवन्ति च सर्वशः। तत्र पूर्वेण कौरव्य। जलधारो महागिरिः। यत्र नित्यमुपादत्ते वासवः परमं जलम्" भा०भी० ११अ०। २जलधारके त्रि०। ३त०।२अल्पसलिलतौ स्त्री।

**जलधि** पु० जलं धीयतेऽत्र धा—आधारे कि उप० स०। १समुद्रे "छायेव या स्वर्जलधेर्जलेषु" "आत्मानमेव जलधेः प्रतिबिम्बिताङ्ग"माघ। "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्। जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः सज्ञाः" लीलावत्युक्ते २संख्याभेदे। ४चतुःसंख्यायां च।

**जलधिगा** स्त्री जलधिं गच्छति गम—ड। १नदीमात्रे हेमच० सर्वासां नदीनां साक्षात् परम्परया समुद्रगामित्वात्तथात्वम् अतएवोक्तं "सर्वा नद्यः समुद्रगा" इति साक्षात् समुद्रगामिन्यां २गङ्गादिनद्यां च। समुद्रगादयोऽप्यत्र।

**जलधिज** पु० जलधौ जायते जन—ड। १चन्द्रे। २लक्ष्म्यां स्त्री त्रिका०। ३समुद्रजातमात्रे त्रि०।

**जलधेनु** स्त्री दानार्थकल्पितायां जलादिनिर्मितायां धेन्वां सा च नानाविधा तद्विधिः हेमा० दा० उक्तो यथा

"जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया। देवदेवो हृषीकेशः सर्वगः सर्वभावनः। जलकुम्भं नरव्याघ्र! सुवर्णरजतान्वितम्। रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम्। सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम्। कुष्ठमांसीमुरोशीरवालकामलकैर्युतम्। प्रियङ्गुपत्रसहितं सितयज्ञोपवीतिनम्। सच्छत्रं सोपानत्कं च दर्भविष्टरसंस्थितम्। चतुर्भिः संवृतं भूप। तिलपात्रैश्चतुर्दिशम्। स्थापितं दधिपात्रेण घृतक्षौद्रवता मुखे। उपोष्य तत्र सम्पूज्य वासुदेवं जगत्पतिम्। पुष्पधूपोपहारैस्तु यथाविभवमादृतः। सङ्कल्प्य जलधेनुश्च कुम्भं तमेव च। "जलधेनुः प्रकल्प्याथ कुम्भं जलमय शुभ। एवं सम्पूज्य गोविन्दं जलधेनुं सवत्सिकाम्। सितवस्त्रधरः शान्तो वीतरागो विमत्सरः। दद्यात् द्विजाय राजेन्द्र! प्रीत्यर्थं जलशायिनः। जलशायी जगद्योनिः प्रीयतां मम केशवः। इति चोच्चार्य्य भूनाथ! विप्राय प्रतिपादयेत् ताम्। अपक्वान्नाशिना स्थेयमहोरात्रमतःपरम्"। जलकुम्भमित्यादि, कुम्भोऽत्र कलशः। सुवर्णरजतयोरनियतपरिमाणतया यथाशक्ति विधानं पञ्चरत्नानि धान्यानि च परिभाषयानुक्तानि यत्र यद्यपि सामान्येनोपदेशः तथापि तत्सामान्यादिनरेषु तथात्वमिति न्यायादितरधेनुवदविरुद्धधर्म्मानुष्ठानं वेदितव्यं तत्र सुवर्णस्य शृङ्गाकृतित्वं रजतस्य खुराकृतित्वं, तिलपात्राणां ताम्रपात्रमयत्वं, दधिपात्रस्य कांस्यपात्रमयत्वं, धातुसत्त्वेऽपि तथा धान्यानि पार्श्वद्वये कुष्ठादीनि घ्राणदेशे, प्रियङ्गुपत्रं स्तने, यज्ञोपवीतं शिरःस्थाने स्थापयेत्। वत्सोऽपि चतुर्थांशेन धेनुवत् कार्य्यः। कश्चित्तु "पूजयेद्वत्सकं तद्वत् कृतं घृतमयं शुभं" इति पाठात् घृतजलयोर्विकल्पोऽवगम्यते, दानवाक्यन्तु पूर्ववत् दक्षिणा चात्र यथाशक्ति सुवर्णमिति। "अनेन विधिना दत्त्वा जलधेनुं नराधिप!। सर्वान् कामानवाप्नोति ये दिव्या ये च मानुषाः। शरीरारोग्यमाबाधोपशमः सार्वकालिकः। नृणां भवति दत्तायां जलधेन्वां न संशयः"। इति विष्णुधर्म्मोक्तो जलधेनुदानविधिः।

"भानुरुवाच। जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया। देवदेवो मयूखेशः सर्वगः सर्वभावनः"। जलकुम्भसमानीयेत्यादि विष्णुधर्म्मतुल्यार्थं, विशेषस्तु "ततः सम्पूज्य चादित्यं जलधेनुं सवत्सिकाम्। दद्याद्विप्राय देवाय प्रीत्यर्थं मिहिरस्य तु। आदित्य स जगद्योनिः प्रीयतां मिहिरः सदा। इति चोच्चार्य्य तां गान्तु विप्राय प्रतिपादयेत्। अनेन विधिना यस्तु जलधेनुं महामते!। सर्वाह्लादानवाप्नोति यांश्च ध्यायति मानवः। सर्वपापविनिर्मुक्तः पितरं सपितामहम्। प्रपितामहं यथापूर्वपुरुषाणां चतुष्टयम्। आत्मानं ससुतं पौत्रं तदधस्ताच्चतुष्टयम्। तारयेत् स मुनीन्द्रेन्द्र जलधेनुप्रदो नरः। यश्च गृह्णाति विधिवत् तस्याप्येवंविधा शुभे। चतुर्दश तथा चैव ददतश्चानुमोदतः। दीयमानां प्रपश्यन्ति जलधेनुं च ये नराः। तेऽप्यशेषाघनिर्मुक्ताः प्रयान्ति परमां गतिम्"। इति आदित्यपुराणोक्तो जलधेनुदानविधिः। तोयधेनुरप्यत्र।

"अगस्त्य उवाच। तोयधेनुं शृणु वत्स! यथा देवी प्रसीदति। कुम्भं तोयसुसंपूर्णं रत्नवस्त्रयुगान्वितम्। समस्तबीजसंयुक्तं दूर्वापल्लवशोभितम्"। समस्तबीजानि, सर्वधान्यानि। "दूर्वाक्षतदधिगन्धकुङ्कुमचन्दनैः। माल्यच्छत्रसमायुक्तं तिलपात्रैश्च संयुतम्। दधिक्षीरघृतं पात्रं विधानेनोपकल्पयेत्। वत्सकं कल्पयेत्तस्यास्तत्तुरीयमथ बुध!। देवीमभ्यर्च्य विधिवत् सोपवासोऽथ भक्तिमान्। देवीभक्तं प्रदद्याच्च सर्वान् कामानवाप्नुयात्। जये! ऽरिसूदनि! देवि! देवानां भयनाशिनि! वेदमातर्वरे! दुर्गे! सर्वगे! सुभगे! मम। अनेन वत्स! मन्त्रेण मन्त्रानाम्नाभिमन्त्रयेत्। देवी मे प्रीयतां नित्यं यथोदितफला शिवा" इति देवीपुराणोक्तो तोयधेनुदानविधि।

**जलनकुल** पु॰ जले नकुल इव। उद्रे (धाड़िया) (उद्बिडाल) ख्याते जलजन्तुभेदे त्रिका॰।

**जलनिधि** पु॰ निधीयतेऽस्मिन् नि+धा+आधारे कि उप॰ स॰। समुद्रे अमरः। "तत्रासौ भगवान् देव स्वपन् जलनिधौ तदा" भा॰ व॰ २७१अ॰। २चतुःसंख्यायाम् "वारे १शीतकरं तिथौ जलनिधिं४ भेऽग्निम्३ योगे द्वयम्" मतृहत्यमुक्तावली "जलनिधिरशनायाः स्वामितां याति भूमेः" वृ॰ सं॰ १२अ॰।

**जलनिर्गम** पु॰जलानां निर्गमः। १नद्यादेर्जलभ्रमणे,अध स्थितस्य २जलस्योर्द्ध्वगतौ, जलनिःसरणे च अमरभरतौ।

**जलनीली** स्त्री॰ जलं नीलयति नील+तत्करोति णिच्–अण् उप॰स॰ गौरा ङीप्। शैवाले अमरः स्वार्थे क। जलनीलिकाप्यत्र।

**जलन्धम** पु॰ जलं धमति ध्मा–खश्। दानवभेदे "अष्टदंष्ट्रः सहदंष्ट्रो मेघनादी जलन्धमः" हरिव॰ २४० अ॰। सत्यभामायां कृष्णाज्जाते २कन्याभेदे स्त्री "जज्ञिरे सत्यभामायां भानुर्भीमरथः क्षुपः। रोहितो दीप्तिमांश्चैव ताम्रजाक्षो जलान्तकः। भानुर्भीमरिका चैव ताम्रपक्षा जलन्धमा। चतस्रो जज्ञिरे तेषां स्वसारो गरुडध्वजात्" हरिव॰१६२ अ॰।

**जलन्धर** पु॰जलं धरति धा॰अच् मुम्। १ऋषिभेदे तस्य गोत्रापत्य नडा॰फक्। जालन्धरायण तद्गोत्रापत्ये पुंस्त्री। २असुरभेदे तस्योत्पत्तिकथा पाद्मोत्तरखण्डे दृश्या। ३योगाङ्गे बन्धभेदे तल्लक्षणादिकं काशीख॰ ४१ अ॰ उक्तं यथा "बध्नाति च शिराजालमधोगामि न भोजनम्। एष जलन्धरो बन्धः कण्ठे दु खौघनाशनः। जलन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे। न पीयूषं पतत्यग्नौ न च वायुः प्रधावति" "महामुद्रां नभोमुद्रामुड्डीयानं जलन्धरम्। मूलबन्धञ्च यो वेत्ति स योगी योगसिद्धिभाक्" तत्रैवाध्याये।

**जलपक्षिन्** पु॰ जलस्थितः पक्षी। जलचरखगे।

**जलपति** पु॰ ६त॰। १वरुणे। हेमच॰। तस्य जलपतित्वकथा काशीख॰ १२ अ॰ यथा

"ततस्तु तनयं दृष्ट्वा पितरं प्रणिपत्य च। जगाम तूर्णं तपसे श्रीमद्वाराणसीं पुरीम्। तत्र तप्त्वा तपो घोरं लिङ्गं संस्थाप्य शाम्भवम्। पञ्च वर्षसहस्राणि स्थितः पाषाणनिश्चलः। आविरासीन्महादेवस्तुष्टस्तु तपसा तत। उवाच कर्दमे! ब्रूहि कं ददामि वरोत्तमम्। कर्दमिरुवाच। यदि नाथ! प्रसन्नोऽसि भक्तानामनुकम्पन!। सर्वासामाधिपत्यं मे देह्यपां यादसामपि। इति श्रुत्वा महेशानः सर्वचिन्तितदः प्रभुः। अभ्यषिञ्चत् ततस्तञ्च वारुणे परमे पदे। रत्नानामब्धिजातानामब्धीनां सरितामपि। सरसां पल्वलानाञ्च वाप्यम्बुस्रोतसां पुनः। जलाशयानां सर्वेषां प्रतीच्याश्चैव वै दिशः। अधीश्वरः पाशपाणिर्भव सर्वामरप्रियः" २समुद्रे जलं पतिरस्य। ३पूर्वाषाढ़ानक्षत्रे च जलनाथादयोऽप्यत्र।

**जलपथ** पु॰ जलमेव पन्थाः अच् समा॰। १जलमार्गे "याः दीनाथाः शिवजलपथाः कर्मणे नौचराणाम्" रघुः। ६त॰। २प्रणाल्यां जलनिर्गममार्गे च।

**जलपारावत** पुंस्त्री जले पारावत इव। जलकपोते (पानकौड़ि) पक्षिभेदे राजनि॰। स्त्रियां ङीष्।

**जलपित्त** न॰ जलस्य पित्तमिव। १अग्नौ अग्नौ शब्दर॰ तस्य जलहेतुत्वात् तथात्वम्।

**जलपिप्पली** स्त्री जलजाता पिप्पली। (जलपिपुली) पिप्पलीभेदे। "जलपिप्पल्यभिहिता शारदी शकुलादनी। मत्स्यादनी मत्स्यगन्धा लाङ्गलीत्यपि कीर्त्तिता। जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः। सग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा। कटुपाका रसा रुच्या कषाया वह्निवर्द्धिनी" भावप्र॰।

**जलपुष्प** न॰ जलजातं पुष्पम्। कमलादौ।

**जलपूर** पु॰ ६त॰। जलसमूहे। "वृन्दावनविपिने परिसरपरिगतयमुनाजलपूरे विहरति" गीत॰।

**जलपृष्ठजा** स्त्री जलस्य पृष्ठे उपरि जायते जन–ड ७त०। शैवाले शब्दच०। [ जलदाने तर्पणे।

**जलप्रदान** न० प्रेतानुद्दिश्य जलस्य प्रदानम्। प्रेताद्युद्देशेन

**जलप्रदानिक** न० जलप्रदानं युद्धहतानां प्रेतानामुद्देशेन जलप्रदानं प्रतिपाद्यतयाऽस्त्यस्य ठन्। भारतस्त्रीपर्व्वा-न्तर्गते अवान्तरपर्व्वणि तच्च स्त्रीपर्व्वणि प्रथमाद्यवधि १५ अध्यायपर्य्यन्तं "जलप्रदानिकं पर्व्व स्त्रीविलापस्ततः परम्" भा० आ० २अ०।

**जलप्रपा** स्त्री जलस्य जलदानार्थं प्रपा। जलदानार्थं शाला-याम् (जलसत्र)। "शालोदाहजलप्रपाशिशुमस्कारप्रत-शालिका" शु०चि० टी० धृतवाक्यम्।

**जलप्रान्त** पु० ६त०। जलसमीपस्थाने। [ अमरः।

**जलप्राय** न० जलं प्रायं यत्र। जलबहुले देशे अनूपदेशे

**जलप्रिय** पु स्त्री ६त०। १चातकखगे शब्दर०। २मत्स्ये शब्दच० स्त्रियां जातित्वेऽपि योपधत्वात् टाप्। ३जलप्रियमात्रे त्रि०। [ जन्तुभेदे। स्त्रियां जातित्वात् ङीष्।

**जलप्लव** पु स्त्री जले प्लवते प्लु–अच्। (उद्विडाल) जल

**जलफल** न० जलजातं फलम्। शृङ्गाटके भावप्र०।
"शृङ्गाटकं जलफलं त्रिकोणफलमित्यपि। शृङ्गाटकं हिमं स्वादु गुरु वृष्यं कषायकम्। ग्राहिशुक्रानिल-श्लेष्मदं पित्तास्रदाहनुत्"।

**जलबन्ध** पु० जलं बध्नाति बन्ध–ण्वुल्। जलस्रोतोनिरोध-के दारुशिलामये १सेतौ शब्दर०। भावे घञ् ६त०। २जलस्य बन्धे च। [विना तस्य जीवनाभावेन तथात्वम्।

**जलबन्धु** पु० जलं बन्धुर्यस्य। मत्स्ये शब्दर० जल

**जलबालक** पु० जलं बाल इव यस्य कप्। विन्ध्यपर्व्वते हेम०। जलस्य बालकेव। १विद्युति स्त्री हेम०।

**जलबिम्ब** पु न० ६त०। जलस्य बुद्बुदे मध्यावकाशयुक्ते शिथिलसंयोगेन छत्राकारे तोयागभेदे मेदि०। "अम्बू-बकर्णाबिम्बवत्कालजलबिम्बावलम्बितम्" उद्भट।

**जलबि(वि)ल्व** पु० जलप्रधानो बिल्वइव। १कर्कटे। त्रिक-भेदने क। २जलचत्वरे(चातरजल)३स्वल्पजलदेशे हारा०।

**जलबुद्बुद** न० ६त०। जलबिम्बे। "मानुष्ये कदली-स्तम्भनि:सारे सारमार्गणम्। यः करोति स वै मूढो जलबुद्बुदसन्निभे" शब्दार्थचि०धृतवाक्यम्।

**जलब्राह्मी** स्त्री जले ब्राह्मीव। हिलमोच्यां त्रिका०।

**जलभू** पु० भवत्यस्मात् भू–अपादाने क्विप् ६त०। १मेघे २तन्नामनामके कर्पूरे च जलं भूरुत्पत्तिस्थानमस्य। २कर्कटे शब्दच०। ६त०। ४जलाधारभूमौ स्त्री।

**जलभृत्** पु० जलं बिभर्त्ति भृ–क्विप् ६त०। १मेघे २तन्नाम-नामके कर्पूरे च ३तोयधारकमात्रे घटादौ त्रि०।

**जलमक्षिका** स्त्री जलजाता मक्षिका। तोयजकमौ त्रिका०

**जलमण्डूक** न० जलं मण्डूकमिव। मण्डूकध्वनिवत्स्वे करतलेन तद्ध्वनिकारके जलदर्दुरे "अम्बुसंवाहि जलमण्डूकवाद्यवत्" माघः। "जलमेव पाणिना स्थापितमपरेण ताडितं मण्डूकवत् ध्वनतीति लोक-प्रसिद्धम्" मल्लि०। [मत्स्यरङ्कविहगे हारा०।

**जलमद्गु** पु०जले मद्गुरिव निरन्तरमज्जनोन्मज्जनकारित्वात्।

**जलमधूक** पु० जलसन्निकृष्टजातो मधूकः। जलान्तिक-जाते मधूकभेदे मधूलके भावप्र०।
"मधुको गुडपुष्पः स्यात् मधुवृक्षो मधुस्रवः। वानप्रस्थो मधुष्ठीलो जलजोऽन्यो मधूलकः।" "मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम्। फलं शीतं गुरु स्वादु शुक्रलं वातपित्त-नुत्। अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षतक्षयान्"।

**जलमय** त्रि० जलात्मक जल+मयट्। १जलात्मके चन्द्रादौ "शशिजलमये शमिनि रवेर्दीधितयः" ह०स० तस्य तथात्व-मुक्तम्। २तल्लोकस्थे कर्म्मिणामन्नमये देहे च। स्त्रियां ङीप्। "उभे एव क्षमे वोढुमुभयोर्बीजमाहितम्। सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम" कुमा० शम्भोः शिवस्याष्टमूर्त्तिकत्वेन तन्मूर्त्तेर्जलमयत्वम्। जलस्य ब्रह्मबीजाधारत्वं च मनुनोक्तं यथा "अप एव ससर्जादौ तासु बीजमवासृजत्"।

**जलमसि** पु० जलं स्वस्थितं तोयं मस्यति छिनत्ति ऊर्द्ध्वगामितया भिनत्ति मस–इन् ६त०। १मेघे हारा०। २तन्नामनामके कर्पूरे च।

**जलमार्ग** पु०जलस्य तडागादेर्मार्गः।१प्रणाल्याम् (पयनाला) हेम०। जलमेव मार्गः। २जलरूपे मार्गे च (जलपथ)।

**जलमार्जार** पु स्त्री जलनकुले त्रिका०स्त्रियां जातित्वात् ङीष्

**जलमातृका** स्त्री जलस्थिता मातृका। जलस्थिते मातृका-भेदे तद्भेदा सप्त विधानपा० उक्ता यथा "मत्सी कूर्म्मी वराही च दर्दुरी मकरी तथा। जलूका जन्तुका चैव सप्तैता जलमातृका"।

**जलमुच्** पु० जलानि मुञ्चति मुच–क्विप्। १मेघे अमर तन्नामनामके २कर्पूरे च।"शङ्कास्पृष्टा इव जलमुचस्त्वा यथा यत्र जाह्नी"मेघ०। ३जलमोचनकर्त्तरि त्रि०"माद्य-न्मुदा जलरुचोऽपचयं प्रकाशा" रु०१९।

**जलमूर्त्ति** पु० जलं मूर्त्तिरस्य । शिवे । अष्टमूर्त्तिशब्दे ५२० पृ० दृश्यम् ।

**जलमूर्त्तिका** पु० जलस्य मूर्त्तिः घनीभावो यत्र कप् । करकायाम् उष्णवातसंयोगजाते घनीभूते जले शब्दच० । तस्य च तथात्वम् करकशब्दे १६८७ पृ० दृश्यम् ।

**जलमोद** न० जलेन जलयोगेन मोदयति सेविनं मुद–णिच्-अण् उप० स० । उशीरे (वेणारमूल) राजनि० ।

**जलयन्त्र** न० जलानामुत्क्षेपणार्थं यन्त्रम् । (फोयारा) ख्याते १धारायन्त्रे २कूपादितस्तोयोत्थापकयन्त्रभेदे "विचित्रगात्रा जलयन्त्रहस्ता" हरिवं० १४८ अ० । जलेन तदाकर्षणेन यन्त्रं घटीयन्त्रम् । ३कालज्ञापके घटीयन्त्रभेदे घटीयन्त्रशब्दे २७८१ दृश्यम् । स्वार्थे क । तत्रार्थे "हस्तप्रसक्तैर्जलयन्त्रकैश्च मङ्गल्यरूपाः सिषिचुस्तदानीम्" हरिवं० १४८ अ० ।

**जलयन्त्रगृह** न० जलयन्त्रं तन्मध्य इव स्थितम् गृहम् । चतुःपार्श्वे जलयुक्ते जलमध्ये निर्मिते गृहे (जलटुङ्गि) जलयन्त्रमन्दिरादयोऽप्यत्र हारा० । ६त० । (फोयाराघर) २जलयन्त्रयुक्ते गृहे ।

**जलयात्रा** स्त्री जलस्य तदाहरणार्थं यात्रा । शुभकर्मसम्पादनाय जलाहरणाय यात्रायाम् । तद्विधानादिकमाह विश्वा० वशिष्ठ "शान्तिकं पौष्टिकं वापि जलयात्रां विना बुध.। कुरुते यदि वा मोहात् कर्म तस्य च निष्फलम् । तडागादिप्रतिष्ठासु देवतायतनादिषु । लक्षहोमेकोटिहोमेऽयुतहोमे तथैव च । व्रतोत्सर्गमहादाने यज्ञे वा वितते शुभे" । व्रतोत्सर्गे व्रतोद्यापने इत्यर्थः ।"जलयात्रां पुरा कृत्वा ततः कर्म समाचरेत् । अथातः सम्प्रवक्ष्यामि जलयात्राविधिं शुभम् । यज्ञशालामतिक्रम्य ऋत्विग्भिर्ब्राह्मणैः सह । यजमानं सपत्नीकं सुहृद्बन्धुजनैर्युतं । अश्वारूढो गजारूढो वस्त्रालङ्कारभूषित । गृहीत्वोपस्करं सर्वं गन्धपुष्पाक्षतादिकम् । जलाशयन्ततो गच्छेद्गीतवादित्रनिस्वनैः । अगाधं च ह्रदं गच्छेन्नदीं वाथ समुद्रगाम् । सुवासिन्योऽपि तत्र कार्याः सर्वालङ्कारभूषिता । हैमराजतताम्रान् वा मृण्मयान् कलशान्शुभान् । गृहीत्वा गन्धपुष्पाद्यैरर्च्चितान् सुदृढान् नवान् । जलाशयं समासाद्य तीरे गोमयलेपिते । चतुरस्रीकृते क्षेत्रे तत्र स्वस्तिकमालिखेत् । यद्वैवं तण्डुलैर्वापि पद्ममष्टदलं लिखेदित्यादि" । विस्तरस्तत्र दृश्यः ।

**जलयान** न० जले यायते गम्यतेऽनेन या-करणे ल्युट् ७त० । जलेगमनसाधने नौकादौ । "व्यसनार्णवमत्येति जलयानैर्यथार्णवम्" भाग० ३।१४।१६ ।

**जलरङ्क** पुंस्त्री जले रङ्क इव । बकपक्षिणि हेमच० स्त्रियां जातित्वात् ङीष् ।

**जलरङ्कु** पु० जले रङ्कुरिव । दात्यूहखगे हारा० ।

**जलरञ्ज** पुंस्त्री जले रजति रन्ज–अच् । बकखगे हेमच० स्त्रियां जातित्वात् ङीष् ।

**जलर(रु)ण्ड** पु० जलस्य र(रु)ण्ड इव । १जलावर्त्ते २तोयरेणौ ३भुजङ्गमे पुंस्त्री हेमच० स्त्रियां जातित्वात् ङीष् उकारयुक्तमध्य मेदि० ।

**जलरस** पु० जलप्रधानो रसोऽस्य जलजातो वा रसः । १लवणे हारा० लवणस्य जलविशेषपाकेन जातत्वात् तथात्वम् । अतएव तस्य जलमध्ये निक्षेपे स्वप्रकृतिजलरूपत्वं भवतीति लोकवेदयोः प्रसिद्धम् । ६त० । २तोयस्य रसे च ।

**जलराक्षसी** स्त्री जलस्थिता राक्षसी । सिंहिकानाम्न्यां छाया गृहीत्वाऽऽकर्षिण्या लवणाम्भसि स्थितायां राक्षस्याम् "शतयोजनविस्तीर्णं निहत्य जलराक्षसीम्" भा० व० २८१अ० । सा हि हनूमता यथा हता तथा रामा० सु० १अ० उक्तम् ।

"प्लवमानन्तु तं दृष्ट्वा सिंहिका नाम राक्षसी । मनसा चिन्तयामास प्रवृद्धा कामरूपिणी । अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता । इदं मम महासत्त्वं चिरस्य वशमागतम् । इति सञ्चिन्त्य मनसा छायामस्य समाक्षिपत् । छायायां गृह्यमाणायां चिन्तयामास वानरः । समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः । प्रतिलोमेन वातेन महानौरिव सागरे । तिर्यगूर्द्ध्वमधश्चैव वीक्षमाणस्तदा कपिः । ददर्श स महासत्त्वमुत्थितं लवणाम्भसि । तद्दृष्ट्वा चिन्तयामास मारुतिर्विकृताननम् । कपिराज्ञा यथाख्यातं सत्त्वमद्भुतदर्शनम् । छायाग्राहि महावीर्यं तदिदं नात्र संशयः । स तां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान् कपि । व्यवर्द्धत महाकायः प्रावृषीव बलाहक । तस्य सा कायमुद्वीक्ष्य वर्द्धमानं महाकपे । वक्त्रं प्रसारयामास पातालाम्बरसन्निभम् । घनराजीव गर्जन्ती वानरं समभिद्रवत् । स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् । कायमात्रञ्च मेधावी मर्माणि च महाकपिः । स तस्या विवृते वक्त्रे वज्रसंहननः कपि । संक्षिप्य मुहुरात्मानं निपपात महाकपिः । आस्ये तस्या निमज्ज

नन्दकृतु विहृवारया । यथमाम यथा चन्द्र पूर्ण पर्वणि राहुणा । ततस्तसा नर्श्लीकृष्णेर्मर्मास्यु तृतय वानर । उत्पपाताथ वेगेन मम सम्पातविक्रमः" ।

**जलराशि** पु० ६त० । १जलसमूहे जलाना राशिरत्र । २समुद्रे च "समातल बलजलराशिरामम्" माघ ।

**जलरुह्** न० जले रोहति रुह–क्विप् ७त० । १पद्मे हेमच० । क । जलरुहमप्यत्र हेमच०। "जल तथा शुभे यत्र फुल्ल जलरुहैस्तथा" भा०आ०१२८अ०। २तोयरोहिमात्रे त्रि०।

**जलकूप** पु स्त्री जलस्य कूपमिव कूपमस्य शुभ्रत्वात् । १मकरे त्रि० स्त्रियां जातित्वात् ङीष् । ६त०।२तोयस्य कूपे न०।

**जललता** स्त्री जलस्य लतेव सन्ततिमत्त्वात् । तरङ्गेस्याया हारा० । [ऋषभेदे । हारा० ।

**जलवरएट** पु० जलप्रधानो वरएट । (पानिबगला) पक्षन्-

**जलवल्कल** पु० जलानां वल्कल इव । कुम्भिकायाम् । (पाना) हारा० ।

**जलवल्ली** स्त्री जलजाता वल्ली । शृङ्गाटकलतायां राजनि०।

**जलवाद्य** न०जल वाद्यमिव । पाणिताडने वाद्यतुल्यध्वनि- युक्ते जले "आकाशगङ्गाजलवाद्यतज्ज्ञाः" हरिव० २४८अ० ।

**जलवानीर** पु०जलजातो वानीरः । अम्बुवेतसे शब्दार्थाच०

**जलवायस** पु स्त्री जले वायस इव कृष्णत्वात् । (पानि- कौड़ी) मद्गुपक्षे । स्त्रियां जातित्वात् ङीष् ।

**जलवास** न० जलेन वास्यते सुरभीक्रियते वासि–कर्मणि घञ् । १उशीरे राजनि० । तस्य जलसेचनेन सौर- भोत्पादात्तथात्वम् । ७त०। २तोये वासे । "स चिन्तया- मास सुभिक्षं जलवासे कदाचन" भा० शा० ७६२ अ० । जलं वासयति सुरभीकरोति वासि अण् उप० स० । ३विष्णुकन्दे राजनि० ।

**जलवाह** पु० जलं वहति वह–अण् उप०स० । १वारिवाहे मेघे हेमच० तत्र्याजनायके २कर्पूरे च"शाद्विजलधिजल वाहपथम्" किरा०। ३जलवाहकमात्रे त्रि० "जलवा हास्तथा मेघाः वायवस्तमथिन्नव" भा० स० ७अ० ।

**जलविड़ाल** पु स्त्री जले विड़ाल इव । (उद्बिड़ाल) जल- नकुले हारा० । स्त्रियां जातित्वात् ङीष् ।

**जलविन्दुजा** स्त्री जलविन्दुभ्यो जायते जन–ड । यावना- लीशर्करभेदे राजनि० । २तोयविन्दुजातमात्रे त्रि० ।

**जलविषुव(त)** न० जलप्रधान विषुव(त्) । राशिचक्रस्थे तुलाराशिरूपे स्थानभेदे "भचक्रनाभौ विषुवद्द्वितय समसूत्रगम्" सू० सि० "भचक्रनाभौ भगोलस्य ध्रुव- द्वयाभ्या तुल्यान्तरेण मध्यभागे विषुवद्द्वितय विषुवद्द्वय समसूत्रग परस्पर व्यासूत्रग्रान्तरित ध्रुवमध्ये विषुवद्वृत्तस्थानात् तद्वृत्ते क्रान्तिवृत्तभागौ यौ स्तो तौ क्रमेण पूर्वापरौ विषुवत्संज्ञौ मेषतुलाद्यौ चेत्यर्थ "रङ्ग० । २विषुवन्तु समाख्यात तुलामेषमयो स्तथा' ज्यो० तत्त्व २तत्र रवे सङ्क्रमे च । सङ्क्रा न्तिर चरस्थिरभेदाभ्यां द्विविधा अयनसंक्रान्तिशब्दे ११८ दर्शिता । जलविषुवसङ्क्रान्तिनिबन्धनः स्नानविशेषे स्नानजलपाते तत्फलप्राप्त्यर्थं जलविषुवचक्रं ज्यो० तत्त्वं यथा । "षड्मूर्ध्नि, वदने पञ्च, चत्वारि, हृदये, तथा । त्रितय करयोर्द्वयो" पयोविषुवभक्तमात्" त्रितय त्रितय- मिति करयोर्द्वयो द्वादश इति २७ नक्षत्राणि स्थानानि तत्र स्थानभेदे फलमोत्तं "मार्गे वैर मस्तकस्थाभं भोगं मार्गं जलविषुवेषु" ज्यो०। पयोविषुवादयोऽप्यत्र ।

**जलवृश्चिक** पु०जले वृश्चिक इव । (चिङ्गड़ि)मत्स्ये त्रिका०।

**जलवेतस** पु०जलजातो वेतस । अम्बुवेतसे वेतसभेदे राजनि०

**जलवैकृत** न० विकृतस्य भावः ष्यञ् ६त० । दुर्निमित्तसूचके नद्यादीनां जलविकारभेदे तत्फलादिकञ्च वृ० स० ४६अ० यथा ।

"अपसर्पण नदीनां नगरादचिरेण शून्यतां कुरुते । शोषश्चाशोष्याणामन्येषां वा ह्रदादीनाम् । स्नेहासृङ्- मांसवहा सङ्कुलकलुषाः प्रतीपगाश्चापि । परचक्र- स्यागमनं सद्यः कथयन्ति षण्मासात् । ज्वालाधूम- क्वाथा रुदितोत्क्रुष्टानि चैव कूपानाम् । गीतप्रजल्पि- तानि च जनमरकाय प्रदिष्टानि । तोयोत्पत्तिरखाते गन्धरसविपर्यये च तोयानाम् । सलिलाशयविकृतौ वा महद्भय तत्र शान्तिरियम् । सलिलविकारे कुर्यात् पूजा वरुणस्य वारुणैर्मन्त्रै । तैरेव च जपहोम शम- मेवं पापमुपयाति" । [त्रिका० ।

**जलव्याध** पु० जलं विध्यति व्यध–अण् । कङ्कलोटमत्स्ये

**जलव्याल** पु०जलस्थो व्यालो हिंस्रः।(ढोंड़ा)१सर्पभेदे,अमर । स्त्रियां जातित्वात् ङीष् । क्रूरकर्मणि २जन्तौ च ।

**जलशय** पु० जले शेते शी–अच् ७त० । विष्णौ हेमच० सप्तम्या वा अलुकि । जलेशयोऽप्यत्र ।

**जलशयन** पु० जलं शयनमस्य । विष्णौ हला० ।

**जलशायिन्** पु० जले समुद्रजले शेते शी–णिनि । नारा- यणे । "एकार्णवेऽहिशयने योगनिद्रामुपागत । शायी

र्थ्यं शेषमभजत् कल्पान्ते भगवान् प्रभु" देवीभा० ।

**जलशुक्ति** स्त्री जलस्य शुक्तिरिव । शम्बूके अमर ।

**जलशूक** न० जलस्य शूकमग्रमिव । शैवाले हेमच० । "चोर-शुक्लाजलशूकमधुरवर्गे प्रतिवाप तैल वा पाचयित्वा स्वनुगुप्तं निदध्यात्" सुश्रुत ।

**जलशूकर** पु० जलस्य शूकर इव । कुम्भीरे हेमच० ।

**जलसन्ध** पु० धृतराष्ट्रभेदे । "विविंशतिर्विकर्णश्च जलसन्ध सुलोचनः" भा०आ०६७० । तत्पुत्रोक्तौ ।

**जलसमुद्र** पु० जलमय समुद्रः । लवणादिषु सप्तसु समुद्रेषु शेषसमुद्रे "लवणजलधिरादौ दुग्धसिन्धुश्च तस्मात्" इत्युपक्रमे दध्नो घृतस्येक्षुरसस्य तस्मात् मद्यस्य च स्वादुजलस्य चान्त्य" सि०शि० । [ सरोभेदे ।

**जलसरस** न० नित्यस० सरस्+समासान्त अच् समा० ।

**जलसर्पिणी** स्त्री जले सर्पति सृप–णिनि । जलौकायाम् (जोंक) हेमच० ।

**जलसूचि** स्त्री जलस्य सूचिरिव । १कङ्कत्रोटमत्स्ये २शृङ्गाटके ३शिशुमारे ४जलौकायां च मेदि० ५काके पु स्त्री हेमच० ।

**जलस्तम्भ** न० जलं स्तभ्यतेऽनेन स्तम्भ–करणे ल्युट् । १जलस्तम्भनसाधने मन्त्रादौ । भावे ल्युट् । जलस्य २स्तम्भने च जलस्तम्भनविद्या च दुर्योधनविदिता तया द्वैपायनह्रदे संस्तभ्य स सुष्वाप तत्कथा भा०श०३०अ० "एवमुक्त्वा महाराज । प्राविशत्तु महाह्रदम् । अस्तम्भयत तोयञ्च मायया मनुजाधिप" इत्यादिका ।

**जलस्था** स्त्री जले तत्समीपे तिष्ठति स्था–क । १गण्डदूर्वायां राजनि० २जलस्थितमात्रे त्रि० । [ त्रिका० ।

**जलह** न० जलेन हन्यते–हन–बा०ड ३त० । खल्पजलयन्त्रगृहे

**जलहरण** न० ६त० । तोयस्य स्थानान्तरनयने "लघुगुरुकनियमगतमिह फणिपतिमतमनगतमतिसुखमिगदपदम् दशवसुभुवनैर्यतिरिह यदि भवति हि रसिकजनहृदयविहितमदम् । वसुविमलचतुष्कगणकृतगुणिगणाचरणविरामाहितसगणम् कथिदपि गुरुवाहित भवति कविभिहितकन्दः सुन्दरि । जलहरणम्" इत्युक्तलक्षणे २मात्रावृत्तभेदे । [ भेदे । हेमच० ।

**जलहस्तिन्** पु० जले हस्तीव ७त० । जलस्थे हस्तिरूपे जन्तु-

**जलहार** त्रि० जलं हरति हृ–अण् उप० स० । जलहारके जलवाहके (भारि) प्रभृतौ स्त्रियां टाप् पा०सूत्रबो०अण् ईप् । "शिरसा धृतकुम्भाभिर्बद्धैरवसनाम्बरैः । यमुनातीरमार्गेण जलहारीभिरावृतम्" हरिवं० ६१ अ० । अत्र पा०गौरा० ङीप् ।

**जलहारिन्** त्रि० जलं हरति हृ–णिनि । जलवाहके । स्त्रियां ङीप् । "याभिरिदं शरीरमारामं इव जलहारिणीभि केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते च" सुश्रुत । [फेने च । त्रिका० ।

**जलहास** पु० जलानां हास इव शुभ्रत्वात् । १फेने, २समुद्र-

**जलहोम** पु० जले क्षिप्त होमः ७त० । जले कर्त्तव्ये वैश्वदेवादिहोमभेदे तद्विधिः स०त० दर्शितो यथा "लौकिके वैदिके चैव हुतोच्छिष्ट जले क्षितौ । वैश्वदेवस्य कर्त्तव्य पञ्चसूनापनुत्तये" ।

**जलह्रद** पु० जलप्रचुरो ह्रदः शा० त० । जलबहुले ह्रदे जलह्रदस्येदं तत्र भवो वा शिवा० अण् । जालह्रद तत्सम्बन्धिनि तत्र भवे च त्रि० स्त्रियां ङीप् ।

**जलाका** स्त्री जले आकायति प्रकाशते आ+कै–क । जलौकायां शब्दर० ।

**जलाकाश** पु० जलप्रतिबिम्बित जलावच्छिन्नो वा आकाशः शा० त० । जलप्रतिबिम्बिते २जलावच्छिन्ने वा आकाशे "जलावच्छिन्नखे नीरं यत्, तत्र प्रतिबिम्बितः । साभ्रनक्षत्रआकाशो जलाकाश उदीर्यते" शब्दार्थचि० । नीरूपस्याकाशस्य प्रतिबिम्बासम्भवेन साभनक्षत्रेति विशेषणम् । एतच्च प्रतिबिम्बवादे नीरूपस्य प्रतिबिम्बासम्भवमभिप्रेत्य विवरणाचार्यैरवच्छिन्नवादोऽङ्गीकृत । तन्मते जलावच्छिन्नआकाश एव जलाकाश इति भेदः । अवच्छिन्नवादशब्दे ४२० पृ० दृश्यम् ।

**जलाञ्ची** स्त्री जलमञ्चति व्याप्नोति कारणतया अन्च–अण गौरा० ङीप् । जलपिप्पल्यां शब्दर० ।

**जलाखु** पु० जले आखुरिव । जलनकुले त्रिका० ।

**जलाञ्चल** न० जलमञ्चति अन्च–बा० अलच् ३त० । १शैवाले जलस्याञ्चलमिव । २स्रतो वारिनिर्गमे (स्रतो निर्गच्छद्वारिणि) मेदि० ।

**जलाञ्जलि** पु० जलपूर्णोऽञ्जलि । १जलपूर्णाञ्जलौ अञ्जलिपूर्णवारिणि उपचारात् २तद्दानरूपायां पितृणां तर्पणक्रियायाम् । "कृपणभावाद्य कृतो जलाञ्जलि" बाण० ।

**जलाटन** पु स्त्री जले अटति अट–ल्यु । १कङ्कपक्षिणि स्त्रियां जातित्वात् ङीप् । २जलौकायां स्त्री मेदि० तत्र गौरा० ङीप् । [ हारा० स्त्रियां जातित्वात् ङीप् ।

**जलाटक** पु स्त्री जले अटति अट–ण्वुल् इषो० । नक्रराजे

छा० २।१।११ "जातूष्ठिरस्य सर्वदास्थिरस्य" भा० ।

**जातेष्टि** स्त्री जाते पुत्रजनने इष्टिः । पुत्रजन्मोत्तरं श्रुतिविहिते वैश्वानराख्ये इष्टिभेदे ।

**जातेष्टिन्याय** पु० जैमिनिप्रदर्शिते पितृकृतेष्ट्या पुत्रगतफलसूचके एकस्य काम्यत्वनैमित्तिकत्वसूचके न्यायभेदे स च न्यायो जै० प्रथमस्य चतुर्थे पादे यथा ।

काम्येष्टिकाण्डे श्रूयते । "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियमादधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिन् जाते एतामिष्टिं निर्वपति स एव पूतो भवति तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवतीति" । अष्टाष्टादिसंख्यासामान्यात् पुरोडाशादीनां गायत्र्यादिरूपताकल्पना कृता द्वादशकपालेषु या संख्या तस्यामष्टत्वादिसंख्यानामन्तर्भावात् संख्यां निमित्तीकृत्याग्निष्टोमादिशब्दवत् अष्टाकपालादिशब्दा कर्मनामधेयानीत्येकः पक्षः ।

अयमनुपपन्नः तथा हि द्वादशकपालादिशब्दा न संख्यापरा किन्तु पुरोडाशद्रव्यपरा द्वादशकपालेषु संस्कृत इति व्युत्पत्तेः एवमष्टाकपालादिशब्देष्वपि तथा सति नामधेयस्य निमित्तत्वं नाप्नोतीति चेत् पुरोडाशद्रव्यरूपगुणो विधीयतां न च द्वादशकपालं निर्वपेदित्युत्पत्तिविधिशिष्टद्वादशपुरोडाशविरुद्धत्वादष्टाकपालादेरनवकाश इति वाच्यं ब्रह्मवर्चसादिविशेषफलाय तद्विधानोपपत्तेरित्यपरः पक्षः ।

अयमपि पक्षोऽनुपपन्नः अनेकगुणविधौ वाक्यभेदापत्तेः न च भिन्नान्येव वाक्यानि, द्वादशकपालं निर्वपेदिति विहितयागस्य यस्मिन् जाते एतामित्युपसंहारेण एकवाक्यत्वावगमात् द्वादशकपालस्य इतीष्टेर्नामधेयमिष्टदर्शी अष्टाकपालादिभिरर्थैः स्तूयत इति सिद्धान्तः पक्षः । अत्र च पुत्रजन्मनिमित्तं, पुत्रस्य पूतत्वादिफलकामना चेति समुदिताधिकारः काम्यनैमित्तिकत्वात् अतः केवलपुत्रजन्मरूपनिमित्तनिश्चयवतः केवलपुत्रपूतत्वादिकामनावतो वा नाधिकार इति सुधीभिर्विभावनीयम्" तत्त्वबो० ।

अनेन न्यायेन अन्यकृतकर्मणा अन्यस्य फलसाधनताऽपि सूचिता यथा पुत्रकृतश्राद्धेन पितुः स्वर्गादि फलं जन्यते एवं पितृकृतेष्ट्या पुत्रगतपूतत्वादिफलसिद्धिः । अतएव हेमाद्रिणा श्राद्धकल्पे अयमेव न्यायः पुत्रकृतश्राद्धेन पितुरुपकारकत्वे दृष्टान्ततयोक्तः ।

**जातोक्ष** पु० जातः प्राप्तदशावस्थ उक्षा टच्समा० । युवत्वे इह जातस्य प्राप्तस्त्रीबद्धभावस्य प्राप्तदशावस्थत्वमिति यावत् ।

**जात्य** त्रि० जातौ भव यत् । १कुलीने, २श्रेष्ठे, ३कान्ते च मेदि० । ४सुन्दरे जटाधरः "किं वा जात्या स्वामिनो ह्रेपयन्ति" माघ । "जात्यस्तेनाभिजातेन शूरः शौर्यवता कुशः" रघु । "सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते" मनुः ।

**जात्यन्ध** त्रि० जातौ जन्मन्येवान्धः । जन्मान्धे "अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः" मनुः ।

**जात्यासन** न० "अथ जात्यासनं वक्ष्ये येन जातिस्मरो भवेत् । हस्ताङ्घ्रियुग्मं भूमौ च गमनागमनं ततः" रुद्रयामलोक्ते आसनभेदे ।

**जात्युत्तर** न० जात्या व्याप्तिविधुरसाधर्म्यवैधर्म्यादिना उत्तरम् । न्यायोक्ते असदुत्तरे तच्च चतुर्विंशतिविधं जातिशब्दे दर्शितम् ।

**जान** पु० जन—भावे घञ् वेदे वृद्धिः । १उत्पत्तौ "यो वेद जानमेषाम्" ऋ० १।१२।१ । "जानमुत्पत्तिम्" भा० । जनस्येदमण् । २जनसम्बन्धिनि त्रि० । "महते जानराज्यायेन्द्रस्येन्द्रियाय" यजु० ९।४० । स्त्रियां ङीप् ।

**जानक** त्रि० जनकस्य पितुः तन्नामकनृपस्य वा इदम् अण् । १पितृसम्बन्धिनि २जनकनृपसम्बन्धिनि च स्त्रियां ङीप् । सा च ३रामपत्न्यां सीतायाम् "सुमोच जानन्नपि जानकीं न यः" माघ ।

**जानकि** पु० जनकस्यापत्यम् इञ् । भारतप्रसिद्धे नृपभेदे । "विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः । जानकिर्नाम विख्यातः सोऽभवन्मनुजाधिपः" भा० आ० ६७अ० । "जानकिश्च सुशर्मा च मणिमान् पोतिमत्स्यकः" भा० उ० ४अ० ।

**जानन्ति** पु० ऋग्वेदिभिस्तर्पणीये ऋषिभेदे । "जानन्ति बाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेयाः" इत्युपक्रमे "ते सर्वे तृप्यन्त्विति" आश्व० गृ० ३।४।४ ।

**जानपद** पु० जानेन उत्पत्त्या पद्यते पद—अण् । १जने लोकमात्रे "कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः" भा० शा० ८३अ० । जनपद एव स्वार्थे अण् । २देशे च मेदि० । जनपदादागतः जनपदे भवो वा अण् । जनपदादागते ३करादौ "स यथा महाराजो जान-

पटान् गृहीत्वा स्वे जनपदे यथाकाम परिवर्त्तते" शत० ब्रा० १४।५।१।२०। ४देशभवे च "देय चौरहृत द्रव्य राज्ञा जानपदाय तु" याज्ञ०। ५वृत्तौ स्त्री ङीप् जानपदी अन्यत्र ङीप्। स्वरे भेदः। नियमपक्षे टाप् इति भेदः। बहुत्वे अणो लुक्। जनपदा।

**जानश्रुतेय** पु० जनश्रुतेः ऋषेरपत्यम् "इतश्चानिञः" पा० ढक्। जनश्रुतेरपत्ये औपशिनामके राजर्षिभेदे "औपशिनैव जानश्रुतेयेन प्रत्यवरोढम्" शत०ब्रा० ५।५।१।१।१५।

**जानायन** पुस्त्री जनस्य तन्नामकर्षेः गोत्रापत्यम् अश्वा० फञ्। जननामकर्षेर्गोत्रापत्ये।

**जानु** न० जन–ञुण्। ऊरुजङ्घयोर्मध्यभागे (हाटु) स्वार्थे क अत्रैवार्थे अमर। "निगृह्य पार्ष्णिमुभयेन जानुनो" माघ। "ऊर्द्ध्व चरन्तौ जानुनौ विश्लेमिऽङ्गानि सर्वत" यजु० २७८ "जानुकर्पिष्ठे चतुरङ्गुले च" हे०सू०५८अ०

**जानुकारक** पु० रविपार्श्वगभेदे शब्दार्थचि०।

**जानुजङ्घ** पु० नृपभेदे। "अनरण्यो नरपतिर्जानुजङ्घस्तथैव च" भा० अनु० १६५ अ०।

**जानुप्रहृतिक** न० जानुना प्रहृतं प्रहारस्तेन निर्वृत्तम् अक्षद्यूता० ठक्। जानुप्रहारनिर्वृत्ते मल्लयुद्धभेदे।

**जानुविजानु** न० खड्गयुद्धप्रकारभेदे तत्प्रकाराश्च द्वात्रिंशत् हरिव० ११६ दर्शिता यथा

तत्र तावसिना युद्ध चक्रतुर्दुर्ब्जानलसौ। भ्रान्तमुद्भ्रान्तमाविद्ध प्रविद्ध बहुभि हृतम्। आकर विकर भिन्न निर्म्मर्य्यादममानुषम्। सङ्कुचित कुलचित सव्य जानुविजानु च। आप्लुत चिलक चिप्र क्षुद्र तथा हतम्। सर्वाङ्गविनिवोद्ध सव्येतरमथोत्तरम्। त्रिवाहनु हुबाहु च मध्योन्नतमुदाशि च। पृष्ठ प्रथित शूत्रैव यौगिक प्रथित तथा। इति प्रकारान् द्वात्रिंशच्चक्रतु खड्गयोधिनौ"।

**जानुद्धित** त्रि० जनै हितं परिकल्पितम् पृषो०। जनपरिकल्पिते। "एतद्धि वा अस्य जानुद्धित प्रज्ञातमवसान यज्ञत्वपथम्"–शत० ब्रा० २।६।२।७। 'जानुद्धित जनैः परिकल्पितम्' भा०। [एव च" हरिव २६ अ०।

**जान्थ** पु० ऋषिभेदे। गार्ग्य पृथुस्तथैवाथ जान्यो यामम

**जाप** पु० जप–घञ्। जपे मन्त्रोच्चारणे कर्मण्युपपदे अण्। मन्त्रजापादय मन्त्रादिजपकर्त्तरि त्रि०। [चरचि।

**जापन** न०। चु० जप–भावे ल्युट्। १निरसने २निवर्त्तने च

**जाबाल** पु० जबालाया अपत्यम् अण्। सत्यकामे ऋषिभेदे छबालशब्दे उदा०। तेन दृष्टं साम अण्। २सामवेदीये उपनिषद्भेदे च उपनिषच्छब्दे १२२२ पृ० दृश्यम्। एतस्मिन् परे कर्मधारये महच्छब्दस्य प्रकृतिस्वरः महाजाबाल। महच्छब्दस्यान्तोदात्तः। तदीयस्वर एव न समासस्वर।

**जाबालि** पु० जबालस्यापत्यम् इञ्। ऋषिभेदे स च उपस्मृतिकर्त्ता। आह्निकशब्दे प्रमाणं दृश्यम्।

**जामदग्न्य** पु० जमदग्नेरपत्यम् गर्गा० यञ्। जमदग्ने ऋषेरपत्ये परशुरामादौ। "तेजोभिर्गतवीर्य्यत्वात् जामदग्न्यो जडीकृत" रामा० बा० ७७।१२। कण्वा० ततोऽण् यलोप। जामदग्न तच्छात्रे।

**जामदग्नेय** पु० जमदग्नेरपत्य प्रत्ययविधौ तदन्तग्रहणस्य प्रतिषेधेऽपि आर्षत्वात् "अग्निकलिभ्याम्" पा० ढक्। परशुरामे "भार्गव जामदग्नेय राजा राजविमर्द्दनम्" रामा० बा० ७४ अ०। [दृश्यम्।

**जामल** न० आगमशास्त्रभेदे। तस्य वर्ण्यादित्यमपि रुद्रजामले

**जामा** स्त्री जम–अदने वा० अण् स्त्रीत्वम्। दुहितरि। "अन्यत्र जामया सार्द्धं प्रजाना पुत्र ईहते। दुहितान्यत्र जातेन पुत्रेणापि विशिष्यते" भा० अनु०४५ अ०। "जामया कन्यया स्वाङ्गं पुत्र पितरं मनसीहते" इत्यर्थ नीलक०।

**जामातृ** पु० जाया माति मिनोति मिमीते वा निपा०। १दुहितृपतौ, अमर। २सूर्य्यावर्त्ते, स्वामिनि च मेदि० उणादिषु निपातनसिद्धत्वेन तृजन्तत्वाभावात् सर्वनामस्थाने परे न वृद्धिः। जामातरौ जामातर इत्यादि "ऋत्विक्स्वस्रियजामातृयाज्यश्वशुरमातुला"। याज्ञ०। "विष्णु जामातर मन्ये"।

**जामि(मी)** स्त्री जम इन् मि० वृद्धि। १भगिन्या २कुलस्त्रिया, अमर ३दुहितरि, ४स्नुषायाम्, ५सन्निहितसपिण्डस्त्रियाम्, शब्दार्थचि० "जामयो यानि गेहानि शपन्त्यप्रतिपूजिता" "शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम्। शोचन्ति तु न यत्रैता वर्द्धते तद्धि सर्वदेति" मनु। "गृहपतिसवर्णीयसन्निहितसपिण्डस्त्रियो जामय इति" कुल्लू०। वा ङीप्। तत्रार्थे शब्दर०। "मातृष्वसृश्वा जामीभिर्भ्रात्रा पुत्रेण भार्य्यया। दुहित्रा दासवर्गेण विवाद न समाचरेत्" भा० शा० २४१अ०। स्त्री न० व०। ६उदके ७अङ्गुलौ निघण्टु।

**जा(या)मित्र** न० "ज(य)मित्र सप्तमं स्थानम्" ज्योतिषपरिभाषिते लग्नात् सप्तमे स्थाने। "तिथौ च जा(या)

मित्रगुणान्वितायाम्” कुमा०। उपचारात् तिथेस्तत्त्वाङ्कियम्

जा(या)मित्रवेध पापात् सप्तमस्थानस्थचन्द्ररूपे योगभेदे। उपयमशब्दे दृश्यम्। “मूलत्रिकोणनिजमन्दिरगोऽथ पूर्णो मित्रर्क्षसौम्यदृग्गोऽथ सदोक्षितो वा जा(या)मित्रवेधरहितामपहृत्य दोषान् दोषाकरः शुभमनेकविधं विधत्ते” ज्यो० त०।

जामिवत् अ० उदके निघण्टुः जामीत्यत्र पाठान्तरम्।

जामेय त्रि० जाम्या भगिन्या अपत्यम् ढक्। भागिनेये हेम०।

जाम्बव न० जम्ब्वाः फलं अण् तस्य वा न लुप्। जम्ब्वाः फले जाम्बवेन निर्वृत्तम् शरीरादि० युञ्। जाम्बवक तन्निर्वृत्ते त्रि०।

जाम्बवत् पु० रामायणप्रसिद्धे ऋक्षराजभेदे। तस्यापत्य स्त्री अण् ङीप्। १सद्दुहितरि श्रीकृष्णपत्नीभेदे “वासुदेवस्तु निर्जित्य जाम्बवन्तं महाबलम्। लेभे जाम्बवतीं कन्यामृक्षराजस्य सम्मताम्” हरिवं० ३८ अ० “जाम्बवतीनवहित चारुकृष्णापमभ्यधात्” भट्टिः।

“ऋक्षराजस्य पुत्रोऽस्य महाबलः सुदुर्जयः। पिता महस्तथापि जाम्बवानिति दुर्जय” रामा०। जाम्बव तदाकारोऽस्त्यस्या मतुप् मस्य व पृषो० यलोपः ङीप्। २नागदमन्या स्त्री राजनि०। (नागदमन्याम् राजनि०।

जाम्बवी स्त्री जाम्बव तदाकारोऽस्त्यस्या अण् ङीप्।

जाम्बवौष्ठ न० जाम्बवमिव ओष्ठोऽस्य। सुश्रुतोक्ते शस्त्रादि दहनोपकरणभेदे “अथेमानि दहनोपकरणानि तद्यथा पिप्पल्यजाशकृद्गोदन्तशरशलाकाजाम्बवौष्ठेतर लोहा, क्षौद्रगुडस्नेहाश्च। तत्र पिप्पल्यजाशकृद्गोदन्तशरशलाकास्त्वग्गतानाम्। जाम्बवौष्ठेतरलोहानि मांसगतानाम्। जम्बोष्ठमध्यत्र “जम्बोष्ठेनाग्निवर्णेन तप्तया वा शलाकया” “जम्बोष्ठेनाग्निवर्णेन पश्चाच्छेद्य दहेद्भिषक्” सुश्रु०।

जाम्बीर(ल) न० जम्बीरस्य फल अण् बेदे रस्य वा लः। १जम्बीरफले तदाकारे २जानुमध्यभागे च। “जाम्बीले नारवयम्” यजु० २५।१। “जाम्बीर जम्बीरतरो, फल रलयोरभेदः। तदाकारेण जानुमध्यभागो जाम्बीलस्तेनारण्यदेव प्रीणामीति” वेददी०।

जाम्बुवत् पु० जाम्बवत्+पृषो०। ऋक्षराजे हिरूपको०।

जाम्बूनद न० जम्बूनद्यां भवम् अण्। १स्वर्णे तन्नामनामके २कनकाह्वये धूस्तुरे च राजनि०।

जम्बूनद्या तदुत्पत्तिकथा जम्बूद्वीपशब्दे २०४५ पृ० भाग० च दृश्यम्। “दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु। सुदर्शनो नाम महान् जम्बूवृक्षः सनातनः। सर्वकामफलः पुण्यः सिद्धचारणसेवितः। तस्य नाम्ना समाख्यातो जम्बूद्वीपः सनातनः। योजनानां सहस्रं शतञ्च भरतर्षभ। उत्सेधो वृक्षराजस्य दिवस्पृङ् मनुजेश्वर!। अरत्नीनां सहस्राणि शतानि दश पञ्च च। परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम्। पतमानानि तान्युर्व्वीं कुर्वन्ति विपुलं स्वनम्। मुञ्चन्ति च रसं राजन्! तस्मिन् रजतसन्निभम्। तस्या जम्ब्वाः फलरसो नदी भूत्वा जनाधिप!। मेरुं प्रदक्षिणं कृत्वा सम्प्रयात्युत्तरान् कुरून्। तत्र तेषां मनः शान्तिर्न पिपासा जनाधिप!। तस्मिन् फलरसे पीते न जरा बाधते च तान्। तत्र जाम्बूनदं नाम कनकं देवभूषणम्” भा० भी० ७अ०। “दधद्भिरभितस्तटौ विकचवारिजाम्बूनदैः विनोदितदिनक्लमाः कृतरुचश्च जाम्बूनदैः” माघ “यदिदं निर्गतं तस्मात्तज्जाम्बूनदप्रभम्। काञ्चनं धरणीं प्राप्य हिरण्यमभवत्तदा” रामा० बा० ३८ अ०।

जाम्बूनदेश्वरी स्त्री १देवीभेदे २तदीयस्थाने च शब्दार्थचि०।

जायक न० जयति गन्धान्तरं जि–ण्वुल्। पीतवर्णे सुगन्धिकाष्ठरूपे गन्धद्रव्यभेदे अमरः।

जाया स्त्री जायतेऽस्या जनेर्यक् आत्वञ्च। १पत्न्यां विधिनोढायाम् अमरः। “पतिर्भार्यां सम्प्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्वं यदस्यां जायते पुनः” मनुः “पतिः शुक्ररूपेण भार्यां सम्प्रविश्य गर्भतामापद्य तस्यां भार्यायां पुत्ररूपेण जायते। तथा च श्रुतिः “आत्मा वै पुत्रनामासीति। जायायास्तदेव जायात्वं यतोऽस्यां पतिः पुनर्जायते। तथाच बह्वृचब्राह्मणम्, “पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते। तज्जाया भवति यदस्यां जायते पुनः। तत्रासौ रक्षणीयेत्येतदर्थं नाम निर्वचनम्” कुल्लू०। “अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम्” रघु। “क इह विरहविधुरां त्वय्युपेक्षेत जायाम्” मेघः। २ज्योतिषोक्ते लग्नावधिकसप्तमस्थाने। तत्र स्थाने जायायाः शुभाशुभचिन्तनीयत्वात् तथात्वम्। बहुव्री० जायाशब्दस्य निङ्। युवती जायास्य युवजानिः “युवजानिर्धनुष्पाणिः” भट्टिः। पतिशब्देन द्वन्द्वे तस्याः जम् दम वा भवति। जम्पती दम्पती वा पक्षे जायापती।

जायाघ्न पु० जायां हन्ति "लक्षणे जायापत्योष्टक्" पा० लक्षणवति हन–टक्। जायाहननसूचकलक्षणयुक्ते भर्त्तरि। "अमनुष्यकर्तृके च" पा० टक्। २तिलकालके सि० कौ०। तस्य जायाहननसूचकत्वात् तथात्वम्। ३ज्योतिषोक्ते योगभेदे च "यावन्न यत्पश्रेऽस्तमदनसदनगा सास्त्रसौम्या विराम" इत्युक्तयोगस्य जायानाशसूचकत्वात् तथात्वम्।

जायाजीव पु० जायया तत्संभृतवृत्त्या जीवति–अच्। नटे अमरः। [१नटे २बकपक्षे च मेदि०।

जायानुजीविन् पु० जायया अनुजीवति अनु+जीव–णिनि।

जायिन् त्रि० जि–णिनि। १जययुक्ते "अफलं जन्म तस्याहं मन्ये दुर्जातजायिन" भा० श० ३५अ० "जायीतिनाम्ना ध्रुवको द्वाविंशत्यक्षरान्वित। षड्भिपातेन तालेन शृङ्गारेऽभीष्टदो रसे" सङ्गीतदा० उक्ते २ध्रुवकभेदे पु०। तत्र जायीति पाठान्तरम्। भोजार्थे तु इनि जयीत्येव।

जायु पु० जयति रोगान् जि–उण्। १औषधे अमरः जयशीले त्रि०। "मरुत्वाँ अभितो जायुरेषि" ऋ० १।११।८।२। "वनेषु जायुर्मर्त्तेषु" ऋ० १।६७।१।

जाये(या)न्य पु० जि–बा० एन्य (आन्य) प्रत्यय। जयशीले "यो हरिमा जायान्योऽङ्गभेदो विसल्पक" अथ० ९।८। । तैत्तिरीये तु जायेन्य इति पाठ।

जार पु० जीर्य्यत्यनेन जॄ–करणे घञ्। १उपपतौ अमरः। "स्पृष्टो यदर्थं जारो न पोषमनुमन्यते" यजु० २३।३१। "जारं चौरेत्यभिवदन् दाप्य पञ्चशतं दमम्" याज्ञ०। बा० कर्त्तरि घञ्। २जारके च। "स्वसारं जारो अभ्येति पश्चात्" ऋ० १०।३।३। "जारोजरयिता" भा०।

जारज पुंस्त्री जारात् उपपतेर्जायते जन–ड। अनियुक्तायां स्त्रियां १उपपतिजाते (वेजन्मा) पुत्रे २तथाभूतकन्यायां स्त्री "अमृते जारजः कुण्डः मृते भर्त्तरि गोलकः" अमरः। जन–क्त ५त०। जारजातादयोऽप्यत्र। "अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात्। उभौ तौ नार्हतो भागं जारजातककामजौ" मनुः।

जारजयोग पु० जारजस्य सूचको योगः। ज्योतिषोक्ते योगभेदे। "न लग्नमिन्दुञ्च गुरुर्निरीक्षते न वा शशाङ्कं रविणा समायुतम्। सपापकोऽर्केण युतोऽथवा शशी परेण जातं प्रवदन्ति निश्चयात्। अन्नपादर्क्षयोगात् द्वितीया द्वादशी यदि। सप्तमो वार्कमन्दारे जायते जारजो ध्रुवम्"। अन्योऽपि योगः बृहज्जातकोक्तः जातकशब्दे ३०८३ पृ० दृश्य।

जारण पु० जारयति जॄ–णिच्–ल्यु। जारके १द्रव्यभेदे। जार्य्यतेऽनेन जॄ–णिच् करणे ल्युट्। २जारणसाधने द्रव्यभेदे। कर्त्तरि ल्यु। ३जीरके स्त्री ङीप् राजनि०। भावे–ल्युट्। ४जीर्णतासम्पादने न०।

जारतिनेय पुंस्त्री जरत्या अपत्यम् ढक् कल्याण्या० इनङ्। १जरत्या अपत्ये। जरतिनोऽपत्य शुभ्रा० ढक्। २जरतिनोऽपत्ये च। [पोषके।

जारभर पु० जारं बिभर्त्ति पोषयति भृ–पचा० अच्। जार-

जारित त्रि० जॄ–णिच्–क्त। १शोषिते २मारिते धात्वादौ।

जारी स्त्री जॄ–णिच्–अच् गौरा० ङीष्। (जाड़ी) ख्याते ओषधभेदे मेदि०।

जारु पु० जॄ–उण्। १जरायौ। "बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि च उद्भिज्जानि" ऐत० उ०। "जारुजानि जरायुजानि मनुष्यादीनि" भाष्यम्। २जारके त्रि०।

जारुधि पु० जारुर्जारको द्रव्यभेदो धीयतेऽस्मिन् धा–आधारे कि उप० स०। सुमेरो कर्णिकाकेशरभूते पर्वतभेदे। "कुरङ्ग कुरर कुसुम्भ वैकङ्क त्रिकूट शिशिर पतङ्ग रुचक निषध शिनिवास कपिल शङ्ख वैदूर्य जारुधि हंस ऋषभ नाग कालञ्जर नारदादयो गिरयो मेरोः कर्णिकाया इव केशरभूता मूलदेशे परित उपक्लृप्ता" भाग० ५।१६।२७।

जारूथी स्त्री जरूथेन असुरविशेषेण निर्वृत्ता अण् ङीप्। नगरीभेदे "जारूथ्यामाहृति क्राथः शिशुपालोजनैः सह" भा० व० २२अ०। "जारूथ्यां नगर्याम्" नीलक० "जारूथ्यामाहृति क्राथ शिशुपालश्च निर्जित" हरिवं० १६ अ०।

जारूथ्य त्रि० जरूथं मांसं स्तोत्रं वा तदर्हति अञ्। १मांसदानयुक्ते २स्तोत्रार्हे च "दशाश्वमेधानाजह्रे जारूथ्यान् स निरर्गलान्" भा० व० १८अ०। "जारूथ्यान् त्रिगुणदक्षिणा न्त्यर्जुनमिश्र" तच्चिन्त्यं वरूथ्यामथमित्यादिस्थले ऽपि जरूथं मांसमिति याज्ञिकाः तथा च मांसमयान् मांसादिदानप्रधानान् पुरोडाशानित्यर्थः। जरूथोऽसुरविशेषः इति वेदभाष्यम्। अत्र जरते स्तुत्यर्थस्य शब्दस्य धात्वर्थानां विरोधाच्च जरूथं स्तोत्रमुच्यत इति जारूथ्यान् स्तोत्राहानित्यर्थः" नीलक०। जारूथ्यशब्दकथन मांसादिकमेव।

जाल पुं न० जल–घाते ण्वला० ण, पु० जल–संवरणे कर्त्तरि अच् वा। १मत्स्यबन्धनसूत्रनिर्मिते स्वनामख्याते पदार्थे अमरः "अभ्याययुश्च तं देशं निषिता जालकर्मणि। जाल ते

**जिघ्नास्थि** न॰ अस्थ्॰ जिघ्नासा राजद॰ परनि॰ सलोपश्च। अस्थिजिघ्नासायाम्।

**जित्** त्रि॰ जि—क्विप्। जेतरि। "मारजित् लोकजि-ज्जिन" अमरः "स्वर्जिता यजेत" "विश्वजिता यजेत" श्रुतिः। "यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा" मनुः

**जित** त्रि॰ जि—कर्म्मणि क्त। १पराजिते २पराभूते। भावे क्त। ३जये न॰। तदस्यास्ति अच्। ४अर्हदुपासकभेदे पु॰ हेमच॰।

**जितकाशि** पु॰ जित अभ्यासपटुतया दृढीकृत काशि मुष्टिर्येन। दृढमुष्टौ योधभेदे नीलकण्ठः।

**जितकाशिन्** त्रि॰ जितेन जयेन काशते प्रकाशते काश-णिनि। १जिताहवे, जयिनि हेमच॰। "अनिरुद्धो रणे सायो जितकाशी महाबलः" हरिवं॰ १७७ अ॰।

**जितक्रोध** त्रि॰ जितः क्रोधो येन। १क्रोधशून्ये २विष्णौ पु॰। "मनोहरो जितक्रोधो वीरबाहुर्विदारणः" विष्णुस॰ "वेदमर्य्यादा स्थापयन् असुरान् हन्ति न तु कोपवशात्" भाष्योक्तेः तस्यासुरहननाय न कोपः किन्तु वेदमर्य्यादारक्षार्थ एवेति न तस्य कोपशालितेति बोध्यम्। जितमन्युरप्युभयत्र। "अनन्तरूपोऽनन्तश्रीर्जितमन्यु-र्भयापहः" विष्णुस॰।

**जितनेमि** पु॰ जिता नेमिरत्र। आश्वत्थदण्डे हेमच॰

**जितलोक** त्रि॰ जित आयत्तीकृत कर्म्मादिद्वारा लोक स्वर्गादिर्येन। इष्टापूर्त्तादिकर्म्मभिः आयत्तीकृतस्वर्गादिलोके धार्म्मिके "स एकः पितॄणां जितलोकानामा-नन्द अथ ये शतं पितॄणां जितलोकानामानन्दाः शत॰ ब्रा॰ १४।७।१।३३। "पितॄणां दक्षिणमार्गानुयायिनाम् श्राद्धपिण्डपितृयज्ञादिकर्म्मभिः पितृतोषणद्वारा जितो लोको यैस्ते यद्वा जिता लोका येषामिति जितलोकाः" भा॰। २अभिभूतलोके त्रि॰।

**जितवत्** त्रि॰ जि+क्तवतु। १कृतजये स्त्रियां ङीप्। सा च उशीनरनृपस्य २कन्यायाम्। "अस्ति मे मानुषे लोके नरदेवात्मजा सखी। नाम्ना जितवती नाम रूपयौवन-शालिनी। उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः। दुहिता कथिता लोके मानुषे रूपसम्पदा" भा॰आ॰९९अ॰

**जितव्रत** त्रि॰ जितमायत्तीकृतं व्रतं येन। १आयत्तीकृतव्रते पृथुवंश्ये २हविर्द्धानपुत्रभेदे पु॰ "हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान्। बर्हिषदं गयं शुक्लं कृष्णं सत्यं जितव्रतम्" भाग॰ ४।२४।८।

**जितशत्रु** पु॰ जितः शत्रुर्येन। १पराजितरिपुके रिपुजय-कर्त्तरि। २अर्हतां पितृभेदे पु॰ हेमच॰।

**जिताक्षर** त्रि॰ जितानि आयत्तीकृतानि अक्षराणि शीघ्रं तद्वाचनपाठयादि येन। इष्टिमात्रेण अक्षरवाचनशक्ति-युक्ते।

**जितात्मन्** त्रि॰ जितो वशीकृत आत्मा इन्द्रियं मनो वा येन। १जितेन्द्रिये। २श्राद्धभागार्हे देवभेदे पु॰ कौर्त्तिमच्छब्दे २०६१पृ॰ दृश्यम्।

**जितामित्र** त्रि॰ जित अमित्रो येन। १शत्रुपराजयकर्त्तरि २जितकामादिरिपुके च। ३विष्णौ पु॰यजुरत्ना॰ "अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः" विष्णुस॰ "जिता अमित्रा आभ्यन्तरा रागद्वेषादयो बाह्या राव-णादयश्च येनासौ जितामित्रः" भा॰।

**जितारि** पु॰ जिता अरयो आभ्यन्तरा रागादयो बाह्याश्च रिपवो येन। १बुद्धे त्रिका॰ २इक्ष्वाकुनृपतिरि हेमच॰ ३जितशत्रौ शत्रुजयकारिणि ४कामादिरिपुजयकर्त्तरि च त्रि॰ ५अविक्षितो नृपस्य पुत्रभेदे पु॰ "अविक्षित परिक्षित्तु शवलाश्वश्च वीर्य्यवान्। आदिराजो विराजश्च शाल्मलिश्च महाबलः। उच्चैःश्रवा भद्रकारो जितारिश्चा-ष्टम स्मृतः" भा॰ आ॰ ९४ अ॰।

**जिताष्टमी** स्त्री आश्विनकृष्णाष्टम्यां जीमूतवाहनपूजाद्यङ्गभू-तायां जीमूताष्टम्यां तत्र कर्त्तव्यमुक्तं चमत्कारचि॰ भविष्योत्तरे "इषेमास्यसिते पक्षे अष्टमी या तिथिर्भवेत्। पुत्रसौभाग्यदा स्त्रीणां ख्याता सा जीवपुत्रिका। शालिवाहनराजस्य पुत्रो जीमूतवाहनः। तस्या पूज्यः स नारीभिः पुत्रसौभाग्यलिप्सया। प्रदोषसमये स्त्रीभिः पूज्यो जीमूतवाहनः। पुष्करिणीं विधायाथ प्राङ्गणे चतुरस्त्रिकाम्"। विष्णुधर्म्मोत्तरे "पूर्वेद्युर परेद्युर्वा प्रदोषे यत्र चाष्टमी। तत्र पूज्यः सदा स्त्रीभि राजा जीमूतवाहनः"। तथा च यद्दिने प्रदोषव्यापिनी अष्टमी तत्रैव व्रतम्। उभयदिने चेत् परदिने त्रिसन्ध्यव्यापित्वात्। उभयदिने प्रदोषाव्याप्तौ उदयगामिन्यां तदुक्तं निर्णयामृतसिन्धौ "लक्ष्मी व्रत चाभ्युदिते शशाङ्के यत्राष्टमी चाश्विनकृष्णपक्षे। तत्रोदयं वै कुरुते दिनेशः तदा भवेज्जीवितपुत्रिका सा" इति अस्यामष्टम्यां स्त्रीभिर्न भोक्तव्यम् "आश्विन-स्यासिताष्टम्यां या स्त्रियोऽन्नं हि भुञ्जते। मृतवत्सा भवेत्सा वैधव्यञ्च भवेद्ध्रुवम्" वचनात्।

जिताहव पु० जित आहवो येन । जितकाशिनि हेम० ।

जितेन्द्रिय त्रि० जितानि वशीकृतानीन्द्रियाणि येन । यथेष्टमिन्द्रियप्रचारप्रतिरोधिनि १वशीकृतेन्द्रिये "श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः" मनूक्ते हर्षविषाद शून्ये २शान्ते जने । इन्द्रियजयश्च शौचकार्य्यं आत्म दर्शनयोग्यत्वे च हेतुः । यथोक्तं पात० सू० भा० "सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च" पात०सू०। "भवन्तीति वाक्यशेषः शुचे सत्वशुद्धिस्तत सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शन-योग्यत्वं बुद्धिसत्वस्य भवतीति । एतच्छौचस्थैर्य्यादधि-गम्यत इति" भा०। २कामदहिहन्त्रे पु० शब्दार्थचि० ।

जितु(त्तु)म मिथुनराशौ "क्रियताबुरि जितु(त्तु)म कुलीर लेय-पाथेय-युककौर्पाख्या । तौक्षिकआकोकेरो हृद्रोग-श्चान्त्यभं चेत्थम्" ज्यो०त० मेषादिराशिपर्य्यायोक्तौ । घातिशयेन जित् जित्तम २अतिशयजययुक्ते त्रि० । [काठ्ठमयपदार्थभेदे

जित्या स्त्री जि—क्यप् । इलहले लष्टभूमिसमीकरणार्थं

जित्वन् त्रि० जि—क्वनिप् । जयशीले । तत्र कर्त्तरि चतुर्थ्यां स्त्रियां ङीप् । जैत्वमायसि जित्वनोऽदूरदेशादौ ।

जित्वर त्रि०जि—क्वरप् । जयशीले "सुराध्वरे धस्मरजित्वरेण" "गत्वाणुप्रायशत जित्वराणि" भट्टिः "करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम्" माघ० । क्वरप टिड्ढाण जित्यादि" पा० सूत्रे पाठात् स्त्रियां ङीप् । सुग्ध० मते क्वरप् पित्त्वात् ईप् इति भेदः । सा च २काशीपूर्य्यां त्रिका० ।

जिन पु०जि—नक् । १बुद्धे अमरः २अर्हदाख्यबौद्धभेदे ३विष्णौ च हेमच० । ४अतिवृद्धे उणा० । ५जित्वरे त्रि०मेदि० । तस्मिन् बोढमण् । जैन जिनसम्बन्धिनि त्रि० "हस्तिना पीड्यमानोऽपि न गच्छेज्जैनमन्दिरम्" । तदीयमते च तत्र अर्हच्छब्दे ३८८ पृ० दर्शितम् ।

जिनसद्मन् न० ६त । जिनादिष्टे चैत्ये विहारे हेमच० ।

जिनेन्द्र पु०जिनानामिन्द्रः जिन इन्द्र इव वा । १बुद्धे इला० २व्याकरणकारके विहद्भेदे च । स्वार्थे अण् । तत्रार्थे "पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः" कवि-कल्पद्रुमः ।

जिनेश्वर पु० ६त० । बुद्धे हेमच० ।

जिम भक्षे भ्वा० पर०सक०सेट् । जेमति अजेमीत् । उदित् जेमित्वा जान्त्वा जितः । "जेमन लेप आहारः" अमरः

जिरि हिंसायां स्वा०पर०सक०सेट् । जिरिणोति अजिरा यीत् । अयं वैदिकः ।

जिल्लिक पु० दक्षिणस्थे देशभेदे, सोऽभिजनोऽस्य अण् । तस्य राजा वा अण् । जैल्लिक पित्रादिक्रमेण तद्देश-वासिनि तद्नृपे च बहुषु तस्य लुक् । तद्देशवासिषु तद्नृपेषु च ब० व० । "जिल्लिकाः कुन्तलाश्चैव सौहृ दामलकाननाः" भा० स० ९अ० ।

जिव प्रीणने भ्वा० पर० सक० सेट् इदित् । जिन्वति अजि-न्वीत् जिजिन्व इदित्त्वात् लोपधालोप जिन्व्यते । "भूमिं पर्ज्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः" ऋ० १।१६४।५१ "इन्द्रेण जिन्वितो मघिरागमन्" अथ० ८।११।७ "रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृ-प्रसूती" तापडव्र०भा०१।८ । "अर्वा देवांश्च जिन्वति" ऋ० ८।४४।१६ । "सदा त्व प्रथ । जिन्वसि" ११।४। १४ । इन्नौ च अक० । वेदे व्यत्ययात् रुचिश् आत्म० "स जिन्वते जठरेषु प्रजज्ञिवान्" ऋ० १।२।११। "जिन्वते वर्द्धते" भा० । वेदे भमध्यस्यैव प्रयोगात् एतत्कल्पद्रुमे धात्वयस्यमान्यस्त्वे तस्य निषेधनात् जिन्वतीति प्रयोग-दर्शनाच्च धोत्पलभ्रान्त्या मुग्धकृतधत्वोमभ्रान्तिषौ जिन्वतीति धोत्पान्ततया रूपप्रदर्शनं प्रामादिकमेव । कविकल्पद्रुमे चान्तस्थान्तमध्ये पाठात् धिविवातोरिव न मध्यतस्योचितत्वात् ।

जिवाजिव पुस्त्री जीवञ्जीव+पृषो० । चकोरखगे शब्दर० जातित्वात् स्त्रियां ङीप् ।

जिव्रि पु० जृ—रिक् दृश्च । १समये २खगे च सि० कौ० ।

जिष सेके भ्वा० पर० सक० सेट् । जेषति अजेषीत् । उदित् जेषित्वा जिष्ट्वा । जिष्टः ।

जिष्णु पु० जिप—ग्स्नु । १विष्णौ हेमच० २इन्द्रे ३अर्ज्जुने च ४जेतरि त्रि० मेदि० । तत्रार्ज्जुने जयशीले च । "यज्ञगन्धर्वपरिगह समयवलद्युतिजिष्णु जिष्णुरध्वतोष्य वारणम्" "भुजं परलोकजिष्णुः" माघः "अह दुरापो दुर्द्धर्षो दमनः पाकशासनिः । तेन देव-मनुष्येषु जिष्णुर्नामाऽस्मि विश्रुतः" भा० वि० ४४अ० । इन्द्रे "जयश्च जिष्णुर्यामित्रं जयतामिन्द्रमेदिनी" अथ० ११।६।१८ । विष्णौ "विष्णुर्विक्रमणाद्देवो जयनात् जिष्णुरुच्यते" भा०उ०६८ अ० । जिष्णु नामनिरुक्तौ ।

जिह्म त्रि० हा—मन् सन्वत् आलोपश्च । १कुटिले २मन्दे ३तग-रवृक्षे न मेदि० । "वञ्चितजिह्मवीक्षितैः" कुमा० ।

"जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्" याज्ञ०। "सुहृदर्थमीहितमजिह्मधियाम्" माघ०। ४कपटे न०। "तदाशु कर्त्तुं त्वयि जिह्ममुद्यते" किरा० "जिह्मं कपटम्" मल्लि०। ५पिहिते त्रि० "जिह्मद्वारमपोर्णुत" ऋ० ८।४।५। "जिह्मद्वारं पिहितद्वारम्" भा०। ६ऊर्ध्वस्थापवर्त्तमाने च। "उच्चाबुध्नं चक्रथुर्जिह्मबारम्" ऋ० १।११६।११। "जिह्ममधस्तादवर्त्तमानम्" भा०। ७अप्रसन्ने च। "विधिसमयनियोगाद्दीप्तिसंहारजिह्मम्" किरा० "जिह्मम् अप्रसन्नम्" मल्लि०।

**जिह्मग** पु स्त्री जिह्मं कुटिलं मन्दं वा गच्छति गम–ड। १सर्पे स्त्रियां जातित्वात् ङीप्। २मन्दगे त्रि० मेदि० स्त्रियां टाप्। "व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः" "स दृष्ट्वा जिह्मगान् सर्वांस्तीव्रकोपसमन्वितः" भा० आ० ६ अ०। [शब्दर० स्त्रियां जातित्वात् ङीष्।

**जिह्ममेहन** पु स्त्री जिह्मं मन्दं मेहति मिह–ल्यु। भेके

**जिह्मशल्य** पु० जिह्मं कुटिलं शल्यमस्मात्। खदिरवृक्षे जटा०

**जिह्माशिन्** त्रि० जिह्मं मन्दमश्नाति अश–णिनि। मन्दभोजिनि ततः अपत्ये शुभ्रा० ढक्। जैह्माशिनेय तदपत्ये पु० स्त्री।

**जिह्वल** त्रि० ह्वल–अच् मा० सन्नत जिह्वं जिह्वाव्यापारं लाति ला–क वा। भोजनलोलुपे। "श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च जिह्वलाः। पतन्ति नरके घोरे लुप्तपिण्डोदकक्रियाः" स्मा० त०।

**जिह्वा** स्त्री शेवत्पनया लिह–स्वादे व "शेवयह्वजिह्वेत्यादिना" नि०। १रसास्वादकरणे इन्द्रियभेदे २तदधिष्ठाने गोलके (जिब) ख्याते पदार्थे च। तदिन्द्रियस्य जलीयत्वं सि० मु० समर्थितं यथा "रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसव्यञ्जकोदकवत् रसनसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वे सतीति विशेषणीयम्। तस्याधिष्ठातृदेवता च प्रचेता "दिग्वातार्कप्रचेतोऽश्वीत्यादि" शा० ति० उक्ते। अग्नेर्जिह्वाश्च सप्त तन्नामानि "काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरूपी च देवी लोलाय मामा इति सप्त जिह्वा" मुण्डकोप०। "तस्याः कफादिदोषात् लक्षणादिकं भाव० प्र० दर्शितं यथा "शाकपत्रप्रभा रूक्षा स्फुटिता रसनाऽनिलात्। रक्ता श्यामा भवेत् पित्तात्लिप्ताऽऽर्द्रा धवला कफात्। परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके। सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणा" अस्य क्लीबत्वं भरत आह स्म। जिह्वलं। इन्द्रियपरत्वे तथात्वमिति तु युक्तम्। ३वाक्ये निघण्टुः

**जिह्वाजप** पु० जिह्वया जपः। "जिह्वाजपः स विज्ञेयो केवलं जिह्वया बुधैः" तन्त्रसारोक्ते जपभेदे। "उच्चैर्जपादुपांशुः स्यादुपांशुर्दशभिर्गुणैः। जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः" तन्त्रसा० तत्फलमुक्तम्।

**जिह्वानिर्लेखन** न० जिह्वा निर्लिख्यतेऽनेन निर्+लिख–करणे ल्युट्। (जिब छाचडान) द्रव्यभेदे तल्लक्षणं यथा "जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा। पाटितं मृदु तत्काष्ठं मृदुपत्रमयं तथा। तत्काष्ठं दन्तधावनयोग्यकाष्ठम्। दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत् सुखम्। तज्जिह्वामलवैरस्यदौर्गन्ध्यजडताहरम्" भाव० प्र०।

**जिह्वाप** पु० स्त्री जिह्वया पिबति पा–क। १कुक्कुरे २व्याघ्रे ३विडाले ४भल्लूके च शब्दरत्नावली ५चित्रकव्याघ्रे विश्व०। स्त्रियां जातित्वात् सर्वत्र ङीष्।

**जिह्वामल** ६त०। जिह्वास्थितमले कुलुके त्रिका०।

**जिह्वामूल** न० ६त०। जिह्वाया मूले। तत्र भवः छ। जिह्वामूलीय अयोगवाहान्तर्गतवर्णभेदे। "जिह्वामूलीयस्य जिह्वामूलम्" सि० कौ०। स च कखयो परयो विसर्गस्थाने जातः। कवर्गे च "जिह्वामूले तु कु प्रोक्त" शिक्षाया कवर्गस्य जिह्वामूलस्थानत्वोक्तेस्तथात्वम्।

**जिह्वारद** पु० स्त्री० जिह्वा रद इव यस्य। पक्षिणि हारा० तस्य जिह्वाया एव दन्तकार्य्यकारित्वात्तथात्वम्। स्त्रियां जातित्वात् ङीष्।

**जिह्वारोग** पु० मुखरोगान्तर्गतजिह्वागतरोगभेदे। तल्लक्षणादि भावप्र० उक्तं यथा।

"वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः। उपजिह्विका च गदा जिह्वायाः पञ्च कीर्त्तिताः। तत्र वातजस्य लक्षणमाह। जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा। स्फुटिता मनाग्विदीर्णा। प्रसुप्ता रसानभिज्ञतया सुप्तेव। शाकच्छदनप्रकाशा शाको मरुभूमिजातो द्रुमः तद्वत् कण्टकाचिता। पित्तजमाह। पित्तात् सदाहैरुपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च। कफजमाह। कफेन गुर्वी बहला चिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः। बहला स्थूला। मांसोच्छ्रयैः मांसजकण्टकैः। अलासमाह। जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः। जिह्वां सतम्

स्तम्भयति पश्चात् मूले च जिह्वां श्वयथुरिति पाकम् । प्रगाढ प्रकर्षेण गाढो दारुण । कफरक्तमूर्त्तिः कफरक्ताभ्यां मूर्त्तिर्यस्य स कफरक्तज इत्यर्थः । जिह्वा स्तम्भेन वायुरत्र बोद्धव्य । श्वयथु पाकेनेति पित्तस्य अत-स्त्रिदोषजोऽयम् । असाध्यत्वञ्चास्य । उपजिह्विका-माह । जिह्वाग्ररूपः श्वयथुर्ज्जिह्वामुत्क्षिप्य जात कफरक्तयोनिः । प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसा-वुपजिह्विकेति । जिह्वाग्ररूप जिह्वाग्राकृति” भावप्र० । “पक्वाशयस्थे चैव जिह्वारोगः प्रजायते” वासत० ।

जिह्वाशल्य पु० जिह्वायाः शल्यमिवाल्पस्य अच् । खदिरवृक्षे राजनि० ।

जिह्वावत् पु० यजुर्वेदीयवयान्तगतर्षिभेदे । “अथ वंश” इत्युपक्रमे । “जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगः” शत०ब्रा०१४।८।७।२१। २जिह्वायुक्ते त्रि०। स्त्रियां ङीप् ।

जिह्वास्वाद पु० जिह्वया स्वाद । लेहने (चाटा) हेमच० ।

जीति स्त्री जि–क्तिन् वेदे दीर्घ । जये “अजीतयेऽहतये पवस्व स्वस्तये” ऋ० ९।९६।४ । “अजीतये अजयाय” भा०। लोके तु ज्या–क्तिन् सम्प्रसारणे “जय” इति पा० सम्प्रसारणस्य दीर्घ । २हानौ स्त्री ।

जीन त्रि० ज्या–क्त सम्प्रसा० दीर्घ । जीर्णे अमर “जीन-कार्मुकवस्त्रादीन् पृथक् दद्यात् विशुद्धये” मनुः ।

जीमूत पु० जयति नभ, जीयतेऽनिलेन वा । जि–क्त । “जेर्मुट् चोदात्तः दीर्घश्च” । जीवनस्योदकस्य मूत बन्धो यस्येति वा जीवन जल मूत बद्धमनेन । मूङ् बन्धने कर्मणि क्त पृषोदरादित्वात् साधु । ज्यान जीर्णं ज्या–भा० क्विप्, जिया वयोहान्या मूतो बद्ध इति वा जीवन इच्छति वा पृषो० । १पर्वते २मेघे ३मुस्तायां ४देवताडवृक्षे च अमरः ५इन्द्रे ६भर्त्तिकरे ७घोषकलतायां च हेम०। मेघे “यथा जीमूत शब्देन स्त्रीणां गर्भोऽभिजायते” इन्दुभिप्रजामन्त्र । “जीमूतैरपिहितसानुरिन्द्रकील” किरा० । “जीमूतस्येव भवति प्रतीकम्” ऋ० ६।७५।१ “प्रतिचरणविन्यस्तरेफा सुरपतिर्वर्ण्यान्तजीमूतलीलाकरोद्दामगल्लादय” इ० र० उक्ते दण्डकभेदे तथा च एकादशभीरगणै रचितो जीमूताख्यो दण्डक । स्वार्थे क । जीमूतक तेष्वर्थेषु ।

जीमूतकूट पु० जीमूतो मेघ कूटेऽस्य । पर्वते हारा० ।

जीमूतकेतु पु० विद्याधरपतौ राजभेदे जीमूतवाहन पितरि । नागानन्दे दृश्यम् ।

जीमूतमूल पु०जीमूतस्य मुस्तकस्य मूलमिव मूलमस्य । यच्या मन्दरत्ना० ।

जीमूतवाहन पु० जीमूतो मेघो वाहनमस्य । मेघवाहने १इन्द्रे शालिवाहनपुत्रे २नृपभेदे जिताष्टमीशब्दे दृश्यम् । जीमूतकेतोः विद्याधरस्य ३पुत्रे च तत्कथा नागानन्दे दृश्या ।

जीमूतवाहिन् पु० जीमूत मेघमुद्दिश्य वहति ऊर्द्धं गच्छति वह–णिनि । धूमे हेमच० । मेघानां धूमादेव विर्भावात् तस्य तथात्वम् ।

जीर पु०ज्या–रक् सम्प्र०दीर्घ । १जीरके,२खड्गे,३अणौ च । मेदि०जीरो रक् च” उणा०सौ०जु–रप्रत्यय ईत्वान्ता देशः ।४जवशीले ५क्षिप्रे च उज्ज्वल०जीरदानु । “उत नः सुद्योत्मा जीराश्व” ऋ०१।१४१।१२। “जीराश्व क्षिप्राश्व” भा०। स्वार्थे कन् । (जीर) ख्याते पदार्थे मेदिनि० । मदनपालनिघण्टौ तस्य क्लीवता तद्भेदा गुणा श्चोक्ता यथा “जीरक दीर्घक शुक्लमजाजीकण-जीरकम् । जीरक जरण कृष्ण वर्षकाली सुगन्धिकम् । कालिका माल्विका कुञ्चिकारवी चोपकुञ्चिका । पृथ्वीका सुषवी पृथ्वी स्थूलनाप्युपकालिका । जीरकत्रितय रूक्ष कटूष्ण दीपन लघु । सङ्ग्राहि पित्तल मेध्य गर्भाशयविशुद्धिकृत् । चक्षुष्य पवनाध्मानगुल्मच्छर्द्दि-मलासजित्” मदनपालः ।

जीरण पु जीरक+पृषो० । जीरके राजनि० ।

जीरदानु पु०जीर क्षिप्र जवशील वा ददाति दा–नु ।१जव शीलदाने, २क्षिप्रदातरि च “विद्यामेष वृजन जीरदानुम्” ऋ० १।१६६।१५ “जीरदानु जवशीलदानम्” भा० “जीरदानूरेतो दध्यत्योषधीषु गर्भम्” ५।८३।१ “जीरदानु क्षिप्रदाम” भा० ।

जीरि पु० जीर्यति जॄ–वा०रिक । १मनुष्ये “रक्षन्ति जीरयो वनानि” ऋ०४।५१।६ “जीर्यन्ति इति जीरयो मनुष्याः” भा० जॄ–अन्तर्भूतण्यर्थे रिक् । २जारके ३अभिभावके च त्रि० “पुजीरय सिञ्चते सध्र्यक् पृथक्” ऋ० २।१७।२ “जीरयो जरयितार” भा०।

जीर्ण त्रि० जॄ–क्त ।१जरायुक्ते २पुरातने च अमर “वासांसि जीर्णानि यथा विहाय” गीता । “जीर्णमन्न प्रशंसीयात् गतस्य स्त्वक्ष्मागतम्” चाणक्य । ७गैरवे न० राजनि० । ३जठराग्निना कृतपाके त्रि०। “अजीर्णे भेषज वारि जीर्णे वारि बलप्रदम्” वैद्यकम् ।

द्रव्यभेदे जीर्णतासाधनद्रव्यभेदा जीर्णमञ्जर्यामुक्ता यथा "नारीकेलफलेषु तण्डुलमथ क्षीरं रसाले हित जम्बीरोत्थरसः घृते समुचित सर्पिस्तु मोचाफले। गोधूमेषु च कर्कटी हिततमा माषात्यये काञ्जिकं नारङ्गे गुडभक्षणञ्च कथित पिण्डारके कोद्रव। पिष्टान्ने सलिलं पियालफलजे पथ्या सिता माषजे खण्डं क्षीरभवे तु तक्रमुचित कोष्णाम्बु कोलम्बजे। मत्स्ये चूतफल त्व जीर्णशमन मध्वम्बु पामात्यये तैलं पौष्करजे कटूष्णशमन शेषास्तु बुद्ध्या जयेत्। पनसे कदलं कदले च घृत घृतपाकविधावपि जम्बुरस। तदुपद्रवशान्तिकर लवण लवणेषु च तण्डुलवारि वरम्। नारिकेलफलतालबीजयो पाचन य इह तण्डुल विदु। ते वदन्ति मुनयोऽथ तण्डुलान् क्षीरवारि परिपाचयन्त्यपि। दाडिमाम्रलकतालतिन्दुकीबीजपूरलवलीफलान्यपि। वाकुलेन च फलेन पाचयेत् पाकमेति बकुल समन्ततः। मधूकभालूरन्थपाटलानां पक्वखर्ज्जूरकपित्थकानाम्। पाकाय मेव पिचुमर्द्दशोल इत्तेऽपि तक्र प्रवदन्ति पथ्यम्। गोधूममाषहरिमन्थसतीनमुद्गपाको भवेदिति च माह लघुत्वकेण। खर्ज्जूरिका बिसकशेरुसितास्तु मस्त शृङ्गाटके मधुफलेष्वपि भद्रमुस्तम्। पिण्डितपनसयो स्यादाम्रबीजेन पाकः क्षथरर्भाहृषयोर्पितृक्षीरयो सैन्धवेन। चिपिटपरिणति स्यात पिप्पलीदीपकाभ्या मपहरति तुषाम्भो वैदलानामजीर्णम्। कर्पूरपूगीफल नागवल्लीकाश्मीरजातीफलजातिकोषम्। कस्तूरिका बिल्वकनारिकेलजल पचत्याशु समुद्रफेन। श्यामाक नीवारकुलत्थपष्टिनिष्पावकङ्गू दधिमस्तकस्तु। चिञ्चाकुलत्थौ तिलतैलयोगात् जटाब्दनादस्य निहन्त्यथाम्लम्। कशेरुशृङ्गाटकपालकहद्दी खर्ज्जूरखण्डा अपि नागरेण। पलाशभस्माम्बु तथार्द्रजो वा रसो निहन्याद्रसभिक्षुजातम्। अस्त्रेन केनाप्यथ व्योषकेन कोष्णाम्बुना वा व्रतमेति पाकम्। तिलादितैलान्यपि काञ्जिकेन तक्रेण मज्जा पनसामलक्यौ। किमत्र चित्र बहुमांसमत्स्यभोजी सुखी स्यात् परिपीय शुक्तम्। द्रुतभुत केवलवह्निपक्वमासेन मत्स्य परिपाकमेति। कपोतपारावतनीलकण्ठकपिञ्जलाना पिशितानि जग्ध्वा। कागस्य मूत्र परिमेयकुष्ण सुखी भवेद्वा बहुशो न भतम्। व्योषै रसाला सुरभीयवस्तुमपरेन कोष्णेन विपाकमेति। शङ्खस्य चूर्णेन हयारिगारी-

पयोदधिक्षीरमुपैति पाकम्। घटो वेसवारायवह्नेन फेनी शम पर्पट शिग्रुबीजेन याति। कणामृततो लड्डुका पूपकादेर्विपाको भवेच्छष्कुलीमण्डयोश्च। श्वाविद्गोधागण्डकाश्चित्ततैलाद्ध यावत् क्षारात् कोल कूर्मादयोऽपि। जीर्यन्त्येव पायसो मुद्गयूषात् शालुद्राद्ध्यारनालं सुखाय। तप्त तप्त हेम वा तारमग्नौ तोये क्षिप्त सप्तकृत्वस्तदम्भः। पीत्वा शवात्र दीर्घमन्नो-पपन्नमम्भो जीर्ण शीघ्रमेव जहाति। पार्थ्य... केसरककारवेल्ली वार्त्ताकुवशाङ्कुरमूलकानाम्। उपोद कालामुपटोलकानां सिद्धार्थको मेघवरश्च पक्ता। शुण्ठीसतीनस्य च नागरङ्गजम्बीरयो कोद्रवके निहन्ता। जरामिरागेरक्तचन्दनाभ्यामभ्येति शीघ्र बहुशो न भूतम्। पटोलवंशाङ्कुरकारवेल्लीफलान्यलाबूनि बहूनि जग्ध्वा। क्षारोदक ब्रह्मतरोर्निपीय भोक्तु पुनर्वाञ्छति तावदेव। विपच्यते शूरणको गुडेन तथालुक तण्डुलतोयपानात्। जम्बीरनीरेण निशारसेन हस्तेन तूर्ण परिपाकमेति। चङ्कुकसिद्धार्थक वास्तुकाभा गायत्रिसारक्वथितेन पाक। शाकानि सर्वाण्युपयान्ति पाक क्षारेण सद्यस्तिलनालजेन। आम्रातकोदुम्बरपिप्पलीनां फलानि च प्लक्षवटादिकानाम्। सु, शमनं पर्य्युषितोदकेन पियालमज्जा च कदुष्णकेन। स्नेहाजीर्ण रोगिणा मुद्गचूर्ण ज्वाला सस्तो हन्ति वैरेचकानाम्। मायो भूयाश्रिम्बमूलेन पाकश्चिञ्चा सम्यक्वता चूर्णयोगात्। उष्णेन शीत शिशिरेण चोष्णमम्लेन च क्षारगणो गुणाय। क्षारेण तीक्ष्ण वमनातियोगे सिता हिता स्यादिति काशिराज। ताम्बूलमध्यस्थितचूर्णकेन सदह्यते यस्य मुखं नरस्य। तैलेन वा केवलकाञ्जिकेन। सुखाय गण्डूषमसौ विदध्यात्। शीतोदक मस्तजरोगहारि नारीपयश्चाञ्जनकृच्छ्रनाशि। एलोदक धूमगटे प्रशस्त धात्रीप्रलेपोऽतिविरेचनेषु। स्वगस्य माष श्रमजेऽनुकूल मवातसुप्ति सुरताश्वसाने। क्षीरोष्णा सैन्धवसाधितन्तु छागाण्डसुक्त सुरतातिरेके। श्रवणपूरणजे तिलतैलतः श्रवणपूरणमेव सुख विदु। कवलजेषु गदेष्वथ कारयेत् कवलमार्द्रकजद्रवज पुन"।

जीर्णक त्रि॰ जीर्णप्रकारः स्थूला॰ कन्। जीर्णप्रकारे।

जीर्णज्वर पु॰ कर्म्मधा॰। द्वादशाहाधिककालोत्पन्ने ज्वरे तल्लक्षणादिक भावप्रका॰ उक्त यथा।

"यो द्वादशभ्यो दिवसेभ्य ऊर्द्ध्वं दोषत्रयेभ्यो द्विगुणेभ्य ऊर्द्ध्वम् । तृष्णा तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एष जीर्णः" । जीर्णज्वरस्यैव विशेषवातबलासकमाह । नित्य मन्दज्वरो रूक्षः शून कृच्छ्रेण सिध्यति । स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी । वातबलासको नर इत्यभिधेत् । शून शोथी । श्लेष्मभूयिष्ठो बहुश्लेष्मकः । जीर्णज्वरी नरः कुर्यात्सोपवासं कदाचन । लङ्घनात् स भवेत् क्षीणो ज्वरस्तु स्याद्बली यतः । पुराणेऽपि ज्वरे दोषा यद्यपथ्यैः पुनस्तथा । लङ्घयेत् तत्र तत्पश्चात् पूर्वामेवाचरेत् क्रियाम्" तथा पूर्ववत् ।

जीर्णदारु पु॰ नित्यक॰ । वृद्धदारकवृक्षे (बिधारा) राजनि॰

जीर्णपत्र पु॰ जीर्ण पत्रमस्य । पट्टिकालोध्रे शब्दार्थ॰ । २जीर्णपत्रयुक्ते त्रि॰ । बहु॰ कप् कापि अत इत्त्वम् ।

जीर्णपत्रिका २वंशपत्रीतृणे स्त्री राजनि॰।

जीर्णपर्ण पु॰ जीर्णानि पर्णान्यस्य । १कदम्बे । २पुरातनपत्रयुक्ते त्रि॰ । कर्म॰ । ३पुरातनपत्रे न॰ । ४पुरातनताम्बूले च । "पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः । जीर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी", वैद्यकम् ।

जीर्णफञ्जी स्त्री नित्यक॰। वृद्धदारके वृक्षे (बिधारा) राजनि॰।

जीर्णबुध्न पु॰ जीर्णं बुध्नं मूलमस्य । पट्टिकालोध्रे राजनि॰ तदिव कायति कै–क । जीर्णबुध्नक । (केओटा सुपा) ख्याते मुस्तकभेदे । [ राजनि॰ ।

जीर्णवज्र न जीर्णं पुरातनं वज्रं हीरकमिव । वैक्रान्तमणौ

जीर्णवस्त्र न कर्म॰ । पुरातनवस्त्रे पटच्चरे अमर ।

जीर्णा स्त्री जॄ–क्त । स्थूलजीरके राजनि॰।

जीर्णास्थिमृत्तिका स्त्री । कल्पितमृत्तिकाभेदे ।

"अथ वक्ष्ये तु जीर्णास्थिमृत्तिकाकरणं प्रिये ! । शिलातलस्थले कुर्य्याद्दीर्घं गर्त्तं मनोहरम् । निक्षिपेत्तत्र नानास्थिसङ्घं हिंचलम्पटाम् । सर्जिक्षार मृत्क्षार कटुक्षार लवणानि च । गन्धकोष्णजलक्षेप नानाम्लानि तत्र च । एवं कृत्वा मासषट्कं दद्यात् पाषाणमृत्तिकाम् । कङ्कास्थ्यूर्द्ध्वं तदूर्द्ध्वन्तु कुर्य्याद्वल्मीकं शुभाम् । त्रिवर्षात्स्यायते सर्वमेकीभूतं इयत् समम् । ततो निष्काश्य तच्चूर्णं कृत्वा पात्राणि निर्म्मयेत् । प्रयस्त भोजनं तत्र सूचयेद्यद्दूषणम् । महाविषस्य संयोगात् तस्य भङ्गः प्रजायते । दूषीविषादिसंयोगात् पात्रे स्फोटा भवन्ति हि । तत्र क्षिप्त चतुर्भिः पात्र तथा प्रजायते । एवं ज्ञात्वा तत्र दद्यान्न

कदाचिद्विषादिकमिति रावण" शब्दार्थचिन्तामणिः ।

जीर्णि स्त्री जॄ–क्तिन् । जीर्णतायाम् । अमर ।

जीर्णोद्धार पु॰ जीर्णस्य पूर्वप्रतिष्ठापितलिङ्गादेरुद्धारः । १पूर्वप्रतिष्ठापितलिङ्गादे भग्नतादौ तस्याभ्युद्धारे तद्विधानम् अग्निपु॰ ६७ अ॰ उक्तं यथा ।

"भगवान् उवाच । जीर्णोद्धारविधिं वक्ष्ये भूषितां स्नपयेद्गुरुः । अचलां चिन्तयेद्गेहे अतिजीर्णां परित्यजेत् । व्यङ्गां भग्नां च शैलाढ्यां न्यसेदन्यां च पूर्ववत् । संहारविधिना तत्र तत्त्वान् संहृत्य देशिकः । सहस्रं नरसिंहेन हुत्वा तामुद्धरेद्गुरुः । दारवीं दाहयेद्वह्नौ शैलजां प्रक्षिपेज्जले । धातुजा रत्नजां वापि अगाधे वा जलेऽम्बुधौ । यानमारोप्य जीर्णाङ्गं छाद्य वस्त्रादिना नयेत् । वादित्रैः प्रक्षिपेत्तोये गुरवे दक्षिणां ददेत् । यत्प्रमाणा च यद्द्रव्या तन्मानां स्थापयेत् पुनः । कूपवापीतडागादेर्जीर्णोद्धारे महाफलम्" नि॰सि॰विशेषो यथा "अथ जीर्णोद्धारः स च लिङ्गादौ दग्धे भग्ने चलिते वा कार्य्यः । अथ चानादिसिद्धप्रतिष्ठितलिङ्गादौ भङ्गादिदुष्टेऽपि न कार्य्यः । तत्र तु महाभिषेकं कुर्य्यादिति त्रिविक्रमः । कर्त्ताऽमुकदेवस्य जीर्णोद्धारं करिष्ये इत्युक्त्वा पुण्याहं वाचयित्वा आचार्य्यमृत्विजश्च वृत्वा लिङ्गे ओं व्यापकेश्वरहृदयाय नमः ओं व्यापकेश्वरशिरसे स्वाहेत्येवं षडङ्गं कृत्वाऽघोरमन्त्रं शतं जप्त्वाऽग्निं प्रतिष्ठाप्याघोरेण घृतसर्पिषा सहस्रं हुत्वा इन्द्रादिभ्यो नाम्ना बलिं दत्त्वा जीर्णदेवं प्रणवेन सम्पूज्य ब्रह्मादिमण्डलदेवतानां होमं पूर्वोक्तं कृत्वा देवं प्रार्थयेत् । "जीर्णभग्नमिदं चैव सर्वदोषावहं नृणाम् । अस्योद्धारे कृते शान्तिः शास्त्रेऽस्मिन् कथिता त्वया । जीर्णोद्धारविधानञ्च अपराधहितावहम् । तदधिष्ठितां देव ! महरामि तवाज्ञयेति" । ततः क्षीराज्यमधुदूर्वाभिः समिद्भिश्चाष्टोत्तरसहस्रं शतं वा देवमन्त्रेण हुत्वाऽन्यमां दर्भेण लिङ्गं चासमार्ज्य सहस्रं शतं वा पायसेन हुत्वा लिङ्गं प्रार्थयेत । "लिङ्गरूपं समागत्य येनेदं समधिष्ठितम् । यायास्तु शमितं स्थानं सन्त्यक्त्वैव शिवाज्ञया । अत्र स्थाने च या विद्या सर्वविद्येश्वरैर्युता । शिवेन सह सन्तिष्ठेति" मन्त्रितजलेनाभिषिच्य विसर्जयेत् । ततोऽस्त्रमन्त्रितेन खनित्रेण खात्वा लिङ्गमानीय नद्यादौ वामदेवेन लिङ्गं प्रणवेन मूर्त्तिं क्षिपेत् । दारुजन्तु मधुनाऽक्ताघोरेण दहेत् । हेमरत्नादिमयन्तु दग्धं चलित

जन्ममरणशब्दौ दर्शयति। जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम्, अभावाज्जीवप्रादुर्भावस्य। जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति। देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्त इत्येतदनेन सूत्रेणावोचत्” भा०।

“नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः” सू०।

“अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी, स किं व्योमादिवदुत्पद्यते ब्रह्मण आहोस्विद्ब्रह्मवदेव नोत्पद्यते इति श्रुतिविप्रतिपत्तेर्विशयः। कासुचिच्छ्रुतिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्माद्ब्रह्मण उत्पत्तिराम्नायते कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते न चोत्पत्तिराम्नायत इति। तत्र प्राप्तं तावदुत्पद्यते जीव इति, कुतः प्रतिज्ञानुपरोधात्। (एकस्मिन् विदिते सर्वमिदं विदितम्) इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत, तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत। न चाविकृतः परमात्मैव जीव इति शक्यते विज्ञातुं, लक्षणभेदात्। अपहतपाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः, विभागाच्चास्य विकारत्वसिद्धिः। यावान् हि आकाशादिः प्रविभक्तः सर्वो विकारः, तस्य चाकाशादेरुत्पत्तिः समधिगता। जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखभाक् प्रतिशरीरं विभक्त इति तस्यापि प्रपञ्चोत्पत्त्यवसरे उत्पत्तिर्भवितुमर्हति” भा०।

अपि च “यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः” इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा ‘सर्व एत आत्मानो व्युच्चरन्ति’ इति भोक्तॄणामात्मनां पृथक् सृष्टिं शास्ति। “यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपास्तथाक्षराद्विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति” इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते सरूपवचनात्। जीवात्मानो हि परमात्मना सरूपा भवन्ति चैतन्ययोगात्। न च क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति, श्रुत्यन्तरगतस्यापि अविरुद्धस्याधिकस्यार्थस्य सर्वत्रोपसंहर्तव्यत्वात्। प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्याता “तदात्मानं स्वयमकुरुत” इत्यादिवत्। तस्मादुत्पद्यते जीव इत्येवं प्राप्ते ब्रूमः, नात्मा जीव उत्पद्यत इति कस्मादश्रुतेः, न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु। ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तम्, सत्यमुक्तम् उत्पत्तिरेव त्वस्य न सम्भवतीति वदामः। कस्मात् नित्यत्वाच्च ताभ्यः। चशब्दादजत्वादिभ्यश्च। नित्यत्वं ह्यस्य श्रुतिभ्योऽधिगम्यते, तथाजत्वमविकारित्वमविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मता चेति। न चैवंरूपस्योत्पत्तिरुपपद्यते, ताः काः श्रुतयः “न जीवो म्रियते” “स वा एष महानज” “आत्माऽजरोऽमृतोऽभयो ब्रह्म” “न जायते म्रियते वा विपश्चित्” “अजो नित्यः शाश्वतोऽयं पुराणः” “तत् सृष्ट्वा तदेवानुप्राविशत्” “अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि” “स एष इह प्रविष्ट आनखाग्रेभ्यः” “तत्त्वमसि” “अहं ब्रह्मास्मि” “अयमात्मा ब्रह्म सर्वानुभूः” इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति। ननु प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यते इत्युक्तम् अत्रोच्यते, नास्य प्रविभागः स्वतोऽस्ति, “एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा” इति श्रुतेः, बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानमाकाशस्येव घटादिसम्बन्धनिमित्तम्। तथा च शास्त्रम् “स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः” इत्येवमादि ब्रह्मण एवाविकृतस्य सतोऽस्यैकानेकबुद्ध्यादिमयत्वं दर्शयति। तन्मयत्वं चास्य तद्विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं स्त्रीमयो जाल्म इत्यादिवद्द्रष्टव्यम्। यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं तदप्यत एवोपाधिसम्बन्धान्नेतव्यम्, उपाध्युत्पत्त्या चास्योत्पत्तिस्तत्प्रलये च प्रलय इति। तथा च दर्शयति “प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति” इति। तथोपाधिप्रलय एवायं नात्मप्रलय इत्येतदपि, अत्रैव “मा भगवान्मोहमापीपदन्न वा अहमिमं विजानामि न प्रेत्य संज्ञास्ति” इति प्रश्नपूर्वकं प्रतिपादयति, “न वा अरे अहं ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति” इति। प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात्। लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव। अत ऊर्ध्वं विमोक्षायैव ब्रूहीति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात्। तस्मान्नैवोत्पद्यते प्रवि-

लीयते चेति” शारीरकसूत्रभाष्ये शङ्कराचार्य्यः ।

जीवोपाधि पु० ६त० । १स्वप्नसुषुप्तिजाग्रदवस्थासु । तयो हि जीवस्योपाधय । तत्र सुषुप्तौ बुद्ध्यादिसंस्कार-वासितमज्ञानमात्रमुपाधि । स्वप्ने जाग्रद्वासनामयं लिङ्गशरीरमुपाधि । जाग्रदवस्थायां सूक्ष्मशरीरस्य सह स्थूलशरीरमुपाधिरिति तत्तदुपाध्युपलक्षितसुषुप्त्यादेरप्युपाधित्वम् । “कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर” इत्युक्ते २अज्ञानस्य व्यष्टिशक्तिभेदे च तस्यास्तु समष्ट्यज्ञानकार्य्यत्वात् तदभिप्रायेणैव “मायोपाधिरयं जीवोऽविद्योपाधिरीश्वर” इत्यादौ मायाविद्ययोरभेदेऽपि भेदनिर्देशः ।

जीवोर्णा स्त्री ६त० । जीवतो मेषादेरोमणि “पवित्रमिन् करोति शुक्ल जीवोर्णानाम्” कात्या० श्रौ० ८।२।१६ । “जीवन्मेषरोमनिर्म्मितसूत्रनिर्म्मितम्” कर्क ।

जीव्या स्त्री जीवाय हिता यत् । १हरीतक्याम् २जीवन्त्या ३शे.फाल्दुग्धायाञ्च राजनि० ४जीवनोपाये त्रि० जीव्योपाय तु भगवान् मम किञ्चित् करोतु स” हरिवं० २६२अ० ।

जु रंहसि भ्वा० पर० अक० अनिट् । जवति । अजौषीत् । जुजाव । जव जवन । णिचि जावयति ते अजीजवत् न ततः स०ंजिजावयिषति । अस्य परस्मैपदित्व गतिकर्म्मत्वञ्च निघण्टुक्तम् “जयति जवति” इत्युपक्रमे इत्येते गतिकर्माण इत्युक्ते । वेदे गणव्यत्यास “इष्टि ये विश्वे मरुतो जुनन्ति” ऋ० ५।५८।२ । “येन पातमपां जुनाम” १।८६।५ । अयं भावे ऋ० भाष्ये गोत्र इति माधव । दीर्घान्तोऽपि । “वातो न जूत स्तनयद्भि रभ्रै” ऋ०४।१७।१२ ।

जु गतौ सौ० आ०प्र० सक० अनिट् । जवते । अजोष्ट । जुजुवे । “यद्धि मनसा जवते तद्वाचा वदति” तैत्ति० स०६।१।७।२ ।

जुग त्यागे भ्वा०पर० सक० सेट इदित् । जुङ्गति । अजुङ्गीत् जुजुङ्ग । कर्म्मणि इदित्त्वात् जुङ्ग्यते ।

जुगुप्सन न० गुप–निन्दर्या स्वार्थे सन्–भावे ल्युट् । १निन्दने अमर । कर्त्तरि युच् । २निन्दाशीले त्रि० ।

जुगुप्सा स्त्री गुप–निन्दायां स्वार्थे सन्–भावे अ टाप् । निन्दायाम् अम० । सा च बीभत्सरसस्य स्थायिभाव भावान्तरव्यभिचारिभावश्च । यथोक्त सा० द० “अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमा” । आस्वादाङ्कुरकन्दोऽसौ भाव स्थायीति सम्मत । रतिर्हासश्च शोकश्च क्रोधोत्साहौ भय तथा । जुगुप्सा विस्मयश्चेत्यमष्टौ प्रोक्ता शमोऽपि च” रसभेदे स्थायिभावभेदानुक्त्वा “दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा” ता लक्षयित्वा “शृङ्गारवीरयोर्हासोवीरे क्रोधस्तथा मत । शान्ते जुगुप्सा कथिता व्यभिचारितया पुन” देहजुगुप्सा च शौचकार्य्यं यथोक्त पात० सू० भा० “शौचात् स्वाङ्गजुगुप्सा परैरसंसर्ग” सू० “स्वाङ्गे जुगुप्सायां शौचमारभमाण कायावद्यदर्शी कायानभिष्वङ्गी भवति किञ्च परैरसंसर्ग कायस्वभावावलोकी स्वमपि कायं जिहासुर्म्मृज्जलादिभिराक्षालयन्नपि कायशुद्धिमपश्यन् कथं परकायैरत्यन्तमेवाप्रयतै संसृज्यते” भा० । देहे जुगुप्सायां वैराग्य भवति । तस्य निन्दनीयत्वे हेतु विवेकचूडामणावुक्तो यथा “मज्जास्थिमेदःपलरक्तचर्म्मत्वगाह्वयैर्धातुभिरेभिरन्वितम् । पादोरुवक्षो भुजपृष्ठमस्तकैरङ्गैरुपाङ्गैरुपयुक्तमेतत्” । याज्ञवल्क्येन तु देहस्थितिमुपवर्ण्य “इत्येतदस्थिरं वर्ष्म यस्य मोक्षाय कृत्यसौ” इत्युक्तं व्याख्यातं च मिता० “इतीदृशमस्थिरमशाश्वतं वपुरेतदशुचिनिधानं वपुरस्थिरमिति यस्य बुद्धिरसौ कृती पण्डितो मोक्षाय समर्थो भवति वैराग्यस्य नित्यानित्यविवेकस्य मोक्षोपायत्वात् अस्थिमूत्रपुरीषादिशाचुर्य्यज्ञानस्य वैराग्यहेतुत्वात् अत एव व्यास “सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिन । शरीरकस्यापि कृते मूढा पापानि कुर्वते । यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमादाय लोकोऽयं शुन काकांश्च वारयेदिति” । तस्मादीदृशकुत्सितशरीरस्यात्यन्तिकविनिवृत्त्यर्थमात्मोपासने प्रयतितव्यम्” ।

जुगुर्वणि त्रि० गॄ-स्तुतौ यङ्लुकि क्विपि वेदे नि० वन–सम्भक्तौ इन्–वनिम् ६त० । स्तोतृणां सम्भक्तरि । “मन्द्रजिह्वा जुगुर्वणी” ऋ० १।१४२।८ । [तत्रार्थे पु०राजनि० ।

जुङ्ग पु०जुगि–अच् । वृद्धदारकवृक्षे अमर । ण्वुल् । जुङ्गक

जुङ्गा स्त्री जुगि–अच् । वृद्धदारकवृक्षे रमानाथ ।

जुटक न० जट–संहतौ अच् पृषो० कन् पृषो० । जटायां शब्दर० । [ख्याते शिवाभेदे शब्दर० ।

जुटिका स्त्री जट–संहतौ वा० कन् पृषो० । (झुंटी)

जुड प्रेरणे चु० उभ०सक०सेट् । जोडयति ते अजूजुडत् त ।

जुड बन्धे (जोडादेश्रोया) । तुदा०कुटा०पर० सेट् । जुडति

अजुड़ीत् जुजोड । अजि जुड । [ धजि जोड ।
जुड गतौ तु० पर० सक० सेट् । जुडति अजोडीत् । जुजोड ।
जुत दीप्तौ भ्वा० आत्म० अक० सेट् । जोतते अजोतिष्ट । जुजुते । ऋदित् अजुजोतत् ।
जुन गतौ तु० पर० सक० सेट् । जुनति अजोनीत् । जुजोन ।
जुम्बक पु० वरुणे "पृथिवीं तथा जुम्बकाय स्वाहा" यजु० २५।८। "जुम्बकाय वरुणाय" वेददी० "अन्त्येव तिष्ठति जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति वरुणो वै जुम्बकः" शत० ब्रा० १२।७।६।५।
जुर्व पु० वधे भ्वा० पर० सक० सेट् । जूर्वति अजूर्वीत् । जूर्त्तः जूर्त्तिः । क्विपि जूः ।
जुल पेषणे चु० उभ० सक० सेट् । जोलयति ते अजूजुलत् त
जुवस त्रि० सोम० जु—वा० असुन् किच्च । वेगवति । "त्वा मः सोम मत्सो तवसे परा" ऋ० ८।६५।१८ ।
जुष तृप्तौ अक० तर्के सक० वा चु० उभ० पक्षे भ्वा० पर० सेट् । जोषयति ते जोषति अजूजुषत् त अजोषीत् ।
जुष प्रीतौ अक० सेवायां सक० तुदा० आ० सेट् । जुषते अजोषिष्ट जुजुषे जुषमाणः । ईदित् । जुष्टः । जीत् वर्त्तमाने क्त । जुष्ट । "पीनस्कन्धोऽजुषत शुभ विपक्षबन्धु" भट्टि "यत्र देवा अजुषन्त विश्वे" यजु० ४।११ "इन्द्र । जुषस्व मरुद्" ऋग्० ७।१।११ "अजा मेकाम्—अजो ह्येको जुषमाणोऽनुशेते" श्वेताश्वतरोप० "एवैव दुर्निर्जुषता सराममाम्" भा० व० १२५८६ श्लो० । "सत्त्व जुषाणाय भवाय निष्कामम्" भाग० ८।५।२१ । 'परजुष्टनयाविवर्त्तमान' नैषधि । आर्षे गणव्य त्यमात् छन्दा दित्वम् । "देवा नागदर्शनार्थं छविर्जुषन्ति" भा० व० १२७८। आर्षत्वात् पदव्यत्यय । "पारिजातगुणान् सर्वान् जुषन्ति यदि नारद ! । देवानां मानुषाणां च म विशेषो भविष्यति" हरिव० ७०७१ । वेदे जोजिषत् "उपेमसृक्षाति जोजिषद्धि" ऋ० २।१५।१ "जुषी प्रीतिसेवनयो लेट्यडागम । विकरण सिप् । इडा गमश्च" भा । माद्य पममेर्थकस्य णादिर्योल्यतत्तदर्थयुक्तो सेवमानौ ।
जुष्कक पु० जुष—कक् तत कन्यायां कन् । यूथे शब्दच० ।
जुष्ट न० जुष—कर्म्मणि क्त । १उच्छिष्टे । २सेविते त्रि० मेदि० "परजुष्टनयाविवर्त्तमान "दीधिति । "पुण्यो महाब्रह्म समूहजुष्टः" भट्टिः । [सेवने न० ।
जुष्य त्रि० जुष—कर्म्मणि क्यप् । १सेव्ये भावे क्यप् । २अपशब्द

जुहुराण पु० । हुर्च्छ—यङ्—यानच् यलो लुक् सलोपश्च । १चन्द्रे पु० उज्ज्वल० । २कौटिल्यकारिणि त्रि० । "युयोध्यस्मज्जुहुराणमेन " ह उ० । "जुहुराण कुटिलकारिणम्" भाष्यम् ।
जुहुवान पु० हु—कर्म्मणि कानच् । १अग्नौ २वृक्षे च । ३शिशिरादौ कठिनहृदये इत्युज्ज्वल रमध्यर्थे तदर्थता कृष्णे जुहुवानिति हुवानीति पाठ समीचीन । यत्तत्र शिशिरप्रपाठात् जुहुवान इत्यपपाठ जुहुराण इत्येव पाठ समुचित ।
जुहू स्त्री जुहोत्यनया हु—क्विप् नि० द्वित्व दीर्घश्च । यज्ञिये घृताद्याधानपात्रभेदे सा च पलाशघटिता "पालाशी जुहू" कात्या० श्रौ० ।।३।२४ । "जुहोत्यनया जुहू स्रुक् सा च पालाशी पलाशवृक्षकाष्ठनिर्म्मिता" कर्क । "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" श्रुति । "पर्णमयी पलाशकाष्ठमयीत्यर्थे " । एषा चानारभ्याधीताऽपि प्रकृत्यर्था यथोक्तं ता० तन्त्र० आ० ।
'अनारभ्याधीतानां प्रकृतिगामित्वमिति न्यायेन प्रकृतङ्गामित्वगमात् । स च तृतीयाध्याये षष्ठपादस्य प्रथमाधिकरणे पर्णताक्यतुल्यत्वाभिहित । "प्रकृतौ विकृतौ वा सामान्येन चोदनौ चेत् । प्रकृतेरेव वा तुल्याहवनाद्योरधौ । जुहूमाश्रित्य पर्णत्वविधि प्रकृतिमात्रगः । च कैनोभयार्थमेकतौ निर्णयार्थ किम्", अनारभ्य श्रूयते "यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोतीति । इत्याद्यभिचरितकमुक्तमन्त्रवर्त्तीं जुहूमाश्रित्य तदेव पर्णद्रव्यं वाक्येन विधीयते । या जुहू सा पर्णमयीति वाक्यगत प्रकृतिविकृत्योस्तुल्यवेव प्रवर्तते उभयत्राप्यनुभूतायां जुह्वा सत्त्वात् । तस्मात् प्रकृतिविकृत्योरुभयोरयं विधिरिति प्राप्ते, ब्रूम विकृतय विधिर्निज्ञो चोदकात् पर्णत्वविधायते पश्चाद्धा । नाद्य आत्मरूपतया जुह्वा चोदकमन्त्रेणासम्भयात् । द्वितीय तु पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते, तत्र पुनर्विधिवैयर्थ्यादयं विधि प्रकृतिमात्रग '। जुहोत्यस्यां दिवि—आधारे क्विप् । २प्राग्देशे प्रङ्मुखतयैव होमकरणात् तस्यास्तथात्वम् ।
जुहूरा(वा)ण पु० हु—ह्वृ र(व)णति र(वण—अण् । १अध्वर्यौ । २अग्नौ । ३चन्द्रे विश्व । [व: । अग्नौ शब्दर० ।
जुहूवत् पु० जुहूपात्र होमोद्देश्यतयास्त्यस्य मतुप् मा० मस्य
जुहोति स्त्री हु—धात्वर्थनिर्द्देशे श्तिप् । होमभेदे "यजति

जुहोतीनां कोविशेषः" कात्या० श्रौ० १।२।५। इति प्रश्ने यजतिलक्षणसङ्क्षा "उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः" १।२।७इति लक्षितम्। "उपविष्टेन कर्त्रा होमो येषु त उपविष्टहोमाः स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः ये उपविष्टहोमाः स्वाहाकारप्रदानाश्च ते जुहोतयः इत्युच्यन्ते" कर्क० अतोऽस्य पुंस्त्वमेव स्त्रीत्वोक्तिः प्रामादिकी। "क्षरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः" मनुः।

**जुह्वास्य** पु० जुहूरास्यमिवास्य। होमीयवह्नौ। "हव्यवाहो जुह्वास्य" ऋ० १।१२।६। [जूत।

**जू** गतौ सौत्र० सक० प० सेट्। जवति अजावीत् जुजाव।

**जू** स्त्री सौ०जू–गतौ यथायथं कर्त्तृ भावादौ क्विप्। १आकाशे २सरस्वत्यां ३पिशाच्यां च ४जवने शब्दरत्ना० ५जवयुक्ते त्रि० विश्वः। ६त्वरागमने ७गमने च स्त्री मेदि०।

**जूट** पु०जट–सङ्घाते अच्–पृषो०।१जटासंहतौ बन्धे २जटायाम् शब्दार्थचि०। "जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम्" दुर्गाध्यानम्। "भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटाजटाः" मालतीमा०। स्वार्थे क तत्रार्थे।

**जूत** त्रि० सौ०जू–क्त। १गते २प्रासृष्टे च। "रथो हं वा मृतजात्यभिजूत" ऋ० ३।५८।८। "अभिजूतः स्तोतृभिराकृष्टः"भा०। ३दत्ते च"युवं श्वेत मेदव इन्द्रजूतम्" ऋ०।१।११८।९। "इन्द्रजूत इन्द्रेण जूत दत्तम्" भा०।

**जूति** स्त्री जु–रंहसि भावे क्तिन् सातिहेतीत्यादिना नि०। १वेगे अमरः। "उत स्मास्य पनयन्ति जना जूतिं कृष्टिप्रो अभिभूतिमाशोः" ऋ० ४।३८।९ "मनो जूतिर्जुषतामाज्यस्य" यजु०२।१६। "जूतिः जवतेर्गतिकर्मणः" वेददी०। अत्र मनो ज्योतिः इति पाठः प्रामादिकः। मेधा हृदिष्टुतिर्मतिर्मनीषा जूतिः स्मृतिः" ऐ० उ० "जूतिर्वेगतसो रुजादिदु खित्वाभाव "२आयोक्तार्थे च।

**जूतिका** स्त्री जूत्या कायति कै–क। कर्पूरभेदे राजनि०।

**जूर** वयोहानौ अक० वधे सक० दिवा० आत्म० सेट्। जूर्य्यते अजूरिष्ट। ईदित्। जूर्णः। कोपे च "इच्छाविभङ्गाकुलमानसत्वात् भर्त्रे नखेभ्यश्च चिरं जुजूरे" भट्टिः।

**जूर्ण** पु० जूर–क्त। (उलुखड़) तृणभेदे रत्नमालायां जूर्णाख्येति तत्पर्य्याये निर्द्देशात् तस्य तथात्वम्। जूर्णेति आख्या यस्य जूर्णाख्योऽप्यत्र।

**जूर्णाह्वय** पु० जूर्णमाह्वयते काण्डेन स्पर्द्धते आ+ह्वे–बा० श। देवधान्ये (देधान) प्रेमच०।

**जूर्णि** स्त्री ज्वर–रोगे नि०ऊठ् जूर–वेगे वा नि०।१स्त्रीरोगे २वेगे।३आदित्ये ४देहे ५ब्रह्मणि च संक्षि०उणा०। जूर कोपे नि०। ६क्रोधे निघण्टुः निरुक्ते ६।४।१। "अस्त्रानिरक्तिरन्या दर्शिता"जूर्णिर्जवतेर्वा द्रवतेर्वा दुनोतेर्वा" तत्र दृष्टौ०। तेन ७वेगयुते ८द्रुवयुते ९तापके च। "क्षिप्रा जूर्णिर्न वक्षति" ऋ०।१।१२९।८। "जूर्णिर्वेगवती सेना" भा०। १०स्तुतिकुशले च। "ऋष्वां जूर्णिर्होत ऋषूणाम्" ऋ०१।१२७।१०। "जूर्णिः स्तुतिकुशल" भा०।

**जूर्त्ति** स्त्री ज्वर–भावे क्तिन् ऊठ्। ज्वरे।

**जूर्य्य** त्रि० जूर–कर्त्तरि बा०यत्। १जीर्णे "रथं युरीव जूर्य्यं" ऋ० ६।२।७। "जूर्य्यं जीर्णं" भा० २वृद्धे च।

**जूष** वधे भ्वा० उभ०सक०सेट्। जूषति ते अजूषीत् अजूषिष्ट जुजूष षे। जूष।

**जूष** पु न० यूष+पृषो०। मुद्गादिक्काथे भरतः।

**जूषण** न० जूष–ल्यु। वृक्षभेदे (घाटफुल) शब्दच०।

**जॄ** न्यक्कारे भ्वा० पर० सक० अनिट्। जरति अजार्षीत्। जजार।

**जृभ** जृम्भे (हाइतोला) गात्रवैवर्ण्ये च भ्वा० आत्म०अक० सेट् इदित्। जृम्भते अजृम्भिष्ट। जजृम्भे। "आत्मानमाधाय मधुर्जजृम्भे" कुमा० जृम्भा जृम्भः। जृम्भितः। "जृम्भते मुहुरासीना बाला गर्भभरालसा" सा० द०।

**जृभ** जृम्भणे भ्वा० आ० अक० सेट्। जृभते अजृभिष्ट जजृभे। ईदित्। जृब्ध।

**जृम्भ** पु न०जृभि–भावे घञ् अर्द्ध चा०(हाइतोला)१गात्रवैवर्ण्यापादके २मुखविकाशकारके च व्यापारभेदे। भावे अ। तत्रार्थे स्त्री। जृम्भा च श्रमगर्भादिजनितजाड्यकार्य्यं यथाह सा०द०"आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्" तत्कारकवायुश्च देवदत्तः। "विजृम्भणे देवदत्तः शुद्धस्फटिकसन्निभः" पदार्थदर्शे योगार्णवः। "क्षुतोत्पन्नजृम्भासु जीवोद्विष.कृतिध्वनि। गुरोरपि च कर्त्तव्यमन्यथा ब्रह्महा भवेत्" तिथित०। ३विकाशे ४विस्फारे च पु० शब्दच०। "पीत्वैक श्वासमन्त्र पुनस्त्यजति वेगवान्। आनन्मुनिद्रायुक्तस्य स जृम्भा इति कथ्यते" "जृम्भाल्पयं समीरणात्। जृम्भावेगे उदताद्ने शोभने शयने नरम्। स्थापयेत् तेन नियमात् जृम्भावेग प्रशाम्यति। जृम्भाद्वेगजय प्राति फलुद्वेग भङ्गात्। भोजनात् स्वादुभोज्यं ना तथा तत्र प्रभक्षणात्" वैद्यकम्।

**जृम्भक** त्रि० जृम्भ–ण्वुल्। १जृम्भाकारके २रुद्रगणभेदे

कक्ष समन्तमनेकवातायनम् । अस्य कूटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोत्सेधां पिण्डिकां कारयेत् कपाटवर्जम् । मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्रं पुरुषप्रमाणं मृण्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सपिधानं कारयेत् । तञ्च खादिराणामाश्वकर्णादीनां वा काष्ठानां पूरयित्वा प्रदीपयेत् । स यदा जानीयात् साधुदग्धानि काष्ठानि गतधूमानि अवतप्तञ्च केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत् प्रवेशयंश्चैनमनुशिष्यात् । सौम्य । प्रविश कल्याणायारोग्याय चेति । प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः न च त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा विमोक्तव्या आ प्राणोच्छ्वासात् । भ्रश्यमाने ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्यास्तस्मात् पिण्डिकामेनां न कथञ्चन त्यजेथाः त्वं यदा जानीयाः विगताभिष्यन्दमात्मानं सम्यक्प्रस्रुतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनागौरवमिति । ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः । निष्क्रम्य च न सहसा चक्षुषो परिपालनार्थं शीतोदकमुपस्पृशेथाः । अपगतसन्तापक्लमस्तु मुहूर्त्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयाः” अस्य स्वेदार्थकता शब्दकल्पद्रुमे उक्ता चिन्त्या “भूगृहेषु च जेन्ताके उष्णगर्भगृहेषु च । विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना सुखम्” इति आधारकुपगृहादिषाहचर्यात् गृहभेदस्यैवोपलम्भात् । उपसंहारे च इति जेन्ताकस्वेद इति कीर्त्तनं समीचीनमुत्तरम् । इति जेन्ताकः स्वेद इति सविसर्गपाठोऽनाकरः ।

जेन्य त्रि॰ जि–जन+णिच्–वा ना॰ जेय्य । १जयशीले “अग्निर्येषु जेन्यो न विश्पतिः” ऋ॰ १।१२८।७ । “जेन्यः जयशील” भा॰ । २उत्पाद्ये च “जनिष्ट हि जेन्यो अग्रे अह्नाम्” ऋ॰ ५।१।५ । “जेन्य उत्पाद्य” भा॰ ३जेतव्ये च “दुग्धं पयो वृषणः जेन्यावसू” ऋ॰ ७।७४।२ । “जेन्यं वसु धनं ययोः । वेदे पूर्वपददीर्घ । “जेन्यावसू जेतव्यधनौ” भा॰ । “गन्तं देवेभिर्जेन्यावसू” ऋ॰ ८।१८।७ ।

जेमन् त्रि॰ जि–मनिन् । १जयशीले “उदन्यजेव जेमना मदेरू” ऋ॰ १०।१०६।६ । “जेमना जयशीलौ औत्सामे आच् छान्दसो दीर्घाभाव । लोके तु जेमा जेमानौ इत्येव । जेतुर्भावः इमनिच् तृणो लोपः । २जेतृभावे जये च ३जयसामर्थ्ये पु॰ । “जेमा च महिमा च मे” यजु॰ १८।४ ।

जेमन न॰ जिम–भावे ल्युट् । भक्षणे अमरः ।

जेय त्रि॰ जि–कर्म्मणि यत् । जेतव्यमात्रे अमरः ।
“देवैरजेया निर्जितास्तास्त्वर्जुनेन । तदा नायसे विजयाय सञ्जय !” भा॰ आ॰ १अ॰ । “विजयस्व रणे नृप कौन्तेय ! जेयः क्षितिपतिस्तदा” भा॰ आनु॰ ६अ॰ ।

जेष गतौ भ्वा॰ आत्म॰ सक॰ सेट् । जेषते अजेषिष्ट ऋदित् अजिजेषत् त । “अपां तोकस्य तनयस्य जेषे” ऋ॰ १।११०।११ ।

जेह यत्ने भ्वा॰ आत्म॰ अक॰ सेट् । जेहते अजेहिष्ट । ऋदित् अजिजेहत् त । “पातमभयो जेहमानम्” ऋ॰ १।११०।५ “जेहमान प्रयतमानम्” भा॰ । निरुक्ते अस्य गतिकर्मतोक्ता “दहमानपवैर्जेहमानस्य” ऋ॰ १०।४।६ । क्वचित् व्याप्त्यर्थताऽपि “सुगेभिररेणुभिर्जेहमानं पतन्ति” ऋ॰ १।१६४।४ । “जेहमानं यत्नदेशं व्याप्नुवत्” भा॰ । गत्यर्थकधातो प्राप्त्यर्थकत्वात् प्राप्त्यर्थतापि । “ये तातृपुर्देवत्रा जेहमाना” ऋ॰ १०।१५।८ । “जेहमानाः प्राप्ताः” भा॰ । [ ओदित् जानः ।

जै क्षये भ्वा॰ पर॰ अक॰ अनिट् । जयति । अजासीत् ।

जैगीषव्य पु॰ जिगीषोरपत्यं गर्गा॰ यञ् । योगविदि मुनिभेदे तत्कथा भा॰ श॰ ५१ अध्याये शा॰ पर्वणि च २२५ अ॰ दृश्या । “असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित्” भा॰ आ॰ ११ अ॰ । स्त्रियां लोहिता॰ नित्यं ष्फ षित्त्वात् ङीष् । जैगीषव्यायणी ।

जैत्र त्रि॰ जेतैव जेतृ+प्रज्ञादि॰ अण् । १जयशीले अमरः । २पारदे पु॰ ३औषधे न॰ राजनि॰ । “रथाय जैत्रः प्रदिशन्निव त्वराम्” किरा॰ “शरीरिणा जैत्रशरेण यत्र” माघ । “देवस्तमुवाच जैत्रमध्यास्त राघवः” रघु । ततश्चतुरर्थ्यां कृशा॰ कञ् । जैत्रायणि जैत्रादूरदेशादौ त्रि॰ ।

जैत्ररथ त्रि॰ जैत्रो रथोऽस्य । जयशीले हला॰ ।

जैत्री स्त्री जेत्रैव जैत्र+स्वार्थे अण् ङीप् । जयन्तीवृक्षे । शब्दर॰ । [ उपासके च ।

जैन पु॰ जिन एव, जिनो देवतास्य वा अण् । १अर्हति २अर्ह॰

जैपाल पु॰ जयपाल+पृषो॰ । जयपालवृक्षे हिकृपकोष॰

जैमिनि पु॰ मुनिभेदे स च सामवेदे वेदव्यासशिष्य यथाह भाग॰ १२।६।८ । “साम्नां जैमिनये प्राह तथा छन्दो-

नसंहिताम्” स च धर्ममीमांसां प्रणीतवान्। तच्च शास्त्रं द्वादशाध्यायात्मकम्। तत्प्रतिपाद्यविषयाश्चाधिकरणमालायां माधवाचार्य्येण सङ्गृहीता यथा

“धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः। प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः। अधिकारोऽतिदेशश्च सामान्येन विशेषतः। ऊहोऽबाधश्च तन्त्रञ्च प्रसङ्गश्चोदिताः क्रमात्”। “लक्षणान्यध्यायाः। द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी। तादृशस्य द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः। प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद्द्वादशानामध्यायानां विषयाः। तत्र प्रथमेऽध्याये विध्यर्थवादादिरूपं धर्मे प्रमाणं निरूपितम्। द्वितीये यागदानादिकर्मभेदः। तृतीये प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम्। चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्तानुष्ठानम्, न तु क्रत्वर्थत्वप्रयुक्तमित्येवमादयः। पञ्चमे क्रमनियतिविशेषत्वादयः। षष्ठे कर्तुरधिकारो नान्धादेरित्यादयः। सप्तमे समानमितरच्छ्येनेनेत्यादिप्रत्यक्षवचनेनाग्निहोत्रादिनामानुमितवचनेन च सामान्यतोऽतिदेशः। अष्टमे सौर्य्यं चरुं निर्वपेदित्यत्र निर्वापश्रुतिसहितेन देवतानिर्देशैकदेवतात्वमौषधद्रव्यकत्वमित्यादिलिङ्गैराग्नेयपुरोडाशेतिकर्त्तव्यतैव नान्यस्येत्येवमादिर्विशेषतोऽतिदेशः। नवमे प्रकृतावग्नये जुष्टं निर्वपामीति पठिते मन्त्रे विकृतौ सौर्य्यचरावग्निपदपरित्यागेन सूर्य्यपदप्रक्षेपेण च सूर्य्याय त्वा जुष्टं निर्वपामीत्येवमाद्यूहः। दशमे कृष्णलेषु चोदकप्राप्तस्यावघातस्य वितुषीकरणासम्भवेन लोप इत्येवमादिर्बाधः। एकादशे अङ्गानामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इत्यादि तन्त्रम्। द्वादशे प्रधानस्य पशोरुपकारायानुष्ठितेन प्रयाजाद्यङ्गेन पशुपुरोडाशेऽप्युपकार इत्यादिः प्रसङ्गः। पादानामसाधारणविषयं दर्शयति” “विध्यर्थवादमन्त्रस्मृतयो नाम चेति चतुर्विधम्। प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम्” “प्रथमे पादे विधिरूपं मानमीरितम्। द्वितीयेऽर्थवादरूपम्। अर्थवादो मन्त्रस्याप्युपलक्षणम्। तृतीये स्मृतिरूपम्। स्मृतिराचारस्याप्युपलक्षयति। चतुर्थे उद्भिदादिनामरूपम्” “उपोद्घातः कर्मभेदमानं तस्यापवादगौ। प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः”।

“तृतीयाध्यायस्य प्रथमे पादे आख्यातमेवापूर्वबोधकं सर्वंशब्दाः इत्यादिकं कर्मभेदचिन्तोपयुक्तः उपोद्घातो वर्णितः। द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः। तृतीये रथन्तरादीनां कर्मभेदप्रामाण्यापवादः। चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः”। “श्रुतिर्लिङ्गं च वाक्यादि विरोधप्रतिपत्तयः। अनारभ्योक्तिबह्वर्थास्त्वाश्वष्टपादगाः”। “तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता। द्वितीये लिङ्गम्। तृतीये वाक्यप्रकरणादि। चतुर्थे निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसद्भावः। पञ्चमे प्रतिपत्तिकर्माणि। षष्ठेऽनारभ्याधीतानि। सप्तमे बहुप्रधानोपकारकप्रयाजादीनि। अष्टमे याजमानानि”। “प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता। फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगा”। चतुर्थाध्यायस्य प्रथमे पादे प्रधानभूतामिक्षा दध्यानयनस्य प्रयोजिकेत्यादिप्रधानप्रयोक्तृत्वं विचारितम्। द्वितीये त्वप्रधानं वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम्। तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता। चतुर्थे राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता”। “श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्धने। श्रुत्यादेर्बलता चेति पञ्चमाध्यायपादगाः”। “पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः क्रमो निरूपितः। द्वितीये वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादि क्रमविशेषः। तृतीये पञ्चप्रयाजादीनामावर्त्तनेनैकादशत्वमित्यादिवृद्धिः। अदाभ्यग्रहचित्रिण्योरनावृत्तिरित्यादि वृद्ध्यभावः। चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः। “अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने। दीक्षा सत्त्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः”। षष्ठाध्यायस्य प्रथमे पादे कर्माधिकारः कर्तुरन्धत्वादिनीरोगत्वेन नियतः। यस्य स्त्रिया अस्ति योऽस्ति स च पत्या सहेत्येवमादिनाधिकारी निरूपितः। द्वितीये सत्राधिकारिणां प्रत्येकं तत्तत्फलम्। दर्शपूर्णमासयोः कर्मैक्यानियमः। काम्यकर्म समापनीयमित्येवमादयोऽधिकारिधर्मा उक्ताः। तृतीये द्रव्यस्य प्रतिनिधिरुक्तः। देवादीनामग्न्यादीनामप्रतिनिधिरित्येवमादिना निरूपणम्। चतुर्थे पदार्थलोपनं विचारितम्। अपराह्णे सत्याधानेन यजेत। दृष्टार्थनाशे सति प्रेषः प्रायश्चित्तमित्यादिकम्। पञ्चमे दक्षापराधेन चन्द्रोदये सान्नाय्यदर्शेऽपि प्रायश्चित्तम्।

अथ इत्यादिक विकल्पापवादत्वेनेत्युभयं चिन्तितम्। तदेव द्वादशाध्यायगतेषु षष्टिसंख्यकेषु पादेषु प्रतिपाद्या अर्थाः सङ्गृहीताः। ननु यथोक्तेभ्य पादार्थेभ्योऽन्ये-ऽप्यर्था बहवस्तत्तत्पादेषु विचार्यन्ते तेषां कथं तत्तत्-पादान्तर्भाव इत्याशङ्क्याह" "उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः। तत्तत्पादगतत्वेन विचारान्तरसङ्ग्र-येत्" "यथोक्तपादप्रतिपाद्यादन्येष्वर्थेषु यथोचितं कश्चिदुपोद्घातः कश्चिदपवादः कश्चित् प्रसङ्गपतितः कश्चि-दनुप्रसङ्गपतित इत्येवं पादान्तर्भावः द्रष्टव्य"। जैमिनिश्च भारतान्तरं चकार तस्य जैमिनिभारतेति संज्ञा तन्नामस्मरणे च वज्रपातभयवारणं यथा "जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च। पुलस्त्यः पुलहश्चैव पञ्चैते वज्रवारकाः" शब्दकल्पद्रुमधृतपुराणवाक्यात् "मुने कल्याणमित्रस्य जैमिनेश्चापि कीर्त्तनात्। विद्युदग्निभयं नास्ति पठिते च गृहोदरे" इत्युक्तेरपि तत्कीर्त्तनस्य विद्युदग्निभयनिवारकता। तत इदमर्थे छ। जैमिनीय जैमिनिप्रणीतशास्त्रादौ। "जैमिनीये च वैयासे विरुद्धांशो न कश्चन" शास्त्रप्रवचनभाष्यधृतपराशरोपपु०। "जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम्" माधव।

जैव त्रि० जीवस्येदम् अण्। १आत्मसम्बन्धिनि २बृहस्पतिसम्बन्धिनि ३तत्क्षेत्रे धनूराशौ मीनराशौ तदधिदेवताके ४पुष्यनक्षत्रे। ५तदीये वारे च "सिताद्रिचन्द्रा जैवस्य त्रिखाङ्गाश्च भृगोस्तथा" सू० सि०।

जैवन्तायन पुस्त्री जीवन्तस्य गोत्रापत्यं वा फञ्। जीवन्तर्षेः गोत्रापत्ये। स च यजुर्वेदप्रचारकप्रधानगतः। यथाह "जैवन्तायनाञ्च रैभ्याञ्च रैभ्य" शत० ब्रा० १४।७।३।२६ पक्षे इञ्। जैवन्ति तत्रार्थे स्त्रियां ङीप्।

जैवन्तायनि त्रि० जीवन्तस्यादूरदेशादि कर्णा० चतुरर्थ्यां फिञ्। जीवन्तस्यादूरदेशादौ।

जैवलि पु० जीवलस्य राज्ञोऽपत्यम् इञ्। जीवलस्यापत्ये प्रवाहणे "स ह प्रवाहणो जैवलिरुवाचानवद्वै किल ते गौतम! साम" छा० उ०।

जैवातृक पु० जीवयत्यनेन लोकं जीवति वा श्वाल—कन्—हृष्टिश्च। १चन्द्रे २कर्पूरे अमर। ३पुत्रे सचिप्रसा०। ४औषधे हेम० ५दीर्घायुष्के त्रि० मेदि०। "जैवातृक! ननु श्रूयते पतिरस्याः चिन्तिकाया प्रहारमवासीत्" इत्युक्त०। [जीवस्यादूरदेशादौ।

जैवि त्रि० जीवस्यादूरदेशादि सुतङ्गमा० चतुरर्थ्यां ञि।

जैवेय पुस्त्री जीवस्य गुरोरपत्यं शुभ्रा० ढक्। जीवस्यापत्ये कचनामके मुनौ। जीवाया मौर्व्या इदम् स्त्रीत्वात् ढक्। २ज्यासम्बन्धिनि त्रि०।

जैह्माशिनेय पु० जिह्माशिनोऽपत्यं शुभ्रा० ढक् दाण्डिना० नि० टिलोपः। जिह्माशिनोऽपत्ये।

जैह्म्य न० जिह्मस्य भावः ष्यञ्। कौटिल्ये। "जैह्म्यञ्च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम्" मनु। "निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम्। रजस्वलामुखास्वादः सुरापानसमानि तु" याज्ञ०।

जोङ्ग न० जुङ्गते वर्ज्यते जुगि—वर्जने कर्मणि अप् पृषो०। कालीयके गन्धद्रव्यभेदे हारा०।

जोङ्गक न० जुगि—ण्वुल् पृषो०। अगुरुचन्दने अमरः।

जोङ्गट पु० जुगि—अटन् पृषो०। गर्भिण्या अभिलाषे दोहदे (साद) हारा०।

जोटिङ्ग पु० जुट—इन् जोटिं गच्छति गम० ड किच्च। १महादेवे २महाव्रतिनि च त्रिका०। [सि० कौ०।

जोड पु० जुड—बन्धने घञ्। बन्धने। अक्षिजोडम्

जोन्ताला स्त्री जु—क्विप् तस्मान्तमालाति आ+ला—क। देवधान्ये हेमच०।

जोष पु० जुष—भावे घञ्। १प्रीतौ २सेवने च "को वां जोष उभयो" ऋ० १।१२०।१। ३सुखे न० शब्दर०।

जोषण न० जुषी—प्रीतिसेवनयोः भावे ल्युट्। १प्रीतौ २सेवने च। स्वार्थे णिच्—भावे युच्। तत्रार्थे स्त्री "उत्तरे निगमाः यथेष्टं जोषणा श्रुतेः" कात्या०श्रौ०५।१२।१६।

जोषम् अव्य० जुष—बा० अम्। १तूष्णीमित्यर्थे "इति जोषमवस्थित द्विष" माघ। २सुखे च अमर।

जोषा स्त्री जोषयति जुष—णिच्—अच्। १योषिति शब्दर० "चन्द्रेण जुष्टातो समयचयान्तयाऽय व्युत्सादिताः" उज्ज्वलदत्तः। [२योषिति च।

जोषिका स्त्री जु—स सज्ञायां कन्। १जालिकायां शब्दर०।

जोषित् स्त्री जुष "हृसृरुहिजु(षि)युषिभ्यः" उणा० इति। स्त्रीमात्रे शब्दर०। हलन्तत्वात् वा टाप्। जोषिताऽपि तत्रार्थे शब्दर०।

जोष्टृ त्रि० जुष—तृच् वेदे बा० इडभावः। सेवके। "उपेममस्य जोष्टार" ऋ० ४।४१।९। "जोष्टारः सेवका" भा०। लोके तु जोषितृ इत्येव।

जौमर न० जुमरेण निर्वृत्तं अण्। १जुमरनन्दिकृते संक्षिप्तसाराख्ये व्याकरणे २तदध्येतरि त्रि०।

**जौलायन** पु॰ जुलस्यापत्यम् इञ् तत इञन्तत्वात् यूनि फक्। जुलस्य यूनपत्ये। तत ऐषुकार्य्या॰ विषयार्थे भक्तल्। जौलायनभक्त तदीयविषये त्रि॰।

**जौहव** त्रि॰ जुह्वामवदाने योग्यम् जुहू—अण्। जुह्वपदार्थेऽवदानयोग्येषु हृदयादिषु "हृदय जिह्वा क्रोड सव्य-सक्थिपूर्वनडक पार्श्वे यकृद्वृक्कौ गुदमध्य दक्षिणा श्रोणिरिति जौहवानि" कात्या॰ श्रौ॰ ६।७।६। "जुह्वा-मवदानयोग्यानि प्रधानयागसाधनानि" कर्कः।

**ज्ञ** पु॰ ज्ञा—क। १बुधग्रहे "युगे सूर्यज्ञशुक्राणां खचतुष्कर-दार्णवाः" सू॰ सि॰। २पण्डिते "क्रियासु बाह्यान्तरमध्य-मासु सम्यक् प्रयुक्तासु न कम्पते ज्ञ" प्रश्नो॰। ३ब्रह्मणि ४मङ्गलग्रहे च धरणि॰। सुपि उपपदे तत्तत्पदार्थज्ञा-तरि त्रि॰। "आदेश देशकालज्ञः" रघुः "विधिज्ञो विधिमास्थाय" इति म॰। स्वार्थे क। ज्ञक ज्ञातरि त्रि॰ स्त्रियां वा अत इत्त्वम् ज्ञका ज्ञिका।

**ज्ञप** मारणे, आलोके, निशाने, तोषणे स्तुतौ च चुरा॰ उभ॰ सक॰ सेट् घटा॰। ज्ञपयति ते अजिज्ञपत्-त। ज्ञाक्म इत्यनेनैवेष्टसिद्धौ ज्ञपपाठश्चुरादिरुभयपदीति मते फलवत्कर्त्तरि परस्मैपदार्थं इति धातुप्रदीपः। वस्तुतस्तु ज्ञप्तिपदमनेनैव निष्पादितम्। तेन अभिर्दि-ष्टार्थतया ज्ञप्तिरिह ज्ञानम्। अतएव प्रश्नौ न नीपसे इत्यत्र अस्यैव सनन्तस्य निष्पादितेन नीप्सशब्देन ज्ञातु-मिच्छा प्रतिपाद्यते। एव ज्ञानपर्य्याये "प्रतिपज्ज्ञप्तिचेत ना इत्यमर" इति दुर्गादासः। ज्ञप ज्ञाने च इति पाणिनिः। अधिकं ज्ञाधातौ वक्ष्यते।

**ज्ञपित** त्रि॰ ज्ञप—ज्ञाने क्त नि॰ वा इट्। ज्ञाते अमरः। इडभावे। ज्ञप्तोऽप्यत्र।

**ज्ञप्ति** स्त्री ज्ञप—भावे क्तिन्। १बुद्धौ अमरः २मारणे ३तोषणे ४तीक्ष्णीकरणे ५स्तुतौ च।

**ज्ञा** बोधे क्र्या॰ पर॰ सक॰ अनिट्। जानाति अज्ञासीत्। जज्ञौ। ज्ञाता ज्ञान ज्ञातिः ज्ञात जज्ञिवान्।

अनु+अनुमतौ अनुमतिश्च स्वयंप्रवृत्तस्य निषेधनाभावेन स्वाभिमतत्वज्ञापनेन प्रवर्त्तनम्। "त देवास्रो अनुजानन्तु कामम्" तैत्ति॰ ब्रा॰। "अनुप्रवेशे यद्वीर कृत-वांस्त्वं ममाप्रियम्। सर्वं तदनुजानामि" भा॰ आ॰ २१४ अ॰

अप+निह्नवे आत्म॰। आत्मानमपजानानं शशमात्रोऽनय-द्दिनम्" भट्टि।

अभि+सम्यग्ज्ञाने "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" गीता। "अभिज्ञाश्छेदपातानाम्" कुमा॰ अभिज्ञा च आद्यज्ञानम् अनुभवात्मकम्।

प्रति+अभि+पूर्वदृष्टस्य वस्तुनः चक्षुरादिसन्निकर्षजे पूर्वस-ंस्कारोत्पन्ने स्मृतिभिन्ने ज्ञानभेदे यथा सोऽयं देवदत्तः इत्यादि ज्ञानम्। "तं त्वं प्रत्यभिजानीहि स्वप्ने यं दृष्टवत्यसि" हरिवं॰ १७६ अ॰।

सम्+अभि+प्रत्यभिज्ञाने "इन्द्रसेनां वह भ्राता समभिज्ञाय बाहुकः" भा॰ व॰ ७५ अ॰।

अव+अनादरे हीनत्वेन ज्ञाने च। "अवजानासि मां यस्मात् ततस्ते न भविष्यति" रघु। "अदेशकाले यद्दानमपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतम्" गीता। "वहूनि देशांश्च विचेष्टयिष्यन् रामं जनं सगिरमाप एष। तयावजज्ञे" भट्टि।

आ+सम्यग्ज्ञाने नियोगे च "न हि मनसा ध्यायतः कश्चनाजानाति" शत॰ ब्रा॰ ४।६।७।५। "नियोगश्च निकृष्टस्य भृत्यादेः प्रवर्त्तनम्। स्वार्थे णिच तन्नार्थे। "आज्ञापय ज्ञातविशेष! पुंसाम्" कुमा॰। ज्ञा—प्रेरणे चौरादिकस्येद रूपमित्यन्ये।

उप+आद्यज्ञाने "उप तज्जानीत यथा वयमिहाप्यसामेति" शत॰ ब्रा॰ ६।२।२।७। "उपज्ञा ज्ञानमाद्यं स्यात्" अमरः।

निस्+निर्+निश्चयात्मके ज्ञाने। "विद्युद्दै विद्युत्य दृष्टिमनु-प्रविशति सान्तर्धीयते तां न निर्जानन्ति" ऐत॰ ब्रा॰।

परि+परितो ज्ञाने "इन्द्रो दक्षं परिजानादहीनम्" ऋ॰ १०। १३८।६। "अनुवन्धं परिज्ञाय देशकालौ च तत्त्वतः" मनु।

प्र+प्रकृष्टज्ञाने। "यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च। अयथावत् प्रजानाति" "तस्य प्रज्ञा प्रतिष्ठिता" गीता।

प्रति+प्रतिज्ञाया साध्यत्वेन पक्षनिर्देशे स्वात्मकर्त्तव्य-त्वेन कथनभेदे च आत्म॰। "साध्यनिर्देश प्रतिज्ञा" गौत॰ सू॰। साध्यवत्त्वेन पक्षनिर्देशः प्रतिज्ञेति तदर्थः। "प्रतिजज्ञे वध चापि सर्वक्षत्रस्य भारत!" भा॰ म॰ ११७ अ॰॥ "प्रतिज्ञाय वनवासमिम गुरो" रामा॰ २।१०८ अ॰। "तस्मै निशाचरैश्वर्य्यं प्रतिजज्ञे रघूत्तमः" रघुः। "कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च। प्रति-जानन्ति पूर्वाह्णे व्ययं व्यसनजं तव" भा॰ स॰ ५ अ॰। आर्षत्वात् पर॰।

वि+विशेषण ज्ञाने "ज्योतिर्वृणीत तमसो विजानन्" ऋ॰ ३।३९।७। "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः" शत॰ ब्रा॰ १४।७।२।१६। "कथमेतद् विजानीयां त्व-

बोधने विवेकसामर्थ्ये । १२अहम्ब्रह्मेत्युपासने । ब्रह्मोपासनम् "ब्रह्मैवाहं समं शान्तं सच्चिदानन्दलक्षणम् । नाहं देहोऽह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ निर्विकारो निराकारो निरवद्योऽहमव्ययः । नाहं देह इत्यादि । निरामयो निराभासो निर्विकल्पोऽहमाततः । नाहमित्यादि । निर्गुणो निष्क्रियो नित्यो नित्यमुक्तोऽहमच्युतः । नाहमित्यादि । निर्मलो निश्चलोऽनन्तः शुद्धोऽहमजरोऽमरः । नाहमित्यादि । वेदान्तशास्त्रोक्तं बोध्यम् । १४अध्यात्मयुक्तिभ्यामात्मनिश्चये । "अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् । आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः ॥ इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु । नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् । एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा" इति गीतोक्तार्थेषु १५ज्ञानसाधनेषु । तच्च सात्त्विकादिभेदात् त्रिविधम् । यथा "सर्व्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्" । (सात्त्विकं सर्व्वसंसारोच्छित्तिकारणम्) । "पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् । वेत्ति सर्व्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् । यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पञ्च तत् तामसमुदाहृतम्" । (राजसं तामसञ्च संसारकारणम्) । आत्मनः श्रवणमननाभ्यां परिनिष्पन्ने प्रमाणजन्यचेतोवृत्त्यभिव्यक्तसच्चिद्रूपे १६परमात्मज्ञानसाधनशास्त्रादात्मतत्त्वावगमे आत्मसाक्षात्कारे "लोकवासनया जन्तोः शास्त्रवासनयापि च । देहवासनया ज्ञानं यथावन्नैव जायते । ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्म्मणः" "यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि" इति ब्रह्मसाक्षात्कारस्य ज्ञानहेतुत्वमुक्तम् । १७साङ्ख्यभेदतदर्थविषयेऽवबोधे । महाकाशस्याखण्डाकारायां १८बुद्धिवृत्तौ १९स्वस्वरूपस्फुरणे । साङ्ख्यमते गुणपुरुषान्यताख्यातिरूपे २०अध्यवसाये । ज्ञायतेऽनेन । ज्ञा—करणे ल्युट् । २१वेदे २२शास्त्रादौ च । तत्र प्रत्यक्षज्ञानोत्पत्तिप्रकारो मतभेदेन निरूप्यते । तत्र नैयायिकैः "आत्मा मनसा युज्यते मन इन्द्रियेण इन्द्रियं विषयेण तस्मात् प्रत्यक्षम्" इत्युक्तदिशा प्रत्यक्षं जायते । व्याप्तिज्ञानपरामर्शोत्तरमनुमितिर्जायते । वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितौ शाब्दबोधो जायते । गवादौ गोसादृश्यज्ञानेन गोसदृशो गवय इत्यादिना अतिदेशवाक्यार्थस्य स्मृतौ गवयो गवयपदवाच्य इत्यादि रीत्या उपमितिज्ञानं जायते इत्यङ्गीकृतम् । केचित् बौद्धभेदा बाह्यार्थाभावेन बुद्धेरेव तत्तदर्थाकारतयावभास इत्यङ्गीचक्रुः" यथोक्तं सर्व्वद० सं०

"बाह्यो ग्राह्यो नोपपद्यत एव विकल्पानुपपत्तेः । अर्थो ज्ञानग्राह्यो भवन्नुत्पन्नो भवति अनुत्पन्नो वा, न पूर्व्वः उत्पन्नस्य स्थित्यभावात् नापरः अनुत्पन्नस्यासत्त्वात् । अथ मन्येथाः अतीत एवार्थो ज्ञानग्राह्यः तज्जनकत्वादिति तदपि बालभाषितं वर्त्तमानतावभासविरोधात् इन्द्रियादेरपि ग्राह्यत्वप्रसक्तेश्च । किञ्च ग्राह्यः किं परमाणुरूपोऽर्थः अवयविरूपो वा । न चरमः कृत्स्नैकदेशविकल्पादिना तन्निराकरणात् । न प्रथमः अतीन्द्रियत्वात् षट्केन युगपद्योगस्य बाधकत्वाच्च । यथोक्तम् "षट्केन युगपद्योगात् परमाणोः षडंशता । तेषामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः" इति । तस्मात् स्वव्यतिरिक्तग्राह्यविरहात् तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाश इति सिद्धम् । तदुक्तम् "नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते" इति । ग्राह्यग्राहकयोरभेदश्चानुमातव्यः यद्वेद्यते येन वेदनेन, तत्ततो न भिद्यते यथा ज्ञानेनात्मा, वेद्यन्ते चैते नीलादयः । भेदे हि सत्यधुना अनेनार्थस्य सम्बन्धित्वं न स्यात् तादात्म्यस्य नियमहेतोरभावात् तदुत्पत्तेरनियामकत्वात् यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिन् चन्द्रमसि द्वित्वावभास इव भ्रमः । अत्रापि अनादिरविच्छिन्नप्रवाहा भेदवासनैव निमित्तम् । यथोक्तम् "सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति । "अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" न च रसवीर्य्यविपाकादिसमानमाशामोदकोपार्ज्जितमोदकानां स्यादिति वेदितव्यं वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्षाणां केशेन्द्रनाडीज्ञानभेदवदनाद्युपप्लववासनासामर्थ्याद् व्यवस्थोपपत्तेः पर्य्यनुयोगायोगात् । यथोक्तम् "अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते । विभक्तलक्षणग्राहक-

**ज्वरकेशरिन्** पु० ज्वरस्य तद्रूपगजस्य केशरीव हन्तृत्वात्। "शुद्धसूतं विषं व्योषं गन्धं त्रिफलमेव च। जयपालं समं कृत्वा भृङ्गतोयेन मर्द्दयेत्। गुञ्जामात्रा वटी कार्य्या बालाना सर्षपाकृति। सितया च समं पीता पित्तज्वरविनाशिनी। मरिचेन प्रयुक्ता वा सन्निपातज्वरापहा। पिप्पलीजीरकाभ्याञ्च दाहज्वरविनाशिनी। ज्वरकेशरिनामायं रसो ज्वरविनाशनः" भैषज्यर० उक्ते औषधभेदे।

**ज्वरघ्न** पु० ज्वरं हन्ति हन–अमनुष्य कर्त्तरि टक्। १गुडूच्याम्, २वास्तूके ३ज्वरनाशके त्रि० शब्दार्थ०। ४मञ्जिष्ठायां स्त्री ङीप्। राजनि०।

**ज्वरधूमकेतुरस** पु० ज्वरस्य धूमकेतुरग्निरिव दाहकत्वात् कर्म०। "भवेत् समं सूतसमुद्रफेनं हिङ्गूलगन्धं परिमर्द्य यत्नात्। नवज्वरे वल्लमितं त्रिधस्रमार्द्राम्बुनाऽयं ज्वरधूमकेतुः" भैषज्यर० उक्ते औषधभेदे।

**ज्वरनागमयूरचूर्ण** न० ज्वर एव नागः सर्पस्तस्य मयूर इव हिंसकत्वात् कर्म०।

"लौहाभ्रटङ्कणं ताम्रं तालकं वङ्गमेव च। शुद्धसूतं गन्धकञ्च शिग्रुबीजं फलत्रिकम्। चन्द्रनातिविषा पाठा वचा च रजनीद्वयम्। उशीरं चित्रकं देवकाष्ठञ्च सपटोलकम्। जीवकर्षभकाजाजत्रायन्तीय यवानीघना। कण्टकारीफलं मूलं शटीपत्रं कटुत्रयम्। गुडूचीसत्वधन्याकं कटुका क्षेत्रपर्पटी। मुस्तकं बालकं विल्वं यष्टीमधुसमं समम्। भागाश्चतुर्गुणं देयं कृष्णजीरस्य चूर्णकम्। तत्समं तालपुष्पञ्च चूर्णं दग्धोत्पलाभयम्। कैरातं तत्समं देयं तत्समं चपलाभवम्। एतच्चूर्णं समाख्यातं ज्वरनागमयूरकम्। प्रतिकर्षमितं खादेत् युक्त्या वा रुचिवर्द्धनम्। सन्ततादिज्वरं हन्ति साध्यासाध्यं न संशयः। चयोद्भवञ्च धातुस्थं कामशोकोद्भवं ज्वरम्। भूतावेशज्वरञ्चैवमभिचारसमुद्भवम्। दाहशीतज्वरं घोरं चातुर्थ्यादिविपर्य्ययम्। जीर्णञ्च विषमं सर्वं प्लीहानमुदरं तथा। कामलां पाण्डुरोगञ्च शोथं हन्ति न संशयः। भ्रमं तृष्णाञ्च कासञ्च श्वासं मान्द्यं क्षयं तथा। यकृतं गुल्मशूलञ्च आमवातं निहन्ति च। त्रिकपृष्ठकटीजानुपार्श्वानां शूलनाशनम्। अनुपानं शीतजलं न देयमुष्णवारिणा" भैषज्यर० उक्ते औषधभेदे।

**ज्वरबलि** पु० ज्वरशान्त्यै देयो बलिः शाक०। भैष० ज्वर० उक्ते ज्वरनाशके बलिभेदे तत्प्रकारो यथा "ज्वरामयगृहीतस्य शुचिभिर्नवभिः कृतम्। तण्डुलैरोदनं तेन कुर्य्यात् पुत्तलकं शुभम्। तं हरिद्राविलिप्ताङ्गं चतुःपीतध्वजान्वितम्। हरिद्रारसपूर्णाभिः पुटिकाभिश्चतसृभिः। मण्डितं गन्धपुष्पाद्यैरवकीर्य्य विसर्जयेत्। एवं दिनत्रयं कुर्य्यात् ज्वररोगोपशान्तये" (ओदनेन पुत्तलं निर्माय शीरपत्राधिकायां संस्थाप्य हरिद्राभिरवलिप्य चतुःपीतपताकाभिरलङ्कृत्य गन्धपुष्पाद्यैरवकीर्य्य हरिद्रारसपूर्णाश्चतस्रः पुटिकाश्चतुःकोणे संस्थाप्याः)। पुटिका अश्वत्थपत्ररचितठोङ्गा। अन्योऽपि प्रकारो विधानपारिजातादौ दृश्यः।

**ज्वरभैरवचूर्ण** न० ज्वरस्य भैरव इव विनाशकत्वात् कर्म०। "नागरं त्रायमाणा च पिचुमर्द्दो दुरालभा। पथ्या मुस्तं वचा दारु व्याघ्री शृङ्गी शतावरी। पर्पटं पिप्पलीमूलं विशाला पुष्करं शटी। मूर्वा कृष्णा हरिद्रे द्वे लोध्रचन्दनशुण्ठकम्। कुटजस्य फलं वल्कं यष्टीमधुकचित्रकम्। शोभाञ्जनं वचा चातिविषा च कटुरोहिणी। मुषली पद्मकाष्ठञ्च यवानी माषपर्णिका। मरिचं चामृता विल्वं वालं पद्मस्य कर्णिका। तेजपत्रं त्वचं धात्री पृश्निपर्णी पटोलकम्। गन्धकं पारदं लौहमभ्रकञ्च समं शिला। एतेषां समभागेन चूर्णमेव विनिर्द्दिशेत्। सर्द्धं प्रक्षिपेत्तत्र चूर्णं भूनिम्बसम्भवम्। मात्रामस्य प्रयुञ्जीत दृष्ट्वा दोषबलाबलम्। चूर्णं भैरवसञ्ज्ञन्तु ज्वरान् हन्ति न संशयः। पृथग्दोषांश्च विविधान् समस्तान् विषमज्वरान्। द्वन्द्वजान् सन्निपातोत्थान् मानसानपि नाशयेत्। प्राकृतं वैकृतञ्चैव सौम्यं तीक्ष्णमथापि वा। अन्तर्गतं बहिःस्थञ्च निरामं साममेव च। ज्वरमष्टविधं हन्ति साध्यासाध्यं न संशयः। नानादेशोद्भवञ्चैव वारिदोषभवं तथा। विरुद्धभेषजभवं ज्वरमाशु व्यपोहति। अग्निमान्द्यं यकृत् प्लीहा पाण्डुरोगमरोचकम्। उदराण्यष्टविधं रक्तपित्तं त्वगामयम्। श्वयथुञ्च शिरःशूलं वातामयरुजां जयेत्। ज्वरभैरवसञ्ज्ञन्तु भैरवेण कृतं शुभम्" भैषज्यर० उक्ते औषधभेदे।

**ज्वरभैरवरस** पु० ज्वरे भैरव इव नाशकत्वात् कर्म०। "त्रिकटु त्रिफला टङ्कविषगन्धकपारदम्। जैपालञ्च समं मर्द्यं द्रोणपुष्पीरसैर्द्दिनम्। ताम्बूलेन समं खादेद्गुञ्जामितां वटीम्। इक्षुयूषं विधारिणो पथ्यं देयं प्रयत्नतः। नवज्वरं त्रिदोषोत्थं जीर्णञ्च विषमज्वरम्। दिनैकेन निहन्त्याशु रसोऽयं ज्वरभैरवः" भैषज्यर० उक्ते औषधभेदे।

ज्वरनाशन" महौषधादीनां चतुर्णां प्रत्येकं रसार्द्धम्। अन्यविधोऽपि "मरिचं टङ्कनं गन्धचूर्णं पारदगन्धकम्। शोधितं वत्सनाभञ्च भागमेकं विनिक्षिपेत्। गुञ्जामात्रा प्रदातव्या नागवल्लीदलैः सह। ज्वराङ्कुशो रसोऽप्येष ज्वरमष्टविधं जयेत्" अन्यविधोऽपि "त्रिभागताम्रेण हतस्य ताम्र रसस्य गन्धस्य समीनमायु। विषं समं तद्द्विगुणस्य ताम्रं त्रिसप्तवारस्य दिवाकरातपे। समर्द्य निम्बुस्वरसेन चूर्णं गुञ्जाप्रमाणं सितया समेतम्। ज्वराङ्कुशोऽयं त्रिविधमासो ज्वरं निहन्त्यष्टविधं समयम्' मीनमायु मयूरपित्तम्। [राजनि०।

**ज्वराङ्गी** स्त्री ज्वरस्तद्बाधनमङ्गमस्या ङीष्। भद्रदन्तिकायां

**ज्वरातिसार** पु०। ज्वरयुक्तोऽतिसारः। ज्वरयुक्ते अतिसाररोगे तत्स्वरूपादि भैषज्यर०उक्तो यथा। "पित्तज्वरे पित्तभवोऽतिसारस्तथातिसारे यदि वा ज्वरः स्यात्। दोषस्य दुष्टस्य समानभावाज्ज्वरातिसारः कथितो भिषग्भिः"। "ज्वरातिसारयोरुक्तमन्योन्यं भेषजं पृथक्। न तन्मिलितयोः कुर्यादन्योन्यं वर्द्धयेद्यतः। प्रायोज्वरहरं भेदि, स्तम्भनन्त्वतिसारनुत्। अतोऽन्योन्यविरुद्धत्वाद्वर्द्धनं तत्परस्परम्। ज्वरातिसारिणामादौ कुर्यात् लङ्घनपाचने। प्रायस्तामसमुत्थस्य विना न भवतो यतः। ज्वरातिसारे पेयादिक्रमः स्याल्लङ्घिते हितः। ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः"।

**ज्वरान्तक** पु० ज्वरस्यान्तक इव ज्वरमन्तयति वा अन्ति-ण्वुल् वा हृत०कर्म०। आरग्वधे नेपालनिम्बे (सोदाल) राजनि०। ज्वरान्तकरस।

**ज्वरान्तकरस** पु० ज्वरस्यान्तक कर्म०।

"भास्करोगन्धक सर्जौ देवी पिङ्गतीक्ष्णकम्। शोधितं गगनञ्चैव पुष्करञ्च महेश्वरम्। भूनिम्बादिगणैर्भाव्यं मधुना गुडिका दृढा। चातुर्थकं तृतीयञ्च ज्वरं सन्ततकं तथा। आमज्वरं भूतकृतं सर्वज्वरमपोहति" भैषज्यर० उक्ते औषधभेदे। अत्र सर्जौरस, देवी सौराष्ट्रमृत्तिका, पिङ्ग स्वर्णमाक्षिक, पुष्कर रसाञ्जन, महेश्वर सुवर्णम् अन्यत् सुगमम्। ताम्रादीनां समभागचूर्णं भूनिम्बादिक्वाथेन भावयेत्। भूनिम्बाद्यष्टादशद्रव्याणि सर्वद्रव्यतुल्यानि अष्टावशिष्टं क्वाथं कृत्वा दिनत्रयं विभाव्य विशोष्य मधुना विमर्द्य यथारूपं लिहेत्"

**ज्वरापहा** स्त्री०ज्वरमपहन्ति अप+हन–ड हृत०। (बेलशुँठ) १विल्वशुण्ठ्याम्, २विल्वपत्र्याञ्च। ३ज्वरनाशके त्रि०। शब्दच०।

**ज्वरारिभ्र** पु० ज्वरस्यारि कर्म०।

"अभ्रं ताम्रं रसं गन्धं विषञ्चेति समंसमम्। द्विगुणं चूर्त्तवीजञ्च व्योषं पञ्चगुणं मतम्। जलेन वटिकां कुर्याद्वै यथा दोषानुसारतः। अभ्रं ज्वरारिनामेदं सर्वज्वरविनाशनम्। वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान्। विषमाख्यान् द्वन्द्वजांश्च धातुस्थान् विषमज्वरान्। नाशयेन्नात्र सन्देहो वृक्षमिन्द्राशनिर्यथा। प्लीहानं यकृतं गुल्ममग्निमान्द्यं सशोथकम्। कासं श्वासं तृषां कम्पं दाहं शीतं वमिं भ्रमिम्" भैषज्यर० उक्ते औषधभेदे।

**ज्वरारिरस** न० ज्वरस्यारि' कर्म०।

"दरदवलिरसानां शुल्वनागाभ्रकाणाम् शुभविटकशिलानां सर्वमेकत्र योज्यम्। त्रिदिनमपदलोत्थैर्भावितं शोषयेत्तम् त्रिसदृशगुणाग्नौ रक्तिकैकांश्च कुर्यात्। एकैका भक्षयेदस्य चार्द्रकस्य रसेयुताम्। दत्तमात्रं ज्वरं हन्ति ज्वरारिः स निगद्यते। सर्वशूलविनाशी च कफपित्तविनाशनः"। भैषज्यर० उक्ते औषधभेदे। वर्ज्ञ (सोंदाली) पत्ररसेन दशदिनं भावयित्वा गुञ्जाप्रमाणमार्द्रकरसेन देयम्"।

**ज्वराशनिरस** पु० ज्वरस्याशनिरिव नाशकत्वात् कर्म०।

"रसं गन्धं सैन्धवञ्च विषं ताम्रं समं भजेत्। सर्वचूर्णसमं लौहं तत्समं चूर्णमभ्रकम्। लौहे च लौहदण्डे च निर्गुण्ड्या स्वरसेन च। घर्षयेत् यत्नतः पश्चान्मरिचं स्रुततुल्यकम्। गर्जेन सह दातव्यो रसो रक्तिकसन्मितः। कासं श्वासं महाघोरं विषमाख्यं ज्वरं वमिम्। धातुस्थं प्रबलं दाहं ज्वरदोषं चिरोद्भवम्। यकृद्गुल्मोदरप्लीहश्वयथुञ्च विनाशयेत्" भैषज्यर०उक्ते औषधभेदे। [ज्वरशब्दे उदा०।

**ज्वरित** त्रि०ज्वरः संजातोऽस्य तारका० इतच्। १ज्वरयुक्ते

**ज्वरिन्** त्रि० ज्वरोऽस्त्यस्य इनि। ज्वरयुक्ते स्त्रियां ङीप्।

**ज्वल** दीप्तौ चलने च भ्वा० पर० अक० सेट्। ज्वलति अज्वालीत्। घटा० ज्वलयति। ज्वला० ज्वलः ज्वालः। "अज्वाल लोकस्थितये स राजा" भट्टि। "जागर्त्ति लोको ज्वलति प्रदीपः सखीगणः पश्यति कौतुकेन। उत्सृज्य संभावय कृष्ण नाथ! धैर्यं मुखं निजं किं हितरेण भुङ्क्षे" उद्भट।

उदादिपूर्वकस्य तत्तदुपसर्गद्योत्यार्थयुक्तदीप्तौ । उज्ज्वल° ।

ज्वल त्रि° ज्वल-दीप्तौ वा अच् । दीप्तिविशिष्टे । [हेम° ।

ज्वलका स्त्री ज्वलतीति ज्वल-बा° वुन् । अग्निशिखायां

ज्वलति पु° ज्वल-भावे श्तिप् । ज्वलनक्रियायाम् । “भ्राजते” इत्याद्युपक्रमस्य एकादश ज्वलतिकर्माण निघ° २।१६। उक्तम् ।

ज्वलन त्रि° ज्वल-ताच्छील्यादौ युच् । १दीप्तिशीले, २वह्नौ ३चित्रकवृक्षे च पु° अमरः ।

ज्वलनाश्मन् पु° नित्यकर्म° । सूर्यकान्तमणौ राजनि° ।

ज्वलित त्रि° ज्वल-क्त । १दग्धे २दीप्ते च ।

ज्वलिनी स्त्री ज्वल-बा° इनि ङीप् । मूर्वालतायां राजनि°

ज्वाल पु स्त्री ज्वल-ण । १अग्निशिखायाम् अमर° । २दीप्तियुक्ते त्रि° । ३दग्धान्ने स्त्री शब्दच° । भावे घञ् । ४ दीप्तौ पु° ।

ज्वालखरगद पु° ज्वालगर्दभाख्ये रोगे राजनि° । ज्वालगर्दभशब्दे दृश्यम् ज्वालागर्दभामयोऽप्यत्र राजनि° ।

ज्वालाजिह्व पु° ज्वाला शिखैव जिह्वा यस्य दाह्यवस्तुलेहनसाधनत्वात् । १वह्नौ हेम° तन्नामनामके चित्रके च ।

ज्वालामालिनी स्त्री ज्वालानां शिखानां माला अस्त्यस्य इनि ङीप् । देवीभेदे । तन्त्रसारे उक्ता यथा “ओं नमो भगवति । ज्वालामालिनि । गृध्रगणपरिवृते । हुं फट् स्वाहा” । तत्राङ्गन्यास । “ओं नमो हृदयं प्रोक्तं भगवतीति शिरः स्मृतम् । ज्वालामालिनीति च शिखा गृध्रगणपरिवृते ततः । वर्म स्वाहास्त्रमित्युक्तं जातियुक्तं न्यासेत्ततः । प्रयोगस्तु ओं नमो हृदयाय नम इत्यादि “अभुक्तो नियतश्चैव जपेन्मन्त्रं जपाज्जयी । जपेदष्टसहस्रन्तु त्रयोविंशतिवासरान् । प्रत्यहं साधने सिद्धिमाददाति न संशय । स्मृतिमात्रेण वै मन्त्री रिपून् सर्वान् विनाशयेत्” ।

ज्वालामुखी स्त्री पीठस्थानभेदे । “ज्वालामुख्यां महाजिह्वा देव । उन्मत्तभैरवः । अम्बिका सिद्धिदानाम्नी स्तनौ जालन्धरे ममेति” तन्त्रम् । २विद्याभेदे “ज्वालामुखीक्रम वक्ष्ये या पूज्या सर्वत्र शुभे । नित्याख्या मदनान्तरा मदनोच्छापकस्त्रयिः । क्रमशः श्रीभारती च आकर्षणी महेन्द्रपि । ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा । वाराही चैव माहेन्द्री चामुण्डेति च पूजयेत् । विजया चाजिता चैव मोहिनी चापराजिता । स्तम्भनी जम्भनी पूज्या कालिका पञ्चमाद्भुतः । ज्वाला

मुखी च संपूज्या विषादिहरणं भवेत्” । गारुड° पु । २०४ अ°

ज्वालावक्त्र पु° ज्वालेव वक्त्रमस्य । शिवे ब्रह्मपु° ।

ज्वालिन् पु° ज्वल-णिनि । १शिवे “शिखी सखी जटी ज्वाली मूर्त्तिजो मूर्द्धगो बली” भा° अनु° १७ अ° । २शिखायुक्तमात्रे ३दीप्तियुक्ते च त्रि° स्त्रियां ङीप् ।

ज्वालेश्वर पु° मत्स्यपु° उक्ते तीर्थभेदे ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यनिर्म्मिते वाचस्पत्ये जकारादिशब्दार्थसङ्कलनम् ।

---

# झ

झकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यस्तस्यो-च्चारणस्थानं तालु आभ्यन्तरप्रयत्नः जिह्वामध्येन ता-लुनः स्पर्शः । बाह्यप्रयत्नाः संवारनादघोषमहाप्राणा-श्च । मातृकान्यासेऽस्य वामकराङ्गुलीमूले न्यस्यता । अस्य ध्येयरूपं कामधेनुतन्त्रे उक्तं यथा "झकारं परमेशानि ! कुण्डलीं मोक्षरूपिणीम् । रक्तविद्यु-ल्लताकारं सदा त्रिगुणसंयुतम् । पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा । त्रिबिन्दुसहितं वर्णं त्रिशक्ति-सहितं तथा" वर्णोद्धारतन्त्रे तदधिष्ठातृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने ! । अत्यन्तप्रेमवर्णाभां रक्ताम्बरविभूषिताम् । रक्तचन्दन-लिप्ताङ्गीं रक्तमाल्यविभूषिताम् । चतुर्द्दशभुजां देवीं रत्नहारोज्ज्वलां पराम् । ध्यात्वा ब्रह्मस्वरूपां तां तन्मन्त्रं दशधा जपेत्" । तस्य वाचकशब्दाः वर्णाभि-धानतन्त्रे उक्ता यथा "झो झङ्कारी गुहो मार्गी झर्झरो वायु रञ्जनः । अजेशो द्राविणी नादः पाशी जिह्वा जलं स्थितिः । विराजेन्द्रो चतुर्हस्त कर्कशः नादजः कुञ्ज (कुब्ज) । दीर्घबाहुरसोरूप ह्याकम्पितकुच-स्तवम् । दुर्द्धरो नष्ट आत्मवान् विकटा कुच-मण्ड(ग्र)च । कलहसप्रिया वामा वामाङ्गुल्यङ्गु-पर्वकः । दशहारोऽट्टहासश्च पापात्मा व्यञ्जनस्वर" मात्रावृत्ते तस्य प्रथमविन्यासे फलमुक्तं इ०र०टी० "प्रीति झो मित्रलाभं भयमरणकरौ ञ्झौ ठठौ खेददुःखे" ।

झ पु० झट-सङ्घाते ड । १झञ्झावाते २नष्टे ३जलवर्षणे शब्दर० ४भिण्टीशे ५देवगुरौ ६दैत्यराजे ७ध्वनिभेदे ८वज्रपाते च मेदि० । [परमेशानि !"कामधेनुत० ।

झकार पु० झ+स्वार्थे कारप्रत्ययः । झस्वरूपे वर्णे "झकार

झगझगायमान त्रि० झगझग+अभूततद्भावे भृशा० क्यङ् शानच् । देदीप्यमाने । "मयूरवरगामिभीं शरदरुद्व-र्णोत्कटां रणत्कणितघण्टिकां निशितशक्तिहस्तोद्य-ताम् । प्रभानिकररश्मिभिर्झगझगायमानांशुकां नमामि गुहसम्भवां त्रिदशवन्दनिर्वाणिनीम्" देवी० पु० ।

झगिति अव्य० झटिति+पृषो० । शीघ्रार्थे शब्दार्थचि० ।

झङ्कार पु० झमित्यव्यक्तशब्दस्य कार कृ-घञ् । १भ्रमरादि-शब्दे । "मन्दं सञ्चितपांशवः प्रचिपतन्त झङ्कार-झञ्झामरुत्" अमरुश० । ततः तार० इतच् । झङ्कारित तच्छब्दयुक्ते त्रि० । २जलकणवर्षणे च शब्दर० ।

झङ्कारिणी स्त्री इत० । गङ्गायां भिण्टीशशब्दे उदा० ।

झङ्कृता स्त्री तारादेवतायां "झर्झरी झङ्कृता झिल्ली झरी झर्झरिका तथा" तारासहस्रनाम ।

झङ्कृति स्त्री झम् इत्यव्यक्तशब्दस्य कृतिः कृ-क्तिन् । कांस्यादेर्ध्वनौ शब्दार्थचि० ।

झञ्झा स्त्री झमिति कृत्वा झटति झट-ड । १ध्वनिभेदे, तद्ध्वनियुक्ते २प्रचण्डानिले च शब्दर० ।

झञ्झानिल पु० झञ्झायुक्तोऽनिलः । सवृष्टिजलवाते त्रिका० झञ्झामरुदादयोऽप्यत्र झङ्कारशब्दे उदा० ।

झट सङ्घाते भ्वा० पर० अक० सेट् । झटति अझाटीत्-अझ-टीत् । जझाट ।

झटा स्त्री झट-अच् । १शीघ्रे । २भूम्यामलक्यां शब्दार्थचि० ।

झटि पु० झट-इन् । क्षुद्रतृणभेदे । (झाँटि) शब्दार्थर० ।

झटिति अव्य० झट क्विप् झट् इण-क्तिन् इत० स्वरादि । १शीघ्रे अमर । "त्यक्त्वा गेहं झटिति यमुनामञ्जु-कुञ्जं जगाम" पदाङ्कदूतम् ।

"झटित्यव्ययमात्मेमे तदा दोषो न विद्यते" "मनः-सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम्" सा० द० ।

झटक पुंस्त्री अन्त्यजवर्णभेदे "प्रपालरथ्ये झटकस्य कूपे द्रोण्या जलं कोशविनिर्गतञ्च" अत्रिस० ।

झणझणा अव्य० झणत् डाच् द्वित्व पूर्वपदटिलोप । १अव्यक्तशब्दभेदे २तच्छब्दयुक्ते "सर्वं झणझणाभूतमा-सीत्तात्यनेत्रिव" भा०भी०१८अ० । ३भूषणकारशब्दभेदे च ।

झण(न)त्कार पु० झन(ण)दित्यव्यक्तशब्दस्य कार कृ-घञ् । कङ्कणादिध्वनौ । "उद्देलद्भुजशक्तिकङ्कणझण(न)-त्कार क्षणं वार्य्यताम्" कालिदास । "उद्वेजयति दरिद्रं परमुद्राया झणझणत्कार" उद्भट ।

झम अदने भ्वा० पर० सक० सेट् । झमति अझमीत् । ज-झाम । उदित् झमित्वा झान्त्वा । झान्त ।

झम्प पु० जम्प+पृषो० । (झाँपदिया पड़ा) लम्फे स्वेच्छाधीने प्रपातपतने जटाधर । भावे अ । तत्रार्थे स्त्री "पुष्पा-स्फोटमनुवसुद्दविवरे पातालझम्पाय ता" महावीर० ।

झम्पाक पुंस्त्री झम्पेन आकायति आ+कै+क । १वानरे शब्दच० । स्त्रियां जातित्वात् ङीष् ।

झम्पाशिन् पु० झम्पेन जवे स्वेच्छया पतनेनाश्नाति अश-णिनि । मनुष्यरक्तपक्षिणि जटाधर । स्त्रियां ङीप् ।

तदा श्येनस्तामनुपत्य वेगवान् । तथैव परममास्थाय प्रदुद्राव विहङ्गमः । तमपश्यदथायान्तं श्येनं श्येनस्थापरः । अभ्यद्रवञ्च तं सद्यो दृष्ट्वैवामिषगृद्धया । तुण्डयुद्धमथाकाशे तावुभौ सम्प्रचक्रतुः । युध्यतोरपतत् तत्र तयापि यमुनाम्भसि । तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः । मीनभावमनुप्राप्ता बभूव यमुनाचरी । श्येनपादपरिभ्रष्टं तद्वीर्य्यमथ वासवम् । जग्राह तरसोत्प्लुत्य साद्रिका मत्स्यरूपिणी । कदाचिदथ मत्सीं तां बबन्धुर्मत्स्यजीविनः । मासे च दशमे प्राप्ते तदा भरतसत्तम ! । उज्जह्रुरुदरात्तस्याः स्त्रीं पुमांसञ्च मानुषौ । आश्चर्य्यभूतं तन्मत्वा राज्ञेऽथ प्रत्यवेदयन् । काये मत्स्या इमौ राजन् ! सम्भूतौ मानुषाविति । तयोः पुमांसं जग्राह राजोपरिचरस्तदा । स मत्स्यो नाम राजासीद्धार्म्मिकः सत्यसङ्गरः । साप्सरा मुक्तशापा च क्षणेन समपद्यत । पुरोक्ता या भगवता तिर्य्यग्योनिगता शुभे ! । मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि । ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिना । सन्त्यज्य मत्स्यरूपं तत् दिव्यरूपमवाप्य च । सिद्धर्षिचारणपथं जगामाथ वराप्सराः । या कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी । राज्ञा दत्ता च दाशाय कन्येयं मम भवत्विति । रूपसत्त्वसमायुक्ता सर्वैः समुदिता गुणैः । सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात् । आसीत् सा मत्स्यगन्धैव किञ्चित्कालं शुचिस्मिता" ।

**झाडूत** पु॰ झामित्यव्यक्तशब्दं जतो येन । वाद्यभेदे धरणिः । तदर्थे झाड्डूत इति पाठः शब्दार्थचि॰ ।

**झाट** पु॰ झट-णिच्-अच् । १निकुञ्जे, २कान्तारे, ३व्रणादीनां मार्जने च मेदि॰ ४भूम्यामलक्याम् स्त्री अमरः ५दूषिकायाञ्च शब्दच॰ ।

**झाटल** पु॰ झट-णिच् अलच् । घण्टापाटलौ अमरः ।

**झाटामला** स्त्री झट-अच् न मला अमला कर्म॰ । भूम्यामलक्याम् "झ(झा)टामला झटा ताली" इत्यत्र झाटामलेत्येकपदमिति केचित् अतएव "झाटामला अद्यौतृषिका च शतिका च उदुम्बरा" मेघवारः॰ उक्तम् ।

**झाटिका** स्त्री झाटा स्वार्थे क । भूम्यामलक्याम् शब्दच॰ ।

**झामक** न॰ झम-कर्मणि ण्वुल् । (झामा) अतिपक्वेष्टकायाम् शब्दार्थचि॰ । [शब्दर॰ ।

**झामर** पु॰ झम-भावे घञ् तं राति रा-क । तर्कपाणे ।

**झालि** पु॰ "आम्रमामकम् पिष्टं राजिकालवणान्वितम् । भृष्टं हिङ्गुयुतं पूतं घोलितं झालिरुच्यते । झालिर्हरति जिह्वायाः कुण्ठत्वं कण्ठशोधिनी । मन्दं मन्दं निपीता सा रोचनी वह्निबोधिनी" भावप्र॰ उक्ते पदार्थे

**झावु** पु॰ झा-इति याति गच्छति वा-डु । (झाउ) वृक्षभेदे अमरः स्वार्थे क । तत्रार्थे शब्दर॰ । [शब्दार्थचि॰

**झिङ्गाक** न॰ झिङ्ग-आकन् पृषो॰ । (झिङ्गा) फलभेदे ।

**झिङ्गिनी** स्त्री झिङ्ग-णिनि पृषो॰ । १जिङ्गिनीवृक्षे भावप्र॰ २उल्मुकायाञ्च शब्दर॰ । [भावप्र॰

**झिङ्गी** स्त्री॰झिङ्ग-अच् गौरा॰ङीष् । जिङ्गिनीवृक्षे (झिङ्गा)

**झिञ्झी** स्त्री॰ झिञ्झा अव्यक्तशब्दः अच् गौरा॰ ङीष् । झिल्लयाम् (झिँजिपोँका) शब्दार्थचि॰ ।

**झिण्टी** स्त्री झिमिति रटति अच् पृषो॰ गौ॰ ङीष् । (झाँटि) पुष्पप्रधानवृक्षे अमरः ।

**झिण्टीश** पु॰ शिवे "झिण्टीशचन्द्रौ झङ्कारकारिणी भर्म्मरावती" काशीखं॰ शब्दार्थस्य ।

**झिरि** स्त्री झिरित्यव्यक्तशब्दोऽस्त्यस्या वा॰ इन् । चिल्लयां वा ङीप् । तत्रार्थे शब्दर॰ । [झिल्लयाम् शब्दर॰ ।

**झिरिका** स्त्री॰ झिरीति कायति शब्दायते कै-क ।

**झिल्लि** पु॰ झिरितिशब्दं लिशति वा॰डि । वाद्यभेदे "घण्टा शब्दस्तथा भेरी मृदङ्गो झिल्लिरेव च । यज्ञानां पूज्यते वाद्यं देवताराधनेषु च" शब्दार्थचि॰ धृतवाक्यम् ।

**झिल्ली** स्त्री॰ चिल्लति चिल-अच् पृषो॰ गौरा॰ ङीष् । (झिँझिपाँका) कीटभेदे । संज्ञायां क । आतपरुचौ ३वर्त्त्यांञ्च मेदि॰ । ४तारिणया च अङ्गुष्ठाशब्दे टहा॰ ।

**झिल्लीकण्ठ** पु॰स्त्री झिल्ली तद्वत् इव कण्ठः कण्ठस्वरोऽस्य । गृहकपोते त्रिका॰ स्त्रियां जातित्वात् ङीष् ।

**झीरुका** स्त्री झिरित्यव्यक्तं रौति वा॰रु-कक् । झिल्ल्याम् शब्दरत्ना॰ । [च शब्दक॰ ।

**झुण्ट** पु॰लुण्ट-अच्-पृषो॰ । अकाण्डे १द्रुमे,२स्तम्बे,३गुल्मे

**झुमरि** स्त्री रागिणीभेदे "प्रायः शृङ्गारबहुला माध्वीकमधुरा मृदुः । एकैव झुमरिर्लोके वर्णादिनियमोज्झिता । यतो बहुलमेनका मोदाद्यादि विविच्यतः । इदं हि यावत् सर्वं प्रसिद्धं जयदक्रमम्" सङ्गीत॰दा॰

**झूलि** पु॰१क्रमुकभेदे २दुष्टदैवज्ञे च मेदि॰ । [अझार झर ।

**झृ** वयोहानौ दिवा॰पर॰सक॰सेट् । झीर्य्यति अझारीत्

**झोड** पु॰ गुवाकभेदे भूरिप्र॰ । [जुझुरे ।

**झु** गतौ भ्वा॰ आत्म॰ सक॰ अनिट् । झवते अझोष्ट ।

इति वाचस्पत्ये झकारादिशब्दार्थसङ्कलनम् ।

## ञ

"ञकारोव्यञ्जनवर्णभेदः चवर्गमात्राकाशेनोच्चार्य्यः तस्योत्पत्तिस्थानं नासिकातालुगततालुस्थानम् तस्योच्चारणे जिह्वामध्येन तालुमध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः। संवारनादघोषा अल्पप्राणश्च बाह्यप्रयत्नाः। मातृकान्यासेऽस्य वामकराङ्गुल्यग्रे न्यास्यता। वर्णाभिधानेऽस्य वाचकशब्दा उक्ता यथा

"ञकारो बोधनी विश्वा कुण्डली मदनोविषत्। कौमारी नागविज्ञानी सव्याङ्गुलनखो नखः। सर्वेश्वर्य्यर्पितोबुद्धि स्वर्गात्मा घर्घरध्वनिः। धर्मैकपाद सुमुखो विरजा चन्दनेश्वरी। गायन पुष्पधन्वा च योगात्मा च विरञ्चिणी"। एतदधिष्ठातृदेवीध्येयरूपं यथा "चतुर्भुजां धूम्रवर्णां कृष्णाम्बरविभूषिताम्। नानालङ्कारसंयुक्तां जटामुकुटराजिताम्। ईषद्धास्यमुखीं नित्यां वरदां भक्तवत्सलाम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। अस्य स्वरूपं यथा "सदा ईश्वरसंयुक्तं ञकारं शृणु सुन्दरि! रक्तविद्युल्लताकारं या स्वयं परकुण्डली। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा" कामधेनुतन्त्रम्। तस्य मात्रावृत्ते प्रथमोपन्यासे मरणं फलम् अमङ्गले प्रमाणं दृश्यम्। [५वामनतौ च मेदि०।

**ञ** पु० १गायने २घर्घरध्वनौ एकाक्षरको०। ३वृषे ४शुक्रे

**ञकार** पु० ञ+स्वरूपे कारप्रत्यय। ञस्वरूपे वर्णे "ञकारो बोधनी विश्वा" वर्णाभिधानम्।

इति वाचस्पत्ये ञकारादिशब्दार्थसङ्कलनम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते वाचस्पत्ये चवर्गादिशब्दार्थ-सङ्कलनं समाप्तम्।

---

## ट

टकारोव्यञ्जनवर्णभेदः टवर्गमात्राकाशेनोच्चार्य्यः अस्योच्चारणस्थानं मूर्द्धा। अस्योच्चारणे मूर्द्धस्थानेन जिह्वामध्यस्य स्पर्शः आभ्यन्तरप्रयत्नः। विवारश्वासाघोषा बाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षिणस्फिचि न्यास्यता वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "टकारश्च कपाली च सोमेशः खेचरी ध्वनिः। मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नरः। दक्षस्फिगर्द्धचन्द्रश्च जरा भूतिः पुनर्भवः। बृहस्पतिर्धनुर्हंसः प्रमोदा विमला कटिः। राजगिरिर्महाधनुर्मांसात्मा सुमुखी मरुत्"। अस्य स्वरूपं यथा "टकारं चञ्चलापाङ्गि! स्वयं परमकुण्डली। कोटिविद्युल्लताकारं पञ्चदेवमयं सदा। पञ्चप्राणयुतं वर्णं गुणत्रयसमन्वितम्। त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं वरं सदा" कामधेनुतन्त्रम्। एतदधिष्ठातृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणुष्व वरवर्णिनि!। मालती पुष्पवर्णाभां पूर्णचन्द्रनिभेक्षणाम्। दशबाहुसमायुक्तां सर्वालङ्कारसंयुताम्। परमोक्षप्रदां नित्यं सदा स्मेरमुखीं पराम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम्। मात्रावृत्तेऽस्य प्रथमोपन्यासे खेदफलम्। अगणदे प्रमाणं दृश्यम्।

**ट** पु० टल—ड। १वामने २पादे ३निःस्वने च मेदि०।

**टकि** बन्धे चु० उभ० सक० सेट् इदित्। टङ्कयति—ते अटटङ्कत्—त। "टङ्कितेनोऽरिपाटने" काशी० गङ्गास्तवः। "नाक्षरं न च टङ्कितम् न मथितम् नोत्थापितम् स्थानतः" महाना०। उद्+उल्लेखे। उट्टङ्कितम्।

**टकार** पु० ट+स्वरूपे कारप्रत्यय। टस्वरूपे वर्णे "टकारश्च कपाली च" वर्णाभिधानम्।

**टक्क** पु० टकि—बा० कक् पृषो० उपधालोपश्च। देशभेदे।

**टक्कदेशीय** पु० टक्कदेशे भव छ। १वास्तूकशाके त्रिका०। २तद्देशभवमात्रे त्रि०।

**टगण** पु० मात्रावृत्ते षाण्मात्रिकप्रस्तारे त्रयोदशभेदात्मके गणभेदे तेषामाकाराभिदेशाश्च छन्दोमञ्जर्य्युक्ता यथा "(SSS) १ शिव ||SS शशी २ (|S|S दिनपति) ३ (S||S सुरपतिः) ४ (||||S शेषः) ५ (|SS| अहि) ६ (S|S| सरोजम्) ७ (|||S| धाता) ८ (SS||कलि)

(।।ऽ।। चन्द्र०) १० (।ऽ।।। भुप ) ११ (ऽ।। ।। घर्म०) १२ (।।।।। याचिकरः) १३ ।

**टगर** पु० टः टङ्कणो गर इव । टङ्कणक्षारे (सोहागा) २हेलाविलासविषये ३केकराक्षे च त्रि० मेदि० ।

**टङ्क** पु० टकि–घञ्–अच् वा । १कोपे, २कोषे, ३खड्गे ४पाषाणभेदनेऽस्त्रे च ।५जङ्घायां मेदि० । ६चतुर्माषक-रूपे परिमाणे वैद्य० ७नीलकपित्थे ८खनित्रे, ९दर्पे च पु०न० हेमच० १०परशौ ११राजास्त्रे च शब्दार्थचि० "दार्य्यतां चैव टङ्कौघैः खनित्रैश्च पुरी द्रुतम्" हरिव० ६७अ० ।"टङ्कैर्मनःशिलगुहेव विदार्य्यमाणा" मृच्छ०। "हिमाद्रिटङ्कादिव भान्ति यस्याम्"भट्टि । "ररोष राम स्तन्नीव टङ्कच्छिन्नमनःशिल " रघु० । [ सारसुन्दरी।

**टङ्कक** पु० टङ्क्यते बन्ध संज्ञायां क । (तङ्का) रजतमुद्रायाम्

**टङ्कपति** पु० ६त० । रूप्यकाध्यक्षे (टाकशालेर अध्यक्ष) सारसुन्दरी । [ टङ्के सारसुन्दरी ।

**टङ्कशाला** स्त्री ६त० । (टाँकशाल) ख्याते रूप्यकनिर्माण

**टङ्कटीक** पु० टङ्क इव टीकते टीक–क । शिवे त्रिका० ।

**टङ्कण(न)** न० टकि–ल्यु पृषो० वा णत्वम् । ( सोहागा ) ख्याते स्वर्णद्रावके १उपरसभेदे । उपरसभेदाश्च भाव०प्र० उक्ता यथा "गन्धो हिङ्गुलमभ्रतालकशिला स्रोतोऽञ्जन टङ्क(न)णम् । राजावर्त्तकचुम्बकौ स्फटिकया शङ्ख खटी गैरिकम् । कासीस रसक कपर्दसिकतावोलाश्च कङ्कुष्ठकम् सौराष्ट्री च मता अमी उपरसा सूतस्य किञ्चिद्गुणै" । "तद्यथा लवणेन सुवर्णम्" छा० उ० भाष्ये "लवणेन क्षारेण टङ्कणादिना, खरेषु मृदुत्व-कर हि तत्" भा० । "टङ्कण वह्निकृद्रूक्ष कफ-वातिकपित्तकृत्" भावप्र० । भावे ल्युट् । (टाकादेओया पानिदिया झाला)२धातूनां योजनभेदे । दन्त्यान्त ३अश्व-भेदे पु०स्त्री "टङ्कनखरनखरखण्डितहरितालपांशुलेन" काद० मूर्द्धन्यान्त ४देशभेदे स च देश वृ०स० १४अ० । कूर्मविभागे दक्षिणस्यामुक्त ।"अथ दक्षिणेन लङ्का" इत्यु-पक्रमे "कङ्कटटङ्कणवनवासिशिविकफणिकारकोङ्कणा-भीरा" इत्युक्ते ।

**टङ्कवत्** पु० टङ्क+अस्त्यर्थे मतुप् मस्य व० । १पर्वतभेदे "टङ्क-वन्तं शिखरिणं वन्दे प्रस्रवणं गिरिम्" रामा०३।५५अ०

**टङ्का** स्त्री टकि–अच् । १जङ्घायां मेदि० । २तारादेव्यां टङ्कारकारिणीशब्दे दृश्यम् ।

**टङ्कानक** पु० टङ्क कोपमानयति उद्दीपयति आन–णिच् ण्वुल् । १ब्रह्मदारुवृक्षे (बामनगाछ) शब्दच० ।

**टङ्कार** पु० टमित्यव्यक्तशब्दस्य कार कृ–घञ् । १ध्वनिभेदे धनुर्ज्याकर्षणजे शब्दे २विस्मयहेतुके शब्दे च ।३शिञ्जिनी-ध्वनौ प्रसिद्धे च मेदि० । कृ–णिनि । टङ्कारिन् १टङ्कारयुक्ते त्रि० स्त्रियां ङीप् सा च २तारादेव्याम् टङ्कारकारिणीशब्दे दृश्यम् ।

**टङ्कारकारिणी** स्त्री०कृ–णिनि ङीप् ६त०। तारादेव्याम्"ट-ङ्कारकारिणी टीका टङ्का टङ्कारिणी तथा तारासहस्रनाम।

**टङ्कारी** इ० स्त्री टङ्कमृच्छति ऋ–अण् गौरा० । (टे कारी) वृक्षभेदे "टङ्कारी वातश्लेष्मघ्नी शोफोदररुजापहा । तिक्ता च दीपनी लघ्वी भिषग्भि परिकीर्त्तिता" राजनि० ।

**टङ्ग** पु०न० टङ्क+पृषो० । १खनित्रे (टाँगि) २परशुभेदे च ३जङ्घायां मेदि० । (सोहागा) ४टङ्कने शब्दच०।५चतु-र्माषकमाने वैद्य० ।

**टङ्गण** पु०न० टङ्कण+पृषो० (सोहागा) टङ्कणे ।

**टङ्गिनी** स्त्री टकि–णिनि पृषो० । (आकनादी) पाठायाम् । शब्दच० । [क्यो ष्ट्राम् त्रिका० ।

**टट्टनी** स्त्री टट्टेति शब्दं नयति नी–ड गौरा० ङीप् ।

**टट्टरी** स्त्री टट्टेति शब्द राति रा–क गौरा० ङीप् ।१पटह वाद्ये २लम्पावाद्ये ३मृषावादे च मेदि० ।

**टट्टर** पु० भेरीशब्दे हेमच० ।

**टल** विक्लवे (टला) भ्वा० पर० अक० सेट् । टलति अटा-लीत् टटाल टेलतुः । ज्वला० टल टाल ।

**टवर्ग** पु० ट+प्रातिशाख्योक्त वर्गप्रत्यय । ट ठ ड ढ ण रूपेषु वर्णेषु । ततो भवार्थे छ । टवर्गीय टादौ वर्णे ।

**टा** स्त्री टल–ड । पृथिव्याम् एकाक्षरकोष ।

**टाङ्क** न० टङ्केन तद्रसेन निर्वृत्तम् । टङ्करूपनीलकपित्थ-रसेन निर्वृत्ते मद्यभेदे । "पानस द्राक्षमाधूक खार्जुर तालमैक्षवम् । माध्वीक टाङ्क मार्द्वीकमैरेय नारिके लजम् । सामान्यानि द्विजातीना मद्यान्येकादशैव च । द्वादशन्तु सुरा मद्य सर्वेषामधम स्मृतम्" । पुलस्त्येन तत्पान निषिद्धम् । अज्ञयत इति व्यासशो मद्यानाम-वस्थाविशेषः सद्यःजातसन्धानेन सञ्जातमद्यभावः यम-धिकृत्य इद पुलस्त्योक्तं प्रायश्चित्तम् । "द्राक्षेक्षुटङ्क-खर्जूरपनसादेश्च यो रस । सद्योजातन्तु पीत्वा च त्र्यहाच्छुध्येद् द्विजोत्तमे "।[मागधीटे वृक्षभेदे त्रिका० ।

**टाङ्कर** पु०टाङ्क तत्तुल्यरस राति रा–क टाङ्क+कुञ्जा० र वा ।

**टार** पुस्त्री० टा पृथ्वीमृच्छति ऋ–अण् उप० स० । घोटके

स्त्रियां जातित्वात् ङीष् । २रक्ते ३खड्गे च हेमच० ।

**टिक** गतौ भ्वा० आ० सक० सेट् । टेकते अटेकिष्ट टिटिके । ऋदित् अटिटेकत् न ।

**टिटिभ** पु स्त्री० टिटीति अव्यक्तशब्दं भणति भण–ड । कोयष्टिके (टिटिरि) स्त्रियां ङीष् स्वार्थे क तत्रार्थे अमरः ।

**टिट्टिभ** पु स्त्री० टिट्टीत्यव्यक्तं शब्दं भणति भण–ड ।(टिटिरि) कोयष्टिके खगे अमरः स्त्रियां ङीष् । "कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम् ..." "...चैव टिट्टिभांश्च विवर्जयेत्" मनुना तन्मांसभक्षणनिषिद्धम् । "टिट्टिभ सदृशेन राजन्यासमिवाह्वरः" भा० शा० १११अ० । कोयष्टिकशब्दे २२६६ पृ० तन्मांसगुणा उक्ता । टिट्टिभक स्वार्थे क । तत्रार्थे पु स्त्री० ।

**टिण्टिनिका** स्त्री अम्लपिरीयिकायां (तेँ तल) भावप्र० ।

**टिण्डिश** पु० रोमशफले (टाँड्स) ख्याते शाकभेदे राजनि० । "टिण्डिशो रुचिकृत् भेदी पित्तश्लेष्मापहोऽपलघु । सुशीतो वातलो रूक्षो मूत्रलश्च प्रकीर्त्तितः" भावप्र० ।

**टिप** प्रेरणे चुरा० उभ० सक० सेट् । टेपयति-ते अटीटिपत् त ।

**टिप्पनी** स्त्री टिप-क्विप् टिपा पण्यते स्तूयते पन–घञर्थे क गौरा० ङीष् । टीकायाम् । सा च टीकाव्याख्यारूपतयैव व्यवह्रियते यथा चिन्तामणिटीकाया दीधितिव्याख्यायाः टीका जगदीशकृता गदाधरकृता च । यथा शारीरिकसूत्रभाष्यव्याख्या पञ्चपादिका भामती च । महाभाष्यव्याख्या कैयटकृता इत्यादि । प्रथमव्याख्यायामपि क्वचित् प्रयुज्यते यथा "श्रीमतङ्गाम नत्वा श्रीकायस्था सुटिप्पनी । अवेगेन सुबोधार्थं क्रियते यद्गुरोः श्रुतम्" "टिप्पनी दायभागस्य श्रीनाथेन विधीयते" । [ ऋदित् । अटिटीकत् त ।

**टीक** गतौ भ्वा० आत्म० सक० सेट् । टीकते अटीकिष्ट ।

**टीका** स्त्री टीक्यते गम्यते ग्रन्थार्थोऽनया । टीक–करणे घञ् अकर्थे क वा । विषमपदव्याख्यारूपे ग्रन्थभेदे । "अपटीकौ लडो माघे भय माघेन ताद्यते । स च विश्वित्तरस्यैव कल्पतरुसम्बलमः" उद्भट । 'नत्वा भगवतीं दुर्गां टीकां दुर्गावबुद्धये । कुरुते दायभागस्य महाचार्यमहेश्वरः" "करोति टीकामिह दायभागग्रन्थावबोधाय सदेकरत्नाम्" श्रीकृष्णतर्का० ।

**टुण्टुक** पु० स्त्री टुण्टु इत्यव्यक्तं कायति कै–क । (टुण्टुनि) १पक्षिभेदे शब्दर० । स्त्रियां जातित्वात् ङीष् । २श्योनाकवृक्षे अमर । ३कृष्णखदिरे शब्दच० । तयोः तत्कम्प्रियत्वात् तथात्वम् । ४अल्पे त्रि० मेदि० । ५क्रूरे त्रि० विश्वः । ६टिट्टिभीवृक्षे स्त्री शब्दच० ।

**टृणाका** स्त्री तालमूलीवृक्षे शब्दच० ।

**टेरक** त्रि० केकर+पृषो० । (टेँरा) केकरनेत्रे । शब्दार्थचि० ।

**टोट** त्रि० मोट+पृषो० । १अल्पे २हीने च । स्त्रियां गौरादिपाठात् ङीष् ।

**टोडलतन्त्र** न० तन्त्रभेदे । [दुनः टालः ।

**टूल** विस्रवे भ्वा० पर० अक० सेट् । टूलति अटूलीत् ज्वला०

इति वाचस्पत्ये टकारादिशब्दार्थसङ्कलनम् ।

---

# ठ

ठकारो व्यञ्जनवर्णभेदः । टवर्गीय मूर्द्धन्य वर्णमाला काद्येकादशः । तस्योच्चारणे जिह्वामध्येन मूर्द्धस्थानस्य स्पर्शः आभ्यन्तरप्रयत्नः । विवारश्वासाघोषा महाप्राणश्च बाह्यप्रयत्नाः । मातृकान्यासेऽस्य दक्षजानुनि न्यस्यता वर्णाभिधानेऽस्य वाचकशब्दा उक्ता यथा "ठः शून्यो मञ्जरी जीवः पाणिनी लाङ्गलं क्षमा । वनजो नन्दनो जिह्वा सुनन्दापूर्वकः सदा । वर्त्तुलः कुण्डलो वह्निरमृतं चन्द्रमण्डलः । दक्षजानुकभावश्च देवभक्षो बृहद्ध्वनिः । एकपादो विभूतिश्च ललाटं सर्वमित्रकं । वृषघ्नो नलिनी विष्णुर्महेशो ग्रामणीः शशी" । एतदधिष्ठातृदेवतारूपं यथा "ध्यानमस्य प्रवक्ष्यामि शृणुष्व कमलानने ! । पूर्णचन्द्रप्रभां देवीं विकचोत्पललोचनाम् । सुन्दरीं मोहनभुजां धर्मकामार्थमोक्षदाम् । एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम् । अस्य ध्येयरूपं यथा "ठकारं चञ्चलापाङ्गि, कुण्डली मोक्षरूपिणी । पीतविद्युल्लताकारं सदा त्रिगुणसंयुतम् । पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा । त्रिबिन्दुसहितं वर्णं त्रिशक्तिसहितं सदा" इति कामधेनुतन्त्रम् । मात्राद्यन्तेऽस्य प्रयोगे पद्यादौ दुःखं फलम् । इत्यादि प्रमाणं दृश्यम् ।

**ठ** पु० ट+पृषो० । शिवे २महाध्वनौ ३चन्द्रमण्डले ४एका-क्षरकोष । ४मण्डले ५शून्ये ६लोकगोचरे च मेदि० । शून्यस्थानं बिन्दुरूपवर्णभेद । "स्मितमुखि ! तदधठद्वयम् योजयित्वा" कर्पूरस्तव०(ठद्वयं स्वाहा)। "द्विठमेव चेत्यस्य व्याख्याया द्विठं विसर्गस्तस्य बिन्दुद्वयात्मकत्वात् विसर्ग-शब्देन च लक्षितलक्षणया स्वाहाकारो लभ्यते स्वा-हाशब्देनैव वह्नौ त्यागात् त्यागस्य च विसर्गपर्य्याय-त्वात्" इत्येव रघुनन्दनादिसम्प्रदायविदः । [कामधेनुत०।

**ठकार** पु०ठ+कार । ठस्वरूपे वर्णे "ठकार चञ्चलापाङ्गि !"

**ठक्कुर** पु०१देवप्रतिमायां,२द्विजोपाधिभेदे च । यथा गोविन्द-ठक्कुर काव्यप्रदीपकर्त्ता । ३देवतायाञ्च । "सुदामा नाम गोपालः श्रीमान् सुन्दरठक्कुर" आनन्दसंहिता ।

इति वाचस्पत्ये ठकारादिशब्दार्थसङ्कलनम् ।

---

## ड

डकारो व्यञ्जनवर्णभेदः मूर्द्धन्यः अर्द्धमात्राकालोच्चार्य्यं टवर्गीय० । तस्योच्चारणे जिह्वामध्येन मूर्द्धस्थानस्य स्पर्श-आभ्यन्तरयत्नः । संवारनादघोषा अल्पप्राणश्च बाह्यप्र-यत्नाः । मातृकान्यासेऽस्य दक्षपादगुल्फे न्यस्यता । अस्य वाचकशब्दा यथा "ड स्मृतिदो रुका नन्दि रूपिणी योगिनीप्रियः । कौमारी शङ्करस्त्रासः त्रिवक्रो व्यापकोध्वनिः । दुरूहो जटिली भीमा द्विजिह्वः पृथिवी सती । कोलगिरिः क्षमा कान्तिर्नाभि स्मृती च लोचनम्" वर्णाभिधानम् । तदधिष्ठा-तृदेवतारूप यथा "ध्यानमस्य प्रवक्ष्यामि शृणु सावहिता मम । जवासिन्दूरसङ्काशां वराभयकराप-राम् । त्रिनेत्रां वरदां नित्यां परमोक्षप्रदायिनीम् । एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" इति वर्णो-द्धारतन्त्रम् । अस्य ध्येयरूपं यथा "डकारं चञ्चला-पाङ्गि ! सदा त्रिगुणसंयुतम् । पञ्चदेवमयं वर्णं पञ्चप्राण-मयं सदा । त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा । चतुर्ज्ञानमयं वर्णमात्मादितत्त्वसंयुतम् । पीतविद्यु-ल्लताकारं डकारं प्रणमाम्यहम्" इति कामधेनुतन्त्रम् । तस्य मात्रावृत्ते प्रथमोपन्यासे शोभा फलम् "डः शोभा ढो विशोभा भ्रमणमथ च णस्तस्तु थ धस्तु युद्धम्" इ० र० टी०धृतवाक्योक्तेः ।

**ड** पु० डी—ड । १शिवे २शब्दे ३त्रासे च एका० को० । ४वाडवाग्नौ ५डाकिन्यां स्त्री मेदि० ।

**डकार** पु० ड+कारप्रत्यय । डस्वरूपे वर्णे ।

**डगण** पु० छन्दोग्रन्थोक्ते चतुर्मात्रिकप्रस्तारे पञ्चभेदभिन्ने गणभेदे तत्स्वरूपादिक यथा (ऽऽ गज १) (॥ऽ रथः२) (।ऽ।तुरङ्गमः ३) (ऽ॥पदातिः ४) (॥॥पत्तिः ५) इति ।

**डङ्गरी** स्त्री ड त्रास गिरति गॄ—अच् पृषो० गौरा०ङीष् । दीर्घकर्कट्याम्(काँकड़ी)राजनि०अण् । डङ्गारीत्यप्यत्रार्थे ।

**डप** सङ्घाते (राशीकरणे) चु०आत्म०अक०सक०सेट् । डाप-यते अडीडपत । चुरादित्वेऽपि ञितकरणादफलवत्-कर्त्तर्य्यपि आत्म० । तेनास्य ञित्करणसामर्थ्यात् पाक्षि-कचुरादित्वम् पक्षे भ्वादित्वम् । डपते अडपिष्ट ।

**डप** संहतौ भ्वा० डपवत् इदित् । डम्पयते अडिडम्पत । पक्षे भ्वा० डम्पते अडम्पिष्ट ।

**डब** क्षेपणे चुरा० उभ० सक० सेट् । डम्बयति अडडम्बत् शब्दस्तोमे अस्य वा चुरादित्वोक्तिः प्रामादिकी । [त ।

**डभ** संघे चुरा०इदित् उभ० सेट् । डम्भयति ते अडडम्भत्

**डम** पु० ड त्रास माति मा—क । चाण्डाल्यां नेटाज्-जाते सङ्कीर्णजातिभेदे (डोम) ब्रह्मपु० । स्त्रियां—जाति-त्वात् ङीष् । [पलायने हारा० ।

**डमर** पु० डमेति शब्दं राति रा—कर्थे क । भीत्या

**डमरु** पु०डमिति शब्दमृच्छति ऋ—बाहुलकात् उ० । १वाद्यभेदे मध्ये क्षीणे प्रान्ते दीर्घे, गुटिकाद्वययुक्ते कापालि-कयोगिवाद्ये अमरः । तत्रार्थे हारा०म० । "दृष्ट्वा डमड्-डमरुकाङ्कितमद्भुतवर्गान्तु भर्गस्पृहिणी दधिरैर्वि-मोमि" प्रबोधच० । (डमत् डमेति शब्दं कुर्वत्) ।

**डमरुका** स्त्री "दक्षिणे विधिवत् बद्धा डमरुकार्ध्यमध्यमम् । दक्षिणां तर्जनीमस्य कर्णदेशे प्रसारयेत् । एषा मुद्रा डमरुका सर्वविघ्नविनाशिनी" तन्त्र० उक्ते मुद्राभेदे ।

**डम्बर** पु०डपि—संहतौ बा०अरन् ।१समूहे आडम्बरे २आटो-पने "अजायुद्धे ऋषिश्राद्धे प्रभाते मेघडम्बरः" चाणक्यः।

कुरुवत् त। कात्या० श्रौ० १६।१२० सूत्रभाष्ये “मिन्वयति आड्डावयतीत्यर्थः” कर्क। “मेध्ययतिराड्डावनार्थः” कात्या० श्रौ० १०।४।७। कर्कः “पार्श्वेनाक्ष्य वसां च मिन्वयत्याड्डावयति” ५।८।१८। कर्क।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यप्रविरचिते वाचस्पत्ये डकारादिशब्दार्थसङ्कलनम्।

---

# ढ

ढकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यः मूर्द्धन्यः टवर्गीयः। तस्योच्चारणे जिह्वामध्यभागेन मूर्द्ध्नः स्पर्शः आभ्यन्तरप्रयत्नः। संवारनादघोषा महाप्राणश्च बाह्यप्रयत्नाः। मातृकान्यासेऽस्य दक्षपादाङ्गुलिमूले न्यस्यता। वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा “ढो ढक्का निर्गुणः शूरो यक्षेशो धनदेश्वरः। अर्द्धनारीश्वरश्चोयमो-श्वरस्त्रिशिखो नरः। दक्षपादाङ्गुलीमूलं विघ्नदण्डो विनायकः। महार्घस्त्रिपुरा सन्धिर्निर्गुणो निधनो धनी। विघ्नेश पाशिनी तद्धारिणी क्रोडपुच्छकः। एलापुरं च दुर्गेशा विख्याता ब्राह्मणोरतिः”। एतदधिष्ठातृदेवतारूपं वर्णोद्धारतन्त्रे उक्तं यथा। “रक्तोत्पलनिभां रम्यां रक्तपङ्कजलोचनाम्। अष्टादशभुजां भीमां महामोक्षप्रदायिनीम्। एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्”। अस्य स्वरूपं कामधेनुतन्त्रे उक्तं यथा

“ढकारः परमाराध्यो या स्वयं कुण्डली परा। पञ्चदेवात्मकं वर्णं पञ्चप्राणमयं सदा। सदा त्रिगुणसंयुक्तं आत्मादितत्त्वसंयुतम्। रक्तविद्युल्लताकारं ढकारं प्रणमाम्यहम्”। मात्रावृत्तेऽस्य प्रथमोपन्यासे निःशोभाफलम् उपवर्द्धे प्रमाणं द्रष्टव्यम्।

ढ पु० १ढक्कायां २शुनि ३श्वलाङ्गूले च मेदि०। तस्य तदाकृतित्वात् तथात्वम्। ४निर्गुणे ५ध्वनौ च एकाक्षरको०।

ढकार पु० ढ+स्वरूपे कारप्रत्ययः। ढस्वरूपे वर्णे “ढकारं प्रणमाम्यहम्” कामधेनुत०। “ढकारस्य ढकारे परे लोपः” सि० कौ०।

ढक्का स्त्री ढगिति कायति कै–क। यशःपटहे (ढाक) ख्याते वाद्यभेदे अमरः। “न ते डुडुक्केन न सोऽपि ढक्कया न मर्द्दलैः सापि न तेऽपि ढक्कया” नैषधम्।

ढक्कानादचलज्जला स्त्री ढक्काया नाद इव चलज्जलतरङ्गो यस्याः। गङ्गायाम्। “ढक्कानादचलज्जला” काशी० गङ्गास्तव०।

ढक्कारवा स्त्री ढक्काया रव इव रवो यस्याः। तारिणीदेव्याम् “ढक्कारवा च ढक्कारी” तारासहस्रनाम।

ढक्कारी स्त्री ढगिति शब्दं करोति कृ–अण् उपप०स०। गौरा० ङीष्। तारिणीदेव्याम् “ढक्कारवा च ढक्कारी ढक्कारवरवाढ्यका” तारासहस्रनाम।

ढगण पु० मात्राछन्दोनिबन्धनमात्राप्रस्तारभेदे तद्भेदाश्च यथा “तत्स्वरूपादिकं यथा (ऽ।) १ ध्वज। (।ऽ) २ताल। (।।।) ३ तालञ्चनम्।

ढण्टी स्त्री मात्राभेदे “ढण्टीमात्रस्वरूपा च ढकाराक्षररूपिणी” रुद्रया० अन्नपूर्णासहस्रनाम।

ढामरा स्त्री हंस्याम् शब्दार्थचि०।

ढाल न० समाख्याते चर्म्मनिर्म्मिते फलके तद्वहतेऽस्य इनि ढालिन् तद्युक्ते त्रि०। “ढालिपाशधरा ढकारवर्णरूपिणी” अन्नपूर्णास्तवः। स्त्रियां ङीप्।

ढुण्ढ अन्वेषणे भ्वा० सक० पर० सेट्। ढुण्ढति अढुण्ढीत्। डुढुण्ढ। ढुण्ढि।

ढुण्ढि पु०ढुण्ढ–इन्। काशीस्थे गणेशभेदे तन्नामनिरुक्त्यादिकं काशीख० ५७अ०उक्तं यथा “अन्वेषणे ढुण्ढिरयं प्रथितोऽस्ति धातुः सर्वार्थढुण्ढिततया तव ढुण्ढिनाम। काशीप्रवेशमपि को लभतेऽत्र देही तोषं विना तव विनायक! ढुण्ढिराज!”। तन्माहात्म्यं तत्रैव यथा “ढुण्ढे प्रणम्य पुरतस्तव पादपद्मं यो मां नमस्यति पुमानिह काशिवासी। तत्कर्णमूलमधिगम्य पुरा दिशामि तत्किञ्चिदत्र न पुनर्भवतास्ति येन। यः प्रत्यहं नमति ढुण्ढिविनायकं त्वां काश्यां प्रगे प्रतिहताखिलविघ्नसङ्घः। नो तस्य जातु जगतीतलवर्त्तिवस्तु दुष्प्रापमत्र च परत्र च किञ्चनापि। प्रणम्य ढुण्ढिराजोऽपि मम दक्षिणतोऽभवत्। आढुण्ढ्य सर्वभक्तेभ्यः सर्वार्थान् संप्रयच्छति”। तस्य नामाभिधानफलं तत्रैव यथा “नामग्रहणमात्रेण मनुष्ठानपरायणाः। ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽनघाः कुरुवरप्रदिनाम्। विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापघ्नीम्। एतां यक्षतिथौ हन्त प्राप्नोत्यविलम्बितम्

स्नौ । चाग्नौ यात्रा प्रयत्नेन चौतविविधभीमुखभिः । तस्य चतुर्थ्यां त्वत्प्रीत्यै ढुण्ढे । सर्वोपचारहृत् । ता यात्रा नाम यः कुर्यान्निवेद्य तिललड्डुकान् । उपचारसहस्रन्तु स कृत्वाप्निन् समाप्नुया । होमं तिलाज्यद्रव्येण यः करिष्यति भक्तितः । तस्य चतुर्थ्यां मन्त्रप्रजप्तस्य मन्त्रः प्रसेत्स्यति" ।

**ढोल** पु० गवे ढोलायमानतया शब्दनीये स्वनामख्याते वाद्यभेदे । "ढक्काढोलप्रिया नित्या ढोलवाद्यप्रमोदिनी । ढोलरूपा ढोलधरा ढोलशब्दस्वरूपिणी" इति रुद्रयामले अन्नपूर्णासहस्रनामस्तोत्रम् ।

**ढक्काढोलप्रिया** स्त्री ढक्काढोलौ तच्छब्दः प्रियोऽस्याः । अन्नपूर्णायाम् ढोलशब्दे दृश्यम् ढोलरूपादयोऽप्यत्र ।

**ढौक** प्रेरणे गत्यां च भ्वा० आत्म० सक० सेट् । ढौकते अढौकिष्ट डुढौके । "स विमर्दं शतधातयमा यान्तं वने रात्रिचरी डुढौके" भट्टिः । "शकुन्तला चक्रं ढौकते" शकु० । णिचि ढौकयति ते "राक्षसोऽनर्जयत् सूत पुनश्चाढौकयद्रथम्" भट्टिः । ऋदित् अडुढौकत् त ।

इति वाचस्पत्ये ढकारादिशब्दार्थसङ्कलनम् ।

---

## ण

णकारो व्यञ्जनवर्णभेदोऽर्द्धमात्राकालोच्चार्य्यः मूर्द्धन्य-टवर्गीयः । अस्योच्चारणे जिह्वामध्येन मूर्द्धः स्पर्शः नासिकायत्नप्रभेदश्च आभ्यन्तरप्रयत्नः । संवारनादघोषाः अल्पप्राणश्च बाह्यप्रयत्नाः । मातृकान्यासेऽस्य दक्षपादाङ्गुल्यग्रे न्यस्तता । अस्य वाचकशब्दाश्च वर्णाभिधाने उक्ता यथा "णो निर्गुणं रतिर्ज्ञानं जम्भलः पक्षिवाहनः । जया शम्भो नरकजित् निष्कलो योगिनीप्रियः । द्विमुखः कोटवी श्रोत्रं समृद्धिर्बोधिनी मता । त्रिनेत्रो मानुषो व्योम दक्षपादाङ्गुलीमुखम् । माधवः शङ्खिनी वीरो नारायणश्च निर्णयः" । एतदधिष्ठातृदेवतारूपं वर्णोद्धारतन्त्रोक्तं यथा "ध्यानमस्य णकारस्य प्रवक्ष्यामि च तत् शृणु । द्विभुजां वरदां रम्यां भक्ताभीष्टप्रदायिनीम् । राजीवलोचनां नित्यां धर्मकामार्थमोक्षदाम् । एवं ध्यात्वा ब्रह्मरूपां तन्मन्त्रं दशधा जपेत्" । एतत्स्वरूपं कामधेनुतन्त्रोक्तं यथा "णकारं परमेशानि ! या स्वयं परकुण्डली । पीतविद्युल्लताकारः पञ्चदेवमयः सदा । पञ्चप्राणमयं देवि ! सदा त्रिगुणसंयुतम् । आत्मादितत्त्वसंयुक्तं । महामोक्षप्रदायकम्" । नामादावस्य प्रथमोपन्यासे मरणं फलम् वृत्तरत्नाकरे दृश्यम् ।

**ण** पु० णश–गतौ ड प्रयो० णत्वम् । १विन्दुदेवे, २भूषणे, ३गुणवर्जिते, ४पानीयनिलये मेदि० । ५निर्णये, ६ज्ञाने च न० एकाक्षरको० ।

**णक्ष** गतौ भ्वा०पर०सक०सेट् । णोपदेशत्वात् प्रति निमित्ते णत्वम् । नक्षति प्रणक्षति । अनक्षीत्–अनाक्षीत् । ननाक्ष नेक्षतुः । एव णादिधातूनां गणपाठे णादित्व प्रयोगे नादित्वं प्रति निमित्ते णत्वमिति बोध्यम् ।

**णट्ट** नृत्ये साभिनये नटकार्य्ये हिंसायामयं न णोपदेशो भ्वा० पर० अक० सेट् । नटति प्रणटति अनाटीत् अनटीत् । ननाट नेटतु । हिंसायाम् प्रनटति । नटः नाट्यम् ।

**णट** नटकार्य्ये भ्वा०पर०अक०सेट् । नटति प्रणटति अनाटीत्-अनटीत् ननाट नेटतुः घटा० । नटयति अनीनटत् ।

"नट नृत्ये । इत्ययमेव पूर्वमपि पठितम् । तत्रायं विवेकः । पूर्वपठितस्य नाट्यमर्थो यत्कारिषु नटव्यपदेशो वाक्यार्थाभिनयो नाट्यम् । घटादौ तु नृत्तं नृत्यं चार्थो यत्कारिषु नर्तकव्यपदेशः पदार्थाभिनयो नृत्यम् गात्रविक्षेपमात्रं नृत्तम् । केचित्तु घटादौ णट नताविति पठन्ति । नतावित्यन्ये । णोपदेशपर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठात् घटादिर्णोपदेश एव" सि०कौ०

**णद्** अव्यक्तशब्दे भ्वा० पर० अक० सेट् । नदति प्रणदति अनादीत् अनदीत् । ननाद नेदतुः नदः । नादः नदन् नदितम् । प्रति निमित्ते एतत्पूर्वधर्त्तिनः उपसर्गस्य णत्वम् । प्रणिनदति परिणिनदति ।

"वायवश्चानदन् घोरम् रुधिरञ्चाभ्यवर्षत" हरिवं०१८२अ० । "नदति मही गम्भीरम्" ह०स० ५४अ० । "शब्दं घोरं नदन्ति" भा०व०२६७अ० "शिवाश्चैवाशिवान्नादानदन्त" हरिवं०१८२अ० । आर्षस्तङ् । णिचि नादयति "नदय-

न्वेति पृथिवीमुत द्याम्” ऋ०८।९७।१२। “द्या षातु-
शुभ्र नंदयन् पृथिव्या” ऋ०७।७।२। छान्दसो लुप्तः।
लोके तु न लुप्त। “नादयन्नुपघोषेण सर्वाः सविदिशो
दिशः” भा०व०२५२१ श्लो०। अन्तर्भूतण्यर्थे तु अस्य
सकर्मकता “न्म्यावधाने नटराजराजो ननाद ढक्कां
नव पञ्च वारान्” शब्देन्दुशेखरधृतवाक्यम्।
अनु+शब्देनानुकरणे सक०। “तथा च तेषां रुदतां महा-
त्मनां दिवं च पश्चात्तुनमाद निस्वन” रामा०२।१११ष०।
अभि+आभिमुख्येन शब्दकरणे। “युक्तेति तन्मयतया तर-
वोऽभिनेदु” भाग० १।२।२।
उद्+ऊर्द्ध्वे शब्दकरणे। “कालमेघद्वयोन्नदन्”भा०द्रो०६८।४
प्रति+प्रतिशब्देन अनुकरणे सक०। “प्रय प्रति नदन्तस्तान्”
भा० भी०४५।१८।
णद् भाषे चु० उभ० सक० सेट्। नादयति ते प्रणादयति
अनीनदत्-त। ननाद नेदतु।
णभ हिंसे भ्वा० आत्म० सक० सेट्। नभते प्रणभते लुदित्
अनभत् अनभिष्ट। नेभे। “नभन्तामन्यकेषां ज्याका
अधिधन्वसु” ऋ०१०।१३३।१। “नभन्ता हिंसयन्ताम्”
भा० यास्कस्तु “नाभाकस्य प्रशस्तिभि” निरुक्तधृता
ऋक्। वेदेऽस्य क्वचित् नुम्। “उन्नम्भय पृथिवीं भिन्धीदं
दिव्यं नभः” तैत्ति०स०२।४।८।२।
णभ हिंसे दिवा० क्र्या० च पर० सक० सेट्। नभ्यति
प्रणभ्यति नभ्नाति। अनाभीत् अनभीत्। ननाभ नेभतुः।
णम शब्दे अक० नतौ सक० भ्वा० पर० अनिट्। नमति
प्रणमति अनंसीत्। ननाम नेमतुः नेमिथ ननन्थ।
नत नति नाम नत्वा नन्ता नम्य आनाम्य। अस्य
नमन्तत्वेन घटादित्वे प्राप्तेऽपि अनुपसर्गाद्वेति नियमात्
वा तथात्वम्। नमयति नामयति उपसर्गात्तु उन्नमय-
तीत्येव। नतिश्च स्वाकर्षबोधकव्यापारभेदः स च कर्त्तरि
सयोगादि स्वापकर्षबोधशालिन कर्मता। नमति गुरुम्
दुर्वृत्तशब्दे उदा०। न्यग्भावे (नोया) अकर्म०। नत
कर्मकर्त्तरि न यक्चिणौ नमते अनस्त। “शुभ्रेभिरश्वे
यशसो नमध्वम्” ऋ० ७।५६।१७। “एते द्यूने युवतयो
ऽनमन्त”१०।३०।६। न्यग्भावे“अनसीकूर्मरेणास्य”भट्टिः।
“उन्नमति नमति वर्षति गर्ज्जति मेघ करोति तिमि
रौघम्। प्रथमश्रीरिव पुरुष करोति रूपाण्यनेकानि”
उद्भट “नतभ्रुवो मन्युजनाप्नेयः” उद्भट “धुर्य्यभारनता
सता” रामा० २।८६ अ०। “नताभिधानाद्व्यथते
नतानन” किरा०। यङि नमस्यते। “नंनम्यमाना
फलदित्सयेव” भट्टि।
अभि+आभिमुख्येन नमने। “देवान् वै यज्ञो नाभ्यनमत्”
अव+न्यग्भावे अधोभवने (नीचे नोयोया) अक०। “त-
स्यादात् जलमवनते” मेघ०। णिच् अवनमयति
“अवनामितमेढ्रश्च मेढ्रे” सुश्रु०। “शिरः सुकृष्णो
न्यपात्य स्वदृक्शोनावनाम्य च” हरिव० ६८ अ०।
केचिच्छराक्षेपभयाच्छराध्ययनमामिरे”भा०आ०।१३४अ०।
आर्षो न लुप्त आम्भावश्चार्षः।
उद्+ऊर्द्ध्वगतौ उच्चभवने उत्थाने च अक०। “उन्नम्योन्नम्य
तत्रैव दरिद्राणां मनोरथाः। हृदयेषु विलीयन्ते विध-
वास्त्रीस्तनाविव” पञ्चत०। “स्थित सर्वोन्नतेनोर्वीम्”रघुः
अभि+उद्+आभिमुख्येनोन्नतौ अक०। “अभ्युन्नताङ्गुष्ठ-
नखप्रभाभि” कुमा०। “अभ्युन्नता पुरस्तादवगाढा
जघनगौरवात् पश्चात्” शकु०।
उप+प्राप्तौ सक० स्वयमुपस्थितौ अक०। “य क्षत्रिया
दोषोपनमेत”। “अभ्यासो ह यदेन साधवो धर्मा
आ च गच्छेयुरुप च नमेयु”छा०उ०। “यदा तु पर-
मायया आत्मने नोपनमति” भाग० ५।१४।१४ श्लो०।
“मत्सुयोग कथमुपनमेत् स्वप्नजोऽपि प्रियाया”
मेघ०। “परस्तोकोपनत जलाञ्जलिम्” कुमा०।
परि+तुल्यरूपसत्तया वस्तुनोऽन्यथाभवने अक० आत्म०। यथा
दुग्धपरिणाम दधि मृत्परिणाम घटादिः। “तथा
तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेश
गत्वा घटादिविषयाकारेण परिणमते” “समसत्ताककार्यो
त्पाद परिणाम इति”वेदा०प०। कर्मकर्त्तरि आत्मनेपद-
मित्यन्ये “परिणामस्वभावा हि गुणा नापरिणम्य
क्षणमवतिष्ठन्ते”सा०त०कौ०। गजानां तिर्य्यग्दन्तप्रहारे
सक०। “विष्कै नाग पर्य्यणंसीत् स एष”माघ। पर्य्यण-
सीत् तिर्य्यक् प्रजहारेत्यर्थं। “तिर्य्यग्दन्तप्रहारेषु गज
परिणतो मतः” वैजयन्ती। शेषतांप्राप्तौ अक०।
“दिवसा परिणामरमणीयाः” शकु०। “ता एवौषधयः
कालपरिणामात् परिणतवीर्य्या भवन्ति” सुश्रु। परि-
पाके च “आहारस्य सम्यक्परिणतस्य” सुश्रु० सम्यक्नमने
सक०। “यस्त परिणमेत्स तत्” भा० उ० ११०७।
प्र+प्रकर्षेण नतौ। “प्रणमेद्दण्डवद्भूमौ” भाग० ६।१९।८।
“प्रणेमुर्मूर्धभिः” भाग० ३। ३।२८। “उरसा
शिरसा दृष्ट्या वचसा मनसा तथा। पद्भ्यां कराभ्यां

जातुष्यां प्रणामोऽष्टाङ्ग इष्यते” नृसिंह पु० उक्तो नतिभेदे च ।

प्रति+प्रतीपनतौ ।

वि+विशेषेण नतौ ।

वि+परि+भावस्य विकारभेदे अक० आत्म० “षड्भावविकारा भवन्तीति वार्ष्यायणि । जायतेऽस्ति विपरिणमते वर्द्धते अपक्षीयते नश्यतीति, जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे नो प्रतिषेधति । अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं, विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्द्धत इति स्वाङ्गाभ्युच्चयं,सांयौगिकानां वाऽर्थानां, वर्द्धते विजयेनेति वा,वर्द्धते शरीरेणेति वा । अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति”निरु०१।२। अन्यविभक्त्यन्ततया श्रुतस्य शब्दस्य अन्यविभक्त्यन्ततया परिकल्पने “कर्त्तरि शब्नित्यतः कर्तृग्रहणमनुवर्तते । तच्च प्रथमया विपरिणम्यते” पा० सू० व्याख्या । “अर्थवशात् विभक्तिविपरिणाम ” परिभाषा ।

सम्+सम्यग्नतौ । “धीर संनमेत बलीयसे” भा० उ० ११२० । “संनताः फलभारेण पुष्पभारेण च द्रुमा ” रामा०आ०३।१६अ०। [अनयीत् । ननाय नेयतुः ।

णय गतौ रक्षणे च भ्वा० पर० सक० सेट् । नयति प्रणयति

णर्द शब्दे भ्वा० पर० अक० सेट् । नर्दति अनर्दीत । ननर्द प्रणर्दति । नर्दनम् नर्दत ।

“दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः । आनर्द नर्दत सम्यक् तदा द्युत्यं भविष्यति” भा० उ० १४०अ०। “उदपानाश्च नर्दन्ति यथा गोष्पभासया” १४२ अ० । “नर्दमानो महानादं प्रावृषीव बलाहक ” भा० भी० १०१ अ० । “मत्ता नर्दन्तु कुञ्जरा ” रामा० २।१०५ अ०।

णल गन्धे भ्वा० पर० सक० सेट् । नलति प्रणलति । अनालीत् । ज्वला० नल भाल ।

णश अदर्शने ध्वंसे च दिवा०पर०अक०सेट् । नश्यति प्रणश्यति अनेशत् पा० अन्यमते नशत् अशान्तत्वे न णत्वम् प्रनष्ट ।“फलभोग्यो न नश्यति” “प्रनष्टस्वामिकं द्रव्यम्” याज्ञ०।“चेष्टा अनेशन्निखिलास्तदासाः सरेषुपातैरिव ता विधूताः” नैषध० “एतेन कुटुम्बपुरुष एव नेशादेशोक्ति-रिन्त्वा “ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च” हितो० “आ पाप । स्वयं नष्ट परामपि नाशयितुमिच्छसि” प्रबो० च० ।

णस कौटिल्ये भ्वा० आत्म० अक० सेट् । नसते प्रणसते । अनसिष्ट । नेसे

णह बन्धने दिवा० उभ० सक० अनिट् । नह्यति-ते प्रणह्यति-ते । अनात्सीत् अनद्ध ननाह नेहे । नद्धा नद्ध नद्धी । “यथा युगं वरत्रया नह्यन्ति” ऋ० १०।६०।८ “अर्जुनीस्त्वन्नद्धाभास्” रघु । “अस्तीत्पादने नद्धो भुजगेनेव मन्दरः” रामा० सुन्द० २४ अ० ।

अपि+धारणे वा आदेरल्लोप । पिनह्यति अपिनह्यति । “वितत्य शार्ङ्गं कवचं पिनह्य” भट्टिः । “आमुच्य कम्बूपरिहाटके शुभे विसृज्य वेणीमपिनह्य कुण्डले” भा० वि० ११ अ० । विशेषेण बन्धने निबन्धने च । “पिनद्धां धूमजालेन प्रभामिव विभावसो ” भा०व०६८अ० “बहुधा तु पिनद्धाङ्गैर्हिमवच्छिखरैरिव” भा० आ० १८५ अ० ।

अव+समन्ताद्बन्धने । “चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयो” मनु ।

आ+सम्यग्बन्धने “वरत्रायां दाम्न्यानह्य आनः” ऋ०१०।१०२।८ “आनद्धावरणैः कार्मे” भा० भी० ११९अ०। “आनह्यते यस्य विधूयते च पापच्यते क्लिद्यति चापि नाभा” सुश्रु०

परि+आ+परितो बन्धे सक० । “सोमपर्य्याणहनेन पर्य्यानह्यति” शत० ब्रा० ३।३।४।६

उद्+उत्तोल्य बन्धने । “अस्त्रभ्रयणोऽस्थिमध्यमनुप्रविश्य मज्जानमुन्नह्यति” “सास्रावमुन्नह्यति मांसपिण्डम्” सुश्रु० अतिबन्धने च । “ते नेह शक्याः सहसा विजेतुं वीर्य्योन्नद्धा कृतवैरास्त्वया ते” भा० भी० ८१ अ० ।

सम्+उद्+सम्यग्बन्धने । “वल्मीकवत् समुन्नद्धमन्तं कुर्वन्ति विद्रधिम्” सुश्रु० । पाण्डित्याभिमाने गर्वे च “अतस्मिन् समुन्नद्धो पण्डितम्मन्यगर्वितौ”अमर । तत्र पाण्डित्यमाने “अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः”भा०उ०३२अ० । गर्वे “अर्थं महान्तमासाद्य विद्यामैश्वर्य्यमेव वा । विचरत्यसमुन्नद्धो य स पण्डित उच्यते” भा० उ० ३२अ० । सन्नद्धे च “परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्य कातरः” भाग० १।१५।४

उप+उपरिबन्धने । “विस्रावयेत् स्विन्नमतन्द्रितश्च शुद्धं व्रणं चाप्युपनाहयेत्तु” सुश्रु० । उपानत् क्विपि पूर्वस्वरदीर्घ ।

नि+निबन्धने । “इषुधिः पृष्ठे निनद्ध ” ऋ० ६।७५।५

परि+परितो बन्धने । “न तां बभौ परिणद्धेयमतन्वतमां महातलम्” भा० आ० २९ अ० । विस्तारे “परिणाहो

सव्यदुरमगोत्रनामादेशपूर्वकम् असकगोत्र । यजमानस्य पितरमुकशर्मन्नवनेनिक्ष्वेति रेखायामूलमध्यान्तप्रदेशेषु दक्षिणहस्तमवनेजनं कार्यम् । अग्रेण देवानां होम-कण्डिकाप्रदेशेन मनुष्याणाम्, उत्तरेण परिवेषणापर-पर्यायम् अङ्गुष्ठप्रदेशिन्योरन्तरालेनैव पितृणां परिषिच्यते अत इदमाह अपसव्यमिति" कर्कः। "अवनेज्य पूर्ववन्नीवि विस्रंस्य नमो व इत्यञ्जलिं करोति" कात्या॰ श्रौ॰ १५। निजेः शुद्ध्यर्थकस्य णिचि अवनेजयतीति । अवनेज्येति प्रयोग इति बोध्यम्। शोधनपरत्वे नेनिज्यादिति अवनेजने च न तन्त्रता यथाह छन्दोगप॰ "अर्घ्ये ऽक्षय्योदके चैव पिण्डदानेऽवनेजने । तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव च" अवनेजनशब्दे ४२६ पृ॰ कृत्य प्रदीपोक्त मातृपक्षीयावनेजनविधान छन्दोगेतरविषयम् अन्यवेदिनामाश्वयुदयिकादिविषयञ्चेति बोध्यम् ।

निर्+नि॰शेषेण क्षालनेन शोधने "पात्राणि निर्णेनिजानि" शत॰ ब्रा॰ ।।३।।।२ "पात्राणि निर्णेनिक्ते" तैत्ति॰ सं॰ । "अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते" मनुः "तोय-निर्णिक्तपाणि" रघु "तेषाममेतत्कृत्यानां निर्णिक्तानां शुभात्मनाम्" भा॰ शा॰ २७१ अ॰ ।

णिद् सन्निधाने अक॰ निन्दने सक॰ भ्वा॰ उभ॰ सेट् । नेदति-ते प्रणेदति ते। अनेदीत् अनेदिष्ट निनेद निनिदे ।

णिद् कुत्सने भ्वा॰ पर॰ सक॰ सेट् इदित् । निन्दति प्रणि-न्दति अनिन्दीत् । कृत्सु वा णत्वमिति पाणिनि. । सर्वत्र वा णत्वम् सुग्ध॰

"निनिन्द रूपं हृदयेन पार्वती" कुमा॰। "निन्दन्तस्तव सामर्थ्यम्" गीता। "अनिन्द्यं निन्दते यो हि" भा॰ व॰ २५२ अ॰ । आर्षत्वङ् । "न निन्दा निन्द्यं निन्दति किन्तु विधेय स्तौति" मीमांसा ।

णिल दुर्बोधे तुदा॰ पर॰ सक॰ सेट् । निलति प्रणिलति। अनेलीत् निनेल ।

णिव सेके भ्वा॰ पर॰ सक॰ सेट् । इदित् । निन्वति । अनिन्वीत् । निनिन्व ।

णिश समाधौ भ्वा॰ पर॰ सक॰ सेट् । नेशति प्रणेशति [अनेशीत् निनेश ।

णिष सेके भ्वा॰ पर॰ सक॰ सेट् । नेषति प्रणेषति अनेषीत् । निनेष ।

णिस चुम्बने अदा॰ आत्म॰सक॰ सेट् इदित् । निंस्ते प्रणिंस्ते अनिंसिष्ट निनिंसे । कृत्सु वा णत्वमिति पाणिनिः । सर्वत्र वा णत्वम् सुग्ध॰। निसो दन्त्यादि न वा" भट्टिः ।

"अभि स्रुच' क्रमते दक्षिणावृत्ते या अस्य धाम प्रथमं ह निंसते" ऋ॰१।१४४।१ "अभि स्वरन्ति बहवो मनीषिणो राजानमस्य भुवनस्य निंसते" ९।८५।१

णी प्रापणे भ्वा॰ उभ॰ द्विक॰ अनिट् । नयति प्रणयति अनैषीत्। प्रधाने कर्मणि लादयः। अजा ग्रामं नीयते । अनेष्ट निनाय निनयिथ निनेथ निन्ये नेता न्येष्यति ते नेतव्यः । नेय' नीत नीतिः नीत्वा विनीय ।

"सर्वांस्ते पयामि वः सदा । इजिनात्तारयिष्यामि" भा॰ आ॰ ६०५२ श्लो॰ "गमनाय मति चक्रे तार्क्ष्येनं निन्युः रज्जुना" रामा॰ बा॰ ९ अ॰ । "नयिष्यामि च वाहि-नीम्" रामा॰ ५।९१ अ॰। आर्षं इट्। "दैवेन किलयस्यार्थं स नीतोऽपि विपद्यते" भा॰ वि॰ २॰ अ॰ । यापने च"निनाय सात्यर्थहिमोत्किरानिलाः' । सहस्य रात्रीरुदवासतत्परा" कुमा॰ ।

सम्माननेने आत्म॰ "शास्त्रे नयते शास्त्रस्थं सिद्धान्तं शि-ष्येभ्य प्रापयतीत्यर्थः तेन च सम्मानन फलितम्"सि॰कौ॰ ज्ञाने निश्चये आत्म॰।"तत्त्वं नयते निश्चिनोति" सि॰कौ॰

अति+अतिक्रम्य नयने । "न स्वर्गं लोकमतिनयेत्" छा॰उ॰

वि+अति अपवाहने सक॰। "व्यतिनीय कालसुपसदां षड्ढम्" आश्वा॰श्रौ॰१२।८।२५।"व्यतिनीय क्षपोह्य"नारा॰

अनु+सामीप्यप्रवेशनाय सान्त्वबाक्यादिप्रयोगे सक॰। "भवतो-ऽनुनयाम्येव युष्मराज्ये ऽभिषिच्यताम्" भा॰ आ॰ ८४ अ॰। "प्रणिपातेन सान्त्वेन दानेन च महायशा । ऋत्विजो-ऽनुनयामास" भा॰ आ॰ २२१ अ॰ । आर्षं आत्तः । "अनुनीता त्वमस्माभिश्चिर सान्त्वेन मैथिलि!" रामा॰ सु॰ २५ अ॰ ।

अप+अपहरणे अन्यत्रनयने "यत्र सशङ्काः पार्थमपनिन्यू-रथाजिरात्" भा॰ आ॰ ५१॰ श्लो॰ ।

अभि+२९२ पृ॰ अभिनयशब्दोक्तार्थे सक॰। "गीतानि रम्याणि सह प्रहृष्टा कान्ताभिनीतानि मनोहराणि" हरि॰ ८४४८ अ॰।"तदुक्तमभिनीयाभियुक्तैः" वेदा॰सा॰ आभिमुख्येन नयने च।"इदा यत स्वामभिनीयमानम्" भा॰ व॰ ७६९ श्लो॰ । प्रधाने कर्मणि मानच् ।

अव+अधोनयने । "मन्थे सम्पातमवनयेत्" छा॰ उ॰ । "क्ष्पीवे अभिमवनीतश्छिन्ययुः" ऋ॰१।११६।८।

आ+दूरस्थस्यान्तिकप्रापणे । "दूरादिन्द्रमनयन्ना सुतेन" ऋ॰ ७।३३।२"रथमानयतस्तौ सुपर्णोच्छ्रितकेतनम्"भा॰द्रो॰ १४७ अ॰ । "प्रणीयता तेन वराङ्गनाभिरानायि भिक्षाम्

**तकत्** अव्य० तक–वा० अति । अत्यन्ते । “ततृप्ते मनायति तकत्सुते मनायति” ऋ० १।१२३।४ । “तकदिति मनायति अत्यन्तमिदमिति सुष्टु मन्यते” भा० । तद्–टेरकच् । २तच्छब्दार्थे त्रि० सकः तकौ तके इत्यादि रूपम्

**तकरी** स्त्री तं कुत्सितं करोति कृ–ट ङीप् । कुत्सितकारिण्यां स्त्रियां “ते भिनद्मि तकरीम्” तैत्ति० स० १।२।१०।१

**तकार** पु० त+कार । तस्वरूपे वर्णे “एव ध्यात्वा तकारन्तु” कामधेनुत० । [१पूर्त्ते २औषधे च ३औषधौ स्त्री उज्ज्व० ।

**तकिल** पु० तकि–कृच्छ्रजीवने उणादि० इलच् नलोपश्च

**तकु** त्रि० तक–गतौ निरु० उन् । गन्तरि “पुरुमेधश्चित् तकवे नर दत्” ऋ० ६।५७।५ “तकवे तकतिर्गतिकर्मा औणादिक उन्प्रत्यय सोममभिगच्छते” भा० ।

**तक्मन्** न० तक–मनिन् न कित् । अपत्ये निघण्टुः ।

**तक्र** न० तञ्च–रक् न्यङ्क्वा० कुत्वम् । चतुर्थांशजलयोगेन दधिमन्थनजाते दधिविकारभेदे (घोल) अमर० । तद्भेदादिकं भावप्रका० उक्तं यथा

“घोलन्तु मथितं तक्रमुदश्विच्छच्छिकापि च । ससरं निर्जलं घोलं मथितन्त्वसरोदकम् । तक्रं पादजलं प्रोक्तमुदश्विदर्द्धवारिकम् । छच्छिका सारहीना स्यात् स्वच्छा प्रचुरवारिका । घोलं तु शर्करायुक्तं गुणैर्ज्ञेयं रसालवत्” । मथित (मठ्ठा) इति लोके । छच्छिका (छाच्छ) इति लोके । “वातपित्तहरं ह्लादि मथितं कफपित्तनुत् । तक्रं ग्राहि कषायाम्लं स्वादुपाकरसं लघु । वीर्य्योष्णं दीपनं वृष्यं प्रीणनं वातनाशनम् । ग्रहण्यादिमतां पथ्यं भवेल्लङ्घ्राहि लाघवात् । किञ्च स्वादुविपाकित्वाच्च पित्तप्रकोपणम् । कषायं दीपनं वृष्यं प्रीणनं वातनाशनम् । कषायोष्णविपाकित्वाद्रौक्ष्याच्चापि कफापहम् । न तक्रसेवी व्यथते कदाचित् न तक्रदग्धाः प्रभवन्ति रोगाः । यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः । उदश्वित्कफकृद्बल्यमामघ्नं परमं मतम् । छच्छिका शीतला लघ्वी पित्तश्रमतृषापहा । वातनुत् कफकृत्सा तु दीपनी लवणान्विता ।

अथोद्धृतघृतस्तोकोद्धृतानुद्धृतघृतानां तक्राणां गुणाः “समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः । स्तोकोद्धृतघृतं तस्मादगुरु वृष्यं कफापहम् । अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम्”

अथ दोषविशेषे व्याधिविशेषे तक्रविशेषाः ।

“वातेऽम्लं शस्यते तक्रं शुण्ठीसैन्धवसंयुतम् । पित्ते स्वादु सितायुक्तं सव्योषमधिके कफे । हिङ्गुजीरयुतं घोलं सैन्धवेन च संयुतम् । भवेदतीव वातघ्नमर्शोऽतीसारहृत्परम् । रुचिदं पुष्टिदं बल्यं वस्तिशूलविनाशनम् । मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम्” ।

अथामपक्वतक्रगुणाः

“तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव प्रशस्यते” ।

अथ तक्रसेवननिमित्तानि ।

“शीतकालेऽग्निमान्द्ये च तथा वातामयेषु च । अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम् । तत्तु हन्ति गरच्छर्द्दिप्रसेकविषमज्वरान् । पाण्डुमेदोग्रहण्यर्शोमूत्रग्रहभगन्दरान् । मेहं गुल्ममतीसारं शूलप्लीहोदरारुची । श्वित्रकोष्ठगतव्याधीन् कुष्ठशोथतृषाकृमीन्” ।

तक्रस्याविषयाः “नैव तक्रं क्षते दद्यात् नोष्णकाले न दुर्बले । न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपित्तजे” ।

अथ गव्यादीनां विशिष्टाः गुणाः “यान्युक्तानि दध्यादौ तद्रूपं तक्रमादिशेत्” । भावप्र० ।

अधिकं शब्दार्थचिन्तामणौ २१८५ पृ० दृश्यम् । “मन्थनादिपृथग्भूतस्नेहमर्द्धोदकं तु यत् । नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे” सुश्रु० । “कृतकार्पासकीटानां गोमयस्य गुडस्य च । दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च” मनुः । “तक्रनिस्रावपङ्कश्च दधिमण्डार्द्रमृत्तिकम्” हरिवं० ६१ अ० । [पदार्थे ।

**तक्रकूर्चिका** स्त्री २१६७ पृ० कूर्चिकाशब्दोक्ते तक्रजाते

**तक्रपिण्ड** पु० “दध्ना तक्रेण वा दुष्टं दुग्धं बद्धं सुवाससा । द्रवभागेन हीनं यत् तक्रपिण्डः स उच्यते” इत्युक्ते (छाना) ख्याते पदार्थे । [विशेषयुक्ते मांसभेदे ।

**तक्रमांस** न० शब्दार्थचिन्ता० २१८२ पृ० उक्ते तक्रेण पाक-

**तक्रवामन** पु० तक्रं वामयति अप्रश्नाद्भयात् वाम+णिच्–ल्यु नृत० । नागरङ्गे शब्दार्थचिन्ता० ।

**तक्राट** पु० तक्रार्थं तक्रोत्पादनार्थमटति अट–अच् । मन्थानदण्डे हारा० ।

**तक्रारिष्ट** पु० “यमान्यामलकं पथ्या मरिचं त्रिपलांशकम् । लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् । तक्रं कंसासुतं जातं तक्रारिष्टं पिबेन्नरः । दीपनं शोथगुल्मार्शःकृमिमेहोदरापहम्” चक्र० उक्ते औषधभेदे ।

**तक्व** त्रि० तक–गतौ वा० व । गमनशीले । “तक्वो नेता तदिद्वपुः” ऋ० ८।६९।१२ “तक्वो गमनशीलः” भा० ।

मनु॰। "तपस्विसंसर्गविनीतसत्त्वे" (तपोवने) "वध्यान् विनेष्यन्निव दुष्टसत्त्वान्" रघु॰। "स्वधर्माश्चलितान् राजा विनीय स्थापयेत् पथि" याज्ञ॰ आनुकूल्यार्थमनुनये विनयः। करादेर्निर्यातने आत्म॰। "करं विनयते राज्ञे देयं भागं परिशोधयतीत्यर्थः" सि॰ कौ॰। व्यये विनियोगे आत्म॰। "शतं विनयते धर्मार्थं विनियुङ्क्ते इत्यर्थः" सि॰ कौ॰। अपनयने कर्तृशरीरभिन्ने कर्मणि कर्तृस्थे क्रियाफले आत्म॰। क्रोधं विनयते अपगमयति क्रोधापसारणफलस्य चित्तप्रसादस्य कर्तृस्थत्वात् "स्वरितञितः" इत्येव सिद्धे नियमार्थमिदं तेनेह न गण्डं विनयति, गण्डस्य शरीरावयवत्वात् कर्तृस्थत्वेऽपि न तङ्। कर्तृस्थे इत्युक्तेः गुरोः क्रोधं विनयतीत्येव।

सम्+संयोजने। "ब्रह्मण्यात्मानं समनयन्" भाग॰ ६।१०।१ "ओषधिभ्योऽध्यात्मन् समनयन्" तैत्ति॰ब्रा॰२।५।२।२स्थापने च "करे सुपदाश्च समीय" ऋ॰ उ॰ ६।४।२४ मिश्रणे "दधिमधुघृतविषा हृत समीय" ऋ॰ उ॰ वैदिकवृत्ति॰। संस्कारभेदे सानाय्यं हविः "नासोमयाजी संनयेत्" तैत्ति॰ स॰२।५।५।१।

नील नीलताकरणे भ्वा॰ पर॰ सक॰ सेट्। नीलति प्रणी-लति अनीलीत्। निनील

नीव स्थौल्ये भ्वा॰ पर॰ अक॰ सेट्। नीवति प्रणीवति अनीवीत् निनीव।

नु स्तुतौ अदा॰ पर॰ सक॰ सेट्। नौति प्रणौति अनावीत् अनौषीत् नुनाव नुनुविथ नुनुविव। नोता नविता नविष्यति नोष्यति नोतव्यं नवितव्यं नुत। नुति नुत्वा प्रणुत्य। "येन नुवन्तमहिं सं पिणक्" ऋ॰ ६।१७।१०। "द्विधाप्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव" कुमा॰। "सादरं नौमि तं भक्त्या श्रीगोपीजनवल्लभम्" स्क॰ पु॰। "सैन्यं नीलं नुनाव च" भट्टिः। णिच् नावयति णिच् सन्। नुनावयिषति सन् नुनूषते यङ् नोनूयते।

आ+सम्यक्स्तवने आत्म॰। "पतत्त्रिणः शुभामन्द्रमानु-प्राणास्त्वजिह्वदन्" भट्टि।

प्र+प्रकर्षेण स्तवने "एतदेवं विद्वानक्षरं प्रणौति" छा॰उ॰।

नु गतौ भ्वा॰ आत्म॰ सक॰ अनिट् निघण्टु। गवते नवते इत्यादि गतिकर्मसु निरुक्तोक्तेः नवते। "अभीनवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम्" ऋ॰ ९।१०।१। "अभीनवन्ते अभिगच्छन्ति" भा॰। "हरिं नवन्ते अथवा स्वध्वयः" ऋ॰ ९।८६।२७ "नवन्ते गच्छन्ति" भा॰। "गावो न धेनवोऽनवन्त" १०।९५।६

नुद प्रेरणे तुदा॰ उभ॰ सक॰ अनिट्। नुदति-ते प्रणुदति अनौत्सीत् अनुत्त। नुनोद नुनुदे नोत्ता नोत्स्यति ते नोदनम् नोत्तुम्। नुदः नुत्त॰। "मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्" मेघ॰। खण्डने अपसारणे च "नुनुदे तनुखण्डपण्डित" नैष॰। "अद स्त्वया नुन्नमनुत्तमं तमः" माघ॰। "प्रणुद्यान्ते द्विजेन्द्र देवदेवः" हरिव॰ १११ अ॰। "विधिना समनु-दितः" भा॰ व॰ १ अ॰। अनुदात्तत्वेऽपि दृष्ट आर्षः। नोदं करोतीति णिच्। नोदयति नोदित नोद्यमानः। "ते नोद्यमाना विधिवत् सादिकेन हयोत्तमाः" भा॰ व॰ ७१ अ॰। "अङ्कुशाङ्कुशनोदिताः" भा॰ १९ अ॰। धातुपाठे स्वरितेत् णुद प्रेरणे इति पाठेऽपि पुन-स्तत्रैवोत्तरत्र पाठ कर्त्रभिप्राये क्रियाफलेऽपि परस्मै-पदार्थः" सि॰ कौ॰।

अप+अपसारणे "जरां रोगमपनुद्य शरीरात्" याज्ञ॰प्रा॰८॰ "आस्फाद्य च महाबाहुर्बाहुभ्यामपानुदत्" भा॰ आश्व॰ ६२अ॰। "कथमेतौ अपनोत्स्यथ" भा॰ व॰ १११ अ॰। "अभिद्रवार्जुन। क्षिप्रं कुरून् द्रोणादपानुद" भा॰ द्रो॰ १९० अ॰।

परा+अपसारणे "तत्र पराणुद विभो। कश्मलं मानसं महत्" भाग॰ १।७।७ श्लो॰।

प्र+प्रकर्षेण नोदने चालने च। "स मातलिना तरसा प्रणुद्य" भा॰ वि॰ ६४ अ॰। अपसारणे "ततोऽन्धकारं प्रणुदन्नुद-तिष्ठत चन्द्रमाः" भा॰ व॰ ३३ अ॰।

वि+विशेषेण नोदने। "नोदयामास तानश्वान् वितुन्नाङ्गोरु-सायकैः" भा॰ भी॰ ४८४६ श्लो॰। णिजन्तस्तु दुःखा-द्यपसारणे "वल्लीविनोदयति येन दिगन्तलक्ष्मीः" रघु मल्लिनाथस्तु तत्करोतीत्यर्थे नामधातुरयमित्याह। "पुष्पं फलं चार्त्तवमाहरन्त्यः। विनोदयिष्यन्ति नवाभि-षङ्गात्" रघुः। "कथं वा देवी सरुजत्वात् विनोद्यते" मालविकाग्नि॰। "लोकं विनोदय मन सुमनोलताम्"। सा॰ द॰।

नू स्तुतौ तु॰कु॰सक॰प॰सेट्। नुवति प्रणुवति अनुवीत् नुनाव "अनिन्द्रमदेभ सप्त नुवन्तं पापयामुया" ऋ॰ १।१२९।५ "महामनूषत श्रुतम्" ऋ॰१।६।६ "अनूषत स्तुनयन्त आर्षः इडभावः। अयं कुटादिः इति वररुचि। नुव

तक्षन् त्रि० तक्ष—गतौ कनिन् । गतियोग्ये "तक्षा न भूर्णिर्वना सिषक्ति" ऋ० १।६६।१ तक्ष—तक्षणे कनिन् । २चौरे च । "निष्ट्यं च उपस्तक्षकयोरिव" ऋ० १।१५१।५ "तक्ष्णोः तक्षा तनूकृतस्य यो गति" भा० ।

तक्षवी स्त्रि० तक्ष्णां चौराणाम् वी । चौराणां गतौ । "भगमीहे तक्षवीये" ऋ० १।१३४।५। "तक्षवीये त स्कराणां सर्वघातिनामन्यत्र गमनाय" भा० छान्दस इयङ् दीर्घश्च ।

तक्ष काष्ठे तनूकरणे ( चाँचा छोला ) व्यापारे वा भ्वा० पक्षे स्वा० प० सक० वेट् । तक्षति तक्ष्णोति तक्ष्णन्ति तक्ष्णुवन्ति अतक्षीत् अताक्षीत् ततक्ष । तक्षिष्यति तक्ष्यति । तष्टा तक्षणम् तष्टः तक्ष्णः तष्टा प्रकाष्ठतट् । "दारुधाणाञ्च तक्षणम्" मनुः "चषालं ये अश्वयूपाय तक्षति" ऋ० १।१६२।६ "बाहुत्राणकवचमपतक्ष्णुवन्ति" शत० ब्रा० १।७।१।८ ।

तक्ष त्वचो ग्रहणे संवरणे भ्वा० प० सक० सेट् । तक्षति काय चर्मणा योधा । अतक्षीत् ततक्ष ।

तक्ष पु० रामानुजस्य भरतस्य पुत्रभेदे । "तक्ष पुष्कल इत्यास्तां भरतस्य महीपते ।" भाग० ९।११।७ । "स (भरत) तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः। अभिषेच्याभिषेकार्हौ रामान्तिकमगात् पुनः" रघुः । २तन्नामके राजधानीभेदे च । तक्ष भावे घञ् । ३तनूकरणे कवचादि संवरणे । "उभौ कक्षौ सुपार्श्वे च तक्षन्तौ च शिक्षितौ" भा० स० २२ अ०

तक्षक पु० तक्ष—ण्वुल् । १विश्वकर्मणि शब्दर० । २द्रुमभेदे हेमच० । "तक्षकात् विप्रकन्यायां जातस्तक्षक उच्यते । उशनसोक्ते सङ्कीर्णजातिभेदे (छुतार) ३सूत्रधारे कद्रुगर्भे कश्यपात् जाते अष्टनागान्तर्गते ४नागभेदे "अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः । कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः" ति० त० । "काद्रवेयाश्च बलिनः सहस्रमितौजसः । सुपर्णवशगा नागा जज्ञिरेऽनेकमस्तकाः । तेषां प्रधाना सततं शेषवासुकितक्षकाः" हरिवं० ३अ० । "योऽसौ वृद्धस्य तातस्य तथा कण्ठगतस्य ह । स्कन्धे मृतं समासाक्षीत् पन्नगं राजकिल्बिषी । स पापमतिसक्तु बलात्कः पन्नगेश्वरः । आशीविषस्तिग्मतेजा मदाबलचोदितः । अमरात्मादितो नेता यमस्य सदनं प्रति । द्विजानामवमन्तारं कुरूणामयशस्करम्" भा० आ० ४१ ।

तेन च परीक्षितोदयनकथा भा० आ० ४२अ० दृष्ट्या यथा "अथ शुश्राव गच्छन् स तक्षको जगतीपतिम् । मन्त्रैर्गदैर्विषहरैर्रक्ष्यमाणं प्रयत्नतः । सूत उवाच । स चिन्तयामास तदा मायायोगेन पार्थिव ॥ मया वञ्चयितव्योऽसौ क उपायो भवेदिति । ततस्तापसरूपेण प्राहिणोत् स भुजङ्गमान् । फलदर्भोदकं गृह्य राज्ञे नागोऽथ तक्षकः । तक्षक उवाच । गच्छध्वं यूयमव्यग्रा राजानं कार्य्यवत्तया । फलपुष्पोदकं नाम प्रतिग्राहयितुं नृपम् । सौतिरुवाच । ते तक्षकसमादिष्टास्तथा चक्रुर्भुजङ्गमाः । उपनिन्युस्तथा राज्ञे दर्भानपः फलानि च । तच्च सर्वं स राजेन्द्रः प्रतिजग्राह वीर्य्यवान् । कृत्वा तेषाञ्च कार्य्याणि गम्यतामित्युवाच तान् । गतेषु तेषु नागेषु तापसच्छद्मरूपिषु । अमात्यान् सुहृदश्चैव प्रोवाच स नराधिपः । भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वशः । तापसैरुपनीतानि फलानि सहिता मया । ततो राजा ससचिवः फलान्यादातुमैच्छत । विधिना सम्प्रयुक्तो वै ऋषिवाक्येन तेन तु । यस्मिन्नेव फले नागस्तमेवाभक्षयत् स्वयम् । ततो भक्षयतस्तस्य फलात् कृमिरभूदणुः । ह्रस्वकः कृष्णनयनस्ताम्रवर्णोऽथ शौनक ॥ स तं गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत् । अस्तमभ्येति सविता विषादद्य न मे भयम् । सत्यवागस्तु स मुनिः कृमिर्मां दशतामयम् । तक्षको नाम भूत्वा वै तथा परिहृतं भवेत् । ते चैनमन्ववर्त्तन्त मन्त्रिणः कालचोदिताः । एवमुक्त्वा स राजेन्द्रो ग्रीवायां सन्निवेश्य ह । कृमिकं प्राहसत् तूर्णं मुमूर्षुर्नष्टचेतनः । प्रहसन्नेव भोगेन तक्षकेणाभिवेष्टितः । तस्मात् फलाद्विनिष्क्रम्य यत्तद्राज्ञे निवेदितम् । वेष्टयित्वा च वेगेन विनद्य च महास्वनम् । अदशत् पृथिवीपालं तक्षकः पन्नगेश्वर" अधिकं कश्यपशब्दे उक्तम् "मद्धर निश्चयमस्य योऽस्ति सेवगते रवौ । अति रोषान्वितस्तस्य तक्षकः किं करिष्यति" ति० त० । तक्षकनागवदन्द्रस्य सखा खाण्डवप्रवासी अर्जुनेन खाण्डववनस्य दाहकाले न तस्य दाहः तत्कथा "निहत्येव देवेषु वायुवाचापरीरिपौ । ततश्च नाभाष्य महागम्भीरनिस्वना । न ते सखा च निहतः तक्षको भुजगोत्तमः । दाहकाले खाण्डवस्य कुरुक्षेत्रं गतो ह्यसौ" भा० आ० २२८ अ० । ५काष्ठादितक्षणकर्त्तरि त्रि० ।

समायुक्तः पुरोधाः स्याद्द्विजोत्तमः। प्रतिगर्त्तेषु कलशा यज्ञोपकरणानि च। व्यजनञ्चामरे शुभ्रे ताम्रपात्रे सुविस्तृते। ततस्त्वनेकवर्णाः स्युश्चरवः प्रतिदैवतम्। आचार्य्यः प्रक्षिपेद्भूमावनुमन्त्र्य विचक्षणः। त्र्यरत्निमात्रो यूपः स्यात् क्षीरवृक्षविनिर्म्मितः। यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता। हेमालङ्कारिणः कार्य्याः पञ्चविंशतिरृत्विजः। कुण्डलानि च हैमानि केयूरकटकानि च। तथाङ्गुलीयपवित्राणि वासांसि विविधानि च। पूजयेत्तु समं सर्वान् आचार्य्ये द्विगुणं पुनः। दद्याच्छयनसंयुक्तमात्मनश्चापि यत् प्रियम्। सौवर्णौ कूर्म्ममकरौ राजतौ मत्स्यदुन्दुभौ। ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः। एवमासाद्य तत्सर्व्वमादावेव विशाम्पते॥ शुक्लमाल्याम्बरधरः सर्व्वौषध्युदकैस्ततः। सपूर्णकलशैस्तत्र स्नापितो वेदपारगैः। यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः। पश्चिमं द्वारमासाद्य प्रविशेद्यागमण्डपम्। ततो मङ्गलशब्देन भेरीणां निःस्वनेन च। रजसा मण्डलं कुर्य्यात् पञ्चवर्णेन तत्त्ववित्। षोडशारन्ततश्चक्रं पद्मगर्भं चतुर्म्मुखम्। चतुरस्रञ्च परितो वृत्तं मध्ये सुशोभनम्। वेद्याश्चोपरि तत् कृत्वा ग्रहान् लोकपतींस्ततः। सन्न्यसेन्मन्त्रतः सर्व्वान् प्रतिदिक्षु विचक्षणः। झषादि स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः। ब्रह्माणञ्च शिवं विष्णुं तत्रैव स्थापयेद्बुधः। विनायकञ्च विन्यस्य कमलामम्बिकां तथा। शान्त्यर्थं सर्व्वलोकानां भूतग्रामं न्यसेत्ततः। पुष्पभक्ष्यफलैर्युक्तमेवं कृत्वाधिवासनम्। कुम्भान् सजलगर्भांस्तान् वासोभिः परिवेष्टयेत्। पुष्पगन्धैरलङ्कृत्य द्वारपालान् समन्ततः। पठध्वमिति तान् ब्रूयादाचार्य्यस्त्वभिपूजयेत्। बह्वृचौ पूर्व्वतः स्थाप्यौ दक्षिणेन यजुर्व्विदौ। सामगौ पश्चिमे तद्वदुत्तरेण त्वथर्व्वणौ। उदङ्मुखो दक्षिणतो यजमान उपाविशेत्। यजध्वमिति तान् ब्रूयाद्धौत्रिकान् पुनरेव तु। उत्कृष्टान् मन्त्रजापेन तिष्ठध्वमिति जापकान्। एवमादिश्य तान् सर्व्वान् पर्य्युक्ष्याग्निं स मन्त्रवित्। जुहुयाद्वारुणैर्म्मन्त्रैराज्यञ्च समिधस्तथा। ऋत्विग्भिश्चापि होतव्यं वारुणैरेव सर्व्वतः। ग्रहेभ्यो विधिवद्धुत्वा तथेन्द्रायेश्वराय च। मरुद्भ्यो लोकपालेभ्यो विधिवद्विश्वकर्म्मणे। रात्रिसूक्तञ्च रौद्रञ्च पावमानं सुमङ्गलम्। जपेयुः पौरुषं सूक्तं पूर्व्वतो बह्वृचाः पृथक्। शाक्रं रौद्रञ्च सौम्यञ्च कूष्माण्डं जातवेदसम्।

सौरसूक्तं जपेरन्वै दक्षिणेन यजुर्व्विदः। वैराजं पौरुषं सूक्तं सौपर्णं रुद्रसंहिताम्। शैशवं पञ्च निधनं गायत्रं ज्यैष्ठसाम च। वामदेव्यं बृहत्साम रौरवं सरथन्तरम्। गवां व्रतञ्च काण्वञ्च रक्षोघ्नं वयसस्तथा। गायेयुः सामगा राजन् पश्चिमं द्वारमाश्रिताः। आथर्व्वणाश्चोत्तरतः शान्तिकं पौष्टिकं तथा। जपेयुर्म्मनसा देवमाश्रित्य वरुणं प्रभुम्। पूर्व्वेद्युरभितो रात्रावेवं कृत्वाधिवासनम्। गजाश्वरथ्यावल्मीकात् सङ्गमाद्ध्रदगोकुलात्। मृदमादाय कुम्भेषु प्रक्षिपेच्चत्वरात्तथा। रोचनाञ्च ससिद्धार्थां गन्धं गुग्गुलुमेव च। स्नपनं तस्य कर्त्तव्यं पञ्चभङ्ग(पल्लव)समन्वितम्। प्रत्येकन्तु महामन्त्रैरेवं कृत्वा विधानतः। एवं क्षपामतिवाह्य विधियुक्तेन कर्म्मणा। ततः प्रभाते विमले सञ्जातेऽथ शतं गवाम्। ब्राह्मणेभ्यः प्रदातव्यमष्टषष्टिश्च वा पुनः। पञ्चाशद्वाथ षट्त्रिंशत् पञ्चविंशतिरप्यथ। ततः सांवत्सरप्रोक्ते शुभे लग्ने सुशोभने। वेदशब्दैश्च गान्धर्व्वैर्व्वाद्यैश्च विविधैः पुनः। कनकालङ्कृतां कृत्वा जले गामवतारयेत्। सामगाय च सा देया ब्राह्मणाय विशाम्पते॥ पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम्। ततो निःक्षिप्य मकरमत्स्यादींश्चैव सर्व्वशः। धृतां चतुर्भिर्विप्रैर्वेदवेदाङ्गपारगैः। महानदीजलोपेतां दध्यक्षतसमन्विताम्। उत्तराभिमुखीं धेनुं जलमध्ये तु तारयेत्। आथर्व्वणेन स्नातां तां पुनर्म्मामित्यथेति च। आपो हि ष्ठेति मन्त्रेण क्षिप्त्वागत्य च मण्डपम्। पूजयित्वा सदस्यान् वै बलिं दद्यात् समन्ततः। पुनर्द्दिनानि होतव्यं चत्वारि मुनिसत्तमाः॥ चतुर्थीकर्म्म कर्त्तव्यं देया तत्रापि शक्तितः। दक्षिणा राजशार्दूल। वरुणक्षमापणं ततः। कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च। ऋत्विग्भ्यस्तु समं दत्त्वा मण्डपं विभजेत् पुनः। हेमपात्रीञ्च शय्याञ्च स्थापकाय निवेदयेत्। ततः सहस्रं विप्राणामथवाष्टशतं तथा। भोजनीयं यथाशक्ति पञ्चाशद्वाथ विंशतिः। एवमेष पुराणेषु तडागविधिरुच्यते। कूपवापीषु सर्व्वासु तथा पुष्करिणीषु च। एष एव विधिर्द्दृष्टः प्रतिष्ठासु तथैव च। मन्त्रतस्तु विशेषः स्यात् प्रासादोद्यानभूमिषु। अयन्त्वशक्तावर्द्धेन विधिर्दृष्टः स्वयम्भुवा। अल्पेष्वेकाग्निवत् कृत्वा वित्तशाठ्यादृते नृणाम्। प्रावृट्काले स्थिते तोये ह्यग्निष्टोमफलं स्मृतम्। शरत्काले स्थितं यत् स्यात् तदुक्तफलदाय-

कम् । वाजपेयातिरात्राभ्यां हेमन्ते शिशिरे स्थितम् । अश्वमेधसमं प्राह वसन्तसमये स्थितम् । ग्रीष्मेऽपि तत् स्थितं तोयं राजसूयाद्विशिष्यते । एतान् महाराज ! विशेषधर्मान् करोति योऽत्यागमशुद्धबुद्धिः । स याति रुद्रालयमाशु पूतः कल्पाननेकान् दिवि मोदते च । अनेकलोकान् समहस्तपादीन् भुक्त्वा परार्द्धद्वयमङ्गनाभिः । सहैव विष्णोः परमम्पदं यत् प्राप्नोति तद्यागफलेन भूयः" ।

जलाशयखननारम्भनक्षत्रादि मु० चि० पी० उक्तं यथा "मित्रार्कध्रुवशाक्रवारुणमघातोयान्त्यपुष्येन्दुभिः पापैर्हीनबलैर्जले सुरगुरौ ज्ञे वा भृगौ खे विधौ । आप्ये सर्वजलाशयस्य खननम्" मु० चि० ।

"मित्रोऽनुराधा अर्को हस्तः ध्रुव रोहिण्युत्तरात्रय शाक्र धनिष्ठा अम्बुपः शततारका तोय पूर्वाषाढ़ा अन्त्यं रेवती पुष्य इन्दुर्मृग एतैर्नक्षत्रैर्यथोदयभि सर्वेषां जलाशयानां वापीकूपतडागमात्राणां तोयाधाराणां खननं शुभमुक्तम् उक्तञ्च व्यवहारतत्त्वे "वाप्याम्बुपान्त्य पितृमित्रवसूत्तरार्कवैन्द्रीन्द्वभेषु खननं सलिलाश्रयाणामिति" । कः प्रजा तद्देवताकत्वेनाभेदात् रोहिणी । अथ जलाशयखनने लग्नविचारः पापैः पापग्रहैर्बलरहितैः सद्भिः, तथा लग्ने सुरगुरौ वृहस्पतौ ज्ञे बुधे स्थिते सतीत्यर्थः लग्नात् खे दशमस्थाने भृगौ शुक्रे, आप्ये जलचरराशौ विधौ सति जलाशयखननं हितमुक्तञ्च रत्नमालायाम् "लग्ने जीवे ज्ञेऽथ वा दुर्बलेषु क्रूरे शुक्रे चापि मेषूरणस्थे । आप्ये चन्द्रे सर्वतोयाश्रयाणामारम्भाः स्युः सिद्धये निर्विकल्पम्" । कश्यपेनाप्युक्तम् "गुरौ ज्ञे वा लग्नगते शुक्रे कर्मगते, विधौ । आप्यभे जलकार्य्याणामारम्भः सिद्धिदः स्मृतः" इति । दीपिकायान्तु विशेषः "पुष्ये मित्रकरोत्तरत्रयवरुणवसुब्राह्माम्बुपित्र्येन्दुभिः पक्षेऽर्के शुभवारयोगतिथिषु क्रूरेष्ववीर्य्येषु च । पुष्टेन्दौ जलराशिगे दशमगे शुक्रे शुभांशोदये प्रारम्भः सलिलाश्रयस्य शुभदो जीवेन्दुपुत्रोदये । स घटितः । अन्ये तु वापीकूपतडागानामाकृतिभेदात् प्रत्येक भिन्नानि नक्षत्राण्युक्तानि । तत्र वापीखननमाह कश्यपः 'स्वात्यश्विपुष्यहस्तेषु सर्वदा च पुनर्वसौ । रेवत्यां वारुणे चैव वापीकर्म प्रशस्यते' । कूपारम्भमाह श्रीपतिः "हस्तः पुष्यो वासवं वारुणञ्च मैत्रं पित्र्यं रोहिणी चैव राधा । प्राजापत्यञ्चापि नक्षत्रमाहुः कूपारम्भे ऽत्रमाद्या मुनीन्द्राः" । तडागारम्भमाह वशिष्ठः "मैत्रेन्दुपौष्णोत्तररोहिणीषु देवेज्यशुक्रेन्दुजवासरेषु । प्रारम्भणं सर्वजलाशयानां कार्यं सितेन्दुग्रहवारलग्ने" । अत्र वापीकूपतडागानां पार्थक्येनाभिधानात् तडागारम्भार्थमिदं वचनमवसीयते बहुवचनमाश्रयाभिप्रायेण सर्वशब्दोपादानं छन्दःपरिपूरणार्थं तत्र कूपतडागखननेषु षट्पञ्चाशदागमशिष्टानां मेलने त्रयोदश नक्षत्राणि भवन्ति तत्र सत्स्वपि ज्ञामेन व्यवहारतत्त्वकृता सर्वजलाशयानामारम्भे सामान्यतो जलाशयतत्त्वादावेतानि त्रयोदश भान्युक्तानि तान्येव च ग्रन्थकृतोक्तानि । तत्र वापीकूपतडागानां भेदो लोकप्रसिद्ध एव यत्तु पुनर्वशिष्ठेनोक्तं "मघाहस्तोदेयकरार्द्धमित्रध्रुवाम्बुपित्र्ये सह रेवतीषु । उद्यानवाप्यादितडागकूपकार्याणि सिद्ध्यन्ति जले ध्रुवं स्यात्" । तच्छीर्णोद्धारविषयं प्राग्रुक्तवाक्ये प्रारम्भपदोपादानात् नूतनखननविषयमिति पूर्वत्रापि परिहारः" पी० धा० ।

अधिकं जलाशयोत्सर्गशब्दे ३०७८ पृष्ठादावुक्तम् । अथ राहुसाम्मुख्यनिषेधः मु० चि० पी० उक्तो यथा "देवालये गेहविधौ जलाशये राहोर्मुखं शम्भुदिशो विलोमतः । मीनार्कसिंहार्कमृगार्कतस्त्रिभे खाते मुखात् पृष्ठविदिक् शुभा भवेत्" । मु० चि० ।

"देवालये इति । अत्र यथासङ्ख्यमन्वयः । देवालयारम्भे राहोर्मुखं मीनार्कतस्त्रिराश्यवस्थिते सूर्य्ये ऐशानीतो विलोमतो विपरीत विदिक्षु वायव्यादिषु राहोर्मुखं स्यात् यथा मीनमेषवृषराश्युपस्थिते सूर्य्ये राहोर्मुखम् ऐशान्याम् । मिथुनकर्कटसिंहराश्युपस्थिते सूर्य्ये वायव्यां राहुमुखम् । कन्यातुलावृश्चिकस्थे सूर्य्ये नैर्ऋत्यां राहुमुखम् । धनुर्मकरकुम्भराश्युपस्थे सूर्य्ये आग्नेय्यां राहोर्मुखम् इत्यर्थः । एवं गृहारम्भेऽपि सिंहार्कतस्त्रिराश्युपस्थितेऽर्के विलोमत ऐशान्यां राहुमुखम् । वृश्चिकादित्रये वायव्यां कुम्भादित्रये नैर्ऋत्याम् । वृषादित्रये आग्नेय्यां राहुमुखं स्यात् । जलाशयारम्भेऽपि मकरार्कतस्त्रिराश्युपस्थेऽर्के विलोमतः ऐशान्यां राहुमुखं स्यात् । मेषादितस्त्रिभिर्वायव्याम् । कर्कादितस्त्रिभिर्नैर्ऋत्याम् । तुलादितस्त्रिभिः आग्नेय्यां राहुमुखं स्यादित्यर्थः । फलमाह खात इति । देवालयादिविषयके खाते भूमिशोधने कर्त्तव्ये सति राहुमुखात् पृष्ठवर्त्तिनी दिक् शुभा भवेत् यथा

देवालयविषये मीनादित्रिराशिस्थितसूर्य्यत्वेन ऐशान्या राहुमुखम् । तत्पृष्ठविदिक् आग्नेयी तस्यां प्रथमखातप्रारम्भः शुभद इत्यर्थः । मिथुनादिराशित्रयस्थे सूर्य्ये राहुमुखं वायव्यां तत्पृष्ठविदिगैशानी तस्यां खातारम्भः शुभः । एवं सर्वत्र । तथैव वटादिविधौ अपि राहुमुखं कस्यां दिश्यस्ति इत्यवधार्य तत्पृष्ठविदिशि खातं शुभफलं इत्यर्थः । यत्र । सर्पेण विदिक् व्याप्ता । यथा । ऐशान्यां मुखम् । वायव्यामुदरम् । नैरृत्यां पुच्छम् आग्नेय्यां पृष्ठम् । अत खाते आग्नेयी सम्यक् । एवमन्यत्राप्यूहनीयम् यदाह विश्वकर्मा "ईशानतः सर्पति कालसर्पो विहाय सृष्टिं गणयेद्विदिक्षु । शेषस्य वास्तोर्मुखमध्यपुच्छं त्रयं परित्यज्य खनेच्चतुर्थम्" इति । ज्योतिश्चिन्तामणौ "तुलाकीदिनिक वेद्या सिंहादि गणयेद्वटस्थे । देवालये च मीनादि तडागे मकरादिषु" । तदारम्भतदुत्सर्गौ च समयाशुद्धौ न कार्य्यौ कालाशुद्धिशब्दे तत्प्रमाणं दृश्यम् "एतेमाखानि शाखानवनियत्ह हरित्पर्णपूर्णद्रुमाली व्यालीटोपान्तशान्तव्ययपथिकहर्षा दृश्यते रागस्तडाग" नैष० ।

**तडाघात** पु० "छन्नै करिकराघैमे तडाघात विदुर्बुधा" इत्युक्ते तटाघाते वर्मक्रीडायाम् शब्दकल्पद्रुम । तच्चिन्त्य तत्र वाक्ये तटाघातमित्येव पाठः तडेति पाठः लिपिकरप्रमादकृत । [त्रि० ।

**तडि** पु० तड–आघाते भावादौ इन् । १आघाते २तत्कर्त्तरि

**तडित्** स्त्री ताडयत्यभ्रम् चुरा० तड–इति नि० ह्रस्व । १विद्युति . अमर । "जलदास्तडित्तुलितकान्तकार्त्तस्वरा" "घनं घनान्ते तडिता गुणैरिव" माघः । "पौगसतडित्तोयदयोरिवास्तु" रघु ।

तडित्पक्षपातादिस्तु "सजलजलधिमध्ये वायुयोऽग्निः स्थितोऽस्मात् सलिलभरनिमग्नादुत्थिता धूमशाखाः । वियति पवननीताः सर्वतस्ताः स्रवन्ति द्युमणिकिरणदीप्ता विद्युतस्तत्स्फुलिङ्गा" । "अकस्माद्द्युतं तेजः पार्थिवांशकमिश्रितम् । वाद्यावदुन्नमदाघाते प्रतिकूलानुकूलयोः । वायोस्तत् पतति प्रायो ह्यकालमाल्यवर्षणे । यतः प्रावृषि नैवेते पावक प्रसरन्ति हि । तत् मेधा पार्थिव वाप्य तैजस तडिदुत्थितम् । ततो निर्भरदाहेव भूमिस्थैरनुभूयते" सि० शि० टीका । २अन्तिके निघण्टुः ३हिंसाया निघण्टुः "तडित् आघ्नतेत्यु-पक्रमे "तत्क्षिप्रमतृत्वकर्माण" इति तदुक्ते

**तडित्प्रभा** स्त्री तडित इव प्रभा यस्याः । कुमारानुचरमातृभेदे । "केशयन्ती त्रुटिनामा क्रोशनाऽथ तडित्प्रभा" भा० शल्य० ४७अ० कुमारानुचरमातृगणोक्तौ । २तडित्तुल्यदीप्तियुते त्रि० ।

**तडित्वत्** पु० तडित् विद्यतेऽस्य मतुप् मस्य वः तान्तत्वेन अपदान्तत्वात् न तस्य द । १मेघे "चलिताचलवर्षमाणा गम्भीरविराविणस्तडित्वन्त" हृ० स० १२ अ० २मुस्तके च अमरः । ३तडिद्विशिष्टे त्रि० स्त्रियां ङीप् "समुदितस्निग्धेन तडित्वतीम् । जयता शरदम्बुदसंहतिम्" किरा० ।

**तडिद्गर्भ** पु० तडितो गर्भेऽस्य । मेघे "तडिद्गर्भ इतर समुद्रा" श्वेताश्व० उप० ४ अ० ।

**तडिन्मय** त्रि तडिदात्मकः तडित्+मयट् । तडित्स्वरूपे "तडिन्मयैरम्बुधितैर्विलोचने" कुमा० ।

**तण्ड** पु० तडि–अच् । १ऋषिभेदे तस्य गोत्रापत्यम् गर्गा० यञ् । ताण्ड्य तद्गोत्रापत्ये पु स्त्री० । यूनि फक् । ताण्ड्यायन तदीये यून्यपत्ये पु स्त्री० । तण्डशब्दस्य वतण्डशब्देन सम द्वन्द्वे कौर्त्तकौजपा० पूर्वपदप्रकृतिस्वरः । भावे अ । २आहतौ स्त्री ।

**तण्डक** पु स्त्री० तडि–ण्वुल् । १खञ्जने, स्त्रियां ङीष् । २फेने, ३समासप्राये वाक्ये, ४गृहदारुणि, ५तरुस्कन्धे च न० मेदि० ६मायावहुले, उपघातके त्रि० परिष्कारे पु न० शब्दार्थचि० ।

**तण्डि** पु० कृतयुगोत्पन्ने ऋषिभेदे तत्कथा भा० आनु० १५ अ० । "ऋषिरासीत् कृते तात । तण्डिरित्येव विश्रुत दश वर्षसहस्राणि तेन देवः समाधिना । आराधितोभक्तेन तस्योदर्कं निशामय" इत्यादिका । महादेववराज्ञ तत्सुतस्य यजुर्वेदीयताण्डिनशाखाभेदे कल्पसूत्रकर्त्तेति तत्रैव १६ अ० उक्त यथा "अक्षयश्चाव्ययश्चैव भविता दुःखवर्ज्जित । यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः । ऋषीणामभिगम्यश्च सूत्रकर्त्ता सुतस्तव । मत्प्रसादाद्द्विजश्रेष्ठ । भविष्यति न संशय " "सूत्रकर्त्ता ताण्डिन इति यजुर्वेदे शाखाविशेषस्तत्र कल्पसूत्रकर्त्तेति" नीलकण्ठः । [नन्दिनी नन्दिकेश्वरः" मल्लिनाथधृतकोष ।

**तण्डु** पु० शिवद्वारपालभेदे नन्दिकेश्वरे "नन्दी भृङ्गिरिटस्तण्डु

**तण्डुरीण** पु० तण्डु+मत्वर्थे उरच् तत्र भवः ख । १कीटमात्रे २वर्बरे त्रि० तण्डुले भव ख-रस्य च । ३तण्डुलोदके न० मेदि० ।

**तण्डुलीय** पु० तण्डुलानामोघ इव। (बेङमाष) १वेष्टर्य्ये शब्दच० ६त०। २तण्डुलसमुदाये च। [परीतत् सुश्च०।

**तत्** त्रि० तन+क्विप् अन्त्यलोपे तुक्। विस्तारके अमर।

**तत** न० तन–क्त। १वीणादिवाद्ये अमर० २विस्तारिते ३व्याप्ते च त्रि०। ४वायौ पु० मेदि०। भावे क्त। ५विस्तारे ६सन्ताने च न०। तन्यते अन्वयोऽस्मात् तन–अपादाने कर्मणि वा क्त तक् वा। ७पितरि ८पुत्र च पु०। "काद्रहं ततो भिषक् ऋ० ९।११२।३ तत इति सन्ताननाम तन्यतेऽस्मात् तत० पिता तन्यतेऽसौ तत पुत्रो वा" भा० इमास्त्वमभिलक्ष्य। तत इति सन्तानस्य नाम पितुर्वा पुत्रस्य वा" निरु०। "ततमस्त्वभ्रफ्रोम भिसकीलक्ष्य पङ्कजम्" माघ। "ततं वीणादिवाद्य अङ्कितम्" भ०म०। "स होवाच पितरं तत। कस्मै मा दास्यसीति" कठो०। "हे तत। हे तात।" भा० "यस्य निश्वसितं वेदा येन सर्वमिदं ततम्" माधव। ततं विस्तारितं व्याप्तं वेत्यर्थः।

**ततनुष्टि** पु० तत धर्मसन्तति नुदति वष्टि कामयते कामान् वा नुद–ड, वश क्विप् कर्म० शक०। १धर्मसन्ततिमोदकधर्मसन्ततिकामुके। "अपाप शक्रस्ततनुष्टिमूहति" ऋ० ५।३४।२ ततं धर्मसन्ततिं नुदति वष्टि कामयते कामान् ततनुष्टिः" भा० निरुक्ते अन्यथा निरुक्तं यथा "शक्र स्ततनिषुं धर्मसन्तानादपेतमलङ्करिष्णुम् ६।१९। तेन २तदर्थे च। [रूदस्याम् शब्दच०।

**ततपत्नी** स्त्री ततं पत्रं यस्याः जातित्वात् ङीष्।

**ततम** त्रि० तेषां मध्ये एकस्य निर्द्धारणे तद्+डतमच्। तेषां मध्ये निर्द्धारिते एकस्मिन् "एतमेव पुरुष ततममपश्यत्" ऐत० उ०। [मध्ये निर्द्धारिते एकस्मिन्।

**ततर** त्रि० तयोर्मध्ये एकस्य निर्द्धारणे तद्+डतरच्। तयो–

**ततस्** अव्य० तद्+सार्वविभक्तिकतसिल्। तस्मादित्याद्यर्थे "ततस्ततस्त्या विनियन्तुमक्षमा" माघः। प्रथमार्थे ततो भवान्। द्वितीयार्थे ततभवन्तम्। सप्तम्यर्थे ततस्त्या तृतीयार्थे "यतोयतः षट्चरणोऽभिवर्त्तते ततस्ततः प्रेरितवामलोचना" शकु०। श्रेष्ठभूतयो र्द्वयोर्मध्ये एकस्यातिशये आद्य तरप् च। ततस्तराम् विप्रकृष्टार्थे श्रेष्ठभूतानां बहूनां मध्ये एकस्यातिशये आद्य तमप् च" ततस्तमाम् विप्रकृष्टार्थे अव्य०। [विनियन्तुमक्षमा" माघ।

**ततस्त्य** त्रि० ततस्तत्र भवः त्यप्। तत्र भवे "ततस्ततस्त्या

**ततामह** पु० ततस्य पितुः पिता "पितरि तामहः" इत्यत्र पितृशब्दस्यार्थपरत्वं न स्वरूपपरत्वम्। पितामहे "अस्माकं तावकानामवनताना ततामह। नम चरणयुगलध्यानबद्ध हृदयनिगडानाम्" भाग० ६।९।३९ क्वचित् पुस्तके ततामहेत्यत्र ततनत इत्येव पाठः। सोऽपि तदर्थे एव।

**तति** स्त्री तन–क्तिन्। १श्रेणौ हेमच०। २समूहे च। "विश्रब्धं क्रियतां वराहततिभिः मुस्ताक्षतिः पल्वले" शकु०। "बिभर्त्ति जनयन्नयमुदमपामपायधवला बलाहकततीः" माघ। "तत्र हैतिततिहतिश्रान्ता अमात्याः" दशकुमा० तत् परिमाणं येषां डति। २तत्परिमाणे त्रि० ब० व० अयञ्च षट्संज्ञकत्वात् लिङ्गे समः। "ष्णान्ता षट्" "डति च" पा० तस्य षट्संज्ञा विहिता "षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययाः" अमर। "बहुगणवतुडति च संख्या" पा० अस्य संख्याकार्य्यातिदेशः। तत० जस् शसश्च लुक् तति पुरुषाः सन्ति तति पुरुषान् पश्य। तत प्रकारे धाच्। ततिधा ततिप्रकारे अव्य० "तावत्तेजस्ततिधा वाजिमानि" अथ० १२।२।३।२।

**ततिथी** स्त्री तावतीनां पूरणी तावत्+डट् तिथुडागमः ङीप् वेदे अवशब्दलोपः। तावतीनां पूरणीभूतस्त्रियाम् "स यतिथीं तत्समां परिदिदेश ततिथीं समां नावसुपकल्प्योपासाञ्चक्रे" शत० ब्रा० १।८।१।५। यावतिथीं तावतिथीमिति प्राप्ते छान्दसोऽवशब्दलोपः" भा०।

**ततुरि** त्रि० तुर्व–हिंसायाम् कि द्वित्वं पृषो०। १हिंसके "सद्यो द्युम्ना तिरते ततुरि" ऋ० ६।६८।७। "ततुरि हिंसकः। तॄ–कि द्वित्व पृषो०। २तारके च "ददृशिरा यरुणा ततुरिम्" ४।३९।२। "ततुरि तारकम्" भा०

**तत्कर** त्रि० तत् करोति तद्+कृ+अहेत्वादावपि कञः टः। तत्पदार्थकारके।

**तत्काल** पु० कर्मधा०। वर्त्तमानकाले १तदात्वे अमर०। २तस्मिन् काले च। स कालो यस्य। ३तत्कालदर्शी त्रि०। "शुचिस्तत्कालजीवी कर्म कुर्य्यात्" स्मृतिनिबन्धेषु कल्प्या श्रुतिः। "प्रतिनिधौ तत्कालाः" कात्या० श्रौ० १।४।१५। स कालो यस्यासौ तत्कालः भावप्रधानो निर्द्देशः प्रतिनिधेस्तत्कालत्वादित्यर्थः। यतः प्रतिनिधे स एव कालो यो मुख्यद्रव्यस्याभाव" कर्क। "प्रायश्चित्तं तत्कालम्" कात्या० श्रौ० १।१।२२।

**तत्कालधी** त्रि०तस्मिन् उचिते काले धीर्बुद्धिर्यस्य। अनिष्टादिनिवारणाय झटिति प्रत्युत्पन्नबुद्धौ जने हेमच०।

**तत्क्रिय** त्रि० वेतनं विना स्वभावतः सा क्रिया कर्म यस्य।

**(तथा)गत** पु॰ तथा सत्यं गतं ज्ञानं यस्य यथा न पुनरावृत्ति-र्भवति तथा तेन प्रकारेण गत इति वा तथा गत सह्सु-पेति समासः। १बुद्धमुनौ सुगते अमरः। "यथा गतास्ते सुनय श्रिर्वा गति तथागति सोऽपि गतस्तथागत" सर्वद॰ बौद्धागमः। २पूर्वोक्तप्रकारेण गते त्रि॰। "नल दृष्ट्वा तथागतम्" भा॰ व॰ ७७ अ॰। "प्रिय तथागतां दृष्ट्वा ज्वलन्तीमिव पावकम्" भा॰ स॰ १६ अ॰।

**तथाच** अव्य॰ तथा च च च द्वन्द्वः। उक्तस्य दृढीकरणार्थे "निरिन्द्रियाह्यमन्त्राश्च स्त्रियोऽन्वृतमिति स्थितिः। तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि" मनुः। "एतावानेव पुरुषो यज्जायात्मा प्रजेति ह। विप्राः प्राहुस्तथाचैतद्यो भर्ता सा स्मृताङ्गना" हितो॰।

**तथात्व** न॰ तथा+भावे त्व। तथाभूतत्वे। "तथात्वे चेदिन्द्रियाणामुपघाते कथं स्मृति" भाषाप॰। "स्वरूपानन्दस्य तथात्वम्" सांख्य॰सू॰।

**तथापि** अव्य॰ तथा च अपि च द्वन्द्वः। यद्यपीत्यनेनाक्षिप्तस्य समाधानार्थे "तथापि मम सर्वस्वं राम॰ कमललोचन" उद्भट। "यद्यपि का नो हानि परस्य द्राक्षां रासभश्चरति। असमञ्जसमिति मत्वा तथापि तरलायते चेतः" उद्भट॰। "सा चैवास्मि तथापि सुरतव्यापारलीलाविधौ" काव्यप्र॰।

**तथाभूत** त्रि॰ तेन प्रकारेण भूतः भू—कर्त्तरि क्त। तादृशेन रूपेण भूते। "तथाभूता दृष्ट्वा नृपसदसि पाञ्चालतनयाम्" वेणी॰। "सरस्तथाभूतमयुग्मनेत्रम्" कुमा॰।

**तथाराज** पु॰ तथेति राजते राज—अच्। बुद्धदेवे शब्दार्थचि॰

**तथाविध** त्रि॰ तथा विधा यस्य। तथाप्रकारे "तथाविधस्तावदशेषमस्तु स" कुमा॰ "अतोऽभिलाषे प्रथमं तथाविधे"। "श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः"। "प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम्" इति च रघु "तस्य तावच्छती सङ्ख्या सङ्ख्याशश्च तथाविध" मनु

**तथाहि** अव्य॰ तथा च हि च द्व॰। १निदर्शने २प्रसिद्धनैयेत्यर्थे शब्दार्थचि॰। ३उक्तार्थ दृढीकरणे।

**तथैव** अव्य॰ तथा+सादृश्ये समुच्चये वा तस्यावधारणम्। तद्वदेवेत्यर्थे तत्समुच्चयावधारणे च शब्दार्थचि॰ "अस्ति पुत्रो वशे यस्य भार्य्या भर्त्तुस्तथैव च" चाणक्य। "यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्। तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितम्" मनु।

**तथ्य** न॰ तथा+साधु यत्। १यद्वस्तु यथाभूतं तथारूपावस्थाने सत्ये २तद्युते त्रि॰ अमरः। "काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम्। तथ्येनापि ब्रुवन् दाप्योदण्डं कार्षापणावरम्" मनु॰। "अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन" कुमा॰। "भूय एव तु मां तथ्यैर्वचोभिरुपहृ हथ" भा॰ द्रो॰ ५५ अ॰। "यदर्जुनगुणास्तथ्यान् कीर्त्तयाम नराधम।" भा॰ द्रो॰ १५८ अ॰।

**तद्** त्रि॰ तन-अदि डिच्च। १पूर्वोक्ते बुद्धिस्थे, २परामर्शयोग्ये ३विप्रकृष्टविषये। ४ब्रह्मणि न॰। "ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीता। "अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इत्युक्तेरस्य परोक्षवाचित्वम्। बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नेऽस्य शक्तिः। बुद्धिस्थत्वं च पूर्वानुभूतसंस्कारवत्तया, तेन स्मृतिविषयत्वेन तथात्वं बोध्यम्। तदर्थे एवास्य सर्वनामता शब्दपरत्वे न तथात्वम्। अतएव "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" पा॰ न सर्वनामकार्य्यमन्यथा एतत्तयोरिति स्यात्। सर्वनामकार्यञ्च त्यदादीनाम जसादौ शीभावादि दृत्तिमात्रे पुंवद्भावादिश्च। स तौ ते तस्मै तस्मात् तेषां तस्मिन् इत्यादि। तस्य च टेरकच् सकः तकौ इत्यादि च। "स किंसखा साधु न शास्ति योऽधिपम्" किरा॰। "तौ गुरुर्गुरुपत्नी च" रघु। "ते सप्तर्षिदूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः" "ते हिमालयमामन्त्र्य" कुमा॰। "तस्मै शशंस प्रणिपत्य नन्दी" कुमा॰। "तस्मिन् मघोनस्त्रिदशान् विहाय" कुमा॰। तस्मात्तान्यत्र पापयेत्" स्मृतिः। छन्दसत्वात् छ "तदीयमातङ्गघटाविघट्टिते" माघ। तत तत्र तर्हि तदा इत्यादि। ५हेतौ अव्य॰ स्वरादेराकृतिगणत्वात् स्वरादि। "सन्तप्तानां त्वमसि शरणं तत् पयोद प्रियायाः" मेघ॰। "तदङ्गमग्र्यं मघवन्! महाक्रतोः" रघु॰। अहेतावपि ६सर्वनामसमानार्थे न॰। "इन्द्रियदोषात् संस्काराच्चाविद्या" "तद् दुष्टज्ञानम्" का॰सू॰ "तदित्यव्ययपदं सर्वनामसमानार्थकमविद्या परामृशति साऽविद्या दुष्टज्ञानं व्यभिचारिज्ञानमतस्मिंस्तदभिज्ञानं व्यधिकरणप्रकारावच्छिन्नविशेष्यकम्" उप॰ वृत्तिः। ८ तदेत्यर्थे च "ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्जनार्द्दन। तत् कर्म्मणि घोरे माम्। गीता ९ प्रसिद्धे त्रि॰ सर्वनामकार्य्यञ्च। "त केशपाशं प्रसमीक्ष्य कुर्य्युः" कुमा॰। तत्र ब्रह्मणि "तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः। दान

क्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिरिति” गीता। तदिति ब्रह्माभिधानमुच्चार्य्य अनभिसन्धाय च कर्म्मणः फलमित्यर्थः “तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो” छा० उ०। तत्पदवाच्यार्थे च तत्पदवाच्यार्थपरे उक्त गरदा० अव्ययी० अच् समासान्त। तस्य समीपम् उपतदम्।

**तदर्थ** त्रि० स अर्थो यस्य, तस्मै इदं वा “अर्थेन सह नित्य समासो विशेष्यनिघ्नता चेति” वार्त्ति० समासो वा। १तत्प्रयोजनके २तदुद्देश्यके “अन्तेवासी वार्थान्तदर्थेषु धर्मकृत्येषु योजयेद् इत्या वा” दाय० त० आपस्तम्ब। ३तस्याभिधेये ४तत्प्रयोजने च ततो भावे ष्यञ्। तादर्थ्य तत्प्रयोजनकत्वे। “तादर्थ्ये चतुर्थी” मुग्ध बो०।

**तदनन्यत्व** न० तयोरनन्यत्वम्। तयोर्भेदाभावे “तदनन्यत्वमारम्भणशब्दादिभ्यः” शा० सू०।

**तदन्यबाधितार्थप्रसङ्ग** पु० तदन्य बाधितार्थस्य प्रसङ्गः। प्रमाणबाधितार्थस्य प्रसङ्गरूपे प्रमाणबाधितार्थप्रसङ्गापरपर्य्याये तर्कभेदे। तत्स्वरूपादि “स चायं तर्कः पञ्चविध आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदात् इति” विभज्य आत्माश्रयादीन् लक्षयित्वा जगदीशेनोक्तं यथा उक्तचतुष्कान्य प्रसङ्गः प्रमाणबाधितार्थप्रसङ्गः। सोऽपि द्विविधो व्याप्तिग्राहको विषयपरिशोधकश्च तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्यात्तदा अन्यो न स्यादिति। द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादि”। विषयस्य व्यभिचारशङ्कानिवृत्तिद्वारा निश्चायकत्वेन परिशोधकत्वम्।

**तदर्पण** न० तस्य स्वस्मिन् निक्षिप्तस्यार्पणं प्रत्यर्पणम्। निक्षिप्तद्रव्यस्य निक्षेप्तुरर्पणे। ६ त। तस्यार्पणे च।

**तदा** अव्य० तस्मिन् काले तद्+दाच् विभक्तित्वात् त्य। तस्मिन् काले इत्यर्थः। “तदा विधिः कुशलकर्मा विधोरपि” नैष०।

**तदात्मन्** पु० स आत्मा यस्य। १तत्स्वरूपे २तदभिन्ने च। तस्य भाव ष्यञ्। तादात्म्य अभेदे “क्रमिक यशामयुगमेकार्थेऽन्यार्थबोधकम्। तादात्म्येन भवेदेष समास कर्मधारयः” शब्द० प्र०।

“अभेदस्तादात्म्य तच्च सत्त्वस्याधारणो धर्मः। असाधारणत्व चैकमात्रवृत्तित्वम्। एकमात्रवृत्तित्वञ्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्ट यत्तदन्यत्वम्। इत्येकमात्रवृत्तिधर्म एव विशेषणविभक्त्यर्थः। इतिश्च तत्र प्रकारतया संसर्गमर्य्यादया आधारादीनां सम्बन्धावगाहित्व स्यात् एवमनुयोगमात्रस्योत्कर्षे तदूर्द्ध भाविना घटत्वाकाशत्वादीनां सम्बन्धावगाहि-धर्मत्वादिना सामान्यप्रत्यासत्त्या सुज्ञेयत्वमेव। अभेदस्य संसर्गतामते चैतादृशानुगतभेदस्यैव तथात्वमुचितम्। तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य त्रितयत्र तथात्वे घटो न नील इत्यादि वाक्यजन्यबोधे प्रतियोग्यसमानाधिकरण्यतुल्ययोगक्षेमाविति न्यायेन तादृशानुगतधर्मावच्छिन्न-प्रतियोगिताकाभाव एव भासेत न नीलादिवृत्तिप्रतियोगिताकैकैकाभाव। तथा सति तादृशैकैकावभाव तात्पर्य्येण प्रयुक्तस्य नीलोऽपि न नील इति वाक्यस्य प्रामाण्यं स्यात्” व्यु० पृ० गदा० “सत्त्वैक्ये मिथोभेदस्तादात्म्यं तच्च तत्सत्तातिरिक्तसत्ताकत्वाभाव” वेदा० प० “तदात्मनोऽपि निषिध्यमानत्वे तन्निषेधात्मके तदात्मनि जगत्प्रवेशात्। न हि घट० पटात्मत्वेन घटस्वरूपादन्यस्तदात्मा निषिद्धः स्यात् यदि तु तादात्म्य नाम भेदाख्यो धर्म कश्चिदिष्यते स घटपटाद्यधिकरणतया निषिध्यते तदा संसर्गाभाव एव स्यात्। सत्त्वाद्धिविशेषण तदात्मान्तर्भूत जगदिति कोऽन्तराभाव इति”। श्रीहर्षखण्डने अन्योन्याभावखण्डने उक्तम्।

**तदात्व** न० तदेत्यस्य भाव तदा+त्व। तत्काले अमरः। “तदात्वायतिसंयुक्ता सन्धिर्ज्ञेयो द्विलक्षण। तदात्वे चायतिकाले पीडां तदा सन्धि समाश्रयेत् “आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चय” इति च मनु”।

**तदादितदन्तन्याय** पु० न्यायभेदे अन्तभूतस्य कर्त्तव्यत्वे प्राप्ते आदिभूतस्योत्कर्षेण क्षिप्रबोधके न्यायभेदे। स च न्यायः जैमि० पञ्चमस्य प्रथमे पादे दर्शितो यथा। अग्नीषोमीयपशौ श्रूयते “तिष्ठन्त पशु प्रयजन्तीति”। अत्र प्रकृतौ पशुमारणानन्तर हविष्प्रासादिते पश्चात् प्रयाजादय इष्यन्ते इति विकृताविहापि पशुमारणानन्तरं हविष्प्रासादिते प्रयाजा प्राप्ता ते च तिष्ठन्तमिति वचनात् जीवत्येव पशौ अपकृष्यन्ते। तथा सवनीयपशौ अनुयाजानामुत्कर्षः श्रूयते यथा अग्निमारुतादूर्द्धमनुयाजैश्चरन्तीति। अत्र संशय। प्रयाजमात्रस्योत्कर्षं प्रयाजाद्यङ्गकलापस्यापकर्षः अनुयाजाद्यङ्गकलापस्योत्कर्षो वा इति। श्रुतयोरेव प्रयाजानुयाजयोरपकर्षोत्कर्षौ नतु तदाद्यन्तकलापयोरुदङ्गप्रयाजात् पूर्वभाविनामाघारसामिधेन्यादीनां तदाद्यपकर्षे ऽश्रुतत्वात् विहितत्वेन प्रधानकालीनत्व न स्यात् प्रयाजमात्रापकर्षे तु

भावत। तादृशस्य धर्मस्तद्वद्भक्तित्वादिरूप एव। अपूर्वव्यक्तिष्विव तादृशधर्मस्य विशेष्य ज्ञातुमशक्यत्वेऽपि एकमात्रवृत्ति मत्र स्यात् एवमनुयाजमात्रोत्कर्षे तद्वद्भाविना स्रुक्-वाक्यसम्प्रैषाकादीनामुत्कर्षात् प्रधानसन्निधिर्न विलुप्यते तस्मात् प्रयाजमात्रस्योत्कर्ष तथा च सूत्रम् “अङ्गानां मुख्यकालत्वात् यथोक्तमुत्कर्षे स्यात्”। अङ्गानां मुख्य-कालकर्त्तव्यत्वानुरोधात् यथोक्तस्यानुयाजमात्रस्योत्कर्ष इति प्राप्ते ब्रूम। प्रकृतियागे सकलपदार्थानुष्ठानस्य क्लृप्तत्वात् विकृतावपि सकलानां पदार्थानामतिदेशात् क्रमरूपाङ्गभावस्यान्याय्यत्वात् उत्तरकालकर्त्तव्यकर्मपदार्थस्यानुपस्थित्यानुष्ठानविलोपापत्ते तदुक्तम् पूर्वेणोपस्थित कार्य्यमुत्तर कर्मचोदनात्। प्राप्त तदन्यथा भाव क्रमलोपाद्विलुप्यते”। तस्मात् प्रयाजापकर्षे तदङ्ग कलापस्यापकर्षः, अनुयाजोत्कर्षे तदाद्यङ्गकलापस्योत्कर्ष” इति तत्त्वकौ०। अनया दिशा मासिकानां सकलानां करणे उत्कर्षापकर्षौ कल्पनीयौ।

तदानीम् अव्य० तस्मिन् काले तद्+दानीम् विभक्तित्वात् च। तदेत्यर्थे। “तदानीमपि पार्श्ववर्त्तिनाम्” भाग० ५।८।२१। तत्र भव अ्यु तुट् च। तदानीन्तन तत्र भवे त्रि० स्त्रियां ङीप्।

तदाप्रभृति त्रि० तदा तत्कालः प्रभृतिरादिर्यस्य तदा-शब्दस्य सप्तम्यर्थवृत्तेरपि कथञ्चित् प्रथमार्थवृत्तिता। तत् कालादिके “तदाप्रभृत्येव विमुक्तसङ्ग” कुमा०।

तदामुख त्रि० तदा सुखं यस्य। प्रारब्धे।

तदित् त्रि० तदेति इण-क्विप् तुक्। तद्विषयके स्तोत्रे। “वयसु त्वा तदिदर्थां” ऋ० ८।२।१६ “यद्विषयक स्तोत्रं तदित् तदेवार्थः प्रयोजनं येषाम्” भा०।

तद्गत त्रि० तत् गत। १तत्परे २तदासक्ते च। तद्गतेनैव मनसा” रामा० बा० २अ०। “शुचिस्तद्गतमानस” गीता

तद्गुण त्रि० तस्य गुण इव गुणोऽस्य। १तत्तुल्यगुणके २अर्थालङ्कारभेदे पु० २६८ पृ० लक्षणादि दृश्यम्। ६त०। ३तस्य गुणे पु०। “तद्गुणसारत्वात्” शा० सू०। तत्र प्रधाने गुणं विशेषणम्। ४प्रधानविशेषणे तद्गुण-संविज्ञान।

तद्गुणसंविज्ञान पु० तत्र बहुव्रीहौ गुणस्य गुणीभूतस्य विशेषणस्य संविज्ञानं विशेष्यपारतन्त्र्येण बोधन यत्र। व्याकरणोक्ते बहुव्रीहिसमासभेदे। भवति च लम्बकर्ण-मानयेत्यादौ गुणीभूतस्य कर्णस्याप्यानयने पारतन्त्र्येणा-न्वयबोध। शब्द० प्र० स्वमते लम्बकर्णादिकस्थले प्राचीनमतसिद्धमप्युक्तं यथा “तदतद्गुणसंविज्ञानौ द्वौ भेदौ तदादिम। विग्रहस्य विशेष्यो यस्तद्विशेष्यकबोधकृत्”। तद्गुणसंविज्ञानोऽतद्गुण-संविज्ञानश्च बहुव्रीहेर्द्वौ भेदौ। तत्र विग्रह-वाक्यस्य विशेष्यविधया प्रत्याय्योयोऽर्थस्तद्विशेष्यक-बोधकृद्बहुव्रीहि तयोरादिमस्तद्गुणसंविज्ञानस्तस्य स्वार्थगुणीभूतस्य सम्यग्विविशेष्यविधया विज्ञान यस्मादिति व्युत्पत्त्या सान्वयसम्पकत्वात्। तद्भिन्नश्चातद्गुण-संविज्ञानश्चरम इत्यर्थोऽवस्यते। घटस्वरूपः पदार्थ इत्यादितोहि घट स्वरूप यस्येति विग्रहस्यैव स्वस्वरूपाभिन्नघटसम्बन्धित्वेन घटाभिन्नस्वस्वरूपसम्बन्धित्वेन वा विग्रहविशेष्यं कलसमेव विशेष्यविधया बोध्यते घटस्य स्वरूप यस्मादिति विग्रहे च विग्रहस्य यद्विशेष्यं ततोऽन्यदेव स्वजन्यस्वरूपाभिन्नघटसम्बन्धित्वेन। कुटादि-र्गण इत्यादिरपि कुट आदिर्यस्येति व्युत्पत्त्या कुटाभिन्नस्य स्वघटकव्यक्त्याधर्मिणः सम्बन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुणसंविज्ञान एव बहुव्रीहिः। प्राचां मतेन तद्गुणसंविज्ञानबहुव्रीहिमन्यथा निर्वक्ति। “यः स्वार्थघटकार्थस्य स्वार्थान्वयिनि बोधने। अनुकूलो बहुव्रीहि स तयोरथवादिमः”। यो बहुव्रीहि स्वार्थस्यान्वयिनि स्वार्थघटकस्यार्थस्यान्वयबोधने समर्थः स तयोस्तदतद्गुणसंविज्ञानयोरादिम। लम्बकर्णमानय हारपीव पाश्येत्यादौ हि बहुव्रीहिर्लम्बस्वकर्णसम्बन्धिनः स्वपीवात्विहार-सम्बन्धिनश्च स्वार्थस्यान्वयिनि कर्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्णहारादेरपि व्युत्पत्तिवैचित्र्येणान्वय-बोधने समर्थ इत्येव विध एव तद्गुणसंविज्ञानस्तद्भिन्न एव चार्थोदतद्गुणसंविज्ञान। यथा दृष्टसागरमानय इत्यादाविति

तद्दिन न० कर्म०। “तस्मिन् दिने। तद्दिनं श्राद्धमध्यायं व्रत तत्र न कारयेत्” मल० त०। १दिनमध्ये २प्रतिदिने च मान्तम् अव्य० शब्दार्थ चि०।

तद्धन त्रि० तदेव धन यस्य। १कृपणे हेमच० स हि सर्वमेव धनमपर्य्याप्ततयावधार्य्य आत्मनि तद्धनत्वमेवाभि-मन्यते कर्म०। २तस्मिन् धने न०।

तद्धर्म्मन् त्रि० स धर्म्मो यस्य अनिच् समा०। तथाभूतधर्म्म-युक्ते। “आक्वेस्तच्छीलतद्धर्म्मतत्साधुकारिषु” पा०

**तद्धित** त्रि० तस्मै हितम् । १तस्मै हिते । २व्याकरणोक्ते प्रत्ययभेदे पु न० । "तद्धिताः ४।१।७६ पा० सूत्रमधिकृत्य "यूनस्तिः" इत्यादिना पञ्चमाध्यायसमाप्ति यावद्ये प्रत्यया विहितास्ते तद्धितसंज्ञकाः ।

शब्द० प्रका० तल्लक्षणादिकमुक्तं यथा

"विभक्त्यादिलिङ्गकारकेभ्यः प्रत्ययस्तद्धित मतम् । नामप्रकृतिको नैवमतिव्याप्त्यादिदोषत" । "विभक्तिधात्वप्रकृत्योऽन्यः प्रत्ययस्तद्धित । इत्यत्र इत्यादौ सुप्त्याद्यर्थकः कादिरपि तद्धितत्वेनेति । तदन्यत्वेनापि प्रत्यय विशेषण न्यन्ये । नामप्रकृतिकप्रत्ययस्त्वन्तु न तद्धितस्य लक्षणं विभक्तौ क्यजादौ चातिव्याप्तेः पचतितरामित्यादौ तरामाद्यव्याप्तेश्च" । विभजते । "तस्यापत्य तद्धितेषु तद्धितेन युतेन्दुमान् । कालस्तथा तेन रक्तं तस्य व्यूहोऽथ वेत्ति तत् । अधीते वा देवताऽस्य शैषमादीन् यथायथम् । योऽथयद्विविधानर्थांस्तद्धित स्यादनेकधा" तेनास्य शैषिकत्वमपि "तद्धितश्चासर्वविभक्तिः" "तद्धितश्चासर्वविभक्ति" पा० । "समासतद्धितकृतां यत्किञ्चिदुपदर्शकम् । गुणप्रधानभावे च तस्य दृष्टो विपर्ययः" हरिकारिका । स च तद्धितो द्विविधः प्रकृत्यर्थभिन्नार्थक स्वार्थिकश्चेति भेदात् ।

**तद्दल** पु० तस्मिन् दलं दलात् । १पापभेदे "सुरमतद्दलाड्-न्दुताराक्षराय तद्दिद" हेम० । अस्य स्त्रीत्वोक्तिः प्रामादिकी "पुमान्" इत्यधिकारे "देवासुरात्मस्वर्गगिरिसमुद्रनख केश दन्त स्तन भुज कण्ठ खड्ग शरपङ्काभिधानानि" पा० "पुंस्त्वे सभेदानुचराः सपर्य्यायाः सुरासुराः । स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः" अम०च पुंस्त्वोक्तेः

**तद्भाव** पु० तस्य भावः असाधारणधर्मः प्राप्तिर्वा । १तस्यासाधारणे धर्मे यथा घटे घटत्वम् । गोर्गोत्वम् । २तद्रूपप्राप्तौ च "अभूततद्भावे च्वि" "पयसस्तद्भावात्" कात्या० श्रौ० ४।३।२१ सू० । ७त० तस्मिन् भावः तद्विषयकचिन्तने "सदा तद्भावभावित" गीता ।

**तद्राज** पु० तस्य राजा टच् । १तस्य नृपतौ २तदर्थविहिते तद्धितप्रत्ययभेदे च । "ते तद्राजाः" पा० ते अञादयस्तद्राजसंज्ञकाः स्युः "अञादयस्तद्राजाः" पा० "पूगात् ञ्य इत्यारभ्य उक्ता तद्राजसंज्ञकाः स्युः" सि० कौ० । तद्राजस्य बहुषु अस्त्रियाम् लुक् ।

**तद्र** अवसादे मोहे च भ्वा० पर० अक० सेट् इदित् । तन्द्रति अतन्द्रीत् । तन्द्रा

**तद्र्यच्(च्)** त्रि० तदञ्चति गच्छति पूजयति वा—अञ्च्—क्विन् पूजाया वा क्विन् टेरद्र्यादेश पूजार्थत्वे न नलोपः । १तद्गामिनि २तत्पूजके च ।

**तद्वत्** अव्य० तेन तुल्यं या क्रिया या चेत् क्रियेत्यर्थे वति । १तत्सदृशक्रियायाम् । तस्येव तत्रेव वा इत्यर्थे वति । २तत्तुल्येऽर्थे यथा तद्वत् शिवस्य विभुता, तद्वत् शिवे भक्तिरित्यादि । "तद्वत्तादृश च स्मितम्" शार्ङ्गधरः । "चित्तं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया । तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्" "पुरुषस्य मोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम्" सा० का० । "चतुर्वेदैर्द्विजो तद्वत् पातित्योऽप्यस्पि अत्यन्ति" मनुः । तद् अस्त्यर्थे मतुप् मस्य व । ३तद्विशिष्टे त्रि० "तद्वानपोहो वा शब्दार्थः" काव्य० प्र० "द्रव्याणि तद्वन्ति पृथक्त्ववन्ति" । "अथ वा तत्प्रकारं यज्ज्ञानं तद्विशेष्यकम्" भाषाप० स्त्रियां ङीप् । तस्य भावः तल् । तद्वत्ता तद्विशिष्टत्वे स्त्री "पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिता" भाषा० ।

**तद्विध** त्रि० सा विधा प्रकारो यस्य । तत्प्रकारे "धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा" मनुः । "क्व तद्विधास्त्वं क्व च पुण्यलक्षणा" कुमा० ।

**तन** विस्तृतौ तना० उभ० सक० सेट् । तनोति तनुते अतानीत् अतनीत् अतत अतनिष्ट ततान तेनतुः तेने । उदित् तनित्वा तान्त्वा । ततः वितानः । "तनोति भानोः परिवेषकैतवात्" नैष० । "आचार्य्यस्तनुते विवृतिमिमां दायभागस्य" । दायभागटीका "ततान सोपानपरम्परामिव" रघु । "यस्य तन्त्रं विना यत्नौ तेनेति करणं विना" उज्ज्वल । "तेनिरेऽभिरुचितेषु तद्दृशः" माघ "स तमौ तमोभिरभिगम्य ततामू" माघ "तन्वता प्रथमतामपि रागम्" माघः ।

अति+अतिशयविस्तारे । अतिततः । "तन्ततोऽतितता-तितत्" माघः ।

वि+अति+व्यतिहारेण विस्तारे आत्म० "वियति व्यततन्वातां मूर्ती हरिपयोनिधी" भट्टिः । [५।२।५।७ क० ।

अधि+आरोप्य विस्तारे । "धनुरधितनोति" शत० ब्रा०

अनु+सन्ततविस्तारे पश्चाद्विस्तारे च "परिपाल्यानुततयादेव धर्मः सनातनः" भा० शा० ११२ अ० ।

अप+अधोविस्तारे । अपतानकः ।

अव+सन्ततविस्तारे "वितानमूलायतत पवनाम्मोदधारिवम्" हरिव० ८८ अ० ।

आ+दीर्घतया विस्तारे । आतानः (टाना देओया) समन्

विस्तारे च "मौर्वी धनुषि चातता" रघु । "यद्गुण्ण पुनरात्मानुस्मृतिमोषण मायामयभोगैश्वर्य्यमेवाततुत" भाग० ५।२४।२२ "इदं ते लोभान्धस्य चेष्टित चेतसि चमत्कारमाततोति" प्रबोध० च० । [किरणावली ।

वि+आ+विशेषेण विस्तारे । "व्याततेने किरणावलीमुदयन" उद्+अर्द्धतो विस्तारे उत्तान० ।

प्र+प्रकर्षेण विस्तारे । "फल प्रकल्प्य पूर्वं हि ततो यज्ञं प्रतायते" भा० शा० ८६।२ श्लो० । "तदुरीकृत्य कृति-भिर्वाचस्पत्यं प्रतायते" माघ । पक्षे प्रतन्यते ।

वि+विशेषेण विस्तारे वितानः (चन्द्रातप देयोया) "यथा लूता जालात्वितानाव्याभिति" वेदान्तप० ।

सम्+सम्यग्विस्तारे सन्तानः सन्तति सन्ततम् "सन्तता शुशुभे भूमि०" रामा० सु० १४ अ० ।

**तन** उपकारे श्रद्धायां आघाते च वा०चुरा० उभ० पक्षे भ्वा० सक० शब्दे अक० सेट् । तानयति ते तनति अतीतनत् त अतानीत् अतनीत् । अव्युपसर्गात् दैर्घ्ये अक० दीर्घीकरणे सक० । वितानयति दीर्घो भवति दीर्घं करोति वा । "वितानयति य कीर्त्तिं वितनत्यमलं यशः" कविरहस्यम् "अयं वेदे गणव्याख्यानात् दिवा०" "घोषा घोषादिन्द्राय तन्यति श्रुवाय" ऋ० ६।१८।२ । "तन्यति शब्दं करोति" भा० । चौरादिकस्य अदन्तत्वमिति तनयित्नुशब्दार्थे माधवः तनयित्नुशब्दे दृश्यम् ।

**तनय** पुंस्त्री० तनोति कुलम् तन–कयन् । १पुत्रे । २दुहितरि, ३अङ्कुल्यायां, (चाकुलिया) लतायां, ४इतकुमाय्यीञ्च स्त्री टाप् । "अथैनमद्रेस्तनया शुशोच" कुमा० । तनयायाशब्दस्य प्रियादिषु पाठात् पूर्वपदस्य न पुंवत् । तनया जाता अस्य तनयाजात इत्यादिः ।

५लग्नावधिकपञ्चमस्थाने पु० । "जनयति तनयभवमसुपगत" वृ० स० ।

**तनयित्नु** पु० चु० तन–शब्दे इत्नु पृषो० सलोपः अदन्तचुरा० तन–शब्दे इत्नु माधव । १अशनौ "अग्नि पुरा तनयित्नोरचित्तात्" ऋ० ४।३।१ 'तनयित्नुरशनि" भा० २मेघे च "एकपात्तनयित्नुरर्णव "ऋ०१०।६६।११। "तनयित्नुर्मेघ " भा० ।

**तनस्** पु० तनोति वंशम् तन–असुन् । पौत्रादौ "मा शेषसा मा तनसा" ऋ० ५।७०।४। "तनसा पौत्रादिना" भा०

**तना** स्त्री तन–अच् टाप् । धने निघण्टु ।

**तनादि** पु० मा० धातुपाठोक्ते धातुगणे । स च धातुपाठे बोपदेवेन तनुक्रधचक्रं द इत्यनुबन्धयुक्ततया पठित० । "तनादिकृञ्भ्य उः" । "तनादिभ्यस्तथासोः" पा० । तनादौ गणे पठितः ठक् । तानादिक तद्गुणपठिते धातौ ।

**तनिका** स्त्री तन्यते धातूनामनेकार्थत्वात् बध्यते अनया करणे इन् स्वार्थे कन् कापि अतइत्त्वम् । बन्धनरज्जौ शब्दार्थचि० ।

**तनिमन्** पु० तनोर्भावः तनु+इमनिच् । १तनुत्वे, २कार्श्ये च । "विरलातपच्छविनिमानमभजत" काद० । तनयति तनु करोति तनु+णिच् इमनिच् णिइष्ठवद्भावे टिलोपः । ३यकृति । "अथ पार्श्वयोरथ तनिम्नोऽथ वृक्कयो " शत० ब्रा० १।८।३।१७। "तनिम्न यकृत " भा० तस्य तनूकरणात् तथात्वम् ।

**तनिष्ठ** त्रि० अयमनयोरतिशयेन तनु तनु+इष्ठन् डिद्वद्भावः । द्वयोर्मध्ये एकस्मिन् अतिशयेन तनौ । वेदे बहुभ्यो निर्द्धारणेऽपि इष्ठन् । २बहूनां मध्ये एकस्मिन्, अतिशयेन तनौ च "एतेषां लोकानां अन्तरिक्षलोकस्तनिष्ठ " शत० ब्रा० ७।१।२।२० । लोके तु तदर्थे ईयसुन् तनीयानित्येव ।

**तनीयस्** त्रि० बहूनां मध्येऽयमतिशयेन तनुः ईयसुन् डिद्वत् । बहूनां मध्ये एकस्मिन् अतिशयेन तनौ "पञ्चपुच्छानि तनीयांसीव" शत० ब्रा० ८।७।२।१ स्त्रियां ङीप् ।

**तनु** स्त्री तनोति कर्म कार्य्यं वा तन–उन् । शरीरे अमरः २त्वचि राजनि० । "तनुभिरपदुमत्ताभिरष्टाभिरीश " शकु० । "तनौ ममुस्तत्र न कैटभद्विषः" "बभार वाष्पैर्द्विगुणीकृतं तनु " माघ० । वा ऊङ् । तनूः इत्यपि तदर्थे तनूज० । ३कृशे ४अल्पे ५विरले च त्रि० मेदि० । "तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्" मनुः । स्त्रियां वा ङीप् तन्वी । "नम तन्वि ! कुचावेतौ नियत चक्रवर्त्तिनौ" उद्भट । सा च ६कृष्णभार्य्याभेदे "शैव्यस्य च सुतां तन्वीं रूपेणाप्सरसां समाम्" हरिव० ११८ अ० । "भूतनुभिर्भैर्यति रिह भतभामतभौ भतनाश यदि भवति तन्वी" वृ०र० उक्ते चतुर्विंशत्यक्षरपादके ७छन्दोभेदे च तनोर्भावः तल् तनुता कार्श्ये स्त्री "तनुता द्व यमनङ्ग मोचयति" कुमा० "सर्वाण्यि तनुतां यान्ति जलानि जलदक्षये" हरिव० १८२५। त्व तनुत्व तदर्थे न० । योगशास्त्रोक्तेषु दग्धवीजभावेषु अपरोक्षायत्तेषु दशाविशेषादिषु "अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" पात० सू० । "दग्धवी

रत उद्वास्य प्रागुक्तयोगेण पूर्वदिने कृताग्निहोमयोगेण दग्धा दुग्धमातञ्चि अवशिष्टं दधि दुग्धमध्ये प्रक्षिपति दधिस्वधर्मस्यार्थम्” कर्क। ३भयहेतुकसङ्कोचे च ण्यन्त। क्तवम् आतङ्कः। आतङ्कनम्।

**तन्ज** सङ्कोचे भ्वा० पर० सक०। पाणिनीयगणे (तञ्चु) इत्यत्र तञ्जू इति पाठान्तरम् अयमुदित्वात् वेट्ट्व। तनक्ति अतञ्जीत् अताङ्क्षीत्। ततञ्ज। तञ्जीत् अतञ्जीत्।

**तन्तस्** दुःखे कण्ड्वा० यक० पर० सेट्। तन्तस्यति अतन्त-

**तन्ति** स्त्री तन–कर्मणि क्तिच् वेदे दीर्घनलोपा-भावौ। १दीर्घप्रसारितायां रज्ज्वाम्। “वत्सानां न तन्तयस्त इन्द्र” । ऋ० ६।२४।४। “तन्तिर्नाम दीर्घ-प्रसारिता रज्जु” भा० लोके तु तन्ति तान्तिरित्येव क्वचिदार्षेऽपि तथा। “साऽसज्जत धिषस्तन्त्यां महिषी काशयन्त्रिता” भाग० ७।२।५२। २गवां मातरि च तन्तिपालः। वा ङीप् तन्ती गवां मातरि “तन्तीं प्रहार्यं भार्यां वत्सयतृषां चानुमन्यतेतेय तन्ती गवां मातेति गोपथब्रा० २।६।७

**तन्तिपाल** पु० तन्तिं गोमातरं पालयति पालि–अण् उप० स०। २गोमातृपालके। अत्र “गोतन्तिपय पाले” पा० आद्युदात्तता। २सहदेवे च “तेषां गोसंख्य आसं वै तन्तिपालेति मां विदुः” भा० वि० १० अ०। अत्र तन्तिपालेति पाठान्तरं तदभिप्रायेण तन्तिं वशीभूततां पालयतीति विग्रहेण तन्तिपालं वचनकरमिति नीलकण्ठेनोक्तम् “तन्तिपाल इति ख्यात नाम्नाऽहं विदितस्तथा” भा० वि० १८ अ० इत्यत्र तथैव पाठः।

**तन्तु** पु० तन–तुन्। १सूत्रे अमरः तन्तुवायः। तन्तुदामन-पर्वणो” नरसि०पु० “तस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु” भाग० ८।८।७। “तिरश्चिकुर्यन्ते क्रमितन्तुजालैः” रघुः। २पाशे हेम०। ३सन्ताने “तेषामसत्यतन्तूनामपत्यं दायमर्हति” मनुः। “संवेष्टमानं बहुभिर्मोहात्तन्तुभिरात्मजैः। कोशकार इवात्मानं वेष्टयन्नावबुध्यसे” भा० शा०३३१अ०। [गौरा० ङीष्।

**तन्तुक** पु० तन्तुनेव कायति कै–क। १सर्षपे २नाड्यां स्त्री

**तन्तुकाष्ठ** न० तन्तुयुक्तं काष्ठम्। (ताँतेर काठि) तन्तु-वायोपकरणे तन्तुकाष्ठभेदे शब्दर०। [जटाधर।

**तन्तुकीट** पु० तन्तोः तन्त्वर्थं कीटः। (गुटीपोका) कीटभेदे

**तन्तुन** पु० तन–बा० तुनन्। १पाशे (फाँदोर) ख्याते जल-जन्तुभेदे हेम०।

**तन्तुनाग** पु० तन्तुनीव इव। इवदुपाश्वे त्रिका०।

**तन्तुनाभ** पु०तन्तुर्नाभावस्य अच् समा०।(माकड़सा) लूतायाम्

**तन्तुनिर्यास** पु० तन्तुरिव निर्यासो यस्य। तालवृक्षे। शब्दर०।

**तन्तुपर्वन्** न० तन्तोः यज्ञोपवीतरूपस्य दानरूपं पर्व यत्र। चान्द्रश्रावणपौर्णमास्याम् तद्दिने हि पापनाय यज्ञोप-वीतदानोत्सव स्मृतौ विहितः। राघवभट्टधृतनारसिंह वचनम्। “सिंहर्क्षिकर्कटादिषु संक्रान्तौ विषुवायने। षष्टीर्वेऽर्कविषुवाखे तन्तुदामनपर्वणोः। जन्मदीक्षा प्रकुर्वाणो मासर्क्षादीन शोधयेत्”। तन्तुपर्व परमेश्वरोप वीतदानतिथि श्रावणी पूर्णिमा” रघुनन्दनः।

इयं तिथिः रक्षाबन्धनरूपोत्सवदिनत्वात्तत्कार्यापि तथा च तस्यां रक्षाबन्धनप्रकार निर्णयसि० दर्शितो यथा “अथैव रक्षाबन्धनमुक्तं हेमाद्रौ भविष्ये “सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये। स्नानं कुर्वीत मतिमान् श्रुति स्मृतिविधानतः। उपाकर्मादिकं प्रोक्तमृषीणां चैव तर्पणम्। शूद्राणां मन्त्ररहितं स्नानं दानं च शस्यते। उपाकर्मणि कर्तव्यमृषीणां चैव पूजनम्। ततोऽपराह्णसमये रक्षापोट-लिकां शुभाम्। कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितै-रिति” अत्रोपाकर्मानन्तर्यस्य पूर्वमास्त्रीतिथौ पार्थिकत्वात् वादौ न तु विधिः गौरवात् प्रयोगविधिभेदे च क्रमायोगा च्छूद्रादौ तदयोगाच्च। तेन परेद्युरुपाकरणे पूर्वेद्युरपराह्णे तत्करणं सिद्धम्। इद भद्रायां न कार्यम् “भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा। श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनीति” संग्रहोक्तेः तत्सत्त्वे तु रात्रा वपि तदन्ते कुर्यादिति निर्णयामृते। इदं प्रतिपद्युतायां न कार्यम् “नन्दायादर्शने रक्षाबलिदानं दशासु च। भद्रायां गो-कुलक्रीडा देशनाशाय जायते” इति मदनरत्ने ब्रह्मवैवर्तात् भविष्ये “उपविष्टे घटमध्ये दत्तचतुष्के न्यसेत् कुम्भम्। पीठे तत्रोपविष्टो राजामात्यैर्युतस्तथा सुहृद्भिः”। तदनु प्रतीक्षा नृपते रक्षा बध्नीत मन्त्रेण”। इदं रक्षाबन्धनं नियतका-लत्वात् भद्रावर्ज्यं ग्रहणदिनेऽपि कार्यं होलिकावत्। ग्रहसङ्क्रान्त्यादौ रक्षानिषेधाभावात् “सर्वेषामेव वर्णानां सूतक राहुदर्शने” इति तत्कालीनकर्मपरमेव न त्वन्यत्। अन्यथा होलिकायां का गति। अतएव “नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च। उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते” इति नियतकालीने तदभाव इति दिक्। उपाक र्मणीति तद्दिनभिन्नपर तन्तु तद्दिनेषादित्युक्तम्॥ तन्तस्

न बली बलीराजा दानवेन्द्रो महाबल॰। तेन त्वामपि बध्नामि रक्षे! मा चल मा चल"। "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः कर्त्तव्यो रक्षणाचारो द्विजान् संपूज्य यत्नतः" इति।

पु॰ तन्तुना सन्तत्या भाति भा—क। १सर्पे २वत्से च जटाधर॰। "मरीच पिप्पलं चैव जीरकन्तन्तुभं तथा। ...कारे च समस्ते च महादेव्यै निवेदयेत्" कालि॰ पु॰। "तन्तुभ सर्षपम्" रघुनन्दन।

तन्तुवर्द्धन त्रि॰ तन्तु सन्तानं संसारं वा वर्द्धयति छिनत्ति वा वृध—वृधी णिच् ल्यु वर्द्ध छेदने ल्यु वा। १तन्तुवर्द्धके २तन्तुच्छेदके च। ३परमेश्वरे पु॰। "शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्द्धनः" विष्णु स॰। "तन्तुं सन्तति संसारं वर्द्धयति छेदयति वा ज्ञानदानेन" भा॰।

तन्तुल न॰ तन्तुर्विद्यतेऽस्य र लच् वा। मृणाले। हेमच॰

तन्तुवाप त्रि॰ तन्तून् वपति वप-अण् उप॰स॰। (ताँति) तन्तुवाये जटाधर॰।

तन्तुवाय त्रि॰ तन्तून् वयति वे—अण् उप॰ स॰। १तन्तुवयनकर्त्तरि (ताँति) २लूतायां कीटभेदे च अमर। ३सङ्कीर्णजातिभेदे पु स्त्री। स्त्रियां जातित्वात् ङीष्। स च जातिसङ्करेषु मानवोक्ता यथा "शूद्रायां वैश्यसंसर्गाद् आयोगव इति स्मृतः। तन्तुवाया भवन्त्येव वसुकांस्योपजीविनः। शीलकाः केचिदत्रैव जीवनं वस्त्रनिर्मितौ" "तन्तुवायो दशपलं दद्यादेकपलाधिकम्" मनु॰।

तन्तुवायदण्ड पु॰ तन्तोर्वायस्य दण्ड ६त॰ वायते अनेन करणे—घञ् वा कर्म॰। वेमनि तन्तुवायसाधने दण्डे। (नराज)

तन्तुविग्रहा स्त्री तन्तवो विग्रहे यस्याः। कदल्याम् त्रिका॰। तद्वृन्त्यपि हि बहुसूत्राणि प्रादुर्भवन्ति।

तन्तुशाला स्त्री तन्तूना वयनाय शाला। (ताँतघर) तन्तुवयनस्थाने हेम॰। [(सिँघोयान) अमर॰।

तन्तुसन्तत त्रि॰ तन्तुभिः सन्ततं व्याप्तम्। स्यूतवस्त्रे।

तन्तुसार पु॰ तन्तव इव सारो मज्जाऽस्य। गुवाकवृक्षे। त्रिका॰

तन्त्र न॰ तन्त्र्यते तनोति वा कर्त्रादौ यथायथं ष्ट्रन् तन्त्रि-कुटुम्बभरणे घञ् वा। १कुटुम्बभरणादिकृत्ये २सिद्धान्ते ३औषधे ४प्रधाने ५परिच्छदे ६वेदशाखाभेदे ७हेतौ ८उभयार्थकप्रयोगे। ९इतिकर्त्तव्यतायाञ्च मेदि॰। १०तन्तुवाये शब्दमाला ११राष्ट्रे १२परच्छन्दानुगमने १३स्वराष्ट्रचिन्तायाम् हेमच॰। १४प्रबन्धे शब्दरत्ना॰ १५शपथे, धरणिः १६धने १७गृहे १८वयनसाधने (ताँत) १९कुले च नानार्थमञ्जरी। २०शिवादुक्तशास्त्रभेदे तल्लक्षणभेदादिकं यथा "सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च। देवतानाञ्च संस्थानं तीर्थानाञ्चैव वर्णनम्। तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च। संस्थानञ्चैव भूतानां यन्त्राणाञ्चैव निर्णयः। उत्पत्तिर्विबुधानाञ्च तरूणां कल्पसंज्ञितम्। संस्थानं ज्योतिषाञ्चैव पुराणाख्यानमेव च। कोषस्य कथनञ्चैव व्रतानां परिभाषणम्। शौचाशौचस्य चाख्यानं नरकाणाञ्च वर्णनम्। हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम्। राजधर्मो दानधर्मो युगधर्मस्तथैव च। व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम्। इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते"। तस्य प्रशंसा। "विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिर्यथा। नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः। अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः। देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा। तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम्। सर्वकामप्रदं पुण्यं तन्त्रं वै वेदसम्मितम्। कीर्त्तनं देवदेवस्य हरस्य मतमेव च। पावनं श्रद्दधानानामिह लोके परत्र च"। तस्य श्लोकसंख्या यथा "न शक्यं विस्तराद्वक्तुमपि वर्षशतैरपि। संक्षेपाद्वै प्रवक्ष्यामि श्लोकसंख्याक्रमत्तमा। दिवि देवि! नभश्च पाताले ब्रह्मशासने। यथामानं भारते च क्षितौ तन्त्राणि यानि च। आगमं त्रिविधं प्रोक्तं चतुर्थमीश्वरं स्मृतम्। कल्पश्चतुर्विधः प्रोक्त आगमो डामरस्तथा। यामलश्च तथा तन्त्रं तेषां भेदाः पृथक् पृथक्। उक्ताश्चाद्य समस्तम् सारदाख्यञ्च नारदम्। महार्णवश्च कपिलो योगं कल्पं कपिञ्जल। अमृतशुद्धिर्वीरश्च सिद्धसंवरणस्तथा। प्रथमोऽष्टसहस्रन्तु श्लोका दश प्रकीर्त्तिताः। द्वितीयोऽस्तकसत्न षट्सहस्राणि संख्यया। श्लोकाः शतार्द्धसंख्यातास्तृतीयस्त्रिसहस्रक। शतद्वय साधिकञ्च श्लोकानां पञ्चविंशतिः। त्रिंशो॰ चतुःसहस्राणि श्लोकानां चतुर्संख्यया। प्रपञ्चः प्रथमे तन्त्रे द्वितीये पञ्चसंख्यया। सहस्राणि तथा श्लोकाः सप्तविंशतिसंख्यया। भूतमेकसहस्राणि ह्यतीवेऽष्टसहस्रकम्। शतद्वयं पङ्क्ति १० श्लोकाः प्रपञ्चः कथितस्त्रिधा। कला १६संख्या सहस्राणि शारदायाः प्रकीर्त्तिता। पञ्चविंशाधिकाः श्लोका बहुश्लोकाश्च नारदे। त्रिंशतिश्च सहस्राणि षट्सहस्राणि संख्यया। बहुश्लोकाश्च कथिता

मेहाम्भि॰ । सारात् सारतराण्येव संगृहीतानि निबोधत" । वाराहीत॰ ।

शिवोक्त चतुःषष्टिसङ्ख्यक तन्त्रं यथा "सिद्धीश्वर महातन्त्रं कालीतन्त्रं कुलार्णवम् । ज्ञानार्णव नीलतन्त्र फेत्कारीतन्त्रमुत्तमम् । देव्यागम उत्तराख्य श्रीक्रम सिद्धियामलम् । मत्स्यसूक्तं सिद्धसारं सिद्धिसारस्वतं तथा वाराहीतन्त्र देवेशि ! योगिनीतन्त्रमुत्तमम् । गणेशविमर्शिनीतन्त्रं नित्यातन्त्र शिवागमम् । चामुण्डाख्यं महेशानि ! मुण्डमालाख्यतन्त्रकम् । हंसमाहेश्वर तन्त्र निरुत्तरमनुत्तमम् । कुलप्रकाशक देवि ! कल्पं गायात्मक शिवे ! । क्रियासार निबन्धाख्यं स्वतन्त्र तन्त्रमुत्तमम् । सम्मोहन तन्त्रराज ललिताख्यं तथा शिवे ! । राधाख्य मालिनीतन्त्र रुद्रयामलमुत्तमम् । बृहत् श्रीक्रम तन्त्रं गवाक्ष सुकुमुदिनि ! । विशुद्धेश्वर तन्त्रञ्च मालिनीविजय तथा । समयाचारतन्त्रञ्च भैरवीतन्त्रमुत्तमम् । योगिनीहृदयं तन्त्र भैरव परमेश्वरि ! । सनत्कुमारक तन्त्रं योनितन्त्रं प्रकीर्त्तितम् । तन्त्रान्तरञ्च देवेशि ! नवरत्नेश्वरं तथा । कुलचूडामणितन्त्रं भावचूडामणीयकम् । मन्त्रदेवप्रकाशञ्च कामाख्यानामक तथा । कामधेनुकुमारी च भूतडामरसंज्ञकम् । मालिनीविजय तन्त्र यामल ब्रह्म यामलम् । विश्वसार महायन्त्रं महाकाल कुलामृतम् । कुलोड्डीशं कुब्जिकाख्य यन्त्रचिन्तामणीयकम् । एतानि तन्त्ररत्नानि प्रकाशानि युगे युगे । काशीविलासकादीनि तन्त्राणि परमेश्वरि ! । कालकल्पे सुसिद्धानि अश्वक्रान्तासु भूमिषु । महाचीनादितन्त्राणि अविकल्पे महेश्वरि ! । सुसिद्धानि वरारोहे ! रथक्रान्तासु भूमिषु" इति महासिद्धिसारतन्त्रम् । "चतुःषष्टि तन्त्राणि यामलादीनि पार्वति ! । प्रकाशानीह वाराहि विष्णुक्रान्तासु भूमिषु । कल्पभेदेन तन्त्राणि कथितानि च यानि च । पाषण्डमोहनार्थैव विफलानीह सुन्दरि !" विश्वसारतन्त्रम् । अन्यत्र च "दैत्यानां मोहनार्थं तु तन्त्रशास्त्रं शिवोदितम्" तत्र वराहचिन्तायां श्रीवधे च "तन्त्रावापविदा योगे" भाव॰ । यामले "इदानीं तत्प्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम्" इत्युक्तः अनेकोद्देशेन सकृत्प्रयोगे "द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा । मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्" याज्ञ॰ । "पितृश्राद्धे मातामहश्राद्धे च वैश्वदेविकं तन्त्रेण कार्य्यमिति" मिता॰ । ५ सिद्धान्ते अङ्ग-

समुदाये "दर्शपौर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तदाम्नातत्वात्" आश्व॰ श्रौ॰ १।१।२। तन्त्रमङ्गसंहति- विध्यन्त इत्यर्थः स चावस्थानादिसद्भावान्तः प्रधानस्य तन्त्रणात् तन्त्रमित्युच्यते" कर्क॰ । तन्त्रलक्षणादिकं कात्या॰ श्रौ॰ उक्तं यथा "कर्मणा युगपद्भावस्तन्त्रम्" कात्या॰ श्रौ॰ १।७।१

"यत्र प्रधानकर्मणां युगपद्भावं सहप्रयोगं तत्राराडुपकारकाणामङ्गानां तन्त्रं सकृदनुष्ठानं भवति । न प्रतिप्रधानं पृथक् पृथक् यद्धि सकृत् कृतं बहूनामुपकरोति तत्तन्त्रमित्युच्यते यथा बहूनां मध्ये कृतः प्रदीपः । कुतस्तन्त्रमिति हेत्वाकाङ्क्षायां त्रीन् हेतूनाह" कर्कः । "शक्यपुरुषार्थकृतत्वैकार्थसमवायश्रुतिभ्यः" सू॰ । "प्रधानकर्मणां सहप्रयोगे सति तदङ्गानां सकृदनुष्ठानमुक्तम् । तत् कुतः शक्यत्वात् सकृदनुष्ठितैराराडुपकारकैरङ्गैर्बहूनामपि प्रधानानामुपकारस्य कर्त्तुं शक्यत्वात् प्राप्नुवन्ति ह्याराडुपकारकाणि बहूनामुपकर्त्तुम्, अवस्थानाविशेषत्वात् प्रदीपवत् यथा एक एव प्रदीपो बहूनां मध्ये कृतः सन् सर्वेषामुपकरोति एवमेतान्यपीति । यद्यप्यङ्गानां प्रत्येकमेव विनियोगस्तथापि विधिना तावदनुष्ठानं सकृदेवोपकारकं भवति यथैव हि चतुर्षु भागेषु लिङ्गपदेनैव कथम्भावमपेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविधयः सर्वाण्यपि प्रत्येकमङ्गानि समर्पयन्ति अन्यपि च कस्यचित् प्रधानोत्पत्तिविधिसन्निधौ प्रकरणवशेन सन्निधिर्बोध्यते तदेव सहतानां प्रधानानां फलसाधनत्वात् काले देशकालैक्याच्च युगपत् सर्वेष्वनुष्ठातुं प्रारब्धेषु सकृत्कृतमेवाङ्गं सर्वचिकीर्षया कृतत्वात् सन्तमपि केनचित् सन्निधिं बाधित्वा प्रकरणवशेन सर्वार्थं भवति । किं च पौर्णमास्यां यजेतेति श्रुत्यां युगपदनुष्ठानमवगतं पृथक् पृथक् साङ्गेष्वनुष्ठीयमानेषु बाध्यते तस्मात् सकृदेवाङ्गानामनुष्ठानम् । तथा पुरुषार्थकृतत्वाच्च यत् सकृदनुष्ठितैरप्यङ्गैः पुरुषार्थः कृत एव भवति पुरुषार्थं पुरुषस्याभीष्टफलम् तद्धि आग्नेयादिभिरङ्गोपकृतैः क्रियते आराडुपकारकाणि चाङ्गान्यनेकघटादिप्रकाशकप्रदीपवत् सर्वेषां सहैवोपकुर्वन्ति सकृत्कृतेऽपि पुरुषार्थं कृतमेव भवति । तथा एकार्थसमवायश्रुतेराङ्गानां तन्त्रं भवति एकोऽर्थो यस्य एकार्थः एकफलो य प्रधानानां समवाय एकार्थः स एकार्थसमवायः तत्र एकार्थे समवाये एकवचे

प्रधानसमूहे अङ्गानां तन्त्रश्रुतेः अङ्गानां सकृदनुष्ठानं श्रूयते यतः। तथाहि "ता एकविंशतिराहुतयो द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशश्च ह्यग्नीषोमीय उपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शम्योर्वाक् चाथ यदेवादः पत्नीसंयाजेषु सम्प्रस्थापयति समिष्ट यजुश्चेति तत्राग्नेयोपांशुयाजाग्नीषोमीयप्रयाजस्य एक-फले प्रधानत्रयस्य चाङ्गानामेकविंशतिसंख्या श्रूयते सा चाङ्गानां सकृत्करणपक्ष एवोपपद्यते न प्रतिप्रधानं पृथगनुष्ठानपक्षे। तस्मात् प्रधानानां सहप्रयोगे सकृदेवारादुपकारिका क्रिया सन्निपत्योपकारकाणां प्रति प्रधानमावृत्तिरिति तु प्रागुक्तमेव। अथ प्रधानानां सह प्रयोगे कारणान्याह" कर्कः। "फलकर्मदेशकालद्रव्य देवतागुणसामान्ये" सू०। यत्रैकेन वाक्येन बहूनि प्रधानकर्माणि एकफलसाधनत्वेन विधीयन्ते तत्र तेषा-मितरेतरापेक्षाणां साधनत्वेन विधानात् सहप्रयोगः 'तद्यथा मित्राविन्दाग्नीराड्मित्रायुष्कामस्येति वैश्वदेवेन प्रजाकाम याजयेदिति अत्र मित्रविन्दामन्त्रेण समुदाय-वचनेन दशानां हविषां सहप्रयोगः वैश्वदेवमन्त्रेण च समुदायवचनेनाष्टानां हविषाम्। फलार्थस्तु सामान्य शब्दः प्रत्येकं सम्बध्यते फलसामान्ये कर्मसामान्ये देशसामान्ये कालसामान्ये द्रव्यसामान्ये देवतागुणयोः सामान्य इति एकवाक्येनैकफलसाधनत्वेन विधानेऽपि फलादिसामान्ये सत्येव प्रधानानां सहप्रयोगो भवति फलं स्वर्गादि कर्म पञ्चप्रयाजता त्र्यनुयाजतेत्यादि। देश समप्राचीनप्रवणादिः। कालः पूर्वाह्णापराह्णादिः। द्रव्यं दधिपयआज्यम् न तु हविर्द्रव्यम् अनेकेषु प्रधानकर्मसु तच्छब्दस्यावश्यम्भावात् देवता प्रजापतीन्द्रादि। तद्गुण उपांशुत्वाज्यत्वादि तस्मिन् सति प्रधानमपि सहैव भवति न पृथक्" कर्कः "तद्भेदे भेदः" सू०। तेषां फलादीनां भेदस्तद्भेदः तद्भेदे तेषां फलादीनां सह प्रयोगकारणानां भेदे सति प्रधानानां प्रयोगभेदो भवति तत्र प्रयोगवचनभेदान्मित्रविन्दाग्नीतिकामा-न्त्ययोर्न सहप्रयोगः फलभेदाच्च श्रीकामराट्काम-मित्रकामायुष्काममित्रविन्दानां पृथक् प्रयोगः। कर्म-भेदेऽपि प्रयोगभेदो भवति तद्यथा कस्यचित् पञ्चप्रया-जता कस्यचिन्नवप्रयाजता यथा च कौकिलीया मङ्गा हविषोऽपसाधनत्वे इतरेतरस्य विगुणत्वं भवति।

देशभेदेऽपि तन्त्रभेदो भवति यथा वरुणप्रघासेषु प्राच्या कौकिलीमङ्गाहविषोश्च कौकिल्याः समदेशः मङ्गाहविषस्तु प्राचीनप्रवणः। कालभेदेऽपि सह-प्रयोगो न भवति यथा दर्शस्य पौर्णमासस्य च "पौर्ण-मास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेति वचनेन कालभेदेन तयोर्विधानात्। यथा वा आग्नी-कवतीसान्नपनीययोः पूर्वाह्णमध्याह्नरूपकालभेदात्तन्त्र भेदः। दक्षिणाद्रव्यैक्ये सति सहप्रयोगो यथा राजसूये प्रयाजा निपयुक्तानां वेषां शते च निपयुक्तानां प्रयाजानामप्यवभृथे वाऽनुष्ठानम् तेषां दक्षिणाद्रव्यभेदेन प्रयाजा प्रयाजा पृथग नुष्ठानम् न सर्वेषां सहप्रयोग दक्षिणाभेदश्च प्रयाजा वामन प्रयाजा श्यामः प्रयाजा बभ्रुरिति तत्र दक्षिणाभेदादानतिभेद तद्भेदात्तत्तत्स्वरूप भेद वामनानतीति पूर्वं कर्म कर्त्तव्यम् श्यामानती-श्वतरम् तन्त्रत्वे तुभाभ्यामानता उभय कुर्युः। तत्र दक्षिणाव्यवस्था गम्यमाना बाध्येत। तस्मात् प्रतिदानवं तन्त्रभेदः। अत्र एकवाक्येनैकफलार्थमेव विधाने देश-कालकर्मैक्ये सत्यपि दक्षिणाभेदात्तन्त्रभेद। देवताया देवतागुणस्य च सामान्ये सति उच्चारणमपि तस्या देवताया आवाहनत्यागादौ तन्त्रेण भवति यथा अत्र दशप्राजापत्येषु राजसूये प्रजापतेर्देवताया समानत्वा द्गुणस्योपांशुत्वस्य च समानत्वादनुवचनादौ तन्त्रेणो-च्चारणं भवति यागोऽपि तन्त्रेणैव भवति। यथा च प्राजापत्यान् प्रकृत्य श्रूयते एकानुवाक्या भवत्येक-याज्यैकदेवत्या हि प्राजापत्या इत्युपांशुत्वाच्छागानां हविषोऽन्नूच्छीति अतानुवाक्यादेकत्वे एकदेवतात्वं हेतुं ब्रुवन्ती एकदेवताकानां सिद्ध तन्त्रोच्चारणं दर्श-यति। दर्शपूर्णमासयोरेव द्रव्यभेदेऽपि दध्नः पयसश्च देवताया इन्द्रस्य तद्गुणस्य चाम्नाय्यत्वस्य समानत्वात्त-न्त्रेणैव याग उच्चारणं भवति। देवतायां समानाया अपि देवतागुणस्योपांशुत्वादेर्भेदे सति सहोच्चारणं न भवति यथा प्रकृतावेवोपांशुयाजाग्नीषोमयो पुरोडाशा-ग्नीषोमयोश्च। इह देवतातद्गुणयोः सामान्ये यागस्य तन्त्रेणानुष्ठानमुच्यते अत्र सिद्धमेव देवतागुणसामान्ये तन्त्रेण यागानुष्ठानमुपजीव्य भेदो यागस्य भेदेनानु-ष्ठानपूर्वं निषिद्धः न द्रव्यभेदे गुणभोगादिति वा तत्र इति न पुनरुक्तिदोषादि।" कर्कः।

तन्त्रस्वरूपविषयादिकं जैमिनिना एकादशाध्याये व्युत्पादितं तत्र न्यायमालायां संक्षेपतश्च जैमिनिशब्दे माधवेनोक्तं १।४। पृ० दर्शितम्। तत्र शास्त्रे "आसुरिरपि पञ्चशिखाय तेन बहुधा कृतं तन्त्रम्" "सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य" सा० का०। २२गीत्यवयवे। "तन्त्रैः पञ्चभिरेतच्चकार मनोरमं शास्त्रम्" पञ्चत० १ तदवयवाश्च मित्रभेदमित्रप्राप्तिकाकोलूकीयलब्धप्रणाशापरीक्षितकारकाख्याः। तन्त्र वेत्ति ठक्। तान्त्रिक तन्त्रवेत्तरि त्रि०। तन्त्र विहित ठक्। तान्त्रिक तन्त्रविहिते त्रि० स्त्रियां ङीप् "वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगतः" तन्त्रसा० तान्त्रिकी दीक्षा २१४४ पृ० उक्ता स्वतन्त्र परतन्त्रः।

तन्त्रक त्रि० तन्त्रात् अचिराहृतम् कन्। अभिनवे वस्त्रे अमरः पटे पु० भाषायां स्त्री इति भेदः। "वसानस्तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ" भट्टिः।

तन्त्रकाष्ठ न० तन्त्रस्य काष्ठम्। तन्त्रस्ये काष्ठभेदे (ताँतेर काटि) भरतो लिङ्गा०।

तन्त्रता स्त्री तन्त्रस्य भावः तल्। अनेकोद्देशेन सकृत्प्रवृत्तौ यथा तर्पणपूजनाद्यनेककर्मोद्देशेन सकृत्स्नाने कृते सर्वकर्माङ्गस्नानसिद्धिः। तद्विषयोदाहरणं प्रा० त० उक्तं यथा "आग्नेयाष्टकपालैन्द्रदध्यैन्द्रपयोयागानां त्रयाणामाग्नेयाष्टकपालोपांशुयागाग्नीषोमीयैकादशकपालयागानां त्रयाणां सकृत् सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारं सिध्यति तथा नानाब्रह्मवधस्य सर्वोद्देशेन सकृत् प्रायश्चित्ते कृते सर्वब्रह्मवधजन्यपापनाशः। तन्त्रतायाश्चेतुश्च अष्टार्थैकजातीयकर्मणः कालदेशकर्त्रादीनां प्रयोगानुबन्धिनिमित्तभूतानामभेदे उद्देश्यविशेषापेक्षः" इति। एवञ्च "स्नातोऽधिकारी भवति दैवे पैत्रे च कर्मणि। पवित्राणां तथा जाप्ये दाने च विधिदर्शिते" इति विष्णूक्तम् "अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चनेति" दक्षोक्तञ्च, क्रियाङ्गस्नानं कर्तृसंस्कारद्वारेव तद्दिनकर्त्तव्याशेषकर्मार्थमेकमेव न तु प्रतिकर्म कर्त्तव्यम्" इति रघुनन्दन अधिकं तन्त्रशब्दे दृश्यम्।

तन्त्रधारक पु० तन्त्रं कर्मप्रापकपद्धतिग्रन्थं धारयति धारि-ण्वुल् ६त०। "सदस्यश्च नियुक्तः स्यादपरस्तन्त्रधारकः। तृतीयं प्रश्नकं ब्रूयात् तत्र कर्म समाचरेत्" छन्दोगपरिशिष्टोक्ते कर्मस्वरूपप्रापकपुस्तकधारके। "तन्त्रधारकः पुस्तकधारकः" श्रा० त० रघुनन्दनः।

तन्त्रयुक्ति स्त्री तन्त्रोक्ता आयुर्वेदशास्त्रोक्ता युक्तिः। सुश्रुतोक्ते द्वात्रिंशद्भेदके युक्तिभेदे। तास्तु यथा "अथातस्तन्त्रयुक्तिनामाध्यायं व्याख्यास्यामः। द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति। तद्यथा। अधिकरणं योगः पदार्थो हेत्वर्थ उद्देशो निर्देश उपदेशः अपदेशोऽतिदेशोऽपवर्गो वाक्यशेषोऽर्थापत्तिर्विपर्ययः प्रसङ्ग एकान्तोऽनेकान्तः पूर्वपक्षो निर्णयोऽनुमतं विधानमनागतावेक्षणम् अतिक्रान्तावेक्षणम्। संशयो व्याख्यानं स्वसंज्ञा उद्धारः निर्वचनं निदर्शनं नियोगो विकल्पः समुच्चय ऊह्यमिति अत्राह तन्त्रयुक्तीनां किं प्रयोजनमित्युच्यते। वाक्ययोजनमर्थयोजनञ्च। भवन्ति चात्र श्लोकाः। असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम्। स्ववाक्यानां सिद्धिरपि क्रियते तन्त्रयुक्तितः। व्यक्ता नोक्तास्तु ये ह्यर्था लीना ये चाप्यनिर्मलाः। लेशोक्ता ये च केचित् स्युस्तेषाञ्चापि प्रसाधनम्। यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा। प्रबोधस्य प्रकाशार्थास्तथा तन्त्रस्य युक्तयः। यमर्थमधिकृत्योच्यते तदधिकरणं १ यथा रसं दोषं वा। येन वाक्यं युज्यते स योगः २। यथा तैलं पिबेच्चामृतवल्लिनिम्बहिंस्राभयावृक्षकपिप्पलीभिः। सिद्धं बलाभ्याञ्च सदेवदारु हितञ्च नित्यं गलगण्डरोगी"। सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धं प्रयुक्तमेवं दूरस्थानामपि पदानामेकीकरणं योगः। योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः ३। अपरिमिताश्च पदार्थाः। यथा स्नेहस्वेदाञ्जनेषु निर्दिष्टेषु द्वयोस्त्रयाणामर्थानामुपपत्तिर्दृश्यते तत्र योऽर्थः पूर्वापरयोगसिद्धो भवति स ग्रहीतव्यो यथा। वेदोत्पत्तिं व्याख्यास्याम इत्युक्ते सन्दिह्यते बुद्धिः। कतमस्य वेदस्योत्पत्तिं विवक्षुरिति। ऋग्वेदादयश्च वेदास्तत्र पूर्वापरयोगमुपलभ्य विद—विचारणे विन्दत्येतयोश्च धात्वोरनेकार्थयोः प्रयोग इति ग्रन्थागमनिष्पत्तिर्भवति। आयुर्वेदोत्पत्तिमथ विवक्षुरित्येष पदार्थः। यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः ४। यथा मृत्पिण्डोऽद्भिः प्रक्लिद्यते यथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति। समासवचनमुद्देशः ५। यथा शल्यमिति। विस्तरवचनं निर्देशः ६। यथा। शारीरमागन्तुकं चेति। एवमित्युपदेशः ७। यथा "तथा न जागृयाद्रात्रौ दिवा स्वप्नञ्च वर्जयेत्" अनेन कारणेनेत्यपदेशः। यथोपदिश्यते मधुरेण श्लेष्माभिवर्द्धत इति। प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः८। यथा देवदत्तस्यानेन शल्य-

उद्दृत तस्मादुपग्रहस्तस्यायमेवोपहरिष्यतीति। प्रकृतस्यानागतेन साधनमतिदेशः ९। यथानेनास्य वायुरूर्द्ध्व-मुपनिष्ठते तेनोदावर्त्तः स्यादिति। अभिव्याप्यापकर्षणमपवर्गः १०। यथा अस्वेद्या विषोपसृष्टा अन्यत्र कीटविषादिति। येन पदेनानुक्तेन वाक्यं समाप्यते स वाक्यशेषः ११। यथा शिरःपाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणमपि गम्यते पुरुष एवोक्त इति। यदकीर्त्तितमर्थादापद्यते सार्थापत्तिः १२। यथौदनं भक्ष्ये इत्युक्तेऽर्थादापन्नं भवति नायं पिपासुर्यवागूमिति। यद्यत्राभिहितं तस्य प्रातिलोम्यं विपर्य्ययः १३। यथा कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति। प्रकरणान्तरेण समापनं प्रसङ्गः १४। यथा प्रकरणान्तरितोयमर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः पञ्चमहाभूतशरीरिसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय भूतविद्यायां पुनरुक्तं यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरुष इति स खल्वेष कर्मपुरुषश्चिकित्सायामधिकृतः सर्वत्र। यदवधारणेनोच्यते स एकान्तः १५।

“यथा त्रिवृद्विरेचयति मदनफलं वामयतीति। क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकान्तः १६। यथा केचिदाचार्य्या ब्रुवते द्रव्यं प्रधानं केचिद्रसं केचिद्वीर्य्यं केचिद्विपाकमिति। आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः १७ यथा कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति। तस्योत्तरं निर्णयः १८। यथा शरीरं प्रपीड्य पश्चादधोगच्छन् वसामेदोमज्जानुविद्धं मूत्रं सृजति वातः एवमसाध्या वातजा इति। तथाप्युक्तम् “कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः। अधः प्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः”। परमतमप्रतिषिद्धमनुमतम् १९। यथान्यो ब्रूयात् सप्त रसा इति। प्रकरणानुपूर्व्याभिहितं विधानम् २०। यथा सक्थिमर्माण्येकादशप्रकरणानुपूर्व्याभिहितानि। इत ऊर्द्ध्वमेवं भविष्यतीत्यनागतावेक्षणम् २१। यथा श्लोकस्थाने ब्रूयाच्चिकित्सितेषु वक्ष्यामीति। यत्पूर्वमुक्तं तदतिक्रान्तावेक्षणम् २२। यथा चिकित्सितेषु ब्रूयात् श्लोकस्थाने यदीरितमिति। उभयहेतुदर्शनं संशयः २३। यथा तलहृदयाभिघातः प्राणहरः पाणिपादच्छेदनं न प्राणहरमिति। तन्त्रातिशयोपपत्त्या व्याख्यानम् २४। यथेह पञ्चविंशतिकः पुरुषोऽत्र व्याख्यायते। अन्येष्वायुर्वेदतन्त्रेषु भूतादिप्रकाशमारभ्यचिन्ता। अन्यशास्त्रासामान्या स्वसंज्ञा २५। यथा मिथुनमिति मधुसर्पिषोर्ग्रहणम्। लोके प्रथितमुदाहरणम् २६। यथोष्णमयाक्षीनम-सुभायतिं। निश्चितं वचनं निर्वचनम् २७। यथायुर्विद्यतेऽस्मिन्ननेन वायुर्विन्दतीत्यायुर्वेदः। दृष्टान्तेनार्थं प्रसाध्यते यत्र तन्निदर्शनम् २८। यथाग्निर्वायुना सहितः कोष्ठे वृद्धिं गच्छति तथा वातपित्तकफजोदुष्टव्रण इति। इदमेव कर्त्तव्यमिति नियोगः २९। यथा पथ्यमेव भोक्तव्यमिति। इदं वेति विकल्पः ३०। यथा रसौदनः सघृता यवागूर्वा इदञ्चेदञ्चेति समुच्चय ३१। यथा मांसवर्गे एणहरिणलावतित्तिरिसारङ्गा प्रधानमिति। यदनिर्दिष्टं बुद्धिमता तदूह्यम् ३२। यथाभिहितमन्नपानविधौ चतुर्विधञ्चान्नमुपदिश्यते। भक्ष्यं भोज्यं लेह्यं पेयमेवं चतुर्विधे वक्तव्ये द्विविधमभिहितमनोह्यमिति। अन्नपाने विविधे द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवति कथा-न्यथ। अन्नेन भक्ष्यमपरं स्त्वन्नसाधर्म्यात्। पेयेन लेह्यं द्रवसाधर्म्यात्। चतुर्विधश्चाहारः प्रायेण द्विविधः प्रसिद्ध इति। द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारस्य वेदने। मया सम्यग्विनिर्दिष्टाः शब्दन्यायार्थसंयुताः। योऽप्येता विधिवद्वेत्ति दीपीभूतास्तु बुद्धिमान्। स पूजार्हो भिषक् श्रेष्ठ इति धन्वन्तरेर्मतम्।”

**तन्त्रवाय(प)** पु॰ तन्यते तन–कर्म्मणि ष्ट्रन् तन्त्रं सूत्रं वयति वपति वा वे-वप-वा अण् उप॰ स॰। (ताँति) ख्याते १सङ्कीर्णजातिभेदे स्त्रियां जातित्वात् ङीष् योपधत्वात् टाप् इति भेद। तदुत्पत्तिः परा-शरपद्धत्युक्ता यथा “ताम्रकूट्याञ्च कार्य्यां मणिकारश्च जायते। मणिकारात् ताम्रकूट्यां मणिबन्धोऽस्य जायते मणिबन्धान्मणिकार्य्यां तन्त्रवायाश्च जज्ञिरे”। मन्त्र स्वकार्य्यन्वितः। व्याघारे मत्र् ह्रस॰। २तन्त्रे (ताँत) पु न॰ शब्दरत्ना॰।

**तन्त्रहोम** पु॰ तन्त्रेण होम। परिसमूहनबर्हिराकरणयुक्ते होमे विप्रहोमशब्दे दृश्यम्। तन्त्रमध्यम। “सकृद्धोमस्य निकृत्य योगन्यायेषु कर्मसु” छन्दोगप॰

**तन्त्रा** स्त्री तत्रि–भावे अ। ईर्ष्यविज्ञावां तन्द्रायां हिरूपको॰।

**तन्त्रायिन्** पु॰ तन्त्रं वाप्तव्यकं प्रतिमन्वाति विनि ऊत॰। वायुव्यक्तगामिनि सूर्य्यादौ। “तन्त्रायिणे नमोद्या वापृथिवीभ्याम्” यजु॰ ३८।१२ तन्यतेऽनेन तन्त्र पट-रचनाय यन्त्रमाधुज्य यन्त्रभेदः तदृत् सर्वत्र वाचकत्वमपि तन्त्रमुच्यते” वेददी॰।

वशे मामिह । तदहं श्रावयिष्यामि तापत्यार्थविनिश्चयम् । तपती नाम या चैषा तापत्या यत्कृते वयम् । कौन्तेया हि वयं साधो ! तत्त्वमिच्छामि वेदितुम् । वैशम्पायन उवाच । एवमुक्तः स गन्धर्वः कुन्तीपुत्रं धनञ्जयम् । विश्रुतां त्रिषु लोकेषु श्रावयामास वै कथाम् । गन्धर्व उवाच । हन्त ते कथयिष्यामि कथामेतां मनोरमाम् । यथावदखिलां पार्थ ! सर्वबुद्धिमतां वर ! । उक्तवानस्मि येन त्वां तापत्य इति यद्वचः" ।

"य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा । एतस्य तपती नाम बभूव सदृशी सुता । विवस्वतो वै देवस्य सावित्र्यवरजा विभो ! । विश्रुता त्रिषु लोकेषु तपती तपसा युता । न देवी नासुरी चैव न यक्षी न च राक्षसी । नाप्सरा न च गन्धर्वी तथा रूपेण काचन । सुविभक्तानवद्याङ्गी स्वसितायतलोचना । स्वाचारा चैव साध्वी च सुवेशा चैव भामिनी । न तस्याः सदृशं किञ्चित् त्रिषु लोकेषु भारत ! । भर्त्तारं सविता मेने रूपशीलगुणश्रुतैः । सम्प्राप्तयौवनां पश्यन् देयां दुहितरन्तु ताम् । नोपलेभे ततः शान्तिं संप्रदानं विचिन्तयन् । अथर्क्षपुत्रः कौन्तेय ! कुरूणामृषभो बली । सूर्य्यमाराधयामास नृपः संवरणस्तदा । अर्घ्यमाल्योपहाराद्यैर्गन्धैश्च नियतः शुचिः । नियमैरुपवासैश्च तपोभिर्विविधैरपि । शुश्रूषुरनहंवादी शुचिः पौरवनन्दन ! । अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् । ततः कृतज्ञं धर्मज्ञं रूपेणासदृशं भुवि । तपत्याः सदृशं मेने सूर्य्यः संवरणं पतिम् । दातुमैच्छत्ततः कन्यां तस्मै संवरणाय ताम् । नृपोत्तमाय कौरव्य ! विश्रुताभिजनाय च" । भा० आ० १७१ अ० ।

**तपन** पु० तप–ल्यु । १सूर्य्ये २भल्लातकवृक्षे । ३अग्न्यादौ दाहयुक्ते नरकभेदे ४ग्रीष्मे च हेम० । ५अर्कवृक्षे ६क्षुद्राग्निमन्थवृक्षे ७सूर्य्यकान्तमणौ च राजनि० । "पञ्चमः पञ्चतपसां तपनो जातवेदसाम्" माघः । स्त्रीणां यौवने दशसु जातालङ्कारभेदे न० सा० द० । "यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः । अलङ्काराः" इत्युपक्रमे "विहृतं तपनं मौग्ध्यम्" इत्यादिना विभज्य "तपनं प्रियविच्छेदे स्मरावेगोत्थचेष्टितमिति" लक्षितम् । ८अग्निभेदे पु० "ते जातवेदसः सर्वे कल्माषः कुसुमस्तथा । दहनः शोषणश्चैव तपनश्च महाबलः । स्वाहाकारस्य विषये विख्याताः पञ्च यज्ञियाः" हरिव० १८० अ० । १०शिवे पु० । "यज्ञवाहाय दान्ताय तप्याय तपनाय च" भा० शा० २८६ अ० शिवस्तुतिः । भावे ल्युट् । ११तापे न० धरणिः ।

**तपच्छद** पु० तपनप्रियः छदोऽस्य । दमनकवृक्षे राजनि० ।

**तपनतनय** पु० ६त० । १यमे २यमुनायां, ३शमीवृक्षे च स्त्री राजनि० । ४कर्णे ५सुग्रीवे च पु० तपनसुतादयोऽप्यत्र ।

**तपनमणि** पु० तपनतेजस्को मणिः । सूर्य्यकान्तमणौ राजनि० ।

**तपनात्मजा** स्त्री ६त० । १गोदावरीनद्यां हेम० । २यमुनायां च । ३यमे ४कर्णे ५सुग्रीवे च पु० । [नद्यां हेमच० ।

**तपनी** स्त्री तप्यते पापमनया तप–ल्युट् ङीप् । गोदावर्य्यां

**तपनीय** न० तप–अनीयर् । १स्वर्णे कनकधुस्तूरे च अमरः । "अध्यासि तु तपनीयसक्रमस्य" माघः । "असंस्पृशन्तौ तपनीयपीठम्" रघुः । स्वार्थे क । तपनीयक सुवर्णे राजनि० ।

**तपनेष्ट** न० ६त० । ताम्रे धातौ राजनि० । तस्यातो सूर्य्यप्रियत्वात् तथात्वम् ।

**तपस्** न० तप–असुन् । १आलोचनात्मके ईश्वरज्ञानभेदे अन्तर्यामिब्राह्मणभाष्ये द्रष्टव्यम् । २लग्नावधिकनवमस्थाने ज्यो० ३स्वाश्रमविहितकर्मणि ४वैधक्लेशजनके कर्मणि । "तपोनानशनात्परम्" । ५क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहने । ६चित्तप्रसादहेतुभूते यमनियमोपासनादिकर्मणि । ७मौनादिव्रते ८कायेन्द्रियमनसां समाधाने ९शास्त्रीयमार्गेण कायेन्द्रियमनसां शोषणे । १०कृच्छ्रचान्द्रायणप्राजापत्यादिरूपे प्रायश्चित्ते । ११शास्त्रविहिततप्तशिलारोहणादौ । १२वानप्रस्थस्यासाधारणधर्मे । तच्च शारीरादिभेदात् त्रिविधम् यथाह "देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते । अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते । मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत् तपो मानसमुच्यते" गीता । तदपि सात्त्विकादि भेदात् त्रिविधम् यथाह "श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते । सत्कारमानपूजार्थं तपो दम्भेन चैव यत् । क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् । मूढग्राहेणात्मनो यत् पीडया क्रियते तपः । परस्योत्सादनार्थं वा तत् तामसमुदाहृतमिति" गीता । १३मनइन्द्रियाणामैकाग्र्ये "मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमं तपः" इत्युक्तेः १४जनोलोकादूर्द्ध्वस्थे लोकभेदे । "तस्योपरि तपो-

भागवतोक्ते द्वादशमन्वन्तरे १४सप्तर्षिभेदे तपोमूर्त्तिशब्दे प्रमाणं दृश्यम् ।

**तपस्विपत्र** पु० तपस्विप्रियं पत्रमस्य । दमनकवृक्षे राजनि० ।

**तपात्यय** पु० तपस्य ग्रीष्मस्यात्ययोऽवसानं यत्र काले । १वर्षाकाले "तपात्यये वारिभिरुक्षिता नवैः" । कुमा० । "तपात्यये पुष्पफलैरुपेतं महावनं राष्ट्रपतिर्ददर्श" भा० व० २४ अ० । ६त० । २ग्रीष्मस्यावसाने च ।

**तपान्त** पु० तपस्यान्तो यत्र । १वर्षाकाले "ववर्ष शरवर्षेण तपान्ते जलदो यथा" भा० भी० ५४ अ० । ६त० । २ग्रीष्मस्यावसाने च ।

**तपित** त्रि भ्वा० तप–दाहे क्त । तप्ते द्विरूपकोष ।

**तपिनी** स्त्री नदीभेदे शब्दार्थचि० ।

**तपिष्ठ** त्रि० अतिशयेन तप्ता तप्तृ+इष्ठन् तृणोलोप । अतिशयेन तापके । "तपिष्ठेन शोचिषा यः सुराधाः" ऋ० ४।५।४।

**तपिष्णु** त्रि० तप–बा० इष्णुच् । तापकर्त्तरि तपने । "महता तपसा देवस्तपिष्णुः सेवितो मया । प्रीतेन चाह विभुना साक्ष्यं चोक्तस्तथाऽनघ ।" भा० शा० ३२० अ० ।

**तपीयस्** त्रि० अतिशयेन तप्ता तप्तृ+ईयसुन् तृणोलोप । १अत्र तप्तरि २तपस्याकारके "अतप्यतास्मिन् किल लोकतापनं तपस्तपीयांस्तपता समाहितः" भाग० ३।८।८।

**तपु** त्रि० तप–उन् । १तापके "तपोष्वग्ने अन्तराँ अमित्रान्" ऋ० ३।१८।२ "तपो मयूषां तापकस्य" भा० । २तापयुक्ते ३तप्ते च । "तपुर्ययुस्तु चरुरग्निवाँ इव" ऋ० ७।१०४।२ तपुस्तप्त" भा०

**तपुषि** त्रि० तप–उसिन् वेदे नेकारस्य इत् । तापके । "ब्रह्मद्विषे तपुषिं हेतिमस्य" ऋ० ३।३०।१७,६।५२।२। "तपुषिस्तपतेर्हेतिर्हन्ते" निरु० ६।२ स्त्रियां कृदिकारान्तत्वात् वा ङीप् । २क्रोधे स्त्री निघण्टु । क्रोधस्य चित्ततापकत्वात् तथात्वम् ।

**तपुस्** पु० तप–उसि । १सूर्य्ये २अग्नौ च उणा० । ३तापयुक्ते ४तापये च त्रि० । "तपुर्जम्भ ! यो अग्नभुक्" ऋ० १।३६।१६ हे तपुर्जम्भ ! तप्यमानदंष्ट्रायुक्त ! अग्ने ।" भा० "तपुरग्राभिर्ऋष्टिभिः । १०।८७।२३। "तपुरग्राभिस्तपनशीलाग्राभिः" भा० "तपूंषि तस्मै वृजिनानि सन्तु" ऋ० ६।५२।२

**तपोज** त्रि० तपसः तपस्यात अग्नेर्वा जायते जन–ड । १तपस्याजाते २अग्निजाते अस्तपसु स्त्री । "अपो ऽस्तपस्तो मम तपोजा अपि गच्छतात्" ऋ० १०।१५४।५ "वाचो बन्धुस्तपोजा" यजु० १०।६ "वाचो बन्धुः वाचया बन्धुभूता "यावद्वै प्राणोऽस्यापो भवन्ति तावद्वाचा वदतीति" श्रुते "आपोमयी वागिति" सामश्रुतेश्च । तथा तपोजा तपःशब्देनात्राग्निरुच्यते तपसोऽग्नेर्जातास्तपोजा अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्वा एता जायन्ते तस्मादाह तपोजा इति श्रुतेः वायोरग्निरग्नेराप इति श्रुत०ब्रा० ५।३।५।१७। श्रुत्यन्तरात्" वेददी०

**तपोदान** न० तप इव दानमत्र । तीर्थभेदे । "पुण्यतीर्थेषु कलिनः कुरुक्षेत्र प्रदर्शितम् । सिन्धूत्तमस्तपोदानं जम्बूमार्गमथापि च" भा० आनु० १६५ अ० ।

**तपोधन** त्रि० तपोधनं यस्य । तपोमात्रकारके १तपस्विनि । "तपोधनाभ्यागमसम्भव मुदः" माघ तत्प्रियत्वात् २दमनकवृक्षे पु० राजनि० । ३मुण्डीरीवृक्षे स्त्री मेदि० । तप एव धनम् । ४तपोरूपधने न० । "यत्तु नारद तिक्रान्तं धर्मद्वार तपोधनम्" । शा०आनु०५२अ० । तपोधनं मूल्यं यस्य । ५तपसा लभ्ये स्वर्गादौ त्रि० "सर्वरत्नधरं स्वर्गे पारिजातं तपोधनं" हरिव० १२८ अ० ।

**तपोधृति** पु० तपसि धृति सन्तोषो यस्य । १तपोरते तपस्विनि चतुर्दशमन्वन्तरे २भार्गवे सप्तर्षिभेदे "चतुर्थे चैव सावर्ण्ये ऋषीन् सप्त निबोध मे" इत्युपक्रमे "द्युतिर्वसिष्ठपुत्रश्च आत्रेय सुतपास्तथा । आङ्गिरास्तपसोमूर्त्तिस्तपस्वी काश्यपस्तथा । तपोऽशनश्च पौलस्त्यः पौलहश्च तपोरविः । भार्गवः सप्तमस्त्वासीद्विष्णुस्तु तपोधृतिः" हरिव० ७ अ० ।

**तपोनिधि** पु० तपो निधीयतेऽस्मिन् नि+धा–आधारे कि उप० स० तपोनिधिरिव यस्य वा । तपोधने तपस्विनि "विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम्" रघु । "पततृपतङ्गमतिमस्तपोनिधिः" माघ ।

**तपोभृत्** त्रि० तपो बिभर्त्ति भृ–क्विप् तुक् च ६त० । तपोधारके "स्वर्गे तपोभृता राजन् ! फलं पुण्यस्य कर्मणः" हरिव० ८अ० ।

**तपोमय** त्रि० तप प्रचुरं तप स्रष्टव्यपदार्थालोचनं तदात्मको वा तपस्+मयट् । १तपःप्रचुरे २स्रष्टव्यपदार्थालोचनात्मके परमेश्वरे पु० । "त्रयीमयो धर्ममयस्तपोमयः" भाग० २।४।१८। स्त्रियां ङीप् । "प्रविश्य मदरीं पुण्यां कुनिजुष्टां तपोमयीम्" हरिव० २६४ अ० । "उपर्य्युपरि तत्रापि गतिस्तत्र तपोमयी" ७६ अ० ।

तत्र शुद्धिकाम्। अनहोचितरक्षार्थं स्नानरक्षार्थगोचरे। परीक्षेदार्द्रपर्णेन चटत्कारसबोधकमिति"। ततः शङ्खिशाको घर्मोशाङ्गनादिप्रतारोपणान्तं साधारणं कर्म कृत्वा घृतमभिमन्त्रयेत्। मन्त्रस्तु तेनैव दर्शितः "तत-श्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत्। परं पवित्रममृत घृत! त्वं यज्ञकर्मसु। दह पावक! पापं त्वं हिमशीतो भवेति च"। ततः प्राड्विवाक शोध्येन "त्वमग्ने! सर्वभूतानामित्यादि मन्त्रेणाभिमन्त्रणं कारयित्वा मुद्रिका ग्राहयेदित्याह स एव "उपोषितन्ततः स्नात-मार्द्रवाससमाहृतम्। ग्राहयेन्मुद्रिकान्तान्तु घृतमध्यग-तान्तथा। प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः" इति। अत्र तर्जन्यैव मुद्रिकोद्धरणं कार्यं तस्याः परीक्षाभिधानात् पक्षद्वयेऽपि शुद्ध्यशुद्धिधारणोपायं बृहस्पतिराह "कराग्रं योन धुनुयात् विस्फोटो वा न जायते। शुद्धो भवति धर्मेण पितामहवचो यथेति"। कालिकापुराणेऽपि "न धुनेयुः करायन्तु यस्य रक्त न जायते। विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य नोद्धृतमिति"। रक्तं रक्तवर्णम्। यस्य कराग्रं विस्फोटाद्यैर्नोद्धृतमित्यन्वयः। पितामहोऽपि "यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिरिति"।

तप्तमाषपरीक्षाशब्दे अधिकं दृश्यम्।

मुद्रा स्त्री वैष्णवैः शरीरधार्य्येऽग्नितप्तधातुमयमुद्राङ्कितभग-वदायुधचिह्ने तद्विधिः हरिभक्तिविलासे १५ विलासे। "आषाढशुक्लद्वादश्यां हरौ शिशयिषौ सति। वैष्णवः पारणं कृत्वा तप्तमुद्राश्च धारयेत्। ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैकान्तिनश्च ये। कर्म्मात्मार्पणं तप्तमुद्राभि-र्देहमङ्कयेत्"। तप्तमुद्राधारणं नाराहे तप्तमुद्राप्रसङ्गे "चक्रादिधारणं पुंसां परं सम्बन्धवेदनम्। पातिव्रत्य-निमित्तं हि वलयादिविभूषणमिति"। तप्तमुद्रा-धारणफलं वायुपुराणे "अग्निनैव च सन्तप्तं चक्र-मादाय वैष्णवः। धारयेत् सर्ववर्णानां हरिसालोक्य-सिद्धये"। ब्रह्माण्डे "कृत्वा धातुमयीं मुद्रां तापयित्वा स्विकां तनुम्। चक्रादिचिह्निता भूप धारयेद्वैष्णवो नरः"। नारदीयपञ्चरात्रे "द्वादशारन्तु षट्कोणं वलयत्रय-संयुतम्। हरे सुदर्शनं तप्तं धारयेत्तु विचक्षणः। सौपर्णे च श्रीभगवद्गरुडसंवादे तप्तमुद्राप्रकरणे "गरुत्मन्विशेषेण सर्ववर्णेष्वयं विधिः। विप्रो वा क्षत्रियो वापि वैश्यः शूद्रस्तथैव च"। पाद्मे "अग्निष्टोमं यथा नित्यं वेदस्याध्ययनं यथा। ब्राह्मणस्य तथैवेदं तप्तचक्रादिधारणम्"। किञ्च तत्रैवोत्तरखण्डे श्री-शिवोमासंवादे "शङ्खचक्राङ्कनं कुर्य्याद्ब्राह्मणो बाहु-मूलयोः। हुताग्निनैव सन्तप्य सर्वपापापनुत्तये"। "चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा। धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत्"। तदकरणे निन्दा तत्रैव "अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत्। न तस्य किञ्चिदस्तीयादपि क्रतुसहस्रिणः। सर्ववेदविदोऽपि सर्वशास्त्रविशारदः। अधृत्वा विधिना चक्रं ब्राह्मणः पतितो भवेत्। तप्ते-नैवाङ्कनं कुर्य्यात् ब्राह्मणस्य विधानतः। श्रौतस्मार्त्तादि-सिद्ध्यर्थं मन्त्रसिद्ध्यै तथैव च। हरेः पूजाधिकारार्थं चक्रं धार्य्यं विधानतः। वैष्णवत्वस्य सिद्ध्यर्थं भक्ति-सिद्ध्यै विशेषतः। उपवीतादिवद्धार्य्याः शङ्ख-चक्रादयस्तथा। ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः"। श्रुतयश्च "यो ह वै सुग्गोतमोवैर्धर्म्माननुतिष्ठमानोऽग्निना चक्रं धत्ते। अग्निर्वै सहस्रारः सहस्रारो नेमिर्न्नेमिना तप्ततनुः सायुज्यं सलोकतामाप्नोतीति"। "चक्रं बिभर्त्ति वपुषाभितप्तं बलं देवानाममृतस्य विष्णोः। स एति नाकं दुरितं विधूय विशन्ति यद्यतयो वीतरागाः" इति। ऋक्परिशिष्टे "अतप्ततनुर्न्नतदामो अश्नुतेऽश्नुता सह दहन्नस्तत् समाशतेति" यजुषि ऋग्वेदीयाश्वलायन-शाखायाञ्च। "एतद्विष्णोररचक्रे तमसे जनाम्भोधिं वर्त्तते चर्षणीन्द्राः। मूले बाहोर्दधतेऽन्ये पुराणालिङ्गा-न्यन्ये तप्तान्यायुधान्यर्पयन्ते" इति। छन्दोगपरि-शिष्टे "सत्येन च याज्ञवल्क्यस्तत् शुभाशातमङ्किताय प्रेम्णा हरि भजेत्। सुग्गोकभ मोठेर्धर्म्मा यद्गोऽग्नि-नाधत्ते" इति। शतपथी श्रुतिः अथर्वपरिशिष्टे तप्तचक्रादिप्रकरणे "देवासो येनैतेन बाहुना सुदर्शनेन प्रयताः स्वर्गमायन्"। "येनाङ्किता मनवो लोकसृष्टिं वितन्वते ब्राह्मणास्तद्वह-न्तीति"। पाद्मे तप्तमुद्राप्रसङ्गे "विष्णुचक्राङ्कितं विप्रं पूजयेत् सर्वकर्म्मणि। विष्णुचक्रविहीनन्तु प्रयत्नेन विवर्जयेत्"। नारदीये "तप्तमुद्रा-प्रसङ्गे "श्रीकृष्णचक्राङ्कितशीनगात्रः श्मशानतुल्यः प्रभवेऽथ नारी,। हरा नरस्य स्पृते। सवासा ज्ञात्वा समर्चेद्धरिभक्त सद्य" इति। मठ्ठास्य वेङ्कटाचार्य-पादप्रभृतिभिर्बुधैः। श्रुतय स्मृतयोऽत्र विख्याता

तामसाः स्मृताः। तेषां योनिं प्रवक्ष्यामि नियतां पापकर्मिणाम्। अवाङ्निरयभावाय तिर्यङ्निरयगामिनः। स्थावराणि च भूतानि पशवो वाहनानि च। क्रव्यादा दन्दशूकाश्च कृमिकीटविहङ्गमाः। अण्डजा जन्तवश्चैव सर्वे चापि चतुष्पदाः। उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः। मग्नास्तमसि दुर्वृत्ताः स्वकर्मकृतलक्षणाः। अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः। तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम्। यथा ते सुकृतान् लोकान् लभन्ते पुण्यकर्मिणः। अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्मणि। स्वकर्मनिरतानाञ्च ब्राह्मणानां शुभैषिणाम्। संस्कारेणोर्द्ध्वमायान्ति यतमाना सलोकताम्। स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः। अन्यथा प्रतिपन्नास्ते विबुद्धाः स्वेषु कर्मसु। पुनरावृत्तिधर्माणस्ते भवन्तीह मानुषाः। पापयोनिं समापन्नाश्चाण्डाला मूकचूचुकाः। वर्णान् पर्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम्। शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः। स्रोतोमध्ये समागम्य वर्तन्ते तामसे गुणे। अभिष्वङ्गस्तु कामेषु महामोह इति स्मृतः। ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः। तमो मोहो महामोहस्तामिस्रः क्रोधसंज्ञितः। मरणं त्वन्धतामिस्रं तामिस्रः क्रोध उच्यते। वर्णतो गुणतश्चैव योनितश्चैव तत्त्वतः। सर्वमेतत्तमो विप्राः! कीर्तितं वो यथाविधि"।

सांख्ये अधर्माज्ञानावैराग्यानैश्वर्य्यात्मकश्च धर्मोऽस्त्यायथा "अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्य्यम्। सात्त्विकमेतद्रूपं तामसमस्मात् विपर्य्यस्तम्" सां० का० "रजस्तु चलतया परितः सत्त्वगुणं चालयद् गुरुणा वृणता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्त्यते इति ततस्ततो व्यावर्त्त्य तमोनियामकमुक्तं गुरु वरणकमेव तमः" सां० कौ०। अयमर्थः तयोगुणाः सत्त्वगुणं सत्त्वादीनि परितः स्वकर्म्मकरणाय चालयत् प्रवर्त्तयत् रजः गुरुणा गौरवान्वितेन वृणता यत्र यत्र कार्य्यजननाय तस्य प्रवृत्तिस्तत्र तत्र प्रतिबन्धकेन तमसा क्वचिदेव कार्य्ये प्रवर्त्त्यते कर्मक्षम क्रियते इति। तथा च तस्मात् तस्मात् कार्य्यात् व्यावर्त्त्य रजसः प्रवृत्तिं रोधयित्वा तमो नियामकमिति। अन्योऽपि विशेषस्तत्रोक्तो यथा "प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः। अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" "गुणा इति परार्थाः सत्त्वं लघुः प्रकाशकमिष्टम् च इत्यादयः क्रमेण निर्देक्ष्यन्ते। तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीनां यथासंख्यं वेदितव्यम्। एतदुक्तं भवति प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः, अप्रीतिर्दुःखम् अप्रीत्यात्मको रजोगुणः, विषादो मोहः विषादात्मकस्तमोगुण इति। ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान् प्रत्यात्मपदम्। नेतरेतराभावाः सुखादयः अपि तु भावाः आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा भावो येषां ते प्रीत्यात्मान एवमन्यदपि व्याख्येयम्। भावरूपता चैषामनुभवसिद्धा परस्पराभावात्मकत्वे तु परस्पराश्रयत्वेनैकस्याप्यसिद्धेरुभयासिद्धिरिति भावः। स्वरूपमेषामुक्त्वा प्रयोजनमाह प्रकाशप्रवृत्तिनियमार्थाः अत्रापि यथासंख्यमेव। रजः प्रवर्त्तकत्वात्सर्वत्र लघु सत्त्वं प्रवर्त्तयेत् यदि तमसा गुरुणा न नियम्येत। तमोनियतन्तु क्वचिदेव प्रवर्त्तयति इति भवति तमो नियामकम्। प्रयोजनमुक्त्वा क्रियामाह अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च इति क्रिया सा च प्रत्येकमभिसम्बध्यते। अन्योन्याभिभववृत्तयः एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते। तथाहि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति। अन्योन्याश्रयवृत्तयः। यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः तथाहि सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसी प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः, तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति। अन्योन्यजननवृत्तयः अन्यतमोऽन्यतमं जनयति जननञ्च परिणामः स च गुणानां सदृशरूपः अतएव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात्। नाप्यनित्यत्वं तत्त्वान्तरे लयाभावात्। अन्योन्यमिथुनवृत्तयः अन्योन्यसहचराः अविनाभाववर्त्तिन इति यावत् भवति चात्रागमः "अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः। रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः। तमसश्चापि मिथुने ते सत्त्वरजसी उभे। उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते। नैषामादिः सम्प्रयोगो वियोगो वोपलभ्यते" इति। सां० त० कौ०

"गुरुवरणकमेव तमः प्रदीपवन्नाशयतो हन्ति"। "जज्ञे सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः"। सां० का०। "सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्"। मनुः। चक्षुर्वृत्तिनिरोधके शार्वरादिके अन्धकारे "अदस्तयानुस्मनुत्तम तमः" "आसादितस्य तमसा नियतेर्नियोगात्" माघ। तच्च स्वपरप्रकाशकतेजःसामान्याभावरूपमिति नैयायिकाः अन्धकारशब्दे २०८६पृष्ठम्। काणादा अपि तथैवाङ्गीचक्रुः तच्च औलुक्यशब्दे १५८८पृ० दर्शितम्। वेदान्तिनस्तु भावरूपं प्रतिपेदिरे यथा विवरणोपन्यासे। तमःप्रकाशवद्विरुद्धस्वभावयोरिति" शा० भाष्यव्याख्याने "ननु तमःप्रकाशदृष्टान्ते भावाभावरूपत्वमुपाधिः। आलोकाभावस्तम इति नैयायिकाः। रूपदर्शनाभावस्तम इति प्राभाकरा इति चेत् नैव उपचयाऽपचयाद्यवस्थाभेदवत्त्वेनोपलभ्यमानत्वेनाभावत्वायोगात् नीलरूपवत्त्वेन द्रव्यत्वाच्च। ननु भावत्वपक्षे बह्वालोकवति देशे निमीलितनयनस्य कथं तमःप्रतीतिः बह्वालोकेन निवृत्त्यङ्गीकारात् सद्भावस्थानं तु मन्दालोकेनैव पूर्वमुक्तमिति चेत् न गोलकान्तर्वर्त्तिनस्तमसः प्रतीत्युपपत्तेः न च नेत्रस्यान्तर्वर्त्तिवस्तुग्राहकत्वासम्भवः पिहितकर्णस्यान्तरशब्दग्राहकत्वदर्शनात्। न चैवं गोलकान्तरस्याञ्जनादेरपि निमीलितनयनेन ग्रहणप्रसङ्गः। तमोव्यतिरिक्तरूपिण आलोकसहितचक्षुर्ग्राह्यत्वनियमात्। अथ मत द्रव्यत्वे सति तमस आलोकविनाशितस्यालोकापगमे झटिति नोत्पत्तिः कार्य्यद्रव्याणां द्व्यणुकादिक्रमेणैवारम्भादिति तन्न विवर्त्तवादिनां क्रमानपेक्षत्वात् कारणं तु मूलाविद्यैव। यथापि तमो न रूपवद् द्रव्यं स्पर्शशून्यत्वादाकाशवदिति चेत् न वायुर्न स्पर्शवान् रूपशून्यत्वादाकाशवदित्याभाससमानयोगक्षेमत्वात् प्रत्यक्षविरोधस्य तुल्यत्वात्। अथालोकाभावे समारोपितं नीलं रूपं गोचरयतीति तमःप्रत्यक्षमन्यथा नतिवर्त्तते एवमपि हेतुरनैकान्तिकः रूपवद्द्रव्यस्यैव धूमस्य चक्षुःप्रदेशादन्यत्र स्पर्शशून्यत्वात्। तत्र विद्यमान एव धूमस्पर्शोऽनुद्भूत इति चेत् तर्हि तमःस्पर्शोऽपि अत्रैव सर्वत्रानुद्भूत इति हेत्वसिद्धिः स्यात्। न च अतः सर्वत्रानुद्भूतोऽसम्भावितः। आकरजे सुवर्णादौ सतएव स्वपरप्रकाशकभास्वररूपस्योष्णस्पर्शस्य च सर्वत्रानुद्भवदर्शनात्तद्वेव भावरूपतमोवादे न कोऽपि दोषः। नन्वभाववादेऽपि तथा उपचयाऽपचयाद्यवस्थानां प्रतियोग्यालोकोपाधिकत्वात् नीलरूपस्य चारोपितत्वादिति चेत् नैव दुर्निरूपत्वात् तथाहि किमालोकमात्राभावस्तम उत त्रैकालिकाऽभावः सर्वालोकाभावो वा प्रथमद्वितीयपक्षयोः प्रागभाव इतरेतराभावः प्रध्वंसाभावो वा तम इति दुर्मेधं सवितृकिरणसन्तते देशे प्रदीपजन्मनः प्राग् जाते वा प्रदीपे दीपनाशे वा। तमोबुद्ध्यभावात्। तृतीये सर्वालोकसन्निधानमन्तरेण न निवर्त्तते। रूपदर्शनाभावस्तम इत्यप्ययुक्तं बहुलान्धकारसहितापवरकमध्यस्थितस्य बहीरूपदर्शनात्तमोदर्शनयोर्युगपदेव भावात्। तथाचाभावस्तम इति दृष्टान्ते नास्त्युक्तोपाधि"।

२२तमोवद्रावरके अज्ञाने अविद्यायां "सोऽहं देव परं ज्योतिः तमः पारे प्रतिष्ठितम्" कुमा०। "आदित्यवर्णं तमसः परस्तात्" श्रुतिः। "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्" "महाभूतादि वृत्तोजाः प्रादुरासीत् तमोनुद" मनुः।

सांख्योक्ते अविद्याया २३अष्टविधे भेदे च। "भेदस्तमसोऽष्टविधः" सां० का०। "तमसोऽविद्याख्याया अष्टविधो भेदः। अष्टासु विधाः अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अनात्मसु आत्मबुद्धिरविद्या तस्या अष्टविधविषयत्वादष्टविधत्वम्" सा० तत्त्वकौ०। २४राहौ पु० न०। तस्य भूछायारूपत्वात् तथात्वम्। राहुशब्दे दृश्यम्। "तमोऽस्त्वं चेत् सुधया मनुष्या" नीष० ता०। २५विशेषदर्शनविरोधिदोषे २६कार्य्याकार्य्याविवेके च न०। शब्दार्थचि०। समूहार्थकाण्डशब्दे परे कस्का० विसर्गस्य सः। तमस्काण्ड "अपातमस्काण्ड मलीमस नभ" माघः।

"अवसमन्धेभ्यस्तमसः" पा० अच् समा०। अवतमसं सन्तमसम् अन्धतमसम्। तृतीयान्तेनानेन क्तान्तस्य समासे तृतीयाया अलुक्। तमसाकृत तमसाच्छन्न इत्यादि। तमसाकृतस्येदं अण्। तामसाकृत तमःसम्बन्धिनि त्रि० स्त्रियां ङीप्।

तमस पु० तम–असच्। १कूपे २अन्धकारे च सच्चिद्ग्रहारः ३अन्धकारे ४नगरे न० त्रिका०। ५नदीभेदे स्त्री "सप्राप्य तीरं तमसापगायागङ्गाम्बुसम्पर्कविशुद्धिभाजः"। "विगाहितं यातनमम्बु सुपत्रम्" भट्टिः। "यस्याः स्मरणात् नाशयति पापं सा तमसा" जयमङ्गलः। गङ्गाम्बुसम्पर्केत्युक्तेः सा गङ्गासङ्गता यमुना शाखा सन्निक-

ख्या। सेय वाल्मीकमुनेराश्रमनिकटस्था यथाह रामा॰ आदि॰ २ स॰ "जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः"। "स तु तीरं समासाद्य तमसाया मुनिस्तदा। शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम्। अकर्दममिदं तीर्थं भरद्वाज! निशामय। रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा। न्यस्यतां कलशस्तात! दीयतां वल्कलं मम। इदमेवावगाहिष्ये तमसातीर्थमुत्तमम्"। "दृष्ट्वा तमसा तत्र वारयन्तीव राघवम्। ततः सुमन्त्रोऽपि रथाद्विमुच्य श्रान्तान् हयान् सम्परिवर्त्य शीघ्रम्। पीतोदकांस्तोयपरिप्लुताङ्गानचारयद्वै तमसाविदूरे" रामा॰ अयो॰ ४५ अ॰। "ततस्तु तमसातीरं रम्यमाश्रित्य राघवः" ४६ अ॰।

**तमस्काण्ड** पु॰ ६त॰। काण्डा॰ विसर्गस्य सः। तमःसमूहे "अपानमस्काण्डमलीमसं नभ" माघः।

**तमस्तति** स्त्री ६त॰। अन्धकारसमूहे।

**तमस्वत्** त्रि॰ तमस्+अस्त्यर्थे मतुप् मस्य वः सान्तत्वात् मत्वर्थे न विसर्गः। तमोयुते स्त्रियां ङीप्। सा च १रात्रौ स्त्री निघण्टुः २हरिद्रायाञ्च।

**तमस्विन्** त्रि॰ तमोऽस्त्यस्य विनि सान्तत्वात् मत्वर्थे न विसर्गः। १तमोयुक्ते स्त्रियां ङीप्। सा च २रात्रौ ३हरिद्रायाञ्च अमरः। "बहुमानस्य याद्य तमस्विन्यामनिन्दिते"। भा॰ वि॰ २२ अ॰।

**तमाल** पु॰ तम–कालन्। स्वनामख्याते वृक्षभेदे अमरः। "तमालो मधुरो बल्यो वृष्यश्च शिशिरो गुरुः। कफपित्ततृषादाहश्रमभ्रान्तिहरश्च सः" राजनि॰। तत्पत्राकृतित्वात् २तिलके ३खड्गभेदे ४वरुणवृक्षे च मेदि॰। ५कृष्णखदिरे शब्दच॰ ६वंशत्वचि भरत"। ७पत्रके (तेजपात) राजनि॰। "यत्सासतमालशालसरलव्यालोलवल्लीलता" गङ्गास्तव "वनान्तानेकतमालतालम्" "नैनोपनीयेत तमालनीलम्" माघः। "एकाकिन्यपि यामि सत्वरमतः स्रोतस्तमालाकुलम्" सा॰ द॰। तमालदले तु पर्युषितत्वदोषो नास्ति यथोक्तं ब्रा॰ त॰ योगिनीतन्त्रे "बिल्वपत्रं च माघ्यञ्च तमालामलकीदलम्। कह्लारं तुलसी चैव पद्मकं मुनिपुष्पकम्। एतत् पर्युषितं न स्यात् यच्चान्यत् कलिकात्मकम्"। स्वार्थे क। तमालक तदर्थे वंशत्वचि च तमालवृक्षे पु॰ न॰ शब्दरत्ना॰।

**तमालपत्र** न॰ तमालस्य पत्रमिवाकारोऽस्त्यस्य अच्। १तिलके अमर २पत्रके (तेजपात) ३तमालवृक्षे च पु॰ मेदि॰। ६त॰ ४तमालवृक्षपत्रे न॰। "तमालपत्रास्तरणासु रन्तुम्" रघु।

**तमालिका** स्त्री तम–कालन् स्वार्थे क अत इत्त्वम्। १ताम्रवल्ल्यां २भूम्यामलक्यां च राजनि॰। (तमलुक) ३देशभेदे त्रिका॰।

**तमालिनी** स्त्री तमालवृक्षा बहव सन्त्यत्र पुष्करा॰ देशे इनि ङीप्। १तमोलिप्तदेशे (तमलुक्) हेम॰। तमालाकृतियुक्तपत्रत्वात् २भूम्यामलक्यां राजनि॰।

**तमाली** स्त्री तम–कालन् गौरा॰ ङीष्। १ताम्रवल्ल्यां (पान) २वरुणवृक्षे च राजनि।

**तमि(मी)** स्त्री॰ तम–इन् वा ङीप्। १रात्रौ अमरः। "स तमीं तमोभिरभिगम्य तताम्" माघः। २मोहे च तमिषीचिः।

**तमिषीचि** स्त्री तमि मोहं सिञ्चति सिच–इन् सप्तम्या अलुक् पृषो॰ दीर्घः। १अप्सरोभेदे। "या कान्दाविषी चयोऽप्सकामा मनोमुहः। ताभ्यो गन्धर्वपत्नीभ्यो ऽप्सरोभ्योऽकर नमः" अथ॰ २।२।५. २वश्यति त्रि॰ "निरमन्न् तमिषीचीरभेषुः" ऋ॰ ८।४५।११। "तमिषीचीः शमयत्यः" भा॰। छान्दसः अतः षत्।

**तमिस्र** न॰ तमोऽस्त्यत्र ज्योत्स्नेत्यादि॰ नि॰ तमिस्रा रात्रिराश्रयत्वेनास्त्यस्य अच् वा। १अन्धकारे २क्रोधे च मेदि॰। ३तमःप्रधानरात्रौ स्त्री अमर ४दर्शरात्रौ माधवस्मृतिः। ५अन्धकारततौ स्त्री मेदि॰। "सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा" रघुः। "अनभिप्रातमिस्राणां दुर्दिनेष्वभिसारिका" कुमा॰ "उज्झती शुचमिवाशु तमिस्रा" किरा॰।

**तमिस्रपक्ष** पु॰ तमिस्राऽस्त्यस्य कर्म॰ तादृश पक्षः। कृष्णपक्षे "तमिस्रपक्षत्रुटिकूटभक्षितम्" नैष॰। "तमिस्रपक्षस्य तिथौ भगो सुत" इ॰ स॰ ८अ॰। "प्राक्षेपमाषाढतमिस्रपक्षे अपाकरेणोपगतं समीक्ष्य" २४अ॰। [छन्दोभेदे।

**तमुष्टुहीय** न॰तमु ष्टु हि इत्यादिकर्षमधिकृत्य प्रवृत्तः गण॰ छ।

**तमेरु** त्रि॰ ताम्यति तम–एरु। १ग्लानियुक्ते "अतमेरुर्यजो ऽतमेरुर्यजमानस्य प्रजा भूयात्" यजु॰ १।२३ "यज्ञो याताहेतुः पुरोडाश अतमेरुर्भूयात्। तस्य ग्लानो ताम्यतीति तमेरु औणादिकएरुप्रत्ययः न तमेरु अतमेरु। भक्षणाच्छादनेन ग्लानिरहितो भवतु। यजमानस्य प्रजा पुत्रपौत्रादिः अतमेरुग्लानिरहिता भूयात् यजमानस्य प्रजायाः कदापि दुःखं मास्त्वित्यर्थः" वेददी॰।

**तमोघ्न** पु० तमोऽन्धकारं मोहमज्ञानं वा हन्ति हन–टक् । १सूर्य्ये, २वह्नौ, ३चन्द्रे, ४बोधे, ५विष्णौ, ६शिवे च मेदि० । मनुष्यकर्त्तृके तु न टक् किन्तु अण् । तमोघात अमनुष्ये तमोनाशके त्रि० तत्र सूर्य्ये "आशुगामी तमोघ्नश्च हरिदश्वश्च कीर्त्त्यते" भा० व० ३ अ० । "यथा तमांस्यभ्युदितस्तमोघ्नः पूर्वां प्रतिज्ञां समवाप्य वीर" भा० द्रो० १४६ अ० । [कीटे शब्दरत्ना० ।

**तमोज्योतिस्** पु० तमसि अन्धकारे ज्योतिरस्य । खद्योते

**तमोनुद्** पु० तमोनुदति अपनयति नुद-क्विप् । १सूर्य्ये २चन्द्रे ३वह्नौ ४दीपे च शब्दरत्ना० ५अन्धकारनाशके त्रि० "एवमुक्तस्तदाऽश्विभ्यां तमोनुदमवच्छमी" भा०आ० १५६अ० ।

**तमोनुद** त्रि० तमोऽज्ञानमन्धकारं वा नुदति नुद–क । १अन्धकारनाशके २अज्ञाननाशके ३ईश्वरे पु० । "वायोरपि विकुर्वाणात् विरोचिष्णु तमोनुदम्" मनुः "भूतादि र्वृत्तौजाः प्रादुरासीत्तमोनुदः" मनु ।

**तमोऽपह** पु० तमोऽपहन्ति अप+हन–ड । १सूर्य्ये २चन्द्रे ३वह्नौ ४बोधे च मेदि० ५तमोनाशकमात्रे प्रदीपादौ त्रि० "प्रभवति हि तमोऽपहः सहस्रः" माघः । "पुत्रं तमोऽपहं लेभे नक्तं ज्योतिरिवौषधिः" रघु । ६मोहनाशके "ज्ञानमादित्य तमोऽपहारादितः" किरा० । गुरो रज्ञाननाशकत्वात् तथात्वम् "तत्प्रसादं धिया नमेत्" वेदान्तका० ।

**तमोभिद्** पु० तमो भिनत्ति भिद–क्विप् । १यावत्तमोभेदके खद्योते शब्दर० २तमोभेदकमात्रे त्रि० च । तमोभिदोऽप्यत्रार्थे त्रि० ।

**तमोमणि** पु० तमसि मणिरिव । १खद्योते त्रिका० । २गोमेदके मणौ राजनि० ।

**तमोमय** त्रि० तमआत्मकम् तमः प्रचुरं वा तमस्+मयट् । १अन्धकारात्मके २अज्ञानात्मके ३तमःप्रचुरे च । ४राहौ पु० "तमोमय सैंहिकेयाख्यम्" सू० सि० ५अ० । राहोश्च यथा तमोरूपत्वं तथा अगुशब्दे ४८१पृ० उक्तम् । "विसृजात्मनः कायं नाभिनन्दंस्तमोमयम्" भाग० ३। २०।२२। तमोमयमन्धकारप्रचुरं रात्रिरूपं कायमित्यर्थः ।

**तमोऽरि** पु० ६त० । १सूर्य्ये २चन्द्रे ३वह्नौ ४ज्ञाने च "तमोऽरिबिम्बप्रतिबिम्बधारी वराब्जकान्ते । पवनाशनाश" सुन्दरबन्धापूरणम् । तम आत्मपन्नतयोऽप्यत्र ।

**तमोलिप्ती** स्त्री तमसाऽलं लिप्यते स्म करणोपपदे लिप–क्त उप० स० ङीप् । देशभेदे । (तमलुक) शब्दरत्ना० ।

**तमोविकार** पु० ६त० । तमसो विकारे निद्रालस्यादौ तमःशब्दे दृश्यम् । तमसैव विकारो यत्र । २रोगे राजनि० । ३तमिस्रारात्रौ शब्दार्थचि० ।

**तमोवृध्** त्रि० तमसि शार्व्वरे, तमसा आवरकेणाज्ञानेन वा वर्द्धते वृध–क्विप् ७त० ३त० वा । १तमसि रात्रौ वर्द्धमाने प्रचुरसञ्चारिणि राक्षसादौ । "व्यर्पयत द्रुपदा तमोवृधः" ऋ० ७।१४०।१। २अज्ञानवृद्धे च ।

**तमोहन्** त्रि० तमोहन्ति हन–क्विप् । अज्ञाननाशके "ज्योतीरथ शुक्रवर्णं तमोहनम्" ऋ० १।१४०।१। तमोहन्तरि २सूर्य्ये ३चन्द्रे च "तमोघ्ना यदि पापेन वयेष्येन हि वीक्षित" ज्यो० त० ।

**तमोहर** त्रि० तमोहरति हृ–अच् ६त० । १अन्धकारनाशके २अज्ञाननाशके च ३सूर्य्ये ४चन्द्रे च पु०शब्दर० "निर्गुण वामभागे च सव्यभागेऽद्भुता निजा । मध्ये नाथ स्वयं ज्योतिस्तज्ज्योतिर्मे तमोहरम्" शब्दार्थचि० धृतवाक्यम्

**तम्पा(म्बा)** तम्ब–अच् पृषो० वा । सौरभेय्याम् हेमच० ।

**तम्ब** गतौ भ्वा० पर० सक० सेट् । तम्बति अतम्बीत् । ततम्ब

**तम्बिका** स्त्री तम्ब–ण्वुल् टाप् कापि अत इत्वम् । सौरभेय्यां हेमच० ।

**तम्बीर** पु० तम्ब–बा० ईरन् । "वशी राद्धान्तगोऽध्यक्षगामी दीप्तांशकैर्युतः । दत्तेऽन्यस्मै कार्य्यं करतम्बीरोऽन्यकार्य्ययोः" नी० ता० उक्ते योगभेदे ।

**तम्र** त्रि० ताम्यत्यनेन तम–करणे र । ग्लानिसाधने "प्रतम्रा अवपत्तमांसि" ऋ० १०।७३।५ । [तेवे ।

**तय** गतौ रक्षणे च भ्वा० आ० सक० सेट् । तयते अतयिष्ट-

**तर** पु० तॄ–भावे अप् । १तरणे "पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे" "ब्राह्मणाश्लिङ्गिनश्चैव न दाप्यास्तरिणस्तरे" मनुः कर्त्तरि अच् । २अग्नौ पु० मेदि० । तरत्यनेन करणे अप् । ३आतरे पणादौ । "दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत्" मनु ।

**तरक्षु** पु० तरं गतिं मार्गं वा क्षिणोति मितद्रु० डु । मृगादने क्षुद्रव्याघ्रे अमर । "श्वा कृष्णकर्णो गर्द्दभस्तरक्षुस्ते रक्षसामिन्द्राय" यजु० २४।४० । अश्वमेधे राक्षसेन्द्रदेवताकपशुकथनम् । "तरक्षून्कपानरान्" हरिव० १६५ अ० ।

**तरङ्ग** पु० तॄ–अङ्गच् । (ढेउ) ऊर्म्मौ वायुना जलस्य सञ्चालनेन तिर्य्यगूर्द्धादिगमने अमर । "गम्भीरवेत्येव तरङ्गलेखा" रघु २वस्त्रे ३हयादीनां प्लुतगतौ उणादि० । तत्र तारका० इतच् तरङ्गित जाततरङ्गे त्रि० । "वान

रमतिम घोर वाङ्मोर्मितरङ्गितम्" भा० भी० ८८अ० । पुष्करा० देशे इनि ङीप् तरङ्गिन् तरङ्गयुक्तदेशे त्रि० । नद्यां स्त्री ङीप् ।

**तरङ्गिणी** स्त्री तरङ्ग+पुष्करा० नदी रूपदेशे इनि ङीप् । नद्याम् अमरः । "तरङ्गिणीवेणिरिवायता भुवः" माघः । "गजवाजिमनुष्याणां शोणितानां तरङ्गिणी" भा० भी० ६४ अ० ।

**तरङ्गित** त्रि० तरङ्गः सञ्जातोऽस्य तार० इतच् । १जाततरङ्गे २चञ्चले च । तरङ्गशब्दे उदा० दृश्यम् ।

**तरण** पु० तॄ-करणे कर्मणि भावे वा ल्युट् । १प्लवे (भेला) २स्वर्गे । ३प्लवने ४देशान्तरगमने ५पारगमने च न० शब्दार्थचि० "भवति भवार्णवतरणे नौका" मोहमुद्गरः । "अप्रनदीतरणावमर्षणामेध्यदर्शनप्रयाणेषु त्व पलाशकाष्ठद्रव्यकार्यत्वात्" कात्या० श्रौ० १।७।१२

**तरणि** पु० तॄ-अनि । १सूर्ये, २भेलके, ३अर्कवृक्षे, च अमरः ४किरणे हेमच० ५ताम्रे च । ७नौकायां, ८घृतकुमार्याम् स्त्री मेदि० । वा ङीप् नौकायां ९तारके १०शीघ्रगन्तरि त्रि० । "येना सूर्य तरणीन् यो वहन्ति" ऋ० ७।६७।८। "तरणींस्तारकान् शीघ्रगन्तॄन् वा" भा० ११यम्नुत्तीर्य्य वर्त्तमाने "इतस्व तरणिर्नौवा" ऋ० १।४८।२ यम नुत्तीर्य्य वर्त्तते इति तरणिः" भा० "सोऽयं व्याकरणार्णवैकतरणि" बोपदेव ।

**तरणिपोत** पु० तरणे पोत इव । काष्ठाम्बुवाहिन्यां जटा० ।

**तरणिरत्न** न० तरणिप्रियं रत्नम् । सूर्यप्रिये १माणिक्ये राजनि० तरणिमणिप्रभृतयोऽप्यत्र पद्मरागशब्दे २७६१पृ०दृश्यम्

**तरणी** स्त्री तरत्यनया तॄ-करणे ल्युट् ङीप् । १नौकायां शब्दरत्ना० २पद्मचारिणीलतायां शब्दच० । ३घृतकुमार्यां राजनि० ।

**तरण्ड** पु०न० । तॄ अण्डच् । १वडिशीसूत्रबन्धनकाष्ठे,(फिप) २प्लवे पु० । ३नौकायां स्त्री मेदि० स्त्रीत्वपक्षे गौ० ङीष् । ४कुम्भतुम्बीरम्भादिकृतप्लवे शब्दरत्ना० ५देशभेदे पु० शब्दर० ।

**तरण्डक** न० तरण्ड+संज्ञायां कन् । तीर्थभेदे "ततो गच्छेत राजेन्द्र ! द्वारपाल तरण्डकम् । तत्र तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः" भा० व० ८३ अ० । २वडिशसूत्र मध्यबद्धलघुकाष्ठभेदे (फाता) न० । "सतारवागरावर्त्त पतन्मन्दतरण्डकम्" काशीख० ११ अ० । ३नौकायां स्त्री गौरा० ङीष् शब्दरत्ना० ।

**तरण्डपादा** स्त्री तरण्ड एव पादं इव तरणहेतुत्वात् यस्याः । नौकाभेदे शब्दरत्ना० ।

**तरण्य** तरण गतौ कण्ड्वा० यक् भ्वा० प० सक० सेट् । तरण्यति अतरण्यीत् अतरण्यीत् ।

**तरत्सम** त्रि० तरत्समेत्यादि ऋचः सन्त्यत्र अच् । पावमान-सूक्तान्तर्गते सूक्तभेदे तरत्समन्दीयशब्दे दृश्यम् । "शुद्ध-वत्योऽथ कुष्माण्ड्यः पावमान्यस्तरत्समाः" हेमाद्रि श्राद्धकल्पधृतवाक्यम् ।

**तरत्समन्दीय** न० पावमानसूक्तान्तर्गते सूक्तभेदे । "जप स्तरत्समन्दीय पूयते मानवस्त्र्यहात्" मनुः । "तरत्सम-न्दीदीवतीत्येताः चतस्र ऋचोजपन्" कुल्लू० । ताश्च ऋचः ऋ० ९।५८।१ प्रभृतयश्चतस्रः ।

**तरतम** त्रि० तरेति तमेति प्रत्ययार्थौ बोध्यतयाऽस्त्यत्र अच् । न्यूनाधिकभावेन वर्त्तमाने तरतमौ हि प्रत्ययौ न्यूनाधिकभावबोधकाविति तदर्थकत्वादस्य तथात्वम् । "तरत-मयोगयुक्तांश्च भावानतिक्रम्यानतिरिच्यानप्यानति मीतानित्येवमादीन् विवर्जयेत्" सुश्रु० । तस्य भावः ष्यञ् । तारतम्य न्यूनाधिकभावे न० "तारतम्येन वर्त्त-मानः" शा० भा० ।

**तरद** स्त्री तॄ-करणे अदि । १प्लवे भेलके । कर्त्तरि अदि । २कारण्डवखगे च मेदि० ।

**तरदी** स्त्री तरेण तरणेन दीयते खण्ड्यते दो-खण्डने घञर्थे क गौरा० ङीष् । कण्टकयुक्तवृक्षभेदे । राजनि० । "तरदी मधुरा तिक्ता गुर्वी वल्या कफापहा" राजनि० । टाप् तरदाप्यत्र तरटीति पाठान्तरम् ।

**तरहटी** स्त्री पक्वान्नभेदे "घृतेन मर्दिता दध्ना फेनिकया मेव-येत्ततः । विधाय वटिकास्तस्या घृते मन्दाग्निना पचेत् । प्रक्षिप्ताः खण्डपाकेन कर्पूरेण विमिश्रयेत् । तत एताः समरिचास्तरहट्यस्तु ताः स्मृता । बल्या पुष्टिकरी हृद्या रुच्या पित्तानिलापहा । सुस्निग्धा कफदा ऽत्यर्थं किञ्चित् सन्धानलक्षिता" शब्दार्थचि० वाक्यम् ।

**तरन्त** पु० तॄ-झच् । १समुद्रे, २प्लवे, ३भेके, ४राक्षसे च ५नौकायां स्त्री गौरा० ङीष् । उणादिको० ।

**तरन्तुक** न० कुरुक्षेत्रस्थानभेदे । "तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानां च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते" भा० व० ८३ अ० ।

**तरपण्य** न० तरस्य नद्यादिपारयानस्य पण्यं शुल्कम् । नद्यादौ पारयानार्थं देये शुल्के आतरे (भाड़ा) अमरः ।

**तरबालिका** स्त्री करपालिका+पृषो० । खड्गभेदे हेमच० ।

**तरम्बुज** न० मध्यजलके फलभेदे कालिकाखण्डे २९७ पृ० तद्युत्पादि दृश्यम् ।
"ज्यैष्ठे मासि महेशानि ! पौर्णमास्यां निशार्द्धके । तृष्णातुरा महाकाली भ्रमन्ती पितृकानने । तज्ज्ञात्वा ब्राह्मणा तस्यै फलं दत्तं तरम्बुजम् । तत्फलभक्षणात् तुष्टा वरदापि हरप्रिया । यो मे दद्यात् फलं रम्यं स चिरायुश्चतुर्युगम्" । उत्तरकामाख्यातन्त्रम् ।

**तरल** पु० तृ—अलच् । १हारमध्यस्थे मणौ, अमर० २हारे, ३तले मेदि० । ४चपले, ५कातके, ६विस्तीर्णे, ७भास्वरे, ८मध्यशून्ये-द्रव्ये, ९द्रवीभूते पदार्थे च त्रि० हेमच० । १२हीरके रत्ने १०यवाग्वाम्, ११सुरायाञ्च स्त्री धरणिः तत्र भास्वरे "ताराविताननतरला इव यामवत्यः" किरा० "व्याजानुसार्य्यमाणतरलताराक्षगा" कादं० । "उत्कण्ठितासि । तरले" सा० द० । "तारापतिस्तरलविद्युदिवाभ्रवृन्दम्" रघुः । "वैरायितारस्तरला:" माघ० । हारमध्यमणौ "प्रवालमुक्तास्तरलाश्च हाराः" भा० क० ९४ अ० १४ श्लो० । "हारांस्तरलविद्धांश्च रुद्यं भासा विभूषिता" हरिवं० १५२ अ० । भृशा० अभूततद्भावे क्यङ् । तरलायते "तथापि तरलायते चेतः" उद्भटः ।

**तरललोचना** स्त्री तरलं चञ्चलं लोचनं यस्याः । चञ्चलनयनायां स्त्रियां हेमच० २चञ्चलनेत्रयुक्तमात्रे त्रि० कर्म० । ३चञ्चले नेत्रे न० ।

**तरलित** त्रि० तरलं इवाचरति तरलं करोति तरल+क्विप्-णिच् वा क्त । १आन्दोलिते, २कम्पिते, ३धूते, ४लुलिते च हेम० ।

**तरवारि** पु० तरं शत्रूणां गतिं वारयति ह—णिच्—इन् । खड्गभेदे । (तरवार) इति भाषा । हेमच० असिशब्दे ५५१९० तल्लक्षणादिकमुक्तं युक्तिकल्पतरौ च विशेष उक्तो यथा "अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका । ध्वनिर्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम् । घनिष्टे दृश्यते यादृक् चिह्नं घटिते तथा । यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते । नीलकृष्णादिकं खड्गे रूपमित्यभिधीयते । तेनैव यत् प्रतीतं स्यात् तज्जातिरिति गद्यते । अङ्गातिरिक्तं यज्जातिस्तन्माहात्म्योपचायकम् । तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदाः । अङ्गातिरिक्तं खड्गादि यच्छुभत्वोपचायकम् । तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम् । यः खड्गे जायते शब्दो दण्डदन्तादिना हते । स ध्वनिस्तुलना मानं ज्ञानमष्टविधन्त्विदम् । पञ्चाद्या निपुणैः खड्गे समाव्यन्तेऽपि कृत्रिमाः । अन्त्यावकृत्रिमौ ज्ञेयौ तावेव सहजाविति । शतमङ्गानि चत्वारि रूपाणि जातयस्तथा । त्रिपञ्चनेत्राणि जानीयादरिष्टानां तथैव च । भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः । मानन्तु द्विविधं प्रोक्तमित्येषा संग्रहो मतः" । खड्गस्य शताङ्गनामानि लौहार्णवे "रूप्यस्वर्णगजोरुबुकदमनस्यूताङ्कक्ष्याश्वपार्श्वनाभोत्थगदातिधानवकचापबन्धिस्थिरातैत्तिरा । नालाजीवकपट्पदोर्द्ध्वमरिचध्यालाम्बवहांसनखौदुम्बकमल्लिकातुघयवश्रीहिखुमाश्वपा । सिंहीतण्डुलगोसिराग्निवनखपाहाश्विकोशोपलद्रोणीकाककमालपलतृवरीविम्बीफलीसर्षपा । नीलीरक्तकचारसोमसुमनाजिह्वौशमीरोहितप्रोष्ठीमारिमभार्गवीक्षुरतोडन्मेघाद्रिगुञ्जाधरा । दूर्व्वाविल्वमसूरटुण्टुकयष्ठीमार्ज्जारिकाकेतकीमूर्व्वावजकषायचम्पकवलाम्यपोषवप्रासनाः । ज्येष्ठीजालपीपिलिकानलरजःशुम्भावरोमञ्जुहीकर्कन्धूबकुलारनालमहिषस्फुर्जुयक्ता इति । प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदाः क्रमात्" । तस्य चत्वारि रूपाणि । "नीलः कृष्णश्च पिङ्गश्च धूम्रश्चेति चतुर्विधः । वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः" । चतस्रो जातयः । "ब्राह्मणक्षत्रियौ वैश्यः शूद्रश्चेति चतुर्विधः । जातिभेदे विनिर्दिष्टः खड्गानां मुनिपुङ्गवैः" । त्रिपञ्चनेत्राणि । "चक्रं पद्मं गदा शङ्खो डमरुस्तुरङ्कुशः । छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्दवः । कुम्भः शूलञ्च शार्ङ्गः सिंहः सिंहासनं गजः । हंसो मयूरो जिह्वा च दर्पणः खड्ग एव च । तूलिका चामरं शैलः पुष्पमाला भुजङ्गमः । त्रिपञ्चैतानि नेत्राणि खड्गानां कथितानि वै" । त्रिपञ्चदरिष्टानि "छिद्रं काकपदं रेखा भिन्नं भेकश्च मूषिकः । बिडालं शर्करा नीली मशको भग्नसूचिके । त्रिबिन्दुः कालिका दारी कपोतः काक एव च । खर्परः शकली क्रोडी शुष्कपत्रकजालिके । करालकङ्कखर्जूरवृक्षपुच्छवनितकम् । वाकूच महिषाख्यञ्च मुनिना तत्त्ववेदिना । प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि" । द्विविधा भूमिः "दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत्" । अष्टधा ध्वनिः । "हंसकांस्याभ्रढक्कानां काकतन्त्रीखरास्यनाम् । ध्वनयोऽष्टविधाः प्रोक्ता नागार्जुन

सुनेर्मता"। द्विविध मानम्। "उत्तमाधमभेदेन मान तद्द्विविधं भवेत्। इति प्रोक्तानि लक्ष्माणि खड्गानां ज्ञानहेतवे। एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजितः" लक्षणाध्यायः। "तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत"। लौहप्रदीपे "कृष्णपत्रसमा भूमिरङ्गं श्वेतं प्रतीयते। अङ्गं तत्तु महामूल्यं कृष्णवज्रमुशन्ति तम्। एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशो बलम् १। स्वर्णरेखायुतो तन्वी यद्भूमौ निकषोपमा। स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम् २। गजशुण्डाकृतिर्भूमौ कृष्णायामङ्गसम्भव। गजवज्रमिति प्राहुरत्नसर्वं व तद्विदः। ज्वरादिव्याधिशमनं तस्य प्रक्षालनाम्भसा। अपि क्षीणोऽपि भूपालस्तद्वीर्य्यात् साधयेन्महीम् ३। एरण्डबीजप्रतिममङ्गं भूमिः सितेतरा। उर्वारुकमिदं नाम्ना मल्लदर्पक्षयङ्करं। एतस्य स्पर्शमात्रेण नरः सम्यग्विमुच्यते। गृहिणाख्यमिदं वज्रं केचिदाहुर्मनीषिणः ४। अङ्गं दमनपत्राभं खड्गे यस्मिन् प्रतीयते। विद्याद्दमनवज्रं तज्ज्ञेयं द्विविधं बुधैः। नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी। तस्मिन् पर्युषितं तोयं गन्धे दमनकोपमम्। तत्प्रभावान्महीपालः कृत्स्नां पृथ्वीं हि साधयेत्" ५। शार्ङ्गधरीये "एका स्थूला सिता रेखा भूमिर्नीला तदा यदि। स्थूलाङ्गमङ्गं वज्रं तद्विद्याल्लक्ष्मीयशःप्रदम्। एतद्धते भवेत्कोपः स्थूलाविरतरस्थिति। एतं महान्तमपरे वदन्ति खड्गकोविदाः ६। छटायां दृश्यते भूमौ अङ्गस्य प्रतिबिम्बितम्। छत्रवज्रं भवेत्तस्य द्विधा भूमिः सिताऽसिता ७। लौहप्रदीपे "निरङ्गं कृष्णपत्राभमीषन्मणिनिभञ्च यत्। दुर्लभं तन्महामूल्यं कान्तलौहं प्रचक्षते। कृष्णा भूमिर्भवेत् स्वच्छा पीता वज्राङ्गसङ्कुला। कृष्णवज्रमिति प्राहुस्तद्धते मोह उच्यते। कृष्णा भूमिः सुवर्णाभमीषत्काङ्कसङ्कुलम्। डाङ्कलीवज्रकं विद्यात् काष्ठसंग्रामयापरे ८। अरुणं छत्रमूर्द्ध्वं स्यादङ्गं भूमिः सितेतरा। अरुणाख्यमिदं वज्रं शत्रुदर्पनिकृन्तनम्। स्वर्णांशुसंस्पर्शमात्रेण पक्षिरूपा पतेत् शिखाम्। तस्य स्पर्शनमात्रेण परकोपः स्फुटेन्मिथि। दुर्लभं तन्मतल्यानां भाग्यैः कुत्रापि लभ्यते। तद्योजनसहस्रस्थारिं नाशयति ध्रुवम् ९। श्वेतासिता यदा रेखा आमूलादुपवर्द्धिता। श्वेताङ्गमिति तद्विद्यादायुर्लक्ष्मीबलप्रदम् १०। अम्भोजदलसङ्काशमङ्गं भूमिः सितेतरा। अम्भोजवज्रं तज्ज्ञेयं कथितं मुनिपुङ्गवैः ११। अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा। गदावज्रमिदं ब्रूयात् तद्धते शूलसम्भवः १२। अङ्गं कृष्णतिलाकारं भूमिश्चैव सिताऽसिता। तिलवज्रमिदं ज्ञेयं लक्ष्मीविजययशःप्रदम्। तद्धते तिलतैलाभा गन्धः प्रजायतेऽधिकम् १३। धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम्। अग्निवज्रमिदं ज्ञेयं यत्नूपा दाहकारकम्। अत्र शीतोदकं न्यस्तं तप्तं भवति चक्षणात्। माघे वह्निः भवेद्वस्तु तथा स्पर्शात् सङ्क्रमात्। तद्धते बलवान् दाहो दग्धवच्च व्रणो भवेत्। एतत् परमभाग्येन लभ्यते धरणीतले १४। भूमिः सिताऽसिता चापि अङ्गं स्यात् पिप्पलीसमम्। कृष्णवज्रमिदं ज्ञेयमन्तर्दाहस्तु तद्धते १५। कृष्णा भूमिर्यदीयाङ्गे दृश्यते पञ्चिसञ्चयः। पञ्चिवज्रमिदं ज्ञेयं वैरिपक्षविनाशनम्। तद्धते बलवान् दाहस्तृषा च ज्वर एव च १६। माषपर्णीदलाकारमङ्गं कृष्णासिपुत्रिका। स्थिरावज्रमिदं प्राहुस्तद्धते वेपथुर्भवेत् १७। यदा तित्तिरिपक्षाभमङ्गं भूमिः सितेतरा। एतत्तित्तिरिवज्रं स्यात् तद्धते बहुधैर्य्यकम् १८। सममाकाशमा यस्मिन् माला खड्गे प्रदृश्यते। मालाङ्गवज्रं तद्विद्यात्सद्योऽयं गन्धवद्भवेत्। अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात्। एव दाहपरीतानामतिपित्तहतात्मनाम्। भवेत् परमभैषज्यं भाग्येनैतद्धि लभ्यते १९। यदा जीवकसङ्काशमङ्गं भूमिः सिताऽसिता। एतज्जीवकवज्रं स्यात् तद्धते तत्क्षणाज्ज्वरः२०। भूमिः सिताऽसिता येन स्यात् भ-स्माभमिष्यते। तत्र चेन्मधु विन्यस्तं घोषामाप्नोति केवलम्। एतद्भ्रमरवज्रं स्यात्तद्धते स्याद्विसूचिका २१। अङ्गं कपिलाभासमङ्गं यस्मिन् प्रतीयते। अङ्गवज्रमिदं प्राहुर्विषवेगनिसूदनम्"। लौहप्रदीपे "अङ्गं कपिलाभासमङ्गं यस्मिन् प्रतीयते। वाक्कावाच्च तद्विद्यात् स्वर्गे तस्याऽहिनाशनम् २२। अङ्गं मरीचसङ्काशं भवेद्भूमिः सितेतरा। मरिचवज्रमिदं वज्रं तद्धते कटुरक्तता। तत्प्रक्षालनतोयेन नश्यन्ति पीनसादयः २३। यदा सर्पफणाकारमङ्गं भूमिस्तु निर्मला। भुजङ्गवज्रं तद्विद्यात्तद्धते विषरुजा।

अपि कुण्डलिकां याति एतदत्यन्तशोभनम्। एतत्-प्रसादात् क्षितिपः कृत्स्नां साधयते महीम् ५३। नीलोत्पलसमा भूमिरङ्ग नीलोत्पलाङ्कवत्। नीलोत्पलमिदं दृष्टं माघे वह्निशिखां वमेत्। एष खड्गवरो लक्ष्मणामरिष्टभयनाशनः ५४। रक्तासितो महारेखा भूमिश्चैव सिताऽसिता। रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम्। माघेन यस्तु रक्तां वा नीलां वा वमते शिखाम्। रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति। अतोऽस्य रक्तश्वयथुस्तृषा दाहश्च जायते ५५। अङ्गं वत्सादनसम भूमिश्चैव सिताऽसिता। वत्सावज्रमिदं ज्ञेय तद्वत्ताद्विपनाशनम्। एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ५६। रत्नोनाड्कसम अङ्ग भूमिस्तस्य दलोपमा। रत्नोनवज्रं जानीयात् माघे वह्नि वमत्यपि। अस्य धावनतोयेन आमवातविनाशनम् ५७। निरङ्गा निर्मला भूमिर्धारा तीक्ष्णा खरः स्वर। छमना वज्रमेतत् स्याद्भुवि नात्यन्तदुर्लभम् ५८। जिह्विनी सङ्घी दीर्घा यस्या रेखा सुविस्तरा। जिह्वीवज्रमिदं नाम सर्वकामार्थसाधनम् ५९। अङ्गं शमीपत्रसमं भूमिर्धूम्रा सिताऽसिता। शमीवज्रमिदं ज्ञेय शमैश्वर सुदायकम्। माघेषु वमते वह्नि सहते वह्निपीडनम् ६०। रोहितमत्स्यसदृशमङ्गं भूमिः सिताऽसिता नापि। धूम्रा गम्भीरस्वरयुक्ता धारा तीक्ष्णाऽसिता भवेद्रेखा। रोहिताख्यमिदं वज्रं सर्वारिष्टविनाशनम्। वह्निसंस्पर्शमात्रेण किङ्किणिरिवायते। इत्ययं दुर्लभः खड्गो देवानामपि कथ्यते ६१। शफरीवल्क-लाकारमङ्ग भूमिः सिताऽसिता। मोठीवज्रमिदं प्रोक्तं व्यस्तं तरति वारिधिं। एष खड्गोत्तमो राज्ञां विपक्षक्षयनायकः। कदाचिल्लभ्यते भाग्यैर्लभ्यते तेन वै मही ६२। अङ्गं मारिषपत्राभं भूमिः स्याद्विषम-च्छविः। इत्ययं मारिषाङ्गः स्यात् पृथिव्यां नाति-दुर्लभ ६३। भङ्गराजस्य पुष्पाभमङ्गं भूमिर्दलप्रभा। आघातं सहते नैव एष खड्गाधमो मतः ६४। धारा तीक्ष्णा क्षुराकारा भूमिरङ्गविवर्जिता। आघात सहते घोर माघे वह्निं वमत्यपि। क्षुराङ्गमिति जानीयात् पृथिव्या नातिदुर्लभम् ६५। निर्मला सरला भूमिर्भग्नैव कदा कदा। मन्दा तीव्रा भवेद्धारा तडिद्वज्रस्य लक्षणम् ६६। नीलाञ्जनसमा भूमिरङ्ग जलतरङ्ग-वत्। मेघाङ्गमिति जानीयान्माघे नील वमत्यपि।

एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः। अङ्गु प्रतापं प्रमयेद्रिपुबिम्बं यथा घनः ६७। मन्दा धारा अल्प गाढा भूमिरङ्गविवर्जिता। पर्वताङ्गमिदं, नाम सर्वत्रैवोपलभ्यते ६८। अङ्गं गुञ्जाफलसमं भूमि-र्भिन्नदलोपमा। गुञ्जाद्वज्रमिदं पूत तत्र भवति घर्षणे। माघे सिन्दूरसदृशं रजोवमति भासकृत्। एष खड्गवरो राज्ञा भाग्यादेवोपलभ्यते। अस्य प्रभावात्सर्वाणि यत्र साधयते नृप ६९। अङ्गं तत्र शराकार भूमिश्चैव सिताऽसिता। धारा तीक्ष्णा च भ-वति माघे वह्निसमा शिखाः। शरवज्रमिदं ज्ञेयं राज्ञा वाञ्छितसिद्धये ७०। दूर्वादलनिभा भूमिर्धारा तीक्ष्णा स्वरः खरः। माघेन वमते वह्नि दूर्वावज्रं सुदुर्लभम् ७१। अङ्गं बिल्वदलाकार भूमिश्चैव सिता-ऽसिता। बिल्ववज्रमिदं माघे नीलपीते वमेच्छिखे। एष खड्गवर प्रोक्तः शत्रूणां क्षयनाशनः ७२। मङ्करदलसङ्काशा भूमिरङ्ग मङ्करवत्। मङ्कराङ्गमिदं माघे रजो वमति चारुकम् ७३। यवगुच्छनिभा रेखा दीर्घा भूमिः सितेतरा। यवाङ्गमिति जानी-यात् खड्गं परमदुर्लभम् ७४। घटीदलसमा भूमि रङ्गं तत्कुसुमोपमम्। घटीवज्रमिदं माघो लभ्यते शुभ्यत्तरम् ७५। मार्जाररोमसदृशमङ्गं भूमि सिते-तरा। मार्जाराङ्गमिदं नाम्ना रोगशोकभयापहम्। एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मन ७६। केतकीपत्रसदृशमङ्गं यस्मिन् प्रतीयते। विद्यात् केतक-वज्रं तत् नाराचसमसप्रभम्" ७७। लौहप्रदीपे "अङ्गं कृशानुनिभ भूमिर्नीलदलच्छविः। माघेन वमते शुक्लां शिखां लौहे भवेत्ततः। लौहाङ्गमिदमुत्कृष्टं यशःकीर्तिबलावहम् ७८। चिकु तीक्ष्ण स्वर नाद माघे वह्नेर्भवेद्वचनम्। छिन्नस्कन्धविधं लौह वज्राङ्ग-मिति तद्वदेत् ७९। वलाकपुच्छसदृशमङ्ग भूमिः सिताऽसिता। वलाकवज्रं जानीयात् तद्यते माघ दृश्यते ८०। अङ्गं चम्पकपुष्पाभ भूमिः कृष्णा तथा सिता। शिखां माघे वमेच्छीत तिक्त तस्य जल भवेत्। इदं चम्पकवज्रं स्यात् सर्वत्र विजयप्रदम् ८१। अङ्गं वत्सादनसम भूमिः शुक्ला सितेतरा। वत्सावज्रमिदं ज्ञेय नानाभाव भङ्गभेद्धुतम्। इत्ययं वातरोगाणां नाशने परमौषधम् ८२। अङ्गं घटारोहसम भूमिर्वटदल-च्छवि। घटवज्रमिदं ज्ञेयं वर खड्गाधम शुभे।

एतस्य स्पर्शमात्रेण नरोमुच्येत सम्पदा ८३ । यशमीशी समा भूमि खरधारा सिताकृतिः । शम्याङ्गमिति जानीयाद्वसृद्धिकरं परम् ८४ । भूमि शालदलाकारा अङ्गं लघु सितासितम् । शालाङ्ग एष खड्ग स्यात् पूज्य सर्वार्थदायक । अथ शाणे वमेद्वह्निं धारा आप्यथ वा भवेत् ८५ । भूमि सिताऽसिता वापि अङ्गं ज्येष्ठीसम लघु । ज्येष्ठीवज्जमिदं निन्द्य न स्पृश्य वा हितैच्छुभिः ८६ । पुराणजालसदृशमङ्ग भूमि सिताऽसिता । जालवज्जमिदं पूज्यं शत्रुसम्पत्तिनाशनम् । यदि शाणे वमेन्नीला शिखा वह्नि यमेन्न वा । तदैव दुर्लभः खड्गो ह्यन्यथा भयहेतुक ८७ । अङ्ग पिपीलिकाकारं भूमिर्धूम्रा तथा सिता । पिपीलिकाङ्ग इत्येव तत्प्रोक्तं कण्डुमन्मथ । स्वयं यदि भवेद्रुक्तः शाणे पूज्यतमस्तदा ८८ । नलपत्रसमा भूमिरङ्गन्तत्कुसुमोपमम् । नलाङ्गमिति जानीयात्सर्व सर्वार्थसाधक. ८९ । निरङ्गा निर्मला भूमिर्दृष्ट वमेद्भूनं । दृढा धारा श्वयं स्थूला आघात सहते न च । रजोवज्जमिदं निन्द्यं शत्रुणा विजयावहम् ९० । कुष्माण्डबीजसदृशमङ्ग भूमि सिताऽसिता । कुष्माण्डवज्जानीयात्तत्प्रोक्तं वेगभिमहः ९१ । अङ्ग स्वरोमसदृश भूमिर्धूम्रा सितासिता । रोमाङ्गमिति जानीयात्तत्प्रोक्तं पिढकोद्गम ९२ । भूमिः स्नुहीदलाकारा अङ्ग तत्कण्टकोपमम् । धारा तीक्ष्णाग्रस्तीक्ष्णो लघु मान खरा मृगा । स्नुह्यङ्ग खड्ग इत्येव तत्प्रोक्तं दाहकृद्भ्रम । सुखाक्षिकर्णनासानां दाह पाकश्च जायते । अथ यदि च सर्पाणां फणाम्युपरि विध्यते । फणा विदारमाप्नोति सर्पोलोटयते शिर । अस्य धावनतोयेन कुष्ठरोगविनाशनम् ९३ । कर्कन्धूदलपृष्ठाभा भूमिरङ्गन्तु तत्समम् । कर्कन्धूवज्जानीयात् तत्प्रोक्तं दाहनाशनम् । एष खड्गाधमस्त्याज्यो जेतव्या यदि विद्विष ९४ । अङ्ग बकुलपुष्पाभ भूमिस्तत्फलसन्निभा । बकुलाङ्गमिदं पुण्यं शाणे सुरभिगन्धवत् । तन्नास्ति जगतीमध्ये यदनेन न साध्यते९५ । अङ्ग सम्मिश्रित यस्मिन्न किञ्चिद्व्यक्तमीक्ष्यते । सर्वथा दर्शन वापि तीक्ष्णा धारा खरं स्वर । एष कांस्यवज्ज स्याद्दुर्यत्नादेवोपलभ्यते । नैनं प्राप्यापि मर्हन्ति श्रेयांसिमाद्योपि च ९६ । भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढापि च । आघात सहते घोर रक्त स्पर्शेन या विमोचेत् । शाणेन वह्निं वमति भ्रुव शाम्यतिषर्षणात् या महिषाङ्गं स वै खड्ग पृथिव्यां नातिदुर्लभ ९७ । अत्यन्तनिर्मला भूमि शरीर प्रतिबिम्बितम् । धारा तीक्ष्णा खरस्तीक्ष्ण स्वच्छाङ्गं तद्विनिर्दिशेत् ९८ । तस्मिन् यदा भवेद्रेखा कृष्णो कृष्णात्मक तदा ९९ । अस्मिन्नपि भवेद्रक्ता रेखा रक्ताभिधन्तु तत् १०० । एतच्छतकमुद्दिष्ट खड्गाना प्रवर बुधै । प्रायशो लभ्यते लोके यदि सर्वगुणावहम् । इतीद निखिलं प्रोक्त मज्ञाणा लक्षण मया । प्रयत्नैर्लिखित व्यक्तं सर्वेषा हितकाम्यया । इत परन्तु लोहाना लक्षणं यत्र लभ्यते । तस्य दासो भवास्येव प्रतिज्ञेति कृता मया । द्विविद्धमिश्रमालोक्य मिश्राङ्गमिति निर्दिशेत् । सर्वेषा मङ्गमालोक्य सर्वाङ्गमिति निर्दिशेत्" । अङ्गाध्याय । खड्गस्य रूपाणि यथा । "नीलोत्पलायकुसुमच्छविमण्डलाभा या चेन्द्रनीलमणिकाचमणिप्रभा च । भूमिश्च या मरकतप्रतिमावभासा खड्गस्य नीलमिति रूपमिदं वदन्ति । तत्र चेच्छिन्दितान्यङ्गान्यरिष्टानि बहून्यपि । दृश्यन्ते बहुदोषाश्च तथापि गुणवत्तरम् १ । या कालकाम्बुदमसीरसकालसर्पगाढान्धकारकचभारसमा विभाति । भूमिश्च या भ्रमरवन्धुसमावभासा खड्गस्य कृष्णमिति रूपमिदं वदन्ति । अत्र नेत्राणि सम्पत्त्यै अरिष्टान्यशुभाय च । साधारणमिदं रूप प्राह नागार्जुनो मुनि २ । या माष्टवर्णनवभेकसमानवर्णा गोमेदरत्नसदृशी च तु यस्य भूमि । खड्गस्य पिङ्गमिति रूपमिदं वदन्ति भर्त्तुर्यशोबलधनक्षयकारणाय ३ । या मन्दधूमसदृशी च शिरीषपुष्पतुल्या विभाति मलिनापि च खड्गभूमि । नागार्जुनो वदति धूम्रमिदं हि रूप भर्त्तुर्यशोबलधनायविमर्दनाय ४ । द्विरूप मिश्रित कृत्वा सङ्करं प्रवदेद्बुध । त्रिभीरूपैः समेतन्तु खड्ग त्रिपुरसंज्ञितम् । रूपैश्चतुर्भिं सयुक्तं चतुरं खड्गसत्तमम्" । रूपाध्याय. "जातिश्चतुर्विधा प्रोक्ता खड्गानां या पुरा मया । सम्प्रत्यपि प्रयत्नेन तासा लक्षणमुच्यते । शुद्धाङ्ग शुक्लवर्णश्च सुनेत्र सुस्वरश्च य । मृदुस्पर्श सुगन्धश्च तीक्ष्णधारो महागुण । खड्गं ब्राह्मणजाति तं प्राह नागार्जुनो मुनि । अस्य क्षते भवेच्छोथो घोर सर्वाङ्गगोचर । मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते । अस्य त्रिफलाकल्कमर्द रात्रिन्दिवोपि-

तम् । मलिनस्य न सम्बन्धो निर्मलं कुरुते परम् ।
तरुणादित्यकिरणसवर्णेव त्वचि स्थित । दृष्टेन् सर्वं
न तु कर पुरुषस्य हि धारिणः । गायत्र्युच्चारमात्रेण
खरतां व्रजति स्फुटम् । एष खड्गवर सर्वं
मरिष्टं नाशयेद्ध्रुवम् । अस्य प्रसादात् पुरुषस्त्रिलोक-
मपि साधयेत् । तस्मादेव मनुष्याणां सुलभो न हि
भूतले । दृश्यते प्रायशः स्वर्गे कुशद्वीपे हिमालये १ ।
धूम्रवर्णं महाधार तीक्ष्णधार खरस्वरम् । सर्वा-
घातसह सर्वनेत्रवर्णस्वराकरम् । खड्गं क्षत्रिय-
जाति त जानीयात् खड्गकोविदः । अस्य क्षते
भवेद्दाहस्तृषा दाहो ज्वरो भ्रमः । मृत्युश्च जायते प्राणे
यमेद्धस्त्रिकणान् बहून् । धक्कारे चाप्यधक्कारे
नैर्मल्य तस्य लक्ष्यते । प्राणेऽप्यप्राणे खरता भूरि
चात्यन्ततीक्ष्णता । रक्तस्पर्शनमात्रेण भिनेदन्तरमन्तरम् ।
अथ खड्गवरः पूज्यो मनुष्यैरपि लभ्यते २ । नील
वर्णः कृष्णवर्णः धक्कारे निर्मलो भवेत् । प्राणेन खरता
चास्य घाततश्च भिनत्ति । वैश्यजातिरयं खड्गः क्षते
रक्तमात्रदर्शनम् । नात्युत्कृष्टो नातिहीनः सर्वत्रै-
वोपलभ्यते ३ । सजलाम्भोदसङ्काशः स्थूलधारो मृदु-
स्वरः । धक्कारे चैव मलिन प्राणे चापि खरेतर ।
शूद्रजातिरयं खड्ग क्षते नाल्पाऽपि वेदना । दूरा-
देषोऽधमजात्यो यदीच्छेद्धितमात्मनः । प्रायशः
सर्वलोकेषु ह्ययमेवोपलभ्यते ४। द्वयोर्लक्षणमालोक्य जारज
खड्गमादिशेत् । त्रयाणां लक्षणेनैव त्रिजाति खड्ग
मादिशेत् । चतुर्णां लक्षणेनैव जातिसङ्कर उच्यते"।
अथ त्रिंशन्नेत्राणां लक्षणानि "चक्राकार यदा नेत्र
खड्गस्याङ्गे प्रदृश्यते । तं चक्रनेत्र जानीयात्
भर्त्तुः सर्वार्थसाधनम् । अनेनैकेन खड्गेन कृत्स्नां
साधयते महीम् १ । प्रफुल्लपद्मसङ्काश नेत्र पद्म
दलोपमम् । यदि वा दृश्यते खड्गे पद्मनेत्र
समादिशेत् । अथ खड्गवरो यत्र तत्रैव कमलालया २।
खड्गे स्थूला यदा रेखा गदाकारा प्रतीयते । गदानेत्र-
मिदं विद्धि सर्वशत्रुनिसूदनम् ३ । शङ्खाकार यदा
नेत्र खड्गमध्येऽभिदृश्यते । शङ्खनेत्रमिद सर्वदेवाना
मपि दुर्लभम् ४। डमरुप्रतिमं नेत्र यस्य भूमौ प्रतीयते ।
सर्व्वार्थसाधक खड्ग त विद्यात्विजयप्रदम् ५ । चतु-
रस्रं यन्नेत्र चतुर्नेत्रं वदन्ति तम् । तस्य स्पर्शनमात्रेण
शत्रोऽपि प्रलयायते । अथ निशीथे विजने खड्गो
झनझनायते ६ । यन्नेत्रमङ्कुशाकारं त विद्यादङ्कुशख-
चरम् । खड्गमङ्कुशनेत्राख्य भर्त्तुः सर्वार्थसाधकम् ।
अवश्योपापरक्षोग्र कृत्यापङ्क्तिनिवारणम् ७ । छत्रा-
कार यदा नेत्र छत्रनेत्र वदन्ति तम् । अस्य प्रभावात्
क्षीणोऽपि सार्वभौमो भवेन्नृप । दीनोऽपि च सुखी
भूयात् सुखी भूयान्महेश्वर । महेश्वरोऽपि सचिव
सचिवो मण्डलेश्वर । मण्डलेशश्चक्रवर्त्ती भवेदत्र न
संशय ८ । पताकाकृति नेत्रन्तु सर्वसम्पत्तिकारकम् ।
पताकानेत्रमाख्यातं संग्रामविजयप्रदम् ९ । नेत्र
वीणाकृति यदा वीणानेत्रवदन्ति तम् । निशीथे विजने
खड्गो वीणावत् स्वनमावहेत् । अस्य प्रभावात्
स्वर्गगा अपि वश्या भवन्ति हि १० । मत्स्याकृति
यदा नेत्र मत्स्यनेत्रमिमं विदुः । अस्य प्रभावात्
क्षितिप कृत्स्नां साधयते महीम् ११ । त्रिशूलसम
नेत्र त्रिशूलनेत्रमिम विदु । भर्त्तुः सर्वार्थसिद्ध्यै शत्रूणां
नाशनाय च । वामपार्श्वे तु यात्रायां धर्त्तव्योऽयं तथा
रणे १२। ध्वजाकार तु यन्नेत्रं ध्वजनेत्र वदन्ति तम् ।
अस्य प्रभावात् भूपालः समग्रां लभते श्रियम् १३ ।
यस्यार्द्धचन्द्रप्रतिम नेत्र स स्यार्द्धचन्द्रकः । तस्य धार-
णतो भूपोधरां कृत्स्नां लभते वै १४ । यन्नेत्र कल-
शाकार कलशाख्य तमादिशेत् । तस्य प्रभावात् सकलां
भूमि भूपो लभेत वै १५। शूलाकृति यदा नेत्रं शूलनेत्र
वदन्ति तम् । सर्वार्थसाधकः सर्वारिष्टाऽनिष्टप्रणा-
शनः १६ । शार्दूलनेत्र त विद्यात् शार्दूलाकृति-
नेत्रतः । शत्रुक्षोभविनाशाय संग्रामे विजयाय
च १७ । सिंहाकृति यदा नेत्र सिंहनेत्रमिमं विदुः ।
अस्य प्रभावात् क्षीणोऽपि कृत्स्नां साधयते महीम् १८ ।
तत् सिंहासननेत्र स्यात् नेत्रे सिंहासनोपमे । अस्य
प्रभावात् क्षितिपः कृत्स्नां साधयते महीम् १९ ।
गजाकृति यदा नेत्र गजनेत्रं वदन्ति तम् । अस्य
प्रभावात् क्षीणोऽपि लभते राजसम्पदम् २० । नेत्र
वृषाकृति यदा वृषनेत्रं वदन्ति तम् । अस्य प्रभा-
वात् भूपालो यशः प्राप्नोत्यनुत्तमम् २१ । मयूराकृतिके
नेत्रे तन्नेत्रमिति निर्दिशेत् । अस्य प्रभावात्
मनुजः सर्पदर्पं विखण्डयेत् २२ । जिह्वाकार यदा
नेत्रं जिह्वानेत्र वदन्ति तम् । संग्रामरुधिरेणैव पिबे-
द्वैरिशिरोरज, २३ । दन्ताकार यदा नेत्र दन्तनेत्रं
वदन्ति तम् । कर्षं रिपुगण भूरि चर्वणमपि

भैरवम् २४ । खड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्ति तम् । अस्य प्रभावानुमन्तुरुच्चैस्त्रिलोकीं वशयेदपि २५ । महत्पद्मपुत्रिकाकारं पुत्रिकानेत्रमुच्यते । अयं सर्वेषां सदोषा कृतज्ञा साधयते क्षितिम् । न चेयं पुत्रिका किन्तु जयलक्ष्मीरिह स्वयम् । तस्मान्नायं मनुष्याणा-मल्पभाग्येन लभ्यते २६ । चामराकृतिनेत्रन्तु चामरनेत्र-मिति निर्दिशेत् । अस्य प्रभावात् जायन्ते चामरो-द्धृतसम्पदः २७ । एकोऽनेकशिखे शैलनेत्रे तच्छैल-संज्ञकम् । अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे । स्थिरी-करोति भर्त्तारं भर्त्तारं पर्वतो यथा २८ । पुष्पमाला-समं नेत्रं पुष्पनेत्रं वदन्ति तम् । अस्य प्रभावात्तु-ष्यन्ति ग्रहाः सर्वाश्च देवताः २९ । भुजङ्गसमे नेत्रे सर्पनेत्रमिदं मतम् । अयं शत्रुगणं हन्ति यथा मर्त्त्यं भुजङ्गमः ३० । सवर्णमसवर्णञ्च तत् सर्वं द्विविधं भवेत् । सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथा परम् । द्वयोरेकत्र दृष्टे च तत् पुनः द्विविधं भवेत् । एकं लोके शुभं, नेत्रं ददाति द्विविधं द्वयो । मूल-मध्याग्रसंस्थानात् तत् पुनस्त्रिविधं मतम् । अग्रे चाग्र-फलं प्रोक्तं मध्ये मध्यफलं मतम् । मूले फलं जघन्यं स्यात् प्राह नागार्जुनो मुनिः । एकं द्वे त्रीणि नेत्राणि नात्र संख्याव्यतिक्रमः । एकं धर्म्म, स्वर्गकामौ द्वे, त्रीणि च त्रिवर्गकम् । तत् फलानि प्रयच्छन्ति प्राह नागार्जुनो मुनिः । द्विनेत्रमिति जानीयात् समता नेत्रयोर्द्वयोः । त्रिनेत्रस्य त्रिभि-र्ज्ञेयं बहुनेत्रमतः परम् । यथोत्तरं गुणवत् खड्गमा-हुरुत्तमम् । दिङ्मात्रमिति निर्दिष्टं नेत्राणां शुभदा-यिनाम् । तीक्ष्णाणां मङ्गलानाञ्च दर्शनञ्च शुभावहम् । यथा नेत्रस्य संस्थानं तथाऽरिष्टस्य लक्षयेत् । नेत्रेषु स्थाननियमो नारिष्टे स्थाननिर्णयः । प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन निन्दितः" । अथ त्रिंशदरि-ष्टानां लक्षणानि "छिद्रवद्दृश्यते खड्गे स्वभावेन च लक्ष्यते । छिद्रारिष्टमिदं विद्धि भर्त्तुर्धैर्य्यबलापहम् १ । यदा काकपदाकारमरिष्टं दृश्यते क्वचित् । अथ काक-पदारिष्टं सर्वाभीष्टविनाशनं २ । रेखाकारं यदा-रिष्टमूर्द्धं वा तिर्य्यगेव वा । रेखारिष्टमिदं विद्धि भर्त्तुर्वीर्य्यमहापहम् ३ । भिन्नभ्रान्तिकरं पाप भिन्नारिष्टमिदं विदुः । भर्त्तुः कुलं यशो राष्ट्रं नाशयन् न गच्छेत् क्षयम् ४ । यदा भेकशिरोरूपमरिष्टं दृश्यते क्वचित् । भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ५ । अरिष्टे शूर्पिकाकारे शूर्पिकारिष्टमुच्यते । अयं खड्गा-धमः कुर्य्यात् पत्युः पानाशसङ्गमम् ६ । विडालनयना-कारो बिन्दुरेकोऽतिविस्तरः । विडालारिष्टमेतत् स्यात् भर्त्तुः सर्वार्थनाशनम् ७ । अरिष्टं शर्कराकारं यदा स्पर्शेन बुध्यते । शर्करारिष्टमेतत् स्याद्धनबुद्धि-विनाशनम् ८ । यदा मौलीरसाभासमरिष्टं दृश्यते क्वचित् । मौल्यरिष्टमिदं प्रोक्तं यशोलक्ष्मीविनाश-नम् ९ । अरिष्टे मशकाकारे मशकारिष्टमुच्यते । भर्त्तुः कुलं यशो बुद्धिं धृतिं प्रीतिञ्च नाशयेत् १० । भृङ्गप्रतिमो बिन्दुरेकोऽनेकोऽथ वा यदा । भृङ्गारिष्टं तदेव धृतिस्मृतिविनाशनं ११ । स्थूलीरूपमरिष्टञ्चे-दूर्द्धं वा तिर्य्यगेव वा । स्थूल्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् १२ । नयने हिन्दवो राजन् । पङ्क्त्यो विषमेण वा । उपर्य्युपरि नाशोऽस्त्रिविन्द्वाख्यमरि-ष्टकम् । तस्य स्पर्शनमात्रेण सचेलः स्नानमाचरेत् १३ । काकिकारिष्टमित्येतद्धि धीधृतिस्मृतिनाशनम् १४ । एकत्र यदि भङ्गोऽपि प्रयत्नेनापि सङ्गतः । दारीनामभङ्गारिष्टं सर्वाभीष्टविनाशनम् । अनेकगुणसम्पन्नः खड्गोऽलोकैर्न दृश्यते १५ । कपोतपक्षप्रतिममरिष्टञ्चेत्तदाशुयम् । भर्त्तुः कुलं यशो विद्यां बलं बुद्धिञ्च नाशयेत् १६ । काकालति यदा रिष्टं काकारिष्टं तदोच्यते । अनेन भर्त्तुः समरे भङ्ग एवोपजायते १७ । अरिष्टे खर्परा-कारे खर्परारिष्टमुच्यते । भर्तुर्यशो धनं शौर्य्यं बुद्धिं प्रीतिञ्च नाशयेत् १८ । यदाग्यशोऽपयकसं खग्नं स्यादिव दृश्यते । मकसीति स वै खड्गः सर्वाभीष्टनिकृ-न्तनः १९ । क्रोडीदशनमाकारं यत्रारिष्टं प्रदृश्यते । क्रोडारिष्टमिदं नाम भर्त्तुः सर्वार्थनाशनम् २० । कुशपत्रसमाकारं यत्रारिष्टं तु लक्ष्यते । कुशपत्रा-रिष्टमिदं भर्त्तुर्दुःखाय कीर्त्तितम् २१ । दर्भाग्नि-मिवाभाति मध्ये वा दृश्यते क्वचित् । जत्वा-रिष्टमिदं नाम भर्त्तुः कुलधनापहम् २२ । एकैक-रेखा दीर्घाग्रा यदा पङ्क्तिनी भवेत् । स्वर्णं नखे करे-चेत् करालारिष्टमुच्यते । अयं हि चिरिपावाणो दृष्टियोग्यो भवेन्न हि । दर्शनादेव नश्यन्ति यशोलक्ष्मी जयादयः २३ । अरिष्टे कङ्कपत्राभे कङ्कारिष्टं तदुच्यते । अस्य स्पर्शनमात्रेण नश्यन्त्यायुर्यशो बलम् २४ । खर्जूरदलवद्विन्दा यदाऽरिष्टं प्रदृश्यते । खर्जूरारिष्ट-

मेतत् स्यात्कर्त्तुः कुलधनापहम् २५। गोश्टङ्गाभमरिष्टञ्चेत् श्टङ्गारिष्टं तदोच्यते। अनेन भर्त्तुर्मरणन्ति लक्ष्मीबलकुलादय २६। गोपुच्छाकृति चेत् खड्गे अरिष्ट मुपदीच्यते। पुच्छारिष्टमिदं नाम भर्त्तुर्सर्वार्थनाशनम् २७। अनिलागमरिष्टञ्चेत् अनिला-रिष्टमुच्यते। भूरायामपि सङ्ग्रामे भङ्गमेतत् प्रय-च्छति २८। अरिष्टे लाङ्गलाकारे लाङ्गलारिष्टमुच्यते। अथ पापात् पापतर न्ह्यपोयो न भूभुजा। अयमायुः श्रिय हन्ति विद्या मक्तमशेषत २९। अरिष्ट वड़िशा-कार वडिशारिष्टमुच्यते। करोति कुटिल सर्वं भर्त्तुः कुलनिकृन्तनम् ३०। इत्यरिष्टानि प्रोक्तानि नाना-तन्त्रात् प्रयत्नतः। विचार्य्य तानि मतिमान् खड्ग कोषे निधापयेत्। दिङ्मात्रमिदमुद्दिष्टमरिष्टाना हिता-त्मनाम्। अमङ्गलानां मन्दाना दर्शनञ्चाशुभावहम्। अरिष्टमेकमेव स्याद्बहिररिष्ट शुभावहम्। अन्योन्य-मशुभ हन्याद्विषस्य हि विष यथा। एकमारभ्य समानमरिष्ट प्राह नान्यथा। यथोत्तर द्विगुणित फलमाहुर्मनीषिण। अरिष्टाध्याय। अथ द्विवि-धभूमि। "दिव्यभौमविभागेन खभूमिर्यो द्विविधा मता। दिव्या दिवि समुद्भूता भौमा भूमिसमुद्भवा। तल्लक्षणमशेषेण लिख्यते तन्निबोधत। देवदान-वयोर्मध्ये खड्गवृष्टिरभूत् पुरा। ते खड्गा पुण्यदेशेषु केषु केषु प्रतिष्ठिता"। दिव्यलक्षणं यथा "ये खड्गा स्थूलधारा न्यूनमतिलघवो निर्मलाङ्गा सुनेत्रा येऽरिष्टान्यस्वरूपाः सुविमलतमपाव्यसत्कार-योगात्। दुर्भेद्या दुर्घटाश्च ध्वनिगुणगुरवो यत्नतो दाहपाकौ ते दिव्याः कुर्वतेऽमी कुलधनविजयश्रीयशो वृद्धिमाशु" १। अथ भौमलक्षणम्। हयहारीते "पूर्वं मह्टेशेन विषाणि यानि भुक्तानि तेषां पतितास्तु बिन्दव। पुरामृत क्षीरसमुद्रमध्यादुत्पाद्य सम्यक्च पपु सुरेन्द्राः। तद्बिन्दवो यत्र निपेतुरेव वसुन्धरा साकरतां जगाम। ये विषोत्था भव काला खराङ्गाः सम्भवन्ति हि। मूर्च्छादाहज्वरानाहशोकहिक्का वमीकराः। येऽमृतोत्थाः कर्बुराङ्गा मन्दाङ्गा सम्भवन्ति च। वलीपलितमालिन्यजराव्याधिविनाशना। यत्रैव पतित यत्तु तत्तदाकरतां गताः"। तद्यथा "वाराणसीनगरविन्ध्यभूमिभागे नेपालभूमिषु तथाङ्ग-केलिङ्गदेशे। सौराष्ट्रकेऽप्यतमघप्यमरहीविभागे सुवायसां

कतिचरा प्रवदन्ति सम्यक्"। तथा। "वाराणसेया सुस्निग्धा तीक्ष्णधारा समृद्धिनः। अथच सुकलश्रेया श्वेयाघाभेद्यशालिन। मागधाः कर्कशा स्थूलधारा मूढतराङ्गिन। गुरवो दु सवन्द्येया खड्गा ज्ञेया विचक्षणैः। नेपालदेशप्रभवा निरङ्गा निरवताश्च ये। ज्ञेयाः सदङ्गा मलिना अथच स्थूलधारिण। कालिङ्गा गुरवः स्वच्छा व्यक्ताङ्गा स्तन्तुरेतव। सौराष्ट्रा निर्मलाः स्निग्धाः सुव्यक्ताङ्गा भग्न खरा। सिंहलद्वीपजातानां चतुर्णां भेद उच्यते। केचित् सदङ्गा गुरवः कर्कशा स्निग्धधारिण। केचित् सदङ्ग अथच सुस्निग्धा स्थूलधारिण। एषां क्रमेण विप्रेण ज्ञेया हि द्विज-जातय। सामान्यात् द्विगुणश्चोक्त कथिदंशगुणस्तत। कुले शतगुण भद्र भद्राद्धन्‌ सहस्रधा। मन्नात् षट्-गुण पाठिर्भिरविदंशनिर्गुणे। तत कोटिसह-स्रेण ज्ञायस्तान्तः प्रयत्नतः। आसान्तु चौड्ला-तीर्नां मन्त्र खड्गाय युज्यते। ये खड्गास्तीक्ष्ण-धारा न्यूनमतिगुरवः षड्गुणाढ्याः सुभेद्या केचित् साङ्गा निरङ्गा कतिचन समला निर्मलाः केचिदेव। ते भौमा कुर्वतेऽमी धनविजयबल षड्गुणा निर्गुणा ये ते दु स शोकसप दधति बलकुलश्रीयशोनाशनाश्च"। अथाष्टधा ध्वनि। "ध्वनिरष्टविध प्रोक्तो य पूर्वं समुपाहे। तेषामपि शिवास्यत्र सगुण लक्षणाष्टकम्। तद्यथा। "पूर्वं चत्वार शुभदाः परे निन्द्यास्तदाष्टधा। विचार्य्य खड्गमानस्य कर्त्तव्य खड्गकोविदैः। चीरत्कार इति ख्यातो द्विविधः खड्गकोविदैः। घोर स्यात् सुखसम्पत्त्यै तार उच्चाटने मत। यत्र हयरवस्येव खड्गे प्रजायते ध्वनि। हयध्वनिरय खड्ग सकलार्थप्रसाधनः १। कांस्यशब्द इवा-भाति यस्मिन् खड्गे हते ध्वनिः। कांस्य ध्वनिरय खड्गः प्राह नागार्जुनो मुनिः २। मेघशब्द इवाभाष्टो यत्र खड्गे हते ध्वनि। मेघ-ध्वनिरय खड्गो भर्त्तुः सौभाग्यदायकः। ढक्का शब्द इवाभाति यस्मिन् खड्गे हते ध्वनि। ढक्का ध्वनिरय खड्गः सर्वत्र निष्फलः ४। काकस्वर इवाभाति यस्मिन् खड्गे हते ध्वनि। काकस्वरोऽय खड्गः स्यात् श्रीयश कुलनाशन ५। तन्त्रीस्वरध्वो यस्मिन् भवेत् खड्गे हते ध्वनिः। तन्त्रीध्वनिरय खड्गः कुलश्रीधननाशन ६। खरस्येव ध्वनिर्यत

स्वरध्वनिरयं मत । श्रोयशोज्ञानविज्ञानजयतेजो विनाशनः ७ । प्रसरस्येव यस्येह हतस्य ध्वनिरुद्भवेत् । प्रसरध्वंसिनाशाय स निन्द्य खड्गलक्षणे ८। गभीरतारध्वनिता खड्गस्याशुभलक्षणम् । उत्तानमन्द्रध्वनिता खड्गस्य शुभलक्षणम् । अप्यङ्गनेरङ्गीनोऽपि खड्गः सुध्वनिरुत्तम । अन्य कुरूपो मनुजो यथा भुवि सुगायन । सर्वलक्षणसम्पन्न खड्गो यो ध्वनिवर्जित । स निन्द्य सुन्दराङ्गोऽपि यथा वाक्यविवर्जित । नखेन वाऽथ दन्तेन तथा लौहशलाकया । लोष्टेन शर्कराभिर्वा ध्वनिविज्ञानमुच्यते" । अथ द्विविधमानम् । "यन्मान द्विविध प्रोक्तं तस्य लक्षणमुच्यते । उत्तमाधमभेदेन भेदो हि द्विविधो मत । उत्तम यद्दिशाग्र स्यात्प्रमाण प्रकीर्त्तितम् १ । अधम तत्र यत् खर्वं गुरुमान प्रकीर्त्तितम् २ । तत् पुनस्त्रिविध प्रोक्तमादिमध्यान्तभेदत । यो मुष्टिविंशतिसमायततीक्ष्णधारो भर्त्तुर्भवेत् प्रसरतोऽपि षडङ्गुलीभि । मानेन चाष्टपलिक स हि खड्गमध्ये नातिप्रकृष्टमतिकष्टफल ददाति । यो द्वादशाष्टमयमुष्टिभिरायतः स्यात् मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः । तावत् पलैः परिमितस्तु ततोऽधिको वा खड्गाधमो धनयश कुलनाशनाय" । नागार्जुनोऽपि "यावत्यो मुष्टयो दैर्घ्ये तदङ्गुलयो यदा । प्रसरे तच्चतुर्थांशमिति वै मानमुत्तमम् । यावत्यो मुष्टयो दैर्घ्ये प्रसरे तत्त्रिभागिक । पलैस्तदर्द्धैस्तुलितः स खड्गो मध्य उच्यते । यावत्यो मुष्टयो दैर्घ्ये तुर्य्यांश प्रसरे तु तत् । अधम कीर्त्तितः खड्गस्तत्पलोऽधिक पलैः । भौमानामिदमुद्दिष्टं दिव्यास्तु अवधो मताः" । भोजस्तु "दीर्घता लघुता चैव खड्गविस्तीर्णता तथा । दुर्भेद्यता सुघटता खड्गानां गुणसंग्रह । खर्वता गुरुता चैव मन्दता तनुता तथा । सुभेद्यता दुर्घटता खड्गानां दोषसंग्रह" । इति निश्चिलसदारसङ्गमतः चञ्चतन्त्रेषु निरूप्य खड्गपट्टे । नृपतिरिति विचिन्त्य यो विधत्ते स चिरतरां श्रियमुच्छ्रिता लभेत" युक्तिकल्पतरु ।

तरस् न० तॄ-करणादौ यथायथम् असुन् । १बले २वेगे, ३तीरे, ४वानरे च । ५रोगे शब्दार्थचि० । "अन्याय चिच्छिदुरिभाश्वरसात्मनैव" "कृपयोर्युगेन तरसा कलिताम्" "तरसाक्रम्य करोति कायम" इति च माघ । "कैलासनाथ तरसा जिगीषु" रघु ।

तरस न० तॄ-असच् । मांसे अमर० । "तरसमयाः पूर्वोक्तभागा" कात्या० श्रौ० २४।५।२० । "तरसमया मांसमयाः" कर्क । तरस्+अस्त्यर्थे अच् । २वेगयुक्ते त्रि०

तरसत् पुस्त्री० तरस इवाचरति तरस+क्विप् शतृ । मृगभेदे स्त्रियां ङीप् । "अपक्वमत्तरसन्तो न भुञ्ज्यु" ऋ० १०।८५।८ । "तरसन्नामक्रगस्तस्य पत्नी" भा० ।

तरसान पु० तरत्यनेन तॄ-आनच् सुट् च । नौकायां उज्ज्वलद० ।

तरस्थान न० ६त० । आतर(पारेर भाड़ा)ग्रहणस्थाने जटा०

तरस्वत् त्रि० तरोऽस्त्यस्य वा मतुप् मस्य व मत्वर्थे । सान्तत्वात् १वेगयुक्ते भत्वम् २रोगिणि च । स्त्रियां ङीप् । ३चतुर्थमनो पुत्रभेदे । "तरस्वीश्वर्नमच तरस्वानुग्र एव च" हरिवं० ७अ० ।

तरस्विन् पु० तरस्+अस्त्यर्थे विनि सान्तत्वात् भत्वम् । १वायौ २गरुड़े राजनि० ३वेगवति, ४शूरे च त्रि० अमर० । "अवधदेकरथेन तरस्विना" "निर्जितेषु तरसा तरस्विना" रघु । स्त्रियां ङीप् । "कौमोदकी विष्णुगदा तरस्विनी" भाग० ८।१०।२२ । [वाहिले त्रिका० ।

तराम्बु पु० तरे तरणे अम्बुरिव गभीरत्वात् । नौकाभेदे

तरालु पु० तराय तरणाय अलति पर्याप्नोति अल-उन् । नौकाभेदे हारा० ।

तरि(री) स्त्री तॄ-करणे इ । १नौकायाम्, २वस्त्रपेटके, ३वस्त्रदशायाञ्च हेमच० । "जीर्णा तरिः सरिदतीव गभीरनीरा" उद्भट । "संसारसागरनावर्त्ततरिकाण्डाय विष्णवे" भा० अनु० ४७अ० । वा ङीप् । "तरीषु तत्रत्यमफल्गु भाण्डम्" माघ ।

तरिक पु० तराय तरणाय हित० वा० ठन् । १प्लवे त्रिका० २नौकायां स्त्री हारा० । तरे तरणार्थं देयशुल्कग्रहणेऽधिकृत ठन् । ३तरणशुल्कग्रहणाधिकारिणि । "तरिक स्थलजं शुल्क गृह्णन् दाप्य पणान् दश" याज्ञ० । "तीर्य्यतेऽनेन तरो नावादिस्तत्कार्य्यम् शुल्क तद्ग्रहणेऽधिकृतस्तरिकः" मिता० ।

तरिणी स्त्री तरस्तरणं साध्यं तयास्त्यस्याः इनि ङीप् । नौकायाम् हेमच० ।

तरिण्य तरिण+गतौ कण्ड्वा० यक् प० सक० सेट् । तरिण्यति अतरण्यी(णी)त् ।

तरिता स्त्री तरो जातोऽस्या तारका० इतच् । १तर्जन्याम् २लशुने । (गाँजा) तन्त्रम् "संविदा वाक्कूटस्य पुस्तरम् । अहिफेन वज्रं रक्ताङ्किता" ज्ञानार्णवतन्त्रम् ।

**तरित्र** न० तरत्यनेन तॄ–इत्र। तरणसाधने नौकादौ। "अतरित्राणिव जले यास्त्वभिमीलका रणे। मग्नान्स्तो परास्तव" भा० व० ६२ अ०।

**तरिरथ** पु० तरेः रथ इव चालकत्वात्। अरित्रे हारा०।

**तरी** स्त्री तरि+ङीप्। १तरिशब्दार्थे २धूमे च त्रिका० ३द्रोण्यां जटाधर। ४वस्त्रदशायां मेदि०।

**तरीयस्** त्रि० अतिशयेन तरीता ईयसुन् तृणो लोप। अतिशयेन तारके "स नमस्तरीयानिवर पत्नीभा" ऋ० ५।४१।१२। स्त्रियां ङीप् इत्वम्। तरिकोऽप्यत्रार्थे त्रि०।

**तरीष** पु न०। तॄ–ईषन्। १शुष्कगोमये २नौकायाञ्च उज्ज्वल० ३शोभमाकारे भेदे ४व्यवसाये उणा० ५समुद्रे ६समर्थे च उज्ज्वलदत्त०। ७स्वर्गे पु० ८इन्द्रकन्यायां स्त्री मेदि०।

**तरीषन्** पु० तॄ–ईषन् छन्दसि मकारस्य नेत्वम्। तरणे 'विश्वा आशास्तरीषणि" ऋ० ५।१०।६ "तरीषणि तरणे" भा० "बहुलवचनात्मनामोऽह्लोप" माधवः।

**तरु** पु० तरन्त्यनेन नरकमारोपकाः तॄ–उन्। १वृक्षे अमरः। "तरवोऽभिनेदुः" भाग० १।२।१ "स्वेनिबनततरुच्छायां देव्या तया सह शिश्रिये" रघु। "तरूणुचुचुम्बुसे पविश्रणयानुकूला'' भट्टि। "उप रिजनतरूणि यानमाना" माघ। २तारके त्रि० "भूभुंव स्वस्तरुस्तारः" विष्णुस० भूभुंव स्वस्तरु लोकत्रयतारक" भा० ३तरुविकारे च। "इन्द्रमेराणस्तरुभिः सुते गृभम्" ऋ० ५।४४।५ "तरुभिस्तरुविकारैर्ग्रावभिः"।

**तरुकूणि** पु० तरौ कूणयति कूणि–इन् उत०। वागुद पक्षे त्रिका०।

**तरुक्ष** त्रि० तॄ–बा० उक्षन्। १तारके २गवाश्वादीनां पालनाधिकृते च। "विश्वतरुक्ष आददे" ऋ० ८।४६।३२। "तरुक्षे गवाश्वादीनां तारके गवाद्यधिकृते वा" भा०।

**तरु(ष)खण्ड** पु०तरूणां समूहः तरु+ख(ष)ण्ड। वृक्षसमूहे एव तरुख(ष)ण्डादयोऽप्यत्र। "दृष्ट(प)खण्डमुपन इदा राम सुग्रीवमब्रवीत्। एव नेम इवाकाशो दृश्यते (ष)ण्ड प्रकाशते' रामा० कि० १२ अ०। "तरुष(ष) ण्डमध्ये" पञ्चत०। मदनीय (ष)ण्डः। भा० या०

**तरुजीवन** न० जीव्यतेऽनेन जीव–करणे ल्युट् ६त०। वृक्षमूले शब्दच०।

**तरुण** न० तॄ–उनन्। १कुञ्जपुष्पे (सेओति) मेदि० २स्थूलजीरके ३एरण्डवृक्षे पु राजनि०। ४यूनि ५नवे च त्रि० मेदि० "स बभार गदापाणिर्वृद्धोऽपि तरुणो यथा" भा०वि०३३अ०। "तरुण सर्षपशाक नवौदनं पिच्छलानि च दधीनि" छन्दोम०। "बालो मनाग् तरुणार्क रागम्" कुमा०। "सुताऽपि तरुणातप करुणया हरन्ती नृणाम्" रसगङ्गा०। "तरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः" सरस्वतीध्यानम्। तरुणस्य भाव इमनिच्। तरुणिमन् तरुणभावे पु०। "वतेन्दुवदना तन्वी तरुणिमोद्गमो भेदते' काव्यप्र०। त्व तरुणत्व न०। तल् तरुणता स्त्री ष्यञ् तारुण्य न० तत्रार्थे। "तारुण्यस्य विलास" सा० द०।

**तरुणज्वर** पु० कर्म०। "आसप्तरात्र तरुण ज्वरमाहुर्मनीषिण" इति चक्रद० उक्ते सप्तरात्रमध्यजाते ज्वरे।

**तरुणदधि** न० कर्म०। सद्योजाते दधनि। "शुष्कमास स्त्रियो वृद्धा बालार्कस्तरुण दधि। प्रभाते मैथुन निद्रा सद्य प्राणहराणि षट्" चाणक्यम्।

**तरुणाय** अतरुणस्तरुणो भवति भृशा० अभूततद्भावे क्यङ्। अतरुणस्य तरुणतामाप्तौ अक० आत्म० सेट्। तरुणायते अतरुणायिष्ट। "इक्षुस्वरसपीता वृद्धोऽपि तरुणायत" सुश्रुत। "वसुदेवो जरा त्यक्त्वा वृद्धोऽपि तरुणायते" हरिव० २० अ०।

**तरुणी** स्त्री तरुण+मध्यमवयोवाचित्वात् ङीप्। १युवत्यां स्त्रियां "व्याकीर्णमाल्यकबरीं कबरीं तरुण्याः"। "स्तनौ तरुण्याः परिवत्तुरेनम्" माघः। २कुमार्यां ३दन्तीवृक्षे ४चिडानामगन्धद्रव्ये ५कुसुम्भवृक्षे (सेवती) च राजनि०।

**तरुणीकटाक्षमाल** पु० तरुणीनां कटाक्षाणां माला यत्र प्रियत्वात्। १तिलकवृक्षे राजनि०। ६त०। २तरुणी कटाक्षाणां श्रेणौ च स्त्री।

**तरुतल** न० ६त०। १वृक्षमूले। "नीत्वैर्यदा तरुतलेषु मतङ्गजानाम्" माघ। २तरुस्वरूपे च।

**तरु(रू)त्र** त्रि तॄ–उत्र "असितस्त्रमितेत्यादिना" पा० नि० उट् ऊट् वा। तारके। "सहावान तरुतार रथानाम्" "तरुतार तारयितारम्" निरु० ११ ८। "आ विप्र वाज तरुत्र" ११२९।२।

**तरुतु(तू)लिका** स्त्री तरौ तोलयति दोलयति वा तुल-णिच्–ण्वुल्–अत इत्वे दुल–उत्क्षेपे वा एवु कृ टाप् कापि अत इत्वम् पृषो०। (वादुड) खगभेदे हारा०। तस्य वृक्षे स्वदेहस्य तो(दो)लनात् तथात्वम्।

**तरुत्र** त्रि० तॄ–बा० उत्र। तारके। "हाप्यामस्तो

म्यन्त्रिलहरी" ऋ० ४।२१।२ "तरुतस्तारक" भा०।

**तरुनख** पु० तरोर्नख इव घातसाधनत्वात्। कण्टके शब्दा०

**तरुभुज्** पु० तरु भुङ्क्ते भुज–क्विप् ६त०। (परगाछा) वन्दाके राजनि०।

**तरुमृग** पु०स्त्री तरौ मृग इव तत्र धावकत्वात्। वानरे शब्दच० स्त्रियां जातित्वात् ङीष्। [शब्दा०।

**तरुराग** न० तरूणां रागोरक्तता यस्मात् ५ब०। नवपल्लवे

**तरुराज** पु० तरूणां राजा श्रेष्ठत्वात् टच् समा०। १तालवृक्षे राजनि०। २तरुश्रेष्ठमात्रे च। "देवोपभोग्यमेतद्धि तरुराजसमुद्भवम्" हरिवं० १२६ अ०। आर्षे क्वचित् न टच्। "पारिजातस्य भद्रं ते तरुराजोमहात्मन" हरिवं० १२६ अ०।

**तरुरुहा** स्त्री तरुषु रोहति रुह–क। १वन्दाके (परगाछा) राजनि०। २वृक्षरोहिमात्रे त्रि०।

**तरुरोहिणी** स्त्री तरौ रोहति रुह–णिनि ङीप्। १वन्दाके २वृक्षरोहिमात्रे त्रि०। स्त्रियां ङीप्।

**तरुवल्ली** स्त्री तरोर्वल्लीव। वन्दाके राजनि०। [शब्दार्थचि०।

**तरुविलासिनी** स्त्री तरोर्विलासिनीव। नवमल्लिकायाम्।

**तरुश** त्रि० तरुः अस्त्यत्र लोमा० श। तरुयुक्ते [स्त्रियां ङीप्

**तरुशायिन्** त्रि० तरौ शेते शी–णिनि। खगमात्रे शब्दा०

**तरुष** त्रि० तॄ–बा० उषन्। तारके। "भूर्यैः पतस्यान्तरस्य तरुष" ऋ० ६।१५।३। "तरुषस्तरीता" भा०।

**तरुष** हिंसायां नामकर्मसु "तरुष्यति तरुष्यति" निघण्टूक्ते दिवा० प० सक० सेट्। तरुष्यति अतरोषीत्। "त्वं ह्यत्र तरुष्यतः" ८।८८।६। "तरुष्यतो बाधकान्" भा०। "वनुष्यति हन्तिकर्मा तरुष्यतिरप्येवं कर्मा" निरु० ५।२ "इन्द्रेण युजा तरुषेम वृत्रमित्यपि निगमो भवति" निरुक्तश्रुतिः वेदे गणव्यत्ययः।

**तरुष्** न० तरुष्यति हिंसन्त्यत्र तरुष–आधारे क्विप्। युद्धे "तमूत्या तरुषि यत् कृण्वैते" ऋ० ६।२५।४ "तरुषि युद्धे" भा०। [ऋ० १।७।२ "तरुषस्तारकः" भा०

**तरुस्** त्रि० तॄ–उषि। तारके। "त्वावा दधस्य तरुष"

**तरुसार** पु० ६त०। १कर्पूरे शब्दा०। ६त० २वृक्षसारमात्रे च। "सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयाणि" सुश्रु०। [राजनि०।

**तरुस्था** स्त्री तरौ तिष्ठति स्था–क। वन्दाके (परगाछा)

**तरुट** पु० तरोः उट इव। उत्पलकन्दे "तरुटो गुरुविष्टम्भी शीतलश्च मतो बुधैः" राजवल्लभः।

**तरूषस्** त्रि० तॄ–बा० ऊषस्। १तरणकुशले २आपदुद्धारके च। "स न इन्द्र राया तरूषसोपम्" ऋ० १।१२९।१० "तरूषसा तरणकुशलेनास्मानापद्भ्य उत्तारीतुं शक्तेन" भा०

**तर्क** दीप्तौ अक० आकाङ्क्षायाञ्च वितर्के सक० चुरा० उभ० सेट्। तर्कयति ते अततर्कत् त "एतत्तर्कय चक्रवाकहृदयाश्वासाय" प्रसन्नरा०। "तथा तर्कयामि यथानेनाचिरप्रव्राजितेन भवितव्यम्" मृच्छ०। "दक्षिणेनाथ वामेन कतरेण स्विदस्यति। इति स्म सङ्गताः सर्वे तर्कयिष्यन्ति मानव" भा० वि० ६१ अ०।

वि+उत्प्रेक्षायां "तन्नूनं मृत्युमाप्स्यतीति वितर्कयामि" पञ्चत०।

**तर्क** पु० तर्क–भावे अच्। १आकाङ्क्षायां २व्यभिचारशङ्कानिवर्त्तके ऊहभेदे अविज्ञातेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थे ऊहे ३व्याप्यारोपात् व्यापकप्रसञ्जने। ४आगमाविरोधिन्याये ५आगमार्थपरीक्षणे ६मीमांसारूपविचारे। ७मानसज्ञानभेदे। ८स्वबुद्ध्योहमात्रे "अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत्। नाऽप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चय" वेदान्तप०। "आर्षं धर्मोपदेशञ्च धर्मशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" मनु० "तर्काप्रतिष्ठानात्" शा० सू०। करणे घञ्। ९न्यायशास्त्रे "प्रायस्तर्कमधीते तदुत कुतर्कान्धितस्त्वमप्यत्र" दीधिति "उद्धतस्तर्काः समस्ताः स्य मे" कुसु०। "यत्काव्य मधु वर्षिधर्षितपरास्तर्केषु यस्योक्तयः" नैष०। "तर्के वा मदकर्कशे मम सम लीलायते भारती" प्रसन्नरा०। "गदाधरविनिर्मिता विषमदुर्गतर्काटवी" गदा० ६मीमांसायाम् १०अर्थवादे कर्क०। "अक्ता शर्करा उपदधातीति विधि श्रूयते। तत्राञ्जनसाधन घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते। अतस्तर्कोऽर्थवाद"। तर्को मीमांसेति कल्पतरुकारः तर्कलक्षणं गौ० सू० भाष्ये उक्तं यथा "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क" गौ० सू०।

"अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते जानीयेममर्थमिति, अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति किं स्विदित्थमाहो स्विन्नेत्थमिति विमृश्यमानयोर्धर्मयोरेकं कारणोपपत्त्याऽनुजानाति सम्भवत्यस्मिन् कारणं प्रमाणं हेतुरिति, कारणोपपत्त्या स्यादेवमेतन्नेतरदिति तत्र निदर्शनम् योऽयं ज्ञाता

ज्ञातव्यमर्थं जानीते तन्तु भो जानीयेति जिज्ञासा, स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्शः, विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति, यद्ययमनुत्पत्तिधर्मकस्ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता, दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणमुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ, उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम्, उत्पन्नः खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभिः सम्बध्यत इति नास्येदं स्वकृतस्य कर्मणः फलम् उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति, तदेवमेकस्यानेकशरीरयोगः शरीरविप्रयोगश्चात्यन्तं न स्यादिति। यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानाति, सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते। कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति अनवधारणात् अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या न त्ववधारयति न व्यवस्यति न निश्चिनोति एवमेवेदमिति। कथं तत्त्वज्ञानार्थ इति, तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद्भावितात् प्रसन्नादनन्तरप्रमाणसामर्थ्यात् तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थ इति। सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादे उपदिष्ट इत्यविज्ञाततत्त्वमनुजानातीति यथा सोऽर्थो भवति तस्य यथाभावस्तत्त्वमविपर्ययो याथातथ्यम्” वात्स्यायनभाष्यम्।

विश्वनाथवृत्तौ चान्यथा लक्षणमिदं व्याख्यातं यथा “तर्क इति लक्ष्यनिर्देशः कारणोपपत्तित ऊह इति लक्षणम् अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम् कारणं व्याप्यं तस्योपपत्तिरारोपस्तस्मात् ऊह आरोपः व्यापकस्य, तथा च व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्यारोपाद्व्यापकस्याहार्यारोपः स तर्कः। यथा निर्वह्नित्वारोपान्निर्धूमत्वारोपः निर्वह्निः स्यान्निर्धूमः स्यादित्यादि। ह्रदो निर्वह्निः स्यान्निर्धूमः स्यादित्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत इति। निर्वह्निः स्याद् द्रव्यं स्यादित्यादिवारणाय व्यापकेति तद्व्याप्यारोपाधीनस्तदारोप इत्यर्थलाभाय व्यापकेति। न चानुमानादितोऽर्थसिद्धेस्तर्कोऽव्यर्थ इति वाच्यम् अप्रयोजकत्वादिशङ्काकलङ्कितेन हेतुनार्थस्य साधयितुमशक्यत्वात्तदेतदुक्तमविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति तत्त्वनिर्णयार्थमित्यर्थः। यत्र नाप्रयोजकत्वाद्याशङ्का तत्र नापेक्ष्य एवेति भावः। परे तु ऊह इत्येव लक्षणम् ऊहत्वञ्च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवसिद्धः। तर्कः किं स्वत एव निर्णायकः परम्परया वेत्यत आह कारणेति कारणस्य व्याप्तिज्ञानादेरुपपादनद्वारेणेत्यर्थः तथा च धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यनेन व्यभिचारशङ्कानिरासे निरङ्कुशेन व्याप्तिज्ञानेनानुमितिरिति परम्परयैवास्योपयोग इत्याहुः। स चायं पञ्चविधः आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधितार्थप्रसङ्गभेदात्। स्वस्य स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्माश्रयः स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा यथा यद्ययं घट एतद्घटजन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात्, यद्ययं घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्यो न स्यात् यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात् एतद्घटभिन्नः स्यादिति वा सर्वत्रापाद्यम् तदपेक्षापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः सोऽपि पूर्ववत्त्रेधा। तदपेक्षापेक्षापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकम् चतुःकक्षादावपि तत्र स्वापेक्षापेक्षापेक्षित्ववत्त्वाच्चाविशेषम्। अत्रापि पूर्ववत्त्रैविध्यम्। अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गोऽनवस्था यथा यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात्। तदन्यबाधितार्थप्रसङ्गस्तु धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिः। प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकन्तु प्रसङ्गाङ्गत्वाभावात् न तर्कः किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात्तथा व्यवहार इति सङ्क्षेपः”।

तर्कग्रन्थे जगदीशोक्तं तर्कविभागलक्षणादिकं यथा। “स चायं तर्कः पञ्चविधः आत्माश्रयान्योऽन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थकप्रसङ्गभेदादित्याचार्याः। तत्र स्वापेक्षापादकः प्रसङ्ग आत्माश्रयः। अपेक्षा च ज्ञप्तावुत्पत्तौ स्थितौ च ग्राह्या तत्राद्या, यथा एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यादिति। द्वितीया घटोऽयं यद्येतद्घटजनकः स्यात् एतद्घटभिन्नः स्यादिति तृतीया चायं घटो यद्येतद्घटवृत्तिः स्यात्तथात्वेनोपलभ्येतेति स्वापेक्षापेक्षित्वनिबन्धनः प्रसङ्गोऽन्योन्याश्रयः यथा चायं घटो यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यात् इति उत्पत्तौ स्थितौ च यथावदाहार्यम्। स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धन-

प्रसङ्गचक्रक पूर्वोक्त एवापादके जन्यघटान्तरमन्तर्भाव्योदाहरणम्। अपेक्षा त्वत्र साक्षात्परम्परासाधारणी ग्राह्या। अनवस्था पुनरप्रामाणिकी न तु प्रसाङ्गमूलकप्रसङ्ग। यथा घटत्वं यदि यावद्घटहेतुवृत्ति स्यात् घटजन्यवृत्ति न स्यादित्यर्थः। उक्तचतुष्कान्य प्रसङ्ग प्रमाणबाधितार्थकप्रसङ्ग सोऽपि द्विविधो व्याप्तिग्राहको विषयपरिशोधकश्च तत्राद्यो यथा धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति द्वितीयस्तु पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादि।"

धूमादेर्व्यभिचारशङ्कानिवृत्तिद्वारा विषयस्य वह्न्यादेर्निश्चायकत्वेन परिशोधकत्वमित्यवधेयम्।

सोऽयं तर्क एकादशविध इति प्राचीननैयायिका ऊचुः तदनुसारेण सर्व० सं०उक्तम् 'स चैकादशविधः व्याघातात्माश्रयेतरेतराश्रयचक्रकानवस्थाप्रतिबन्दिकल्पनालाघवकल्पनागौरवोत्सर्गापवादवैजात्यभेदात्' इति व्याघातादीनामप्रसञ्जनरूपत्वात् न तर्करूपत्वमिति किन्तु पञ्चविधत्वमिति नव्याः। एतन्मतानुसारेणैव वृत्तौ इतरेषां सुप्ततर्कत्वनिरासेन भाक्ततर्कत्वमुक्तम् द्रष्टव्यम्।

तर्कस्य च व्यभिचारशङ्कानिवर्त्तकतयानुमानाङ्गत्व तच्च खण्डनखण्डखाद्ये निराकृत यथा

"नापि विपक्षे बाधकस्तर्को वाच्य तर्कस्य व्याप्तिमूलत्वाभ्युपगमे अनवस्थाप्रसङ्गात्। तदनभ्युपगमे मूलशैथिल्येन तर्काभासत्वापातात्। अथ ब्रूषे न शक्यमिदं वक्तु तथा ह्यग्निधूमव्यभिचारशङ्काया बाधकस्तर्कोऽयमभिधीयते यदि धूमोऽग्निं व्यभिचरेदकारणकः सन्नित्यः स्यात् न स्यादेव वा स चायमनुत्तरस्तर्क तत्र शङ्काया व्याघातापत्ते। तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषा नावतरन्तीति लोकमर्य्यादा एव सर्वत्रानुसरस्तर्को बाधकोऽभिधेय इति चेत् नैवम् किमित्येव वह्नितस्य तदेतुफलभाव एव न भविष्यति। एवं तु वह्नितव्यम् अग्निं विहायान्यस्मादपि हेतोरयं भविष्यतीति। न च वाच्यमेवं हि सति धूमस्यैकजातित्व न स्यादिति कस्मिंश्चिदिन्द्रियजन्यत्वे कस्मिंश्चदनुमानादिजन्यत्वेऽपि ज्ञानैकजात्यवदुपपत्तेः। तत्रेन्द्रियादीनामवान्तरसामान्ये साक्षात्कारित्वादौ प्रयोजकत्वं न ज्ञानतायामिति चेन्न ज्ञानत्वस्याकस्मिकत्वपरिहारार्थं तत्कारणसाधारणस्य भवताऽवश्यं वक्तव्यत्वात्। धूमेऽपि वह्नेर्विशेष एव प्रयोजकत्वस्य तद्वदिहापि वक्तव्यत्वात्। न दृश्यते तावदग्निप्रयोज्यो धूमे विशेष इति च न वाच्यम् एवं हि सति तददर्शनस्यापाततो हेत्वन्तरप्रयोज्यावान्तरजात्यदर्शनेनायोग्यतया विकल्पत्वस्याप्युपपत्ते। यदा तु हेत्वन्तरप्रयोज्यो धूमस्य विशेषो दृश्यते तदासौ विकल्पित इति सम्भावनाया दुर्निवारत्वात्। अस्त्वात्ममनोयोगोऽनुगत कारणं ज्ञानोत्पत्ताविति चेन्न यद्यात्ममनोयोगादुत्पद्यमान ज्ञान स्यादिच्छादयोऽपि ज्ञानं प्रसज्येरन्। यदि त्वदृष्टविशेषो वा शक्तिभेदो वा ज्ञानत्वजातिर्वा ज्ञानप्रागभावो वा तत्रानुगत कारणमुच्यते तदा तदितरत्रापि वह्निव्यभिचारे धूमस्यैकजात्यप्रयोजकतया शक्यत एव शङ्कितुम् दृष्टे व्यभिचारे युक्तमदृष्टादेरैकजात्यपरिकल्पनमिति चेत् अस्तु दृष्टे तन्निश्चय अत्रापि व्यभिचारो न दृश्यत इत्यत्र नियामकाभावात् शङ्क्यत एव शङ्कमानस्य भवतो न क्वचिदनुमानं स्यादिति प्रतिपाद्यात्माद्यनुमानादिव्यतिरेकेण कथायामेव प्रवृत्त्यनुपपत्त्या स्वयं स्वीकर्त्तव्येष्वनुमानेष्वेतादृशशङ्काक्रमणात् स एव व्याघात इति चेन्न धूमवद्वह्नेरपि वह्निकारणविशेषानुमानस्यैव सति सदनुमानत्वप्रसङ्गात् सामग्रीसाध्येन प्रमाऽप्रमावैचित्र्यानुपपत्ते। साधारणधर्मदर्शनविशेषादर्शनाभ्यां सत्यपि शङ्कायाः समुदये सामग्र्या सत्यामपि कार्य्यानुदयात्परप्रतिपत्त्युत्पादनार्थं वचनादिरूपां प्रतिपत्तिसामग्रीमुत्पादयितु यतमानस्य भवतोऽपि स्वक्रियाव्याघातस्तुल्यः। व्याघातस्यैव विशेषत्वात् तद्दर्शनेन शङ्कासामग्र्येव नास्ति प्रत्यक्षे कुतो व्याघातसाम्यमिति चेन्न तद्धि न तावत् धात्वर्थादिकारणाज्जायमानभेदस्य कूटविषयस्य तस्यातिप्रसञ्जकत्वात्। कूटभिन्न प्रसञ्जकमितस्यैव स्यादिति चेन्न तस्य तर्कावसरे निरस्तत्वात्। तस्माद्यदेतद्व्याघातरूपस्य विशेषस्य दर्शनं शङ्काप्रतिपक्षभूतमुच्यते तत् किं? प्रमाणात् कुतश्चिदुपजायमानं वक्तव्यम् तर्काद्वा। यदि प्रथम शङ्कास्थितमपि तेनैव प्रमाणेनोपेयं शङ्काया सत्यां व्याघातात् यदि च शङ्कां विनापि व्याघात तदा शङ्क्यमानाशङ्क्यमानयोर्व्याघातस्य साम्यं स्थितमेव। भवतु शङ्कायामपि तत्प्रमाणं किमेतावता प्रथमोपजातशङ्काप्रवृत्त्यान्वितस्य व्याघातरूपस्य विशेषस्य दर्शनात् शङ्कान्तर नोत्पद्यत इति चेन्न व्याघातसमकाले तदवलम्बिकया शङ्कयैव शङ्क्यमानव्यभिचारसत्ता तस्याः शङ्काया व्युपरमे च तदवलम्बिनो व्याघातरूपस्य

व्याप्तिग्रह इति तदपि न तर्कस्याप्रमाणत्वात्। व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादिसहकारी स इति चेन्न अनवस्थाभयेन तर्कं विना व्याघातात् यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात्। यत्तु योग्यानामुपाधीनां योग्यानुपलब्ध्याभावग्रह अयोग्यानान्तु साध्याव्याप्यत्वसाधनव्यापकत्वसाधनादभावग्रह इत्यनौपाधिकत्व सुग्रहमिति तन्नुच्छम् अनुमानेन तत्साधनेऽनवस्थानात् प्रमाणान्तरस्याभावात्। ये चानुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रह वदन्ति तेषां पक्षेतरत्वस्य साध्यव्यापकत्वग्रहेऽनुमानमात्रस्योच्छेदोत अनुमानमात्रोच्छेदकत्वादेव पक्षेतरोनोपाधिरिति चेत् भ्रान्तोऽसि नहि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे साध्यव्यापकत्वेन तद्व्यतिरेकात् पक्षे साध्यव्यावर्त्तकतया व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य वज्रलेपात्। अपि च करचरणसंयोगः शरीरातिरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वाच्च बाधकं तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं नाम? तथाहिपक्ष बाधकतर्काभावाच्च तत्र व्याप्तिग्रह इत्यप्रयोजकत्वमिति”। तर्कं वेत्त्यधीते वा ठञ्। तार्किक तर्कवेत्तरि तर्कशास्त्राध्येतरि च। “तार्किकशिरोमणिस्तनुते” दीधिति।

**तर्कक** त्रि० तर्क–ण्वुल्। १तर्ककारके। २याचके हेम०। “कामैः सन्तर्पयामास कृपणांस्तर्ककानपि” भा० आ० ४५ अ०

**तर्कग्रन्थ** पु० तर्काधिकृतः ग्रन्थ शाक० त० कर्म० वा। तर्कप्रधाने ग्रन्थे “तर्कग्रन्थार्थरत्नौघो नैव स्वच्छात्यपण्डित” सुश्रुत०।

**तर्कण** न० तर्क–भावे ल्युट्। तर्कशब्दार्थोक्ते ऊहभेदे “परकीयोक्तदोषाद्यैः शङ्कामर्थस्य तर्कणम्” सा० द०

**तर्कमुद्रा** स्त्री “तर्जन्यङ्गुष्ठयोरग्रे मिथः संयोज्य चाङ्गुली। प्रसार्य्य बन्धनं प्राहुस्तर्कमुद्रेति तान्त्रिकाः” इत्युक्ते मुद्राभेदे “बाहुं प्रकोष्ठेऽक्षमालामासीनं तर्कमुद्रया” भाग० ४।६।३१।

**तर्कविद्या** स्त्री ६त०। गौतमोक्तानां प्रमाणप्रमेयादीनां षोडशानां पदार्थानां विद्यायां, कणादोक्तषट्पदार्थादिविद्यायाश्च। “आन्वीक्षकी तर्कविद्यामनुरक्तो निरर्थिकाम्” भा० अनु० १७ अ०।

**तर्कारी** स्त्री तर्कमृच्छति ऋ–अण् ङीप्। अयन्तीवृक्षे। अमर।

**तर्किन(ल)** तर्क–बा० इन(च) वा। चक्रमर्दवृक्षे रत्नमाला

**तर्किन्** त्रि० तर्क–णिनि। तर्ककारके पण्डितभेदे। “त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा” मनु। [स्वार्थे क। तर्कुक तत्रार्थे।

**तर्कु** पु० कृत उ नि०।(टेको)इति ख्याते यन्त्रभेदे। त्रिका०।

**तर्कुट** न० कृत–छेदने बा० भावे उट पृषो०।१(काटनाकाटा) सूत्रकर्त्तनभेदे त्रिका०। करणे उट। २तर्कौ स्त्री हारा० गौरा० ङीप्।

**तर्कुपिण्ड** पु० ७त०। तर्कुस्थितमृत्पिण्डे (टेकोर बाँटुल) जटाधरः। [हारा०।

**तर्कुपीठी** स्त्री स्वल्पः पीठः ङीप् पीठी ६त०। तर्कुपिण्डे

**तर्कुलासक** पु० तर्कुं लासयति चालयति लस–णिच्–ण्वुल्। तर्कुचालके यन्त्रे (चरका)। हारा०।

**तर्कुशाण** पु० ६त०। (टेकोरशाण) शाणके त्रिका०।

**तर्क्षु** पु० तरक्षु+पृषो०। मृगादने व्याघ्रभेदे शब्दरत्ना०।

**तर्क्ष्य** पु० तृक्ष–यत् बा० गुणः। यवक्षारे रत्नमा०।

**तर्ज** भर्त्सने भ्वा० पर० सक० सेट्। तर्जति अतर्जीत् ततर्ज।

**तर्ज** भर्त्सने चुरा० आ० सक० सेट्। तर्जयते अततर्जत। तर्जा तर्जना “सीतामभ्यर्थ्य तर्जित” “तया तु तर्जिताः सर्वा राक्षसीभीमा यथागतम्”। “राक्षसोऽतर्जयद्द्रुत प्रमत्तादीकयद्रूपम्” भट्टिः। बाल पुनर्गात्रमुख गृह्णीयाच्च चैन तर्जयेत्” सुश्रुत०। आर्षत्वात् पदव्यत्ययः।

**तर्जन** न० तर्ज–भावे ल्युट्। भर्त्सने “तरलतालुतर्जनविभ्रमा” माघ। पुं० तर्ज–युच्। २भर्त्सने स्त्री “यन्ता क्रमेण परिसान्त्वनतर्जनाभिः” माघः। “मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनैः” सा० द०।

**तर्जनी** स्त्री तर्ज्यतेऽनया तर्ज–करणे ल्युट् ङीप्। प्रदेशिन्यां वृद्धाङ्गुष्ठसमीपस्थे अङ्गुलिभेदे। “तर्जन्यङ्गुष्ठयोर्मध्यं पितृतीर्थं प्रचक्षते” स्मृति०। तर्कमुद्राशब्दे उदा०। मुद्राशब्दे भूरि उदा०।

**तर्जनीमुद्रा** स्त्री “वामहस्तं विधायाथ तर्जनीमध्यमे तत। प्रसार्य्य तर्जनीमुद्रा निर्दिष्टा शूलपाणिना” तन्त्रोक्ते मुद्राभेदे।

**तर्जिक** पु० तर्जस्तर्जनमस्त्यत्र ठन्। देशभेदे हेमच०।

**तर्ण** पु० तृण–अच्। मत्वे। ण्वुल्। तर्णक गोवत्से, अमर० “कण्वसमाया तर्णकपङ्क्ति” छन्दोम०। सद्योजाते २शिशौ च हेम०। [२प्लवे (भेला) शब्दार्थकल्पतरुः।

**तर्णि** पु० तरत्याकाशमनेनेति तॄ–नि करणे नि वा। १सूर्य्ये

**तर्त्तरीक** न० तॄ–करणे ईक फर्फरीका० नि०। १नौकाभेदे कर्त्तरि ईक। २पारगे त्रि० मेदि०।

**तर्द** हिंसायां भ्वा० पर० सक० सेट्। तर्दति अतर्दीत्। ततर्द। "चेष्टे कपो रथाश्वाश्च रिपोस्ततर्द शाखिना"। "सुग्रीव प्रवच नेमे वज्रग्रावस्ततर्द च" भट्टिः।

**तर्दू** स्त्री तर्द हृद-वा ऊ। काष्ठनिर्मितायाम् दर्व्याम् अमरः।

**तर्द्मन्** पु० तर्द–तृद वा मनिन्। १चषालच्छिद्रप्रवेशे "द्व्यङ्गुल त्र्यङ्गुल वा तर्द्मातिक्रान्त यूपस्य" कात्या० श्रौ० ६।१।२०। "तर्द्मातिक्रान्त चषालच्छिद्रप्रवेशादतिक्रान्तम्" कर्कः। आधारे मनिन्। २तर्दनप्रदेशे च। "तर्द्म समूते पश्चाद्गृहपतस्तादिमानेव" शत० ब्रा० १।२।१।२ तर्द्म समूते इति ययोरुभयोर्मार्गयोः समदेशयोः सम्बन्धो भवति यथा च तर्दनप्रदेशेषु पश्चाद्भागे कृते परस्पर स्यूते भवत तस्यैकस्योपर्यपरमास्तृणुयात्" भा०

**तर्पण** न० तृप–णिच् भा ल्युट्। १तृप्तौ २प्रीणने च अमरः ३यज्ञकाष्ठे हेमच०। स्नातकादिभिः प्रत्यहं कर्त्तव्ये पञ्चमहायज्ञान्तर्गते ४महायज्ञभेदे स च पितृयज्ञः। पितॄणां तृप्तिहेतुत्वादस्य तथात्वम् तत्प्रकारः श्रा० त० उक्तो यथा "तच्च द्विविधं प्रधानमङ्गञ्च। तत्राद्यमाह शातातपः "तर्पणन्तु शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्"। विवरणमपि तत्र काशीखण्डम् "तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः। तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम्"। द्वितीयन्तु ब्रह्माण्डपुराणीयम् "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते। तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम्"। तर्पणाकरणे दोषमाह योगियाज्ञवल्क्यः "नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतान्। पिबन्ति देहरुधिरं पितरो वै जलार्थिनः"। तर्पणमधिकृत्य ब्रह्मपुराणम् "तस्मात् सदैव कर्त्तव्यमकुर्वन् महतैनसा। युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्बिभर्त्ति हि"। शङ्खलिखितौ "नैष्कारचिते स्थाने पितॄंस्तर्पयेत्"। मार्कण्डेयपुराणम् "यत्र सर्व्वाय भोक्तव्य यथाभोज्यनिपानजम्। तदम्बं सलिलं तात! सदैव पितृकर्म्मणि"। विष्णुः "स्नात आर्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्य्यात्। परिवर्त्तितवासास्तीर्थमुत्तीर्य्य"। अत्रापि तीर्थे विशेषमाह मत्स्यपुराणे "तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः। सदा न हस्तेनैकेन गृहे श्राद्धं समिष्यते"। अत्र जलस्थैरित्यनेन स्थलस्थानामपि जलस्थत्व नियम्यते। ततश्च "अन्तरुदक आचान्तोऽन्तरेव पूतो भवति। बहिरुदके आचान्तो बहिरेव पूतो भवति तस्मादन्तरेकं बहिरेकञ्च पादं कृत्वा आचामेत् सर्व्वत्र शुद्धो भवति" इति पैठीनसिवचनात् जलस्यैकचरणस्याचमनेनोभयकर्त्तार्हत्वात् तर्पणकाले तीर्थे जलैकचरणेन भवितव्यम् अन्यत्र त्वनियमः। तत्र पाणिजले तर्पणनिषिद्धमिति। स्थलस्थतर्पणे आग्नेयपुराणम् "प्रागग्रेषु सुरांस्तर्प्येन्मनुष्यांश्चैव मध्यतः। पितॄंश्च दक्षिणाग्रेषु इत्यादिति जलाञ्जलीन्"। अशुचिदेशे तु विष्णुः "यत्राशुचिस्थलं वा स्यादुदके देवतापितॄन्। तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम्"। बृहस्पतिः "ब्रह्मयज्ञसिद्ध्यर्थं विद्यास्वाध्यायतोऽनिशं जपेत्। जप्त्वाथ प्रणवं चापि ततस्तर्पणमाचरेत्"। एतच्च तर्पणं ब्रह्मयज्ञानन्तरं छन्दोगेतरपरम्। तेषान्तु वैश्वदेवाय चोपजाय इत्यन्तसूर्य्योपस्थानानन्तरं गोभिलेन तर्पणाभिधानात्। "आप्लवने तु समाप्ते तर्पणं तदनन्तरम्"। "गायत्रीञ्च जपेत् पश्चात् स्वाध्यायञ्चैव शक्तितः"। आप्लवने तु समाप्ते गायत्रीं जपेत् पुरा। तर्पणं कर्मतः पश्चात् स्नानमेव वृथा भवेत्" इति गोभिलीयवचनाच्च। तत्र "प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान्। उदङ्मनुष्यान् येन पितॄन् दक्षिणतस्तथा। अप्सु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः। पितॄंस्तु कुशमूलाग्रैर्विधिः कौशो यथाक्रमम्"। एतच्च "गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्" इति यमवचनस्थगोशृङ्गपदं प्रादेशमात्रपरम्। स्थलोदके तु हारीतः "पात्राज्जलमादाय शुभे पात्रान्तरे क्षिपेत्। जलपूर्णेऽथ वा गर्त्ते न स्थाने तु विवर्जयेत्"। अत्र यदि यदुपक्रम्य श्रुत यत्र येन सह समभिव्याहृत तदेव तत्रैवाङ्ग भाव्यमिति बोध्यं तदङ्ग इतरत् समभिव्याहारप्रकरणाभ्यामिति गोतमसूत्रात् तेन पद्मपुराणीयस्नाने तदङ्गमेव तर्पणम्। "तद्यथा ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिम्। देवा यक्षास्तथा नागा गन्धर्व्वाप्सरसोऽसुराः। क्रूराः सर्पाः सुपर्णाश्च तरवो जम्भगाः खगाः। विद्याधरा जलाधारास्तथैवाकाशगामिनः। निराहाराश्च ये जीवाः पापे धर्मे रताश्च ये। तेषामाप्यायनायैतद्दीयते सलिलं मया"। एतेनैवाञ्जलिरिति सर्वेषां मतम्। "कृतोपवीती देवेभ्यो निवीती च भवेत्ततः। मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा"। इतश्च सनन्द

तृतीयश्च सनातन । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा । सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा । मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च । देवान् ब्रह्मर्षीन् सर्वांस्तर्पयेदक्षतोदकैः । अपसव्यं ततः कृत्वा सव्यं जानु च भूतले । अग्निष्वात्तास्तथा सौम्यान् हविष्मतस्तथोष्मपान् । सुकालिनो बर्हिषद आज्यपांस्तर्पयेत्ततः । तर्पयेच्च पितॄन् भक्त्या सतिलोदकचन्दनैः । दर्भपाणिस्तु विधिना हस्ताभ्यां तर्पयेत्ततः"। अत्र केचित् पितृधर्मातिदेशात् दिव्यपितॄणामपि अञ्जलित्रयदानम् । तदसत् "कव्यवाडनलः सोमं यमश्चार्यमणस्तथा । अग्निष्वात्ताः सोमपाश्च बर्हिषदः सन्तु सन्तु" इति छन्दोगपरिशिष्टेन विशिष्टैकाञ्जलिविधानात् । "पित्रादीनामगोत्रे च तथा मातामहानपि । सन्तर्प्य भक्त्या विधिवदिमं मन्त्रमुदीरयेत् । येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः"। अत्र ब्रह्मादिचतुर्णां तर्पणप्रयोगाकाङ्क्षायां गोभिलयाज्ञवल्क्योक्तप्रयोगविधिर्ग्राह्यः । स च "अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु । तृप्यतामिति सक्तव्यं नाम्ना तु प्रणवादिना"। अन्वारब्धेन पश्चाल्लग्नेन अग्रादेव वचनात् तर्पणाभिलापे प्रणवादित्वं तृप्यतामिति च लभ्यते । ततश्च ओं ब्रह्मा तृप्यतामिति प्रयोगः । देवा इत्यादि भवेत्यन्तेन मन्त्रलिङ्गादेकाञ्जलिः । तथा सनक इत्यादि सदा इत्यन्तेनैकाञ्जलिरेव पुनरपि । "एकैकमञ्जलिं दत्त्वा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम्" इति व्यासगोभिलस्मृतिवचनात् । नतु द्वौ द्वाविति वीप्साश्रुतेः सनकादिप्रत्येकम् एव द्व्यञ्जलिरिति वाच्यं प्रत्येकपक्षे द्वौ द्वौ समुदायपक्षे तु मन्त्रस्तरोधेन तथैव युक्तत्वात् । अत्राञ्जलिपदं प्रागुक्तान्वारब्धेनेति श्रवणात्तथाविधहस्तद्वयपरम् तद्वैकल्पिकाञ्जलिपरं वा देवादिपक्षे । पितृपक्षे तु "तौ युताबञ्जलिः पुमान्" इत्येतत्परं पद्मपुराणीयतर्पणपक्षे तु पितृपक्ष एव हस्ताभ्यामिति श्रुतेस्तथैवाञ्जलिः । अन्यत्र नाञ्जलिरित्यवगम्यते । आचारमाधवीये प्रचेताः "मातृमुख्यास्तु याश्चान्यास्तासां दद्यात्त्रिरञ्जलीन्"। इति । पराशरभाष्ये सनकादिदिव्यमनुष्याणां तर्पणादिकं सामगेन प्राङ्मुखेन तदितरेणोदङ्मुखेन कर्त्तव्यं

तथा च परिशिष्टधृत सामवेदीयषड्विंशब्राह्मणं "मनुष्याणामेषा दिक् या च प्रतीचीति"। तथाच ज्योतिष्टोमे श्रूयते "प्राचीं देवा अभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्या उदीचीमसुरा अपरेषामुदीचीं मनुष्याः"। यत्तु "कृतजप्योऽन्तर्जानुरुदङ्मुखः । दिव्येन तीर्थेन देवानुदकेन तर्पयेत्" इति शङ्खलिखितस्मृत देवतर्पणे उदङ्मुखत्वविधायकं तच्छ्रुतिविरोधात् शाखान्तरीयम् असक्तविषयकम् । उदकेनेतिश्रवणात् यवादीनि फलाधिक्यार्थं व्यवहारोऽपि तथा । यत्तु "निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ । कुशस्य मध्यदेशेन स्वतीर्थेन उदङ्मुखः" इति विष्णुनाहन्तप्रयोगेण जलदानमुक्तं तत् सनकादिमनुष्यतर्पणे यथा "सनकश्च तृप्यतां तस्मै तदुदकं हन्त" इत्यादौ न तु पद्मपुराणीयनिखिलतर्पणे "दत्तेनाम्बुना" अनेन दत्तस्य पुनस्त्यागासम्भवात् । स्वतीर्थेन कनिष्ठाङ्गुलिमूलेन "प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक्" इति विष्णुपुराणीयैकवाक्यत्वात् । मरीच्यादि ऋषितर्पणन्तु अङ्गुल्यग्रेण "अङ्गुल्यग्रमार्षम्" इति यमवचनात् एतच्चार्षदेवतीर्थयोरङ्गुल्यग्ररूपैकदेशत्वसाधर्म्येण । मरीच्यादितर्पणे तु दिगाद्याकाङ्क्षायां देववदिति । अतएव योगियाज्ञवल्क्यवचने सनकानित्यत्र मनुष्यानिति विशेषणं दत्तम् । ब्रह्माद्यानित्यत्र देवानिति विशेषणं दत्तमिति व्यवहारोऽपि तथा । मरीचिः "सौवर्णेन तु पात्रेण ताम्ररूप्यमयेन वा । औडुम्बरेण खड्गेन पितॄणां दत्तमक्षयम् । विना रूप्यसुवर्णेन विना ताम्रमयेन वा । विना तिलैश्च दर्भैश्च पितॄणां नोपतिष्ठते"। एतच्च समस्ताभावे बोध्यं नतु एकस्याभावे शङ्खः । "सौवर्णेन तु पात्रेण राजतेनौडुम्बरेण च । खड्गपात्रेण शङ्कुना वाप्युदकं पितृतीर्थं स्पृशन् दद्यात्"। शङ्कुः सुवर्णकीलकः । "अक्षतोदकैर्यवाङ्गैस्तर्पयेद्देवान् सतिलाभिः पितॄंस्तथा" इति छन्दोगपरिशिष्टेनापि पितृपक्षे तिलोदकमात्रविधानात् । पद्मपुराणे चन्दनविधानं फलाधिक्यार्थम् । अपसव्यं प्राचीनावीतित्वम् । उपवीतित्वम् प्राचीनावीतित्वञ्चाह गोभिलः "दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमन्वलम्बं भवति एवं यज्ञोपवीती भवति । सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेऽंसे प्रतिष्ठापयति सव्यं कक्षमन्वलम्बं

भवति एव प्राचीनावीती भवति" इति। प्रतिष्ठापयति यज्ञोपवीतमिति शेषः। तथाचामरसिंहोऽपि "उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे। प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम्" इति। "सावित्री ग्रन्थिसंयुक्तम् उपवीतं तवाच्युत" इति ब्रह्मपुराणीयपूजाप्रदर्शनात्। गायत्रीमन्त्र एव उपवीतं कर्त्तव्यमिति प्रतीयते। लौकिकास्तु सावित्रीग्रन्थिरिति वदन्ति प्रवरसङ्ख्यया वेष्टनग्रन्थिरिति लौकिकव्यवहारः। विद्याकरधृत "यथा यज्ञोपवीतम्"। इत्यादिवाक्यात् उत्तरीयमपि यज्ञोपवीतवत् सव्यापसव्यत्वादिना धार्य्यमिति स्मृतितत्त्वे। पितामहीत्यादिना मातामहादित्रयपरिग्रहः। तथाच विष्णुपुराणे "नृपः प्रीणनायाय देवानामपवर्जयेत्। प्रजापतेश्च यथान्याय सहस्रापि प्रजापतेः। पितॄणां प्रीणनार्थाय नृपः पृथिवीपते॥ पितामहेभ्यश्च तथा प्रीणयेत् प्रपितामहान्। मातामहाय तत् पित्रे तत्पित्रे च समाहित। दद्यात् पैत्रेण तीर्थेन काम्यञ्चान्यत् शृणुष्व मे"। स्मृतिसारे धृतम् "वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्। साङ्गुष्ठकं च पाणौ रोमकूपे न कुर्वचित्"। जलतर्पणे रोमरहितप्रदेशे वामपाणौ वस्त्राच्छादिते तिलान् संस्थाप्य मुद्रारहितदक्षिणहस्ततर्ज्जन्यङ्गुष्ठयोरन्यतरेण तिलान् गृहीत्वा वामहस्ततलेन स्थापयित्वा तर्पयेदिति मदनपारिजातः। अतएव मरीचिः "मुक्तहस्तास्तु दातव्यं न मुद्रां दर्शयेत् क्वचित्। वामहस्ते तिला ग्राह्या मुक्तहस्तस्तु दक्षिणम्"। मुक्तहस्त प्रसारितहस्तं यथा स्यात्। एव मुद्रा प्रदेशिन्यङ्गुष्ठयोगे बन्धरूप। मुक्तहस्तस्तु दक्षिणम्' इति दक्षिणहस्तं तिलरहितं कुर्य्यात् इति मैथिलकालीनकल्पतरुः। तथाच नारदीये "अङ्गुष्ठानामिकाभ्यान्तु दक्षिणस्येतरस्थितान्। तिलान् गृहीत्वा पाणिस्थान् ध्यात्वा सन्तर्पयेत् पितॄन्"। देवलः। "रोमसंस्थान् तिलान् कृत्वा यस्तु संतर्पयेत् पितॄन्। पितरस्तर्पितास्तेन रुधिरेण मलेन च"। वृष्टिजलसम्पर्के तर्पणनिषेधमाह वायुपुराणम् "मेघे वर्षति यः कुर्य्यात् तर्पणं ज्ञानदुर्बलः। पितॄणां नरके घोरे गतिस्तस्य भवेद्ध्रुवम्"। तथा "शूद्रोदकैर्न कुर्वीत तथा मेघादिनिःसृतैः"। इति मेघादिदर्शनादिति कौमुदी। योगियाज्ञवल्क्यः "यद्युद्धृत जलस्थेन्तु तिलान् सम्मिश्रयेज्जले। अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः"। अत्र शेषार्द्धं मदनपारिजाते लिखितम्। "अन्यथा वामहस्तेन तत्तर्पणमाचरेदिति"। वायुपुराणम्। "तिलदर्भैस्तु संयुक्तं श्रद्धया यत् प्रदीयते। तत्सर्वममृतं भूत्वा पितॄणामुपतिष्ठते"। स्मृतिः "रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे। सप्तम्यां जन्मदिवसे न कुर्य्यात्तिलतर्पणम्"। मत्स्यपुराणे "सङ्क्रान्त्यां निशि सप्तम्यां रविशुक्रदिने तथा। श्राद्धे जन्मदिने चैव न कुर्य्यात्तिलतर्पणम्"। श्राद्धे अमावास्यातिरिक्तश्राद्धे "मौनव्रतविमोक्षेण अमावास्यां तिलोदकैः। नवोढ टीमदानेन पितॄणा मपृषो भवेत्। अमावास्यान्तु ये मर्त्त्याः प्रयच्छन्ति तिलोदकम्। पात्रमौदुम्बरं गृह्य मधुमिश्रं ततो घना॥ कृतं भवति तत् श्राद्धं रहस्यञ्च यदा भवेत्। विशेषतश्च जाह्नव्यां सर्वदा तर्पयेत् पितॄन्। न कालनियमस्तत्र क्रियते सर्वकर्मसु"। बौधायनः "न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्। सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु च"। स्मृतिः "निषिद्धदिनमासाद्य यः कुर्य्यात्तिलतर्पणम्। रुधिरं तद्भवेत्तोयं दाता च नरकं व्रजेत्"। प्रतिप्रसवमाह स्मृतिः "अयने विषुवे चैव सङ्क्रान्त्यां ग्रहणेषु च। उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे। सूर्य्यशुक्रादिवारेऽपि न दोषस्तिलतर्पणे। तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्वदा"। स्कन्दपुराणम् "तीर्थमात्रे तु कर्त्तव्यं तर्पणं सतिलोदकैः। योऽन्यथा तर्पयेन्मूढः स विठायी भवेत् क्वपि। विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत् पितॄन्"। एतत्तु निषिद्धदिनतर्पणविधायकम्। "तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके। निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम्" इति मदनपारिजातविद्याकरराजपेयिधृतमरीचिवचनात्। तिलाभावे पितृतीर्थेन प्रतिनिधिना तर्पणम् "तिलानामप्यभावे तु सुवर्णरजतान्वितम्। तदभावे निषिञ्चेत्तु दर्भैस्तोयैर्न चान्यथा" इति याज्ञवल्क्यात्। सुवर्णरजतान्वितं सुवर्णरजतस्पृष्टम्। अतएव "हस्तं सकलं पुण्यं यज्ञदानादिकं भवेत्। गङ्गातोयेन सतिलैर्दर्भैः पितृतर्पणम्" इति भविष्यपुराणे गङ्गातोयस्य दुर्लभत्वकथनम् न च तदभावात्तर्पणाभावः। शातातपः "पितॄणां पितृतीर्थेन जल विसृजणो-

विधिः। दक्षिणेनाथ गृह्णीयात् पितृतीर्थं समीपतः"। गोभिलः "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि। गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति। सर्वत्रैव पितः प्रोक्तं पिता तर्पणकर्मणि। पितुरक्षय्यकाले तु अक्षया तृप्तिरिष्यते। शर्मन्नर्घ्यादिके कार्य्यं शर्म्मा तर्पणकर्म्मणि। शर्मणोऽक्षय्यकाले तु पितृणां दत्तमक्षयम्"। काष्णाजिनिः "नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः। आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्"। योगियाज्ञवल्क्यः "नामगोत्रस्वधाकारैस्तर्प्याः स्युरनुपूर्वशः"। तेन अमुकगोत्र पिता अमुकदेवशर्म्मा तृप्यतामेतत्तिलोदकं तस्मै स्वधेति प्रयोगः सिध्यति। एवं मातामहादौ। एष चासम्बुद्धिप्रयोगो वाजसनेयीतरपरः। तेषान्तु सम्बुद्ध्यन्ततामाह ब्राह्मणसर्वस्वे जातूकर्ण्यः "प्रमीतपितृकस्तु-यन्नस्त्वावाह्य नामगोत्रमुदाहृत्य यावता पितृकार्य्यमत्रावेतत्ते उदकमिति पितॄन् पितामहान् प्रपितामहान्। एकैकस्मै त्रींस्त्रीन् दद्यात्"। अत्र असाविति नाम गृह्णातीति कात्यायनोक्तः नाम्नः ते इति युष्मत्प्रयोगात् सम्बुद्ध्यन्तता प्रतीयते तस्य सम्बुद्ध्यन्तमात्रस्यापेक्षितत्वात्। असम्बुद्धिप्रथमान्तत्वेऽन्वयापत्तेः। ततश्चामुकगोत्र। पितरमुकदेवशर्म्मन् तृप्यस्वैतत्ते तिलोदकं स्वधेति प्रयोगः सिध्यति। एवं मातामहानामपि। ततो मात्रादीनां षण्णां तर्पणानि। द्वादशानां मध्ये यो जीवति तं विहाय तत्प्रपितामहादीन् गृहीत्वा पूरयेत्। एष प्रव्रजिते पतिते च। ततो विमातृज्येष्ठभ्रातृपितृव्यमातुलादींस्तर्पयेत्। मनुः "बान्धवानां तथा सुहृदां तर्पयेत्" सुहृदो मित्रादयः। मित्रायाप्यसवर्णाय जलं न देयम्। "सवर्णेभ्यो जलं देयं नान्यवर्णेभ्य एव च" इति याज्ञवल्कीयात्। भीष्मायासवर्णायापि भीष्माष्टम्यां तर्पणं कार्य्यम् "ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम्। संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम।" इत्यादि वचनात्। मन्त्रस्तु "वैयाघ्रपद्यगोत्राय इत्यादि। ब्राह्मणेनैतत् पितृतर्पणानन्तरं कार्य्यम् अन्येन पितृतर्पणात् पूर्व्वम्। अत्र वीजं तर्पणक्रममिति हलायुधः। अपसव्येन दक्षिणामुखेन सतिलोदकेन सकृत् कर्त्तव्यम्। ततः कृताञ्जलि" "भीष्मः शान्तनवो वीर" इत्यादि पठेत्। ततो येऽबान्धवा बान्धवा वा इत्यादिना एका-ञ्जलिर्देयः। योगियाज्ञवल्क्यः "निष्पीडयति यः पूर्व्वं स्नानवस्त्रन्तु तर्पणात्। निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः"। तथा "अवमकरणस्तस्य अपसव्येन पीडनम्। अवमकरणवत् स्नानोच्छिष्टमीमांसाविकारणवत् तस्याधोवस्त्रस्य "स्नानमात्रान्तु दातव्या कर्दमस्तो विमुक्तये" इति पठितवचने अधोवस्त्रस्य दुष्टस्यैव शुद्धये प्रदानं प्रतीयते। योगियाज्ञवल्क्यः "वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः। भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले"। अत्र मन्त्रमाह गोभिलः "ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः। ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्"। अयञ्चो मन्त्रः। "आब्रह्मस्तम्बपर्य्यन्तं जगत् तृप्यत्विति क्रमात्। अञ्जलित्रितयं दद्यात् एतत् सङ्क्षेपतर्पणम्"। "आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः। तृप्यन्तु सर्व्वे पितरो मातृमातामहादयः। अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्। आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्"।

अमावास्यां तर्पणस्य फलं यथा "तस्यां तिथौ वारिमात्रं पितृणां यः प्रयच्छति। गयाश्राद्धं कृतं तेन शताब्दं नात्र संशयः" ब्रह्म०वै० श्रीकृष्णजन्मखण्डे। तर्पणस्य देवर्षिपितृमनुष्याणां जलाञ्जलिदानेन तृप्तिसम्पादनम्। यथा "एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः। नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः। आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्। त्रींस्त्रीनञ्जलीन् दद्यादाकाशे दक्षिणे तथा०। वसित्वा वसनं शुष्कं स्थले चास्तीर्णबर्हिषि। विधिज्ञस्तर्पणं कुर्य्यान्न पात्रे तु कदाचन। यदर्पणं क्रूरमध्ये तु यदमेध्यन्तु किञ्चन। अशान्तं मलिनं यच्च तत् सर्व्वमपगच्छतु। गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना। प्रक्षिपेद्दिक्षु नैरृत्यां रक्षोपहतये द्रुतम्। अनार्जितन्तु यद्भुक्तं पापाद्यच्च प्रतिग्रहम्। दुष्कृतं यच्च मे किञ्चिद्वाङ्मनःकायकर्म्मभिः। पुनातु मे तदिन्द्रस्तु वरुणः स बृहस्पतिः। सविता च भगश्चैव मुनयः सनकादयः। आब्रह्मस्तम्बपर्य्यन्तं जगत् तृप्यत्विति ब्रुवन्। क्षिपेदपोऽञ्जलींस्त्रींस्तु कुर्व्वन् सङ्क्षेपतर्पणम्" गारुडे २१५ अ०। तर्पणविशेषस्तु गारुडे २१९ अ० वह्निपुराणे नित्यास्नानविधाननामाध्याये च द्रष्टव्यः। जीवत्पितृकस्य

तर्पणनिषेधो यथा "दर्शश्राद्धं गयाश्राद्धं तिलैस्तर्पणमेव च। न जीवत्पितृको भूप! कुर्य्यात् तनयकामुयाम्" कालिका० पु० ८८ अ०। कर्त्तरि ल्यु। ५तृप्तिकारके त्रि०। "सुरभिप्रीणतर्पण" अमरः। "सन्तर्पणो नाकसदां वरेण्य" भट्टिः।

**तर्पणी** स्त्री तृप–णिच्–करणे ल्युट् ङीप्। गुरुस्कन्दवृक्षे शब्दमा०।

**तर्पणेच्छु** पु० तर्पणमिच्छति इष उ० नि० २त०। १भीष्मे शब्दर०। २तर्पणेच्छुमात्रे त्रि०।

**तर्पिन्** त्रि० तृप–णिच्–णिनि। १तर्पके प्रीणयितरि स्त्रियां ङीप् सा च २पद्मचारिणीलतायाम् स्त्री शब्दच०।

**तर्पिली** स्त्री तृप–बा० इल गौरा० ङीप्। पद्मचारिणीलतायाम्। कपिलका० रस्य वा लः। तल्लिकीतिरूपान्तरं तत्रार्थे। स्वार्थे क। तर्पिलिका तत्रार्थे। तत्रापि वा रस्य ल। तल्लिलिकापि तत्रार्थे।

**तर्व** गतौ भ्वा० पर० सक० सेट्। तर्वति अतर्वीत्। ततर्व।

**तर्वट** पु० तर्वति सततं गच्छति तर्व–अटन्। १वत्सरे २चक्रमर्दवृक्षे च राजनि०।

**तर्मन्** न० तॄ-मनिन्। यूपाग्रभागे अमरः।

**तर्य** पु० ऋषिभेदे। "सदापृणो यजतो वि द्विषो वधीद्बाहुवृक्तः श्रुतवित्तर्य्यः" ऋ० ५।४४।१२ "सदापृणादयः पञ्चर्षय इति भाष्योक्तेः।

**तर्ष** पु० तृष–भावे घञ्। १अभिलाषे २तृष्णायाञ्च अमरः। "निवृत्ततर्षैरुपगीयमानात्" भाग० १।८ तर्षच्छेदो न भवति पुरुषस्येह कल्मषात्। निवर्त्तते तदा तर्षः पापमन्तर्गतं यदा" भा० शा० २०४ अ०। तॄ–कर्मणि करणे–वा स। ३समुद्रे ४भेलके च उज्ज्वल०।

**तर्षण** न० तृष–भावे ल्युट्। पिपासायां जटाधरः। [त्रिका०।

**तर्षित** त्रि० तर्षो जातोऽस्य तार० इतच्। तृषिते पिपासौ

**तर्षुल** त्रि० तृष–बा० उलच्। तृष्णायुक्ते "ज्ञानेन्द्रियाणीन्द्रियार्थान् नोपसर्पन्त्यतर्षुलम्" भा० २१२ अ०।

**तर्ष्यावत्** त्रि० तृषावत् वेदे पृषो०। तृष्णायुक्ते। "निरुद्धचिन्मह्विषस्तर्ष्यावत् गोषा" १०।२८।१०। "तर्ष्यावान् तृषावान्" भा०।

**तर्हि** अव्य० तद्+र्हिल्। तस्मिन् काले इत्यर्थे। "दर्शोऽपि वा एन तद्धीक्षन्ते यर्हि न जायते" ऐत० ब्रा०। "यर्हि वाव वो मयार्थो भविता तर्ह्येव वोऽहं पुनरागन्तास्मि" तै० स०।

**तल्ल** प्रतिष्ठायां वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट्। ताल्लयति ते तल्लति। अतीतलत् त अतल्लीत्। ताल्लयाम् बभूव आस चकार। ततल्ल तेलतुः ततल्लम्।

**तल** पु०न० तल–अच्। स्वरूपे "ग्रैवेयनद्धेषु शिलातलेषु" कुमा०। "हिमवाम्ति दर्पणतले च कुङ्क" माघ। "विदाङ्कुर्वन्तु मरुतस्तल विहियद्भूय" "तलं स्वरूप प्रमाणं चेति" मल्लिना०। २व्याघातशरणे। ३कानने ४कार्य्यबीजे न० मेदि०। ५गर्त्ते पु० त्रिका०। ६पादतलस्य मध्ये हेमच०। "इदं रसातलं नाम सप्तमं पृथिवीतलम्" भा० वि० २६० अ०। "मुक्ताजालमिव व्योम कुर्वन् व्योमेव भूतलम्" रघुः। ७तालवृक्षे पु० ८चपेटे (चड़) ९तृत्सरौ १०खड्गमुष्टौ ११मध्यहस्तेन तन्त्रीवादने पु० मेदि०। १२गोधायां पु० हेमच०।

**तलक** न० तल–वा०वुन्। पुष्करिण्याम् (तलाओ) हारा०।

**तलकीट** पु० कृमिभेदे "तलकीटस्य बीजेषु पचेद्गुञ्जारिकाघृतम्" सुश्रुते श्वासचिकित्सायाम्।

**तलताल** पु० तलेन करतलेन ताड्यते ताड–कर्मणि घञ् डस्य ल। करतलेन वादनीये वाद्यभेदे "आस्फोटयन् क्ष्वेलयंश्च तलतालं च वादयन्" भा० व० १७८ अ०।

**तलत्राण** न० तलं करतलं त्रायते त्रै–ल्यु करणे ल्युट् वा। करतलत्राणकारके करतलरक्षके चर्ममये गोधाभेदे "यत्तैतस्ततलत्राणा सुयोधनपुरोगमाः" भा० द्रो० ११८ अ०। "निबद्धासिततलत्राणः न्यायधर्मानुगत" भा० स० ६७ अ०।

**तलप्रहार** पु०तलेन चपेटेन प्रहारः प्र+हृ घञ् ३त०।(चापड़मारा) चपेटाघाते। "तलप्रहारमशनेः सदृशं भीमनिस्वनम्" रामा० सु० ७६ अ०। [नलमीने अमरे पाठान्तरम्।

**तलमीन** पु० तले जलनिम्ने स्थितो मीनः। (चिङ्गड़ि)

**तलयुद्ध** न० तलस्य चपेटस्याघातेन युद्धम्। चपेटाघातेन युद्धे (चड़ाचड़ि) "बाहूनां तलयुद्धं च पादं समृद्धं वा" ह० स० ४७अ० तलशब्दे इति पाठान्तरम्।

**तललोक** पु०तलस्थो निम्नस्थः भूमेस्तलस्थो लोकः। पाताले "स्वर्लोकपालान् खगलोकपालान्, लोकपालांस्तललोकपालान्" भाग० २।४६।४१ अ०।

**तलव** त्रि० तल'हस्तादितल वाति भिहन्ति ताडयति वा–गतिहिंसनयोः क। तलवाद्यवादके। "ताल्लायाप्रन्दाय तलवम्" यजु० ३०।२०। "तलव तलवाद्यवादनम्" वेददी०।

**तलवकार** पु० सामवेदशाखाभेदे "छान्दोग्ये तवल्कारा-(तलवकारा) दिशाखाभेदेषु विलक्षणागीतिच्छेदतोऽक्षर-विकारादय आम्नायन्ते" शा० सू० भाष्यम्। तस्योपनिषत् "केनेषितं पततीत्यादि"।

**तलवारण** न० तले मांसतले वारयति ज्याघातम् वारि-ल्यु। ज्याघातवारणार्थे हस्ततले बद्धे (चामाटी) चर्मभेदे

**तलसारक** न० तले पद्य स्थानाधोभागे सारोबल यस्मात् कप्। अश्वस्य वक्षोऽधोभागे बद्धरज्जुभेदे (तङ्) हेमच०।

**तलहृदय** न० तलस्य हृदयमिव। पादतलस्य मध्यस्थाने हेम०

**तला** स्त्री तल ज्याघातवारणार्थत्वेनास्त्यस्याः अच्। १ज्याघातवारणार्थे हस्तबद्धे चर्ममये पदार्थे (चामाटी) अमरे पाठान्तरम् तलाऽस्त्यस्य इनि। २गोधायुक्ते त्रि०। "ततः कवचधारी च तली खड्गी शरासनी" भा० उद्यो० १५७ अ०।

**तलाची** स्त्री तलमञ्चति अन्च-क्विप् ङीप् अचतेरल्लोपे पूर्वाणो दीर्घः। मत्स्यनिर्मित कटे (दडमा) हारा०।

**तलातल** न० सप्तसु अधोभुवनेषु पातालभेदे "ततोऽधस्तात्तलातले मयोनाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता पुरारिणा त्रिलोक्याः सचिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्धपदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते" भाग० ५।२४।२८ "अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमिति" भाग० ५।२४।११। पातालकथने।

**तलिका** स्त्री तल पद्य स्थलतल बन्धनस्थानत्वेनास्त्यस्य वा० ठन्। अश्वहृदयस्थरज्जुभेदे (तङ्) हेमच०।

**तलित्** स्त्री तडित्+डस्य लः। विद्युति शब्दार्थचि०।

**तलित** न०तल+तारका० इतच्। भृष्टमांसभेदे। यथा "शुद्धमांसविधानेन मांसं सम्यक् प्रसाधितम्। पुनस्तदाज्ये संभृष्टं तलितं प्रोच्यते बुधैः। अस्य गुणाः। "तलितं बलमेधाग्निमांसौजःशुक्रवृद्धिकृत्। तर्पणं लघु सुस्निग्धं रोचनं दृढताकरम्" भा०प्र०।

**तलिन** न० तल-इनन्। १शय्यायां हारा०। २विरले ३स्तोके ४स्वच्छे त्रि० मेदि० ५दुर्बले त्रि० हेम०।

**तलिम** न० तल-बा० इमन्। १कुट्टिमे (छात) २शय्यायां ३खड्गे ४वितानके च मेदि०।

**तलुन** पु० तल-उनन्। १वायौ २यूनि त्रि० स्त्रियां ङीप्।

**तलेक्षण** पुस्त्री तले ईक्षणमस्य। शूकरे शब्दार्थकल्प० स्त्रियां जातित्वात् ङीष्।

**तलोदरी** स्त्री तलं निम्नमुदरमस्याः बह्वचकत्वेऽपि नासिकोदरेत्यादिविशेषोक्तेः ङीष्। कृशोदर्यां भार्यायां शब्दार्थकल्पतरुः। [हारा०।

**तलोदा** स्त्री तले उदकं यस्याः उदकस्य उदादेशः। नद्यां

**तल्क** न० तल-बा० कन् न कित्त्वम्। वने त्रिका०।

**तल्प** पु न० तल-पक्। १शय्यायाम्, २अट्टालिकायाम्, ३दारेषु च अमरः। "अग्निविप्र तल्प आसीनमर्हयेत् प्रथमं गवा" मनुः। "औदुम्बरस्तल्पो भवति" तैत्ति० १।२।६।५ "सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार" रघुः। "यत्नातपे दाववमिवाधितल्पम्" माघः। "सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः"। "गुरुतल्पोऽभिभाष्यैनस्तप्ते स्वप्यादयोमये" मनुः। "गुरोस्तल्पं तल्पं कलत्रं यस्य" प्राय०वि०। "आचार्याणीं स्वां च सुतां गच्छंस्तु गुरुतल्पगः" याज्ञ०। "पितृव्यदारगमने भ्रातृभार्यागमे तथा। गुरुतल्पव्रतं कुर्यान्नान्या निष्कृतिरुच्यते" संवर्त्त "स ज्ञेयो गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः" "यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा" मनुः। तल्पे भवः यत् तल्प्य रुद्रभेदे पु० "नमस्तल्प्याय गेह्याय" यजु० १६।४४। तल्पे साधु यत्। तल्प्य शय्यासाधौ त्रि० "शत तल्प्या राजपुत्रा आशापालाः" शत ब्रा० १३।१।६।२।

**तल्पकीट** पु० तल्पे खट्वायां जातः कीटः शा० त०। (छारपोका) कीटभेदे शब्दार्थचि०।

**तल्पक** पु० तल्पे तत्संस्कारेऽधिकृतः वा० कन्। शय्यारचनायामधिकृते दासभेदे। "सूपव्यञ्जनकर्त्तारस्तल्पकाः व्यञ्जकास्तथा। प्रसाधका भोजकाश्च गात्रसंवाहका अपि" कामन्दकीयनीतौ चरभेदकथने।

**तल्पन** न० तल्पमिवाचरति, तल्प+क्विप्-कर्त्तरि ल्यु। १करिपृष्ठे २पृष्ठवंशस्य मांसे च हारा०।

**तल्पल** न० तल्पं तथाकारं लाति ला-क। करिपृष्ठवंशे "सान्द्रत्वक्कास्तल्पलाश्लिष्टकक्षा" माघ "तल्पला पृष्ठवंशाः" मल्लि० हारावल्यां तल्पनेत्यत्र तल्पलेति वा पाठः माघे तल्पनेति वा पाठः। अन्यतरपाठः लिपिकरप्रमादकृत इत्यवधेयम्।

**तल्ल** त्रि० तस्मिन् लीयते ली-ड। १तस्मिन् लीने "तज्जलानिति शान्त उपासीत छान्दोग्योप० तल्लानित्यस्य भाष्ये "तज्जत्वात् तल्लत्वात् तदनत्वाच्च" इत्युक्तम् २विले त्रिका० ३जलाधारविशेषे (तलाओ डिन्दिभाण) मेदि०।

**तल्लज** पु० तद् प्रसिद्धं यथा तथा लजति लज-कान्तौ अच्।

प्रगाते चयन्तु उत्तरपदस्य "प्रगवापचनेय" पा० सम्प्र-
सर्पसिद्धा सगवा चजप्ळिक्ष्य कुमारीतयूज इत्यादि ।

**तमिका** स्त्री तपिनृ सीयते लो–ड सणायां कन् कापि
चत इत्वम् (तालौ) कुष्चिकाया शब्दार्थचि० ।

**तद्ली** स्त्री तत् प्रसिद्ध यथा तथा लसति लस–ड गौरा०
ङीप् । १तरुणयास् मेदि० ।

**तल्वकार** पु० सामवेदस्य शाखाभेदे तलवकारशब्दे दृश्यम् ।

**तवक्षीर** न० तु–अच् निम्नकर्म० । (तिखुर) ख्याते
पद र्थे "तवक्षीरन्तु मधुरं शिशिरं दाहपित्तहृत् ।
दयकासकफश्वासास्रदोष हन्ति सेवनात्" २वंशलतायां
स्त्री राजनि० । [ ३यवासशर्कराभेदे राजनि० ।

**तवराज** पु० तु–अच् तव पूर्ण सन् राजते राज–अच् ।

**तवराजोद्भव** पु० तवराजादुद्भवति उद्+भू–अच् । यवा
सशर्कराजाते खण्डभेदे । "तवराजोद्भव खण्डो दाह-
तृष्णाविनाशन । मूर्च्छामोहस्य तापस्य श्वासस्य च
निवारक । इन्द्रियतर्पण शीत सदा मधुर एव च"
राजनि ।

**तवर्ग** पु० त+वर्ग । त थ द ध न इत्येषु वर्णेषु । तत्र भव
वर्गान्तत्वात् छ । तवर्गीय तत्र भवे वर्णे ।

**तवस्** न० तु–असुन् । १बले २महति ३वले च निघण्टु ।
"अस्मादिचित्त तवसा जनस्य" ऋ०१।१०।८ "तवसा बलेन"
भा० । "तवस्तमस्तवसां वज्रवाहो ! " ऋ० २।३३।३ ।
"प्रवाचिमां तवसं जन्मरथास्" ऋ० १०।२८।७ ।
तवसे बलाय हितं–यत् । तवस्य बलहिते बलसाधने
च त्रि० "तव्यं तवस्यमनुदाति" ऋ०१।२०।८। तवोऽस्त्यस्य
मतुप् मस्य व सान्तत्वात् मत्वर्थे न विसर्ग । तवस्वत्
बलयुक्ते त्रि० "वीर उग्रते तवस्वान्" ऋ० ६। ६७।४६ ।
पक्षे विनि तवस्विन् तत्रार्थे त्रि०उभयत्र स्त्रियां ङीप्।

**तवागा** त्रि० तवसा बलेन गीयते गै–कर्मणि क्विप् पृषो० ।
प्रवृद्धबलयुक्ते "स्तुहि च सुत स्थविर तवागाम्" ऋ०
४।।८।१० "तवागाम् प्रवृद्धबलम्" भा० ।

**तविपुला** स्त्री चतुर्थवर्णात् पर तगणपूर्वके विपुलाच्छन्दोभेदे
"तोऽब्धे स्तत्पूर्वान्या भवेत्" वृ०र०। अब्धेश्चतुर्थाक्षरात्
पर तगणश्चेत् तत्पूर्वा तविपुलानाम छन्द इति तदर्थ ।

**तविष** पु०स्त्री०तव–"तवेर्णिद्वा" उणा० टिषच् । १स्वर्गे २समुद्रे
च "तविषताविषावब्धि स्त्रिदिव चाहुरु कश्चित्" ।"३देव
कन्यायां ४भूमौ ५नद्यां च स्त्री उज्ज्व० टित्वात् ङीप् ।
६बले ७महति त्रि० निघण्टु । ८शक्तौ ९व्यवसाये पु०
सि०कौ० १०प्रवृद्धे च त्रि० । "धनो दस्यूनां तविषो
बभूव" ऋ०८।६६।।८ "तविष प्रवृद्धो बलवान्वा" भा०
"अर्थ इन्द्रस्तविषस्तुविष्मान्" १।१६५।६ मेदिन्यां
तवीषेति दीर्घमध्यपाठो लिपिकरप्रमादकृतः ह्रस्वम-
ध्यपाठस्यैव प्रयोगदर्शनात् उणादिसूत्रे तथैव व्युत्-
पादितत्वाच्च । [४गुम्पिते च ।

**तष्ट** त्रि० तक्ष–क्त । १तनूकृते २छिन्नीकृते, च । ३ताडिते

**तष्टि** स्त्री तक्ष–क्तिन् । तक्षणे ।

**तष्टृ** पु० तक्ष–तृच् । १तष्टरि (छुतार) २जातिभेदे
३विश्वकर्मणि ४आदित्यभेदे च रमानाथ ।

**तस** अलङ्कारे वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट्
इदित् । तसयति ते तसति अततसत्-त अतसीत् ।
तसस "ताविजानाभीति ते पिता गर्भे तु हिमन्तसयत्"यजु०
२३।२४ अततस: उत्तस: । भ्वादित्वपक्षे अस्य आत्मने-
पदित्व केचिदिच्छन्ति तसते अतसिष्ट ।

**तस** उत्क्षेपे दिवा० पर० सक० सेट् । तस्यति इरित्
अतसत् अतसीत् अतासीत् । ततास तेसतु । उदित्
तसित्वा तस्त्वा । तस्त० "यस्य तस्य विना मही
तेनेति कर्ण विना" उद्भट ।

**तसर** पु० तन्–क्सरन् ।(गुटिपोकार सुता) सूत्रभेदे उणा०

**तस्कर** त्रि० तत् करोति कृ–टच् "तद्बृहतोः करप-
त्योः" पा० सुट् दलोपश्च । १चौरे २धुस्तूराके
(पिड्डिङ्) शाकभेदे पु० रत्नमा० । ३मदनवृक्षे पु० जटा०
४श्रवणे "व्याहृता यत् परस्वेभ्यः श्रुतौ तस्करता स्थिता"
रघु "तस्कर कर्णचौरयोरिति" रघुटीकाधृतकोषा-
न्तर मल्लिनाथेन तु अस्य न कर्णार्थकतां कोषकार
किन्तु तस्य श्लोकस्यार्थान्तरमाह स्म यथा "तस्करता
चौर्य परस्वेभ्यः परधनेभ्यः अविषयभूतेभ्य व्याहृता
सती श्रुतौ वाचकशब्दे स्थिता प्रवृत्ता अपहार्या-
भावात् तस्करशब्द एव अपहृतः इत्यर्थ "। ५कोपनायां
भार्यायां स्त्री शब्दार्थकल्प० टित्वात् ङीप् ।

**तस्करस्नायु** पु० तस्करस्य धूस्तूराकस्येव स्नायुरिव नाडिका
अस्या । काकनासालतायाम् राजनि० ।

**तस्थिवस्** त्रि० स्था–क्वसु । स्थितवति "स पाटलायां गवि
तस्थिवांसम्" "तस्थिवासमतभौमे प्रासादमधि-
तस्थुषि" रघुः ।

**तस्थु** त्रि० स्था–बा० कु द्वित्वञ्च । स्थावरे "देवश्च सर्व-
सघातो जगत् तस्थुरिति द्विधा" भाग० ७।७२।श्लो० ।

तस्थुस् पु० ब० व० स्था–वा० क्वसु द्वित्वञ्च । मानवे निघण्टुः ।

ताक्षण्य पुंस्त्री तक्ष्णोऽपत्यं कारित्वात् ण्य । तक्ष्णोऽपत्ये । पक्षे "तक्ष्णोऽण् उपसंख्यानम्" पा० अण् वपूर्वत्वादनो-ऽल्लोप । ताक्ष्ण तत्रार्थे पुंस्त्री० ।

ताच्छीलिक पु० तच्छीलार्थे विहित ठञ् । तच्छीलार्थ-विहिते प्रत्यये । "ताच्छीलिकेषु वा सरूपविधिर्नास्ति" पा० "ताच्छीलिकेष्वण् कृतानि भवन्ति" व्या०प० । [स्वभावे ।

ताच्छील्य न० तत् शीलमस्य तस्य भाव ष्यञ् । नियततत्-

ताज(जि)क न० नीलकण्ठादिप्रणीते वर्षलग्नमासादिनिरू-पके ज्योतिषग्रन्थभेदे । "न स्याच्छुभं क्वचन ताज(जि)कशास्त्रगीतम्" नील० ता० । [श्रोत्रे निघण्टुः ।

ताजत् त्रि० तनूज–सङ्कोचे वा० अदि शत्रन्तलोपौ ।

ताट(ड)ङ्क पु० ताड्यते ताड घञ् तां० वा डस्य ट तथाभूतो-ऽङ्कः चिह्नं यस्य शक० । कर्णभूषणभेदे द्विरूपको० ।

ताटस्थ्य न० तटस्थस्य भावः ष्यञ् । १औदासीन्ये २नैकट्ये च

ताड पु० चु० तड–भावे अच् । १ताड़ने २गुणने च कर्मणि अच् ।३शब्दे ४मुष्टिमेयतृणादौ मेदि० ५पर्वते हेमच०।

ता(ट)डका स्त्री । राक्षसीभेदे । तस्या उत्पत्तिकथा रामा० बा० २५ अ० ।

"पूर्वमासीन् महायक्षः सुकेतुर्नाम वीर्यवान् । अनपत्यः शुभाचारः स च तेपे महत्तपः। पितामहस्तु सुप्रीतस्तस्य यक्षपतेस्तदा । कन्यारत्नं ददौ राम ! ताड़(ट)कां नाम नामतः । ददौ नागसहस्रस्य बलं चास्याः पितामहः । न त्वेव पुत्रं यक्षाय ददौ चासौ महायशाः । तान्तु बालां विवर्धन्तीं रूपयौवनशालिनीम् । जम्भपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् । कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत । मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोऽभवत् । सुन्दे तु निहते राम ! अगस्त्यमृषिसत्तमम् । ता(ट)ड़का सह पुत्रेण प्रधर्षयितुमैच्छत । भक्षार्थं जातसंरम्भा गर्जन्ती साऽभ्यधावत । आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवा-नृषिः । राक्षसत्वं भजस्वेति मारीचं व्याजहार सः । अगस्त्यः परमामर्षस्ता(ट)ड़कामपि शप्तवान् । पुरुषादी महायक्षी विकृता विकृतानना । इदं रूपं विहायाशु दारुणं रूपमस्तु ते । सैषा शापकृता-ऽमर्षा ता(ट)ड़का क्रोधमूर्च्छिता । देशमुत्सादयत्येनमगस्त्याचरितं शुभम् । एनां राघव ! दुर्वृत्तां यक्षीं परमदारुणाम् । गोब्राह्मणहितार्थाय जहि दुष्टपरा-क्रमाम्" । "ताड़का चलकपालकुण्डला" रघु० । "ता ताड़काख्यां निजघान राम" भट्टि । [रत्नमा० ।

ताडकाफल न० तारकेव फलमस्याः रस्य डः । बृहदेलायां

ताडकारि पु० ६त० । रामचन्द्रे तस्य ताड़काहननकथा । रामा० अयो० २६ अ० । "तामापतन्तीं वेगेन विक्रान्ता-मशनीमिव । शरेणोरसि विव्याध पपात च ममार च" ।

ताडकेय पु० ताडकाया अपत्यम् ढक् । मारीचे "मारीचः सुन्दपुत्रश्च ताडकाया व्यजायत" हरिवं० ३ अ० ।

ताडकायन पु० विश्वामित्रपुत्रभेदे । "महाम्ब्यश्च कपिल-स्तथर्षिस्ताड़कायनः" भा० अनु० ४ अ० । विश्वामित्रपुत्रकथने ।

ताडघ पु० ताल हन्ति हन+टक् नि० उप० स० । तालवादके शिल्पिभेदे अशिल्पिनि तु अण् । ताड़घात इत्येव ।

ताड़न न० चु० तड–भावे ल्युट् । १आघाते "लालने बहवो दोषास्ताड़ने बहवो गुणाः" चाणक्यम् । "अयतयोर्यवताड़नानि वा" कुमा० । २दीक्षाङ्गे दीक्षणीय-मन्त्रसंस्कारभेदे च । "मन्त्रवर्णान् समालिख्य ताडयेच्च-न्दनाम्भसा । प्रत्येकं वायुना मन्त्री ताड़नं तदुदाहृतम्" शार०ति० । वायुना वायुबीजेन । ३गुणने च ।

ताडनी स्त्री ताड्यतेऽनया ताडि–करणे ल्युट् ङीप् । अश्वादेस्ताडनसाधने कशायां (चाबुक) अमर ।

ताड़पत्र न० तालस्य पत्रमिव लस्य डः । कर्णभूषणभेदे ताड़ङ्के हेमच० ।

ताडाग त्रि० तडागे भवम् अण् । तड़ागभवे जलादौ अणन्त स्त्री "ताडागं वातलं स्वादु कषायं कटुपाकि च । हेमन्ते सारसं ताड़ागं वा सेवेत" सुश्रुतः ।

ताडि स्त्री चु० तड इन् । (ताड़ियात) १पत्रप्रधाने वृक्षे भरतः वा ङीप् तत्रार्थे स्त्री मेदि० । २आभरणभेदे दुर्गसिंह । "प्रक्रीड़ितचपलकपिलकपिशुकरतलताडनतरलितताडीपुटे" काद० ।

ताडुल पु० चु० तड–उल । ताड़के संक्षिप्तसा० ।

ताड्यमान त्रि० चु० तड–कर्मणि शानच् । १ताडनकर्मणि "श्रोतुर्वितन्त्रीरिव ताड्यमानाः" कुमा० । २पटहे पु० त्रिका० । [ताण्डवशब्दे दृश्यम् ।

ताण्ड न० तण्डुना मुनिना कृतम् अण् । नृत्यशास्त्रे

ताण्डव न० तण्डुकृतं ताण्डं नृत्यशास्त्रं तत् प्रतिपादक-तयाऽस्त्यस्य व, तण्डुना (नन्दिना) प्रोक्तम् अण् इति क्षीरस्वामी । नृत्ये अमरः "पुं नृत्यं ताण्डवं प्रोक्तं"

"तादृशोऽहति तत्तस्मिन् बीज स्वैर्व्यञ्जित गुणै" मनु ।

**तान** पु० तन–घञ् । १विस्तारे अवतान सन्तान । "मूर्ध्नि गृह्णीतामेराशीर्व्येत्" सुश्रुत ।२ज्ञानविषये शब्दार्थकल्प० ३गानाङ्गभेदे । "विस्तार्य्यन्ते प्रयोगा ये मूर्च्छना शेषसंश्रया । तानास्तेऽप्यूनपञ्चाशत् सप्तस्वरसमुद्भवा । तेभ्य एव भवन्त्यन्ये कूटताना पृथक् पृथक् । ते स्यु पञ्च सहस्राणि त्रयस्त्रिंशत शतानि च" सङ्गी० द० "तानप्रदायित्वमिवोपगन्तुम्" कुमा० । "गाता य य स्वर गच्छेत् त त पथेन तानयेत्" सङ्गीताघृतम् । "गायन्ति दिव्यतानैस्ते भा० म० ४अ ।

**तानव** न० तनोर्भाव० पृथ्वा० पक्षे अण् । तनुत्वे "तानव तनुता गात्रे दौर्बल्यभ्रमणादिकृत्" उज्ज्वलमणि "अङ्गानामतितानव कथमिद कम्पश्च कस्मात् कुत" अमर ।

**तानव्य** पुस्त्री तनोरपत्य गर्गा० यञ् । तनोरपत्ये स्त्रिया लोहि० ष्फ षित्वात् ङीप् । तानव्यायनी ।

**तानूनप्त्र** न० तानूनप्त्रा देवताऽस्य अण् । तनूनप्तृदेवताके पृषदाज्ये "तानूनप्त्र ग्रहीष्यामि काम्ये यमसे वा" भा नवस्क० । "तानूनप्त्रमेतत्" कात्या० श्रौ० ८।१।२४ । "पृषदाज्य तानूनप्त्र भवति" कर्क । "तदेतत्तानूनप्त्रं निदानेन" शत० ब्रा० ३।४।२।८ "तानूनप्त्रा च प्रजापर्त वायुर्वा" तनूनप्तृशब्दे दृश्यम् । [त्रिक ।

**तानूर** पु तन–बा० ऊरण् । पयसा स्रोतोभ्रमे आवर्त्ते

**तान्त** त्रि० तम–क्त । १ग्लाने २क्लान्ते च । शब्दार्थकल्प० । "मृदुलतान्तलतान्तमलोकयत्" "रतिरभसविलासाभ्यासतान्त न याचत्" माघ । "अलसतान्ततारकेण" दशकुमा० ।

**तान्तव** न० तन्तोर्विकार अञ् । वस्त्रे "मणिमुक्ताप्रवालानां लौहानां तान्तवस्य च" "सर्वेषु तान्तव रक्त शाणक्षौमाविकानि च" मनुः ।

**तान्तव्य** पुस्त्री तन्तो सन्तानस्यापत्य गर्गा० यञ् । तन्तोरपत्ये स्त्रियां लोहिता० ष्फ षित्वात् ङीप् । तान्तव्यायनी ।

**तान्तुवायि** पुंस्त्री तन्तुवायस्यापत्य "उदीचामिञ्" पा० इञ् । तन्तुवायस्यापत्ये । अन्यमते "सेनान्तलक्षणकारिभ्य" पा० ण्य । तान्तुवाय्य तदर्थे ।

**तान्त्रिक** त्रि० तन्त्र सिद्धान्त वेत्ति शास्त्रमधीते वा उक्था० ठक् । १ज्ञातसिद्धान्ते २शास्त्राभिज्ञे च "एव प्रयत्नसंविध्य तान्त्रिकै परिकीर्त्तितम्" भाग० ३तन्त्रे विहिते ठक् । ३तन्त्रविहिते त्रि० स्त्रियां ङीप् "वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगत" तन्त्रम् । इदमर्थे ठञ् । ४शास्त्रसम्बन्धिनि च । "अथातो धर्म्म व्याख्यास्याम श्रुतिप्रमाणको धर्म्म श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च" हारीत ।

**तान्दुर** न० तन्दूरेण पाकयन्त्रभेदेन निर्वृत्तम् अण् । तन्दूरपक्वे मांसभेदे तत्पाकविधि शब्दार्थचि० धृतपाक्ये यथा "अङ्गारपूर्णगर्त्ते यद्लग्नमवलम्बितम् । सकृत पिहित मास पक्व तान्दुरमुच्यते" सुस्वादु तान्दुरन्तु । "मध्येऽन्तर्गर्त्तस्य लम्बि सञ्चारसम्भृतम् । चतुर्दिङ्मण्डलाकार पार्श्वप्रज्वलितानले । विपक्व सुरभि स्वादु तान्दूरमिति कीर्त्तितम् । अन्यच्च । "कौषिकायां सुसञ्चारमनग्नमवलम्बितम् । मास पिधाय वाह्याग्निज्वालया स्वेदितम् वरम् । तान्दुर रुचिद वल्य मृदु पथ्यतम मतम् । सद्योहत नव स्थूलमन्यथा दोषकारणमिति" ।

**तान्व** पु० तन्वा प्राणाधिष्ठितत्वात् प्राणवत्या अयम् "प्राणिरजतादिभ्योऽञ्" पा० अञ् संज्ञापूर्वकविधेरनित्यत्वात् वेदे न गुणः । तनूजे पुत्रे । "न साम्ने तान्वा भिक्षन्" ऋ० २।२१।२ । तनुनामकस्य ऋषेरपत्यम् ऋषित्वात् अण् पूर्ववद्गुणाभाव । २ऋषिभेदे । "सद्यो विदिष्ट तान्व" ऋ० १०।९३।१५ "तान्वो नाम ऋषि" भा० । तनु दशापवित्रवस्त्रम् तस्येदम् अण् पूर्ववद्गुणाभाव । ३दशापवित्रवस्त्रसम्बन्धिनि "जघ्नुर्वाणि तान्वा" ऋ० ६।१४।४ "तान्वा तान्वानि छान्दस आच्" भा० । स्वार्थे अण् । ४दशापवित्रवस्त्रे च । "स्तभ्नाति दिव निरुद्य तान्वा" ऋ०६।७८ । "तान्वा स्वकीयेन वस्त्रेण" भा० पूर्ववत् तृतीयास्थाने आच् ।

**ताप** पु० तप–घञ् । क्लेशजनके उष्णादिस्पर्शजन्ये १सन्तापे २दुःखे च मेदि० । "निदाघकालोल्बणतापयेव" कुमा० । "करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्" मनु ।

**तापक** त्रि० तापयति तापि–ण्वुल् । १तापकारके २ज्वरे पु० शब्दर० । ३रजोगुणे च तच्च सत्त्व तापक रज सा० शास्त्रे प्रसिद्धम् । "सत्त्व तत्र बुद्धिभावेन वृत्ताकाराद य राजसात्तापकात् । तथा भेदाग्रहणी तामसी या वृत्तिस्तस्यां तप्य इत्युक्त आक्रोति" सर्वद० ।

**तापत्य** पुस्त्री तपत्या सूर्यकन्याया अपत्यम् कुर्वादित्वात्

णय। कौरवे तपत्यपत्ये तपतीशब्दे दृश्यम्। तपत्या उपाख्यानं षञ्। २तपत्युपाख्याने न०। "तापत्यमथ वाशिष्ठमौर्व चाख्यानमुत्तमम्" भा० आ० १७०। तदाख्यानं च भा० आ० चैत्ररथपर्वणि १७१ अध्याये दृश्यम्।

**तापत्रय** न० ६त०। आध्यात्मिकाधिदैविकाधिभौतिकरूपे दुःखत्रये। "आध्यात्मिकादि मैत्रेय! ज्ञात्वा तापत्रयं बुधः। उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं फलम्" विष्णुपु०।

**तापदुःख** न० तापरूपं दुःखम्। "पातञ्जलोक्ते दुःखभेदे "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" सू०। "ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुका दुःखफला इति। यथा चेदं दुःखं प्रतिकूलात्मकं एवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः। कथं तदुपपद्यते"। "अथ का तापदुःखता सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति। तत्रास्ति द्वेषजः कर्माशयः सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीड़ाभ्यां धर्माधर्मावुपचिनोति स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते" भा०। "ते जन्मायुर्भोगा इति यद्यपि जन्मायुषोरेव ह्लादपरितापपूर्वभावितया तत्फलत्वं न तु भोगस्य ह्लादपरितापोत्पत्त्यनन्तरभाविनस्तदनुभवात्मनस्तथाप्यनुभाव्यतया भोग्यतया भोगकर्म्मतामात्रेण भोगफलत्वमिति मन्तव्यम्। नन्वपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु द्वेष्याः प्रतिकूलवेदनीयत्वात्। कस्मात्? पुनः पुण्यहेतवस्त्वत्यन्तं सुखफला अनुकूलवेदनीयत्वात्, न चैषां प्रत्यात्मवेदनीयानुकूलता शक्या सहस्रेणाप्यनुमानागमैरपाकर्त्तुं, न च ह्लादपरितापौ परस्पराविनाभूतौ यतो ह्लाद उपादीयमानेनैव परितापोऽप्यवर्जनीयतयापतेत्, तयोर्भिन्नहेतुकत्वाद्भिन्नरूपत्वाच्चेत्यत आह यथा चेदमिति" विवरणम्।

**तापन** न० तप–णिच्–भावे ल्युट्। (तापान) १तापकरणे हेमच०। तापि–कर्त्तरि ल्यु। २सूर्य्ये ३कामवाणभेदे पु० जटाध०। ४सूर्य्यकान्तमणौ राजनि०। ५अर्कनामनामके अर्कवृक्षे च। ६तापके त्रि०। "ततोऽम्बराद्भिन्नितभातमागतं महाप्रभं चक्रमभित्रतापनम्" भा० आ० १९अ०। "ततस्तु राजाममित्रतापनं समीक्ष्यते तस्य नृपस्य मन्त्रिणः" ४४ अ०।

**तापनीय** न० उपनिषद्भेदे। उपनिषच्छब्दे १२२२पृ० दृश्यम्। गोपालतापनीयं नृसिंहतापनीयं। तपनीयस्य स्वर्णस्य विकारः अण्। २स्वर्णमये त्रि० "तापनीये तथा पट्टे कण्ठोपरि विलम्बिते" हरिव० ८७ अ०। जातरूपेभ्यः परिमाणे अण्। ३स्वर्णनिष्कपरिमाणे सुवर्णे न०।

**तापश्चित** न० तपश्चि चीयते चि–क्त स्वार्थे अण्। सत्त्रभेदे तद्विधानादि कात्या० श्रौ० २४।५।१। यथा "तापश्चितम् दीक्षाः संवत्सरमुपसदश्च तथा सुत्या" सू० "तापश्चितमिति सत्त्रनाम तत्र दीक्षाः संवत्सरं भवन्ति उपसदः सुत्याश्च" इदानीमहान्याह अत्र सुत्या आह" कर्क "गवामयनेनेषु" २सू०। गवामयनमेव कर्त्तव्यमित्यर्थः। "अग्निष्टोमेन वा" ३सू० "ईयुः अपूर्वत्वादयमग्निष्टोमः नैकाह्निको न द्वादशाह्निकः सत्त्रात्मकत्वोपदेशात्। अग्निष्टोमसंस्थेन ज्योतिष्टोमेन पूरणं कर्त्तव्यम्" कर्क। शत०ब्रा०१०।२।५।२ तन्निरुक्तिर्दर्शिता यथा "एतद्ध वसै तपः। यदुपसदस्तपो वा उपसदस्तद्यत्तपसि चीयते तस्मात् तापश्चितस्तद्वै यावदेवोपसद्भिश्चरन्ति तावत् प्रवर्ग्येण संवत्सरमेवोपसद्भिश्चरन्ति संवत्सरं प्रवर्ग्येण" "यावतीरुपसदः कुर्य्यात्तावद्भिः प्रवर्ग्यैश्चरितव्यम् उपसदः तापश्चिते अयने संवत्सरसमिता" भा०।

**तापस** त्रि० तपश्चरणं शीलमस्य छत्रा० ण। १तपश्चरणशीले स्त्रियां टाप्। तपोऽस्त्यस्य "अण् च" पा० अण्। तपोविशिष्टे त्रि०। "तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाचरेत्" मनु। "सीदन्ति तापसकुलानि सगोकुलानि" छ० स० १९ अ०। स्त्रियां ङीप् "अमर्षीस्म ब्रवीमीति कस्य त्वं दुष्टतापसि" भा० आ० ७४ अ०।

**तापसतरु** पु० तापसहिततरुः शा० त०। इङ्गुदीवृक्षे अमर। तापसद्रुमादयोऽप्यत्र।

**तापसद्रुमसन्निभा** स्त्री तापसद्रुमेण तुल्या निभा० नि० व०। गर्भदात्रीक्षुपभेदे राजनि०।

**तापसपत्री** स्त्री तापसप्रियं पत्रमस्याः जातित्वात् ङीप्। दमनकवृक्षे राजनि०।

**तापसप्रिय** पु० तापसानां प्रियः छायाप्रदत्वात्। १प्रियालवृक्षे राजनि०। २तापसप्रियमात्रे त्रि०।

**तापसेष्टा** स्त्री तापसेन इष्टा। १द्राक्षायां राजनि० २तापसाभिलषिते त्रि०।

**तापस्य** न० तापसस्य धर्म्मः ष्यञ्। तापसधर्म्मे "क्षीधर्मयोगं तापस्यं मोक्षं सन्न्यासमेव च। राजप धर्म्मानखिल

कार्य्याणां च विनिर्णये" मनु। "पुरा रामभयादेव तापसं वस्त्रमाश्रितः" भा० व० २७६ अ०।

**तापहर** त्रि० तापं हरति हृ-ट। १तापनाशके। स्त्रियां ङीप् ङीषन्त। २व्यञ्जनभेदे (तापहरी) भाव० प्र०
"घृते हरिद्रासंयुक्ता माषाणां भर्जयेद्वटीः। तण्डुलानपि निर्धौतान् घृतेन परिभर्जयेत्। सिद्धियोग्यं जलं तत्र प्रक्षिप्य कुशलः पचेत्। लवणार्द्रकखण्डानि मात्रया तत्र निक्षिपेत्। एषा सिद्धिं समायाता प्रोक्ता तापहरी बुधैः"। अस्या गुणाः। "भवेत् तापहरी बल्या रुच्या श्लेष्माणमाहरेत्। हृद्या तर्पणी रुच्या गुर्वी तत्र गुणा स्मृताः"

**तापिक** त्रि० तापे तापकाले भव ठञ्। ग्रीष्मभवे जलादौ स०।

**तापिच्छ(ञ्ज)** पु० तापिनं छादयति जयति वा छद+णिच्-ड पृषो०। १तमालवृक्षे अमर। "अमुष्योर्मिचिपदाञ्चन श्रवणयोस्तापिच्छगुच्छावलीम्" गी०गो०। "प्रफुल्लतापिच्छनिभैरभीषुभिः" माघ। २धातुमाक्षिके राजनि०

**तापिन्** त्रि० तापयति तापि-णिनि। १तापके तप-णिनि। २तापयुक्ते त्रि० स्त्रियां वा ङीप्। ३बुद्धदेवे पु० त्रिका०

**तापी** स्त्री तापयति अच् गौरा० ङीप्। विन्ध्याचलस्थे पश्चिमवाहिनदीभेदे राजनि०। सा च माक्षिकधातुभवस्थानिसन्निकृष्टा। २यमुनायां त्रिका०।

**तापीज** पु० ताप्या नद्याः समीपे आकरभेदे जायते जन-ड। माक्षिकधातौ "एवञ्च माक्षिकं धातुं तापीजमनृतोपमम्। मधुरं काञ्चनाभासमम्लं वा रजतप्रभम्। पिबन् हन्ति जराकुष्ठमेहानाहामयक्षयान्" सुश्रुतः तापीसम्भवत्वात् ताप्युत्पादयोऽप्यत्र।

**तापेश्वर** पु० तीर्थभेदे हेम० पि० पु०।

**ताम** पु० ताम्यत्यनेन तम-करणे घञ्। १भीषणे २दोषे च अजयपालः। ३ग्लानिकारणे त्रि० भावे घञ्। ४ग्लानौ पु०

**तामर** न० ताम ग्लानिं रमते हिनस्ति रम-बधे वा० ड १जले २घृते च भरतधृतरुद्रः।

**तामरस** न० तामरे जले सस्ति सस-ड। १पद्मे, ताम्यतेऽनेन रसते इति रसम् कर्म०। २स्वर्णे ३ताम्रे च मेदि०। ४धुस्तूरे, अमर "इह वद तामरसं भजाय" वृ० र० उक्ते ५द्वादशाक्षरपादके छन्दोभेदे च। "तामरसतामरसान्तराभाम्" "स्तनयता नयतामरसाम्भ" "विकचतामरसा गृहदीर्घिका" रघु। "नवतमसमन्दरागतामरसदृशः" माघ। ५पद्मिन्यां स्त्री ङीप्। "यथा गजस्तामरसीं मदोत्कटः" भारते विराटपर्वणि ७ अ०।

**तामलकी** स्त्री तम णिच्-क्विप् ताम् कर्म०। भूम्यामलक्याम्। अमर। "कटुकेन्द्रयवोशीरमिश्रीतामलकीघनैः" सुश्रुत

**तामलिप्त** पु० (तमलुक्) देशभेदे त्रिका०। स्वार्थे क। तत्रार्थे। स च देशः वृ०सं० १४ अ० कूर्मविभागे प्राच्यामुक्तः "अथ पूर्वस्याम्" इत्युपक्रमे "एकपादताम्रलिप्तककोशलकवर्द्धमानाश्च"। गौरा० ङीप् तत्रार्थे स्त्री।

**तामस** त्रि० तमोऽस्त्यस्य तम, प्रधानत्वेनास्त्यस्य वा अण्। १तमोगुणयुक्ते २तमःप्रधानगुणके स्त्रियां ङीप्। ३सर्पे पुंस्त्री० जातित्वात् ङीष्। ४खले त्रि० मेदि० ५उलूके पुंस्त्री राजनि० स्त्रियां ङीष्। ६चतुर्थे मनौ पु० "सत्या देवगणाश्चैव तामसस्यान्तरे मनोः। पुत्रांश्चैव प्रवक्ष्यामि तामसस्य मनोर्नृप!॥ द्युतिस्तपस्य सुतपास्तपोमूलस्तपोऽशन। तपोरतिरकल्माषस्तन्वी धन्वी परन्तप। तामसस्य मनोरेते दश पुत्रा महाबलाः" हरिवं० ७अ०। "चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः। पृथु ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः। सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः। ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे। देवा वैधृतयो नाम विधृतेस्तनया नृप!। नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा।" भाग० ८।१।२४। भागवते अन्यथोक्तं कल्पभेदादविरोधः। तमोऽधिकृत्य प्रवृत्तम् अण् तमसा कृतं वा अण्। ७तमोगुणाधिकारेण प्रवृत्ते शास्त्रे ८तमसा कृते च स्त्रियां ङीप्। तामसशास्त्राणि च पद्मपुराणे पार्वतीं प्रतीश्वरवाक्येनोक्तानि यथा
"शृणु देवि! प्रवक्ष्यामि तामसानि यथाक्रमम्। येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि। प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्। मच्छक्त्यावेशितैर्विप्रैः प्रोक्तानि तत परम्। कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्। गौतमेन तथा न्यायं साङ्ख्यन्तु कपिलेन वै। द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः। निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्। धिषणेन च सम्प्रोक्तं चार्वाकमतिगर्हितम्। दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा। बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम्। मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च। मयैव कथितं देवि! कलौ ब्राह्मणरूपिणा। अपार्थं श्रुतिवाक्यानां दर्शयल्लोकगर्हितम्। कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते। सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र

चोच्यते । परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते । ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया । सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे । वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि ! जगतां नाशकारणात्"

कूर्मपुराणे केषाञ्चित्तन्त्राणां तामसत्वमुक्तं यथा "यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च । श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां तु तामसी । करालभैरवञ्चापि यामलं वाममार्हितम् । एवंविधानि चान्यानि मोहनार्थानि तानि तु । मया सृष्टानि चान्यानि मोहायैषां भवार्णवे" । तामस पुराणानि यथा । "मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयञ्च षडेतानि तामसानि निबोधत" । सात्त्विक पुराणानि यथा । "वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने ! । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै" । राजस पुराणानि यथा "ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि शुभानने ।" पद्म॰ उ॰ ख॰ ४२ अ॰। "सङ्कीर्णेषु सरस्वत्याः पितॄणां व्यहिरुच्यते । अग्नेः शिवस्य माहात्म्यं तामसेषु दिवाकरे । राजसेषु च माहात्म्यमधिकं ब्रह्मणः स्मृतम् । यस्मिन् कल्पे तु यत् प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते । सात्त्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुत्तमम् । तथैव योगसंसिद्धा गमिष्यन्ति परां गतिम्" मत्स्य पु॰ ।

तामसमुनयः पद्मपु॰ उ॰ उक्ता यथा । "कणादो गौतमः शक्तिरुपमन्युश्च जैमिनिः । दुर्वासाश्च मृकण्डुश्च भार्गवश्च बृहस्पतिः । जमदग्निश्च इत्येते मुनयस्तामसा स्मृताः" । तामसशास्त्रनयस्तत्रैवोक्ता यथा "बार्हस्पत्या गौतमी च सावित्री यमनिर्मिता । शाङ्खी चौशनसी चैव तामस्य स्मृतयः स्मृताः" । तामसश्रद्धादिकं गीतायां १७अ॰ उक्तं यथा ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्त्विकी राजसी चैव तामसी चेति तां शृणु । यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः । प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः" । तामसाहारादिकमपि भा॰ १७ अ॰ उक्तं यथा "यातयामं गतरसं पूति पर्युषितञ्च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्" । "विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते" । "मूढग्राहेणात्मनो यत् पीडया क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्" । "अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम्" । किञ्च "नियतस्य तु सन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः" । "यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम् । अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म यत्तत्तामसमुच्यते" । "अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः । विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते । अधर्मं धर्ममिति या मन्यते तमसावृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ ! तामसी" । "यया स्वप्नं भयं शोकं विषादं मदमेव च । न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता" । "यदग्रे चानुबन्धे च सुखं मोहनमात्मनः । निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम्" १८अ॰। राजसतामसकर्म्माणि यथा "यत् शैवं दैवतं पैत्रं वैपदैवं तथाध्वरम् । शाक्तं शैवं गाणपत्यं यागहोमादिकं तथा । पौरोहित्यं याजनञ्च दैवस्य वामयाजनम् । विष्णुसेवापराधश्च तथा नामापराधकः । असत्प्रतिग्रहो देवि ! सङ्कल्प आभिचारिकः । पशुजीवादिहननं पातकञ्चोपपातकम् । अतिपापं महापापमनुपातकमेव च । लोभो मोहो ह्यहङ्कारः कामः क्रोधो मदस्तथा । एतद्यदपरं कर्म गर्हितञ्च वरानने ! । राजसं तामसं प्रोक्तं मया च मुनिभिः सदा" पद्म॰ उ॰ ख॰ ।

हारीतः "तामसेन तु द्रव्येण ऋत्विग्भिस्तामसैस्तथा । तामसं भावमास्थाय तामसो यज्ञ उच्यते । तामसेन तु यज्ञेन दानेन तपसा तथा । निरये जन्म चेदाहुर्हि विद्याश्च तामसीम्" । "तामसी हरिद्रक्ताभिपस्य रूपा" इति रत्नाकरः । तमसो राहोरपत्यम् अण् । ८ राहुसुते तामसकील ।

**तामसकील** पु॰ तामसः राहुसुतः कील इव । वृ॰ सं॰ ३ अ॰ उक्ते राहुसुते केतुभेदे । तन्निमित्तोत्पातभेदस्तत्रोक्तो यथा "तामसकीलकसंज्ञा राहुसुताः केतवस्त्रयस्त्रिंशत् । वर्णस्थानाकारैस्तान्दृष्ट्वार्के फलं ब्रूयात् । ते चार्कमण्डलगताः पापफलाश्चन्द्रमण्डले सौम्याः । ध्वाङ्क्षकबन्धप्रहरणरूपाः पापाः शशाङ्केऽपि । तेषामुदये रूपाण्यम्भः कलुषं रजोवृतं व्योम । नगतरुशिख-

रश्मिमर्दी सघर्घरो मारुतश्चण्ड । ऋतुविपरीतास्त रवो दीप्ता मृगपक्षिणो दिशां दाह । निर्घातम हीकम्पाद्यो भवन्त्यत्र चोत्पाता । न पृथक् फलानि तेषां शिखिकीलकराहुदर्शनानि यदि । तदुदयका रणमेषां केत्वादीनां फलं ब्रूयात्" । "यस्मिन् यस्मिन् देशे दर्शनमायान्ति सूर्यविम्बस्थाः । तस्मिंस्तस्मिन् व्यसनं महीपतीनां परिज्ञेयम् । क्षुत्प्रम्लानशरीरा मुनयोऽप्युत्सृष्टधर्मसच्चरिताः । निर्मांसबालहस्ताः कृच्छ्रेणायान्ति परदेशम् । तस्करविलुप्तवित्ताः प्रदीर्घनिश्वासकुञ्चिताक्षिपुटाः । सन्नशरीराः शोकोद्भवबाष्परुद्धदृशः । क्षामा जुगुप्समानाः स्वनृपतिपरचक्रपीडिता मनुजाः । स्वनृपतिचरितं कर्म च परारुतं प्रब्रुवन्त्यन्ये । गर्भेष्वपि निष्पन्ना वारिमुचो न प्रभूतवारिमुचः । सरितो यान्ति तनुत्वं क्वचित् क्वचिज्जायते सस्यम् । दण्डे नरेन्द्रमृत्युर्व्याधिभयं स्यात् कबन्धसंस्थाने । ध्वाङ्क्षे च तस्करभयं दुर्भिक्षं कीलकेऽर्कस्थे । राजोपकरणरूपैश्छत्रध्वजचामरादिभिर्विद्धः । रात्यन्यस्तकटकं स्फुलिङ्गधूमादिभिर्जनहा । एको दुर्भिक्षकरो द्व्याद्याः स्युर्नरपतेर्विनाशाय । सितरक्तपीतकृष्णैस्तैर्विद्धोऽर्कोऽद्रवर्णघ्नः । दृश्यन्ते च यतस्ते रविविम्बस्योत्थिता महोत्पाताः । तन्नागच्छति लोकानां तेनैव भयं प्रदेशेन" । स्वार्थे क तत्रार्थे । त्रिशवृत्सप्तविकाराह्वोक्ते तामसकीलकाः इति ख्याताः वृ० सं० ११ अ० ।

**तामसध्यान** न० वटुकभैरवस्य ध्येयरूपभेदे । "तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिप्रभेदतः" इत्युपक्रमे सात्त्विकराजसे उक्त्वा तामसध्यानमुक्तं तन्त्रसारे यथा

"ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं दिग्वस्त्रं पिङ्गकेशं डमरुमथ सृणिं खड्गशूला-भयानि । नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम्" "तामसं शत्रुशमनं कृत्याभूतगदापहम्" तन्त्रसा० ।

**तामसिक** त्रि० तमसा निर्वृत्त ठञ् । तमोगुणकार्ये त्रि० ।

**तामसी** स्त्री तमांसि भूम्ना सन्त्यस्या प्रज्ञा० अण् ङीप् । १अन्धकारबहुलायां रात्रौ २महाकाल्यां मेदि० । ३जटामांस्यां राजनि० । ४तमोगुणवत्यां स्त्रियाञ्च ।

**तामालेय** त्रि० तमालस्याभ्यादूरदेशादि सख्या० ढञ् । तमालवृक्षस्य-दूरदेशादौ ।

**तामिस्र** पु० तमिस्रा तमस्ततिरस्त्यत्र अण् । नरकभेदे । "तामिस्रोऽन्धतामिस्र इत्युपक्रमे । तन्निदानरूपादि भाग० । ५।२६ उक्तं यथा "यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते" "स पर्य्यायेण यातीमान् नरकानेकविंशतिम् । तामिस्रमन्धतामिस्रं महारौरवरौरवौ । नरकं कालसूत्रञ्च महानरकमेव च । सञ्जीवनं महावीचिं तपनं सम्प्रतापनम् । सङ्घातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकम् । लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलीं नदीम् । असिपत्रवनञ्चैव लोहदारकमेव च" मनु अत्रोपक्रमे यातीति क्रियासम्बन्धापेक्षतया पन्थानं शाल्मलीं नदीमित्युत्तरत्र स्पष्ट द्वितीयाश्रवणाच्च तामिस्रादिशब्दानां द्वितीयान्ततैव नरकविशेषवाचित्वात्तस्य पुंस्त्वात् । शब्दकल्पद्रुमे क्लीबतोक्ति मनुवचने द्वितीयान्ततामिस्रशब्दे प्रथमान्तभ्रान्त्यैवेति बोध्यम् । तमिस्रया साध्यमण् । २ द्वेषे । "भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः । तामिस्रोऽष्टदशधा" सा० का० । "तामिस्रो द्वेषोऽष्टादशधा शब्दादयो दशविषया रञ्जनीया स्वरूपतः, ऐश्वर्य्यं त्वणिमादिकं न स्वरूपतो रञ्जनं किन्तु रञ्जनीयशब्दाद्युपायाः । ते च शब्दादय उपस्थिताः परस्परेणोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्तीति । शब्दादिभिर्दशभिः सहाणिमाद्यष्टादशधेति तद्विषयो द्वेषस्तामिस्रोऽष्टादशविषयत्वादष्टादशधेति" तत्त्वको० । द्वेषमूलत्वात् योगेष्वाप्रतिघातरूपे क्रोधे भाग० टी० श्रीधरः ।

**तामु** त्रि० तम-उण् । स्तोतरि निघण्टुः ।

**ताम्बली** स्त्री ताम्बूली+पृषो० । (पान) ताम्बूल्याः "तस्यास्ताम्बल्याः रसानाः" गोप० ब्रा० १।१०।७ ।

**ताम्बूल** न० तम-ऊलच् बुगागमः दीर्घश्च गौ० ङीप् तस्याः पत्रमण् । (पान) ख्याते १नागवल्लीदले । २क्रमुके च मेदि० । "ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं वातघ्नं कृमिनाशनं कफहरं दुर्गन्धिनिर्णाशनम् । वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं ताम्बूलस्य सखे ! त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः" अपि चाह "ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम् । वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु । बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्" भाव० प्र० । "अनिधाय मुखे पर्णं पूगं

खादयते नरः। मतिभ्रंशो दरिद्रः स्यादन्ते न स्मरते हरिम्” राजनि०। भावप्र० दिनचर्य्यायामुक्तं यथा “धूमेनापोह्य हृद्यैर्वा कषायकटुतिक्तकैः। पूगकर्पूरकस्तूरीलवङ्गसुमनःफलैः। फलैः कटुकषायैर्वा मुखवैशद्यकारिभिः। ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः। धूमेन अगुर्वादिधूमेन। अपोह्य कफं दूरीकृत्य कषायकटुतिक्तकैः फलैः कर्पूरकस्तूरीलवङ्गादिभिः पूगैः क्रमुकैः सुमनःफलैः जातीफलैः एलाहरीतक्यादिफलैः। रात्रौ सुप्तोत्थिते स्नाते भुक्ते वान्ते च सङ्गरे। सभायां विदुषां राज्ञां कुर्य्यात्ताम्बूलचर्वणम्। ताम्बूलमुक्तं तीक्ष्णोष्णं रोचनन्तु परं सरम्। तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु। वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम्। मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्। हनुदन्तमलघ्नं च जिह्वेन्द्रियविशोधनम्। मुखप्रसेकशमनं गलामयविनाशनम्। नवं तदेव मधुरं कषायानुरसं गुरु। मलासृजननं प्रायः पत्रशाकगुणं स्मृतम्। मङ्गदेशोद्भवं पर्णं परं कटुरसं सरम्। पाचनं पित्तजननमुष्णं कफहरं स्मृतम्। पर्णं पुराणमकटु सुस्निग्धन्तु पाण्डुरम्। विशेषात् सुगुणं हृद्यमन्यद्धीनगुणं स्मृतम्। खदिरः कफपित्तघ्नः चूर्णं वातकफापहम्। संयोगतस्त्रिदोषघ्नं सौमनस्यं करोति च। मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्। प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा। निशायां चूर्णमधिकं ताम्बूलं भक्षयेत् सदा। आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता। तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत्। पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः। जीर्णं पर्णं हरत्यायुः शिरा बुद्धिविनाशिनी। आद्यं विषोपमं पीतं द्वितीयं भेदि दुर्जरम्। तृतीयादन्तु पातव्यं सुधातुल्यं रसायनम्। ताम्बूलं नातिसेवेत न विरिक्तो बुभुक्षितः। देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः। शोषपित्तानिलास्रं स्यादतिताम्बूलचर्वणात्। विषमूर्च्छामदार्त्तानां क्षयिणां रक्तपित्तिनाम्।

“विना पर्णं मुखे दत्त्वा गुवाकं भक्षयेद्यदि। तावद्भवति चाण्डालो यावद्गङ्गां न गच्छति” कर्मलोचनम्। “ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम्। तपस्विनाञ्च विप्रेन्द्र! गोमांससदृशं ध्रुवम्” इति ब्रह्मवै० पु० ख०। मार्कण्डेय “भूयोऽप्याचम्य कर्त्तव्यं ततस्ताम्बूलभक्षणम्” वशिष्ठ “सुपूगञ्च सुपर्णञ्च सुचूर्णेन समन्वितम्। अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद्बुधः” “ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्” नैष० “ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी” सा० द०। २पर्णलतायां स्त्री गौरा० ङीष्। “ताम्बूलीनां दलैस्तत्र रचिता पानभूमयः” रघु। [हेमच०।

**ताम्बूलकरङ्क** पु० ६त०। (पानडिपा) ताम्बूलपात्रभेदे

**ताम्बूलद** त्रि० ताम्बूलं ददाति दा–क। १राज्ञां ताम्बूलदाने अधिकृते दासभेदे २विप्रादिभ्यो ताम्बूलदातरि च ण्वुल्। ताम्बूलदायकोऽप्युभयत्र “जलताम्बूलकुसुमगन्धमाल्यादिदायकाः” कामन्दकीये।

**ताम्बूलपत्र** पु० ताम्बूलमिव पत्रमस्य। पिण्डालौ राजनि०। कर्म्म०। ताम्बूलीपत्रे न०।

**ताम्बूलपेटिका** स्त्री ६त०। ताम्बूलकरङ्के

**ताम्बूलराग** पु० ताम्बूलकृतो रागः शाक० त०। (पानेर बोल) १ताम्बूलजनिते रागे ताम्बूलस्य राग इव रागो रक्तता यस्य। २मसूरे हारा०।

**ताम्बूलवल्ली** स्त्री ताम्बूलाख्या वल्ली। (पान) नागवल्ल्याम् अमरः। स्वार्थे क अत इत्त्वम् वार्थे।

**ताम्बूलिक** त्रि० ताम्बूलं तद्रचनं शिल्पमस्य। ताम्बूलरचनाधिकृते “आदिशब्दात् मालाकाररजकताम्बूलिकगान्धिकादयः” सा० द०।

**ताम्बूलिन्** त्रि० ताम्बूलं पण्यतयाऽस्त्यस्य इनि। १ताम्बूलविक्रेतरि (तामुलि) ख्याते २जातिभेदे पु स्त्री स्त्रियां ङीप्।

**ताम्र** न० तम–रक् दीर्घः। १धातुभेदे (ताँमा) अमरः २कुष्ठभेदे कर्म्मविपाकः। ३रक्तवर्णे हेमच०। ४तद्वति त्रि०। धातुभेदस्योत्पत्तिकारणगुणादि भावप्र० उक्तं यथा “अथ ताम्रस्य उत्पत्तिर्नामलक्षणगुणाश्च। “शुक्रं यत् कार्त्तिकेयस्य पतितं धरणीतले। तस्मात्ताम्रं समुत्पन्नमिदमाहुः पुराविदः। ताम्रमौदुम्बरं शुल्बमुदुम्बरमपि स्मृतम्। रविप्रियं म्लेच्छमुखं सूर्य्यपर्य्यायनामकम्। जपाकुसुमसङ्काशं स्निग्धं मृदु घनं क्षमम्। लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते। कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापि घनासहम्। लोहनागयुतञ्चेति शुल्बं दुष्टं प्रकीर्त्तितम्। एको दोषो विषे ताम्रे त्वष्टावन्ये प्रकीर्त्तिताः। दाहः स्वेदो रुचिर्मूर्च्छा क्लेदो रेको वमिर्भ्रमः” (रेकः विरेकः) तस्य मारणविधिस्तत्रोक्तो यथा

**ताम्रपक्षा** स्त्री सत्यभामासुतायां ताम्रजाम्बवत्यां हरिवं० ।
**ताम्रपट्ट** न० ताम्रनिर्मितं पट्टम् । ताम्रमये लेखनपत्रभेदे "दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यन्तु कारयेत् । आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः । पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् । अभिलेख्यात्मनो वंश्यानात्मानञ्च महीपतिः । प्रतिग्रहपरीमाणं दानाच्छेदोपवर्णनम् । स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम्" याज्ञ० ।
**ताम्रपत्र** पु० ताम्रं रक्तं पत्रमस्य । १जीवशाके राजनि० । २रक्तवर्णपत्रके वृक्षमात्रे च । कर्म्म० । ३ताम्रमये लेखनपत्रे । ४रक्ते दले नवपल्लवे च न० ।
**ताम्रपर्णी** स्त्री दाक्षिणात्यदेशस्थे नदीभेदे ।
"ताम्रपर्णीन्तु कौन्तेय ! कीर्त्तयिष्यामि तां शृणु यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे । गोकर्णमिति विख्यातस्त्रिषु लोकेषु विश्रुतः । शीततोयो बहुजलः पुण्यस्तात ! शिवः शुभः । ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः । तत्र वृक्षतृणाद्यैश्च सम्पन्नफलमूलवान् । आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसभो गिरिः । वैदूर्य्यपर्वतस्तत्र श्रीमान् मणिमयः शिवः । अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः" भा०व०८८अ० । तस्याः सिन्धुसङ्गमस्थाने मुक्ताजन्म यथोक्तं "ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः । ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम्" रघु "सिंहलकपारलौकिकसौराष्ट्रकताम्रपर्णीपारशवाः । कौवेरपाण्ड्यवाटकहैमा इत्याकरा ह्यष्टौ" वृ० सं० ८१ अ० मुक्ताकरोक्तौ । २शिलाभेदे च । "ताम्रपर्णी शिला राजन् ! श्रीमान् मलयपर्वतः" भा० भी० ९ अ० ।
**ताम्रपल्लव** पु० ताम्राणि पल्लवानि यस्य । १अशोकवृक्षे राजनि० । २रक्तपल्लवयुक्ते वृक्षमात्रे च । कर्म्म० । ३रक्ते पल्लवे क्लीं ।
**ताम्रपाकिन्** पु० पच्यते पाकः फलपुष्पादि ताम्रं पाकः अस्त्यस्य इनि । गर्द्दभाण्डवृक्षे । रत्नमा० ।
**ताम्रपात्र** न० ताम्रस्य विकारः अण् कर्म० । ताम्रमये पात्रे तत्र तर्पणविधिस्तर्पणशब्दे उक्तः । "स्फटिकौदुम्बरं पात्रम्" इत्यादि स्मृत्या तस्य सकल्पपात्रतोक्ता तत्र भोजननिषेधो मनुनोक्तो यथा "ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले । पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्" । तत्र इतरेतरोद्धृतसारगव्यादिभोजननिषेधमाह स्मृतिसागरे स्मृतिः "नारिकेलजलं कांस्ये ताम्रपात्रे स्थितं मधु । गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना । ताम्रपात्रघृतं मांसं यच्च गव्यं घृतेतरत् । आमिषन्तु यथा मांसं दधि मद्यं पयो रसः । द्रव्यान्तरयुतं मांसं पयसा संयुतं दधि । पयोऽनुद्धृतसारञ्च ताम्रपात्रे न दुष्यति" उत्तरार्द्धानुसारात् "ततश्च सस्नाते यज्ञो गोक्षीरेण चरुं पचेत् । अस्वर्णे शाक्तिके पात्रे नवे ताम्रमयादिके" शारदाति० वाक्यम् अनुद्धृतसारक्षीरविषयम् उद्धृतसारस्यैव तत्र स्थितस्य निषेधात् पानपात्रं च ताम्रपात्रं प्रशस्तं यथाह सुश्रुतः "दद्यात् ताम्रमये पात्रे सुशीतं सुशृतं पयः" । "जलपात्रं तु ताम्रस्य तदभावे मृदो हितम्" भाव० ।
**ताम्रपादी** स्त्री ताम्रौ रक्तौ पादौ मूलमस्याः ङीप् । हंसपद्याम् राजनि० । तस्या हंसस्येव रक्तमूलत्वात्तथात्वम् ।
**ताम्रपुष्प** पु० ताम्रं पुष्पं यस्य । १रक्तकाञ्चने जटा० २भूमिचम्पके शब्दच० । ३रक्तपुष्पयुक्तमात्रे त्रि० । "ताम्रपुष्पैश्च शिखरैर्दीप्यमानः सुतेजसा" हरिवं० २१७ अ० । कर्म्म० । ४रक्ते पुष्पे न० ।
**ताम्रपुष्पिका** स्त्री ताम्रं पुष्पं यस्याः कप् कापि अत इत्त्वम् । रक्तत्रिवृति (लालतेउडि) राजनि० ।
**ताम्रपुष्पी** स्त्री ताम्रं रक्तं पुष्पं यस्याः ङीप् । १धातकीवृक्षे २पाटलावृक्षे च राजनि० ।
**ताम्रफल** पु० ताम्रं रक्तं फलमस्य । १अङ्कोटवृक्षे । राजनि० । २रक्तफलयुक्ते वृक्षमात्रे त्रि० । कर्म्म० । ३रक्ते फले न० ।
**ताम्रमूला** स्त्री ताम्रं रक्तं मूलं यस्याः अजादेराकृतिगणत्वात् टाप् । १दुरालभायां २लज्जालौ च राजनि० । ३कच्छुरावृक्षे (खिराइ) रत्नमाला । ४रक्तमूलके वृक्षमात्रे त्रि० । कर्म्म० । ५रक्ते मूले न० ।
**ताम्रयोग** पु० चक्रदत्तोक्ते औषधभेदे तद्विधानादि तत्रोक्तं यथा "स्थाल्यां समदौ दातव्यौ माषिकौ रसगन्धकौ । नखचुर्णं तदुपरि तच्चूर्णीय द्विमाषिकम् । ततो नैपालताम्रादि पिधाय सुकरात्तितम् । पांशुना पूरयेदूर्द्ध्वं सर्वां स्थालीं ततोऽनलः । स्थाल्यधो नालिका यावद्देयस्तेन स्ततस्य च । ताम्रो ताम्रस्य रक्तिका त्रिफलाचूर्णरक्तिका । त्र्यूषणस्य च रक्तिका विडङ्गस्य च तन्मधु । इतेनालोड्य लेढव्यं प्रथमे दिवसे ततः । रक्तिवृद्धिः प्रतिदिनं कार्य्या ताम्रादिषु त्रिषु । स्थिरा विडङ्गरक्तिस्तु यदा भेदो विवर्द्धितः । तदा

वि [illegible] दृष्टाः [illegible] योग [illegible] चय [illegible] सर्वदा । ताम्रयोगो अयस्येव गमनसोमिव वर्द्धनम्"।

**ताम्ररसायनी** स्त्री ताम्ररसस्य रक्तनिर्यासस्यायनी । गोरक्षदुग्धायां जटाधरः ।

**ताम्रलिप्त** पु॰ देशभेदे । सोऽभिजनोऽस्य तस्य राजा वा अण् । तद्देशवासिनि तन्नृपे च बहुषु अणो लुक् । स च देशः प्राचीस्थः । "ताम्रलिप्तश्च राजानं कर्णटाधिपतिं तथा" भा॰ स॰ २९ अ॰ । भीमप्राचीदिग्विजये । "वङ्गाः कलिङ्गा मगधास्ताम्रलिप्ताः सपुण्ड्रकाः" भा॰ स॰५१अ॰। स्वार्थे क । तत्रार्थे "किराताः बर्बरा सिद्धा वैदेहास्ताम्रलिप्तकाः" भा॰भी॰ ७ अ॰ । जनपदोक्तौ ।

**ताम्रवर्ण** पु॰ ताम्रो रक्तो वर्णोऽस्य । १सिंहलद्वीपस्थे देशभेदे राजनि॰ । २जटायां स्त्री शब्दच॰ । ३ताम्रवर्णयुतमात्रे त्रि॰ । कर्म॰ । ४रक्ते वर्णे पु॰ ।

**ताम्रवल्ली** स्त्री कर्म॰ । १मञ्जिष्ठायाम् शब्दच॰ २चित्रकूटदेशप्रसिद्धे लताभेदे राजनि॰ । ३रक्तलतामात्रे च ।

**ताम्रबीज** पु॰ताम्रं बीजं यस्य । १कुलत्थे राजनि॰ । २रक्तबीजके वृक्षमात्रे त्रि॰ कर्म॰।३रक्ते बीजे न॰। ४कुलत्थिकायां स्त्री शब्दार्थचि॰ । [५रक्तवर्णके वृक्षे पु॰ ।

**ताम्रवृक्ष** पु॰ कर्म॰ । १रक्तचन्दनवृक्षे २कुलत्थे च रत्नमा॰

**ताम्रवृन्त** पु॰ ताम्रं वृन्तमस्य । १कुलत्थे, स्त्रीत्वमपि टाप् त्रिका॰ । २रक्तवृन्तके वृक्षमात्रे त्रि॰ । कर्म॰ । ३रक्ते वृन्ते न॰ ।

**ताम्रशिखिन्** पु॰ ताम्रा रक्ता शिखास्यस्य इनि । कुक्कुटे जटाधरः । ब॰ व॰ । ताम्रशिख इत्यपि तत्र । ताम्रशिखायुक्ते च त्रि॰ ।

**ताम्रसार** न॰ ताम्रं रक्तं सारमस्य । १रक्तचन्दनवृक्षे । रत्नमाला । २रक्तसारके वृक्षमात्रे त्रि॰ । कर्म॰। ३रक्ते सारे पु॰न॰ ।

**ताम्रसारक** पु॰ ताम्रो रक्तः सारोऽस्य कप् । १खदिरे राजनि॰।२रक्तचन्दनवृक्षे च । ३तत्काष्ठे न॰ शब्दार्थचि॰।

**ताम्रसारिक** पु॰ ताम्रः सारोऽस्त्यस्य ठन् । १रक्तखदिरे, २रक्तचन्दने च शब्दार्थचि॰ ।

**ताम्रा** स्त्री ताम्र+टाप् । १सैंहिल्यां २ताम्रपर्ण्यां शब्दमा॰ ।

**ताम्राख्य** पु॰ उपद्वीपभेदे शब्दमाला । ताम्रद्वीपे ।

**ताम्राक्ष** पु॰स्त्री ताम्रे अक्षिणी यस्य षच् समा॰ । १कोकिले त्रिका॰ स्त्रियां षित्त्वात् जातित्वाच्च ङीष् । २रक्तचक्षुयुक्ते त्रि॰ "ताम्रा चित्त्वात् ङीप् । ३विशाखा यस्य ताम्राक्षी पूर्णचन्द्रनिभाननः । वर्ण्यते कीर्त्यते" भा॰ क॰ ४६ अ॰।

**ताम्राभ** न॰ ताम्रस्य आभेवाभा यस्य ।१रक्तचन्दने शब्दच॰ । ताम्रा रक्ता आभा यस्य । २रक्तवर्णाभायुक्ते त्रि॰ "रुधिरोक्षितसर्वाङ्गं सं जटायोधम सभौ । कबन्धैः संवृतं सर्वं ताम्राभं रुधिरवाहतम्" भा॰ द्रो॰ ११९ अ॰ ।

**ताम्रारुण** न॰ तीर्थभेदे "ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः । अश्वमेधमवाप्नोति ब्रह्मलोकञ्च गच्छति" भा॰ व॰ ८४ अ॰ ।

**ताम्रार्द्ध** पु॰ ताम्रस्यार्द्धो यस्मिन् तद्धातोरस्य । कांस्ये त्रिका॰

**ताम्रावती** स्त्री ताम्रमाधेयत्वेनास्त्यस्य मतुप् मस्य वः सञ्ज्ञायां दीर्घः । ताम्राकरे नदीभेदे "ताम्रावती वेत्रवती नद्यास्त्रिस्रोऽथ कौशिकी" भा॰ व॰ २२१ अ॰ ।

**ताम्राश्मन्** पु॰ नि॰ कर्म॰ । पद्मरागे "ताम्राश्मरश्मिच्छुरितैर्मखांचे" माघ ।"ताम्राश्मनां पद्मरागाणाम्" मल्लिना॰।

**ताम्रिक** त्रि॰ ताम्रं तत्पात्रादिनिर्माणं शिल्पमस्य ताम्रभेदं वा ठञ् । १कांस्यकारे २सङ्कीर्णजातिभेदे पु॰ स्त्री॰ स्त्रियां ङीप् । ३ताम्रस्वत्विनि त्रि॰ । "कार्षिके ताम्रिके पणः" अमरः । "कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः" मनुः । "स्त्रियः स्युर्वर्णसूत्राराः कार्षिकस्ताम्रिकः पणः" माघ॰। ४गुञ्जायां स्त्री टाप् राजनि॰ ।५वाद्यभेदे शब्दार॰

**ताम्री** स्त्री ताम्रस्य विकारः अण् ङीप् । वाद्यभेदे त्रिका॰ ।

**ताय** पालने विस्तारे च भ्वा॰ आत्म॰ सक॰ सेट् । तायते अतायि-अतायिष्ट । तताये । ऋदित् । णिच अततायत्-त । तायित तातिः "उभौ मायां व्यातायेताम्" भट्टिः । "सरसि सतायमाने" यजु॰ २६।५। घञ् । तायः सुपा॰ ल्युट् ल्युद्दाच । ल्युट् —तायनम् "प्रसिस्रगेतायनेषु क्रमं" पा॰ ।

**तायिक** त्रि॰ताये वृद्धौ साधु ठञ् । तत्त्विकाभिधदेशे हेमच॰

**तायु** पु॰ ताय—उण् । चौरे स्तेने निघण्टुः "अप त्ये तायवो यथा नक्षत्रा" ऋ॰ १।५०।२ ।

**तार** पु॰ तारयति संसारसागरात् तॄ—णिच्—अच् तार्य्यतेऽनेन वा तॄ—णिच करणे अच्, तॄ—णिच्—भावे अच् वा । १प्रणवे ओङ्कारे "तारयेद् यस्माद्वाम्भोधेः संसारपाशकन्दमानवम् । तत्तार इति ख्यातो यत्र ब्रह्मा व्यलोकयत्" काशीख॰ ७३ अ॰ । २वानरभेदे ३शुद्धमौक्तिके ४मुक्ताविशुद्धौ मेदि॰ ५देवीप्रणवे कूर्चबीजे (ह्रीँ) तन्त्रसा॰ ६तारणे विश्वः ७भक्तादेवे "काश्यां विश्वेश्वरोऽहं गिरि-

पतितनयाश्रयुतो वामभागे शुण्डादण्डेन दक्षे त्रिपथ-गतटिनीतीरयुक्तान्वुभागे। मायाबीजस्य कर्णे सुर-मुनिरहितो ध्यानयुक्तः यदासि प्रीत्या लोकस्य तस्मात् सुरमुनिगणकैरुच्यते तारनामेति” शब्दार्थचि० धृतवाक्यम् ८रूप्ये न० राजनि०।९नक्षत्रे न०स्त्री०मेदि०“विपत्तारे गुरु टद्यात्” ताराबलादिन्दुरथेन्दुवीर्य्यात्” ज्योति० त०सा० त० उक्ते अध्ययनरूपे प्रथमे १०गौणसिद्धिभेदे। “ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः। दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः” सा० का०। “विहन्यमानस्य दुःखस्य त्रित्वात् तद्विघातास्त्रय इति। इमा मुख्यास्तिस्रः सिद्धयस्तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयस्ता अपि हेतुमत्तया तिस्रः हेतुतया पञ्च व्यवस्थिताः। तास्वाद्या अध्ययनादिलक्षणा सिद्धयो हेतवः मुख्यास्तु हेतुमत्यः। विधिवद्गुरुमुखाद-ध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमसिद्धिस्तारमुच्यते” त०कौ० ११विष्णौ पु० “अमोघः क्षारणस्तारः शूरः शौरिर्जनेश्वरः” भा० अनु० १४९ अ० सहस्रनामकथने। १२शुद्धशब्दे पु०। १३तद्वति त्रि० मेदि०। १४स्फुरितकिरणे १५निर्मले त्रि० भर०। दिक्शब्दात् परम् तीरस्य तारादेशः। १६तीरे। दक्षिणतारं दक्षिणतीरमित्यर्थः १७उच्चैःस्वरे त्रि० १८नेत्रकनीनिकायां न० स्त्री० “मत्तयेव घूर्णितनन्दतारया” काद०। “तारैर्बभूवे परभागलाभतः” माघ० शुद्धमुक्ताफले। “तारहेमघटारत्नविमानशत-शोभितम्” भाग० ४।६।२७। प्रणवे “तारो मायारमा योगो मनोऽमोघनमुच्यते”। (ओं श्रीं ह्रीं) दी० त० “तारं व्योमाग्निमनुयुग्दण्डी ज्योतिर्मनुर्मतः” दी० त०। “हारममलतरतारमुरसि दधतम्” जयदेव। “उरसि निहिततारो हारः” अमरु। “तारकोलवलयेन करेण” सा०द०।

तारक त्रि० तारयति तृ-णिच्-ण्वुल्। १तारयितरि। “तत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे” जाबालोप०। स्त्रियां कापि अत इत्त्वम्। २दैत्यभेदे तत्कथा शिवपुराणे दृश्या। ३कर्णे ४भेलके च मेदि०। तारैव स्वार्थे क। “तारका ज्योतिषि” पा० अजादि० टाप् न अत इत्त्वम्। तारका। ५नेत्रकनीनिकायां स्त्री। ६चक्षुषि न० स्त्री० रुद्रि०। “तस्मिन् विप्रकृताः काले तारकेण दिवौकसः” कुमा०। “अभिभाव्यतारकम-हर्निशमद्युतिबिम्बमस्तमितभासु नभः” माघ “कुमार-स्तुतिषु तारकोद्धरणम्” काद०। न दण्डपाना नेत्रो-त्पाटनमिति अन्यर्थः। “पतनं तारकादीनाम्” सुश्रु० “तनुप्रकाशेन विचेयतारका” रघु०। “तारकापरिमित चक्षुर्विनाशपिशुनम्” “कापि विहृत्य दिवावसाने लोम्भिततारका” काद०। “त्र्यधिकदशयतिर्नौ रौ भवेतां रसौ तारका, इत्तरत्नाकरोक्ते अष्टादशाक्षरपा-दके ७छन्दोभेदे च। [तत्कथा शिवपु० दृश्या।

तारकजित् पु० तारकं दैत्यं जयति जि-क्विप्। कार्त्तिकेये

तारकाक्ष पु० तारकासुरस्य ताराक्षापरपर्याये पुत्रभेदे “निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः। ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव।” इत्युपक्रमे “काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः। राजतं कम-लाक्षस्य विद्युन्मालिन आयसम्” भा० क० ३३ अ०। २कुमारानुचरभेदे “महाजठरपादाङ्गास्तारकाक्षाश्च भारत!” भा० श० ४६ अ०।

तारकब्रह्म न० कर्म०। रामस्य (ओं रामाय नमः) षडक्षरे मन्त्रे। “षडक्षरं महामन्त्रं तारकब्रह्म-उच्यते। रामाय नम इत्येतत् प्रणवादि षडक्षरम्” इति अन्योऽपि मन्त्रः पद्मपुर० उक्तो यथा। “मुमूर्षो-र्मणिकर्ण्यान्तु अर्द्धोदकनिवासिनः। अहं दिशामि ते मन्त्रं तारकं ब्रह्मवाचकम्। ओं श्रीरामरामेत्येत-न्मन्त्रं तारकमुच्यते। अतस्त्वं जानकीनाथ! परं ब्रह्म विनिश्चितम्”।

तारकादि सञ्जातार्थे इतच्प्रत्ययनिमित्ते पा० गण सू० उक्ते शब्दगणे स च गणो यथा

“तारका, पुष्प, कर्णिक, मञ्जरी, ऋजीष, क्षण, सूत्र, मूत्र, निष्क्रमण, पुरीष, उच्चार, प्रचार, विचार, कुड्मल, कण्टक, मुसल, मुकुल, कुसुम, कुतूहल, स्तवक, किसलय, पल्लव, खण्ड, वेग, निद्रा, मुद्रा, बुभुक्षा, धेनुष्या, पिपासा, श्रद्धा, अभ्र, पुलक, अङ्गारक, वर्णक, द्रोह, दोह, सुख, दुःख, उत्कण्ठा, भर, व्याधि, वर्मन्, व्रण, गौरव, शास्त्र, तरङ्ग, तिलक, चन्द्रक, अन्धकार, गर्व, मुकुर, हर्ष, उत्कर्ष, रण, कुवलय, गर्द्ध, क्षुध्, सीमन्त, ज्वर, गर, रोग, रोमाञ्च, पण्डा, कज्जल, तृष्, कोरक, कल्लोल, स्थपुट, फल, कञ्चुक, शृङ्गार, अङ्कुर, शैवाल, बकुल, श्वभ्र, आराल, कलङ्क, कर्दम, कन्दल, मूर्च्छा, अङ्गार, हस्तक, प्रतिबिम्ब, विघ्न, तन्त्र, प्रत्यय, दीक्षा, गर्ज, (गर्भादप्राणिनि”) “तदस्य

सञ्जाता तारकाऽस्य इतच् पा० इतच् तारकित इत्य त्राकृतिगणत्वात् अन्येऽपि शब्दा यथाप्रयोगमत्रावसेयाः।

**तारकायण** पु० विश्वामित्रपुत्रभेदे "औदुम्बरा ह्यविघ्नाता तारकायणचुञ्चुला" हरिवं० २७ अ०। विश्वामित्रपुत्रकथने। [तयोऽप्यत्र।

**तारकारि** पु० ६त०। कार्त्तिकेये हेमच०। तारकशत्रु प्रभृ-

**तारकित** न० तारका सञ्जाता अस्य तार० इतच्। नक्षत्रयुक्ते आकाशे "सितनिशाहयदिद स्फुटमित्यतस्तगण नाधिकतारकिताम्बर" नैष०।

**तारकिणी** स्त्री तारका सन्त्यत्र इनि ङीप्। १नक्षत्रयुक्तायां रात्रौ राजनि०। २तारकायुक्ते त्रि० स्त्रियां ङीप्।

**तारकोपनिषद्** स्त्री तारयति भवसागरात् तारि-ण्वुल्। तारिका उपनिषत्। उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।

**तारक्षिति** पु० तारा उच्चा क्षितिर्यत्र। देशभेदे स च देश वृ० सं० १४ अ० प्रतीच्यामुक्तः "अपरस्यां मणिमान्" इत्युपक्रमे "पञ्चनदरमठपारतताराक्षितिजृङ्गवैश्यकनकशकाः" कूर्म०। २उच्चभूमौ स्त्री।

**तारण** पु० तारयत्यनेन ल्युट्। १भेलके रत्ना०। कर्त्तरि ल्यु। २तारयितरि त्रि० ३विष्णौ पु० "अशोकस्तारणस्तार" विष्णुस०। ४भावे ल्युट्। ५तारणकरणे ६उद्धारणे च न० "तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै" भा० अ० १२अ०। भावे युच्। तारणा ७तरणोपाये स्त्री "तारणा पारणा चैव तद्व्रतं सर्वकामिकम्" हरिवं० १४० अ०। प्रभवादिषष्टिवर्षमध्ये अष्टादशे वर्षभेदे। "अति वृष्टिश्च जायेत धान्यश्चाथ गुणोत्तमम्। शस्य भवति सामान्यं तारणे सुरवन्दिते।" ज्यो० त०। "तारण तदनु भूरियारिदगभ्यवृष्टिमुदितञ्च पार्थिवम्" वृ० स० ८अ०।

**तारणि(णी)** स्त्री तार्य्यतेऽनया तॄ-णिच्-अणि। १नौकायां हारा० वा ङीप्। ङीषन्त २काश्यपपत्नीभेदे याजोप याजयोर्ऋष्योर्मातरि तस्या अपत्यम् ढक्। तारणेय तदपत्ये। "तथैव च महाभाग सोऽपश्यद्ब्रह्मचारिणौ। याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ परमेष्ठिनौ। संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ। तारणेयौ युक्तरूपौ ब्राह्मणावृषिसत्तमौ" भा० आ० १६७ अ०।

**तारतण्डुल** पु० तार शुभ्रमौक्तिकमिव शुभ्रस्तण्डुलोऽस्य। श्वेतयवनाले राजनि०।

**तारतम्य** न० तरतमयोर्भावः ष्यञ्। न्यूनाधिकत्वे "निर्भ्रम निभृतमेतद् दृश्यते तारतम्यं परिगणितविशेषस्थितिमत्साम्। बोधनाय विधिना विनिर्म्मितारेफ एव जयवैजयन्तिका" इत्युद्भट। "अन्यो तारतम्य नराणाम्" स्मृत्य० तरतमशब्दे उदा०।

**तारतार** न० तारयतीति तारं तत्प्रकारं प्रकारे द्वित्वम्। सां० त उक्ते गौणतृतीयसिद्धिभेदे तारशब्दोदितं "शब्द शब्दोऽध्ययनम्" इत्यादिवाक्ये "ऊहस्तर्क आगमाविरोधिन्यायेनागमार्थपरीक्षणम् संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं तदिदं मननमाचक्षते आगमिनः। सा तृतीया सिद्धिस्तारतारमुच्यते" त० कौ०।

**तारटी** स्त्री तरट्येव स्वार्थे अण् ङीप्। तरटीवृक्षे राजनि० तारटीति पाठान्तरं तत्रार्थे। [राजनि०।

**तारपुष्प** पु० तारं रजतमिव पुष्पमस्य। कुन्दवृक्षे।

**तारमाक्षिक** न० तारं रूप्यमिव माक्षिकम् उपधातुभेदः। रजततुल्ये उपधातुभेदे। "तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम्। किञ्चिद्रजतसाहित्यात् तारमाक्षिकमीरितम्। अनुकल्पतया तस्य ततो हीनगुणाः स्मृताः। न केवलं रूप्यगुणावर्त्तन्ते तारमाक्षिके। द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यतः। स्यात् तारमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम्। चक्षुष्यं वस्तिरुक्कुष्ठपाण्डुमेहविषोदरम्। अर्शः शोथं क्षयं कण्डूं त्रिदोषमपि नाशयेत्। मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान् सकुष्ठान्। तथैव माला व्रणपूर्विकाश्च करोत्यशुद्धं रजताख्यमाक्षिकम्"। शोधनन्तु। "कर्कोटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम्। भावयेदातपे तीव्रे विमला शुद्ध्यति ध्रुवम्। विमला तारमाक्षिकम्। मारणन्तु "कुलत्थस्य कषायेण घृष्टा तैलेन वा पुटेत्। तक्रेण वाऽजमूत्रेण म्रियते तारमाक्षिकम्" भावप्र०।

**तारल** पु० तरल एव अण्। १तरले २विटे च शब्दार्थचि०।

**तारवायु** पु० कर्म०। अत्युच्चशब्दयुक्ते पवने।

**तारविमला** स्त्री तारो रजतमिव विमला। तारमाक्षिके उपधातुभेदे शब्दार्थचि०।

**तारशुद्धिकर** न० तारस्य रजतस्य शुद्धिं धात्वन्तरयोगात् जातमलशुद्धिं करोति कृ-ट। सीसके तत्सम्पर्कादि रजतस्य मलशुद्धेर्लोकसिद्धा राजनि०।

**तारसार** पु० उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्।

**तारहार** पु० तारैर्निर्म्मितो हारः। स्थूलमुक्ताहारे "प्रवर्द्धितोरःस्थलतारहार" रघु०।

**तारा** स्त्री तारयति संसारार्णवात् भक्तान् तॄ-णिच्-अच्। १दशमहाविद्यान्तर्गते द्वितीयमहाविद्याभेदे। २नक्षत्रे च

मित्रभन्त्यार्थसञ्चय। वैनाशिके विनाशः स्यात् देहद्रविणसम्पदाम्"। नाडीनक्षत्रफलम्। "जातिभे कुलनाशः स्याद्दुःखं नक्षत्राभिषेकभे। देशभे देशभङ्गः स्यात् क्रूरैरेव शुभैः शुभम्। यस्मिन् राजाभिषिक्तो भवति तदाभिषेचनिकभम् अ ह उ ए कृत्तिका श्री यदि तु रोहिणी त्यादिदेशभम् (चक्रशब्दे १२४८पृ०शतपदचक्रं दृश्यम्)। उषादिगणादिकार्य्यभेद मु० चि० उक्तो यथा

"उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरम्। तत्र स्थिरबीजगेहशान्त्यारामादिसिद्धये। स्वात्यादित्ये श्रुतेस्त्रीणि चन्द्रश्चापि चरं चलम्। तस्मिन् गजादिकारोहो वाटिकागमनादिकम्। पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथा। तस्मिन् घाताग्निशाठ्यानि विषशस्त्रादि सिध्यति। विशाखाग्नेयभे सौम्यो मिश्रं साधारणं स्मृतम्। तत्राग्निकार्य्यं मिश्रं च वृषोत्सर्गादिसिद्धये। हस्ताश्विपुष्याभिजित् क्षिप्रं लघु गुरुस्तथा। तस्मिन् पण्यरतिज्ञानभूषाशिल्पकलादिकम्। मृगान्त्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा। तत्र गीताम्बरक्रीडा मित्रकार्य्यं विभूषणम्। मूलेन्द्रार्द्राहिभं सौरिस्तीक्ष्णं दारुणसंज्ञकम्। तत्राभिचारघातोग्रभेदाः पशुदमादिकम्। मूलाहिमिश्रोग्रमधोमुखं भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयं ध्रुवम्। तिर्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विभानीदृशकृत्यमेषु"।

**ताराकूट** न० दम्पत्योर्विवाहशुभाशुभज्ञापके कूटभेदे उपयमशब्दे १२४८ पृ० दृश्यम्। "वर्णो वश्यस्तथा तारा योनिश्च ग्रहमैत्रकम्। गणमैत्रं भकूटञ्च नाडी चैते गुणाधिका" उद्वा०वि०। [भेदे तारकाशब्दे दृश्यम्।

**ताराक्ष** पु० तारकाक्षापरपर्य्यायके तारकासुरस्य पुत्रे दैत्य-

**ताराचक्र** न० तन्त्रोक्ते दीक्षणीयमन्त्रशुभाशुभज्ञानार्थे चक्रभेदे तत्स्वरूपादि चक्रशब्दे २८०९ पृ० नक्षत्रचक्रे दृश्यम्।

**ताराचमन** न० तारायाः पूजाद्यङ्गमाचमनम्" शा० त०। तारादेवीपूजाङ्गके आचमनभेदे तच्च भैरवतन्त्रे उक्तं यथा "ताराभेदैस्त्रिभिः पीत्वा मायया क्षालयेत् करम्। हुँ बीजं तु हृदन्तश्च फट्कारे क्षालयेत् करम्। आस्ये नासे दृशौ श्रोत्रे नाभिवक्षःशिरोभुजान्। वैरोचनादिभिः स्पृष्ट्वा सर्वपापैः प्रमुच्यते। आचम्य भैरवो भूत्वा शत्रुराशा प्रपश्यति"। ताराभेदैस्त्रिभिः। उग्रतारैकजटानीलसरस्वतीभेदैः। वैरोचनादयस्तु। वैरोचन, शङ्ख, पाण्डुर, पद्मनाभ, नामक, मामक, पाण्डुर, तारकाऽऽदितान्तः यमान्तक, विघ्नान्तक, नरा-

न्तका", सचतुर्थीप्रणवादिनमोऽन्तका" कृष्णानन्दतन्त्रसा०।

**ताराधिप** पु० ६त०। १चन्द्रे २शिवे ३बृहस्पतौ ४वालिवानरे ५सुग्रीवे च। "ततार ताराधिपखण्डधारी" कुमा०। "ताराधिपे बलिनि लग्नगतेऽत्र यस्मिन्" ज्यो०त०। तारापतितारानाथादयोऽप्यत्र। "कठोरतारापतिलाञ्छनच्छवि" माघ। ६नक्षत्राधिपेषु अश्विनीकुमारादिषु ताराशब्दे दृश्यम्।

**तारापथ** पु० ताराणां पन्थाः अच् समा०। आकाशे हला०।

**तारापीड** पु० ताराणामापीड भूषणमिव। चन्द्रे त्रिका०।

**ताराप्रमाण** न० अश्विन्यादिनक्षत्राणां स्वरूपावेदकशब्दविशेषे स च सू० सि० ८८ अ० सप्रयोजनमुक्तो यथा

"शिखिगुणरसेन्द्रियानलशशिविषयगुणर्तुपञ्चवसुपक्षाः। विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विवसुदहनाः। भूतशतपक्षवसवो द्वात्रिंशच्चेति तारकामानम्। क्रमशोऽश्विन्यादीनां कालस्तारा प्रमाणेन। नक्षत्रसदृशे फलमर्द्दे तारकामिते सदृशम्। दिवसैर्व्वत्सरस्य नाशो व्याधेरन्यस्य वा वाच्यः"।

**ताराभूषा** स्त्री तारा भूषा यस्याः। रात्रौ राजनि०।

**ताराभ्र** पु० तारो निर्मलः अभ्रस्य अभ्रो मेघ इव शुभ्रः स्यात्। कर्पूरे राजनि०।

**तारामण्डल** न० ताराणां मौक्तिकानां मण्डलं यत्र। ईश्वरमण्डपभेदे शब्दरत्ना०। ६त०। २नक्षत्रमण्डले च।

**तारामृग** पु० ताराख्यः मृगः मृगशिरः। मृगशिरोनक्षत्रे "अन्वधावत् मृगं रामो रुद्रस्तारामृगं यथा" भा०व० २७७ अ० "ताराख्यं मृगम् तारामृगं प्रजापतिः स्वां दुहितरं मृगो भूत्वा जगाम तस्य रुद्र शिरोऽच्छिनत् तदेव मृगशिरो नक्षत्रम्" नीलक०। "एष चैव मृगः श्रीमान् यश्च दिव्यो नभश्चरः। उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ" रामा० अर० ४३।२।३०।

**तारारि** पु० ६त०। विटमाक्षिके उपधातुभेदे हेमच०।

**तारावती** स्त्री ककुत्स्थराजभार्य्यायां मनोमथिन्यां जातायां दुर्गावतारभूतायां कन्यायां शिवावतारचन्द्रशेखरपत्न्याम्। तत्कथा कालिकापु० ४७ अ० यथा।

"काकुत्स्थो भार्य्यया सार्द्धमत्यन्तसहितोऽभवत्। सहजेनाथ हारेण भूषिता सा ककुत्स्थजा। वत्सभे मन्दिरे तस्य वर्द्धिष्व सुरापगा। तेनैव हारचिह्नेन तस्यास्ताराश्वतीति वै। नामाकरोत् पिता काले यथोक्तं स्वदशनम्"। "पतिं पूर्व्वं प्रभौ रामस्तारावती सती। स्वयं सा पार्वती देवी पत्नी च चन्द्रशेखरम्। वैवाहि-

केन विधिना स राजा चन्द्रशेखर। तारावतीं तदा भार्य्यां ककुत्स्थस्य नृपते सुताम्। संस्कृत्य ग्राहयामास देवेभ्यो वैदिकैर्मखे"

**ताराषोढा** स्त्री ६त०। तारापूराङ्के षोढान्यासभेदे तन्त्रसारे ताराशब्दे दृश्यम्। "इति षोढा च कथिता तारायाः सर्वसिद्धिदा" तन्त्रसा०। [ताडिकाशब्दे दृश्यम्।

**तारिका** स्त्री ताड़िका डस्य रः। तालरसजाते मद्यभेदे।

**तारिन्** त्रि० तारयति तॄ–णिच्–णिनि। १तारके। स्त्रियां ङीप्। सा च दशसु महाविद्यासु २द्वितीयविद्यायाम् सङ्केटा तन्त्रसारे उक्ता यथा "तारा चोग्रा महोग्रा च वज्रा काली सरस्वती। कामेश्वरी च चामुण्डा इत्यष्टौ तारिणी गणा। अथ भेदान् प्रवक्ष्यामि तारिण्या सर्वसिद्धिदान्। येषां विज्ञानमात्रेण जीवन्मुक्तो हि साधक" इत्युपक्रमे तासामभिधानम्। ३बुद्धदेवताभेदे त्रिका०।

**तारुक्ष्य** पु० तरुक्षस्यर्षेरपत्यं गर्गा० यञ्। तरुक्षर्षेरपत्ये। स्त्रियां लोहिता० ष्फ। तारुक्ष्यायणी। यूनि तु तारुक्ष्यायण फक्। यूनि तदपत्ये स च गोत्रप्रवरान्तर्गत। [स्त्रियां ङीप्।

**तारुण** पु स्त्री तरुणस्यापत्यम् उत्सा० अञ्। तरुणस्यापत्ये

**तारुण्य** न० तरुणस्य भाव ष्यञ्। यौवने अमर। "आरान्वा गाढतारुण्या समस्तरतकोविदा" सा० द०। "ततः स राजा तारुण्यादौरसेन बलेन च" भा०शा०१२५ अ०।

**तारेय** पु० तारायाः अपत्यम् ढक्। अङ्गदे १वालिपुत्रे। "करि ष्यत्येष तारेयस्तेजस्वी तरुणोऽङ्गद" रामा० कि०२२सर्गः। २बृहस्पतिभार्य्यायास्तारायाश्चन्द्रजे पुत्रे बुधे च।

**तार्कव** त्रि० तर्कोर्विकार कोपधत्वात् अण्। तर्कुविकारे सि० कौ०। [२तर्कशास्त्राभिज्ञे च।

**तार्किक** त्रि० तर्कं वेत्ति तच्छास्त्रमधीते वा ठञ्। १तर्कवेत्तरि

**तार्क्ष** पु० तृक्ष एव स्वार्थे अण्। कश्यपे ऋषौ। "प्रमथ्य तरसा राज्ञ शाल्वादींश्चैद्यपक्षगान्। पश्यतां सर्वलोकानां तार्क्षपुत्र सुधामिव" भाग०। २ पातालगरुडलतायां स्त्री राजनि० गौरा० ङीष्।

**तार्क्ष्य** पु० तृक्षस्य गोत्रापत्यं गर्गा० वृक्षेत्यत्र तृक्षेति पाठान्तरात् यञ्। १तृक्षमुनेर्गोत्रापत्ये स्त्रियां लोहि० ष्फ। तार्क्ष्यायणी। २गरुडाग्रजे अरुणे ३गरुड़े ४अश्वे ५सर्पे पु स्त्री० ६रसाञ्जने च मेदि०। ७शालवृक्षे ८स्वर्णे च शब्दर० ९अश्वकर्णवृक्ष १०स्यन्दने हेमच०। ११पर्वतभेदे १२विहगमात्रे। "अयक्ष्मतरात् स्वयहतस्तस्य तार्क्ष्यारिष्टनेमिश्च सेनानीग्रामण्यौ" यजु० १५।१८। "तीक्ष्णोऽन्तरीक्षे क्षिप्र'त पक्षी तार्क्ष्य" वेददी० पृषो०। तत्र गरुडे "आरुह्य तार्क्ष्य नभसीव भूतले" माघ "भवन्ति निर्विषा सर्पा यथा तार्क्ष्यस्य दर्शनात्" पञ्चत०। "त्रस्तेन तार्क्ष्यात् किल कालियेन" रघु। "दशरात्रमुपयुज्य सर्व तरति किल्बिष तार्क्ष्यदर्शनमुपपद्यते" सुश्रुत। तार्क्ष्यस्येव दर्शनं दूरात् दर्शनमित्यर्थ। सर्पे "त्रिपदा शिखिनस्तार्क्ष्याश्चतुर्दंष्ट्रा विषाविन" भा०भी० ६ अ०। [शब्दार्थचि०।

**तार्क्ष्यज** न० तार्क्ष्ये पर्वते जायते जन–ड। रसाञ्जने

**तार्क्ष्यध्वज** पु० तार्क्ष्यो ध्वजोऽस्य। गरुडध्वजे विष्णौ हेमच० तार्क्ष्यकेतनादयोऽप्यत्र।

**तार्क्ष्यनायक** पु० ६त०। गरुडे राजनि० तार्क्ष्यनाथादयोऽप्यत्र

**तार्क्ष्यप्रसव** पु० तार्क्ष्ये शैल प्रसवोऽस्य। अश्वकर्णवृक्षे राजनि०

**तार्क्ष्यशैल** न० तार्क्ष्यशैले भवम् अण्। रसाञ्जने राजनि० "सिन्धूद्भूत चक्रमर्दस्य बीजमिक्षूद्भूत केशर तार्क्ष्यशैलम्"। "लौह चूर्ण मागधी तार्क्ष्यशैल तुल्याः कार्य्याः कृष्णवर्णास्तिलाश्च" सुश्रुतः।

**तार्क्ष्यसामन्** न० सामभेदे लाट्या०१।६।१९।

**तार्क्ष्यायण** पु स्त्री० तृक्षस्य ऋषेरपत्यं युवा गर्गा० वृक्षेत्यत्र तृक्षेति पाठान्तरात् यञ् यूनि फक् अनातीत्युक्तेराप-त्यस्य यस्य लोपो न। तृक्षर्षेर्यून्यपत्ये। [शब्दरत्ना०।

**तार्क्ष्यी** स्त्री तार्क्ष्यस्य खगस्य प्रिया अण्। वनलताभेदे

**तार्ण** त्रि० तृणस्येद शिवा० अण्। १तृणसम्बन्धिनि २तृण-जन्ये वह्नौ पु०। "तार्णतार्णीभय नास्तीत्यत्र तार्णत्वमतार्णत्वञ्च वह्नित्वव्याप्यो जातिभेद इति नव्य नैयायिका"। तृणात् तद्विक्रयात् स्थानादागतः आयस्थानस्वात् शुण्डिका० अण्। ३तृणविक्रयरूपार्थस्थानजे करे त्रि०।

**तार्णक** त्रि० तृणानि सन्त्यस्मिन् छण् कुक् च तार्णकीयास्तस्मिन् भवः बिल्वका० छस्यात्य लुक्। तृणयुक्तदेशभवे।

**तार्णकर्ण** पु स्त्री० तृणकर्णस्यापत्यं शिवा० अण्। तृणकर्ण-र्षेरपत्ये। [नामकर्षेर्गोत्रापत्ये।

**तार्णायन** पु स्त्री तृणस्यर्षेर्गोत्रापत्यम् नडा० फक्। तृण-

**तार्त्तीय** त्रि० तृतीय एव स्वार्थे अण्। तृतीये "प्रथमस्य ठसरस्याङ्गस्तार्त्तीय तृतीय सवनम्" आश्व० श्रौ० ११।४

**तार्त्तीयीक** त्रि० तृतीय एव तृतीय+स्वार्थे ईकक्। तृतीये "तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषण लोचनं व" मालतीमा०धवम्।

भाषित ४। एकतालो भवेत् न्नेत्रः क्रमेणापि चतुष्टयम। शेषश्शून्य गजगस्तु सर्वतो सुनिभाषितम्५। प्रथम युगलश्चैव तत्पर तालमेककम्। शेषे युग्म तथा शून्य पञ्चताल प्रकीर्त्तितम् ६। युगल प्रथम ताल तत्परश्चैक शून्यकम्। शेषे च युगल त ल रूपक परिकीर्त्तितम्७। एकताल तथा शून्य क्रमेण द्विविध भवेत्। शेषे युगलतालश्च समताल भवेत् परम् ८।"

रुद्रतालभेदलक्षणादि "एकताल तथा शून्यं क्रमेण त्रिविध भवेत्। तत्परं युगल ताल इत्येव वीरविक्रम १। युग्मताल तथा शून्य तत्पर द्वयतालकम्। शेषे च युगल ताल सदृङ्विषम स्मृतम् २। युग्मतालश्च शून्यञ्च एकतालश्च तत्परे। शेषैकञ्च त्रिशून्यञ्च विषम चरण भवेत् ३। एकताल तथा शून्य क्रमेणापि त्रिधा भवेत्। युगल युगल पश्चात् स वीरदपक स्मृत ४। प्रथममेकतालञ्च तत्पर शून्यमेककम्। शेषैकन्न त्रितालञ्च मण्डूकस्य गतिर्यथा ५। समतालं यथा दृष्टं तथा कन्दर्पभाषितम्। समताले भवेत् शून्य कन्दर्पे नास्ति, तत्पुन ६। पञ्चतालात् पर शून्य षोगपाड्डिङ्कास्तमम्। चत्वार्श्च भवेत् लक्ष्म सपासस्य यथा गति ७। एकतालं तथा शून्यं क्रमेणापि द्विधा भवेत्। शेषैकन्न त्रितालञ्च म वचरणभाषितम् ८। एकताल एकशून्यमित्येवञ्च भवेत् क्रमात्। विरामे एकतालञ्च वागभेदे दपकोषिका ९। युगल युगल पश्चात् तदन्त्येकतालकम्। शेषे च युग्म शून्यञ्च गजेन्द्रगुरुभाषितम् १० युग्मशून्यं विरामे च एकताल भवेत् क्रमे। छुटकाख्यानक धीर सङ्गीतपरिनिष्ठितम्११।"

ब्रह्मतालभेदलक्षणानि। "युगञ्च लक्ष प्रथमैकताल किञ्चिद्विरामे पुनरेकतालम्। ब्रह्माख्यतालञ्च सुगीत मध्ये यथा कपोती हि करोति शब्दम् १। युग्मताल भवेद्रक्ष एकतालञ्च तत्परे। शेषे द्वितीयशून्ये च विरामब्रह्मतालकम् २। प्रथमञ्चैकतालञ्च युग्मशून्य तथा परे। शेषैकन्न त्रितालेति षट्कला स्वलु कथ्यते ३। आदौ युग्म तथा युग्म त्रितालञ्च तथा परे। सप्तमाला भवत्येषा ब्रह्मतालान्तरे शुभे४।"

इन्द्रतालभेदलक्षणानि "सविरामं त्रितालञ्च एकशून्यन्तथा परे। शेषे लक्ष त्रितालञ्च देवसार इतीर्य्यते१। द्वितीयशून्य विरामे भवति तत्र त्रितालानि। शेषेण द्विशून्यमित्येव देवपाली २। प्रथममेव युग्मताल तत्पश्चादेक शून्यविरामे। शेषे त्रितयताल भवतीति मदन दोलेति। युग्मताल समारभ्य पञ्चताल भवेत्तथा। चत्वार्श्च तथा लक्ष गुरु गन्धर्व ईरित ४। श्रावणस्य यथा धारा तथा तालो भवेद्धन। पञ्चतालान्तराणीति पञ्चालीति प्रकीर्त्तिता ५ सविराम चतुस्ताल त्रिताल शून्यमन्ततः। मेघारम्भे यथा केका कथ्यन्ते इन्द्रभाषित ६।"

चतुर्दशतालभेदलक्षणानि "एकतालञ्च शून्यञ्च क्रमेण त्रितय तत। शेषे चतुष्टय लक्ष चित्रताल इतीर्य्यते१। एकचन्द्रस्तथा युग्म ताल प्रत्येकतस्त्रयम्। शेषे तौ वि च शून्यानि चन्द्रमाला भवेत्परा २। प्रथम षट्कतालञ्च चत्वार्न्तु भवेत् क्रमात्। शेषे युग्म तथा शून्य देवमाला च शोच्यते३। चन्द्रशून्य त्रितालञ्च विरामेण क्रमेण त। चत्वार्न्तु भवत्येवमङ्गज्योतिरिति स्थिति ४। एकैकतालान्तरयुग्मतालात् शून्यत्रय तत्परमेकतालम्। कलाभिदा शून्यभिदा समाख्या च स्वर्गधाराख्यमयीम ताल ५। युग्मशून्य विरामेण देवतालमिति क्रमात्। समाप्तावन्तरे शून्यमिति सर्वत्र भाषितम् ६। सत्वान्तरे राशिभि गोमवाम तथा सुस्वस्तुतानभानम्। युग्म सलक्ष क्रमतश्च ताल शेषे त्रितालञ्च धराधराख्या ७। एकतालञ्च शून्यञ्च क्रमेणापि चतुष्टयम्। क्रमातालत्रयश्चैव वसन्तवागुदाहृता ८। सविराम द्वय ताल युग्मताल तथा परे। शेषैकन्न त्रितालञ्च भवेत् काककलेति सा ९। त्रितालञ्च भवेद्द लक्ष तत्पर त्वेकतालकम्। शेषेऽपि च त्रितालञ्चेत् कीरमल्हा प्रचक्ष्यते। युग्म युग्म तथा युग्म तालन्त्वेक भवेत् क्रमात्। शेषे शून्य कलाभेदे तालवीति भवेत् पृथक् ११। सविराम द्वय ताल युग्मशून्यञ्च तत्परम्। शेषोर्न्तु त्रितालञ्च स्वर्णधारा प्रकीर्त्तिता १२। चन्द्रशून्य विरामेण द्वय ताल भवेत् क्रमात्। चत्वार्न्तु भवेद्द लक्ष भाषाख्य तालसत्तमम् १३। चत्वार्न्तु त्रितालञ्च द्वय ताल विरामकम्। इत्यर्द्धमाला विज्ञेया सङ्गीता भुवि सर्वतः"१४ सङ्गीतदामोदरे ४स्तबकम्"।

तालच्छेदम् उत्ता० स्त्र्। "पानर्सं द्राक्षमासुक खार्जुर तालमैक्षवम्" प्रा० वि० पुलस्त्योक्ते ११ मद्यभेदे न०

ताल**क** न० चु० तड–घञ् संज्ञायां क डस्य ल। हरिताले राजनि० २द्वारकपाटरोधयन्त्रे (ताला) हेमच०। ३तुवरिकायां(अरहर)शब्दर०। स्वार्थे क।४ताले इत्यादौ

**ताल(लि)कट** पु० देशभेदे स च देशः वृ० स० १४ अ० कूर्म्मविभागे दक्षिणस्यामुक्तः । अथ दक्षिणेनेत्युपक्रमे "का बाजिनसौरिकीर्णताल(लि)कटा" ।

**तालकन्द** न० तालस्येव कन्दमस्य । तालमूल्याम् "कसेरु कोविदारञ्च तालकन्दं तथाविधम्" प्रा० त० वायुपु० । "तालकन्दं तालमूलीति प्रसिद्धम्" रघु० ।

**तालकाभ** पु० तालकस्येवाभा यस्य । १हरितवर्णे हेम० २तद्वति त्रि० ।

**तालकी** स्त्री तालकस्येयम् अण् ङीप् । तालजमद्यभेदे (ताड़ी)

**तालकेतु** पु० तालस्तालचिह्नितः केतुरस्य । भीष्मे । "तासां प्रहसतो भीष्मस्तालकेतुर्व्यरोचत" भा० उ० १४९ अ० ।

**तालक्षीर** पु० तालजातं क्षीरमिव शुभ्रत्वात् । (तालेर चिनि) शर्कराभेदे राजनि० । स्वार्थे क । तालक्षीरक । तत्रार्थे ।

**तालगर्भ** पु० ६त० । (तालेर मेति) तालमस्तके । "अपि पित्तमृगाश्वखड्गदंष्ट्रैः करिहस्तच्छिदये सतालगर्भैः" वृ० स० ५० अ० ।

**तालङ्क** पु० ताडङ्क+डस्य लः । ताडङ्के भूषणे शब्दार्थचि० ।

**तालचर** पु० १देशभेदे २तद्देशवासिषु ३तन्नृपेषु ब० व० । "अश्वास्तालचराश्चैव चुचुपा वेणुपास्तथा" भा० उ० ११९ अ० ।

**तालजङ्घ** पु० ताल इव जङ्घा यस्य । १देशभेदे २तद्देशवासिषु ३तन्नृपेषु च ब०व० । "स हैहयान् समुत्साद्य तालजङ्घांश्च भारत !" भा० व० १०६ अ० । "हैहयानामुदावर्त्तो नीपानां जनमेजय ! । वङ्गस्तालजङ्घानां क्रथानामुद्गतो वसुः" भा० उ० ७२ अ० । "तालजङ्घं महाबलमौर्वेणैकेन नाशितम्" भा० अनु० १५२ अ० । ४पिशाचभेदे "निर्मांसास्तालजङ्घाश्च व्यादितास्या भयङ्कराः" इत्युपक्रमे "एते पिशाचाः सततं रक्षन्तु मम सर्वतः" हरिवं० ।९८ अ० । "कालपृष्ठमथो तालजङ्घम्" पा० आद्यदात्तता । [तालप्रलम्बे शब्दार्थचि० ।

**तालजटा** स्त्री तालस्य जटेव । तालवृक्षस्य जटाकारे पदार्थे

**तालध्वज** पु० तालः ध्वजोऽस्य । बलदेवे "सरस्वत्यास्तटे जात नग तालध्वजो बली" भा० श० ३८ अ० । "नातिदूरं ततो गत्वा नगं तालध्वजो बली" ५५ अ० । "अस्ति तालध्वजा नाम नगरी त्रिदशोपमेति" पद्मपु० क्रियायोगसारोक्ते २पुरीभेदे स्त्री ।

**तालनवमी** स्त्री तालोपहारा नवमी शा० त० । भाद्रशुक्लनवम्यां "मासि भाद्रपदे या स्यान्नवमी बहुलेतरा । तस्यां सम्पूज्य वै दुर्गामश्वमेधफलं लभेत्" । संवत्सरकौ० धृतगरुडपुराणवचनम् इयमेव तालनवमी ख्याता

**तालपत्र** न० तालस्य पत्रमिव । १कर्णभूषणभेदे ताडङ्के । अमरः । ६त० । २तालस्य पत्रे च । "क्वचित् विधवयेव उन्मुक्ततालपत्रया" काद० ।

**तालपत्रिका** स्त्री तालस्य पत्रमिव पत्रमस्याः ङीप् संज्ञायां कन् ह्रस्वः । तालमूलीवृक्षे राजनि० ।

**तालपत्री** स्त्री तालस्य पत्रमिव पत्रमस्याः ङीप् । मूषिकपर्ण्याम् राजनि० । "अपामार्गोऽश्वगन्धा च तालपत्री सुवर्चला" सुश्रु०

**तालपर्णी** न०स्त्री० ताल इव खड्गमुष्टिरिव पर्णमस्य । १मुरानामगन्धद्रव्ये शब्दच० स्त्रीत्वपक्षे पाककर्णेति ङीप् । सा च २मधुरिकायां जटाधरः ।

**तालपुष्पक** न० ताल खड्गमुष्टिरिव पुष्पमस्य कप् । १प्रपौण्डरीके शब्दर० । ६त० । २तालवृक्षकुसुमे च ।

**तालप्रलम्ब** न० ताले वृक्षे प्रलम्बते प्र+लम्ब—अच् । तालवृक्षस्य जटायाम् राजनि० । तथा "तालप्रलम्बस्य भङ्गं च तदुज्जापहम्" राजनि० । [बलदेवे त्रिका० ।

**तालभृत्** पु० तालं ध्वजरूपेण बिभर्त्ति भृ—क्विप् ६त० ।

**तालमर्द्दल** पु० तालस्य तालार्थं मर्द्दल इव । १वाद्यभेदे हारा०

**तालमूली** स्त्री० तालस्य मूलमिव मूलमस्याः ङीप् । मुषल्याम् । स्वार्थे क । तालमूलिका २दीर्घकन्दायाम् । मुषल्याम् । "तालमूली तु विद्वद्भिर्मुषलीति निगद्यते । मुषली मधुरा वृष्या वीर्योष्णा बृंहणी गुरुः । तिक्ता रसायनी हन्ति गुदजान्यनिलं तथा" "क्रौञ्चोदुम्बरभास्योनि श्वदंष्ट्रातालमूलिका । अजमोदा कदम्बस्य मूलं नागरमेव च" सुश्रु० ।

**तालयन्त्र** न० सुश्रुतोक्ते शल्योद्धारणार्थे यन्त्रभेदे । "तालयन्त्रे द्वादशाङ्गुले मत्स्यतालवदेकतालद्वितालके कर्णनासानाडीशल्यानामाहरणार्थम्" सुश्रु० ।

**तालरेचनक** पु० तालेन रेचयति चु० रिच—ल्यु स्वार्थे क । नटे शब्दर० । तालवेचनकेति तत्र पाठान्तरम् तत्रार्थे ।

**ताललक्षण** पु० तालो लक्षणं ध्वजोऽस्य । बलरामे हेमच०

**तालवन** न० ६त० । वृन्दावनस्थे तालप्रचुरे वनभेदे "गोवर्द्धनस्योत्तरतो यमुनातीरमाश्रितम् । ददृशाते ततो वीरौ रम्यं तालवनं महत्" हरिव० ७० अ० । २तालानां वने च । "सुपक्वतालवनानीव स चकार रथव्रजान्" भा० भी० ११७ अ० ।

**तालवृन्त** न० ताले करतले वृन्तं बन्धनमस्य, तालस्येव वृन्त-

मस्य वा। व्यजने हेमच०( पाखा) "तालवृन्तेन किं कार्य्यं लब्धे मलयमारुते" उद्भट । अस्य वायोर्गुणा यथा। "त्रिदोषशमनो वायुर्लघुश्च प्रकीर्त्तितः" भावप्र० "ताल-वृन्तभवो वायुस्त्रिदोषशमनो लघु" राजनि०। "न याति वायुस्तस्मात्तु तालवृन्तानिलाधिकम्" सुश्रु०। स्वार्थे क अ-व कप् वा। तालवृन्तक तदर्थे अमर ।

तालव्य त्रि० तालुनि भवः देहावयवत्वात् यत् । तालु-स्थाने "इचुयशानां तालु" इत्युक्तेषु वर्णभेदेषु ।

तालाकट पु० दक्षिणस्थे देशभेदे। तालाकटस्य राजा अण् सोऽभिजनोऽस्य वाऽण् । २तद्देशवासिजने ३तन्नृपे च बहुषु अणो लुक् ।"तत ग्रपीकं चैव तालाकटम् थापि वा। वशेचक्रे महातेजा दण्डकांश्च महाबलम्" भा० स० ३०। सहदेवदक्षिणदिग्विजये। अयमेव देश तालकटत्वेन वृ०स० १४ अ० उक्तः तालकटशब्दे दृश्य।

तालाख्या स्त्री ताल तत्सम्बन्धिनामाख्यायते आ+ख्या कर्मणि क । तरामामगन्धद्रव्ये शब्दच०। [अमर ।

तालाङ्क पु० तालमालाचिह्नितः अङ्कः ध्वजोऽस्य । बलदेवे।

तालादि पु० "तालादिभ्योऽण्" पा० विकारार्थे अण्प्रत्यय निमित्ते शब्दसमूहे । स च गण पा०गणसू०उक्तो यथा (तालाद्धनुषि) वार्हिण इन्द्रालिश इन्द्रादृश, इन्द्रायुध चय, श्यामाक पीयूक्षा"। ताल धनु पक्षे अश्मयटो। ताल तालमय वा मद्यम्।

तालावचर पु०तालेनावचरति अव+चर—अच् ।नटे त्रिका०

तालि स्त्री तल—प्रतिष्ठायां णिच्—इन् । भूम्यामलक्यां वा ङीप् । तदर्थे (ताड़ियात) ३ख्याते वृक्षे भरतः। "व मेभि पवनोद्धूतराजतालीवनध्वनि" रघु ।

तालिक पु तालेन करतलेन निर्वृत्तः ठक् । चपेटे (चापड़) (हाततालि)। तालो+स्वार्थे क। २तालमूल्याम् स्त्री हेमच०। ३लिखितस्य निबन्धने च शब्दर०। ४चपेटे स्त्री शब्दर०। ५ताम्रवल्ल्यां स्त्री राजनि०। "स्वैरं कृतमन्यदा विधाय तालिकाम्" काशी० ५ अ०। "उद्घाटनीय करतालिकानां दानादिदानीं भवतीभि रेष मैषधम्। [भाग्ये ३गणे च शब्दयपालः।

तालित न० चुरा० तड—क्त उस्य ल । १वर्णितपटे २वाद्य-

तालिन् पु० त० स० । तथेमर्पिणा प्रोक्तमधीयते शौनका-दिभिः । तन्नोक्ताध्येतृषु । ताली वाद्यत्वेनास्त्यस्य इनि । ७रसनाले त्रि० ९शिवे पु० "वंगवी पणवी ताली खली कालकट कट" भा० अनु० १७। शिवनामोक्तौ।

तालिश न० पु० तल—श ष गिच्च। पर्वते उणादिको०।

ताली स्त्री तालेन तन्निर्यासेन निर्वृत्ता अण्। (ताड़ी) १तालजातसुरायाम्। तल—प्रयत्नात् अच् गौरा०ङीष्। (ताड़ियात) २वृक्षभेदे, अमरः। ३तालमूल्याम्, (मूषलकन्दा) ४वृक्षभेदे राजनि०। ५आढ़कक्याम्, (अड़र) शब्दरत्ना०। ६तालीशपत्राख्ये वृक्षे, रत्नमाला। ७तालकोद्घाटनयन्त्रे (काटि) कुञ्चिकायाञ्च। हेमच०। ८ताम्रवल्ल्यां ९त्र्यक्षरपादके छन्दोभेदे यथा "ताली सा निर्दिष्टा। यद्दृष्टो मो यत्र" यथा "गामी ते गामीते साहस्य वैदूष्यम्" छन्दोमञ्जर्याम् । अस्य नारीत्यपि सज्ञोक्ता ।

तालीपत्र न० ताल्या इव पत्रमस्य । तालीशपत्रे राजनि०।

तालीश न० तालीव रोगान् श्यति शो—क। स्वनामख्याते वृक्षे राजनि० "तालीश लघु तिक्तोष्ण श्वासकासकफानिलान्। निहन्त्यरुचिगुल्माग्निमान्द्यक्षयामयान्" भावप्र० २भूम्यामलक्यां मेदि०।

तालीशपत्र न०तालीश रोगनाशक पत्रं यस्य। १स्वनाम-ख्याते वृक्षे, २भूम्यामलक्याञ्च राजनि०।

तालीशाद्यमोदक पु०चक्रदत्तोक्ते मोदकभेदे यथा "ताली-शपत्र मरिच नागर पिप्पली शुभा । यथोक्तभाग युक्ता स्युस्त्वगेले चार्द्धभागिके । पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा । श्वासकासारुचिहर तर्पणं दीपनं परम् । हृत्पाण्डुग्रहणीरोगप्लीहशोषज्वरापहम्। छर्द्यतीसार-कासघ्नं मूढवातानुलोमनम् । कल्पयेद् गुड़िकां चैतच्चूर्णं पक्कासितोपलाम् । गुड़िका ह्यग्निसयोगाच्चूर्णाल्लघुतरा स्मृता । पैत्तिके चाकयन्त्यके शुभाय यशलोचनम्" ।

तालु न० तरन्त्यनेन वर्णाः तॄ—ञुण् रस्य लः। जिह्वे-न्द्रियाधिष्ठाने (टेको) स्थानभेदे । "मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते। ततो नानारसो जज्ञे जिह्वया योऽधिगम्यते" भाग० । "निर्भिन्ने तालु वरुणो लोकपालोऽविशद्धरेः । जिह्व-यांशेन च रसान् ययासौ प्रतिपद्यते" भाग० ३।६।। सुश्रु० तालुनि चैकमस्थि तच्च कपालाकारं यथोक्तं सुश्रुते अस्थीनीत्युपक्रमे "एतानि पञ्चविधानि भवन्ति। तद्यथा कपालरुचकतरुणवलयनलकसञ्ज्ञानि । तेषां जानुनितम्बां-सगण्डतालुशङ्खशिरस्सु कपालानि" अस्थिसङ्ख्याभेदोक्तौ च तत्रैव । तालुनि चैकमित्युक्तम् ।"तस्या महत्या परिशु-ष्कतालव" भारवि । स्वार्थे याथा०कन्। तालुकमप्यत्र अमरः।

तालव्य पु० स्त्री० तलुषर्षेर्गोत्रापत्यं गर्गा० यञ् । तलुच ऋषेरपत्ये स्त्रियां लोहि० ष्फ षित्वात् ङीष् । तालव्यायनी ।

तालुजिह्व पु० स्त्री तालु एव जिह्वा यस्य । कुम्भीरे हेम० । तस्य जिह्वाशून्यत्वेऽपि तालुनैव रसास्वादनात्तथात्वम् । स्त्रियां टाप् ।

तालुपाक पु० सुश्रुतोक्ते तालुगते रोगभेदे ।

तालुगतास्तु गलशुण्डिका तुण्डिकेर्य्यध्रुषो मांसकच्छपोऽर्बुदं मांससङ्घातस्तालुपुप्पुटस्तालुशोषस्तालुपाक इति । "श्लेष्मासृग्भ्यां तालुमूलात्प्रवृद्धो दीर्घः शोफो ध्मातवस्तिप्रकाशः । तृष्णाकासश्वासकृत् सम्प्रदिष्टो व्याधिर्वैद्यैः कण्ठशुण्डीति नाम्ना । शोफः स्थूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु । शोफः स्तब्धो लोहितस्तालुदेशे रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः । कूर्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा रक्तो ज्ञेयः कच्छपः श्लेष्मणा स्यात् । पद्माकारं तालुमध्ये तु शोफं विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् । दुष्टं मांसं श्लेष्मणा नीरुजञ्च तालुन्यस्य मांससङ्घातमाहुः । नीरुक् स्थायी कोलमात्रः कफात् स्यान्मेदोयुक्तात् पुप्पुटस्तालुदेशे । शोषोऽत्यर्थं दीर्य्यते चापि तालु श्वासो वातात्तालुशोषः सपित्तात् । पित्तं कुर्य्यात्पाकमत्यर्थघोरं तालुन्येनं तालुपाकं वदन्ति" । तेषां लक्षणान्युक्तानि । [दृश्यम् ।

तालुपुप्पुट पु० सुश्रुतोक्ते तालुगतरोगभेदे तालुपाकशब्दे

तालुशोष पु० सुश्रुतोक्ते तालुरोगभेदे तालुपाकशब्दे दृश्यम् ।

तालूर पु० तल–बा० ऊर । आवर्त्ते हेमच० ।

तालूषक न० तल–बा० ऊषक । तालुनि । "स्रस्ततालूषके श्रोणीफलके च विनिर्दिशेत्" याज्ञ० "तालूषकं ककुदमिता० ।

तावक त्रि० तवेदम् युष्मद्+अण् एकवचने तवकादेशः । त्वत्सम्बन्धिनि स्त्रियां ङीप् । "स्तेन तस्से तावकेभ्यो रथेभ्यः" ऋ० १।९४।११४ । "तव क यत्र । क च तावक धनु" कुमा० । [त्वत्सम्बन्धिनि ।

तावकीन त्रि० तवेदम् युष्मद्+खञ् एकवचने तवकादेशः ।

तावच्छस् अव्य० तावत्+सङ्ख्यासमत्वात् वीप्सार्थे+शस् । तावत्तावत्प्रकारे, "यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते" ते० स० ।

तावत् अव्य० तद्+बा० डावतु । १साकल्ये २अवधौ ३माने ४अवधारणे, ५प्रशंसायाम् ६पक्षान्तरे शब्दरत्ना० ७सम्भ्रमे ८अधिकारे च मेदि० । ९तदन्त्यर्थे शब्दार्थचि० । "भर्त्तापि तावत् क्रथकैशिकानाम्" रघु तावत् तदेत्यर्थः । साकल्ये "तावत्प्रकीर्णाभिनवोपचारम्" अवधौ "बलगु न सम्भावित एव तावत्" रघु "तावत् आलोकमार्गं प्राप्तिपर्य्यन्तम्" मल्लि० । मानार्थे, "त्वमेव तावत् परिचिन्तय स्वयम्" कुमा० तावत् इति मानार्थे "यावन्मात्रं विचारणीय तावन्मात्रमित्यर्थः" मल्लि० । अवधारणे "इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः" माघ । "मा कारि तावत् न क्रियतामेवेत्यर्थः" मल्लि० । तत्परिमाणमस्य तद्+वतुप् "आ सर्वनाम्नः" पा० आ । २तत्परिमाणविशिष्टे त्रि० । "यावानर्थ उदपाने सर्वतः सम्प्लुतोदके । तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः" गीता "जम्बुद्वीपोऽयं तावत्प्रमाणविस्तारस्तावता क्षीरोदधिना वेष्टितः" भाग० ५।२०।२ । क्रियाविशेषणत्वे न० । "पुरोऽस्य यावन्न भुवि व्यनीयत । गिरेस्तडित्वानिव तावदुच्चकैः" माघ । स्त्रियां ङीप् 'यावती सम्भवेद्वृत्तिस्तावतीं दातुमर्हति' मनु । अस्य वत्वन्तत्वात् सङ्ख्यावत् कार्य्यं तावच्छः तावत्क तावतिक ।

तावतिक त्रि० तावता क्रीतं सङ्ख्यात्वात् कन् "वतोरिड् वा" पा० वा इट् । तत्परिमाणेन क्रीते । पक्षे इडभावे तावत्क तत्रार्थे ।

तावतिथ त्रि० तावतां पूरणः डट् । "वतोरिथुक्" पा० इथुक् । तावतां पूरणे । "यावत् शामिनेति वेदेरभ्रं तावतिथेन वर्जयति" कात्या० श्रौ० २।१।६ ।

ताविष पु० "तवेर्णिद्वा" उणा० टिषच् । स्वर्गादौ तविषशब्दार्थे तविषशब्दे दृश्यम् ।

तावुरि पु० वृषराशौ कोषशब्दे २२७८ पृ० दृश्यम् ।

तासुन पु० तस–बा० उनच् । शणवृक्षे । तस्येदम् अण् । तासुन तत्सम्बन्धिनि स्त्रियां ङीप् । "कुशकाशतासुन्यो रसना" ज्यो० त० गोभिल । "कुश शर तासुन शणसम्भवा रसना मेखला तासुनी" ।

ति अव्य० इति+वेदे पृषो० । इतिशब्दार्थे । "सत्योपाख्यानोत्थं प्रायश्चित्तिरित्यस्तीति का ति पिता ते वेदति" शत० ब्रा० ११।६।१।१ । का प्रायश्चित्तिरस्ति इति प्रश्नः ।

तिक गतौ भ्वा० आत्म० सक० सेट् । तेकते अतेकिष्ट अतितिकत् त । तितेके । [अतकीत् । तितक ।

तिक आस्कन्दे वधे च भ्वा० पर० सक० सेट् । तिकति

**तिक** पु० तिक—क । ऋषिभेदे । तस्य गोत्रापत्यम् तिका० फिञ् । तैकायनि तद्गोत्रापत्ये पु स्त्री० । तस्य तिककितवादित्वात् द्वन्द्वे गोत्रप्रत्ययस्य लुक् बहुत्वार्थे । तिककितवाः तिककितवयोर्गोत्रापत्येषु । उत्कषा० चतुरर्थ्यां छ । तिकीय तत्सन्निकृष्टदेशादौ त्रि० ।

**तिककितवादि** पु० "तिककितवादिभ्यो द्वन्द्वे" पा० उक्ते द्वन्द्वे बहुत्वे गोत्रप्रत्ययलुग्निमित्ते शब्दगणे । स च गणः पा०गणसू०उक्तो यथा "तिककितवाः वङ्खरभण्डीरथाः । उपकलमकाः । पफकनरकाः वकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः अष्टककपिष्ठलाः अग्निवेशदशेरुकाः" ।

**तिकादि** पु० गोत्रे फिञ् प्रत्ययनिमित्ते शब्दसमूहे स च गणः पा०ग०सू०उक्तो यथा "तिक, कितव, संज्ञा, बाला, शिखा, उरस्, शाट्य, सैन्धव, यमुना, रूप्य, ग्राम्य, नील, अमित्र, गौकक्ष्य, कुरु, देवरथ, तैतल, औरस, कौरव्य, भौरिकि, भौलिकि, चौपयत, चैटयत, शीकयत, क्षैतयत, ध्वाजवत, चन्द्रमस्, शुभ, गङ्गा, वरेण्य, सुयामन्, आरद्ध, वह्यका, खल्यका, वृष, लोमक, उदञ्च, यज्ञ" । "तिकादिभ्यः फिञ्" पा० उक्ते "तिक इत्येवमादिभ्योऽपत्येऽर्थे फिञ् स्यात् तैकायनिः कैतवायनिः ।

**तिक्त** पु० तेजयति तिज—बा० कर्त्तरि क्त । रसभेदे (तेत) अमरः । २पर्पटकौषधौ न० हेमच० । ३सुगन्धे मेदि० । ४कुटजवृक्षे पु० शब्दच० । ५वरुणवृक्षे शब्दमाला । एतेषां तिक्तरसाधिक्यात्तथात्वम् । ६तिक्तरसयुक्ते अमर । "षड्विधस्तु रसस्तत्र" भाषोक्तेर्यद्यपि तिक्तस्य पार्थिवगुणत्वं तथापि वाय्वोरुत्कर्षादेव पार्थिवे तिक्तरसस्य सम्भवः तदेतत् सुश्रुते व्यक्तम् यथा "आकाशपवनदहनतोयभूमिषु यथासङ्ख्यमेकोत्तरपरिवृद्धाः शब्दस्पर्शरूपरसगन्धाः तस्मादाप्यो रसः परस्परसंसर्गात्परस्परानुग्रहात् परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्त्युत्कर्षापकर्षात्तु ग्रहणम् । स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षोढा विभज्यते । तद्यथा । मधुरोऽम्लो लवणः कटुकस्तिक्तः कषाय इति । ते च भूयः परस्परसंसर्गात्त्रिषष्टिधा भिद्यन्ते । तत्र भूम्यम्बुगुणबाहुल्यान्मधुरः । भूम्यग्निगुणबाहुल्यादम्लः । तोयाग्निगुणबाहुल्याल्लवणः । वाय्वग्निगुणबाहुल्यात्कटुकः वाय्वाकाशगुणबाहुल्यात्तिक्तः । पृथिव्यनिलगुणबाहुल्यात्कषाय इति । तत्र मधुराम्ललवणा वातघ्नाः मधुरतिक्तकषायाः पित्तघ्नाः । कटुतिक्तकषायाः श्लेष्मघ्नाः । तत्र वायुरात्मनैवात्मा पित्तमाग्नेयं श्लेष्मा सौम्य इति त एव रसाः स्वयोनिवर्द्धना अन्ययोनिप्रशमनाश्च । केचिदाहुरग्नीषोमीयत्वाज्जगतो रसा द्विविधाः सौम्या आग्नेयाश्च तत्र मधुरतिक्तकषायाः सौम्याः । कट्वम्ललवणा आग्नेयाः । मधुराम्ललवणाः स्निग्धा गुरवश्च । कटुतिक्तकषाया रूक्षा लघवश्च । सौम्याः शीता आग्नेयाश्चोष्णाः" ।

"द्रव्यमकषायरसमिति रसयुविशद् स्पर्शमङ्गलमीषत्तिक्त' विशेषतः कषायमिति वाययोः तद्वैद्यशास्त्रलक्षणविरुद्धमविचारितकरमिति' ।

तिक्तरसलक्षणं तत्रोक्तं यथा "यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिं चापादयति हर्षञ्च स तिक्तः । "तिक्तः शीतस्तृष्णामूर्च्छाज्वरपित्तकफान् जयेत् । रुच्यः स्वयमरोचिष्णुः कण्ठसन्धानशोधनः । वातलोऽग्निकरो नासाशोषणो रूक्षणो लघुः" । रुच्यः अन्येषु वस्तुषु रुचिमुत्पादयति । स्वयमरोचिष्णुः यथा निम्बः स्वयम् रोचते । अन्येषु रुचिं करोति (अतियुक्तस्य तिक्तस्य गुणाः) सोऽतियुक्तः शिरःशूलमन्यास्तम्भश्रमार्त्तिकृत् । कम्पमूर्च्छाभ्रमकारी बलशुक्रक्षयप्रदः" भावप्र० "तिक्तः पित्तकफच्छेदी विषकुष्ठज्वरापहः । दीपनः पाचनो रूक्षः कण्डुकृमिहरो लघुः" राजनि०। "पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस !" नैष० सुगन्धे । "नादातुमन्यकरिसङ्गमदाम्बुतिक्तम्" रघु तिक्त सुरभि "कटुतिक्तकषायाश्च सौरभेऽपि प्रकीर्त्तिताः" केशव कवि० "चूताङ्कुरस्वादकषायकण्ठः" मधुरकण्ठ इत्यर्थे । "तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि" मेघ० । "तिक्तैः सुगन्धिभिरिमैरसशङ्कितश्च" मल्लि० । "तोयक्रीडानिरतयुवती स्नानतिक्तैर्मरुद्भिः" मेघ० ।

**तिक्तक** पु० तिक्त+संज्ञायां कन् । १पटोले अमरः २चिरतिक्ते (चिराता) शब्दर० । ३कृष्णखदिरे शब्दमा० । ४इङ्गुदीवृक्षे भावप्र० । एतेषां तिक्तरसात्मकत्वात्तथात्वम् स्वार्थे क । तिक्तरसे पु०तद्वति त्रि०स्त्रियां टापि अत इत्त्वम् तिक्तिका

**तिक्तकन्दिका** स्त्री तिक्तः कन्दोऽस्याः कप् कापि अत इत्त्वम् । गन्धपत्रायां राजनि० । [शब्दार्थचि० ।

**तिक्तका** स्त्री तिक्तेन रसेन कायति कै—क । कटुतुम्ब्यां

**तिक्तगन्धिका** स्त्री तिक्तो गन्धो वेगोऽपि यस्याः । वराह-

क्तानायाम् अमर० । तस्याः सर्वत्र तिक्तत्वात् तथात्वम् ।

**तिक्तगुञ्जा** स्त्री गुञ्जेव तिक्ता राजदन्ता० । करञ्जे हारा०

**तिक्तघृत** न० सुश्रुतोक्ते घृतभेदे तत्र कश्चिदिशस्तोक्तो यथा "त्रिफलापटोलपिचुमर्दटकपककटुरोहिणीदुरालभाताय माणापर्पटकाश्चैतेषा द्विपलिकान् भागान् जलद्रोणे प्रक्षिप्य पादावशेषं कषायमादाय कल्कमेभ्याश्चीमानि भेषज्यान्यर्द्धपलिकानि त्रायमाणामुस्तेन्द्रयवचन्दनकिरातिक्तानि पिप्पल्यश्चैतानि घृतप्रस्थे समावाप्य विपचेदेतत्तिक्तक नाम सर्पि कुष्ठविषमज्वरगुल्मार्शो-ग्रहणीदोषशोफपाण्डुरोगविसर्पषाण्ड्यशमन चेति । "अग्रहात् अग्रहाशाप्यपतर्पणात्ते प्रातस्तयोस्तिक्त-घृत प्रशस्तम्" सुश्रु० । तिक्तसर्पिरादयोऽप्यत्र न० ।

**तिक्ततण्डुला** स्त्री तिक्तस्तण्डुलोऽन्तःस्थं यस्याः । पिप्पल्याम् राजनि० ।

**तिक्ततुण्डी** स्त्री कर्म० । कटुतुम्बीलतायां राजनि० ।

**तिक्ततुम्बी** स्त्री कर्म० । कटुतुम्ब्याम् (तितलाउ) रत्नमा० ।

**तिक्तदुग्धा** स्त्री तिक्तं दुग्धं निर्यासो यस्याः । १क्षीरिण्याम्, राजनि० । २स्वर्णक्षीर्याम् जटा० ।

**तिक्तधातु** पु० कर्म० । पित्ते धातौ राजनि० ।

**तिक्तपत्र** पु० तिक्तं पत्रमस्य । (काकरोल) १कर्कोटके । २तिक्तपत्रके द्रव्यमात्रे त्रि० कर्म० । ३तिक्ते पत्रे न० ।

**तिक्तपर्वन्** स्त्री तिक्तं पर्व ग्रन्थिर्यस्याः । १ग्रन्थिदूर्वायाम् जटा० । २हिलमोच्यां ३गुडूच्यां ४यष्टिमधुलतायाञ्च मेदि० ।

**तिक्तपुष्पा** स्त्री तिक्तानि पुष्पाण्यस्याः । (आकनादी) १पाठायाम् राजनि० । २तिक्तपुष्पके द्रव्यमात्रे त्रि० । कर्म० । ३तिक्ते पुष्पे न० ।

**तिक्तफल** पु० तिक्तानि फलानि यस्य । १कतकवृक्षे (निर्मली) राजनि० । २यवतिक्तायां शब्दार्थचि० ३तिक्तफलके द्रव्यमात्रे त्रि० । ४ वार्त्ताक्यां ५बहुभुजायाञ्च स्त्री टाप् राजनि० । कर्म० । ६तिक्ते फले न० ।

**तिक्तभद्रक** पु० भद्रं करोति णिच्-ण्वुल् तिक्तोऽपि भद्रकः कर्म० । पटोले शब्दच० ।

**तिक्तमरिच** पु० तिक्तं मरिचं इव । कतकवृक्षे राजनि० ।

**तिक्तयवा** स्त्री तिक्तः यव इन्द्रयवस्तोऽस्त्यत्र अच् । शङ्खिन्यां पारस्करस्थद्रुमम् ।

**तिक्तरोहिणी** स्त्री तिक्ता सती रोहति रुह-णिनि कर्म० । कटुकायाम्(कट्की) स्वार्थे क तत्रैव । तिक्तरोहिणिका । तत्रार्थे राजनि० ।

**तिक्तवल्ली** स्त्री कर्म० । १मूर्वालतायाम् रत्नमा० । २तिक्ते लतामात्रे च ।

**तिक्तबीजा** स्त्री तिक्तानि बीजानि यस्याः । १कटुतुम्ब्याम् राजनि० । २तिक्तबीजके द्रव्यमात्रे त्रि० । कर्म० । ३तिक्ते बीजे न० ।

**तिक्तशाक** पु० तिक्तं शाकोऽस्य । १वरुणद्रुमे, २खदिरवृक्षे ३पत्रसुन्दरवृक्षे च मेदि० । कर्म० । ४तिक्ते शाके न० ।

**तिक्तसार** पु० तिक्तः सारो निर्यासोऽस्य । १खदिरे रत्नमा० । २दीर्घरोहिषतृणे न० रत्नमा० । ३तिक्तसारके द्रव्यमात्रे त्रि० । कर्म० । ४तिक्ते सारे न्स्त्री ।

**तिक्ता** स्त्री तिक्तो रसोऽस्त्यस्य अच् । १कटुरोहिण्यां मेदि० २पाठायां रत्नमा० ३यवतिक्तालतायां ४षड्भुजायां राजनि० ५छिक्कन्यां भावप्र० ।

**तिक्ताख्या** स्त्री तिक्तेति आख्या यस्याः । कटुतुम्ब्यां राजनि० तिक्ताकूष्माण्डाद्योऽत्र । [याम् राजनि० ।

**तिक्ताङ्गा** स्त्री तिक्तमङ्गमस्त्यस्य अच् । पातालगरुडीलता-

**तिक्तिका** स्त्री तिक्ता स्वार्थे संज्ञायां वाक् पृषो० अत इत्त्वम् । कटुतुम्ब्याम् शब्दार्थचि० ।

**तिग** हिंसायाम् आस्कन्दे च भ्वा० पर० सक० सेट् । तिग्नोति अतेगीत् । तितेग । "अग्नि शीर्षास्तिगितैरर्चि" ऋ० १।१४३।५ । "तिगितैर्निशितैः" भा० ।

**तिग्म** न० तिज-मक् जस्य ग । १तीक्ष्णे स्पर्शे २तद्वति त्रि० अमर । ३ वज्रे निघण्टु । "तिग्मवीर्यं विपाश्चीते दन्दशूका महाबला" भा० आ० २० अ० ।

**तिग्मकर** पु० तिग्मः करः किरणो राजग्राह्यो भागोऽस्य । १सूर्ये त्रिका० । २उग्रराजग्राह्यके न्ये च । कर्म० । ३तिग्मे करे पु० ।

**तिग्मदीधिति** पु० तिग्मा दीधितिरस्य । तिग्मांशौ सूर्ये ।

**तिग्ममन्यु** त्रि० तिग्मो मन्युरस्य । १उग्रक्रोधके । २शिवे पु० "अहरो मत्सरस्तिग्ममन्युः सुवर्चसः" भा० अनु० १७अ० ।

**तिग्मरश्मि** पु० तिग्मा रश्मयोऽस्य । १सूर्ये । २खररश्मिके त्रि० । कर्म० । ३खरे रश्मौ पु० ।

**तिग्मांशु** पु० तिग्मा अंशवो यस्य । १सूर्ये जटाधर "तिग्मांशुरस्तं गतः" जयदेव० । "तिग्मांशुरश्मिच्छ रिताम्बुदूरात्" भट्टि । २खरकिरणके त्रि० । कर्म० । ३खरे किरणे पु० । [तितेघ ।

**तिघ** घातने स्वा० पर० सक० सेट् । तिघ्नोति अतेघीत् ।

**तिज** तीक्ष्णीकरणे, चुरा० उभ० सक० सेट्। तेजयति ते अतीतिजत् त। "कुसुमचापमतेजयदंशुभिर्हिमकरः" रघुः "तेजयित्वा तु तत्सैन्यम्" रामा० अर० २१ स०। "तेजिता बृहदर्पणाभ्याम्" हरिव० २०८। "सा मयोक्तेन तेजिता" ९६४४ श्लो०। तेज।

**तिज** शान्तौ क्षमायां स्वार्थे सन् नियाने,न सन् भ्वा० आत्म० सक० सेट्। तितिक्षते तेजते। अतितिक्षिष्ट अतेजिष्ट। "आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत!" गीता "हिम धृषि तितिक्षिष्यते" शत० ब्रा० ३।१।२।१४। "अतिवादांस्तितिक्षेत" मनुः "आपत्से पादं तितिक्षन्नामनुमापस्तितिक्षिवम्" भा०-शा० ८१७० अ०, "तिति -क्षन्ते अभिशस्ति जना नाम" ऋ० ३।२०।१।

**तिजिन** पु० तिज–इनच् किच्च। चन्द्रे उणा०।

**तितिम्भ** पु तिल्लकवृक्षे लोध्रद्रुमे। "न्यग्रोधाश्वत्थतिल्लक-हरिद्रुमयो" कात्या० श्रौ० सूत्रे "तिल्लकस्तितिम्भ" कर्कः।

**तिपटी** स्त्री तिष्ठति-(तेथोड़ी) शब्दच०।

**तितउ** पु० तन–डउ सन्वच्च डउ इति निर्देशात् न सन्धि। धालन्याम् अमरः। २छत्रे न० उज्ज्वलदत्त। "सक्तुमिव तितउना पुनन्त" ऋ० १०।७१।२। "इत्यास्ये-समोपेत प्राक्तन तितउ सूतमित्यु क्तोरस्य क्लीवत्वमपि। "सक्तुमिव तितउना पुनन्त" ऋ० १०।७१।२। "इत्यास्य अधिकृत्य" निरु० ४।९। "तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा" अन्यथा निरुक्तिरुक्ता क्लीवत्वञ्चोक्तम्।

**तितिक्ष** त्रि० तिज–स्वार्थे सन्–अच्। १शीतोष्णादिद्वन्द्वसोढरि, २ऋषिभेदे पु० तस्य गोत्रापत्यं गर्गा० यञ्। तैतिक्ष्य तद्गोत्रापत्ये युन्यपत्ये यञन्तत्वात् फक्। तैतिक्ष्यायण तद्गोत्रजे युन्यपत्ये पुस्त्री०।

**तितिक्षा** स्त्री तिज–स्वार्थे सन् भावे अ। १क्षमायां शीतोष्णादिद्वन्द्वसहने "सहनं सर्वदुःखानामप्रतीकारपूर्वकम्। चिन्ताविलापरहितं सा तितिक्षा निगद्यते" विवेकचू०। तितिक्षा सञ्जाताऽस्य तार० इतच्। तितिक्षित क्षान्ते सोढरि जटाधरः।

**तितिक्षु** त्रि० तिज–स्वार्थे सन्–उ। तितिक्षाशीले। "शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावान् समाहितो भूत्वा आत्मन्यात्मानमवलोकयेत्" वेदा० सा० धृता श्रुतिः। "अक्रोधनः क्रोधनेभ्यो विशिष्टस्तथा तितिक्षुरतितिक्षोर्विशिष्टः" भा० आ० ८७ अ०।

**तितिभ** पु० तितीति भणति भण–ड। इन्द्रगोपकीटे खद्योते हेमच०। स्त्रियां जातित्वात् ङीष्।

**तितिर** पु स्त्री० तित्तिरि+पृषो०। तित्तिरिखगे राजनि०

**तितिल** न० तिम–क बा० इलच्च। १नन्दके (नान्दा) मृण्मये पात्रभेदे २तैतिलकरणे, ३तिलपिष्टे च अजयपालः

**तित्तिर** पु स्त्री तित्ति इति शब्दं रौति रु–बा० ड। (तितिर) खगभेदे शब्दर०। स्त्रियां जातित्वात् ङीष्। "कपिञ्जलांस्तित्तिरांश्च कलविङ्कांश्च सर्वशः" "ततस्तत्का-लिनिघ्नेषु तित्तिरासस्य पाण्डव!" भा० व० ८४०।

**तित्तिरि** पु० तित्ति इति शब्दं रौति रु–बा० डि। (तितिर) खगभेदे अमरः। स्त्रियामनुष्यजातित्वात् "इतोऽमनुष्यजाते" पा० ङीष्। तित्तिरिः कृष्णवर्णः स्यात् स तु गौरः कपिञ्जलः। तित्तिरिर्वर्णदो ग्राही हिक्का-दोषत्रयापहः। श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः" भाव०प्र०। तित्तिरिरूपधारणेन याज्ञवल्क्य-वान्तयजुर्ग्राहिणि मुनिभेदे तत्कथा "वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन्। यच्चेरुर्ब्रह्महत्यांऽहः क्षपणं स्वगुरोर्व्रतम्। याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्! कियत्। चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम्। इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया। विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति। देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम्। ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान्। यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः। तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः" भाग० १२।६।५८। तित्तिरिणा प्रोक्तमधीयते छण्। तैत्तिरीय तित्तिरिप्रोक्त-छन्दोब्राह्मणाध्येतृषु ब० व०। तित्तिरिणा अधीता अण् ङीप्। तैत्तिरी कृष्णयजुःशाखायां स्त्री।

**तित्तिरीक** न० तित्तिरेः पक्षदाहेन जातम् बा० ईक। तित्तिरिपक्षदाहेन जाते अञ्जनभेदे। "अञ्जनं तित्तिरीकञ्च नलदं घनसत्त्वकम्" सुश्रु०। अत्र तिन्तिड़ीकमिति पाठान्तरम्। दग्धतिन्तिड़ीकजातेऽञ्जने इति तदर्थः।

**तिथ** पु० तिज–थक् नि० जलोपः। १वह्नौ २कामे च सि० कौ० ३काले त्रिका०। ४प्रावृट्काले शब्दरत्ना०।

**तिथि(थी)** पु स्त्री० अत–इथिन् पृषो० वा ङीप्। १पञ्चदशसु चन्द्रकलाक्रियारूपासु प्रतिपदादिषु, अमरः २पञ्चदश-सङ्ख्यायाञ्च। अस्य निरुक्त्यादिकं कालमाधवीये उक्तं यथा "अथ तिथयो निर्णीयन्ते। तत्र तिथिशब्दस्तनोतेर्धा-

चिं पचे॰। तनोति विस्तारयति वर्द्धमाना क्षीयमाणा वा चन्द्रकलामेकां यः कालविशेषः स तिथिः। यद्वा यथोक्तकलया तन्यते इति तिथिः। तदुक्तं सिद्धान्तशिरोमणौ "तन्यते कलया यस्मात्तस्मात्तास्तिथयः स्मृताः" इति। एतदेवाभिप्रेत्य स्कान्दे पठ्यते "अमा षोडशभागेन देवि! प्रोक्ता महाकला। संस्थिता परमा माया देहिनां देहधारिणी। अमादिपौर्णमास्यन्ता या एव शशिनः कलाः। तिथयस्ताः समाख्याताः षोडशैव वरानने!" इति। अयमर्थः। या महामाया आधाररूपा देहिनां देहधारिणी संस्थिता या सा चन्द्रमण्डलस्य षोडशभागेन परिमिता चन्द्रदेहधारिणी अमानाम्नी महाकलेति प्रोक्ता क्षयोदयरहिता नित्या तिथिसंज्ञिकैव। इतरा अपि पञ्चदश कलाः दिवसव्यवहारोपयोगिन्यः क्षयोदयवत्यः पञ्चदश तिथयो भवन्तीति तिथयः षोडशैवेत्यविरुद्धं वचनमिति। श्रुतिस्त्वमुमेवार्थं पञ्चमिथ्य एवोदाहृत। "तस्य रात्रय पञ्चदश कला ध्रुवैवास्य षोडशी कलेति"। एवं सत्यत्र सामान्यविशेषरूपेण तिथिद्वैविध्यमुक्तं भवति। तत्र येयममेत्युक्ता क्षयोदयवर्जिता ध्रुवा षोडशी कला तद्युक्तः कालस्तिथिसामान्यम्। याश्चावशिष्टा वृद्धिक्षयोपेताः पञ्चदश कलास्ताभिर्विशिष्टाः कालविभागास्तिथिविशेषाः। तासां पञ्चदशानामेकैकां कलां वह्न्यादयः प्रजापत्यन्ताः पञ्चदश देवताः क्रमेण पिबन्ति। तत्र वह्निना कला प्रथमं पीयत इति प्रथमेत्युच्यते। तया युक्तः कालविशेषः प्राथम्यशालित्वात् प्रतिपच्छब्देनाभिधीयते। एवं द्वितीयादीनां पञ्चदश्यन्तानां तिथीनां नामान्यवगन्तव्यानि। ता एताः कृष्णपक्षतिथयो भवन्ति। पुनश्च ताः पीताः कला अनेनैव क्रमेण तत्तत्पातृवह्न्यादिदेवताभ्यो निर्गत्य चन्द्रमण्डलं पूरयन्ति। ताभिर्युक्ताः कालविशेषाः शुक्लपक्षगताः प्रतिपदाद्यास्तिथयो भवन्ति। वह्न्यादिदेवतानां कलापानं सोमोत्पत्तौ पठ्यते। तथाहि "प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः। विश्वेदेवास्तृतीयान्तु चतुर्थीं सलिलाधिपः। पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः। सप्तमीमृषयो दिव्या अष्टमीमजएकपात्। नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम्। दशमीं पिबते वायुः पिबत्येकादशीमुमा। द्वादशीं पितरः सर्वे सम प्राश्नन्ति भागशः। त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम्। चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः। निपीतः कलया शेषश्चन्द्रमा न प्रकाशते। कला षोडशिका या सा त्वपः प्रविशते सदा। अमायान्तु सदा सोम ओषधीः प्रतिपद्यते। तमोषधिगतं गावः पिबन्त्यम्बुगतञ्च यत्। तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः। हुतमग्निषु यज्ञेषु पुनराप्यायते शशी। दिने दिने कलावृद्धिः पौर्णमास्यान्तु पूर्यते"। ज्योतिःशास्त्रे तु सिद्धान्तशिरोमणिकारेण तिथिरेवं प्रदर्शिता। "अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी। तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिरिति"। अयमर्थः। सूर्यमण्डलस्य अधःप्रदेशवर्त्ती शीघ्रगामी चन्द्रः ऊर्द्ध्वप्रदेशवर्त्ती मन्दगामी सूर्यस्तथा सति तयोर्गतिविशेषवशात् दर्शे चन्द्रमण्डलमन्यूनमनतिरिक्तं सूर्यमण्डलस्याधोभागे व्यवस्थितं भवति तदा सूर्यरश्मिभिः साकल्येनाभिभूतत्वाच्चन्द्रमण्डलमीषदपि न दृश्यते। उपरितने शीघ्रगत्या सूर्याद्विनिःसृतः शशी प्राचीं याति। त्रिंशदंशोपेतराशौ द्वादशभिरंशैः सूर्यमुल्लङ्घ्य गच्छति। तदा चन्द्रस्य पञ्चदशसु भागेषु प्रथमभागो दर्शनयोग्यो भवति। सोऽयं भागः प्रथमकलेत्यभिधीयते। तत्कलानिष्पत्तिपरिमितः कालः प्रतिपत्तिथिर्भवति। एवं द्वितीयादितिथिष्ववगन्तव्यमिति। तदेतद्विष्णुधर्मोत्तरे विस्तरेणाभिहितम् "चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत्। तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयम्। भगणेन समस्तेन ज्ञेया द्वादश राशयः। त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते। आदित्याद्विप्रकृष्टस्तु भागद्वादशकं यदा। चन्द्रमाः स्यात्तदा राम! तिथिरित्यभिधीयते" इति। सेयं द्वादशभिर्भागैः सूर्यमुल्लङ्घितवती प्रथमा चन्द्रकला शृङ्गद्वयोपेतस्वच्छरेखाकारा शौक्ल्यमीषदुपयाति। उत्तरोत्तरदिनेषु सूर्यमण्डलविप्रकर्षतारतम्यानुसारेण शौक्ल्यमुपचीयते। अनयैव रीत्या सन्निकर्षतारतम्येन मेचकत्वमुपचीयते। तदेतदुक्तं सिद्धान्तशिरोमणौ "उपचयमुपयाति शौक्ल्यमिन्दोस्त्यजत इनं व्रजतश्च मेचकत्वम्। जलमयमण्डलस्य गोलकत्वात् प्रभवति तीक्ष्णविषाणरूपताऽस्येति"। सूर्याचन्द्रमसोर्यौ सन्निकर्षविप्रकर्षौ तयोरवसाने दर्शपूर्णिमयोः सम्पद्यते। तदाह गोभिलः "यः परो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी। यः परः सन्निकर्षः साऽमावास्येति" नन्वत्र चन्द्रकलानां

वर्णिता प्रतिपत्तिथिः । प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला । शुक्लपक्षे विशेच्चन्द्रः कृष्णपक्षे विनिःसरेत् । शुद्धा विद्धा तिथिः शुद्धा हीनातिथ्यान्ययाहनि । उदये पूर्वया तिथ्या विध्यते त्रिमुहूर्त्तकैः । सायन्तूत्तरया तद्वन्न्यूनया तु न विध्यते । वेध्यापि त्रिमुहूर्त्तैव न न्यूना वेधमर्हति । शुद्धाया नास्ति सन्देहो दैवे पित्र्ये च कर्मणि । उपवासश्चैकभक्तं नक्तं चायाचितं व्रतम् । दानञ्च षड्विधं दैवं क्रमादत्र विविच्यते । एकोद्दिष्टं पार्वणञ्च पित्र्यं द्विविधमीर्यते । शुक्लपक्षे दर्शविद्धा कृष्णे विद्धा द्वितीयया । उपोष्या प्रतिपच्छुक्ले मुख्या स्यादापराह्णिकी । तदभावे तु सायाह्नव्यापिनी परिगृह्यताम् । प्रातःसङ्गवमध्याह्नापराह्णाः सायमित्यमी । अह्नः पञ्चधा भागो मुख्यो द्वित्र्यादिभागतः । अभावेऽपि प्रतिपदः सकलं मातरिष्यते । तिथिक्रियासमाप्त्यर्थं चेत् तिथ्यन्ते पारणं भवेत् । बह्वनुगुणं च पूर्वेद्युरुपवासवदाचरेत् । तत्त्वतिथ्यन्तराये तु तिथियोगेऽपि गृह्यताम् । शुद्धाऽधिका तु कृष्णापि पूर्वा सम्पूर्त्तिसम्भवात् । ग्रहीतव्या त्वेकभक्ते मध्याह्नव्यापिनी तिथिः । परेद्युरेव पूर्वेद्युरेव व्याप्तिर्दिनद्वये । नोभयत्रोभयत्रापि साम्ये वैषम्यमित्यमी । षट् पक्षास्तु चैकैकव्याप्तौ सैवात्र गृह्यताम् । दिनद्वयेऽपि तद्व्याप्त्यव्याप्तौ चैकदेशतः । समव्याप्तौ च पूर्वैव वैषम्ये त्वधिकेष्यताम् । अव्याप्त्यैकभक्तस्य कालस्तङ्ग्रहसारतः । उपवासप्रतिनिधेस्तिथिः स्यादुपवासवत् । प्रदोषव्यापिनी नक्ते तिथिर्व्याप्तिर्दिनद्वये । अव्याप्तिर्वाथवांशेन व्याप्तिः स्यात् सर्वथोत्तरा । सौरनक्ते तु सायाह्नव्यापिनी न प्रदोषगा । अयाचिते तु तिथयः स्वीकार्या उपवासवत् । सोदयत्रिमुहूर्त्तायां कुर्याद्दानं व्रतानि च । उभयत्र तथात्वे तु पूर्वेद्युस्तदनुष्ठितिः । परत्रैव तथात्वं चेत् पूर्वा चाह्ना तिथिक्षये । मिथ्ये साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा । असत्त्वे चैकदेशस्य व्याप्तौ पूर्वैव गृह्यताम् । एकोद्दिष्टे तु मध्याह्नयुक्ता स्यादेकभक्तवत् । एकदेशे समव्याप्तौ क्षये पूर्वाऽन्यथोत्तरा । कुतपाद्यपराह्णस्य व्याप्तिराषड्दिकम् उत्तमा । तदभावेऽपराह्णस्य व्यापिका गृह्यता तिथिः । क्षये पूर्वोत्तरा वृद्धौ व्याप्तिवैषम्ययोः । न ग्राह्या तिथिगौ वृद्धिक्षयावूर्द्धं तिथेस्तु तौ । साम्ये त्वर्द्धतिथेर्ग्राह्या परविद्धैव वृद्धिवत् । न स्यादपराह्णगौ चेत् पूर्वा स्यात् कुतपो द्वयोः । वैषम्ये चैकदेशस्य व्याप्तौ ग्राह्या महत्त्वतः । साम्येन चेत् क्षये पूर्वा परा स्याद्वृद्धिसाम्ययोः । वृद्धिसाम्यक्षये ग्राह्या तिथिगा नोर्द्धगा इह । द्वितीयाद्यास्तु पर्वान्तास्तुर्य्यप्रकरणोदिताः । सञ्चारणीय सामान्यतिथिषु प्रतिपन्नय । क्वचित् क्वचिद्विशेषोऽस्ति सोऽयमत्राभिधीयते । पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा । सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽन्यथा । रम्भाख्या तृतीया पूर्वा स्यादुत्तरा स्याद् व्रतान्तरे । परेऽह्नि नास्ति चेत् पूर्वविद्धाप्यस्तु व्रतान्तरे । मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रते परे । शुद्धाधिकायामप्येव गणयोगप्रशंसनात् । चतुर्थी तु परोपोष्या गणनाथव्रतं विना । मध्याह्नव्यापिनी पूज्या तद्व्रागचतुर्थ्यपि । परेद्युरेव मध्याह्नव्याप्तौ विघ्नस्य सोत्तरा । अन्यथा पूर्वविद्धैव मातृयोगप्रशस्तितः । पूर्वेद्युरेव मध्याह्नव्याप्तौ पूर्वा सर्पप्रिया तिथिः । नो चेत् सर्पस्य पञ्चम्या योगेऽत्यन्तं प्रशस्यते । गौर्या शुद्धाजयायुक्ता, नागविद्धा निषिद्ध्यते । सर्वत्र पञ्चमी पूर्वा ग्राह्या स्कन्दव्रते परा । नागविद्धा स्कन्दषष्ठी सा निषिद्धा व्रतान्तरे । उत्तरस्या अलाभे तु नागविद्धापि गृह्यताम् । विनाशाद्वा परेऽभावात् नागविद्धा न दोषकृत् । सप्तमी पूर्वविद्धैव व्रतेषु निखिलेष्वपि । अलाभे पूर्वविद्धाया परविद्धापि गृह्यताम् । व्रतमात्रेऽष्टमी कृष्णा पूर्वा शुक्लाष्टमी परा । दूर्वाष्टमी तु शुक्लापि पूर्वविद्धा विधीयते । पक्षद्वयेऽप्युत्तरैव शिवशक्तिमहोत्सवे । ज्येष्ठर्क्षयोगे पूर्वैव ग्राह्या ज्येष्ठाव्रते तिथिः । मध्याह्नादूर्द्धमृक्षं चेत् परेद्युः सा प्रशस्यते । ज्येष्ठर्क्षभानुवाराभ्यां युक्ताष्टम्यतिदुर्लभा । जयन्त्याख्यं व्रतं भिन्नं कृष्णजन्माष्टमीव्रतात् । शुद्धा च सप्तमीविद्धेत्येवं जन्माष्टमी द्विधा । सप्तमी चेन्निशीथात् प्राग्विद्धा शुद्धान्यथा भवेत् । शुद्धायां नास्ति सन्देहो विद्धा च त्रिविधेष्यते । निशीथयोग पूर्वेद्युः परेद्युर्वा द्वयोरुत । पूर्वैव प्रथमे पक्षे परैवोत्तरपक्षयोः । अष्टमी रोहिणी शुद्धा जयन्ती सा चतुर्विधा । शुद्धा शुद्धाधिकेत्येवं विद्धाविद्धाधिकेति च । शुद्धायामपि विद्धायां न सम्भाव्योत्तरा तिथिः । शुद्धाधिकायां योगः स्यादेकस्मिन्वा दिनद्वये । नैकयोगेऽस्ति सन्देहो द्वियोगे प्रथमं दिनम् । सदा निशीथे पश्चाद्वेत्युत्तमो मध्यमोऽधमः । योगस्त्रिधापि पूर्वेद्युः सम्पूर्णत्वादुपोषणम् । विद्धाधिकायामप्येकदिनयोगे स गृह्यताम् । द्वयोर्योगस्त्रिधा भिन्नो निशीथे वृत्तिभेदतः । तद्वि-

पिनी ग्राह्या "तदभावे तु सायाह्नव्यापिनी परिष्टह्यता-मिति" माधवोक्तेः कृष्णा तु परा "कृष्णा तूत्तरतो-ऽखिलेति" दीपिकोक्तेः कृष्णापि पूर्वैवेत्यनन्तभट्टाः ।

द्वितीया तु कृष्णा पूर्वा शुक्लोत्तरा इति हेमाद्रिः, कृष्णा द्वितीयादिना "पूर्वाह्णे यदि सा सिता तु परतः सर्वा" इति दीपिकोक्तेः माधवानन्तभट्टमते तु सर्वापि द्वितीया परा तथा च माधवः "पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा । सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽन्यथा" इति

तृतीया तु सर्वमते रम्भाव्यतिरिक्ता परैव तेन युग्म-वाक्यं रम्भाव्रतविषयम् "रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम । अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते इति ब्रह्मवैवर्तात् गौरीव्रते तु विशेषमाह माधवः "मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे । शुद्धाधि-कायामप्येवं गणयोगप्रशंसनादिति" ।

चतुर्थ्यपि सर्वमते गणेशव्रतातिरिक्ता परैव युग्मवा-क्यात् "एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्या परसंयुक्ता परा पूर्वेण संयुता" इति माध-वीये बृहद्वसिष्ठोक्तेश्च

नागचतुर्थी तु मध्याह्नव्यापिनी पञ्चमीयुता च ग्राह्या इति निर्णयामृते माधवीये चोक्तम् "युगं मध्यं दिने यत्र तत्रोपोष्य फणीश्वरान् । क्षीरेणाप्याय्य पञ्चम्यां पूजयेत् प्रयतो नरः । विषाणि तस्य नश्यन्ति न तान् हिंसन्ति प-न्नगाः" इति माधवीये देवलोक्तेः । युगं चतुर्थी । पूर्वत्र मध्याह्नव्याप्तौ पूर्वा अन्यपक्षेषु परैव पञ्चम्यां पूजोक्तेः गणेशव्रते तृतीयायुतैव चतुर्थी "चतुर्थी तु तृतीयायां महापुण्यफलप्रदा । कर्तव्या व्रतिभिर्वत्स । गणनाथ-सुतोषिणी" इति हेमाद्रौ ब्रह्मवैवर्त्तात् । माधवीये तु गणेशव्रते "मध्याह्नव्यापिनी ग्राह्या" चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । मध्याह्नव्यापिनी चेत् स्यात् परतश्चेत् परेऽहनि" इति बृहस्पतिवचनात् "प्रातः शुक्ल-तिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ।" इति "तत्कालेऽभि-धानाच्च तेन परदिने तथात्वे परा अन्यथा पूर्वेत्युक्तम् वस्तु-तस्तु यत्र भाद्रशुक्लचतुर्थ्यादौ गणेशव्रतविशेषे मध्याह्न-पूजोक्ता तद्विषयाण्येव प्रागुक्तवचनानि न तु सार्वत्रि-काणि । संकष्टचतुर्थ्यादौ बहूनां कर्मकालानां बाधापत्ते-स्तेन सर्वत्र गणेशव्रते पूर्वैवेति सिद्धम् । संकष्टचतुर्थी तु चन्द्रोदयव्यापिनी ग्राह्या दिनद्वये तथात्वे मातृयोगस्य सत्त्वात् पूर्वेति केचित् । अन्ये तु संकष्टव्रतादिरूपस्य तृतीयायोगस्याभावात्परदिने माधवोक्तमध्याह्नव्यापित्व-स्यात् सम्पूर्णत्वाच्च परेत्याचक्षते । दिनद्वये तदभावे तु परैव । गौरीव्रते तु पूर्वैव । "गणेशगौरीबहुलाव्यतिरिक्ता प्र-कीर्त्तिता । चतुर्थी पञ्चमीविद्धा देवतान्तरयोगतः" इति मदनरत्ने ब्रह्मवैवर्त्तात्

पञ्चमी तु माधवमते सर्वापि पूर्वा "चतुर्थीसं-युता कार्या पञ्चमी परया न तु । दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथा सितेति" हारीतोक्तेः हेमाद्रिमते तु कृष्णा पूर्वा सिता परा "कृष्णा पूर्वयुता सिता परयुता स्यात् पञ्चमी" इति दीपिकोक्तेः वस्तुतस्तु हारीतोक्तिरुपवासविषया "प्रतिपत्पञ्चमी चैव सावित्री-भूतपूर्णिमा । नवमी दशमी चैव नोपोष्या परसंयुता" इति ब्रह्मवैवर्तात् यत्तु "पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद ।" इत्यापस्तम्बीयम् तत् स्कान्दव्रतपरम् "स्का-न्दोपवासे स्त्रीकार्या पञ्चमी परसंयुता" इति वाक्यशेषा-दिति माधवः तन्नागपूजाविषयमित्यनन्तभट्टनिर्णयामृता-दयः । चमत्कारचिन्तामणौ च "पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता । तस्यां तु तुषिता नागा इतरा सचतुर्थिका" इति तेन नागपूजादौ परैव । यत्तु मदन-रत्नदिवोदासीययोः श्रावणपञ्चम्यतिरिक्ता पूर्वेत्युक्तं "श्रावणे पञ्चमी शुक्ला सम्प्रोक्ता नागपञ्चमी । तां परि-त्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः" इति वचनोक्तेः, "गणेशस्कन्दयोगाभ्यां क्रमाच्छ्राग शुभाशुभ । मिश्रा-मिश्रे तयोः पक्षे नागानामाशुवर्हिणौ" इति षट्त्रिंश-न्मताच्च श्रावणपञ्चम्यतिरिक्ताया नागपञ्चम्याश्चतुर्थीयुत-त्वमुक्तं तदुपवासादिविषयम् । पक्षे वाहने ।

षष्ठी सर्वमते स्कान्दव्रतातिरिक्ता परैव युग्मवाक्यात् "नागविद्धा न कर्तव्या षष्ठी चैव कदाचन" इति स्कान्दाच्च निर्णयामृते "षष्ठी च सप्तमी चैव वारश्चेदंशुमालिनः । योगोऽयं पद्मको नाम सूर्यकोटिग्रहैः समः" ।

सप्तमी पूर्वैव युग्मवाक्यात् "षष्ठ्या युता सप्तमी च कर्त्तव्या तात । सर्वदा" इति स्कान्दाच्च ।

अष्टमी तु सर्वमते कृष्णा पूर्वा सिता परा "व्रत-मात्रेऽष्टमी कृष्णा पूर्वा शुक्लाष्टमी परा" इति माधवोक्तेः "परयुक् शुक्लाष्टमी पूर्वयुक् कृष्णा" इति दीपिकोक्तेश्च शिवशक्त्युत्सवे तु कृष्णाप्युत्तरा "पक्षद्वयेऽप्युत्तरैव शिवशक्तिमहोत्सवे" इति माध-वोक्तेः दिवोदासीये भविष्ये "यदा यदा सिताष्टम्या

कार्य्याणिमभूषणानि कार्य्याणि कार्य्याणि महेशतिथ्याम्। द्वितीयायां तृतीयायां पञ्चम्यां सप्तमीतिथौ। उक्तानि यानि सिध्यन्ति दशम्यां तानि सर्वदा। अतो धर्माऽखिलधर्मकृत्य सुरोत्सवाद्याऽखिलवास्तुकर्म। ए-ष्वामयोग्याखिलवास्तुकर्म विश्वे तिथौ सिध्यति शि-ल्पकर्म। पृथिव्यां यानि कर्म्माणि धर्मपुष्टि शुभानि च। चरस्थिराणि द्वादश्यां यात्रां नवम्यह विना। विवाहगौरीभुजगभान्वन्तकादिनेषु च। उक्तानि तानि सि-ध्यन्ति त्रयोदश्यां विशेषतः। यत्क्रियापौष्टिकम-ङ्गलानि सयामयोग्याखिलवास्तुकर्म। उद्वाहशिल्पाऽ-खिलभूषणाद्यं कार्य्यं प्रतिष्ठा खलु पौर्णमास्याम्। सदैव दर्शे पितृकर्म उक्ता नान्यद्विधेयं शुभपौष्टिकाद्यम्। भूतैः कृत तत्र शुभोत्सवाद्यं विनाशमायात्यचिरादसंशयम्" पी॰धा॰ वशिष्ठवचनम्।

**तिथिक्षय** पु॰ तिथीनां नित्यपञ्चितचन्द्रकलानां क्षयः क्षया-रम्भो यस्मिन्। दर्शे अमावास्यायाम् शब्दार्थकल्प॰। द्वत॰। तिथीनां नाशे अवमे अवमशब्दे ४२१ पृ॰ दृश्यम् दिनक्षयादयोऽप्यत्र। "कौर्मे पाद्मेऽपि "द्वौ तिथ्य-न्तावेकवारे यत्र स स्याद्दिनक्षयः" वसिष्ठः "एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा। तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम्"। साहस्रिकं फलमिति माङ्गल्येतरवैदिककर्मपरम्। "अधिमासे दिनपाते अस्तुपि रवौ मातुलङ्घिते मासि। चक्रिणि सुप्ते कुर्य्यान्नो मा-ङ्गल्यं विवाहञ्च" इति भीमपराक्रमात् दिनपाते दिनक्षये इत्यु॰ तिथिक्षयानयनञ्च सू॰ सि॰ उक्तं यथा "सावनाहानि चान्द्रेभ्यो द्युभ्यः प्रोज्झ्य तिथिक्षयाः" सू॰ सि॰। "चान्द्रेभ्यो द्युभ्यो वक्ष्यमाणचान्द्रदिवसेभ्यः कल्पादिस्थर्थं। तिथिषु चान्द्रदिनेषु सावन-दिनानामवशेषतुल्यः क्षयो न्यूनत्वम्। यद्वा तिथिष् क्षयेन सावनो दिवसस्तस्य चान्द्रदिवसात् क्षय इति स्वरूपमेव वक्ष्यमाणोपयोगात् परिभाषितम्" रङ्गना॰। युगे तत्सङ्ख्या सू॰ सि॰ उक्ता यथा युग इत्युपक्रमे "तिथिक्षया यमार्थाश्विद्व्यष्टव्योमशराश्विनः" २५०८२२५२ एतन्मिता इत्यर्थः।

**तिथिपति** पु॰ तिथिविशेषाणां पतयः। तिथीनाम-धिपतौ स च मु॰ चि॰ उक्तो यथा "तिथीशावह्निको गौरी गणेशोऽहिर्गुहो रविः। शि-वोदुर्गान्तको विश्वे हरिः काम शिवः शशी" मु॰ चि॰ एतन्मूलं पीयूषधारायां धृतवशिष्ठवचनं यथा "वह्निर्विधाताद्रिसुता गणेशः सर्पो विशाखोऽदितिजो महेशः। दुर्गा यमो विश्वहरिश्च कामः शर्वो निशेशश्च पुराणदृष्टाः इति स्वामिन इति शेषः"। तिथिपतयश्च वृ॰ स॰ ९८ अ॰ अन्यथोक्ता यथा "कमल-जविधातृहरियमशशाङ्कषड्वक्त्रशक्रवसुभुजगाः। धर्मेश-सवितृमन्मथकलयो विश्वे च तिथिपतयः। पितरोऽमा-वास्यायां सञ्ज्ञासदृशाश्च तैः क्रिया कार्य्याः। नन्दा भद्रा जया रिक्ता पूर्णा च तास्त्रिविधाः। यत्र कार्य्यं मासे तद्दैवत्यासु तिथिषु तत्कार्य्यम्"। वशिष्ठवराह-वचनाभ्यामुक्तदेवताः तत्तिथिषु पक्षेऽत्र न विरोधः।

**तिथिप्रणी** पु॰ तिथिं प्रणयति प्र+नी—क्विप्। चन्द्रे त्रिका॰

**तिथियुग्म** न॰ तिथ्योस्तिथिविशेषयोर्युग्मम्। द्वितीयादितिथि-सम्पर्कयोगरूपे युग्मे तानि च सप्त युग्मानि निगमे उक्तानि यथा "युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा। प्रतिपदाप्यमा-वास्या तिथ्योर्युग्मं महाफलम्। एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतमिति"। युग्म द्वितीया। अग्नि-स्तृतीया। युग चतुर्थी। भूत पञ्चमी। षट् षष्ठी। मुनि सप्तमी। वसुरष्टमी। रन्ध्रं नवमी। रुद्र एकादशी। अत्र युग्माग्न्यादिषु सप्तसु युग्मेषु पूर्वतिथि-रुत्तरविद्धा ग्राह्या उत्तरा तु पूर्वविद्धेत्युक्तं भवति। वेधश्चात्र त्रिमूर्त्तयोरेव तदुक्तं कालमा॰ "अत्र तिथीनां वेधः पैठीनसिना दर्शितः। "पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्। त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः" इति पूर्वेद्युरुदयानन्तरममावास्या त्रिमुहूर्त्ता चेत् सा प्रतिपदं विध्यति। परेद्युरुदयात् प्राक् द्वितीया त्रिमुहूर्त्ता चेत् सापि पूर्वां प्रतिपदं विध्यति त्रिमुहूर्त्तव्याप्तिः स्कन्दपुराणे दर्शिता। "या तिथिं समनुप्राप्य यात्यस्तं पद्मिनीप्रियः। सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्ता च या भवेदिति"। शिवरहस्यसौर-पुराणयोरपि "या प्राप्यास्तमुपैत्यर्कं सा चेत् स्यात् त्रिमुहूर्त्तिका। धर्मकृत्येषु सर्वेषु सम्पूर्णां विदुर्बुधाः" इति। वृहद्वशिष्ठोऽपि "यस्यां तिथावस्तमियात् सूर्य्यस्तु त्रिमुहूर्त्तके। यागदानजपादिभ्यस्तामेवोपक्र-मेत्तिथिमिति"। एवं पैठीनस्यादिवाक्ये त्रिमुहूर्त्तस्येवं वेधस्थिते बहूनां योगमात्रेणैव वेधोक्तिः साहस-मात्रम्। वेधकातिदेशिमुहूर्त्तत्वेऽपि विद्धनिषेधः पूर्वां

र्व्यापित्वेऽपि ग्राह्यता काममाधवीये निर्णीता यथा । "दैवल "या तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिष्विति" । व्यासोऽपि "उदयन्नेव सविता यां तिथिं प्रतिपद्यते । सा तिथिः सकला ज्ञेया दानाध्ययनकर्मस्विति" । भविष्योत्तरपुराणेऽपि "व्रतोपवासनियमे घटिकैका यदा भवेत् । सा तिथिः सकला ज्ञेया पित्रर्थे चाऽपराह्निकीति" पद्मपुराणेऽपि "व्रतोपवासनियमे घटिकैका यदा भवेत् । उदये सा तिथिस्तत्र विपरीता तु पैतृके" इति स्कन्दपुराणेऽपि "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" इति विष्णुधर्मोत्तरेऽपि "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनीति" बौधायनोऽपि "आदित्योदयवेलायां याल्पापि च तिथिर्भवेत् । पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विनेति" नन्वस्त्वेवं तत्तद्दिवसाभ्यनुज्ञा तथाप्युत्तरदिवसायास्तिथेर्ग्रहणे कियत् परिमाणमुदये अपेक्षणीयमिति विवेचनीयम् । तत्र बौधायनेनाल्पापीत्यभिधानात् निमेषमात्रं प्रतिभाति तथा व्यासवाक्येऽपि प्रतिभाति "उदयन्नेवे"त्यभिधानात् । भविष्योत्तरपुराणादिवचनेषु घटिकामात्रं प्रतीयते । वचनान्तरे तु विष्णुधर्मोत्तरबौधायनप्रोक्ते घटिकाचतुष्टयं भासते । तथा च पठ्यते "उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ । द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोरिति" । अस्यार्थः । भानावुदिते सत्युत्तरकालेऽह्नो मुहूर्त्तद्वयं दैवतम् । तस्मिन्नस्तमिते ततः पूर्वकालीनमह्नो मुहूर्त्तत्रयं पितृदैवत्यम् । अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या । अत्रोच्यते । पौर्वाह्णिकौ इति वचनेन दैवे पूर्वाह्णव्याप्त्यभिधानात् । पूर्वाह्णस्य पञ्चधा विभक्तस्य मुख्यत्वादुदिते भानौ त्रिमुहूर्त्ता तिथिर्ग्रहीतव्या । यत्तु दक्षेणोक्तम् । त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी "द्विमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनीति" । तत्र त्रिमुहूर्त्तव्याप्तेर्बोधकं प्रत्युतोपोद्बलकमेव । तथा हि प्रतिषेधः सर्वत्र प्रसक्तिपूर्वकः प्रसक्तिश्चात्र यथोक्तरीत्या पौर्वाह्णिकवचनाभ्यां त्रिमुहूर्त्तविधायिपैठीनसिवाक्याद्वा भवति । तत्र प्रसक्तत्रिमुहूर्त्तस्य क्षयतिथौ बाधका-भावात्तथैव व्यवतिष्ठते । तिथिक्षये त्वधिकव्याप्तिविधित्सया प्रतिषिध्यते । अतस्तत्र चतुर्थमुहूर्त्तस्पर्शिनी तिथिर्ग्राह्या । तिथिसाम्यवृद्ध्योरपि मुहूर्त्तत्रयमेव मुख्यम् । मुहूर्त्तद्वयं त्वनुकल्पः । अतएव क्वचित् द्विमुहूर्त्तापीत्यपिशब्दः पठ्यते ।"अत्राप्येकमुहूर्त्तव्याप्तिर्निकृष्टेत्यर्थसिद्धम्

"द्वितीयादिकयुग्मानां पूज्यता नियमादिषु" व्यास । अत्र प्रतिसवः ।"भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" । "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ति॰ त॰ ।

**तिथिसन्धि** पु॰ तिथ्योः सन्धिः । तिथ्योः पूर्वापरयोः सन्धौ तन्नामानयनं सि॰ शि॰ यथा "गणितवदिह लाघवचन्द्रभुक्त्यैन्दुभान्वोर्गतिविवरकलाभिर्भूय एताभिरेव । पृथगथ गतियुत्या नाडिका सन्धिजाता तिथिकरणयोगानां फलं तत्र मिश्रम्"।

एवं गणितविम्बकलाभ्यो या घटिका उत्पद्यन्ते ता भतिथिकरणयोगानां सन्धिघटिकाः स्युः । सन्धौ मिश्रफलमित्यर्थः । अत्र सन्धिरुभयतोऽपि विम्बस्य स्थितत्वात् । उपपत्तिरत्र सुगमा" । प्रमिता॰

**तिथ्यर्द्ध** न॰ ६त॰ । करणे । करणशब्दे १६६० पृ॰ दृश्यम् ।

**तिनाशक** पु॰ तिनिश+पृषो॰ । तिनिशवृक्षे शब्दरत्ना॰ ।

**तिनिश** पु॰ अतिशयेन नेशति अति+निश—क पृषो॰ अतेरकारलोपः । (सादन) ख्याते वृक्षे अमर । "तिनिशः श्लेष्मपित्तास्रभेदकुष्ठप्रमेहजित् । तुवरः व्रणदाहघ्नो व्रणपाण्डुकृमिप्रणुत्" भावप्र॰ । [२दैत्यभेदे पु॰ हेमच॰ ।

**तिन्तिड़** पु॰ तिन्तिडी+पृषो॰ । १वृक्षाम्ले (तेँतुल) चिञ्च

**तिन्तिडी** स्त्री तिन्तिडीक+पृषो॰ । (तेतुल) वृक्षभेदे राजनि॰ स्वार्थे क । तिन्तिडिका तत्रार्थे शब्दरत्ना॰ । "अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च । अम्ला च चिञ्चिका चिञ्चा तिन्तिडीका च तिन्तिडी । आम्लिकाऽम्ला गुरुर्वातहरी पित्तकफास्रकृत् । पक्वा तु दीपनी रूक्षा सरोष्णा कफवातनुत्" भावप्र॰ । "अम्लिकायाः फलं पक्वं मर्दितं वारिणा द्रवम् । शर्करामरिचोन्मिश्रं सकर्पूरेन्दुवासितम् । अम्लिकाफलसंभूतं पानकं वातनाशनम् । पित्तश्लेष्मकरं किञ्चित् सुरुच्यं वह्निबोधकम्" भावप्र । [अमर ।

**तिन्तिडीक** पु॰ तिम—ईक अभीका॰ नि॰ । (तेँतुल) वृक्षभेदे

**तिन्तिडीद्यूत** न० तिन्तिड्याः तद्वीजेन द्यूतम् । तिन्तिडी-बीजेन क्रीडने (काँइबोजेरखेला) त्रिका० ।

**तिन्तिडि(लि)का** स्त्री तिन्तिडी+स्वार्थे क ह्रस्व वा डस्य लः । (तेँतुल) तिन्तिड्याम् शब्दमा० । काभावे तिन्ति-लीत्यप्यत्र ।

**तिन्दिश** पु० टिण्डिशवृक्षे (ढाँडश) राजनि० ।

**तिन्दु** पु० तिज–कु–स्तगयादि० नि० । (तेँदु)१ख्याते वृक्षे स्वार्थे कन् । तिन्दुक (गाव)इति ख्याते २वृक्षे पुंस्त्री शब्दरत्ना० । स्त्रीत्वे गौ०ङीष् । ३कर्षमाणे वैद्यकपरिभाषा पुम० । "आमं तिन्दुकं ग्राहि वातलं शीतलं लघु । पक्वं पित्तप्रमेहास्रश्लेष्मघ्नं मधुरं गुरु । तत्सारं तु भवेद्धृद्यं कर्पूरं शिरोरोगजित् । विषतिन्दुकमप्येवं विशेषात् ग्राहि शीतलम्" राजनि० ।

**तिन्दुकि** स्त्री तिन्दुकी+पृषो० ह्रस्व । तिन्दुके वृक्षे शब्दर० ।

**तिन्दुकिनी** स्त्री तिन्दुकसदाकारं फलेऽस्त्यस्याः इनि ङीप् । आवर्त्तक्याम् राजनि० ८२८ वृक्षम् ।

**तिन्दुल** पु० तिन्दुक+पृषो० कस्य लः । तिन्दुकवृक्षे शब्दर० ।

**तिप** क्षरणे भ्वा० आत्म० सक० सेट् । तेपते अतेपिष्ट अतिप्त । तितेपे । ऋदित् अतितेपत् न । [तितेम ।

**तिम** आर्द्रीभावे भ्वा० पर० अक० सेट् । तेमति अतेमीत् ।

**तिम** आर्द्रीकरणे दिवा०पर० सक० सेट् । तिम्यति अतेमीत् । तितेम । "वानरान् तिम्यतोऽवलोक्य" इति० "तिमिताश्चाभवन् सर्वे तत्र ते हरियूथपाः" रामा० सुन्द० १ स० । "नद्यश्च तिमितोदकाः" रामा० अर० ५४स० । तेमनम् ।

**तिमि** पु० तिम–इन्–तम–इन्–इत्व सा० वा १समुद्रे त्रिका० । तद्भवे २मत्स्यभेदे पुंस्त्री० स्त्रियां वा ङीप् । "अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः" भरत-धृतवाक्यम् । "अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः । तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव" शब्दार्थचि०धृतरामा० वाक्यम् । "अमी शिरोभिस्तिमयः सरन्ध्रैरूर्द्ध्वं वितन्वन्ति जलप्रवाहान्" रघुः । "अत्र नानाविधाकारास्तिमयोऽनेकरूपिणः" भा० उ० ९८ अ० । शब्दकल्पद्रुमेऽस्य स्त्रीत्वोक्तिः प्रामादिकी अमी तिमय इति नैकरूपिण इति पुंस्त्वेन प्रयो-गात् कृदिकारान्तत्वात् वा स्त्रियां ङीप् । २तज्जाति-स्त्रियां स्त्री भेद ।

**तिमिकोष** पु० तिमेः कोष इव । समुद्रे त्रिका० ।

**तिमिङ्गिल** पु० गिरति–गॄ–मूलवि० क रस्य लः "गिलेऽगि-लस्य" पा०सुम् । महामत्स्यभेदे । तिमिशब्दे उदा०दृश्यम् । "तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः" भा०व० १६६ अ० ।

**तिमिङ्गिलगिल** पु० तिमिङ्गिलं गिलति गॄ–मूल० क रस्य लः अगिलस्येति पर्युदासात् न मुम् । अतिवृहन्मत्स्यभेदे तिमिशब्दे उदा० ।

**तिमिङ्गिलाशन** पु०तिमिङ्गिलो मत्स्यः अश्यते यत्र अश–आधारे ल्युट् । दक्षिणस्थे देशभेदे "बलदेवपट्टन दण्ड-कावनतिमिङ्गिलाशनाभद्राः" वृ०स० १४अ० कूर्मविभागे दक्षिणस्थदेशोक्तौ । सोऽभिजनोऽस्य तस्य राजा वा अण् । तस्य बहुषु लुक् । २तद्देशवासिषु ३तन्नृपेषु च ब० व० । एकवचने तु तैमिङ्गिलाशन इति भेद ।

**तिमिज** न० तिमितो जायते जन–ड ५त० । मुक्ताभेदे "तिमिज मत्स्याक्षिनिभं वृहत्पवित्रं बहुगुणञ्च" वृ०स० ८१ अ० । मुक्ताभेदकथने ।

**तिमित** त्रि० तिम–कर्त्तरि क्त । १निश्चले, धरणौ । २क्लिन्ने (भिजे) अमर । "ह्रद इव तिमिनागसङ्कुलः स्तिमि-तजलोर्मिरिवाम्बुधिर्महान्" रामा० अयो० ८१ स० ।

**तिमिर** पुंन०तिम–किरच् अर्द्धर्चा० । १अन्धकारे २नेत्ररोग-भेदे च । "तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः । रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतः परम्" माधव० अक्षिपटलशब्दे ४१पृ० दृश्यम् । "सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः" । "पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ । अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे" "विततं वनतिमिरसंचि" माघ ।

**तिमिरनुद्** पु० तिमिरं नुदति खण्डयति नुद–क्विप् ६त० । सूर्य्ये "तिमिरनुदो मण्डल यदि स चेह" वृ०स०५अ० । तिमिरभिदादयोऽप्यत्र । २अन्धकारनाशके त्रि० ।

**तिमिररिपु** पु० ६त० । १सूर्य्ये हला० । तिमिरारिप्रभृत-योऽप्यत्र "तिमिरारिस्तमोहन्ति प्रातःसमयभीरव । वयं काका वयं काका इति जल्पन्ति वायसाः" उद्भटः । २अन्धकारनाशके त्रि० ।

**तिमिरि** पु० तिमीति शब्द वाचकत्वेन राति रा–बा० डि । तिमिमत्स्ये राजनि० ।

**तिमिष** पु०तिम–इषक् । १ग्राम्यकर्कट्याम्, त्रिका० २माटाक्षे च शब्दार्थचि० । [स्त्रियाम् ।

**तिरश्ची** स्त्री तिर्य्यक् जातिः स्त्री ङीप् । पशुपक्ष्यादि

**तिरश्चीन** त्रि० तिर्य्यगेव स्वार्थे ख । तिर्य्यग्भूते । "गतं तिरश्चीनमनूरुसारथेः" माघः "तिरश्चीनो विततो

रश्मिरेषामध" ऋ० १०।१२९।५। २वक्रे च "ईक्षमाण पादेन तिरश्चीनेन चक्षुषा" भाग० ७।८।४।

**तिरस्** अव्य० तॄ-असुन् स्वरादि। १अन्तर्द्धाने २तिर्य्यगर्थे च अमरः। ३तिरस्कारे चीरस्वामी। अस्य कृञि वा उप० स०। तिरस्कृत्य तिरः कृत्वेति "तिरस्कृत्योच्चरेत् काष्ठलोष्टादि" मनुः "तिरस्क्रियन्ते कृमितन्तुजालैः" माघ। तिरस्करोति णिच्-मन्लोपः। तिरयति आच्छादयतीत्यर्थः। "उदारस्फुरदम्बुजायुतिरय तिरयदपि भेदनाम्" जयदेव।

**तिरस्कर** त्रि० तिरः करोति कृ-ट। आच्छादके। स्त्रियां ङीप्। "अङ्गो यत स्वर्गगणस्तिरस्करी कृतस्वभी पुण्ययशस्करी भुवः" भाग० ३।१०।२८।

**तिरस्करिणी** स्त्री तिरः करोति कृ-णिनि संज्ञापूर्वकविधेरनित्यत्वात् षत्वाभावः ङीप्।(परदा) (कानात)। पटमये आच्छादकपदार्थे अमरः। "तिरस्करिण्यो जलदा भवन्ति" कुमा०। २आच्छादकमात्रे त्रि० "सोऽन्याधास्यत नहोऽस्य तिरस्करिणमन्तरा" रामा० अयो० १५ स०।

**तिरस्कार** पु० तिरस्+कृ-भावे घञ्। १अनादरे हेमा०। कर्त्तरि अण्। २अवज्ञाकारके त्रि०। "लोकतिरस्कार स्यात्तमन्युः" किरात०।

**तिरस्कारिन्** त्रि० तिरः करोति कृ-णिनि इत०। १आच्छादके (कानात) २पटभेदे स्त्री ङीप्। ३अवज्ञाकारके त्रि०

**तिरस्कृत** त्रि० तिरस्+कृ-कर्म्मणि क्त। १अवज्ञाते अनादृते २आच्छादिते च अमर "अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ। अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्" काव्यप्र०। ४तन्त्रसारोक्ते मन्त्रभेदे पु० "यस्य मध्ये दकारोऽस्ति वक्षः मूर्द्धनि द्विधा। अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदीर्य्यते"।

**तिरस्क्रिया** स्त्री तिरस्+कृ-भावे श। १अनादरे २तिरस्कारे अमर २आच्छादने च "अप्रकटीकृतशक्तिः शक्तोऽपि जनात्तिरस्क्रियां लभते" पञ्चत०। "द्विषद्विषः प्रभुत सा तिरस्क्रिया" माघ०। [तिरस्यति अतिरस(स्त्री)त्।

**तिरस्य** पु० तिरस्+कण्डू० यक् अन्तर्द्धाने सक० सेट्।

**तिरिट** पु० तॄ-बा० इटक्। इक्षुपर्ण्यां शब्दमा०।

**तिरिम** पु० तॄ-बा० इमक्। शालिभेदे राजनि०।

**तिरिय** पु० तॄ-बा० इयक्। शालिभेदे राजनि०।

**तिरीट** न० तॄ-ईटक्। लोध्रवृक्षे उज्ज्वलद०।

**तिरीटक** पु० तिरीट+स्वार्थे कन्। लोध्रे अमरः।

**तिरोधान** न० तिरस्+धा-भावे ल्युट्। १अन्तर्द्धाने भावे अङ्। तिरोधाप्यत्र स्त्री।

**तिरोभाव** पु० तिरस्+भू-भावे घञ्। १गुप्तभावे २अन्तर्द्धाने।

**तिरोहित** त्रि० तिरस्+धा-क्त। १अन्तर्हिते गुप्ते २आच्छादिते च "अतिरोहितमन्यत्" तत्त्वकौ० "एष ह वै पुरोहितो य एवं वेदाथ स तिरोहितो य एवं न वेद" ऐत०ब्रा० "न चासारे न चात्युष्णे न दूरे न तिरोहितम्" मनु

**तिर्य्यक्पातिन्** त्रि० तिर्य्यक् पतति पत-णिनि। वक्रप्रसारिते कुटिलहस्ते शब्दार्थचि०।

**तिर्य्यक्प्रमाण** न० कर्म्म०। विस्तारप्रमाणे।

**तिर्य्यक्स्रोतस्** पु० तिर्य्यक् स्रोतो आहारसञ्चारो यस्य। पशुपक्ष्यादौ तेषामशितान्नस्य तिर्य्यक्तया उदरे सञ्चारात् तथात्वम्। तद्भेदाभाग० ३।१०।२१

"तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः। अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः। गौरजो महिषः कृष्णः शूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम।। खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून्। श्वा शृगालो वृको व्याघ्रो मार्जारः शशशल्लकौ। सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः। कङ्कगृध्रबकश्येनभासभल्लूकबर्हिणः। हंससारसचक्राह्वकाकोलूकादयः खगाः।"

"तिर्य्यक्स्रोतसां सर्गमाह तिरश्चामिति। स चाष्टाविंशतिभेदः। तिरश्चां लक्षणम् अविदः श्वस्तनादिज्ञानशून्याः। भूरितमसः आहारादिमात्रनिष्ठाः। घ्राणज्ञा घ्राणेनैवेष्टमर्थं जानन्ति हृद्यवेदिनः दीर्घानुसन्धानशून्याः। तथा च श्रुतिः "अथेतरेषां पशूनाम् अशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकाविति"। अष्टाविंशतिभेदानाह गवादयः उष्ट्रान्ता द्विशफा नव खरादयः चमर्य्यन्ता एकशफाः षट्। श्वादयो गोधान्ताः पञ्चनखाद्वादश। एवमेते भूचराः सप्तविंशतिः, मकरादयो जलचराः कङ्कादयश्च खगाः। अभूचरत्वेनैकीकृत्य अष्टाविंशता। तदेवमष्टाविंशतिभेदान् वदन्ति। तेषु कृष्णरुगौराः मृगविशेषाः अन्येषामपि तिर्य्यक्प्राणिनामेतेष्वेव यथायथमन्तर्भावः।"

**तिर्य्यग्योनि** स्त्री तिरश्चां योनिः पशुपक्ष्यादिजातौ "स लिङ्गिनां हरत्येनस्तिर्य्यग्योनौ च जायते" मनु।

"अवध्यास्त्रिय प्राहुस्तिर्य्यग्योनिगतामपि" ति॰ त॰ ।

**तिल** गतौ भ्वा॰पर॰सक॰सेट् । तेलति अतेलीत् । तितेल ।

**तिल** स्नेहे तु॰ पर॰ अक॰ अनिट् । तिलति अतेलीत् । तितेल । [ तिलत् स ।

**तिल** स्नेहे चुरा॰ उभ॰ अक॰ सेट् । तेलयति ते अतीतिलत् त ।

**तिल** पु॰ तिल—क । स्वनामख्याते शस्यभेदे । भावप्र॰ तद्गुणाद्युक्तं यथा "तिलः कृष्णः सितो रक्तः सवर्णोऽल्पतिलः स्मृतः । तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः । विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तनुत् । बल्यः केश्यो हिमस्पर्शस्त्वच्यस्तन्योव्रणे हितः । दन्त्योऽल्पमूत्रकृद्ग्राही वातघ्नोऽग्निमतिप्रदः । कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः । अन्ये हीनतराः प्रोक्तास्तज्ज्ञै रक्तादयस्तिलाः" ।

तिलप्रतिग्रहनिषेधमाह ब्रह्मपुराणम् "ब्राह्मणः प्रतिगृह्णीयात् वृत्त्यर्थं साधुतस्तथा । अव्यश्रमपि मातङ्गतिललोहाश्च वर्जयेत्" तिलदाने फलमाह विष्णुः । "तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्" । महाभारते "कल्यमुत्थाय यो विप्रः स्नातः शुक्लेन वाससा । तिलपात्रं प्रयच्छन् वै सर्वपापैः प्रमुच्यते" । शु॰ त॰ स्मृतिः "प्रेतशुद्धिश्च यो दद्यात् हेमगर्भांस्तिलान् प । यावन्तस्ते तिलाः स्वर्गे तावत्कालं स मोदते" । सप्तम्यादिवर्जं तिलैः सदा स्नानं कर्त्तव्यमाह मार्कण्डेयः "सर्वकालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः । श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः । सप्तमीं नवमीं चैव पर्वकालञ्च वर्जयेत्" जन्मतिथौ तिलनिष्पाद्या षड्व्यापाराः कार्य्याः यथाह ति॰ त॰ "तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः । तिलभुक् तिलवापी च षट्तिली नावसीदति" कालविशेषे तिलतर्पणनिषेधः गङ्गादौ च सर्वदा निषिद्धदिनेऽपि तिलतर्पणकार्य्यता च तर्पणशब्दे ३२५८ पृ॰ उक्ता । रात्रौ तिलसम्बन्धवस्तुमात्रस्याभक्ष्यता "सर्वञ्च तिलसम्बद्धं नाद्यादस्तमिते रवौ" काशी॰ "तिलाश्वमकसंश्लेषात् प्राप्नुवन्त्यधिवासताम्" कामन्दकी॰ "विक्रीणाति तिलैस्तिलान्" पञ्चत॰ । २तिलतुल्ये स्वल्पप्रमाणे च "तिलं तिलं समादाय रत्नानां यद्विनिर्मिता । तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः" भा॰ आ॰ ७६६६ श्लो॰ । ३तिलाकारे देहस्थे (तिल) ख्याते चिह्नभेदे च "देवगुरुप्रसादेन जिह्वाग्रे मे सरस्वती । तेनाहं नृप ! जानामि भानुमत्यास्तिलं यथा" कालिदासः ।

तिलस्य विकारः अण् । तैलं तिलनिर्यासे तिलस्नेहे तिलसदृशवस्तुजाते स्नेहे च "अदुष्टं सार्षपं तैलं यत्तैलं पुष्पवासितम् । अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यशः" तिथित॰ । पर्वणि तन्निषेधमाह "स्त्रीतैलमांससम्भोगी विण्मूत्रनरकं व्रजेत्" ति॰त॰ एवमन्यदिनेऽपि तैलनिषेधः स्मृतौ दृश्यः ।

**तिलक** न॰ तिल—क्वुन् तिल+इवार्थे स्वल्पे वा कन् वा । १क्लोमनि २कृष्णसौवर्चले अमरः ३सौवर्चले मेदि॰ । ४तिलवृक्षे, पु॰ राजनि॰ । ५अश्वभेदे, पु स्त्री॰ मेदि॰ । ६रोगभेदे, अमरः । ७मरुवके च हेमच॰ । स्वनामख्याते ललाटादौ धार्य्ये चन्दनादिरचिते पुन॰ । तस्य धारणप्रकारो यथा "द्वादशाङ्गे ललाटादौ तिलकं हरिमन्दिरम् । स्नानान्ते वैष्णवः कुर्य्यात् प्रत्येकं कृष्णनामभिः । वामे वक्षसि नेत्रान्ते गण्डेऽसे शङ्खचिह्नितम् । तथैव दक्षिणे कुर्य्याद्धरेश्चक्राङ्कितं मुने ! । ललाटे केशवं विद्यात् कण्ठे श्रीपुरुषोत्तमम् । वामबाहौ वासुदेवं सव्ये दामोदरन्तथा । नाभौ नारायणञ्चैव माधवं हृदये तथा । गोविन्दं दक्षिणे पार्श्वे वामे चैव त्रिविक्रमम् । विष्णुं सव्ये कर्णमूले दक्षिणे मधुसूदनम् । शिरोमध्ये हृषीकेशं पद्मनाभञ्च पृष्ठतः । हरेर्द्वादशनामानि पठित्वा तिलकानि तु । यः कुर्य्याद्वैष्णवो नित्यं स प्रेमभक्तिमाप्नुयात् । ये कण्ठलग्नतुलसीमणिकाष्ठमाला ये द्वादशाङ्गहरिनामकृतोर्द्ध्वपुण्ड्राः । ये कृष्णभक्तिसुदृढा धृतशङ्खचक्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति । तिलकन्तूर्द्ध्वपुण्ड्राख्यं मध्यच्छिद्रं हि नारद ! । यदि कुर्य्याल्ललाटे तद्विज्ञेयं हरिमन्दिरम् । आनासामूलमाश्रित्य शिरोमध्यगतं मुने ! । हरिपादाकृतं नासामूलमारभ्य यत्कृतम् । हरिमन्दिरवत् सर्वं तद्राधावल्लभीयकम् । श्रीराधावल्लभीयं यत्तिलकं सुमनोहरम् । यौगलं तत्तु विज्ञेयं यदि मध्यसुरञ्जितम् । यदूर्द्ध्वपुण्ड्रं तिलकं शोभनं तन्मनोहरम् । तन्मध्ये पीतरेखञ्च श्रीमद्रामानुजं विदुः । श्रीरामोपासना यस्य तिलकं तदूर्द्ध्वपुण्ड्रकम् । भ्रुवोर्मध्ये सविन्दु स्याद्यदि विप्र ! मनोहरम् । हरेः सर्वावताराणां मत्स्यादीनां विशेषतः । उपासकानां तिलकं केवलं हरिमन्दिरम् । ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियाणां तथैव च । वैश्यानान्तु तथा विप्र ! शूद्रादेर्मण्डलाकृति । अच्छिद्रमूर्द्ध्वपुण्ड्रन्तु ये [illegible] जनाधमाः । तेषां ललाटे सततं

शुभ पाटो न सगय । इत्था भाले द्विजातीनामथोर्द्ध्व-पुण्ड्रकम् । कार्य्यं कृत्वाम्भृति कृत्वा यस्त्रेणास्त्रा-दयेन्मुखम् । ललाटदक्षिणे ब्रह्मा वामभागे महेश्वरः । मध्ये विष्णुर्वसेद्विप्र तस्मान्मध्यं न लेपयेत् । वर्त्तुलं तिर्य्यगच्छिद्रं ह्रस्वं दीर्घं ततं नतम् । वक्रलक्षणसंयुक्तं तिलकं यथिरर्थकम् । अमितयष्टिकूलनिङ्गलसुकारा क्षति । त्रिपुण्ड्रमर्द्धचन्द्रञ्च तिलकं चाशुभार्थकम् । प्रमाणन्तूर्द्ध्वपुण्ड्रस्य दीर्घं स्यात् कल्पितं मम । नासादिमूलमारभ्य केशान्तं गतं यदि । मूर्द्ध्ने काद्यन प्रोक्तमायतं द्व्यङ्गुलं विधि । क्षत्रिये त्र्यङ्गुलं तद्वद्ब्राह्मणे चतुरङ्गुलम् । नासिकायास्त्रिभागैको भागोमानेन यो भवेत् । भ्रुवोर्मध्यादथ स्थानं मूलमाहुर्मनीषिणः । ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । कुर्य्यात् यदूर्द्ध्वपुण्ड्रं तद्वैष्णवो हरिमन्दिरम् । वैष्णवा विना भूषयेत् वैश्यशूद्रान्त्यजाश्रमाः । यदूर्द्ध्वपुण्ड्रं विना युक्तेन हरिमन्दिरम् । नरोवाप्यथ वा नारी यदि कृष्णपथं लभेत् । यत्नतस्तुलसीमालां सन्ध्यायां हरिमन्दिरम् । मध्यच्छिद्रं न कुर्य्यात् यत्तिलकं यदि वैष्णवः श्वपदं लभ्यते तस्य भवेन्नारद! नान्यथा । दण्डाकारं हि रेखं यत्तिलकं मूलकोणकम् । मध्यच्छिद्रन्तु तत्प्राज्ञरूर्द्ध्वपुण्ड्रं मनोहरम् । अधोमुखालकलिकाकारं तिलकमुत्तमम् । मध्यच्छिद्रं युग्मरेखमूर्द्ध्वपुण्ड्रं प्रकीर्त्तितम् । तीर्थमृद् यज्ञकाष्ठञ्च वल्मीकमथवा मृगम् । अश्वत्थतुलसीमूलमृत्तिका गोष्पदस्य च । जाह्नवी मृत्महानिम्बतुलसीकाष्ठमेव च । कस्तूरीकुङ्कुमं फल्गु सिन्दूरं रक्तचन्दनम् । गोरोचना गन्धकाष्ठं जलं चागुरु गोमयम् । धात्रीमूलस्य मृद्गन्धो हरिद्रा गोष्ठहस्य च । स्नानान्ते सर्ववर्णानामाश्रमाणान्तथैव च । एतानि तिलकान्याहुः सन्ध्यादिसर्वकर्म्मसु" । "गङ्गामृत्तुलसीमूलमृत्तिकामलयोद्भवम् । सामोदरस्थ मलञ्च रजोमृद्गोष्पदस्य च । याऽश्वत्थमूलमृद्गोपीचन्दनं तीर्थमृत्तिका । कुङ्कुमं तुलसीकाष्ठं वैष्णवाभूतमृत्तिका । गोरोचना च कस्तूरी हरिद्रागुरुचन्दनम् । वल्मीकमृत्तिकागन्धं पद्मकं हरिचन्दनम् । गन्धकाष्ठं महानिम्बो यमुनातीरमृत्तिका । गुरुपादरजो वारितुलस्यङ्घ्रिरजो जले । कृत्वा प्रतिदिनं स्नानमेतैर्गन्धमृदादिभिः । चारु यत्तिलकं चाहुः तन्नाम्ना वैष्णवैर्भुवम् । काम्यं नैमित्तिकं नित्यं यत् किञ्चित् कर्म्म नारद ।। वर्णाश्रमाणां तन्नास्ति स्नानान्ते तिलकं विना । कर्म्म वर्णाश्रमाणां स्यात् दैवं पैत्रं न तत्फलम् । स्नानं सन्ध्यां पञ्च यज्ञान् पैत्रं होमादिकर्म्म यः । विना तिलकधारिण्या कुर्य्यात्तन्निष्फलं भवेत्" । इति पद्मोत्तरखण्डम् "वीक्ष्यादर्शे जले वापि यो विदध्यात् प्रयत्नतः । ऊर्द्ध्वपुण्ड्रं महाभाग स याति परमाङ्गतिम्" पाद्मे पातालखण्डे "शिवागमे दीक्षितैस्तु धार्य्यं तिर्य्यक् त्रिपुण्ड्रकम् । विष्णवागमे दीक्षितस्तु ऊर्द्ध्वपुण्ड्रं विधारयेत्" । इति नागोजीभट्टकृतस्मृतसंहिता । पद्मपुराणे उत्तरखण्डे "ललाटे केशवं ध्यायेन्नारायणमथोदरे । वक्षःस्थले माधवन्तु गोविन्दं कण्ठकूपके । विष्णुञ्च दक्षिणे कुक्षौ वामे च मधुसूदनम् । त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके । श्रीधरं वामबाहौ तु हृषीकेशन्तु कन्धरे । पृष्ठे तु पद्मनाभञ्च कट्यां दामोदरं न्यसेत् । तत्प्रक्षालनतोयन्तु वासुदेवेति मूर्द्धनि" । किञ्च "ऊर्द्ध्वपुण्ड्रं ललाटे तु सर्व्वेषां प्रथमं स्मृतम् । ललाटादिक्रमेणैव धारणन्तु विधीयते" इति "एवं न्यासं समाचार्य्य सम्प्रदायानुसारतः । न्यसेत् किरीटमन्त्रञ्च मूर्द्ध्नि सर्व्वार्थसिद्धये" अथ किरीटमन्त्रः "ओम् श्रीकिरीटकेयूरहारमकरकुण्डलचक्रशङ्खगदापद्महस्तपीताम्बरधरश्रीवत्साङ्कितवक्षःस्थलश्रीभूमिसहितस्वात्मज्योतिर्दीप्तिकराय सहस्रादित्यतेजसे नमो नमः" हरिभक्तिविलासे ४विलासः । ऊर्द्ध्वपुण्ड्रशब्दे अधिकं द्रष्टव्यम् । ८ध्रुवकभेदे यथा "पञ्चविंशतिवर्णाङ्घ्रिस्तिलको ध्रुवको भवेत् । इन्द्रवज्रपुटे तावे रसे वीरे शृङ्गारेऽपि वा" सङ्गीतदा० । "मुखे मधुश्रीस्तिलकं प्रकाश्य" कुमा० । तिलकं इव उत्तरपदस्य १०श्रेष्ठे "श्रिय त्रिलोकी तिलकः स एव" । "लोध्रचूर्णतिलकाकृति" माघ । स्वार्थे क । ११तिलकवृक्षे राजनि० । "स तिलकस्तिलकं प्रमदामिव" रघुः ।

**तिलकट** न० तिलस्य रजः कटच् । तिलरजसि ।

**तिलकल्क** पु० तिलस्य कल्कः । १पिण्याके (खलि) अमरः "कषायेण शीतेनोदकमादाय तिलकल्कमधुसर्पिःप्रगाढामौषधयुक्तां वर्त्तिं प्रणिदध्यात्" "तिलकल्कं समधुको घृताक्तो व्रणरोपणः" सुश्रु० ।

**तिलका** स्त्री तिल तिलपुष्पमिव कायति कै—क । हारभेदे जटा० "सगणद्वितयं भवतीह यदा रसवर्णपदा तिलकेति तदा" उक्तलक्षणके द्वादशाक्षरपादके छन्दोभेदे च ।

**तिलकालक** पु० तिल इव कालकः कृष्णः । १देहस्थे २तिल

कारे चिह्ने, २रोगभेदे च अमर "कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात् तान् विद्यात् तिलकालकान्" सुश्रु०।

**तिलकाश्रय** पु० ६त०। ललाटे शब्दार्थक०।

**तिलकिट्ट** न० ६त०। तिलपिण्याके "तिलकिट्टं तु रूक्षं स्यात् ग्लपनं दृष्टिदोषकृत्। विष्टम्भकारणं तद्धि भिषग्भिः परिकीर्त्तितम्" भावप्र०।

**तिलकिन्** त्रि० तिलक+अस्त्यर्थे इनि। तिलकधारिणि "शिखी तिलकी कर्म कुर्य्यात्" स्मृतिनिवन्धे कल्पतरुश्रुति।

**तिलचित्रपत्रक** पु० तिलस्येव चित्रं पत्रमस्य कप्। तैलकन्दे वृक्षभेदे राजनि०।

**तिलचूर्ण** न० ६त०। चूर्णीकृततिले (तिलकुटा) १खाद्यभेदे। २तिलकल्के च राजनि०।

**तिलतण्डुलक** पु० तिलस्य तण्डुल इव कायति कै—क। १आलिङ्गने शब्दमा० आलिङ्गनस्य तिलतण्डुलवत् सर्वे संयुक्तत्वात् तथात्वम्। ६त०। २तिलस्य तण्डुले निस्तुषतिले पु० (माजातिल)।

**तिलतेजा** स्त्री तिल इव तेजयति चुरा० तिज—अच्। लताभेदे "कफजे तिलतेजाह्वा दन्तीस्वर्जिकचित्रका" सुश्रु०

**तिलन्तुद** त्रि० तिलं तुदति तुद—खश् मुम्। तैलिके तिलपीडके। [दर्वीभेदे घृतशब्दे दृश्यम्।

**तिलद्वादशी** स्त्री तिलभोजनादिनियमयुक्ता द्वादशी। द्वा-

**तिलधेनु** स्त्री० तिलनिर्म्मिता धेनुः शा०त०। विधानेन दानार्थं तिलकृतायां धेनौ। तद्विधानं यथा।

"विधानं तिलधेनोस्त्वं ब्रूहि शीघ्रं द्विजोत्तम!। मुनिरुवाच विधानं शृणु तच्चापि गुप्तं नराधिप!। षोडशाढककैर्धेनुश्चतुर्भिर्वत्सको भवेत्। इक्षुदण्डमया पादा दन्ताः पुष्पमया शुभाः। नासा गन्धमयी तस्या जिह्वा गुडमयी तथा। स्थितां कृष्णाजिने धेनुं वस्त्रैश्चाभिर्वेष्टितां शुभाम्। सूत्रेण वासितां कृत्वा पञ्चरत्नसमन्विताम्। सर्वौषधिसमायुक्तां मन्त्रपूतान्तु दापयेत्। अन्नं मे जायतां सद्यः पानं सर्वरसास्तथा। कामं सम्पादयास्माकं तिलधेनुरुपार्ज्जिताम्। गृह्णामि त्वां देवि! भक्त्या कुटुम्बार्थे विशेषतः। कुटुम्बकामं कुरुतां तिलधेनो! नमोऽस्तु ते। एवं विधा नरो दत्त्वा तिलधेनुं नृपोत्तम!। सर्वकामसमाप्तिं च कुरुते नात्र संशयः" प०पु० स्व०ख०।

**तिलपर्ण** पु० तिलस्येव पर्णमस्य। १श्रीवेष्टे वृक्षे राजनि०। २चन्दने न० राजनि०। ६त०। तिलवृक्षस्य ३पत्रे न०।

**तिलपर्णी** स्त्री तिलस्येव पर्णान्यस्याः ङीप्। १रक्तचन्दने। अमर० २नदीभेदे स्त्री शब्दार्थचि०। तिलपर्णीनदी आकारत्वेनास्त्यस्याः अच् गौरा० ङीप्। ३सिह्लके गन्धद्रव्यभेदे स्त्री हेमच०। स्वार्थे क। तिलपर्णिका रक्तचन्दने हेमच०।

**तिलपिञ्ज** पु० पु० निष्फलस्तिलः तिल+पिञ्ज। निष्फलतिले "वक्षोरजुर्नकाण्डस्य यवस्य ते पलाल्या तिलस्य तिलपिञ्ज्या" अथ० २।८।३।

**तिलपुष्पक** पु० तिलस्येव पुष्पमस्य कप्। विभीतकवृक्षे पारस्करनै०। न०। ६त०। २तिलस्य पुष्पे च तत्सादृश्यात् ३नासिकायाम् तन्त्रसा०।

"पद्मं दृष्टा तथा बिम्बं खञ्जनं शिखरन्तथा। चामरं रविबिम्बञ्च तिलपुष्पं सरोरुहम्। त्रिशूलं शीर्षं जम्पा च शतशः शुद्धभावतः। "पद्मं मुखं बिम्बमधरं खञ्जनश्चक्षुः शिखरं मस्तकं चामरं केशं रविबिम्बं सिन्दूरं तिलपुष्पं नासिकां सरोरुहं नाभिं त्रिशूलं त्रिवलीम्"। तन्त्रसार।

**तिलपेज** पु० निष्फलस्तिलः तिल+पेज। निष्फले तिले अम०।

**तिलभार** पु० देशभेदे "तिलभाराः समीराश्च मधुमत्ताः सुकन्दकाः। भा० भी० ६२ अ०।

**तिलमय** त्रि० तिलस्य विकारः तिल+अभक्ष्यायां मयट्। तिलविकारे भक्ष्यायान्तु अण्। तैलमित्येव।

**तिलमयूर** पुंस्त्री० तिलपुष्पचिह्नितः मयूरः शा० त०। (तिलेमयूर) मयूरभेदे त्रिका०। स्त्रियां जातित्वात् ङीष्।

**तिलरस** पु० ६त०। तिलतैले।

**तिलशस्** अव्य० तिलं तिलं तत्परिमितं करोतीति मानार्थत्वात् सोपपदायां कारकार्थे शस्। तिलं तिलं कृत्वेत्येवमाद्यर्थे। "तिलशस्तद्रथं चक्रे साश्वध्वजपताकिनम्" हरिव० १८६ अ०।

**तिलशैल** पु० दानार्थे कल्पिते दशसु अचलेषु अचलभेदे। तिलाचलादयोऽप्यत्र। तिलाचलश्च द्विविधः तिलमयप्रधानमेरुः, धान्यशैलस्य पश्चात् कल्पितः तिलमयविष्कम्भगिरिश्च। तत्र मेरुरूपतिलशैलदानविधिर्यथा

"प्रथमो धान्यशैलः स्यात् द्वितीयो लवणाचलः। गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः। पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः। सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः। राजतो नवमस्तद्वद्दशमः शर्कराचलः। वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः। अयने विषुवे पुण्ये

व्यतीपाते दिनक्षये। शुक्लपक्षे तृतीयायामुपरागे शशिक्षये। विवाहोत्सवयज्ञेषु द्वादश्यामथ वा पुनः। शुक्लाया पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः। धान्यशैलादयो येऽपि देया शास्त्रं विजानता” इत्युपक्रमे। “अतः परं प्रवक्ष्यामि तिलशैलं विधानतः। यत्प्रदानान्नरो याति विष्णुलोकं सनातनम्। उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिः स्मृतः। त्रिभिः कनिष्ठो विप्रेन्द्र! तिलशैलः प्रकीर्त्तितः। पूर्ववच्चापरान् सर्वान् विष्कम्भानभितो गिरीन्। दानमन्त्रान् प्रवक्ष्यामि यथावन्मुनिपुङ्गव!। यस्मान्मधुवधे विष्णोर्देहस्वेदसमुद्भवाः। तिला कुशाश्च माषाश्च तस्माच्छन्नो भवत्विह। हव्ये कव्ये च यस्माच्च तिला एवाभिरक्षणम्। भवादुद्धर शैलेन्द्र! तिलाचल! नमोऽस्तु ते”। इत्यामन्त्र्य च यो दद्यात् तिलाचलमनुत्तमम्। स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम्। दीर्घायुष्यं समाप्नोति पुत्रपौत्रैश्च मोदते। पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत्” मत्स्यपु० ८६ अ०। विष्कम्भरूपतिलाचलस्तु यथा। “सर्वांस्तिलाचलमनेकसुगन्धिपुष्पसौवर्णपिप्पलहिरण्मयहंसयुक्तम्। आकारयेद्रजतपुष्पवनेन तद्वद्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे” मत्स्यपु० ८२ अ०।

**तिलस्नेह** पु० ६त०। तैले शब्दार्थक०। [राजनि०।

**तिलाङ्कितदल** पु० तिलेनाङ्कितं दलमस्य। तैलकन्दे

**तिलान्न** न०तिलमिश्रितमन्नं शा०त०। तिलमिश्रितेऽन्ने कृशरे हेम०। [जीरके शब्दार्थचि०।

**तिलापत्या** स्त्री तिलस्येव क्षुद्रः अपत्यं बीजमस्याः। कृष्ण

**तिलित्स** पु० तैलं तिलिर्गतिस्तं त्सरति छद्मना गच्छति त्सर–ड। अजगरे सर्पभेदे अमरः स्त्रियां जातित्वात् ङीष्

**तिलोत्तमा** स्त्री अप्सरोभेदे“तिलोत्तमा नाम पुरा ब्रह्मणो योषिदुत्तमा। तिलं तिलं समुद्धृत्य रत्नानां निर्मिता शुभा”भा०अनु० १४१अ०। तस्यास्तथानामकरणं यथा “तिलं तिलं समानीय रत्नानां यद्विनिर्मिता। तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः” भा० आ० २११ अ०।

**तिलोदक** न० तिलमिश्रितमुदकम् शा० त०। तिलमिश्रिते उदके “तेषां दत्वा तु हस्तेषु सपवित्रं तिलोदकम्” मनुः “अक्षि भिक्षां तथाऽर्घ्यं च पितॄणाञ्च तिलोदकम्” भा० अनु० १२६ अ०। “आपाययिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः” वायुपु०।

**नतिलौदन** पुंन० तिलमिश्रित ओदनः। कृशरे हारा०।

“दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा” शत०ब्रा० १४।८।४।१६। “तिलमिश्रमोदनं कृशरमित्यर्थः” भा०।

**तिल्पिञ्ज** पु० तिल+पिञ्ज–बेदे डिच्च। बन्ध्यतिले “इमौ तौ जरतीमिव तिल्पिञ्जं दण्डनं नडम्” अथ० १२।२।५४।

**तिल्य** न०तिलानां भवनं क्षेत्रम् यत्।१तिलभवनयोग्ये क्षेत्रे तिलाय हितं यत्। २तिलहिते त्रि०।

**तिल्ल** गतौ भ्वा०पर सक०सेट्। तिल्लति अतिल्लीत्। तितिल्ल।

**तिल्व** पु० तिल–वन् “उल्वादयश्चेति” उणा० नि०। १लोध्रे अमरः २श्वेतलोध्रे सुभूति ३रक्तलोध्रे क्षीरस्वामी स्वार्थे क। तत्रार्थे राजनि०। “न्यग्रोधाश्वत्थतिल्वकहरिद्रुस्फूर्जविभीतकधावनानामभ्यस्य” कात्या०श्रौ०२१।३।२०“तिल्वकः तिरीटः”कर्कः।

**तिल्विल** त्रि०तिल–बाहुलकात् किलच् तिलाः स्निग्धा इवाभूमिर्यस्मिन्। देवयजने स्थाने “भद्रे क्षेत्रे निमिता तिल्विले वा” ऋ०५।६२।७ “हे व तिष्ठ निमिता तिल्विलास्ताभिरावर्तीं मध्ये पोषस्य तिष्ठन्तीम्” अथ० रुट० २।८८। “तिल्विलायध्वमुपसो विभातीर्यूय पात स्वस्तिभिः सदा नः” ऋ० ७।७८।५।“तिल्विलायध्वं तिलुरिवा भूमिर्यस्य तत् कुरुत” भा०।

**तिष्ठद्गु** अव्य०तिष्ठन्त्यो गावो यस्मिन् काले तिष्ठद्गुप्रभृतित्वात् नि० अव्ययीभाव। दोहनकाले “आ तिष्ठद्गु जपन् सन्ध्या प्रक्रान्तामायतीगवम्” भट्टिः।

**तिष्ठद्गुप्रभृति** न० अव्ययीभावे नियातनात्तशब्दसमूहे स च गण पा गणसू उक्तो यथा
“तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम्। संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम्। दुःषमम् निःषमम् अपसमम् आयतीसमम् प्रोढम् पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् अपरदक्षिणम् सम्प्रति असम्प्रति इच्प्रत्यय समासान्तः”।

**तिष्ठद्धोम** स्त्री तिष्ठता होमो यत्र। यजतिरूपे यागभेदे “यजतिजुहोतीनां को विशेषः” कात्या०श्रौ० १।२।५ “यजतीनां यागानां जुहोतीनां होमानां च परस्परं को विशेषः को भेद इति प्रश्न। तत्र यजतीनां विशेषमाह” कर्कः “तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनुवाक्यावन्तो यजतय इ। उच्यन्त इति शेष।“तिष्ठता

होमो येषु ते तिष्ठद्धोमा वषट्कारेण प्रदान येषु ते वषट्कारप्रदाना तथा याज्यावन्त पुरोऽनुवाक्यावन्तश्च ये ते यजतय उच्यन्ते" कर्क ।

**तिष्य** पु०, तुष्यन्त्यस्मिन् तुष-क्यप् नि०। १पुष्यनक्षत्रे । त्विष- दीप्तौ यक् अघ्न्यादि०नि०। २कलियुगे न०। तिष्ये नक्षत्रे जात अण् तस्य लुक् । ३पुष्यनक्षत्रजाते त्रि० । तिष्येण नक्षत्रयुक्तया पौर्णमास्याम् अच् । ४पौषमासे शब्दरत्ना० स्वार्थे क । पौषमासे शब्दा० । तत्र पुष्यनक्षत्रे ।
"यदा सूर्यश्च चन्द्रश्च तथा तिष्यबृहस्पती । एक राशौ समेष्यन्ति प्रपत्स्यति तदा कृतम्"। भा० व० १९० ६६ श्लो० कलियुगे "ततस्तिष्ये ऽथ सम्प्राप्ते युगे कलिपुर- स्कृत । एकपादस्थितो धर्मो यत्र तिष्ये भविष्यति" भा० शा० ३४२ अ०। "सत्पथप्रदायप्रथनाय तिष्ये शिष्यैश्चतुर्भिः सह योऽवतीर्णः । उक्तो हस्तवृषभूमतन्त्रराजे श्रीशङ्करा- चार्यगुरु समीडे । "तपस्ताद्दक् क्व वा तिष्ये तिष्ये योग क्व तादृश । क्व वा व्रत क्व वा दान तिष्ये मोच स्तत कुत "काशीख०३५ अ०।५।माङ्गल्ये त्रि०। [शब्दर० ।

**तिष्यपुष्पा** स्त्री० तिष्यं माङ्गल्य पुष्प यस्या । आमलक्याम्

**तिष्यफला** स्त्री तिष्य माङ्गल्य फलमस्या । आमलक्याम् अमर । "नित्यमामलके लक्ष्मी" स्मृतेस्तत्फलस्य मङ्गलहेतुत्वात् तथात्वम् । [क्याम् शब्दरत्ना०।

**तिष्या** स्त्री तिष्य मङ्गल हेतुत्वेनास्त्यस्या अच् । आमल-

**तिसृधन्व** न० तिसृभिरिषुभिर्युत धन्व धनुः वेदे अच् समा- सान्त अविभक्तावपि वेदे तिस्रादेश । तिसृभिरिषु भिर्युक्ते धनुषि "तिसृधन्व दक्षिणा ददाति" शत० ब्रा० ५।३।५।१० । "स तिसृधन्वमादायापचक्राम" १४।१।१।७ । [४सङ्ग्रामे च सज्जिधार'।

**तिहन्** पु०तह-अर्दने कनिन् नि०। १व्याधौ २व्रीहौ ३धनुषि

**तीक** गतौ भ्वा० पर० सक० सेट् । तीकते अतीकिष्ट तितीके अदित् अतितीकत् त । शब्दस्तोमे याचनार्थ तीकि मासिदित्वो पा०गणपाठे तस्य गत्यर्थतयैवोक्ते ।

**तीक्ष्ण** न०तिज-क्स्न दीर्घश्च । १खरे अर्थे २विषे ३लौहभेदे (इस्पात)४युद्धे अमर ५मरणे ६यस्त्रे ७शीघ्रे इति सारसु० । ८सामुद्रलवणे ९शुष्कके मेदि० १०यवक्षारे राजनि० । ११मरके हेमच० । १२तीक्ष्णतायुक्ते त्रि० "तीक्ष्णश्चैव मृदुश्च स्यात् कार्यं वीक्ष्य महीपतिः" मनु ।"तीक्ष्णा नारुन्तुदा बुद्धि कर्म शान्त प्रतापवत्" माघ "शक्ति चोभयतस्तीक्ष्णाम्" मनु । "प्रतिभायां

क्षीरके कटाक्षे दुर्वाक्ये नखे लवणे रविकरे" इति कविकल्पलताया तीक्ष्णत्वमुक्तम् ।
१३यमक्षारे पु० मेदि० । १४श्वेतकुशे १५ कुन्दुरुके राजनि० । नक्षत्रविशेषगणे न० यथा "शक्राहिशिवम्- लाश्च मन्दाहस्तीक्ष्णदारुणे"ज्यो तत्म् ।१६आत्मत्यागिनि त्रि० मेदि० ।१७निरालस्ये सुबुद्धौ त्रि० धरणी० १८यो- गिनि पु० अजयपाल । [राजनि० ।

**तीक्ष्णक** पु० तीक्ष्ण+सञ्ज्ञाया कन् । १गौरसर्षपे, २मुष्कके च

**तीक्ष्णकण्टक** पु० तीक्ष्ण कण्टकोऽस्य । १धुस्तूरे २बर्बुरे, ३इङ्गुदीवृक्षे, ४वंशे च जटाध०।५कन्थारीवृक्षे स्त्री टाप । राजनि० ६तीक्ष्णकण्टकयुक्ते त्रि० कर्म० । ७तीक्ष्णे कण्टके पु न० ।

**तीक्ष्णकन्द** पु० तीक्ष्ण कन्दो मूलमस्य । पलाण्डौ राजनि०

**तीक्ष्णकर्म्मन्** त्रि० तीक्ष्ण कर्मास्य । १तीव्रकार्यकरे आय.- स्थूलिके त्रिका० । कर्म० । २तीव्रे कर्म्मणि न० ।

**तीक्ष्णकल्क** पु० तीक्ष्ण कल्कोऽस्य । तुम्बुरुवृक्षे राजनि० ।

**तीक्ष्णकान्ता** स्त्री नि०कर्म०। तारादेव्याम् उग्रतारायाम् । "पीठे दिक्करवासिन्या द्विरूपा वसते शिवा । तीक्ष्ण- कान्ताह्वया त्वेका योग्रतारा प्रकीर्तिता" । "पुरा त्वनि- तकान्ताख्या या श्रीमङ्गलचण्डिका । तस्यास्तु सतत रूप तीक्ष्णकान्ताह्वय नृप । । कृष्णा लम्बोदरी या तु वा स्यादेकजटा शिवा । तेन रूपेण तां देवीं सतत परिपूजयेत्" कालि०पु० ८२ अ० ।

**तीक्ष्णगन्ध** पु० तीक्ष्ण गन्धोऽस्य । १शोभाञ्जनवृक्षे जटा० । वा कप् । स्वार्थे राजनि० । २रक्ततुलस्याम् शब्दा० कुन्दरुनामगन्धद्रव्ये अमर ।

**तीक्ष्णगन्धा** स्त्री तीक्ष्ण गन्धोऽस्याः । १वचायां, २राजि- कायाम्, ३कन्थार्यां, राजनि०। ५जीवन्त्याञ्च शब्दच० । ६श्वेतवचायां मेदि० ७सूक्ष्मैलायाम्,रत्नमा० [रत्नमा०।

**तीक्ष्णतण्डुला** स्त्री० तीक्ष्णास्तण्डुला यस्याः । पिप्पल्याम्

**तीक्ष्णतैल** न० तीक्ष्णस्य स्नेह तैलम् । १स्नुहीक्षीरे, २ध- र्जरसे, ३मद्ये च शब्दरत्ना० ।

**तीक्ष्णदंष्ट्र** पु स्त्री तीक्ष्णा दंष्ट्रास्य । व्याघ्रे राजनि० स्त्रियां ङीप् कर्म० । तीक्ष्णायां दंष्ट्रायाम् स्त्री । "सुतीक्ष्ण- दंष्ट्रा समाच शुभा" ह० स० ६७ अ० ।

**तीक्ष्णधार** पु० तीक्ष्णा धारास्य । १खड्गे "असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासद । श्रीगर्भो विजयश्चैव धर्म- पालो नमोऽस्तु ते । इत्यष्टौ तव नामानि" खड्गपूजा-

मन्त्र । ७तीक्ष्णधारायुक्तमात्रे त्रि० । "नवनीत हृदय ब्राह्मणस्य वाचि क्षुरो निशितस्तीक्ष्णधारः । तदुभय मेतद्विपरीत क्षत्रियस्य वाङ्नवनीत हृदय तीक्ष्णधार मिति" भा० आदि० ३ अ० ।

तीक्ष्णपत्र पु० तीक्ष्णानि पत्राण्यस्य । १तुम्बुरुवृक्षे राजनि० । २तीक्ष्णपत्रयुक्ते त्रि० कर्म्म० । ३तीक्ष्णे पत्रे न० ।

तीक्ष्णपुष्प न० तीक्ष्णं पुष्पमस्य । १लवङ्गे । २केतक्यां स्त्री टाप् । राजनि० । ३तिग्मपुष्पयुक्ते त्रि० । कर्म्म० । ४तिग्मपुष्पे न० ।

तीक्ष्णफल पु० तीक्ष्णं फलमस्य । १तुम्बुरुवृक्षे राजनि० । २तिग्मफलयुक्ते त्रि० कर्म्म० । ३तिग्मे फले न० ।

तीक्ष्णमूल पु० तीक्ष्णं मूलमस्य । १शोभाञ्जने २कुलञ्जने च राजनि० । ३तिग्ममूलके त्रि० । कर्म्म० । ४तिग्मे मूले न० ।

तीक्ष्णरश्मि पु० तीक्ष्णा रश्मयोऽस्य । तिग्मांशौ सूर्य्ये "वरतम्रज्वलित तेजस्तीक्ष्णरश्मिर्विशोषयन्" हरिव ७१० अ० । २तिग्मरश्मियुक्ते त्रि० । कर्म० । ३तिग्मे रश्मौ पु० ।

तीक्ष्णरस पु० तीक्ष्णो रसोऽस्य । १यवक्षारे रत्नमा० । २तिग्मरसयुक्ते त्रि० । कर्म्म० । ३तिग्मे रसे पु० ।

तीक्ष्णलौह न० नि० कर्म्म० । (इस्पात) लौहभेदे ।

तीक्ष्णशूक पु तीक्ष्णं शूकोऽस्य यस्य । १यवे । २खरशूक युक्ते त्रि० । कर्म्म० । ३खरे शूके पु न० ।

तीक्ष्णसारा स्त्री तीक्ष्णः कठिन सारोऽस्याः । १शिंशपायाम (शिशु) राजनि० । २तिग्मसारयुक्ते त्रि० कर्म्म० । ३खरे सारे पु न० ।

तीक्ष्णा स्त्री तीक्ष्ण+टाप् । १वचायां २सर्पकङ्कालिकायाम् रत्नमा० ३कपिकच्छ्वां ४महाज्योतिष्मत्याम् ५अत्यम्लपर्ण्याम् जटा० । ६तारादेव्याम् च । उग्रतारोपक्रमे "हे भगवत्येकजटे विद्महे वदमन्तत । विकटदंष्ट्रे धीमहि तन्नस्तारा प्रचोदयात् । एषा तु तीक्ष्णा गायत्री पीठदेव्याः प्रकीर्त्तिता" । "पानेषु मदिरा शस्ता नरो बलिम् पार्थिव ! । भोटको नारिकेलस्य मांस व्यञ्जनमेवच । नैवेद्येषु प्रियकरास्तीक्ष्णायाः परिकीर्त्तिता ॥ कालि०पु० ८२ अ० ।

तीक्ष्णायस न० नि० कर्म्म० अच् समा० । लौहभेदे (इस्पात) राजनि० । [तितीम ।

तीम क्लेदने दिवा० पर० अक० सेट् । तीम्यति अतीमीत् ।

तीर पारगतौ कर्म्मसमाप्तौ च अद० चुरा० उभ० अक० सेट् । तीरयति ते अतितीरत् त ।

तीर न० तीर–अच् । नद्यादेः १कूले । २सीसके पु० अमर । ३वाणे पु० त्रिका० । ४त्रपुणि पु० मेदि० ।
"मार्कण्डेय यावत् गर्भस्तीरमुच्यते ; भाद्रकृष्णचतुर्दश्या यावदाक्रमते जलम् । तावद्गर्भं विजानीयात् तदूर्ध्वं तीरमुच्यते" प्रा० त० उक्ते ६गङ्गा कूलभेदे न० "गङ्गातीरतरङ्गशीतलजले स्नात्वा हरो नार्चित" मा० ट० । "अनूपतीरं मुनिसन्निवेशे" रघु । "अन्यक्षेत्रेषु चोत्रेषु सतीर्थेषु वा हि" मनुः ।

तीरग्रह पु० देशभेदे "तीरग्रहा सरसेना ईजका कन्यकागुणाः" भा० भी० ६ अ० जनपदोक्तौ ।

तीरभुक्ति पु० (त्रिहोत) देशभेदे त्रिका० ।

तीरु पु० तृ–वा० रु । शिवे "नमस्तेऽभीरुरूपाय तीरुभीरुहराय च" हरिव० २७८ अ० । शिवस्तुतौ ।

तीर्ण त्रि० तृ–क्त । १ उत्तीर्णे, २अभिभूते, ३व्याप्ते च । "तीर्णो हि तदा भवति" श्रुति "तीर्णो पूर्णो कति न सरितो लङ्घिता केन शैला नाक्रान्ता वा कति वनभुवः क्रूरसत्त्वारघोराः । पापैरेतैः किमिव दुरितं कारितो नास्मि कष्टं यद्दृष्टास्ते धनमदमदोन्मत्तवक्त्रा दुरीशाः" ।

तीर्णपदी स्त्री तरते कर्त्तरि क्त । तीर्णौ पादौ मूलमस्याः अन्त्यलोप कुम्भपद्या० ङीपि पद्भाव । तालमूल्याम् शब्दच० ।

तीर्णा स्त्री प्रतिज्ञाप्यङ्घ्रिविशेषे यथा "यस्मिन् इसे कर्णे कर्णे मेदैरष्टे सा स्यात् तीर्णा' अस्या अन्येष्वपि सप्ता । "स्मौ चेत् कन्येति" लक्षणात् ।

तीर्थ न० तृ–थक् । १शास्त्रे २यज्ञे ३क्षेत्रे ४उपाये ५नारीरजसि ६अवतारे ७ऋषिजुष्टजले ८पात्रे ९उपाध्याये १०मन्त्रिणि च मेदि० । ११योनौ १२दर्शने १३घट्टे हेमच० । १४विप्रे १५ आगमे १६निदाने १७वह्नौ च शब्दरत्ना० । तीर्थं त्रिविधम् जङ्गम१ मानस२ स्थावर३ च । तथा हि "ब्राह्मणा जङ्गम तीर्थं निर्मलं सार्वकामिकम् । येषां वाक्योदकेनैव शुद्ध्यन्ति मलिनाजनाः । काशि खण्ड । शृणु तीर्थानि गदतो मानसानि ममानघे ! । येषु सम्यक् नरः स्नात्वा प्रयाति परमां गतिम् । सत्य तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदयातीर्थं सर्वत्रार्जवमेव च । दान तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते । ब्रह्मचर्य्यं पर तीर्थं तीर्थञ्च प्रियवादिता । ज्ञान तीर्थं धृतिस्तीर्थं पुण्य तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा । एतत्ते कथित देवि ! मानस तीर्थलक्षणम् ।

भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु । यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः । तथा पृथिव्यामुद्देशाः केचित् पुण्यतमाः स्मृताः । प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा । परिग्रहात् मुनीनाञ्च तीर्थानां पुण्यता स्मृता । तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः । उभयेष्वपि यः स्नाति स याति परमां गतिम् ॥" तीर्थभेदा ब्रह्मपुराणे उक्ता यथा,—

मुनय ऊचुः । "पृथिव्यां यानि तीर्थानि वनान्यायतनानि च । वक्तुमर्हसि धर्म्मज्ञ ! श्रोतुं नो वर्त्तते मनः । लोमहर्षण उवाच । यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते । मनो विशुद्धं पुरुषस्य तीर्थं वाचांयमश्चेन्द्रियनिग्रहश्च । एतानि तीर्थानि शरीरजानि स्वर्गस्य मार्गं प्रतिबोधयन्ति । चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति । शतशोऽथ जलैर्धौतं सुराभाण्डमिवाशुचि । न तीर्थानि न दानानि न व्रतानि न चाश्रमाः । दुष्टाशयं दम्भरुचिं पुनन्ति व्युत्थितेन्द्रियम् । इन्द्रियाणि वशे कृत्वा यत्र यत्र वसेन्नरः । तत्र तत्र कुरुक्षेत्रं प्रयागं पुष्करं तथा । तस्माच्छृणुध्वं वक्ष्यामि तीर्थान्यायतनानि च । संक्षेपेण मुनिश्रेष्ठाः । पृथिव्यां यानि कानि च । विस्तरेण न शक्यन्ते वक्तुं वर्षशतैरपि । प्रथमं पुष्करं तीर्थं नैमिषारण्यमेव च । प्रयागञ्च प्रवक्ष्यामि धर्म्मारण्यं द्विजोत्तमाः ॥ धेनुकं चम्पकारण्यं सैन्धवारण्यमेव च । गया प्रयागं श्रीतीर्थं दिव्यं कनखलन्तथा । भृगुतुङ्गं हिरण्याक्षं भीमारण्यं कुशस्थली । लोहार्गलं सकेदारं मन्दरारण्यमेव च । महाबलं कुरुक्षेत्रं सर्व्वपापहरन्तथा । रूपतीर्थं शूकरञ्च चक्रतीर्थं महाफलम् । योगतीर्थं सोमतीर्थं तीर्थं शाखोटकं तथा । तीर्थं कोकामुखं पुण्यं बदरीशैलमेव च । सोमतीर्थं तुङ्गकूटं तीर्थं स्कन्दाश्रमन्तथा । स्वर्णप्रभं रामतीर्थं सप्तसामुद्रकं तथा । धर्म्मोद्भवं कोटितीर्थं तीर्थञ्चाघप्रणाशनम् । गङ्गाद्वारं पञ्चकूटं मध्यकेशवमेव च । चक्रप्रभं मतङ्गञ्च कुशदण्डञ्च विश्रुतम् । दंष्ट्राकुण्डं विष्णुतीर्थं सार्व्वकामिकमेव च । तीर्थं सुमलिनञ्चैव बदरीशप्रभं तथा । ब्रह्मकुण्डं वह्निकुण्डं तीर्थं सत्यपदन्तथा । चतुःस्रोतस्तथा शृङ्गं शैलं द्वादशधारकम् । मानसं स्थूलशृङ्गञ्च स्थूलदण्डं तथोर्व्वशी । लोकपाली मनुवरं सोमाद्रिशैलमेव च । सदाप्रभं मेरुकुण्डं तीर्थं सोमाभिषेचनम् । महाशोभं कोचवकं पञ्चधारं त्रिधारकम् । सप्तधारैकतीर्थञ्च तीर्थञ्चामरकण्टकम् । शालग्रामं चक्रतीर्थं कोटिद्रुममनुत्तमम् । बिन्दुप्रभं देवहृदं तीर्थं विष्णुप्रभन्तथा । शङ्खप्रभं टारुकुण्डं तीर्थं वज्रायुधं तथा । अग्निप्रभं सुपुन्नागं देवप्रभमनुत्तमम् । विद्याधरं सगन्धर्व्वं श्रीतीर्थं ब्रह्मणा कृतम् । तीर्थञ्च लोकपालाख्यं पुण्यं पिण्डारकं तथा । वस्त्रापदं दारुवनं छायारोहणमेव च । वटापटं भद्रवटं कौशाम्बी च दिवाकरम् । द्वीपं सरस्वती चैव विजयं कामदन्तथा । शारवं गोप्रतारञ्च गोचरं वटमूलकम् । स्नानकुण्डं प्रयागञ्च गुह्यं विष्णुपदन्तथा । कन्याश्रमं विष्णुपदं जम्बुमार्गं तथोत्तमम् । गभस्तितीर्थञ्च तथा ययातिपतनं शुचि । कोटितीर्थं भद्रवटं महाकालवनं तथा । नर्म्मदातीर्थपरमं तीर्थं वर्षं तथार्ब्बुदम् । पिङ्गतीर्थं वाशिष्ठं तीर्थञ्च प्रियसङ्गमम् । तीर्थं दौवारिकं नाम तथा पिञ्जरकं शुभम् । ऋषितीर्थं ब्रह्मकुण्डं वसुतीर्थं कुमारिका । शक्रतीर्थं शापनदं रेणुकातीर्थमेव च । पैतामहञ्च विमलं रुद्रपादं तथोत्तरम् । मणिमन्तञ्च कामाख्यं कृष्णतीर्थं कुमारिणम् । यजनं याजनञ्चैव तथैव ब्रह्मवालुकम् । पुष्पाभ्यासं पुण्डरीकं मणिपूरं तथोत्तरम् । दीर्घसत्रं हयपदं तीर्थञ्चानशनन्तथा । गङ्गोद्भेदं शिवोद्भेदं नर्म्मदोद्भेदमेव च । वज्रकोटिं शङ्कुमानं तीर्थं शक्रावमानितम् । समन्तपञ्चकं तीर्थं ब्रह्मतीर्थं सुदर्शनम् । सततं पृथिवीतीर्थं पञ्चप्लवपृथूदकौ । दशाश्वमेधिकं तीर्थं सर्पिर्दं विषयान्तिकम् । कोटितीर्थं पञ्चनदं वाराहं यक्षिणीहृदम् । पुण्डरीकं सोमतीर्थं मुञ्जवटं तथोत्तमम् । बदरीवनमासीनं रत्नमूलकमेव च । लोकद्वारं पञ्चतीर्थं कपिलातीर्थमेव च । सूर्य्यतीर्थं शङ्खिनी च गवाभवनमेव च । तीर्थञ्च यक्षराजस्य ब्रह्मावर्त्तं सुतीर्थकम् । कामेश्वरं मातृतीर्थं तीर्थं शीतवनं तथा । स्वानलोमापनञ्चैव माससंसरकं तथा । दशाश्वमेधं केदारं ब्रह्मोदुम्बरमेव च । सप्तर्षिकुण्डञ्च तथा तीर्थं देव्याः सुजम्बुकम् । ईहास्पदं कोटिकूटं किन्दानं किञ्जपं तथा । कारण्डवञ्च विन्ध्यञ्च त्रिविष्टपमथापरम् । पाणिखातं मिश्रकञ्च मधुवटमनोजवौ । कौशिकी देवतीर्थञ्च तीर्थञ्च ऋणमोचनम् । दिव्यञ्च तृणमूलाख्यं तीर्थं विष्णुपदन्तथा ।

श्रीकण्ठं शान्तितीर्थञ्च नैमिषेयञ्च विश्रुतम् । ब्रह्मण्याम सोमतीर्थं कन्यातीर्थं तथोत्तरम् । ब्रह्मतीर्थं मन स्तीर्थं तीर्थञ्चैवावमन्तथा । योगन्धिकवनञ्चैव भक्ति तीर्थं सरस्वती । ईशानतीर्थं प्रवरं पावनं पाञ्चयज्ञिकम् । त्रिशूलधारा माहेन्द्रं देवस्थानं कृतालयम् । शाकम्भरी देवतीर्थं स्वर्णाख्यं कालिय ह्रदम् । क्षीरेश्वरं विरूपाक्षं भृगुतीर्थं कुशोद्भवम् । ब्रह्मतीर्थं ब्रह्मयोनिं नीलपर्वतमेव च । कुब्जाम्रकं भद्रवटं वशिष्ठपदमेव च । धूमावर्त्तं तथा मेक पाद्य कपिलस्य यत् । स्वर्गद्वारं प्रजाद्वारं कालिकाश्रममेव च । रुद्रावर्त्तं सुगन्धाश्व कपिलाश्रममेव च । भद्रकर्णह्रदश्चैव शङ्कुकर्णह्रदं तथा । सप्तसारस्वतञ्चैव तीर्थं औशनसं तथा । कपालमोचनञ्चैव नरकञ्चैव काम्यकम् । तत्र चातुर्हिकञ्चैव शतिकञ्च सहस्रिकम् । रेणुकं पञ्चवटकं विमोचनमथौजसम् । विश्वेश्वरं वामनकं कृष्णं नारायणाश्रमम् । गङ्गाह्रदं वटञ्चैव बदरीपाचनन्तथा । ऐन्द्रमार्गमेकरात्रं क्षीरिकावासमेव च । सोमतीर्थं दारवञ्च स्नानतीर्थञ्च भोद्विजाः ! । कन्याश्रमं सन्निहितं कोटितीर्थञ्च पुष्करी । कोटितीर्थस्थलीञ्चैव भद्रकालीह्रदन्तथा । अरुन्धतीवनञ्चैव ब्रह्मावर्त्तन्तथोत्तमम् । अश्ववेदी कुब्जकञ्च यमुनाप्रभवं तथा । वीरप्रमोक्षं सिन्धूत्थं शमीकुल्या सकल्तिका । उर्वशीक्रमणञ्चैव मायाविद्योद्भवन्तथा । महाश्रमो वेतसिका रूप सुन्दरिकाश्रमम् । ब्रह्मतीर्थन्तु वैशाख गङ्गोद्भेद सरस्वती । अरुणोदं तथा चान्द्रं शक्रतीर्थं सबालुकम् । तीर्थञ्चैवाविलग्नाख्यं नीलकण्ठह्रदन्तथा । स्वर्गद्वारं किष्किन्धिका तीर्थकोटिस्तथैव च । पिशाचमोचनञ्चैव सुभद्राह्रदमेव च । कुण्डं विमलदं तस्यां तीर्थं चण्डेश्वरस्य च । ज्येष्ठस्थानह्रदञ्चैव हरिकेशवनं तथा । अजामुखवनञ्चैव घण्टाकर्णह्रदन्तथा । पुण्डरीकह्रदञ्चैव वापीकर्कोटकन्तथा । कुण्डं धर्मरिकायाश्च श्यामाकं पञ्चपुण्यदम् । लक्ष्मणस्याश्च कुण्डञ्च विनायकह्रदन्तथा । कूपं विह्वलञ्चैव पुण्यं ब्रह्मसरस्तथा । रुद्रावासं तथा तीर्थं नागतीर्थं सुलोमकम् । भक्तितीर्थं महातीर्थं श्रोणा चैव महानदी । दिव्यं ब्रह्मसरः पुण्यं गयाशीर्षाक्षयं वटम् । दक्षिणञ्चोत्तरञ्चैव गोमयं रूपशान्तिकम् । कपिलह्रदं स्कन्दकुण्डं सावित्रीह्रदमेव च । प्रभासनं शीतवनं योनिद्वारञ्च धेनुकम् । रम्यकं कोकिलाख्यञ्च मतङ्गह्रदमेव च । पितृकूपं रुद्रतीर्थं शक्रतीर्थं सुमालिनम् । ब्रह्मस्थानं सप्तकुण्डं मणिरत्नह्रदन्तथा । उद्दालकाश्रमञ्चैव शुद्धस्याहुटमेव च । तीर्थं जनककूपाख्यं वैश्यं विनशनन्तथा । चाक्षु विनाशतीर्थञ्च धारा माहेश्वरी तथा । देवपुष्करिणी रम्या पर्यङ्ककूपमेव च । जातिस्मरं वामनकं वटेश्वरह्रदन्तथा । कौशाख्यं भरतञ्चैव तीर्थं ज्येष्ठालिका तथा । विश्वेश्वरं कलशगं कन्यासायुज्यमेव च । वाराहकं कोटितीर्थं कुमारं सर्वतीर्थकम् । वीराश्रमं ब्रह्मसरो वीरवीरा च तापिनी । कुमारधारा श्रीधारा गौरीशिखरमेव च । कुम्भकर्णह्रदञ्चैव कौशिकीह्रदमेव च । धर्मतीर्थं कामतीर्थं तीर्थमुद्दालकं तथा । टण्डा शिवाशिनी तीर्थं तीर्थञ्चैव नरेभिका । सन्ध्यातीर्थं कारतोयं कपिला लोहितार्णवम् । शोणोद्भवं वंशगुल्मं ऋषभं कालतीर्थकम् । पुण्यावतीह्रदं तीर्थं तीर्थं बदरिकाश्रमम् । रामतीर्थं पितृवनं विरजातीर्थमेव च । मार्कण्डेयवनञ्चैव कृष्णतीर्थं तथा वटम् । भूत स्वरूप प्रवरमिन्द्रद्युम्नसरश्च यत् । सानुगर्त्तं समाहेन्द्रं श्रीतीर्थं श्रीवनन्तथा । इषुतीर्थं वार्षभञ्च कावेरीतीर्थमेव च । कन्यातीर्थञ्च गोतीर्थं गोमतीस्नानमेव च । सदर्श-स्नापिनी स्नानं सप्तगोदावरीह्रदम् । बदरीह्रदमन्यञ्च ब्रह्मण्याविकर्त्तनम् । जातिह्रदं वेदह्रदं कुशप्रवणमेव च । सर्वदेवव्रतञ्चैव कन्याश्रमह्रदन्तथा । तथान्यत् वालिखिल्यानां सप्तर्षीणां तथा परम् । तथान्यच्च महर्षीणामसाचिउमह्रदन्तथा । तीर्थेष्वेतेषु विधिवत् सम्यक् श्रद्धासमन्वित । स्नानं करोति यो मर्त्यः सर्वपापैः प्रमुच्यते । अथवा देवतास्थानं स्थित्वा च रजनीत्रयम् । पृथक् पृथक् फलं तेषु प्रतितिष्ठ च भो द्विजाः ॥ प्राप्नोति हयमेधस्य फलं प्राप्नोत्यसंशयम् । यश्चेदं शृणुयान्नित्यं तीर्थमाहात्म्यमुत्तमम् । पठेच्च श्रावयेद्वापि सर्वपापैः प्रमुच्यते” ।

पद्मपुराणे श्राद्धे प्रशस्ततीर्थानि उक्तानि यथा

भीष्म उवाच । “कस्मिन् वासरभागे तु श्राद्धं श्राद्धी समाचरेत् । तीर्थेषु केषु वै श्राद्धं कृतं बहुफलं भवेत् । पुलस्त्य उवाच । तीर्थन्तु पुष्करं नाम पुण्यं श्रेष्ठतमं स्मृतम् । सर्वेषां द्विजमुख्यानां मनोरथं स्मृतं तथा । यत्र देव कृत सर्वमनन्त सनिरम्रगोष्ठ ।

पितृणां वल्लभं नित्यन्तथोथा परम प्रियम् । नन्द्यु-ज्ज्वलिता तद्वत्तीर्थं मायापुरी तथा । शुभं मित्रपद राजन्नत केदारमुत्तमम् । गङ्गासागरमित्याहुः सर्व-तीर्थमयं शुभम् । तीर्थं ब्रह्मसरस्तद्वत् शतद्रुः सलिला-ह्रदः । तीर्थन्तु नैमिषञ्चैव सर्वतीर्थफलप्रदम् । गङ्गोद्भे-दस्तु गोमत्यां यत्रोद्भूत सनातन । तथा यज्ञवराहस्तु देवदेवश्च शूलधृक् । यत्र तत् काञ्चनद्वारमष्टादशभुजो-हर । नेमिस्तु धर्मचक्रस्य शीर्णा यत्राभवत् पुरा । तदेतन्नैमिषारण्यं सर्वतीर्थनिषेवितम् । देवदेवस्य तत्रापि वराहस्य च दर्शनम् । य प्रयाति स पूतात्मा नारायणपुरं व्रजेत् । कोकामुखं परं तीर्थं ब्रह्मणोऽव्यक्त-जन्मन । पुष्करारण्यमस्योऽसौ यत्र देव पितामह । विरिञ्चिदर्शनं श्रेष्ठं त्वपवर्गफलप्रदम् । कृतं तेन महापुण्यं सर्वपापनिषूदनम् । यत्राद्यो नरसिंहस्तु स्वयमेव जनार्द्दनः । तीर्थमिक्षुमती नाम पितृणां वल्लभा सदा । तुष्यन्ति पितरो नित्य गङ्गायमुनसङ्गमे । कुरुक्षेत्र महापुण्य यत्र मार्गोऽपि लभ्यते । अद्यापि पितृतीर्थं तत् सर्वकामफलप्रदम् । नीलकण्ठमिति ख्यातं पितृतीर्थं नराधिप । । तथा भद्रसरः पुण्य सरोमानसमेव च । मन्दाकिनी तथाच्छेदो विपा-शाथ सरस्वती । पूर्व्वमिन्द्रपद तद्वद्वैद्यनाथ महाशुभम् । गोदावरी तथा पुण्या तथा कालञ्जर शुभम् । वशोद्भेद हरोद्भेदं गङ्गोद्भेद महालयम् । भद्रेश्वरं वि-ष्णुपद नर्म्मदाद्वारमेव च । गयापिण्डप्रदानेन समा-न्याहुर्महर्षय । एतानि पितृतीर्थानि सर्वपापहराणि च । स्मरणादपि लोकाना किमु श्राद्धप्रदायिनाम् । ओङ्कार पितृतीर्थन्तु कावेरी कपिलोदकम् । कुरुक्षे-त्राच्छतगुणम् तस्मिन् स्नानादिकम्भवेत् । शक्रतीर्थन्तु विख्यात तीर्थं सोमेश्वरं स्मृतम् । सर्वव्याधिहर पुण्य फल कोटिशताधिकम् । श्राद्धे दाने तथा होमे स्वाध्याये जपसन्निधौ । छायारोहण नाम देवदेवस्य शूलिनः । अवतार रोचयामो ब्राह्मणार्थे शुभे । जातं तत् सुमहापुण्यं तथा चर्म्मण्वती नदी । नदी च वरणा तद्वत्तीर्थं कौशार्ज्जन परम् । भैरव भृगुतुङ्गञ्च गौरी-तीर्थमनुत्तमम् । तीर्थं वैनायक नाम वस्त्रेश्वरमनुत्तमम् । तथा पापहर नाम पुण्या वेत्रवती नदी । शूलतापी पयोष्णी च पयोष्णीसङ्गमस्तथा । महाबोधी पदेनापि नागतीर्थमवन्तिका । तथा वेणा नदी पुण्या महाशा-

लस्तथैव च । महारुद्रो महालिङ्गो दशार्णा च महा-नदी । शतरुद्रागता चापि तथा पितृपद परम् । शुद्ध-धाराङ्क तद्वन्नदौ द्वौ शोणघर्घरौ । कालिका च नदी पुण्यं पितरा च नदी तथा । एतानि पितृतीर्थानि शस्यन्ते स्नानदानयो । श्राद्धमेतेषु यद्दत्त तदनन्तफलं स्मृतम् । शनीचाटनदीधारा शयक्षीरनदी तथा । द्वारका कृष्णतीर्थञ्च तथार्ब्बुदसरस्वती । नदी मणिमती नाम तथा च गिरिकर्णिका । धूतपाप तथा तीर्थं समुद्रे दक्षिणे तथा । गोकर्णो गजकर्णश्च तथा च पुरुषोत्तम । श्रीशैल शाकतीर्थञ्च नारसिंहमतः परम् । महेन्द्रश्च तथा पुण्यः पुण्या चापि महानदी । एतेष्वपि सदा श्राद्धमनन्तफलमश्नुते । दर्शनादपि पुण्यानि सद्य पापहराणि च । तुङ्गभद्रा नदी पुण्या तथा भीम-नदी सरित् । भीमेश्वर कृष्णवेण्वा कावेरी कञ्जुरा नदी । नदी गोदावरी पुण्या त्रिसन्ध्या तीर्थमुत्तमम् । तीर्थं त्रैयम्बक नाम सर्वतीर्थनमस्कृतम् । यत्रास्ते भग-वान् भीम स्वयमेव त्रिलोचन । श्राद्धमेतेषु तीर्थेषु दत्त शतगुण भवेत् । स्मरणादपि पापानि व्रजन्ति शतधा नृप । । श्रीपर्णी च नदी पुण्या व्यासतीर्थमनु-त्तमम् । तथा मत्स्यनदीधारा शिवधारा तथैव च । भवतीर्थञ्च विख्यात पुण्यतीर्थञ्च शाश्वतम् । पुण्यं रामे-श्वर तद्वद्वेलापुरमनुत्तमम् । अङ्गारकस्य विख्यात-मात्मदर्शनमायुधम् । तीर्थं वृतेश्वर तद्वत्तथा कोकामुखं परम् । गोवर्द्धन हरिश्चन्द्र पृथुचन्द्र पृथूदकम् । सह-स्राक्षं हिरण्याक्ष तथा च कदली नदी । नामाधि-पापि च तथा तथा सौमित्रसङ्गतम् । इन्द्रनील-महानाद तथा च प्रियमेलकम् । एतान्यपि सदा श्राद्धे प्रशस्तान्यधिकानि च । ' एतेषु सर्वदेवाना सान्निध्यं पश्यते यत । दानमेतेषु सर्व्वेषु भवेत् कोटिशताधिकम् । बाहुदा च नदी पुण्या तथा सिद्धवन शुभम् । तीर्थं पाशुपतञ्चैव नदी पर्पटिका तथा । श्राद्धमेतेषु सर्व्वेषु दत्त कोटिशताधिकम् । तथैव पञ्चतीर्थञ्च त्रिपुरं पाण्डव नदी । पुना छिन्नसहस्रेण सव्येतरजलावहा । जाम-दग्न्यस्य सत्तीर्थं वैदायतमनुत्तमम् । प्रतीकस्याभया शिवा यदा गोदावरी नदी । तीर्थं तद्व्यक्तव्यामा-नपसरोपपसंयुतम् । आज्ञादिदानकार्य्यञ्च तद्वत् कोटि-शताधिकम् । तथा सहस्रलिङ्गञ्च राघवेश्वरमुत्तमम् । सेन्द्रफला नदी पुण्या यत्र इन्द्रहत पुरम् । निमेष

प्रकृतिमिव तपसा स्वर्गमाप्नुयात्। तत्र दत्तं नरैः श्राद्धमनन्तफलदं भवेत्। पुष्करं नाम वै तीर्थं शालग्रामं तथैव च। शोणपातश्च विख्यातो यत्र वैश्वानरालयः। तीर्थं सारस्वतं नाम स्वामितीर्थं तथैव च। मलन्दरा नदी पुण्या कौशिकी चन्द्रिका तथा। विदर्भा चाथ वेगा च पयोष्णी प्राङ्मुखी परा। कावेरी चोत्तरा गङ्गा तथा जालन्धरो गिरिः। एतेषु श्राद्धतीर्थेषु श्राद्धमानन्त्यमश्नुते। लोहदण्डं तथा दण्डं चित्रकूटं तथैव च। विन्ध्ये सर्वत्र गङ्गायास्तथा नदीतटं शुभम्। कुब्जाम्रञ्च तथा तीर्थमुर्वशीपुलिनं तथा। संसारमोचनं तीर्थं तथैव ऋणमोचनम्। एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते। अट्टहासं तथा तीर्थं गौतमेश्वरमेव च। तथा वशिष्ठतीर्थञ्च भारतञ्च ततः परम्। ब्रह्मावर्त्तं कुशावर्त्तं हंसतीर्थं तथैव च। पिण्डारकञ्च विख्यातं शङ्खोद्धारं तथैव च। घण्टेश्वरं बिल्वकञ्च नीलपर्वतमेव च। तथा च धरणीतीर्थं रामतीर्थं तथैव च। अश्वतीर्थञ्च विख्यातं शुक्रतीर्थं तथैव च। एतेषु श्राद्धदातारः प्रयान्ति परमं पदम्। तीर्थं मातृगृहं नाम करवीरपुरं तथा। सप्तगोदावरीतीर्थं सर्वतीर्थेश्वरेश्वरम्। तत्र श्राद्धं प्रदातव्यमनन्तफलमिच्छुभिः। कीकटेषु गया पुण्या पुण्यं राजगृहं वनम्। च्यवनस्याश्रमं पुण्यं नदी पुण्या पुनःपुना। यत्र गाथा विचरति ब्रह्मणा परिकीर्त्तिता। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्। एषा गाथा विचरति तीर्थेष्वायतनेषु च। सर्वे मनुष्या राजेन्द्र! कीर्त्तयन्ति समागताः। किमस्माकं कुले कश्चिद्गयां यास्यति मत्सुतः। प्रीणयिष्यति तान् गत्वा सप्त पूर्वांस्तथाऽपरान्। मातामहानामप्येवं श्रुतिरेषा चिरन्तनी। गङ्गायास्तीर्थनिचयं गत्वा क्षेप्स्यति मत्सुतः। तिलैः सप्ताष्टभिर्वापि दास्यते च जलाञ्जलिम्। अरण्यत्रितये चापि पिण्डदानं करिष्यति। प्रथमं पुष्करारण्यं नैमिषन्तदनन्तरम्। धर्मारण्यं ततः प्राप्य श्राद्धं मङ्ग्या प्रदास्यति। गयायां धर्म्मपृष्ठे वा सरसि ब्रह्मणस्तथा। गयाशीर्षवटे चैव पितॄणां दत्तमक्षयम्। तत्र कुर्य्यान्नरो यस्तु श्राद्धं परिसर्पति। नरकस्थान् पितॄन् सद्यः स्वर्गं नयति सत्वरः। कुले तस्य न राजेन्द्र! प्रेतो भवति कश्चन। प्रेतत्वमोक्षभावश्च पिण्डदानाच्च गच्छति। गयायां पिण्डदानस्य नान्यस्थाने विशिष्यते। एकेन पिण्डदानेन तृप्तास्ते मोक्षगामिनः। धान्यप्रदानं प्रवरं वदन्ति वस्त्रप्रदानञ्च तथा मुनीन्द्राः। तोयञ्च तीर्थेषु नरैः प्रदत्तं तद्वर्णयेत् प्रवरं प्रदिष्टम्। सर्वोपहा शुद्धिरा महाप्रभा महानदी। ये तु पश्यन्ति तां गत्वा मानसे दक्षिणोत्तरे। प्रणम्य हिमशृङ्गेभ्यः प्राप्तं तैर्जन्मनः फलम्। यद्यदिच्छति वै मर्त्यस्तत्तत् प्राप्नोत्यसंशयम्। एष तूद्देशतः प्रोक्तस्तीर्थानां सङ्ग्रहो मया। वागीशोऽपि न शक्नोति विस्तरात् किमु मानुषाः" पुराणसर्वस्वे।

स्मार्त्ते तीर्थभेदस्य माहात्म्यं विष्णुसंहितायामुक्तं यथा

"अथ पुष्करेषु श्राद्धम् जप्यहोमतपांसि च। पुष्करे स्नानमात्रेण सर्वपापेभ्यः पूतो भवति। एवमेव गयाशीर्षे अक्षयवटे अमरकण्टकपर्वते वराहपर्वते यत्र क्वचन नर्मदातीरे गङ्गायां विशेषतः, कुशावर्त्ते बिल्वके नीलपर्वते कनखले कुब्जाम्रे भृगुतुङ्गे केदारे महालये नड्वलिकायां सुगन्धायां शाकम्भर्यां फल्गुतीर्थे महागङ्गायां त्रिधानिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां विशेषतः। गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे। सततं नैमिषारण्ये वाराणस्यां विशेषतः। अगस्त्याश्रमे कौशिक्यां सरयूतीरे शोणस्य ज्योतिरथायाश्च सङ्गमे। श्रीपर्वते कालोदके उत्तरमानसे वडवायां मतङ्गवाप्यां सप्तर्षौ विष्णुपदे स्वर्गमार्गपदे गोदावर्य्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रुतीरे चन्द्रभागायाम् इरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे औशनसे। एवमादिष्वन्येषु तीर्थेषु सरिद्वरासु सर्वेष्वपि स्वभावेषु पुलिनेषु प्रस्रवणेषु पर्वतेषु निकुञ्जेषु वनेषूपवनेषु गोमयेनोपलिप्तेषु मनोज्ञेषु"

तीर्थागमने दोषो यथा "अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च। अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते" भा० व०। तीर्थगमने फलं यथा

"अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः। न तत् फलमाप्नोति तीर्थाभिगमनेन यत्। तीर्थान्यनुसरन् धीरः श्रद्दधानः समाहितः। कृतपापो विशुध्येत किं पुनः शुद्धकर्मकृत्। तिर्य्यग्योनिं न वै गच्छेत् कुदेशे न च जायते। न दुःखी स्यात् स्वर्गभाक् च मोक्षोपायञ्च विन्दति" ब्रह्मवै०पु०।

तीर्थस्यैकफलभागिनो यथा "यस्य हस्तौ च पादौ

च मनश्चैव सुसंयतम्। विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते। प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित्। अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते। अदाम्भिको निरारम्भो लघ्वाहारो जितेन्द्रियः। विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते। अकोपनोऽमलमतिः सत्यवादी दृढव्रतः। आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते। अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः। हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः। इति काशीखण्डम्। प्रा०त०। तीर्थप्रतिग्रहे दोषो यथा।

“तीर्थे न प्रतिगृह्णीयात् सङ्क्रान्त्यादिषु च तथा। स्वकार्य्ये पितृकार्य्येऽपि देवताभ्यर्च्चनेऽपि वा। निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते”। “तत्र नारायणक्षेत्रे कुरुक्षेत्रे हरेः पदे। वाराणस्यां बदर्य्याञ्च गङ्गासागरसङ्गमे। पुष्करे भास्करक्षेत्रे प्रभासे रासमण्डले। हरिद्वारे च केदारे सोमे बदरपाचने। सरस्वतीनदीतीरे पुण्ये वृन्दावने वने। गोदावर्य्याञ्च कौशिक्यां त्रिवेण्याञ्च हिमालये। एतेष्वन्येषु यो दानं प्रतिगृह्णाति कामतः। स च तीर्थप्रतिग्राही कुम्भीपाकं प्रयाति च” इति ब्रह्मवै०प्र०ख०। यच्च “तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरन्। स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु”। तथा यस्य पादौ च हस्तौ च मनश्चैव सुसंयुतम्। विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते। नृणां पापकृतां तीर्थे भवेत् पापस्य संशयः। यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम्”। हस्तसंयमोऽत्र निन्दितप्रतिग्रहादिनिवृत्तिः। पादसंयमस्तु अगम्यदेशादिगमननिवृत्तिः। मनःसंयमः कामक्रोधादिनिवृत्तिः, विद्या तत्तत्तीर्थफलबोधकसच्छास्त्रवेदाद्यधिगमरूपा। तपः आमिषादिनिवृत्तिः। कीर्त्तिः धर्मार्थतीर्थगमने धार्मिकत्वादिना प्रसिद्धिः। फलं सम्यगिति शेषः। एतच्च हस्तसंयमनादितीर्थयात्राङ्गं महाभारते तीर्थयात्रोपक्रम्याभिधानात्, तीर्थस्नानादिकर्माङ्गञ्च, यङ्गेन यात्राप्रकरणमन्तरेणैव सतीर्थफलमश्नुते इति सामान्याभिधानात्। इति कल्पतरुः। अतएव पैठीनसिः “योऽर्थाय स लभते यः परार्थेन गच्छति। अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति”। परार्थेन वेतनादिना, प्रसङ्गेन उद्देश्यान्तरप्रसङ्गेन। “तथा प्रतिकृतिं कृत्वा तीर्थवारिणि मज्जयेत्। मज्जयेत्तु यमुद्दिश्य अष्टभागं लभेत सः”।

तीर्थयात्राविधानं यथा “यो यः कश्चित्तीर्थयात्रान्तु गच्छेत्। सुसंयतः स च पूर्वं गृहे स्वे। कृतोपवासः शुचिरप्रमत्तः सम्पूजयेद्भक्तिनम्रो गणेशम्। देवान् पितॄन् ब्राह्मणांश्चैव साधून् धीमान् प्रीणयन् वित्तशक्त्या प्रयत्नात्। प्रत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्च। एवं कुर्वतस्तस्य तीर्थे यदुक्तं फलं तत् स्यान्नात्र सन्देह एव” इति ब्रह्मपुराणम्। एतदधिकारे प्रा०त०।

“सुसंयतः पूर्वदिने कृतैकभक्तादिनियमः। तदुत्तरदिने कृतोपवासस्तदुत्तरदिने गणेशं ग्रहानिष्टदेवतांश्च सम्पूज्य वृद्धिश्राद्धं कृत्वा ब्राह्मणान् भोजयेत्। ततः शुभलग्ने यात्रां कुर्य्यात् तीर्थयात्रान्तु गच्छेदित्युपक्रमादुपवासदिने मुण्डनमपि। “प्रयागे तीर्थयात्रायां पितृमातृवियोगतः। कचानां वपनं कार्य्यं न वृथा विकचो भवेत्” इति विष्णुपुराणवचनात्। प्रवेशेऽपि तीर्थयात्रायामिति वक्तव्यम्। “गच्छन् देशान्तरं यत्तु श्राद्धं कुर्य्यात्तु सर्पिषा। यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः” इति भविष्यपुराणादिति गङ्गावाक्यावली। वस्तुतस्तु तीर्थप्रत्यागमनोत्तरस्वगृहप्रवेशे इत्येव वक्तव्यम्। यात्राप्रत्यागमनोत्तरस्वगृहप्रवेशयोर्भेदात् प्रत्यागमनोत्तरलाभस्तु प्रत्यागतश्चापीति प्रागुक्तत्वात् व्यक्तमाह हलायुधधृतं कूर्मपुराणवचनम् “तीर्थयात्राया आरम्भे तीर्थात् प्रत्यागमेऽपि च। वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिःसमन्वितम्”। ततश्च प्रवेशे चेति चकारेण श्राद्धमात्रं समुच्चितम्। ननु तस्य यात्राङ्गत्वमपीति। एव देवान् पितॄनित्यभिधानात् तत्पूजनमेव पुनः कार्य्यं नतूपवासादिकमपि अन्यथा देवानित्यादिकं व्यर्थं स्यात्। मत्स्यपुराणम् “तिलोदकाञ्जलिर्देयो जलस्थैस्तीर्थवासिभिः। सदा न हस्तेनैकेन गृहे श्राद्धं समिष्यते”। अत्र जलस्थैरित्यनेन स्थलस्थानामपि जलस्थत्वं नियम्यते। तथा हि “अन्तरुदके आचान्तो अन्तरेव शुद्धो भवति। तस्मादन्तरेकं बहिरेकञ्च पादं कृत्वा आचामेत् सर्वत्र शुद्धो भवति” इति पैठीनस्युक्तेन जलैकचरणकृताचमनेन उभयत्र कर्म्मार्हत्वात् तर्पणकाले तीर्थे जलैकचरणत्वं प्रतीयते। अन्यत्र त्वनियमः। तद्रूपायां जले च तर्पणमविरुद्धमिति। गृह इति स्थलोपलक्षणम्। देवीपुराणे। “अकालेऽप्यथ वा काले तीर्थश्राद्धं तथा नरैः। प्राप्तैरेव सदा कार्य्यं कर्त्तव्य

पितृतर्पणम् । पिण्डदानं तत्र शस्तं पितॄणामतिदुर्लभम् । विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत् । श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्जितम् । श्वध्वाङ्क्षगृध्रकाकाना नैव दृष्टिहतञ्च यत्"। ध्वाङ्क्षोद्रोणकाकः। अकालकाल इति न रात्र्यादावपि पर्य्युदस्तप्रतिप्रसवः । तथात्वे तद्बाधापत्तेः । किन्तु पर्य्युदस्तेतराप्रशस्तकालपरम् । "तत् शाऽश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः "इत्यनुसारात् । काल इति प्रशस्तापराह्णादिकालपरम् । अत शुचे प्राप्य परविहितप्रथमदिन एव श्राद्धं तेन पूर्वदिने राक्षसीवेलाद्यागमनेऽपि परदिने श्राद्धमविरुद्धम्। तथा च कृत्यचिन्तामणिधृतम् "तत्रैव तीर्थे कर्त्तव्यं श्राद्धं तत्प्राप्तिहेतुकम् । पूर्वाह्णेऽथ वा प्रातर्देशे स्यात् पूर्वदक्षिणे"। पूर्वाह्णे सङ्गवे पूर्वदक्षिणे अग्निकोणे । पिण्डदानमिति श्राद्धासम्भवे केवलपिण्डदानमिति न पौनरुक्त्यम् । तीर्थे पिण्डदातिपत्तिमाह मत्स्यपुराणम् "पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा । तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे विचक्षणः"।

वायुपु० "उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः । विधाय कर्पटीवेषं कृत्वा ग्रामं प्रदक्षिणम् । ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम्" इत्युक्तं गयामित्युपलक्षणादन्यत्रापि तथा । अन्यत् मलमासतत्त्वगयाश्राद्धादिपद्धतौ द्रष्टव्यम् ।

कूर्मपुराणम् "ऐश्वर्य्यलोभमोहाद्वा गच्छेद्यानेन यो नरः । निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्जयेत्" इति मत्स्यपुराणम् "संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि । मुण्डनञ्चोपवासञ्च तदा यत्नेन कारयेत्" इति गङ्गावाक्याव० । तीर्थप्राप्त्यनन्तरविधानं यथा ।

"न परीक्ष्यो द्विजस्तीर्थे अन्नार्थी भोज्य एव हि । सक्तुभिः पिण्डदानञ्च चरुणा पायसेन च । कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेन गुडेन च । श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्जितम् । अकालेऽप्यथवा काले तीर्थे श्राद्धन्तु तर्पणम् । अविलम्बेन कर्त्तव्यं नैव विघ्नं समाचरेत् । यदह्नि तीर्थप्राप्तिः स्यात्ततोऽह्नः पूर्ववासरे । उपवासश्च कर्त्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् । तीर्थोपवासः कर्त्तव्यः शिरसो मुण्डनं तथा । शिरोगतानि पापानि यान्ति मुण्डनतो यतः । तीर्थं प्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत् । स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु" इति काशीखण्डम । "मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः । वर्जयित्वा गयां गङ्गां विशालां विरजां तथा" इति स्कान्दम् "स्नापयेत् प्रतिकृतिं मित्रादीन् भार्यां तीर्थे नरोत्तम । अन्यथापद्यन्ते वलात्तीर्थभवं फलम्" इति स्कान्दम् "मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् । यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः" इति प्रा०त०मार्क०पु० ।

कलौ तीर्थानां पृथिव्यां स्थितिकालो यथा "सरस्वती पुण्यक्षेत्रमाजगाम च भारतम् । गङ्गायामेन कलया स्वयं तस्थौ हरेः पदे । पश्चाद्भगीरथानीता मर्त्त्यं भागीरथी शुभा । समाजगाम कलया वाणी शापेन नारद ! । पद्मा जगाम कलया सा च पद्मावती नदी । भारतं भारतीशापात् स्वयं तस्थौ हरेः पदे । कलेः पञ्चसहस्राणि वर्षाणि स्थित्वा च भारते । जग्मुस्ताश्च सरिद्रूपं विहाय श्रीहरेः पदम् । यानि सर्वाणि तीर्थानि काशीं वृन्दावनं विना । यास्यन्ति तानि सार्द्धं वैकुण्ठमाज्ञया हरेः"।

"यानादिना गमनदोषो यथा "वृषयाने हरते याने तदर्द्धं तत्र पादुके । तदर्द्धं तैलमांसाभ्यां सर्वं हरति मैथुने" इति कर्मलोचनम ।

तत्र उपाये यज्ञे च "शततीर्थः पयसामिवायनः" किरा० शास्त्रे तीर्थकरः । पात्रे । "ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः । विद्यया विद्या च प्राह तानि तीर्थानि षण्मम" विद्यावाक्यम् । १८चात्वालोत्करयोरन्तराले देशे "दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा" कात्या०श्रौ० ५।५।११ । "तीर्थेन चात्वालोत्करान्तरेण प्रवेश्य नेदिष्ठात्वालयोरन्तरालेन पूर्वेणोत्तरवेदिं दक्षिणेनाग्नेः पुरस्तादाहृत्य अथवा तीर्थेन प्रवेशानन्तरमुत्तरा वेदिमपरेण चात्वालवेद्योरन्तरालेन दक्षिणेनाग्नेः पुरस्तादानीय जुहोति" "तेनान्तरेण प्रतिपद्यन्ते चात्वालश्चैतद्वै देवानां तीर्थम्" यजु०वि०भा० । कराङ्गुलिमूलेषु ब्राह्मादितीर्थेषु यथाह मनुः "ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन । अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते । कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः" शास्त्रादिपाठे । "बहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः" छा०उ० "तीर्थं शास्त्रगुरूपदेश" भाष्यम् । १९मन्त्राद्युपादानत्वे । "कश्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च । त्रिभिस्त्रिभिर

विज्ञातैर्विद्धि तीर्थानि चारकैः" भा० स० ५ अ०। "तीर्थानि मन्त्रिप्रभृतीन्यष्टादश यान्यवगाह्य राजा कृतकृत्यो भवति तानि चोक्तानि नीतिशास्त्रे "मन्त्री१ पुरोहितश्चैव२ युवराजश्च३ भूपतिः४ पञ्चमो द्वारपालश्च५ षष्ठोऽन्तर्वेशिकस्तथा६। कारागाराधिकारी७ च द्रव्यसञ्चयकृत्तथा८। कृत्याकृत्येषु चार्थानां नवमो विनियोजकः९। प्रदेष्टा१० नगराध्यक्षः११ कार्यनिर्माणकृत्तथा१२। धर्माध्यक्षः१३ सभाध्यक्षो१४ दण्डपालस्त्रिपञ्चमः१५। षोडशो दुर्गपालश्च१६ तथा राष्ट्रान्तपालकः१७। अटवीपालकान्तानि१८ तीर्थान्यष्टादशैव तु। चारान् विचारयेत्तीर्थेष्वात्मनश्च परस्य च। पाषण्डादीनविज्ञातानन्योन्यमितरेष्वपि। मन्त्रिणं युवराजञ्च हित्वा स्वेषु पुरोहितमिति' एषां तीर्थशब्दवाच्यत्वे हलायुधः "योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि"। इति परेषामष्टादशसु स्वस्य मन्त्रिपुरोहितयुवराजवर्जं पञ्चदशसु च तीर्थेषु चारानन्धे परस्परं चाविज्ञातांस्त्रींस्त्रीन् प्रयुज्य तत्तत्या वार्त्तां सर्वचारसंवादे तथ्यां जानीयात्" नी० क०।

२ जलाशयादरत्निमात्रदेशे आदित्यपुराणे "अरत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते। पश्चाच्च शोधयेत्तीर्थमन्यथा न शुचिर्भवेत्"। तस्मिन् देशे शौचं न कर्त्तव्यं यस्मादरत्निमात्रव्यवहितजलात् तत् स्थलमेव तीर्थं जलसमीपस्थात्" आ० त०।

"तीर्थाश्रमवनारण्यगिरिपर्वतसागराः। सरस्वती भारती च पुरीति दश कीर्त्तिताः" महानि० तन्त्रोक्ते ३सन्न्यासिनामुपाधिभेदे। तल्लक्षणं तत्रैव "त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे। स्नायात्तत्त्वार्थभावेन तीर्थनामा स उच्यते"। अन्यानि च भौमतीर्थानि भारततीर्थयात्रापर्वादौ पुराणान्तरेषु प्रसिद्धानि। "अन्यानि यानि तीर्थानि काशीपाप्मिकराणि च। काश्यौ प्राप्यैव मोच्यन्ते नान्यथा कल्पकोटिभिः" नीलकण्ठधृतवाक्यम्।

**तीर्थकर** पु० तीर्थं शास्त्रं करोति कृ–ट। १जिने हेमच०। २शास्त्रकरे त्रि०। ३विष्णौ पु०। "मनोजवस्तीर्थकरः" विष्णु स०। "चतुर्दशविद्यानां बाह्यसमयानां च प्रणेता प्रवक्ता चेति तीर्थकरः हयग्रीवरूपेण मधुकैटभौ हत्वा विरिञ्चये सर्गादौ सर्वाः श्रुतीरन्याश्च विद्या उपादिशत् बाह्यविद्याः सुरवैरिणां वञ्चनाय चोपादिशदिति पौराणिका कथयन्ति" भाष्यम्।

**तीर्थकाक** पु० तीर्थं काक इव लोलुपत्वात्। तीर्थे काकसदृशव्यवहारिणि लोलुपे। तीर्थध्वाङ्क्षादयोऽप्यत्र।

**तीर्थकृत्** पु० तीर्थं करोति कृ–क्विप् ६त०। १जिनदेवे हेमच०। २शास्त्रकरे त्रि०। [हेमच०।

**तीर्थङ्कर** पु० तीर्थं शास्त्रं करोति कृ–खच् मुम् च। जिनदेवे

**तीर्थदेव** पु० तीर्थमिव श्रेष्ठः देवः तीर्थे दीव्यति वा दिव-अच् वा। शिवे शिवसहस्रनाम।

**तीर्थमहाह्रद** पु० तीर्थरूपो महाह्रदः। स्वनामख्याते तीर्थभेदे "नन्दा च परनन्दा च तथा तीर्थमहाह्रदः" भा० अनु० १६५ अ०। नानातीर्थोक्तौ।

**तीर्थयात्रा** स्त्री तीर्थमुद्दिश्य यात्रा। १तीर्थोद्देशेन यात्रायाम्। तद्विधि० प्रतृकृतगयाश्राद्धादिपद्धतौ दृश्यः। २भारतान्तर्गते वनपर्वाऽवान्तरपर्वभेदे। "तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः" भा० आ० १अ०। तच्च वनपर्वणि ८० अध्यायावधि १५६ अध्यायान्तम्। [तीर्थराजिशब्दे दृश्या०

**तीर्थराज** पु० तीर्थानां राजा टच् समा०। प्रयागे तीर्थे।

**तीर्थराजि(जी)** स्त्री तीर्थानां राजिरत्र। अविमुक्ते काश्यां त्रिका० वा ङीप्। निन्दनात्तत्राष्टषष्टितीर्थानामानयनात्तथात्वम्। यथोक्तं काशी० ६९ अ०। "सर्वरत्नमया रम्या साष्टषष्टिरभूदिह। भूर्भुवःस्वस्तले यानि शुभान्यायतनानि हि। मुक्तिदान्यपि तानीह मयाऽऽनीतानि सर्वतः। यतो यच्च समानीतं यत्र यच्च कृतास्पदम्। कथयिष्याम्यहं नाथ! तच्च तदवधीयताम्। स्थाणुर्नाम महालिङ्गं देवदेवस्य मोक्षदम्। कुरुक्षेत्रादिहायातं कलांशेनोऽस्ति तत्र वै। तदग्रे सन्निहित्याख्या महापुष्करिणी शुभा। लोलार्कपश्चिमे भागे कुरुक्षेत्रस्थली तु सा। तत्र स्नात्वा कृतं जप्तं तप्तं दत्तं शुभार्थिभिः। कुरुक्षेत्राद्भवेत् सत्यं कोटिकोटिगुणाधिकम्। नैमिषाद्देव देवोऽत्र ब्रह्मावर्त्तेन संयुतः। तत्रांशमात्रं संस्थाप्य काश्यामाविरभूद्विभो!। दुण्डिराजोत्तरे भागे शिविष्टनामकस्तु वै। लिङ्गं वै देवदेवाख्यं तदग्रे कूप उत्तमः। ब्रह्मावर्त्त इति ख्यातः पुनरावृत्तिकृन्तनाम्। तत्कूपाद्भिः कृतस्नानो देवदेवं समर्च्य च। तत्पुण्यान्नैमिषारण्यात् कोटिकोटिगुणं स्मृतम्। गोकर्णायतनादत्र स्वयमाविरभून्महत्। लिङ्गं महाबलं नाम शाम्बादित्यसमीपतः। दर्शनात् स्पर्शनाद्यस्य क्षयादेनो महाबलम्। वाताहततुलराशिरिव विद्राति दूरतः। कपालमोचनपुरो दृष्ट्वा लिङ्गं महाबलम्। महाबल

तावन्तो निर्वाणमेष्यति। आकाशात्तारकं लिङ्गं ज्योतीरूपमिहागतम्। ज्ञानवाप्याः पुरोभागे तल्लिङ्गं तारकेश्वरम्। तारकज्ञानमभ्येति तल्लिङ्गस्य समर्चनात्। ज्ञानवाप्यां नरः स्नात्वा तारकेशं विलोक्य च। कृतसन्ध्यादिनियमः परितर्प्य पितामहान्। कृतमौनव्रतो धीमान् यावल्लिङ्गविलोकनम्। मुच्यते सर्वपापेभ्य पुण्यं प्राप्नोति शाश्वतम्। मान्ते च तारकं ज्ञानं यस्मात् ज्ञाना विमुच्यते। किरातात् किरातेश इह चाविर्बभूव ह। किरातरूपो भगवान् यत्र देवोऽभवत् पुरा। तत्किरातेश्वरं लिङ्गं भारभूतेश्वराटतु। नमस्कृत्वा नरो जातु न मातुरुदरेशय। लङ्कापूर्य्यां समागच्छन्नलकेश्वरसमक्षम्। पौलस्त्यराघवात् पश्चात् पूजितं सर्वदुःखहृत्। पुण्यं जन्मप्रियं लिङ्गं जललिङ्गस्थलादपि। आयातं तत्र गङ्गाया जलमध्ये व्यवस्थितम्। तत्प्रासादोऽद्भुततरो मध्येगङ्गं निरीक्ष्यते। सर्वधातुमयः श्रेष्ठः सर्वरत्नमयः शुभः। अद्यापि दृश्यते कैश्चित् पुण्यसम्भारगौरवात्। श्रेष्ठं लिङ्गमिहायातं तीर्थात्कोटीश्वरादपि। कोटिलिङ्गार्चनपुण्यं तल्लिङ्गस्य निरीक्षणात्। श्रेष्ठं श्रेष्ठेश्वरात्मत्वात् श्रेष्ठसिद्धिप्रदायकम्। नड्वालात् समद्भुतं लिङ्गमाम्रातकेश्वरम्। नलेश्वरपुरोभागे पूजितं सर्वसिद्धिदम्। आगत्य विरजस्तीर्थाद्वृषदेवस्त्रिलोचन। लिङ्गे स्वनामचिह्निते ह्यवतस्थे त्रिविष्टपे। पुण्ये पिशाचमोचने तीर्थे सर्वदा तारकप्रदे। आविरासीत् स्वयं देव ओङ्कारेऽमरकण्टकात्। तदाद्यं तारकं चात्र यदा गङ्गा न चागता। तदैवाविरभूत् काशी त्रैलोक्योद्धरणाय वै। तदोङ्कृति महल्लिङ्गं स्वयमाविरभूत्तत। महिमानं न तस्यान्यः परिवेत्ति विभो! ऋते। एतान्यायतनानीश! आनिनाय महान्ति च। शोधयित्वाशमालञ्च तस्मिन् क्षेत्रे निजे निजे। इहायातानि पुण्यानि सर्वभावेन नान्यथा। प्रासादाः सर्वतः श्रेष्ठा रम्या अभ्रलिहा विभो!। नानाधातुमयाश्चित्राः सर्वरत्नमहोज्ज्वलाः। येषां कलशमात्रस्य दर्शनान्मुक्तिराप्यते। श्रुत्वा च नामधेयानि लिङ्गानां सुरसत्तम। अपि जन्मसहस्रोत्था क्षीयन्ते पापराशयः। इदानीं को निदेशोऽत्र मयानुष्ठेय ईश्वर!। प्रसादीक्रियतां सोऽपि सिद्धो मन्तव्य एव हि। श्रीस्कन्द उवाच। श्रुत्वेति नन्दिनो वाक्यं देवदेवेश्वरो हरः। तदा प्रसाद्य शैलादिमिदं प्रोवाच कुम्भज!। श्रीदेवदेव उवाच। साधु कृतं त्वया नन्दिन्! सदानन्दविधायक!। विधेहि मे निदेशं च चतुःषष्टीश्चोपारयाधुना। मम कोष्ठस्तु चामुण्डायायात्र निवसन्ति हि। सदैव ताभिः सहिताः भूतवेतालभैरवैः। ताः पुरीरक्षणार्थाय सवाहनवरायुधाः। प्रतिदुर्गं दुर्गरूपाः परितः परिवासय। श्रीस्कन्द उवाच। नन्दिनं स निदेश्यापि महाभ्यां सहितो महः। ययौ त्रिविष्टपं क्षेत्रं मुक्तिबीजपुरोहितम्। विशादतनयोऽप्येषौ मूर्द्धन्याज्ञां विधाय च। आहूय सर्वास्ता दुर्गाः प्रतिदुर्गं न्यवेशयत्। निशम्याध्यायमेतञ्च पुण्यायतनगर्भितम्। नरः स्वर्गापवर्गौ च प्राप्नुयात् श्रद्धया क्रमात्। श्रुत्वाष्टषष्टिमेता वै महायतनसंश्रयाः। न जातु प्रविशेन्मर्त्यो जनन्या जठरीदरीम्"। [प्रशंसनीयत्वात्। कोषे हेमच०।

**तीर्थवाक** पु० तीर्थस्येव वाको वचनमस्य उत्ताकृस्थित्या

**तीर्थशौच** न० तीर्थस्य घट्टस्य शौच परिष्कारः। घट्टादिपरिष्कारे। "सेतुबन्धरता ये च तीर्थशौचरताश्च ये। तड़ागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात्"। आदित्यपु० तीर्थशौच घट्टपरिष्कारः" रघु०।

**तीर्थसेनि** स्त्री कुमारानुचरमातृभेदे। "माधवी शुभवक्त्रा च तीर्थसेनिश्च भारत।" भा० शल्य० ४७ अ०।

**तीर्थसेविन्** पुं स्त्री० तीर्थं जलप्रान्तं सेवते मत्स्याहारार्थं सेव—णिनि। १बके राजनि० स्त्रियां ङीप्। २तीर्थसेवके त्रि०।

**तीर्थ्य** पु० तीर्थे भवः यत्। रुद्रभेदे। "नमस्तीर्थ्याय च कूल्याय च" यजु० १६।४२। समानतीर्थे वसति यत्। सतीर्थ्य एकगुरुके अमरः। [तितीव।

**तीव** स्थौल्ये भ्वा० पर० अक० सेट्। तीवति अतीवीत्।

**तीवर** पु० तृ—ष्वरच् नि०। १समुद्रे, २व्याधे, ३वर्णसङ्करजातिभेदे(तेओर)४ स्त्री० जातिपक्षे ङीष्। स्त्रियां ङीप्।

**तीव्र** न० तीव—रक् तिज—वन् दीर्घ जस्य वो वा। १अतिशये २तद्वति त्रि० अमरः। ३तीक्ष्णे ४लोहभेदे (इस्पात) ५तीरे ६त्रपुणि च उणा० ७लोहमाले राजनि०। ८कत्तृणे ९कटौ १०नितान्ते च त्रि० उणा०। ११शिव पु० शब्दर०। "विलङ्घिताधोरणतीव्रयत्ना" रघु०। "तीव्रोत्थितास्तावदसह्यरंहस" "तीव्रमहाव्रतमिवात्र चरन्ति यत्र" माघ। वैराग्यस्य उपायस्य च तीव्रत्वं पात० सू० भाष्ये विवरणे च दर्शितं यथा "ते खलु नव योगिनो मृदुमध्याधिमात्रोपाया भवन्ति। तद्यथा, मृदूपायो मध्योपायोऽधिमात्रोपाय इति। तत्र मृदूपायोऽपि त्रिविधः मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेग

तुग्रस्य सूनुं भुज्युं भुज्युनामकं समुद्रमध्ये मग्ननावम्” भा०

**तुग्र्या** स्त्री तुज–रक् न्यङ्क्वा० कु स्वार्थे यत्। १जले निघण्टुः। “आपः शर्म वृषभ तुग्र्यासु” ऋ० १।१२१।५। “तुग्र्यासु जलेषु” भा०। निघण्टौ वृष तुग्र्यामिति पाठान्तरात्। जले न०। तदनुसारेण “पिब स्वधैनवानामुत यस्तुग्र्ये सचा” ८।१२।२०। “वृषं तुग्र्यमित्युदकनामसु पाठात्” भा०। वस्तुतस्तु निघण्टौ वृषं तुग्र तुग्र्यावर्त्तमित्येव पाठः मुद्रितपुस्तके तुग्र्यमिति पतितम्। तुग्रस्य राजर्षेरपत्यं वा० यत्। तुग्रपुत्रे भुज्यौ पु०। “अस्त यो न तुग्र्यम्” ऋ० ८।१।२२ “तुग्र्यं तुग्रपुत्रम्” भा०।

**तुग्वन्** त्रि० तुज–वा० क्वनिप् न्यङ्क्वा० जस्य गः। १हिंसके। “सुवास्त्वा अधि तुग्वनि” ऋ० ८।१९।३७।

**तुङ्ग** पु० तुजि–हिंसायां घञ् न्यङ्क्वा० कु। १पुन्नागवृक्षे २पर्वते ३बुधग्रहे हेमच०। ४नारिकेले ५गण्डके राजनि०। ६उच्चे त्रि०। ७ग्रहविशेषस्य राशिभेदे पु०। उच्चशब्दे १५८४ पृ० दृश्यम् “अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः”। “अर्थादुच्चान् क्रियवृषमृगकन्याकुलीरान्त्ययूके दिगृक्षेन्द्रत्र्यतिथिशरान् सप्तविंशांश्च विंशान्। अथानेतान् वदति यवनश्चान्त्य तुङ्गास्तुतुङ्गांशानेवांशान् मदनभवनेष्वाह नीचानु नीचानिति”।

तुङ्गस्थग्रहभेदफलम् “तुङ्गेऽर्के शुभसंयुतः शुभकरैर्मित्रैश्च दृष्टो यदा दैवात् पश्यति सोऽपि वा शुभकरान् केन्द्रं त्रिकं वा त्रिकम्। विख्यातः प्रथितो विभाति तरिपुक्षोणीशमान्योऽथवा ब्रह्मापादार्चितपादपद्मयुगलो राजा त्रिकोणे यदा”। र०। “तुङ्गे चन्द्रमसि प्रसन्नवपुषि प्रासादमध्युते प्रख्यातोऽरिविमर्दकोऽगदतनू राजेश्वरो रूपवान्। ब्रह्मापादार्चितपादपद्मयुगलो सा धर्मशीलो महान् सौम्यैरेव युतोऽथ वा प्रियतमैर्दृष्टे त्रिकोणेऽपि च”। च०। “यदि भवति खगस्थो भूमिपुत्रस्तदा वै न दिनकरमयूखादुष्टरश्मिर्नरेन्द्र। अगदतनुरभीतः शत्रुदर्पापहारी प्रणतरिपुनरेन्द्रः स्यात्त्रिकोणेऽपि जातः”। म०। “कन्यास्थे शशलाञ्छनस्य तनयस्त्विय शकै संयुतो दृष्टो वा यदि संयुतः शुभकरैर्जातस्तदा भूपतिः। वाग्मी वा तरगोद्भवस्वकरिणां ग्रामेषु शौ कम्पते च ब्रह्माभ्यर्चितहाशिमणिता यान्ति त्रिकोणेऽपि च”। बु०। “तुङ्गे गुरौ मित्रखगेन दृष्टो राजा भवेदिन्दुसमानमूर्त्तिः। गजाश्वनौकार्णवपूर्णलक्ष्मीः पृथ्वीपतिः स्याच्च त्रिकोणगोऽपि”। वृ०। “तुङ्गे भृगौ शुभखगेन्द्रयुते च दृष्टे दैवात् पुनः स यदि पश्यति मित्रसंघान्। भूपाधिपो भवति कीर्त्तिकरः प्रधानो दीर्घायुरुस्थसुखभुग्भृगुजे त्रिकोणे”। शु०। “तुङ्गे शनौ मित्रखगेन दृष्टे प्रचण्डदण्डो नृपतिप्रधानः। न दृश्यते दिग्गमने च शूर्यो त्रिकोणगे चापि नरेन्द्रमूर्त्तिः”। श०। “भवति धरणीपालो नीचबुद्धिः प्रतापी हयगजधनपूर्णो जातिवर्गे विरक्तः। कुटिलमतिरभीतो भूरिभाण्डारयुक्तस्तमसि मिथुनसंस्थे जायते मानवेन्द्र”। रा०। “मृगपतिवृषकन्याकर्कटस्थे च राहौ भवति विपुललक्ष्मी राजराजाधिपो वा। हयगजनरनौकाभाण्डार सार्वभौमोऽन्धपतिरमरपूज्यो राहुतुङ्गे चिरायुः”। रा०। “अरिनिधनव्ययतुङ्गे कीर्त्तितमेतत्फलं व्यर्थं केन्द्रे त्रिकोणे लाभे वा तुङ्गफलं यथोद्दिष्टम्” इति कोष्ठीप्र०। ८किञ्जल्के न० शब्दार्थचि०। १०उच्चे ११प्रधाने १२उन्नते त्रि० शब्दर०। “तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता” माघ। १३शिवे पुं० तुङ्गबीजशब्दे दृश्यम्।

**तुङ्गक** पु० तुङ्ग+स्वार्थे क संज्ञायां कन् वा। १पुन्नागवृक्षे शब्दरत्ना० २तुङ्गशब्दार्थे ३अरण्यभेदे तीर्थभेदे न०। “तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः। वेदानध्यापयत्तत्र ऋषिः सारस्वतः पुरा। तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः। ऋषीणामुत्तरीयेषु सूपविष्टो यथासुखम्। ओङ्कारेण यथान्यायं सम्यगुच्चारितेन ह। येन यत्पूर्वमभ्यस्तं तत्सर्वं समुपस्थितम्। ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः। हरिर्नारायणस्तत्र महादेवस्तथैव च। पितामहश्च भगवान् देवैः सह महाद्युतिः। भृगुं नियोजयामास याजनार्थं महाद्युतिम्। ततः स चक्रे भगवान् ऋषीणां विधिवत्तदा। सर्वेषां पुनराधानं विधिदृष्टेन कर्मणा। आज्यभागेन तत्राग्निं तर्पयित्वा यथाविधि। देवाः स्वभवनं याता ऋषयश्च यथागतम्। तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम। पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा” भा० व० ८५ अ०। तत्कथा दृश्या

**तुङ्गकूट** पु० तुङ्गं कूटमस्य। उच्चशृङ्गे पर्वतभेदे।

**तुङ्गनाभ** पु० तुङ्गो नाभिरस्य। कीटभेदे। तुङ्गीनासशब्दे दृश्यम्। [दृश्यम्। तुङ्गरास्यादयोऽप्यत्र।

**तुङ्गभ** न० कर्म०। सूर्यादीनामुच्चराशौ मेषादौ तुङ्गशब्दे

तुङ्गभद्र पु० तुङ्गोऽपि भद्रः । १मत्तोन्मत्तकरिणि दक्षिणस्थे २नदीभेदे स्त्री मेदि० । "शर्करावर्त्तां तुङ्गभद्रां कृष्णवेण्यादि" भाग० ५।१९।१८ श्लो० भारतवर्षनदीकथने । "तुङ्गभद्राजलं स्यात् स्निग्धं शीतं तथा गुरु । कण्डूपित्तापहं प्रायः सात्म्यं मेधाकरं मतम्" राजनि० तज्जलगुणा उक्ताः ।

तुङ्गबीज न० तुङ्गस्य शिवस्य बीजम् । पारदे । "तुङ्गबीजसमायुक्तं गोक्षयन्तं प्रसाधयेत्" रस०नि० "तुङ्गो महादेवस्तस्य बीजं वीर्यं पारद इत्यर्थः" टीका० ।

तुङ्गवेणा स्त्री नदीभेदे "तुङ्गवेणा कृष्णवेणा कपिला शोण एव च" भा०अ० २२१ अ० । "भिमरथीं चित्रवतीं वेणां तुङ्गवेणां महानदीम्" भा० भी० ६अ० ।

तुङ्गरस पु० तुङ्गः श्रेष्ठो रसोऽस्य । गन्धद्रव्यभेदे "कालागुरुविमिश्रेण तथा तुङ्गरसेन च" भा० अा० १२७ अ० ।

तुङ्गशेखर पु०तुङ्गः शेखरोऽस्य ।१पर्वते शब्दमा०।२तुङ्गशेखरयुक्ते त्रि० ।कर्म० ।३उच्चे शेखरे न० ।

तुङ्गा स्त्री तुङ्ग+टाप् ।१वंशरोचनायां २शम्यां च राजनि० ।

तुङ्गिन् त्रि० तुङ्ग मेषादिकं स्थानमाश्रयत्वेनास्त्यस्य इनि । उच्चस्थिते ग्रहे १महाशतावर्य्यां स्त्री ङीप् राजनि० । ४प्रधानस्थानस्थे त्रि० । [२रात्रौ शब्दार्थचि० ।

तुङ्गी स्त्री तुङ्ग+गौरा०ङीष् ।१हरिद्रायां २बर्बरायां मेदि०।

तुङ्गीनास पु०तुङ्गी हरिद्रेव पीता नासाऽस्य । कीटभेदे । "तुङ्गीनासो विचिलकस्तालको वाहकस्तथा । कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः । तुङ्गनाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा । अग्निकीटश्च घोराः स्युर्द्वादश प्राणनाशनाः" सुश्रु० ।

तुङ्गीपति पु०तुङ्ग्याः रात्रेः पतिः । निशापतौ चन्द्रे त्रिका० ।

तुङ्गीश पु० कर्म० । १शिवे २कृष्णे ३सूर्ये च शब्दर० तेषां प्रधानस्थानस्थित्या तथात्वम् ।६त०।रात्रीशे ४चन्द्रे ।

तुच् पु० त्यच—क्विप् वा० सम्प्रसा०तुज—क्विप् वा पृषो० जस्य च । १अपत्ये निघण्टुः । "तुचे तनाय तत्सु नः" ऋ० ८।१८।१८ । "तुचे तुनाय" भा० । "तुचे तु नो भवन्तु" ८।२७।१४। "तोजयति पितृदुःखादिकमिति तुच् पुत्रः तस्मै" भा० । पृषो० जस्य च इति भेदः। हेमचन्द्रे तु जान्ततयाऽस्य पठितं वेदे तु सर्वत्र चान्तत्वेनैव प्रयोगः ।

तुच्छ न० तुद—बाह० क्विप् तुदा व्यथया छ्यति छो—क । १तुषाके (तुष) २हीने,उणा०। ३शून्ये अमरः ४अल्पे हेमच०। ५न्यूने च त्रि०।"किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः । अनर्थैरर्थसङ्काशैर्नित्यानन्दरसोदधे" भाग०७।७।१८।१८ तीक्ष्णे,तत्त्याग्रे च भावप्र०।७अल्पे नञीहे च त्रि०

तुच्छद्रु पु० कर्म० । एरण्डवृक्षे शब्दच० ।

तुच्छधान्यक न० कर्म० । (भुषी) तुषाके अमर ।

तुच्छ्य न०तुच्छ—बेदे भावे दृशादे वा यत्।१तुच्छशब्दार्थे २तुच्छत्वे च "तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम् । तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्" ऋ०१०।१२९।३ अयमर्थः । ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म ? जायमानस्य जनिक्रियायां कर्त्तृत्वेन कारकत्वात् कारकं च कार्य्याव्यवहितपूर्वक्षणविशेषे इति कारकस्य सतो नियतपूर्वक्षणवर्त्तित्वस्यावश्यम्भावात् । अथैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते तर्हि तस्य जन्म ? अत आह । तमसा गूढमग्रे सृष्टेः, प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत्तमसा गूढम् । यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत् आत्मतत्त्वस्यावरकत्वात् मायापरम च भावरूपाज्ञानमत्र तम इत्युच्यते । तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति । कादकात्कारणभूतो नामरूपाभ्यां यदाऽविर्भवत् तदैव तस्य जन्मेत्युच्यते । एतेन कारणादभ्यायामवदेव कार्य्यं सत्त्वात इत्यवदादिनोऽसत्कार्य्यवादिनो ये मन्यन्ते ते प्रत्याख्याता । ननु कारणे तमसि तज्जगदात्मकं कार्य्यं विद्यते चेत् कथं नासदासीन्नो सदासीत् इत्यादि निषेध । तत्राह तम आसीदिति । तमोभावरूपाज्ञानं मूलकारणं तद्रूपता तदात्मनाम् । यत सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः । नन्वावरकत्वादावरकं तमः कर्त्तृ आवार्य्यत्वाज्जगत् कर्म । कथं तयो कर्मकर्त्रोस्तादात्म्यम् । तत्राह अप्रकेतमिति । अप्रकेतमप्रज्ञायमानम् । अयमर्थः । यद्यपि जगततमसः कर्मकर्त्तृभावो लौकिको न विद्यते तथापि व्यवहारदशायामिव तर्ह्ये दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम् । अतएव मनुना स्मर्य्यते "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति । कुतो वा न प्रज्ञायते तत्राह सलिलम् । सल—गतौ । औणादिक इलच् । इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन सङ्गतमविभागापन्नम् आसीत् । अविभक्तमिति ब्रह्म कन्दशीतोऽभावे कृषङ्द्रावश्च इति

तिलोपे तिप्यमसो' पा० इति पर्युदासाद्दकाराभाव । यद्वा सलिलमिति लुप्तोपमम । सलिलमिव । यथा क्षीरेणाविभागापन्न नीरं दुर्विभान तथा तमसाऽविभागापन्न जगत् शक्यं विज्ञातुमित्यर्थ । ननु विविधविचित्रप्रपञ्चभूयस प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभव । तथा तमोऽपि क्षीरवद्बलवदित्येमोच्यते । तर्हि दुर्बलस्य जगत' सर्गसमयेऽपि नोद्भवप्रसङ्ग इत्यत आह तुच्छ्येनेति । आसमन्ताद्भवतीत्याभु तुच्छ्येन । छन्दसो यकारोपजनः । तुच्छ्येन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्" भाष्यम् ।

**तुज** दीप्तौ चुरा० उभ० अक० सेट् इदित् । तुञ्जयति ते अतुतुञ्जत् । तुञ्जयते ।

**तुज** प्रापणे हिंसायाञ्च भ्वा० पर० सक० बले अक० सेट् इदित् । तुञ्जति अतुञ्जीत् । तुतुञ्ज तुतुञ्जतुः । "तुञ्जे तुञ्जे य उत्तरे स्तोमा" ऋ०१।७।७ । इमामृचमधिकृत्य "तुञ्जतेर्दानकर्मण तुञ्जे तुञ्जे दाने दाने"इति ६।१७ निरुक्तोक्ते । दाने च ।

**तुज** हिंसायां भ्वा० पर० सक० सेट् । तोजति अतोजीत् । तुतोज । वेदे तुजादि० अभ्यासस्य दीर्घ । तूतुजान । प्रेरणे च "आ या तोके तनये तूतुजाना "ऋ०७।६७।६ । "मायस्तोके तनये तूतुजाना" ७।८४।५ ।"तूतुजाना प्रेर्यमाणा "भा०।"अस्मा इत प्रभया तूतुजाना " निरु०६।२० उक्ता ऋक् ।

**तुञ्ज** पु० तुजि-बले अच् । वज्रे निघण्टु ।

**तुट** कलहे तुद० कुटा० पर० अक० सेट् । तुटति अतुटीत् तुतोट । [च" हरिव० २७७ अ० ।

**तुटितुट** पु० शिवे । "नमस्तुण्डाय तुष्टाय नमस्तुटितुटाय

**तुटुम** पु स्त्री० तुट -बा०उम । उन्दुरौ त्रिका० ।

**तुड** भेदे तु० कुटा०पर०सक० सेट् । तुडति अतुडीत् तुतोड ।

**तुड** निष्पीडने भ्वा० आ० सक० सेट् इदित् । तुण्डते अतुण्डिष्ट । तुतुण्डे । तुण्ड्यते ।

**तुड** हिंसाकरणे भ्वा० पर० सक० सेट् । तोडति अतोडीत् ऋदित् । अतुतोडत्-त ।

**तुडि** स्त्री तुड-इन् किच्च । त्रोडने ।

**तुड्ड** अनादरे भ्वा० पर० सक० सेट् । तुड्डति अतुड्डीत् । अव दोपध इत्यन्ये तन्मते क्विपि तुद्-लोपधत्वे तुड् इति भेद ।

**तुण** कुटिलीकरणे तु० पर० सक० सेट् । तुणति अतोणीत् । तुतोण ।

**तु(तू)णि** पु० तुण+बहुलोक्ते इण् बा० पृषो० । १कुणिरोगे अमरटीकायां क्षीरस्वामी २नन्दिवृक्षे राजनि०।"तूणीकश्च कटु' पाके कषायो मधुरो लघु' । तिक्तो ग्राही हिमो हृद्यो व्रणकुष्ठकफपित्तहृत्" भावप्र० ।

**तुणिक** पु० तुणि-स्वार्थे क । नन्दिवृक्षे राजनि० ।

**तुण्ड** न० तुडि-तोडने अच् । १मुखे अमर । "अयस्तुण्डैःखलुखलैः" हरि०२४५ अ० । "स तेन पतगेन्द्रेण पक्षतुण्डनखक्षत " भा० आ० १२ अ० । "दीर्घनखा दीर्घदन्तो दीर्घतुण्डश्च भारत !" भा० अ० ४७ । २शिवे पु०तुटितुटशब्दे दृश्यम् । ३राक्षसभेदे । "तुण्डेन च नलस्तत्र पटुश पनसेन च" भा० व० २८४ अ० ।

**तुण्ड(ण्डि)केरी** स्त्री प्रशस्त तुण्ड (ण्डि ) कन् तद्-ईरयति ईर्ते वा ईर-अण् १कार्पास्याम् तस्या फलस्य विदारे हि विस्तीर्णस्तुलवत्तुकार्पासोत्पत्ति । २बिम्बिकायाम् (तेलाकुचा) तस्या फलेन हि मुखाकृतेरुपादृश्यादानात् तथात्वम् । स्वार्थे क तत्र । तुण्ड(ण्डि)केरिकाप्यत्र अमरः । सम्रार्थे कन् । बिम्बिकायां राजनि० ।

**तुण्डदेव** पु० तुण्डरूपो देव तुण्डेन दीव्यति दिव-अच् वा । रूपभेदे तस्य विषयो देश रैवुका० भक्षस् । तुण्डदेवभक्ष तदीये विषये देशे पु० ।

**तुण्डि** पु० तुण्ड-इन् । १मुखे, २चञ्चौ च । ३बिम्बिकायां, ४वन्द्यां, उणा० । ५नाभौ स्त्री शब्दरत्ना० वा ङीप् । स्वार्थे कन् उक्तार्थेषु ।६तुन्दौ माधव' तुण्डिभशब्दे दृश्यम् ।

**तुण्डिका** स्त्री तुण्डम् तदवयवाधरसादृश्यमस्त्यस्याः ठन् । १बिम्बिकायां तत्फलस्याधरावयवाधरसादृश्याकघात्त्वम् । स्वार्थे क । नाभौ शब्दरत्ना० ।

**तुण्डि(ण्ड)केशी** स्त्री तुण्डे (ण्डौ) मुखे कायति कै-क तुण्डि(ण्ड)कः कोष तत्र ईर्ष्ये तत्फलस्य शोभाधारणात् ईश-अच् गौरा०ङीष् । बिम्बिकायाम्(तलाकुचा) । शब्दच० ।

**तुण्डिभ(ल)** त्रि० तुण्डि+भ विभा० लच् वा । १वृन्दिले (भु ।ड़)युक्ते । अमर ।"वृन्द्(ण्डि) वलिम टेभे " पा०सू० । भूम्न्युपधोऽयमिति माधव । वाग्मी २मुखरे उणादि० ।

**तुण्डेल** पु० गर्भोपद्रावके असुरभेदे । "कुम्भिमत्सईस्वल तुण्डेलमत मारुडम्" अथ० ८।६।१७ ।

तुतात पु० मीमांसकभेदे । तेन प्रोक्तं ठक् । तौतातिक तत्प्रोक्तमीमांसादर्शने । तन्मतस्य दिङ्मात्रम् अर्हच्छब्दे ३८२ पृ० दर्शितम् । "नैवात्रापि गुरोर्मतं न विदितं तौतातिकं दर्शनम्" सा० द० ।

तुतुर्वणि पु० तूर्णीं निर्भञ्जनमस्य वेदे पृषो० । १तूर्णभञ्जने । "यज्ञायज्ञाय समाना तुतुर्वणि" ऋ० १।११६।१। "तुतुर्वणि त्वरमाणं समजमान" भा० । [त्यज्-त ।

तुत्थ स्तुतौ अद० चु० उभ० सक० सेट् । तुत्थयति ते अतुतुत-

तुत्थ पु० तुद्-थक । १प्रस्तरे उणा० । २अग्नौ संक्षिप्तसा० । (तुँते) ३अञ्जनभेदे न० । ४नील्याम्, ५सूक्ष्मैलायाम् स्त्री हेमच० । स्वार्थे क । तत्रार्थे । रत्नमाञ्जनस्य गुणाऽदिकं भावप्र० उक्तं यथा

"तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुणं तस्मात् वक्ष्यमाणगुणञ्च तत् । तुत्थकं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् । विषाश्मकुष्ठकण्डूघ्नं खर्परञ्चापि तद्गुणम्" भावप्र० अस्य शोधनम् "विष्ठायां मर्दयेत्तुत्थं मार्जारककपोतयोः । दशांशं टङ्कणं दत्त्वा पचेत् लघुपुटे ततः । पुटं दद्यात् पुटं क्षौद्रेण तुत्थविशुद्धये" भावप्र० "कासीसं रोचनां तुत्थं हरितालं मनःशिलाम्" सुश्रुतः । [६मयूरकण्ठे च राजनि० ।

तुत्थाञ्जन न० कर्म० । १अञ्जनभेदे (तुँते) । तद्वर्णत्वात्

तुथ पु० तु-थक् तुद-वधे थक् पृषो० वा । १दमनकर्त्तरि "तुथोऽसि जनधायो मर्तोऽसि" ताण्ड्यब्रा० १।४।२। "तुद्यतेर्वधकर्मणः तुथ एषः प्रभ्रंशनो हन्ता" भा० । २ब्रह्मणि । "तुथोऽसि विश्ववेदा" यजु० ५।२१ ।

"हे ब्राह्मणाच्छंसिन् त्वं तुथो विश्ववेदाश्चासि । ब्रह्म वै तुथः" इति श्रुतेः । ब्रह्मरूपोऽसि । विश्वं वेत्ति विश्ववेदाः सर्वज्ञः । यद्वा तुथशब्देन देवान् प्रति दक्षिणानां विभागकर्त्ता पुरुष उच्यते तदाह तित्तिरिः "तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजतीति" । "ब्रह्म वै तुथ" शत० ब्रा० ४।३।४।१६ । श्रुतेः । ३दक्षिणाविभाजके ब्रह्मरूपे ४ऋत्विग्भेदे ।

"तुथो वै विश्ववेदा विभजत्विति ब्रह्म वै तुथस्तदेना ब्रह्मणा विभजति । ब्रह्म वै दक्षिणीयं चादक्षिणीयं च वेद तुथो ह्यस्यैता दक्षिणीयायैव दत्ता भवन्ति नादक्षिणीयाय" । "रूपेण वो रूपमभ्यगां तुथो वो विश्ववेदा विभजतु" । यजु० ७।४५ "किं च तुथो ब्रह्मरूपः प्रजापतिः वो युष्मान् विभजतु यथायोग्यमृत्विग्भ्यो विभज्य ददातु "ब्रह्म वै तुथ इति श्रुतेः" वेददी० ।

तुद व्यथने तुदा० उभ० सक० अनिट् । तुदति ते अतौत्सीत् । अतुत्त तुतोद तुतुदे "तुतुदे गदयाश्वचारीन्" । "अतौत्सीत् गदयाश्वदस्" भट्टिः । "इषुभिरिव मानसं कामिनां तुदति कुसुमचापः" ऋतु० । "यथा तुदति मर्माणि" भा० स० २५२० ।

तुदादि पु० शप्रत्ययनिमित्ते धातुसमुदाये स च गणः कविकल्पद्रुमे धातुप्रसङ्गेन पठितः । 'तुदादिभ्यः श' पा० ।

आ+सम्यग्व्यथने । "प्रतोदेनातुदन् भृशम्" मनुः । "धनुःकोट्यातुद्य कर्णेन वीरम्" भा० आ० १ अ० ।

निस्+निष्पीडने । "इक्षुभिरिव निस्तुद्यते दग्धन एव पिपीलिकाभिः" । [१य तदपत्ये पु स्त्री० ।

तुद त्रि० तुद-क । व्यथके । तस्यापत्यं शुभ्रा० ढक् । तौ०

तुन्द न० तुदि अर्दने अच् बा० नि० । उदरे अमरः ।

तुन्दकूपी स्त्री ह्रस्वः कूपः कूपी तुन्दस्य कूपीव । १नाभौ त्रिका० । स्वार्थे क । २तुन्दकूपिकाप्यत्र हेमच० ।

तुन्दपरिमृज पु० तुन्दं परिमार्ष्टि परि+मृज-क इत० । १अलसे २मन्दे । अण् । तुन्दपरिमार्जोऽप्यत्र रमानाथः ।

तुन्दमृज त्रि० तुन्दमुदरं मार्ष्टि मृज-क । १अलसे २मन्दे च हेमच० ।

तुन्दादि पु० "तुन्दादिभ्य इलच्" पा० अस्त्यर्थे इलच्प्रत्ययनिमित्ते शब्दगणे स च गणः । पा०ग०सू० उक्तो यथा "तुन्द उदर पिचण्ड यव व्रीहि (स्वाङ्गाद्विवृद्धौ) विवृद्धौ कर्णौ यस्य स्तः कर्णिलः" । चादिनिठनौ मतुप् च । "तुन्दिल तुन्दी तुन्दिक तुन्दवान्" सि० कौ० ।

तुन्दिक(ल)(भ) त्रि० तुन्द विद्यतेऽस्य ठन् । तुन्दि+भ तुन्द+इलच् वा । तुन्दियुक्ते (भुँडि) युक्ते ।

तुन्दिकर पु० तुन्दि करोति कृ-अच् । (भुँड़ि) युक्ते तुन्दिले त्रिका० । [स्त्रियां ङीप् ।

तुन्दिन् त्रि० तुन्दोऽस्त्यस्य इनि । तुन्दयुक्ते (भुँड़ि)युक्ते

तुन्दिलफला स्त्री तुन्दिलं वृहत् फलमस्याः । त्रपुस्याम् (शशा) राजनि० ।

तुन्न पु० तुद-क्त । १नन्दिवृक्षे (तुँद) अमरः । २व्यथिते, ३छिन्ने च त्रि० । स्वार्थे क । अत्रैवार्थे ।

तुन्नवाय पु० तुन्नं छिन्नं वयति वे-अण् । १सौचिके, २सूच्याजीविनि (दरजी) अमरः । "शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च" मनुना तदन्नभक्षणं निषिद्धम् ।

तुन्नसेवनी स्त्री तुन्नं छिन्नं सीव्यतेऽनया सिव–करणे ल्युट् ङीप्। सूचीभेदे "प्रवेश्य तुन्नसेवन्या तच्चौ सीव्येत् ततः परम्" सुश्रुतः। [तुतुम्पतु तुतुम्पिथ।

तुम्प वधे भ्वा० सक० पर० सेट्। तुम्पति अतुम्पीत्। तुतुम्प

तुम्प वधे सक० क्रै गे अक० तु० पर० सेट्। तुपति-तुम्पति अतु(पी)म्पीत्। तुतु(प)म्प तुतु(प)म्पतु तुतुपिथ तुतुम्पिथ

तुम्फ वधे भ्वा० पर० सक० सेट्। तुम्फति अतुम्फीत्। तुतुम्फ तुतुफ(म्फ)तु। तुतुम्फिथ।

तुम्फ वधे सक० क्रै गे अक० तुदा० पर० सेट्। तुफति तुम्फति अतु(फ)म्फीत्। तुतु(फ)म्फ तुतुफ(म्फ)तुः तुतुफिथ तुतुम्फिथ।

तुप वधे भ्वा० पर० सक० सेट्। तोपति अतोपीत्। तुतोप।

तुप वधे सक० क्रै गे अक० तुदा० मुचादि० पर० सेट्। तुम्पति अतोपीत्। तुतोप। प्रारम्भ० सुट्। प्रस्तुम्पति।

तुप अर्हणे चुरा० उभ० सक० सेट् इदित्। तुम्पयति ते अतुतुम्पत्-त। तुम्प्यते। [अतोफीत्। तुतोफ।

तुफ वधे सक० क्रै गे अक० तु० मुचा० पर० सेट्। तुम्फति

तुफ वधे भ्वा० पर० सक० सेट्। तोफति अतोफीत्। तुतोफ।

तुब अर्हणे वा चुरा० उभ० सक० पक्षे भ्वा० पर० सेट् इदित्। तुम्बयति-ते तुम्बति अतुतुम्बत्-त अतुम्बीत्। [इदित्। अतुभत् अतोभिष्ट। तुतुभे।

तुभ हिंसे भ्वा० आत्म० लृदित् उभ० सक० सेट्। तोभते।

तुभ हिंसायां दिवा० क्र्या० च पर० सक० सेट्। तुभ्यति तुभ्नाति अतोभीत्। तुतोभ "शकुन्तो तदिमादभ्राद्- क्रूरोऽस्तु महोदरम्" "अवान् विनीमयोऽतुभ्रात्" भट्टिः।

तुम प्रेरणे आहनने च तुञ्चवत् माधवः। सक० भ्वा० पर० सेट्। तोमति अतोमीत् तुतोम तुम्र। तोमरः।

तुमुर न० तुमुल+लस्य रः। तुमुले अमरटीका।

तुमुल पुं न० सौ० तु–मुलच्। १परस्परसंघातेन सङ्कुले युद्धे २कलिद्रुमे मेदि० ३व्याकुलयुक्ते न० त्रिका०। "बभूव युद्धं तुमुलं जयैषिणोः" रघु ४सङ्कुलमात्रे त्रि०। "उभयोरपि पार्श्ववर्त्तिनां तुमुलेनार्त्तरवेण वेजिताः" रघुः

तुम्ब पुंस्त्री० तुम्बति इति तुबि–अर्हणे अच्। १अलाबाम् भरतः। २कटुतुम्बयाम्, राजनि०। ३अलावपात्र्याम्, ४गवि च स्त्री। स्वार्थे क तत्रार्थे यन्त्रत्रा०। स्त्रीगव्यां अलाव्यां स्त्री त्रिका०। टाप्।

तुम्बर न० तुम्ब तदाकारं राति–रा आदाने क। (तानपूरा) १वाद्यभेदे तुम्बरवक्रम्। २तुम्बरुगन्धर्वे च।

तुम्बरचक्र न० नरपतिजयचर्य्योक्ते चक्रभेदे चक्रशब्दे २ पृ० दृश्यम्।

तुम्बरु पु० गन्धर्वभेदे। "सुप्रिया चातिबाहुश्च विख्यातौ च हाहाहुहूः। तुम्बरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः" भा० आ० ६५ अ०।

तुम्ब(म्ब)वन न० देशभेदे स च देश: बृ० स० दक्षिणस्यामुक्तः "अथ दक्षिणेन लङ्केत्यु पक्रमे "तुम्ब(म्ब)वनकार्मणेयक याम्योदधितापसाश्रमा ऋषिका." १४ अ०।

तुम्बि(म्बी) स्त्री तुबि–इन्। १अलाब्वां (लाउ) शब्दरत्ना० वा ङीप् तत्रार्थे अमरः। "तुम्बी गोलांसतुल्या स्यात्" ति० त० नवम्यां तद्भक्षणनिषेधः। स्वार्थे क। तुम्बिका तत्रार्थे कटुतुम्ब्याञ्च राजनि०।

तुम्बिनी तुबि–णिनि ङीप्। कटुतुम्ब्यां राजनि०।

तुम्बिपुष्प न० तुम्ब्यैव पुष्पमस्याः। अलाम्बुजे शब्दा० रत्न०। अलाबुपुष्पे च।

तुम्बुक न० तुबि उक। अलाबफले शब्दचन्द्र०।

तुम्बुर पु० विन्ध्यपर्वतस्थे जातिभेदे। "ये चान्ये विन्ध्यनिलयास्तु(त्वा)भरास्तुम्बुराश्च" हरिवं०५ अ०। [मेदि०।

तुम्बुरी स्त्री तुबि+आ०उर गौरा० ङीष्। १धन्याके च

तुम्बुरु पु० १गन्धर्वभेदे जटा०। २वर्हुभावकभेदे हेम०। "गन्धर्वैः सहितः श्रीमान् प्रागायत च तुम्बुरुः" भा० आ० १२३ अ०। ३वृक्षभेदे। "तुम्बुरुः सौरभः सौरोवनजः सानुजोऽन्धकः। तुम्बरु प्रथितं तिक्तं कटु पाकेऽपि तत् कटु। रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च। वातश्लेष्मक्षिकर्णौष्ठशिरोरुग्गुरुतानुनित्। कुष्ठशूला- रुचिश्वासप्लीहकृच्छ्राणि नाशयेत्" भावप्र०।

तुम्र त्रि० तुम–प्रेरणे आहनने च रक्। १प्रेरके २हिंसके च "अनाहृष दार्षय तुम्रमिन्द्रम्" ऋ० ४।१७।८। "तुम्र प्रेरकम्" भा० "आगन्ता तुम्रो वृषभो मरुत्वान्" ऋ० ३।५।१। तुम्रः आहन्ता तुमिराहननार्थः" भा०।

तुर त्वरणे जुहो० पर० अक० सेट्। तुतोर्त्ति अतोरीत्। तुतोर। वैदिकोऽयम् धातुः "अपामिवेदूर्मयस्तर्तुराणा" ऋ०६।४७।३। ताच्छील्ये चानश्। अभ्यासस्यातोऽत्त्वं च "अग्निष्टे तुरतस्तुरस्" ऋ०६।१८।४। "अर्को वा यस्तुरते" तै० स०२।२।१२।४। वेदे गणव्यत्ययः पदव्यत्ययश्च। अस्मादन्त- तुरादित्वमपि। तुरयति। "तुरयन् शिवः" ऋ०४।३८।७।

तुर त्रि० तुर–क। वेगवति। "प्र तव्यसो नम उक्तिं तुरस्या- हम्" ऋ० ५।४३।८ "नहि त्वा शूरो न तुरो न धु

बाह्याः पञ्च तुष्टयो बाह्यविषयेषु पञ्चसु शब्दादिष्वर्जनरक्षणक्षयभोगहिंसादिदोषनिमित्तकोपरमाज्जायन्ते। ताश्च तुष्टयो यथाक्रमं पारं सुपारं पारापारमनुत्तमाम्भ उत्तमाम्भ इति परिभाषिता इति। कश्चित्तु इमां कारिकामन्यथा व्याख्यातवान्। तद्यथा विवेकसाक्षात्कारोऽपि प्रकृतिपरिणाम एवेत्यलं ध्यानाभ्यासेनेत्येवं दृष्ट्वा या ध्यानादिनिवृत्तौ तुष्टिः सा प्रकृत्याख्या। प्रव्रज्योपादानेनैव मोक्षो भविष्यति किं ध्यानादिनेति या तुष्टिः सोपादानाख्या। कृतसन्न्यासस्यापि कालेनैव मोक्षो भविष्यत्यलमुद्वेगेनेति या तुष्टिः सा कालाख्या। भाग्यादेव मोक्षो भविष्यति न मोक्षशास्त्रोक्तसाधनैरेवं कुतर्के या तुष्टिः सा भाग्याख्येत्यादिरर्थ इति तन्न। तद्व्याख्याततुष्टीनामभावस्य ज्ञानाद्यनुकूलत्वेनाशक्तिपरिभाषानौचित्यादिति"।

तुष–कर्त्तरि क्तिच्। ५गौर्य्यादिषु षोडशसु मातृषु मध्ये मातृभेदे। कुलदेवताशब्दे २१२० पृ० दृश्यम्। ६अनन्तदेवपत्न्याञ्च। "अनन्तपत्नी तुष्टिश्च पूजिता वन्दिताऽभवत्। यया विना न सन्तुष्टा सर्वे लोकाश्च सर्वतः" देवीभा०। "या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता" देवीमाहा०। "आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" मनुः।

**तुष्टिमत्** त्रि० तुष्टिरस्त्यस्य मतुप्। तोषयुक्ते। स्त्रियां ङीप्। २उग्रसेनात्मजे कंसभ्रातरि पु० "कंस सुनामा न्यग्रोध कङ्कः शङ्कुः सुहूस्तथा। राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानुग्रसेनजाः" भाग० ९।२४।१४।

**तुष्ट** पु० तुष–बा० तक्। कर्णस्थमणौ शब्दच०।

**तुष्य** पु० तुष–कर्त्तरि क्यप्। १महादेवे तुटितुटशब्दे दृश्यम्

**तुस** ध्वनौ भ्वा० पर० सक० सेट्। तोसति अतोसीत्। तुतोस।

**तुस** पु० तुष+पृषो०। तुषे धान्यत्वचि रमानाथ।

**तुस्त** न० तुस–क्त बा० इड्भावः। १रेणौ अमरे तुस्तेत्यत्र तुस्तेति पाठं मत्वा सारसुन्दर्य्यां व्याख्यातम्।

**तुह** अर्द्दने वधे भ्वा० पर० सक० सेट्। तोहति। इरित् अतुहत् अतोहीत्। तुतोह।

**तुह(हा)र** पु० तुह–बा० करन् कारन् वा। कुमारपारिषद्भेदे। "तुहरश्च तुहारश्च चित्रदेवश्च वीर्य्यवान्" भा० श० ४६ अ०। कुमारपारिषदोक्तौ।

**तुहिन** न० तुह्यतेऽनेन तुह–इनन् कस्य च। १हिमे अमर २चन्द्रतेजसि उज्ज्वल० "द्वयान्तलग्नैस्तुहिनैः पतद्भिः" ऋतुसं० "सान्द्रस्तुहिनान्तरित" प्रबोधच०।

**तुहिनकर** पु० तुहिनं करोत्यस्य। १चन्द्रे तुहिनांशुप्रभृतयोऽप्यत्र। २कर्पूरे च।

**तुहिनांशुतैल** न० ६त०। कर्पूरतैले राजनि०।

**तुहिनाचल** पु० ६त०। हिमालये तुहिनाद्रिप्रभृतयोऽप्यत्र।

**तुहुण्ड** पु० दनुवंश्ये दानवभेदे। "अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः। एकपादेकचक्रश्च विरूपाक्षमहोदरौ। निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा। शरभः शलभश्चैव सूर्य्यचन्द्रमसौ तथा। एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः" भा० आ० ६५ अ०। २धृतराष्ट्रपुत्रभेदे "नन्दको बाहुशाली च तुहुण्डो विकटस्तथा" १८६ अ०।

**तूड** अनादरे भ्वा० पर० सक० सेट्। तूडति अतूडीत्। तुतूड। ऋदित्। णिच् अतुतूडत् त।

**तूण** सङ्कोचे अद० चुरा० उभ० सक० सेट्। तूणयति ते। अतुतूणत् त।

**तूण** सङ्कोचे चु० उभ०सक०सेट्। तूणयति ते अतुतूणत् त।

**तूण** पूरणे चु० आ० सक० सेट्। तूणयते, अतुतूणत त।

**तूण** पु० तूण्यते पूर्य्यते वाणैः तूण-पूरणे कर्म्मणि घञ्। इषुधौ वाणाधारे अमरः।

**तूणक** न० "तूणकं भवेदिह रजौ रजौ ततश्च र" वृ० र० टीकोक्ते पञ्चदशाक्षरपादके छन्दोभेदे।

**तूणधार** पु० तूणं धारयति धारि-अण् उप० स०। तूणधारिणि धानुष्के। अस्य नियुक्तत्वात् "अणि नियुक्ते" पा० न आद्युदात्तत्वम्। किन्तु तत्पुरुषस्वरः।

**तूणव** पु० तूणस्तदाकारोऽस्त्यस्य केशा० व तूणं तदाकारं वाति वा–क वा। तूणाकारे वाद्यभेदे। "सैषा वाक् प्रजासु वदति या दुन्दुभौ या तूणवे या वीणायाम्" तै० स० ६।१।४।१। "वीणावादं क्रोशाय तूणवध्ममवरस्पराय" यजु० ३०।१९। "तूणव वाद्यभेदे ध्वनति सचाभूतम्" मेदनी०। "वीणावादं पाणिघ्नं तूणवध्मं तानृत्तायानन्दाय" यजु० ३०।२०।

**तूणवत्** त्रि० तूण+अस्त्यर्थे मतुप् मस्य वः। १तूणयुक्ते धानुष्के "धानुष्का बद्धनिस्त्रिंशास्तूणवन्तः समागताः" भा० व० ९अ०। ठन्। तूणिक इनि तूणिन् तत्रार्थे त्रि० स्त्रियां ङीप्। तूणिन्। नन्दिवृक्षे पु० राजनि०।

**तूणी** स्त्री तूण्यते पूर्य्यते शरैः तूण–पूरणे घञ् गौरा० ङीष् । १इषुधौ २तूणे ३नील्यां शब्दार्थचि० । ४तूणे स्त्री टाप् शब्दार्थचि० ।

**तूणीक** पु० तूणीव कायति कै–क । नन्दिवृक्षे राजनि० ।

**तूणीर** पु० तूण्यते पूर्य्यते शरैः तूण–पूरणे बा० ईरन् । १तूणे इषुधौ अमरः ।

**तूतक** न० तुत्थ+पृषो० । तुत्थे (तुँतिया) शब्दच० ।

**तूतुजान** पु० तुजि–बधे कानच् तुजा० अभ्यासदीर्घः बा० नलोपः । १क्षिप्रे निघण्टुः । २प्रेर्य्यमाणे च तुजधातौ दृश्यम् ।

**तूतुजि** स्त्री तुजि–बधे दाने वा कि द्वित्वे तुजा० अभ्यासदीर्घः नलोपः । १क्षिप्रे निघण्टुः २दातरि च । "जघ्नेऽनूतुजि चित्तूतुजिरशिश्नत्" ऋ० ७।२८।२ । "तूतुजिर्दाता" भा० ।

**तूतुज्यमानास** पु०तुजि–बधे कर्मणि शानच् द्वित्वम् अभ्यासदीर्घः बा० नलोप तथाभूतः असति दीप्यते अस–दीप्तौ अच् कर्म्म० । क्षिप्रे निघण्टुः ।

**तूतुम** त्रि० तुज–अच् द्वित्वे अभ्यासदीर्घः पृषो० । १तूर्णे साधय "सवना तूतुमा कृधे" ऋ० १०।५०।५ । "एता विश्वा सवना तूतुमा कृधे" ऋ०१०।५०।६। "तूतुमा तूर्णानि" भा० ।

**तूद** पु० तुद–घञर्थे कर्म्मणि क पृषो० । १तूलवृक्षे राजनि० । अश्वत्थाकारे (पार्श्वपिप्पल) ख्याते वृक्षे भावप्र० "तूद पक्वं गुरु स्निग्धं हिमं पित्तानिलापहम् । तदेवाम गुरु सरं वीर्य्योष्णं रक्तपित्तकृत्" ।

**तूदी** स्त्री देशभेदे । तूदी अभिजनोऽस्य ढक् । तौदेय पित्रादिक्रमेण तूदीदेशवासिनि त्रि० ।

**तूपर** पु० शृङ्गहीने १पशौ । स्त्रियां टाप् । तस्य शृङ्गहीनत्वकारणं यथा

"तासान्त्वेव वाऽनुवत्तासामङ्गा एवैनौ द्वादशौ मासौ न संवत्सरमापयामेति तासां द्वादशसु मासेषु शृङ्गाणि प्रावर्त्तन्त ता सर्व्वमन्नाद्यमाप्नुवन्ता एतस्तूपरास्तासा सर्वान् द्वादशमास प्रेरते सर्वं हिता अन्नाद्यमाप्नुवन्" ताण्ड्य०ब्रा०४।१।२। "दशस्तो वैक्षणमध्योतमार्थः, तासांगवां मध्ये काश्चिदनुवन् किमित्युच्यते, यौ द्वादशौ द्वादशसङ्ख्यापूरकावेव विद्यावेकादशद्वादशौ मासौ इमौ अस्माकमङ्गा एव अनुभावैव अनुभाय प्रारब्धं संवत्सरसाध्य समापयामेति व्यवस्थितायेति वचिताया व्यवस्थितेन सम्बन्धः, तासां गवां जातानि शृङ्गाणि द्वादशसु मासेषु मासेषु पूर्णेषु प्रावर्त्तन्त प्रापतन् दशभिर्मासैः शृङ्गप्राप्तिलक्षणफले सिद्धेऽपि पुनरन्तरया यतो मासद्वयमन्वतिष्ठन् यतो जातानामपि शृङ्गाणां पुनः पतनमित्यभिप्राय, तथा चैतरेयकम् "अथ समापयिषाम संवत्सरमित्यासत तासामन्तरया शृङ्गाणि प्रावर्त्तन्तेति" । एतास्तूपरा इति ताः पतितशृङ्गा गाव सर्वस्य भक्ष्यमन्नाद्यमदनीयमन्न प्राप्नुवन् ता गावस्तूपरा शृङ्गहीनाः दृश्यन्ते तस्मात्ताः सर्वान् द्वादश मासौ मासान् प्रेरते प्रगच्छन्ति ईर गतौ शीतवातातपेषु सर्वदा पुष्टाङ्गा एव यथायथं गच्छन्ति शृङ्गिणो महिषादयस्तु कृशा भवन्ति, तथादित्युक्तं कस्मादित्याह हि यस्मात्ता गावः सर्वमन्नाद्यमाप्नुवन् तस्मात् सर्वर्त्तुषु पुष्टाङ्गा भवन्ति तथा चैतरेयकम् "ऊर्ज्जमसमन्वत तस्मात्ता सर्वमृतानारत्तसिरन्तीति" भा० । "प्राजापत्यांश्च समदश यज्ञामतूपरान् पशून्" कात्या० श्रौ० १४।२।१२ "अश्वस्तूपरो गोमृगस्ते प्राजापत्या" यजु० ।२४।१ ।

**तूबर** पुस्त्री० सौ० तु+क्विप् तू वृ–वृद्धौ अच् कर्म० । तूपर+पृषो० पस्य वो वो । १तूपरे कालेऽजातशृङ्गे पशौ २कालेऽजातश्मश्रुके पुरुषे ३अव्यक्तपुरुषलक्षणे च "अपि तूबरकं चिरं कर्णस्य बलमाद्धवत्" भा० द्रो० ११२ अ० "तस्य तूबरकं नाम बभ्राविनमविद्यकम्" भा० उ० ११८ अ० । ४कषाये रसे पु० ५तद्वति त्रि० । ६आढक्यां ७सौराष्ट्रमृत्तिकायां स्त्री गौरा० ङीष् ।

**तूय** न० तोय+पृषो० । १जले निघण्टुः । तू–भावे सम्प० क्विप् तां याति या–क वा । २क्षिप्रे न० "देव हरिभिर्याहि तूयम्" ऋ० ३।४३।२ "तूयं क्षिप्रम्" भा० । ३क्षिप्रतायुक्ते त्रि०। "अश्विना ते मन्दिन इन्द्र ! तूयान्" ऋ० १०।२८।२ । "तूयानभिवञ्चितान्" भा० ।

**तूर** हिंसे, सक० वेगे अक० दिवा० आत्म० सेट् । तूर्य्यते अतूरिष्ट । तुतूरे ।

**तूर्** त्रि० तुर–कर्त्तरि क्विप् ।१वेगयुक्ते । भावे सम्प० क्विप् । २वेगे स्त्री "पूर्भिर्नवेम विद्विताभिरक्षयतूर्भिः" भा० २। ७।२८। "अक्षयतूर्भि अवसन्नवेगाभिः" श्रीधर ।

**तूर** न०तूर्य्यते ताड्यते सुखमात्तेन तुर–घञर्थे कर्मणि क । १वाद्यभेदे (डामाइ) हेमच० । २ताड्यमाने पटहादौ शब्दार्थचि० । [ भूसुरे भावप्र० ।

**तूरी** स्त्री तूर तदाकारोऽस्त्यस्या अच् गौरा० ङीष् ।

ोकाम् अव्य० तूष्णीम्+अकच्प्रकरणे तूष्णीम काम् मत्वव्य" वार्त्ति० काम् मित्त्वादन्त्यादच पर । तूष्णीं शब्दार्थे । "तूष्णीकामास्ते"सि०कौ० ।

ीङ्गङ्ग अव्य० तूष्णीं गङ्गा यत्र "अन्यपदार्थे च सञ्ज्ञायाम्" पा० बहुव्रीह्यर्थे अव्ययी० । १देशभेदे । "अपाङ्गद च पुण्याख्य भृगुतुङ्ग च पर्वतम् । तूष्णीगङ्ग च कौन्तेय । सामात्यः समुपस्पृश" भा०व० १२५अ० । तूष्णीगङ्गे इत्यत्र सप्तम्या वा न लुक ।

ीम् अव्य०तूष वा०मीस् स्वरादि ।१मौने(चुपकरा)अमर । "यत्किञ्चित् दश वर्षाणि सन्निधौ प्रेक्षते धनी। भुज्यमान परैस्तूष्णीं न स तल्लब्धुमर्हति" मनुः "परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुख "भा०शा०१०२अ०। तूष्णींशब्दे उपपदे "तूष्णीमि भुव"क्त्वाणमुलौ तूष्णीं भूय तूष्णीं भावम् ।"तूष्णींभूय भयादाशाञ्चक्रिरे क्षणपचिषः"भट्टि। क्त्वा च इति"पा०वा समासाभावेतूष्णीं भूत्वा।

ीम्भाव पु० तूष्णीम्+भू–घञ्। तूष्णीम्भवने मौनावलम्बने"अनिमिषनयननिरीक्षणे तूष्णींभावादयस्तत्र"सा० द० "तूष्णींभावेऽपि विज्ञेयं न चेद्भवति कारणम्" भा० शा०१०२अ० ।

ू न० तुस–बा० तनु दीर्घश्च । १रेणौ । २जटायाञ्च मेदि० ३पापे ४कल्के च शब्दच० ।

ा+तूस्त–णिच्। तूस्तस्य हनने। वितूस्तयति तूस्त केश इत्येके जटीभूता केशा इत्यन्ये पापमित्यपरे सि०कौ० ।

हणा न०तृन्हि–भावे ल्युट्। हिंसने। [पा तत्र पाठः तत्रार्थे।

न् पु०स्तेने निघण्टुः रिक्त्यत्र पाठान्तरम् तका त्रिकोति

 गतौ भ्वा० पर०सक० सेट् । तृक्षति अतृक्षीत् ततृक्ष ।

 पु० तृक्ष–अच् । काश्यपे ऋषौ तस्यापत्य गर्गा० यञ् । तार्क्ष्य गरुडे अश्वे विहगमात्रे च तार्क्ष्यशब्दे दृश्यम्

ाक पु०तृक्ष–आकन् । ऋषिभेदे ततोऽपत्ये शिवा० अण् । तार्क्षाक तदपत्ये ।

े पु० तृक्ष–इन् । त्रसदस्यौ पुत्रे ऋषिभेदे । "येभिस्तृक्षि वृषणा त्रासदस्यवम्" ऋ० ८।२२।७ । "त्रासदस्यवं त्रसदस्यो पुत्र तृक्षिमेतन्नामकम्" भा० ।

 न० तृप–क पृषो० । जातीफले ।

ृच न० तिसृणामृचां समाहारः तिस्र ऋचो यत्र वा अच्समा० वा सम्प्रसारणम् ।१समानदेवताकानां समानच्छन्दस्कानामृचा त्रये २तद्युक्ते अनुवाकसूक्तादौ त्रि० । "अधुवाता तृच अमेव" हेमाद्रिव्रातकस्य । "वायोर्घोरिति तृचैर्वत्स्यदुपाक्षरत्" कात्या० श्रौ० १७।१।८। सूक्तपरत्वे न० "नायत्रं तृच दश त्रयीषु विद्यते" निरु० १२।४० । वा सम्प्रसारणाभावे तृचमप्यत्र ।

तृण भक्षे तना० उभ० सक० सेट् । तृणोति तर्णोति तृणुते तर्णुते । अतर्णीत् अतर्णिष्ट । उदित् तर्णित्वा तृष्ट्वा ।

तृण न० तृह–नक् हलोपश्च । १नडादौ, खटे (खड़) । अमर । "तृणेन वात्येव तयाऽनुगम्यते" नैष० । "लघुर्भवेत्तृण नरः" माघ । तृणस्याय शिवा० अण् । तार्ण तृणजन्ये वह्नौ पु० "तार्णीतार्णोभय भातीति" जगदीश । तृणसन्निभमात्रे त्रि० । घोषादि० उत्तरपदस्थे तृणशब्दे पूर्वपदमाद्युदात्तम् । ग्रामतृणमित्यादि। समूहार्थे पाशा० य । तृण्या तृणसमूहे स्त्री तत्र भवः । उत्करा० मत्वर्थे छ भक्ता० लुक् च । तृणीय तृणभवे त्रि० ।

स्वल्पं तृण कन्। तृणक स्वल्पतृणे "क्रोणीष्वेतान् तृणकेनापि राजन्!"भा०आ०८१अ०। स्वार्थे क। तत्रार्थे ।

तृणकर्ण पु० तृणमिव कर्णोऽस्य । ऋषिभेदे ततः शिवा० अपत्यादौ अण् । तार्णकर्ण तद्गोत्रापत्ये । यस्का०बहुषु अणो लुक्। तृणकर्णास्तद्गोत्रापत्येषु ब० व० ।

तृणकाण्ड न० तृणानां समूहः दूर्वा० काण्डच् । तृणसमूहे

तृणकुङ्कुम न० तृणजात कुङ्कुमम् । सुगन्धद्रव्यभेदे राजनि० । "तृणकुङ्कुम कटूष्ण कफपित्तविनाशनम् । वातशोफपामकण्डूकुष्ठामदोषनाशनम् । परम भास्वरं तत्तु भिषग्भिः परिकीर्त्तितम्" राजनि० तद्गुणा उक्ताः ।

तृणकुटी स्त्री तृणाच्छादिता कुटी शा०त० । तृणाच्छादिते गृहे त्रिका० । तृणकुटीरादयोऽप्यत्र (कुड़ेघर) ।

तृणकूर्म्म पु० तृणमयः कूर्म्मः । तूम्बरी शब्दमा० ।

तृणकेतु पु०तृणेषु केतुरिव श्रेष्ठत्वात् असारत्वाद्वा । १वंशे, २तालवृक्षे, तृणद्रुमतृणध्वजावप्यत्र । राजनि० । स्वार्थे क । तत्रार्थे ।

तृणगण्ड पु० तृणमिव गण्डोऽस्य । उच्चिङ्गटे (उच्चिङ्गड़ा) कीटभेदे मेदि० । [२तृणजलौकायाञ्च ।

तृणगोधा स्त्री तृणमिव गोधा । १गोधाकृतिकायां मेदि०

तृणगौर न० तृणमिव गौर पीतम् । तृणकुङ्कुमे राजनि०।

तृणग्रन्थि स्त्री तृणमिव ग्रन्थिरस्य । स्वर्णजीवन्त्याम् राज०

तृणग्राहिन् पु० तृण गृह्णाति ग्रह णिनि ६त०। नीलमणौ राजनि० ।

तृणचर पु० तृणेषु चरति चर—अच्। १गोमेदमणौ २तृणचारिमात्रे त्रि०।

तृणजम्भन् त्रि० तृणं जम्भो भक्ष्यमस्य तृणमिव जम्भो दन्तोऽस्य 'जम्भा सुहरित तृणसोमेभ्य' पा० कृतसमासान्तः नि०। तृणभक्षके तृणतुल्यदन्तयुक्ते च। शब्दकल्पद्रुमे अदन्तोक्तिः प्रामादिकी पा० सू० नान्ततयैव निपातनात्।

तृणजलायूका स्त्री० तृणाकारा तृणजाता वा जलायूका जलौकाभेदे। "तद्यथा तृणजलायूका तृणस्यान्तं गत्वात्मानमुपसंहरत्येवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वात्मानमुपसंहरति" शत० ब्रा० १४।७।२।४। तृणजलूकादयोऽप्यत्र स्त्री 'यथा तृणजलूकेवं नापयात्यपयाति च' भाग० ४।२९।७६।

तृणजलौकान्याय तृणजलौकाया यथा अपरदेशसंयोगानन्तरं पूर्वदेशवियोगस्तत्तुल्ये जीवस्यापरदेहसंयोगेन पूर्वदेहपरित्यागरूपे न्याये। स च नैयायिकानां तृणजलूकाशब्दे दर्शितस्तथा कल्पित। तदेतन्मतं शा०भा० व्यासस्त्र तन्मूलश्रुतेरन्यार्थत्वं प्रदर्श्य दूषयित्वा छा० उ० पञ्चाग्निविद्युक्तौऽस्युते अन्यविध एव संसरणप्रकार उक्तः। यथा "मन्वन्ते श्रुति तृणजलौकावत् पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रमतीति दर्शयति। इति। तद्यथा तृणजलायूकेति, (तृणजलायूकाशब्दे दर्शिता) तत्राप्युपरिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं तृणजलूकयोपमीयत इत्यविरोध। एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति याः पुरुषमतिप्रभवाः कल्पना" इत्युपक्रमे 'ताः सर्वा एवानादर्तव्या श्रुतिविरोधात्'। "नन्वेतद्देहं त्यक्त्वाऽग्निं सङ्गतस्य पश्चाद्देहान्तरप्राप्तिरित्ययुक्तम्। यथा तृणजलायूका तृणान्तरं गृहीत्वा पूर्वतृणं त्यजति तथा जीवो देहान्तरं गृहीत्वा पूर्वदेहं त्यजतीति श्रुतिविरोधादिति शङ्कते नन्विति। इहैव कर्मार्यसमाविदेहं देहोऽहमित्यादिभावनया गृहीत्वा पूर्वदेहं त्यजतीति श्रुत्यर्थः। अतो न विरोधः, इति समाधत्ते, तत्रापीति भावनया दीर्घभावो भाविदेहविषयत्वम्। घटाकाशवदुपहितो जीवः सूक्ष्मोपाधिगत्या लोकान्तरं गच्छतीति पञ्चाग्निश्रुत्युक्तप्रकारस्याविरोधादन्याः कल्पना अनादर्तव्या इत्यन्वय" रत्नप्र०।

तृणजाति स्त्री तृणमेव जाति। उलपादौ (खड़)।

तृणज्योतिस् न० तृणेषु मध्ये ज्योति ज्योतिष्मत्। रात्रौ प्रकाशवत्यां ज्योतिष्मत्यां लतायाम् शब्दार्थचि०।

तृणता स्त्री तृणमिव तायते ताय—क्विप्। १धनुषि तृणस्य भाव तल्। २तृणत्वे च मेदि०।

तृणद्रुम पु०तृणमिव द्रुम असारत्वात्। १नारिकेले, २ताले, ३गुवाके, ४ताल्यां, ५केतक्यां, ६खर्जूरे, ७हिन्ताले, ८खर्जूर्य्यांञ्च। "फलसद्देशमेते च हिन्तालसहितास्त्रय (तालनारिकेलगुवाका) खर्जूरं केतकी ताली खर्जूरी च तृणद्रुमा" अमर।

तृणधान्य न० तृणमिव धान्य अकृष्टोत्पन्नत्वात् शाक० त०। १नीवारे, अमर० २श्यामाकादौ च।

तृणध्वज पु०तृणेषु ध्वज इव। १तालवृक्षे २वंशवृक्षे च अमर

तृणनिम्ब पु० तृणाकार निम्ब। नेपालनिम्बे किराततिक्ते (चिरता) राजनि०।

तृणप पु० तृण पाति -पा क। गन्धर्वभेदे। "युगपस्तृणप कार्ष्णिर्नन्दिश्चित्ररथस्तथा" भा०आ०१२३अ०। गन्धर्वोक्तौ।

तृणपञ्चमूल न० तृणरूपाणां पञ्चानां मूलम्। कशेरुशररा-मकाशकर्कटकात्मके पञ्चमूले वैद्यकम्। [राजनि०।

तृणपत्रिका स्त्री तृणस्येव पत्रमस्त्यस्या ठन्। इक्षुदर्भाया

तृणपत्री स्त्री तृणमिव पत्रमस्या गौरा० ङीष्। गुण्डासिन्यां राजनि०।

तृणपदी स्त्री तृणस्येव पादोऽस्या अन्त्यलोप कुम्भप० ङीपि पद्भाव। तृणतुल्यमूलयुक्तायां लतायाम्।

तृणपीड न० तृणस्येव पीडा यत्र। युद्धभेदे "तृणपीडं यथाकामं पूर्वयोगं ससट्टिकम्। एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्" भा० स० २२अ०।

तृणपुष्प न० तृणजातं पुष्पम्। तृणकुङ्कुमे १गन्धद्रव्यभेदे राजनि०। तृणमिव पुष्पमस्या ङीप्। २सिन्दूरपुष्पीवृक्षे स्त्री राजनि०। [स्वार्थे क। तृणपुष्पिकाऽप्यत्र स्त्री मेदि०।

तृणपुली स्त्री तृणनिर्मिता पुली। चञ्चायां (चाँच) हारा०

तृणमणि पु० तृणग्राहको मणि शा० त०। तृणग्राहिणि मणिभेदे हारा०।

तृणमत्कुण पु० प्रतिभुवि (जामिन्) त्रिका०।

तृणमय त्रि० तृणस्य विकार शरा० मयट्। तृणविकारे "कुर्य्यात् तृणमयं चापं शयीत मृगशायिकाम्" भा० आ० १४५ अ०। स्त्रियां ङीप्। [तालवृक्षे अमर।

तृणराज पु० तृणेषु राजते राज अच् ६त० टच् समा०श।

तृणवल्वजा स्त्री तृणरूपा वल्वजा। वल्वजायां राजनि०।

तृणविन्दु ऋषिभेदे "जयद्रथेन पापेन यत् कृष्णा क्लेशिता

वने । यातेषु त्वगयास्त्वेव तृणविन्दोरथाश्रमम्" भा० व० ६२अ० ।' तृणविन्दुप्रसादाच्च धौम्यस्य च महात्मन" भा० वि० १६ अ० । "द्रौपदीमाश्रमे न्यस्य तृणविन्दो-रनुमया" भा० व० २६२ अ० । "चरतः किल दुश्चर तप तृणविन्दोः प्रतिशङ्कित सुरा" रघु ।

**तृणविन्दुसर** इत०। तृणविन्दोः ऋषेः सरोरूपे तीर्थे तत्-स्थान भारते उक्त यथा 'मरुभूमे गिर स्थान तृणविन्दुसर प्रति" भा० द २५७ अ० ।

**तृणवीज** न० ६त० । श्यामाके धान्ये रत्नमा० ।

**तृणशीत** न० तृणेषु शीतम् । १कत्तृणे गन्धतृणे रत्नमा० । २जलपिप्पल्या स्त्री राजनि० ।

**तृणशून्य** न०।१तृणमिव शून्य फलरहितम् । केतकीपुष्पे २म-ल्लिकायाञ्च मेदि० तयो फलरहितत्वात्तथात्वम् । तृणेन शून्यम । ३तृणरहिते त्रि० ।

**तृणशूली** स्त्री तृण शूलमिव तीक्ष्णाग्र यस्याः गौरा०ङीष् । लताभेदे । "सुरभ्यास्तृणशूल्याश्च विल्मुवारस्य यानि च" (पुष्पाणि) सुश्रु० ।

**तृणशोषक** पु स्त्री तृणमपि शोषयति शुष -णिच् -ण्वुल् उप० स० । राजिमत्सर्पभेदे । अहिशब्दे ५८१ पृष्ठे दृश्यम्

**तृणशौण्डिका** स्त्री तृणेषु शौण्डिका । लघुकेतकीवृक्षे । भास्करनिघण्टु । [हारा० ।

**तृणषट्पद** पु० तृणमिव षट्पद । (बोलता) वरोले

**तृणसारा** स्त्री तृणस्येव सारोऽस्या । १कदल्याम् हारा० । तस्या सर्वथाऽसारत्वात्तथात्वम् ।

**तृणसिंह** पु० तृणे-सिंह इव । कुठारे शब्दार्थच० ।

**तृणसोमाङ्गिरस** पु दक्षिणदिक्स्थिते धर्मराजस्य ऋत्विग्भेदे "उन्मुचु प्रमुचुश्चैव स्वस्त्यात्रेयश्च वीर्यवान् । दृढव्य योऽगस्त्यश्च तृणसोमाङ्गिरास्तथा । निलावरुणयो-पुत्रस्तथाऽगस्त्य प्रतापवान् । धर्मराजर्त्विज सप्त-दक्षिणा दिशमाश्रिता भा अनु० १५० अ० ।

**तृणस्कन्द** तृणमिव स्कन्दति स्कन्द-अच् । तृणवृक्षत-स्वभावे "तृणस्कन्दस्य तु विश" ऋ० १।१७२।२ ।

**तृणहर्म्य** पु न०तृणव्याप्तौ हर्म्ये । तृणव्याप्ते हर्म्ये हारा०

**तृणाक्षिप** पु०तृणरूपोऽक्षिप । मन्थानतृणे राजनि० ।

**तृणाग्नि** पु० तृणजातोऽग्नि शा० त०। तार्थे वह्नौ त्रिका०। "ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति" मनु ।

**तृणाञ्जन** पु० तृणमिवाञ्जन । कृकलासे त्रिका० ।

**तृणाटवी** स्त्री तृणप्रचुराटवी । तृणमये वने हेम० ।

**तृणाढ्य** न० तृणेषु आढ्यम् । पर्वतजाते तृणे राजनि० ।

**तृणादि** पु० चतुरर्थ्यां सप्रत्ययनिमित्ते शब्दगणे स च गण पा० ग० सू उक्तो यथा "तृण, नड, मूल वन, पर्ण वर्ण, वराण, विल, पुल, फल, अर्जुन, अर्ण, सुवर्ण, पल, चरण, बस," ।

**तृणाम्ल** न० तृणेषु अम्लम् । तृणजलवणे राजनि० ।

**तृणारणिन्याय** पु० तृणस्यारणेश्च वह्निजनने यथा परस्पर-निरपेक्षतया कारणत्वमेव स्वातन्त्र्येण कारणतासूचके न्यायभेदे ।

**तृणावर्त्त** पु०तृणमावर्त्तयति भ्रमयति आ+वृत-णिच्-अण् । १वात्यारूपे वातसमूहे(घूर्णी)२तद्रूपदानवभानके असुरभेदे पु०

**तृणासृज्** न०तृणेषु असृगिव रक्तत्वात् । तृणकुङ्कुमे राजनि०

**तृणेक्षु** पु० तृणमिक्षुरिव मधुररसत्वात् । यक्षजायां राजनि०।

**तृणेन्द्र** पु० तृणमिन्द्र इव । तृणराजे ताले वृक्षे । "कलो-मञ्च इति ख्याता भविष्यति धराधर । त्रिगिरास्तस्य देवस्य शातकुम्भमयो द्रुम । ध्वजस्तृणेन्द्रो देवस्य भवि-ष्यति रथाश्रित" भा० अनु० १४७ अ० ।

**तृणोत्तम** पु० तृणेषु उत्तम । उलूकले तृणे राजनि०।

**तृणोद्भव** पु० तृणेषूद्भवति उद्+भू-अच् । १नीवारे धान्यभेदे राजनि० । २तृणजाते वह्नौ च ३तज्जातमात्रे त्रि० ।

**तृणोल्का** स्त्री तृणजाता उल्का । तृणजातायामुल्कायाम् 'न हि तापयितु शक्य सागराम्भस्तृणोल्कया 'हितो० "तृणोल्कया ज्ञायते जातरूप वृत्तेन भद्रो व्यवहारेण साधुः" भा० उ० ३४ अ० । (घर) । हेमच० ।

**तृणौकस्** न० तृणनिर्मितमोक । तृणनिर्मित गृहे (खडेर

**तृणौषध** न० तृणात्मकमौषधम् । एलवालुकाख्ये गन्धद्रव्ये शब्दच ।

**तृण्या** स्त्री तृणानां समूह पाशा० य । तृणसमूहे ।

**तृतीय** त्रि त्रयाणा पूरण त्रि+तीयत् सम्प्रसारणञ्च । त्रयाणां पूरणे । "वाग्दण्ड प्रथम कुर्यात् धिग्दण्ड तदनन्त-रम् । तृतीय धनदण्ड तु वधदण्डमत परम" "मातु प्रथमत पिण्ड निर्वपेत् पुत्रिकासुत । द्वितीयन्तु पितु तस्यास्तृतीय तत्पितु पितु " मनु ।

**तृतीयक** पु० तृतीयेऽह्नि भव रोग कन् । तृतीयदिनभवे ज्वरभेदे स च 'दिनमेकमतिक्रम्य यो भवेत् स तृती-यक" इत्युक्तलक्षण ।"वाताधिकत्वात् प्रवदन्ति तज्ज्ञा स्तृतीयकस्यापि चतुर्थकस्य" सुश्रुत ।

**तृतीयप्रकृति** स्त्री तृतीया प्रकृति प्रकार । स्त्रीपुरुषा

भेदया तृतीये प्रकारे नपुंसके अमरः । तत्र तृतीयाप्रकृतिरिति व्यस्तं पदं समस्तत्वे तृतीयप्रकृतिरित्येव स्यात् व्यस्तपाठदर्शनात् शब्दकल्पद्रुमे तृतीयाप्रकृतिशब्दकल्पनं प्रामादिकम् ।

**तृतीययुगपर्य्यय** पु० तृतीयस्य युगस्य द्वापररूपस्य पर्य्ययः परिवर्त्तो यत्र काले । द्वापरयुगस्य परिवर्त्ताधारे कलिसन्धिरूपे काले "द्वापरे समनुप्राप्ते तृतीययुगपर्य्यये" भाग० १।४।१५ श्लो० । इतः परं किं भविष्यतीति द्वापरे सन्देहे जाते इत्यर्थं तेन न विरोधः ।

**तृतीयसवन** न० सूयते सोमोऽस्मिन् कर्म्म० । कालत्रये सवनत्रयोपेताग्निष्टोमादेः तृतीये सवने । तद्विधानादि हारीत० ब्रा० १।६।१७ भाष्ये उक्तं यथा "तृतीयसवनारम्भमादित्यग्रहमाचरेत् । आर्भवेण स्तुतीताय पश्वङ्गैः प्रचरन्त्यथ । सावित्रवैश्वदेवाख्यौ ग्रहौ सौम्यचरुस्तथा । पात्नीवतग्रहादूर्द्ध्वं यज्ञायज्ञीयसाम च । अग्निमारुतशस्त्रं स्यात् स्तुतीयात् हारियोजनम् । समाप्ते सवने पश्चात् कुर्य्यादवभृथं ततः । कुर्य्यादुदयनीयेष्टिमनूबन्ध्या यजेत गाम् । देविकानिर्वपेद्देवसूनाञ्चापि यजून्यथ । उपांशु वेदिमाग्नेयमिष्टाग्निष्टोमसंस्थितिः" "प्रातःसवने मोत्रै कर्म्माणि" कात्या० श्रौ० ८।६।१८ "प्रातःसवने यान्युच्चैः कर्म्माणि प्रैषोच्चारणादीनि तान्यपि प्रथमस्वरेणैव कार्य्याणि "मन्द्रं प्रातःसवने चरन्तीति" शाखान्तरात् । अतश्च श्रीदग्नीन्विहरेत्यादयः प्रैषा आश्रावणादयश्च प्रथमस्वरेणैव प्रयोज्याः" कर्कः । "मध्यमेन माध्यन्दिने" १९सू० "माध्यन्दिने सवने यानि कर्म्माणि नीचैर्यानि चोच्चैस्तान्युभयान्यपि मध्यमेन स्वरेण कार्य्याणि शाखान्तरे तथा श्रवणात्" कर्कः । "उत्तमेन तृतीयसवने" २०सू० "तृतीयसवने यानि नीचैर्यानि च मध्यमेन स्वरेण प्राप्नुवन्ति तानि सर्वाण्युत्तमेन तृतीयेनैव स्वरेण कार्य्याणि तथैव शाखान्तरे श्रुतत्वात्" कर्कः ।

**तृतीया** स्त्री तृतीय+टाप् । १चन्द्रमण्डलस्य तृतीयकलाक्रियायां २तदुपलक्षिते कालभेदे च तत्र व्रतादिकालव्यवस्थादि तिथिशब्दे ३२९० पृ० दर्शितम् । जन्मनक्षत्रापेक्षया ३तृतीयद्वादशैकविंशात्मकनक्षत्ररूपविपत्तारायाञ्च ।

**तृतीयाकृत** त्रि० तृतीय+डाच्+कृ–क्त । १त्रिगुणं कृष्टे त्रिवारकृष्टे क्षेत्रादौ ।

**तृतीयाश्रम** पु न० कर्म्म० । वानप्रस्थाश्रमे । "उषित्वैवं वने विप्रो द्वितीयादाश्रमात् परम् । वनौपयिकसंयुक्तस्तृतीयन्तु समाश्रयेत्" संवर्त्तसं० ।

**तृतीयिन्** त्रि० तृतीय+अस्त्यर्थे इनि । तृतीयभागार्हे । "सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः" मनु । दक्षिणागोशतविभागे ।

**तृक्षु** त्रि० तृद–बा० सुक् । हिंसके । "गव्या तृक्षुभ्यो अजगन्युधा नृन्" ऋ० ७।१८।७ । "तृक्षुभ्यो हिंसकेभ्यः" भा० २राजर्षिभेदे "व्यानवस्य तृक्षवे गयम्" ऋ० ७।१८।१९। "तृक्षुः राजर्षिभेदम्" भा० । [प्रतर्द्दने ।

**तृद** हिंसायां भ्वा० प०सक० सेट् । तर्द्दति अतर्दीत् ततर्द्द ।

**तृद** अनादरे रु०उभ०सक०सेट् । तृणत्ति तृन्ते । इरित् अतर्दीत् अतृदत् अतर्द्दिष्ट । उदित् तर्द्दित्वा तृत्वा । "भूतिं तृणद्मि यज्वानाम्" भट्टि "क्रतस्य श्लोको बधिरा ततर्द" ऋ० ४।२३।८ "ततर्द तरसा विष्णुः शीर्षे शत्रुनिबर्हणः" हरिव० १३४ अ० । "सेहे कपोरथाश्वांश्च रिपोस्ततर्द शार्ङ्गिणा" "अतर्दीच्चैव शूलेन कुम्भकर्णं प्लवङ्गमान्" भट्टि ।

**तृदिल** त्रि० तृद–बा०किलच् । १भेदके २भिन्ने च । "तृदिला अतृदिलास" ऋ० १०।९४।११। "तृदिला भेदका अतृदिला अभिन्ना" भा० ।

**तृन्प(म्प)** प्रीणने तु० पर० सक० सेट् । तृपति तृम्पति अतृम्पीत् अतृपीत् । ततृम्प ततृप ।

**तृन्फ(म्फ)** प्रीणने तु० प० सक० सेट् । तृफति तृम्फति अतृम्फीत् अतृफीत् ततृम्फ ततृफ ।

**तृन्ह** हिंसे तु० प० सक०सेट् क्त्वा वेट् । तृहति तृढित् अतृहत् । ततृंह ततृहतु ततृहुः ।

**तृप** प्रीणने स्वा०पर०सक०सेट् । तृप्नोति अतर्पीत् । ततर्प ।

**तृप** सन्दीपने प्रीणने च वा चुरा० उभ० पक्षे भ्वा० पर० सक०सेट् । तर्पयति ते तर्पति अततर्पत् त अतीतृपत् त । अतर्पीत् । ततर्प ततर्पिथ ।

**तृप** प्रीणने दि०पर० सक०वेट् इरित् । तृप्यति अतर्पीत् अताप्सीत्-अत्राप्सीत् अतृपत् । ततर्प ।

**तृप** प्रीणने तु० पर० सक० सेट् । तृपति अतर्पीत् । "तृपत्सोम पाहि" ऋ० २।११।१५ ।

**तृपत** पु० तृप । चन्द्रे उणादि० । [सचिप्रसा० ।

**तृपाना** स्त्री तृप कानच् । १लतायाम् २उणा० ।

**तृपल** न०तृप–कलच् । १उपले प्रस्तरे । "अपा तमन्युस्तृपलप्र-

भगो” ऋ० १०।८८।५ । तृपलप्रभर्मा धावादिभिः क्षिप्र प्रहारी” भा० । २त्रिफलायाञ्च ।

**तृप्त** त्रि० तृप–क्त । १तृप्तियुक्ते । “नित्य तृप्ता स्वदेहस्य देपायनस्य धर्म्मत” भा०व०५८अ० । “स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः । पितरः पादशौचेन स्विष्टान्नेन तृप्यति” पु० ।

**तृप्ति** स्त्री० तृप–क्तिन् । भोजनादिना आकाङ्क्षानिवृत्तौ “वार्षीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी” मनु “तस्या त्वमेषा क्षुधितस्य तृप्त्यै” रघुः ।

**तृप्तिमत्** त्रि० तृप्ति+अस्त्यर्थे मतुप् इनि तृप्तमनेन इष्टादि० इनि वा । १तृप्तियुक्ते स्त्रियां ङीप् । २उदके निघण्टुः ।

**तृप्णु** त्रि० तृप–क्नु । तृप्तिशीले ।

**तृप्र** पु० तृप रक् । १पुरोडाशे उज्ज्वलद० । २तर्पके त्रि० “न य शुक्रो न दुराशीर्न तृप्रा” ऋ० ८।२।५ “तृप्राजर्पकाः” भा० ३दुःखे न० ततः अस्त्यर्थे अालु । तृप्रालु तद्वति । “तृप्र दु खमिति माधव” सि०कौ० । ४घृते न० उणादि० ।

**तृफ** प्रीणने तुदा० पर० सक० सेट् । तृफति अतर्फीत् । ततर्फ । तृफतेरपि कलच् इत्युज्ज्वलदत्त । दुर्गादासस्तु अत्र तुदादित्वभ्रान्त्या तृम्फतीत्युदाजहार । तच्चिन्त्यं पा० मुचादिमध्ये तृफधातोस्तत्फोर्न नात् उज्ज्वलदत्तेन तृफतेरिति निर्देशात् । मुचादयश्च सि०कौ०।५६२ धातौ दृश्या । तृम्फादिशब्दे दृश्य ।

**तृफला** स्त्री तृफ–कलच् । त्रिफलायाम् उज्ज्वलद० ।

**तृफू** स्त्री तृफ–कू । सर्पजातौ उणादि० ।

**तृम्फादि** “तृम्फ तुम्फ तृम्फ दृम्फ ऋम्फ गुम्फ उम्फ शुम्फ” पा० धातुपाठोक्ते धातुगणभेदे ।

**तृष** तृष्णायां दिवा०पर०सक०सेट् । तृष्यति इरित् अतृषत् अतर्षीत् । ततर्ष । “तृषिते वाणिज स्वादु पिबन्त सरितां पय” । “प्रमूर्च्छन्तमेवमूरुद तत तृषुरोमधे भटा” “रक्ष-मणीतेषु तृषा सतापे कपयोऽतृषन्” भट्टि ।

**तृष्(षा)** स्त्री तृष–सम्प०क्विप् वा टाप् । १आकाङ्क्षायां २पि पासायां ३कामकन्यायाञ्च शब्दर० । ४लाङ्गलीवृक्षे शब्दच० “लोभो जनयते तृषा तृषार्त्तो दुःखमाप्नोति” हितोप० । “तृषा हि मे सुमन्दती त्वा दृष्ट्वा तृड्भुमाश्रितम्” भा० आनु०५५ अ० । “न घ्नन्ति मयूरकुल तृषाकुल” अन्नः ।

**तृषाभू** स्त्री ६त० । तृष्णाधारे क्लोमनि शब्दच० तृष्णाशब्दे चर कवाक्ये क्लोमस्य तृष्णास्थानत्व दृश्यम् । [(सीती)स्त्री शब्दच०

**तृषाह** न० तृषां हन्ति हन–ड । १जले २मधुरिकायां

**तृषित** त्रि० तृषा जातास्य तार०इतच् । १तृष्णान्विते हेमच० “तृषितान्याहये भोक्तु अपमानाभि वै भगम्” हरिव० ६०अ० । [शब्दच० ।

**तृषितोत्तरा** स्त्री तृषित उत्तरं यस्याः । अग्निमन्थवृक्षे

**तृषु** न० तृ–सुर–षा शुक् ष्टपो० । १क्षिप्रे निघण्टुः । २तद्वति त्रि० स्त्रियांतुदन्तगुणवचनत्वात् ङीप् । “तृष्वीमनु प्रसिति द्रूणानोऽस्तासि” ऋ० ४।४।१ । “तृष्विति क्षिप्र-नाम भरतेर्वा त्वरतेर्वा निरु०” भा० । “तृषु यदन्ना तृषुणा” ऋ० ४।७।११ ।

**तृष्ट** त्रि० तृष–क्त भेदे वा० इड्भाव । १दाहजनके “तृष्टमेतत् कटुकमेतत्” ऋ० १०।८५।३४ । “तृष्ट दाह-जनकम्” भा० ।

**तृष्टामा** स्त्री तृष्ट दाहमनयति गमयति अन णिच्–अच् १नद्याम् “तृष्टामया प्रथम यातवे” ऋ०१०।७५।६ । “तृष्टामया नद्या” भा० ।

**तृष्णज्** त्रि० तृष नजिङ् । १लुब्धे अमर । “ऋषिर्ह तृष्ण गोतमाय तृष्णजे” ऋ० १।८५।११ ।

**तृष्णा** स्त्री०तृष न किच् । १पिपासायां, २लोभे, ३अप्राप्ताभि-लाषे च अमर ४रोगभेदे । तन्निदानादि भावप्र० उक्त यथा

“भयश्रमाभ्यां बलसङ्क्षयाद्वा ऊर्द्धं चित पित्तविवर्द्ध-नैश्च । पित्त सवात कुपित नराणां तालुप्रपन्न जनयेत् पिपासाम् । स्रोत स्वपावाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तो । तिस्र स्मृतास्ता क्षतजा चतुर्थी क्षया-त्तथाम्यामसमुद्भवा च । भुक्तोद्भवा सप्तमिकेति तासा निबोध लिङ्गान्यनुपूर्वशस्तु” । नराणां चित सञ्चान एव सञ्चित पित्त सवात पित्तविवर्द्धनैः कट्वम्लोष्णादिभि कुपितम् । भयश्रमाभ्या बलसङ्क्षयादुपवासादेश्च वात कुपितः । तद्द्वय ऊर्द्ध प्रसरत् तालुप्रपन्न सत् पिपासां जनयेत् । न केवल तालुन्येव दूषिते तृष्णा भवति किन्तु जलवाहिस्रोत स्वपि । अत आह । स्रोत स्वित्यादि । नन्वत्र वक्तव्यचनमयुक्तम् । यतो जलवहे द्वे स्रोतसी सुश्रुतेनोक्ते । उच्यते । तयोरेवानेकशता नयोगाश्च दोष । अपायाहिषु स्रोत स्विति जिह्वादे-रप्युपलक्षणम् । यत आह चरक । “रसवाहिनीश धमनीर्जिह्वामूलगलतालुक्लोम च । संशोष्य नृणां देहे कुरुतस्तृष्णामतिबली पित्तानिलाविति” । सङ्ख्यामाह तिस्र इत्यादि । तृष्णायाः सामान्य लक्षणमाह ।

"सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति। सुश्रु०। काङ्क्षति तोयन्तु त तृष्णार्द्दितस्तान्दिशेत्। वातजायालक्षणमाह। क्षामास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरःसु चापि। स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति"। शङ्खशिरःसु शङ्खयोः शिरसि च। स्रोतो निरोधः। पित्तजामाह "मूर्च्छान्नविद्वेषविलापदाहारक्तेक्षणत्वं प्रततश्च शोषः। शीताभिनन्दो मुखतिक्तता च पित्तात्मिकायां परिधूपनञ्च"। विलापः प्रलापः प्रततश्च शोषः अविरतश्च शोषः। शीताभिनन्दः शीतेच्छा। परिधूपनं कण्ठाद्धूमनिर्गम इव। कफजामाह। "वाष्पावरोधात् कफसंवृतेऽग्नौ तृष्णा बलासेन भवेन्नरस्य। निद्रागुरुत्वं मधुरास्यता च तयार्द्दितः शुष्यति चातिमात्रम्"। अग्नौ जठराग्नौ। कफसंवृते स्वकारणकुपितेन कफेनोपरिष्टादाच्छादिते। वाष्पावरोधात् अग्नेरूष्मावरोधात्। अवरुद्धामकोष्मणास्य बहुस्रोतःशोषणात् बलासेन कफेन नरस्य तृष्णा भवेत्। तया तृष्णया अर्द्दितः पीडितः शुष्यति कृशो भवति। क्षतजामाह। "क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु"। क्षतस्य शस्त्रादिक्षतयुक्तस्य। रुक् पीडा। क्षयजामाह। "रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु। पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः। रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग् व्यवस्येत्"। रसक्षयलक्षणानि सुश्रुतेनोक्तानि "रसक्षये हृत्पीडा कम्पः शोषः शून्यता तृष्णा चेति"। व्यवस्येत् जानीयात्। आमजामाह। "त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री"। भुक्तोद्भवामाह। "स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्वन्नमेवाशु तृषां करोति"। लवणञ्चेति चकारात् कटु च। उपसर्गजामाह "क्षीणस्वरः प्रताम्य दीनाननहृदयशुष्कगलतालुः। भवति खलु सोपसर्गात् तृष्णा सा शोषिणी कष्टा"। शोषिणी धातुशोषिणी। उपसर्गानाह। "ज्वरमोह क्षय श्वासो बाधिर्य्यं कास एव च। बहिर्निर्गतजिह्वस्य सप्तैते तदुपद्रवा"। तदुपयुक्ताया अरिष्टमप्याह "ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहिनाम्। सर्वास्त्वतिप्रसक्तारोगकृशानां वमिप्रसक्तानाम्। घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेया"। आदिशब्दाद्वीसारादीनां ग्रहणम्। अतिप्रसक्ता निरन्तराः। घोरोपद्रवयुक्ताः अतीव सर्वशोषादियुता।

तृष्णाशब्दस्य बह्वचोऽन्त्येन द्वन्द्वे उभयपदे प्रकृतिस्वर।

तृष्णाक्षय पु० तृष्णायाः क्षयो यत्र। १शान्तिगुणे हेमच०। ६त०। २पिपासानाशे च।

तृष्णारि पु० ६त०। १पर्पटे राजनि०। २तृष्णानाशके च।

तृष्णालु त्रि० तृष्णा+अस्त्यर्थे आलु। तृष्णायुक्ते। "तृष्णालुर्भवति पूतनाग्रहीत" सुश्रु०।

तृष्य त्रि० तृष–ऋदुपधत्वात् क्यप्। १लोभ्ये २पयपीये। भावे क्यप्। ३लोभे न०। तृष्यशब्दस्य मतुपि वेदे दीर्घः। तृष्यावत्। तृष्णायुक्ते। "अभ्यवर्षंस्तृष्यावत प्रावृष्यागतायाम्" ऋ०७।१०२।२। तृष्यावतस्तृष्णायत" भा०।

तृह हिंसे तु० पर० सक० वेट्। तृहति अतर्हीत् अतृहत्।

तृह हिंसे वा चु० उ० पक्षे रुधा० पर० सक० वेट्। तर्हयति ते तृणेढि अततर्हत् त अतीतृहत् त अतर्हीत् अतृहत्। "तृणेढु रामः सह लक्ष्मणेन" भट्टिः।

तॄ तरणे प्लवने अभिभवे च भ्वा० प० सक० सेट्। तरति अतारीत्। ततार। "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" "तरति शोकमात्मवित्" श्रुति शत०ब्रा०१३।७।१।१२ "ततार ताराधिपखण्डधारी" कुमा० "क्रमेण तस्मिन्नथ तीर्णदृक्पथे" नैष०। तेरतुः। तरीरिता तरि(री)ष्यति। तीर्य्यात्। तरीतुं तरितुं तीर्णः तीर्य्यते। तारयति तितीर्षति। "तितीर्षुर्दुस्तरं मोहात्" रघु। "तांस्तु तत्तुं प्रयच्छामीमित्यभाषः हनूमान्।
अति+अतिक्रम्य गमने। "स्वर्गानतितरन्ति ते" हितो०। "न यस्य कश्चातितितर्त्ति मायाम्" भाग०८।५।३०। यङ्लुङोरूपम्।
वि+अति+विशेषेण अतिक्रमे। "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति" गीता। [भीम्" भा० द्रो० २८०।
अभि+उल्लङ्घने। "कथं नाभ्यतरामस्तां पाण्डवानामनीकि-
अव+अवनमने। "अथोरुदेशादवतार्य्य पादम्" कुमा०। अवतार। "अवतरतः सिद्धिपथं शब्दस्य मनोरथस्य वा" मालविकाग्नि०।
उद्+उत्थाने अक०। "सपल्वलोत्तीर्णवराहयूथम्" रघु०। उल्लङ्घने सक०। "उदतारीदुदन्वन्तम्" "उदतारिषुरम्भोधिम्" भट्टि०। [१५५६६ श्लो०।
निस्+नि शेषेण तरणे। "कथन्नु निस्तरेयाम्नात्" भा०व०
वि+दाने। "तडित्स्वलाखञ्चीर्वितरति पताकावलिरियम्" "ज्योत्स्ना महामिव वितरति" १ किरा०।
सम्+सम्यक् तरणे (साँतार देखोया)।

"तेजखदस्तु सुखम्" तैत्ति० १।७,७।२। स्त्रियां ङीप् सा च २गजपिप्पल्यां शब्दरत्ना० ३चविकायां रत्नमाला ४महाज्योतिष्मत्यां राजनि०। अत्र मतुबन्तेन सान्तत्वात् मस्य पदत्वाभावे तेजोवतीत्यपि तत्रार्थे।

**तेजस्विन्** त्रि० तेजस्+अस्त्यर्थे विनि। तेजोयुक्ते "तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते" माघ। स्त्रियां ङीप्। सा च २ज्योतिष्मतीलतायां शब्दर०। ३महाज्योतिष्मतीलतायाम् राजनि०। "तेजस्विनी कफश्वासकासाऽऽस्यामयवातहृत्। पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी" भावप्र०।

**तेजित** त्रि० तिज–णिच्–क्त। शाणिते तीक्ष्णीकृते अमर०

**तेजिष्ठ** त्रि० तेजस्विन्+अतिशये इष्ठन् विनेर्लुकि डिल्लात्। अतिशयेन तेजस्विनि। "तेजिष्ठया तिग्मवस्य वर्तनी" ऋ०।१।५३।८।

**तेजीयस्** त्रि० तेजस्विन्+अतिशये ईयसुन् विनेर्लुकि डिल्लात्। अतितेजस्विनि। "तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा" भाग० १०।३३।२९। स्त्रियां ङीप्।

**तेजेयु** पु० रौद्राश्वन्टपस्य पुत्रभेदे। "रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः" इत्युपक्रमे। "तेजेयुर्बलवान् धीमान् सत्येयुरिन्द्रविक्रम" भा० आ० ९४ अ०।

**तेजोनाथ** तीर्थभेदे शिवपु० दृश्यम्। [रत्नमा०।

**तेजोमन्थ** पु० तेजो मथ्नाति मन्थ–अण्। गणिकारिकायाम्।

**तेजोमय** त्रि० तेजस्+प्रचुरार्थे विकारे वा मयट्। १तेजःप्रचुरे २तेजोविकारे ३ज्योतिर्मये च। स्त्रियां ङीप्। "तेजोमयी वाक्" इति छा० उ० श्रुतिः। "तस्य तेजोमया लोका भवन्ति ब्रह्मवादिन" मनु।

**तेजोमात्रा** स्त्री तेजसः सत्त्वगुणस्य मात्रा अंश। इन्द्रियेषु भूतानां सात्त्विकांशेभ्य एव तेषामुत्पत्तिः शास्त्रसिद्धा।

**तेजोमूर्त्ति** पु० तेजस्तेजोरूपा मूर्त्तिर्यस्य। १सूर्ये २तेजआत्मके ३तेजःप्रचुरे च त्रि०। "स गच्छति परं स्थानं तेजोमूर्त्तिपथर्जुना" मनु।

**तेजोरूप** न० तेजः सर्वप्रकाशकं चैतन्यं रूपं स्वरूपं यस्य। ज्योतीरूपे प्रकाशात्मके ब्रह्मणि "अशरीरं विपश्चदतिन्द्रियमतीन्द्रियम्। यद्साक्षि सर्वसाक्षि तेजोरूपं नमाम्यहम्" ब्रह्मवै० पु०। हत०। २तेजसो रूपे च अभिन्नशब्दे तद्रूपं दर्शितम्।

**तेजोवत्** त्रि० तेजस्+अस्त्यर्थे मतुप् मस्य वा०न पदत्वम्। तेजोयुक्ते स्त्रियां ङीप्। सा च (तेजस्वत्)शब्दोक्तार्थेषु।

"तेजोवता लोकगणेन सार्द्धम्" मत्स्यपु०। अग्नप्रायाद्यनमन्त्र

**तेजोविन्दु** पु० उपनिषद्भेदे उपनिषच्छब्दे दृश्यम्। [राजनि०।

**तेजोवृक्ष** पु० तेजोयुक्त वृक्ष शा० त०। क्षुद्राग्निमन्थवृक्षे

**तेजोवृत्त** न० तेजस वीर्यस्यानुरूप वृत्तम्। वीर्यानुरूपचरिते। "इन्द्रास्यार्कस्य वायोश्च यमस्य वरुणस्य च। चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत्" मनु०।

**तेजोह्वा** स्त्री तेजः ह्वयते स्पर्द्धते ह्वे–क। तेजस्विन्यां लतायाम् भावप्र०। "कम्पिल्लकः शशिन्दूर तेजोह्वा तत्काश्चये"सुश्रु०। [२। "तेटनीं देवतां प्रीणामि" वेदटी०।

**तेदनी** स्त्री देवताभेदे "तेदनीमवरकण्ठेनाय" यजु० ७५।

**तेन** अ० तद्+वा० एन। १तद्‌शब्दार्थे भरत। ते इति न इति शब्दौ यत्र। २गानाङ्गभेदे पु०। "तेनेति शब्दस्तेन स्यानुमङ्गलानां प्रदर्शकः। तेशब्देनोच्यते गौरी नशब्देनोच्यते हरः। तेन माङ्गलिकत्वाय शब्दस्तेन इति स्मृत" सङ्गी० दा०।

**तेप** कम्पे, च्युतौ च भ्वा० आ० अक० सेट्। तेपते अतेपिष्ट। तितेपे। ऋदित्। अतितेपत् त।

**तेम** पु० तिम–घञ्। आर्द्रीभावे। अमर।

**तेमन** न० तिम–ल्युट्। १आर्द्रीकरणे। कर्मणि ल्युट्। २व्यञ्जने। अमर। आधारे ल्युट् ङीप्। ३चुल्लीभेदे हेमच०।

**तेलु** पु० न्टपभेदे तत्र राजन्या०विषये देशे युञ्। तैलवक तेलुन्टपविषये देशे। [तितेवे। ऋदित् अतितेवत् त।

**तेव** क्रीडने भ्वा० आ० अक० सेट्। तेवते अतेविष्ट।

**तेवन** न० तेव–भावे ल्युट्। १क्रीडायाम्। आधारे ल्युट्। २केलिकानने हेमच०।

**तैड** पु० तिडां व्याख्यानः ग्रन्थ अण्। तिडां व्याख्याने ग्रन्थे

**तैजस** न० तेजसो विकारः अण्। १घृते, २धातुद्रव्यमात्रे च। साङ्ख्योक्ते ३रजोगुणोत्पन्ने त्रि०। "वैकारं सात्त्विको नाम तैजसं राजसः स्मृत। भूतादिस्तामसस्तेऽपि पृथक् तत्त्वान्यथासृजन्" पदार्थादर्शधृतवाक्यम्।

"सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" सा०का०। "ननु यदि सत्त्वतमोभ्यामेव सर्वं कार्य्यं जन्यते तदा क्षतमकिञ्चित्करेण रजसेत्यत आह तैजसादुभयं तैजसात् राजसादुभयं गणद्वयं भवति। यद्यपि रजसो न कार्य्यान्तरमस्ति तथापि सत्त्वतमसी स्वयं क्रियासमर्थे अपि न स्वस्वकार्य्यं कुरुतः रजस्तु चलतया ते यदा चालयति तदा स्वस्वकार्य्यं कुरुत इति तदुभयस्मिन्नपि कार्य्ये सत्त्वतमसो

क्रियोत्पादनद्वारेणापि रजसः कारणत्वमिति न व्यर्थं रज इतित०कौ०। तिज निशाने इत्यस्मादसुन् तेन तेज सा हतः तैजसः रजसश्च सत्वतमसो स्वस्वतेजकार्य्यसम-र्थत्वकरणरूपतैक्ष्ण्यकरणगुणयोगात् तेज पदाभिधेयता इति तदाशयः "तैजसादिन्द्रियाण्याहुन्" सा०त०। सत्त्व गुणस्य प्रकाशकत्वात् "तैजसमन्तःकरणमिति" वेदान्तप०। ४तीर्थभेदे न०। "तैजसं नाम तत्तीर्थं यत्र तीर्थेष्वपां पतिः। अभिषिक्त सुरगणैर्वरुणो भरतर्षभ।" भा०श०४७ अ० एतद्व्यष्टिपहित चैतन्य तैजसो भवति। तेजोम यान्तःकरणोपहितत्वात्" वेदान्तसारोक्ते ५ चैतन्यभेदे पु०।

तैजसावर्त्तनी स्त्री तैजस धातुद्रव्यमावर्त्यतेऽत्र आ+वृत णिच्–आधारे ल्युट् ङीप्। मूषायाम्।(मुची) अमर

तैतल पु० ऋषिभेदे ततः तिका० अपत्ये फिञ्। तैतला-यनि तदपत्ये पुस्त्री।

तैतिक्ष त्रि०तितिक्षा शीलमस्य छत्रादि० ण। तितिक्षाशीले।

तैतिक्ष्य पुस्त्री० तितिक्षस्य ऋषिभेदस्य गोत्रापत्य गर्गा० यञ्। तितिक्षर्षिगोत्रापत्ये तस्य छात्राः कण्वा० अणि यञो लोपः। तैतिक्षाः तैतिक्ष्यस्य छात्रेषु ब०व०।

तैतिर पुंस्त्री० तैत्तिर पृषो०। (तितिर) खगे–राजनि०। स्त्रियां ङीप्।

तैतिल पु० १गण्डकपशौ। २ववादितस्तुर्थे करणे न० मेदि०। ३देवे च। "यक्षिसदयेन दानेनावाधितघर पीतवतैतिलगणः" दशकु०। तैतिलयवद्स्य कडूवद्रे न समासि पूर्वपदप्रकृतिस्वरः।

तैतिलिन् पु० गोत्रप्रवर्त्तकर्षिगणस्य प्रवरभेदे।

तैत्तिर न० तित्तिरीणां समूहः अण्। १तित्तिरखगसमूहे। तित्तिर+स्वार्थे अण्। (तितिर) खगभेदे पुस्त्री राजनि०। गण्डकपशौ च मेदि०।

तैत्तिरि पु० कुक्कुरवंश्यनृपभेदे। "कुक्कुरस्य सुतो वृष्णि-र्वृष्णोऽस्तु तनयस्तथा। "कपोतरोमा तस्याथ तैत्तिरि-स्तनयोऽभवत्"। हरिव० ३८अ०। २ऋषिभेदे। आद्यः कठस्तैत्तिरिश्च वैशम्पायनपूर्वजः" भा० शा० ३३८ अ०। २कृष्णयजुःप्रवर्त्तके ऋषिभेदे।

तैत्तिरीय पु०ब०व०तित्तिरिणा प्रोक्तमधीयते छण्। १तित्ति-रिप्रोक्तशाखाध्येतृषु स्वार्थे क। तैत्तिरीयकाप्यत्रार्थे। यजुः शाखाभेदे। तन्नामनिरुक्तिः यथा।

"वैशम्पायनः सोऽपि छर्दित्वा यजुषां गणम्। ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान्। यजूंषि तित्ति-राभूत्वा तल्लोलुपतया ददुः। तैत्तिरीया इति यजुः शाखा आसन् सुपेशलाः" भाग० १२।

तैन्तिडीक त्रि० तिन्तीडिकेन संस्कृतम् कोपधत्वात् अण्। तिन्तिडीकसंस्कृतव्यञ्जनादौ। तस्य विकारः कोपधत्वात् अण्। २तिन्तिडीकविकारे च।

तैमिर तिमिरमेव अण्। नेत्ररोगभेदे "दृष्टेर्न कृष्णाञ्जन-शाल्यकाधात् मोक्षीरोग तैमिराञ्जनेन" सुश्रु०। तैमिरो रोगोऽस्त्यस्य ठन् तैमिरिक। तिमिररोगयुक्ते। "न वामयेत्तैमिरिकोर्ध्ववातगुल्मोदरप्लीहकृमिप्रमार्त्तान्" सुश्रु०। "तैमिरिका इवादूरदर्शिनम्" काद०।

तैर न० तीरे भव अण्। कूवत्ये राजनि०।

तैरणी स्त्री तीरे नमति नम–डा०ड ततः स्वार्थे अण् गौरा० ङीष्। कुनोल्यां रागदे क्षुपभेदे।[तिर्यग्जातिबन्धाश्चिनि

तैरश्च त्रि०तिरश्चामिदम् तिर्यञ्च अण्+भत्वात् तिरश्चादेश।

तैर्थ त्रि० तीर्थे दीयते कार्य्यं वा व्यु टा० अण्। १तीर्थे देये २तीर्थकार्य्ये च तीर्थात् आयस्थानादागतः शुण्डिका० अण्। तीर्थरूपायस्थानादागते द्रव्यादौ च।

तैर्थक त्रि० तीर्थे देशे भवः धूमा० वुञ्। तीर्थदेशभवे।

तैर्थिक त्रि० तीर्थं सिद्धान्तविषय निश्चयरुपेति वेदा० ठञ्। १तीर्थसिद्धान्ताभिज्ञे शास्त्रकरे कपिलकणादादौ तीर्थं वेत्ति ठञ् वा। २सिद्धाभिज्ञे। तीर्थे भवः ठञ्। ३तीर्थभवे। "तैर्थिकाभुञ्जते यस्य मण्डिमागच्छ" भा०व०८५ श्लो०।

तैर्थ्य त्रि० तीर्थ+चतुरर्थ्यां० सङ्का० ण्य। तीर्थसमीपादौ।

तैर्य्यगयनिक त्रि० तिरश्चामयन सत्रभेदः तदेव ठञ्। सत्रभेदे। "अष्टादशभिर्ज्योयाग्यादित्यः संवत्सर एव तैर्यगयनिको भवति। आदित्यः खलु सप्तदेवदा सप्त-माधाद्दक्षिणेति नव चाङ्गानि तथा दक्षिणा" श्रुति।

तैर्य्यग्योन त्रि० तिर्य्यग्योनेरिदम्+अण्। तिर्य्यग्योनीनां पश्वादीनां सम्बन्धिनि सर्गभेदे। "अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति। मानुष-श्चैकविध समासतो भौतिकः सर्गः" सा० का० तैर्य्य-ग्योनश्च पञ्चधा भवति पशुमृगपक्षिसरीसृपस्थावरात्मक" त० कौ०। तत्र भवः अण्। तद्योनिभवे। "निन्दन्त्यवमता सन्तं तैर्य्यग्योनास्तथैव च" मनुः।

तैल न०तिलस्य तत्सदृशस्य वा विकारः अञ्। तिलसर्षपादि जनिते स्नेहद्रव्यभेदे। तद्गुणादिक भावप्र० उक्त यथा "तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम्। तत्तु वातहरं सर्वं विशेषात्तिलसम्भवम्। अथ तिलतैलगुणा

तैलपूर्णे काष्ठादिनिर्मिते पात्रविशेषे । घलावस्थिति गुणा । वातरोगव्याधिकुष्ठरोगपङ्गुत्वाधिर्यं भ्रमि,भ्रमगद्गद कम्पकुब्जत्व,गुध्रसीविसर्पश्नगात्रकम्पकपाटीपीडाभङ्गाप-तन्त्रकक्षयरुधिरभवमूत्रकृच्छ्रपस्मारोगेषु छिन्नत्वमिति" राजवल्लभ ।

**तैलधान्य** न० तैलोपयोगि धान्यं सदृश शस्यम् ।"तिलोऽतसी च तोरी (री) च त्रिविधश्चापि सर्षप । द्विधा राजी कुसुम्भैव बीज कौसुम्भसम्भवम् । एतानि तैल-धान्यानीत्युक्तेषु तिलादिषु ।

**तैलपक** पु०तैल पिबति पा-क स्वार्थे क । तैलपायिकाख्ये पक्षयुक्ते कीटे । तैलहरणे तज्जातिताप्रिर्मनुनोक्ता यथा "मार्ग स्तम्भोवपा मद्गुस्तैलं तैलपक खग " [भावप्र०।

**तैलपर्णिका** पु० तैलाक्तमिव पर्णमस्य कप् । ग्रन्थिपर्णवृक्षे

**तैलपर्णिक** न० तैलपर्णी गिरिभेद उत्पत्तिस्थानत्वेना-स्त्यस्य ठन् तैलाक्त पर्णमस्त्यस्य ठन् वा । १हरिचन्दने अमर । तिलपर्णी इव उत्पत्तिस्थानत्वेनास्त्यस्य ठन् । २चन्दनभेदे ।

**तैलपर्णी** स्त्री तिलपर्णी गिरिस्तत्र भव अण् ङीप् ।१चन्दने २श्रीवासे ३सिह्लके च मेदि० । स्वार्थे क । तैलपर्णिका तत्रार्थे । "काश्मिरकाद्गुरुवाच छिन्नवत्तैलपर्णिका" हरिव० २३१अ० । [राजनि० ।

**तैलपा** स्त्री तैल पिबति पा-क । (तेलापोका) कीटभेदे ।

**तैलपायिका** स्त्री पा-ण्वुल् इत० । (तेलापोका) (आरसुला) कीटभेदे अमर ।

**तैलपायिन्** पु० तैलं पिबति पा-णिनि । तैलपायिकाख्ये पक्षयुक्ते कीटभेदे ।"तैलहृत् तैलपायी स्यात्" याज्ञ०।

**तैलपिपीलिका** स्त्री तैलाक्तेव पिपीलिका । पिपीलिकाभेदे

**तैलपीत** त्रि० पीत तैल येन आहि०परनि०। पीततैलके ।

**तैलफल** पु० तैल फले यस्य । इङ्गुदीवृक्षे राजनि० ।

**तैलभाविनी** स्त्री तैल भावयति वासयति भू-णिनि ङीप् । तैलवासके जातीपुष्पवृक्षे राजनि०।

**तैलमाली** स्त्री तैलेन माल सम्बन्धो यस्याः गौरा० ङीष् । वर्त्तिकाया दीपदशाया शब्दमाला ।

**तैलम्पाता** स्त्री तिलस्य पातोऽत्र ञ नि०मुम् च । १स्वधायाम्, २तदुपलक्षिते श्राद्धे च अमर ।

**तैलयन्त्र** पु० तैलमर्दनार्थं यन्त्रम् । तिलादिनिष्पीडनार्थे यन्त्रभेदे (कलुरघानि) "अश्मोमांसानि गोपानि तैलयन्त्रेषुयन्त्रयो" स्मृति "रविरथचक्र च तैलयन्त्र चक्रवत् भ्रमत्" भागवते ५।२१।१८ श्लोक० ।

**तैलमक** पु० तैलङ्गस्य विषयो देश राजन्या० वुञ् । तैलङ्गपविषये देशे । [रमिच०।

**तैलवल्ली** स्त्री तैलाक्तेव वल्ली । कटुशतावर्य्यां पारस्क

**तैलसाधन** न० तैल साधयति सुरभीकरोति सिध-णिच साधि-ल्यु । कक्कोले गन्धद्रव्ये शब्दच०। [मिदे हेमच०।

**तैलस्फटिक** पु० तैलाक्त स्फटिक इव । रत्नभेदे गो-

**तैलस्यन्दा** स्त्री तैलमिव स्यन्दति स्यन्द-अच् । १श्वेत गोकर्ण्यां २काकोल्यां पारस्करनिघण्टु ।

**तैलागुरु** पु० तैलाक्तमिवागुरु । दाहागुरौ राजनि० ।

**तैलाटी** स्त्री अटति अट तैलेनाटं शिथमस्या गौरा० ङीप् । वरटायां तैलस्पर्शे तद्विपनाशात् तस्या तथात्वम् ।

**तैलाम्बुका** स्त्री तैलमम्बु इव पेयमस्या । तैलपायिकाख्ये कीटे शब्दा०।

**तैलिक** त्रि०तैल पण्यं यस्य तैलं शिल्पमस्य वा ठक् । १तैलार्थं तिलनिष्पीडने (कलु) "सूनाश्रमिणमीच-तैलिकयिक्रीनवस्त्रोपहमुस्ता" ह०स०१६अ० । २तैल-विक्रेतरि च "सधुगामी वन्दी च तैलिक कूट-कारकः" मनु तिलविक्रेतुरपाङ्क्तेयत्वक्तम् ।

**तैलिन्** त्रि० तैल निष्पाद्यत्वेनास्त्यस्य इनि । १तैलकारे हेमच०।२तैलयुक्ते त्रि०। स्त्रियां ङीप् ङीवन्त । ३तैल कीटे राजनि० ४दशायां वर्त्तौ शब्दमा० । [हेम० ।

**तैलिशाला** स्त्री ६त०। तैलनिष्पीडनार्थे गृहे (घानिघर)

**तैलीन** तिलानां भवन क्षेत्र खञ् । तिलभवनयोग्ये क्षेत्रे अमर । [दशम्याम्निनि स्त्रियां ङीप् ।

**तैव्रदारव** त्रि० तीव्रदारुणरदम् रजता० अञ् । तीव्रदा-

**तैष** पु० तिष्यनक्षत्रयुक्ता पौर्णमासी अणि यक्षोपे ङीप् । तैषी साऽस्मिन् मासे अण् ।१पौषे मासि यत्र स्वरव्यारभ्य शुक्लप्रतिपदादिदर्शान्ते चान्द्रे मासि अमर तदीय पूर्णिमायामेव तद्योगसत्त्वात् । तिष्यशब्देन तत्समीपनक्षत्रस्यापि ग्रहणात् कदाचित् तत्सम्बन्धाभावेऽपि न क्षतिः।२तदीयपौर्णमास्यां स्त्री "साऽस्मिन् पौर्णमासी" पा० नक्षत्रयुक्तकालस्य पूर्णिमायामेव तद्योगे साधुत्वेन पौर्णमासीपरत्वमेवेति बोध्यम् । "तैष्या मधीतपूर्वां याम्" आश्व० श्रौ० ८।१४।२२ ।

**तोक** न० सौ० तु-क तस्य नेत्त्वम् । १अपत्ये पुत्रे, दुहितरि च अमर । "नित्ये तोके दीदिवांसम्" २।२।११ "पश्वे तोकाय तनयाय जीवसे" ऋ० १०।३५।१२ "तोकेन

जीवहरणे यद्‌लूकिकायास्तै माषिकस्य च यदा शक्टोऽपहृत" भाग० २।७।२८।

**तोक्म** पु० तक स मृपो० अत ओत्त्वम्। १हरिद्वर्णे यवक यवे अमर। २हरिद्वर्णे हेमच०। ३कर्णमले न० हेम०। ४मेघे पु० अजयपालः। ५नवप्ररूढे यवे यवाङ्कुरे न०। "प्रायणीयस्य तोक्मानि" यजु० १६।१७। "तोक्मानि नवप्ररूढयवाः" वेददी०। "पत्रपुष्पफलच्छायामूलवल्कलदारुभिः। गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते" भाग०१०।२२।२५ "तोक्मा पञ्चवाद्यङ्कुरा जीवर तेन ६तदर्थेऽपि च।

**तोक्मन्** न० तक–मनिन् पृषो० अत ओत्त्वम्। नवविरूढयवे २अपत्ये न० निघण्टुः। "भेषजं तोक्मभिः" यजु० २१।३०। "तोक्मभिर्लाजैर्मह स्वन्त" यजु० २१।४२।

**तोटक** न० द्वादशाक्षरपादके छन्दोभेदे। "इह तोटकमम्बुधिसैः प्रथितम्" वृ०र०। [क्वदित्। णिच् अतुतोडत् त।

**तोड** अनादरे भ्वा० पर० सक० सेट्। तोडति अतोडीत्।

**तोडल** न० तन्त्रभेदे।

**तोतस** अव्य० तु–बा० तसि। १क्रमतो २त्वयीत्यर्थे च। "मा वयं रायस्पोषेण वियौष्म तोतो रायः" यजु०४।२२। तोत शब्दः क्रमवाची अव्ययम्। तोतः क्रमतो रायो धनानि पशवो वा मद्रूपेण तिष्ठन्तु। यद्वाऽव्ययानामनेकार्थत्वात्तोत शब्दो युष्मत्पर्य्याय। तोत त्वयि रायः सन्तु" वेददी०।

**तोडन** न० तुड–भावे ल्युट्। १भेदने २दारणे ३खण्डने च।

**तोडो(री)** स्त्री तुड–अच् गौरा० ङीष् वा डस्य रः। स्वनामख्याते तैलसाधने धान्यभेदे। [अमर।

**तोत्त्र** न०तुद्यतेऽनेन तुद–करणे ष्ट्रन्। गवादिताडने दण्डे

**तोद** पु० तुद–भावे घञ्। व्यथायां रत्नमाला। "कौमटवे तोदकण्डूजाड्यानि व्याधिर्ज्वरश्च" सुश्रु०। "दन्ते तोदकण्डूप्रादुर्भावैर्जानीयात्" सुश्रु०। कर्त्तरि अच्। २व्यथके त्रि०। "तोदो वातस्य कर्य्योरीशान" ऋ० ४।१६।११। "तोदस्तोदक" भा०।

**तोदन** न०तुद्यतेऽनेन करणे ल्युट्। १तुण्डे मुखे अमर। भावे ल्युट्। २व्यथायाम् मेदि०। कर्त्तरि ल्यु। ३व्यथके त्रि०। "कषाय मधुरं रूक्षं तोदनं कफवातजित्" सुश्रु०। ४चोरिडकभेदे पु०। "चोरकफलनीलाम्बवराजादनतोदनतिन्दुकबकुलधन्वनाश्मन्तकाश्मकर्णफल्गुपरूपकगाङ्गेरुकीपुष्करवर्त्तिबिल्वबिम्बीप्रभृतीनि। फलान्येतानि शीतानि कफपित्तहराणि च। संग्राहकाणि रूक्षाणि कषायमधुराणि च" सुश्रु०।

**तोदपर्णी** स्त्री तोद तोदक पर्णमस्याः गौरा० ङीष्। कुत्सिते धान्यभेदे।

"कोरदूषकश्यामाकनीवारशालतुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखकुरुविन्दगवेधुकवरुकतोदपर्णीमुकुन्दकवेणुयवप्रभृतय कुधान्यविशेषाः" सुश्रु०।

**तोमर** पु न० तु–विच् तोर्गतो म्रियतेऽनेन मृ–करणे अप्। १हस्तक्षेप्ये शल्यापे दण्डाकारेऽस्त्रभेदे (रायबाँश) अमर। तोमरलक्षणं हेमा०प०लक्षणसमुच्चये उक्तं यथा। "वैशम्पायनधनुर्वेदे। "शुक्रो भगवानुवाच जमदग्निं प्रति यत्नम्। निबोध यथामन्त्रमुच्यमानम् तत्र दण्डान्वित सर्वलौह वेति तोमरं द्विविधं भवति। तत्र तोमर मन्गृड लघ्वायत भवेत् तोमरं सर्वायस तत्कार्य्यें प्रयोजयेत्। तत्र निकृष्टमध्यमोत्तमं भूयस्त्रिविधं प्रमाणतो भवति तत्र चतुर्हस्तप्रमाणं निकृष्टं सार्द्धचतुर्हस्तं मध्यमं पञ्चहस्तप्रमाणं तूत्तमं भवति। तथा कल्पनाया चाद्यं द्वितीयं तृतीयं चेति त्रिधा द्व्यङ्गुलमध्ये द्व्यङ्गुलकल्पितमेकं स्यान्मध्यात्पूर्वं त्र्यङ्गुलकल्पितं द्वितीयं स्यात्। मध्यात्पूर्वं षडङ्गुलकल्पितस्थानकल्पनया तृतीयं स्यात्। साद्र्धमेकं निकृष्टं, तयोर्मध्यमं वरोत्तमं कल्पनायास्तथा तोमरास्त्रस्य परिणाहः परः षडङ्गुलो भवति सार्द्धपञ्चाङ्गुलो मध्यमः पञ्चाङ्गुलः कनिष्ठ इति। त्रयाणां देशानां त्रयः छन्दाः। छादनात्तथा आवन्त्यो मागधो दाक्षिणात्यश्चेति। तत्रावन्त्यतोमरं तक्षणसंस्थानं भवति मागधं तोमरं योनिसंस्थानं भवति दाक्षिणात्यं तोमरं वृत्तं भवति। तेषां सूत्राणि तद्देशच्छन्दत इति इत्यादि। २नवाक्षरपादके छन्दोभेदे "प्रथमं सकं विनिधाय जगणद्वयञ्च निधाय। कुरु तोमरं सुखकारि फणिराजपिङ्गलकारि" तल्लक्षणम्। [मराणधारिणि।

**तोमरग्रह** पु० तोमर गृह्णाति ग्रह–अच् न अण्। तो-

**तोमरधर** पु० तोमरमस्त्रं धरति धृ-अच्। वह्नौ शब्दार्थक०

**तोमरिका** स्त्री तोमर+स्वार्थे कन्। आटक्याम् शब्दर०

**तोय** न० सौ०तु–विच् तवे पूर्त्यै याति या क। १जले २पूर्वाषाढानक्षत्रे च। "कुड्‌यमेघैस्तत एव तोयम्" माघ। "मृत्तोयैः शुध्यते शोध्यं नदीवेगेन शुध्यति" मनु। पूर्वाषाढनक्षत्रस्य जलदैवतत्वात् तथात्वम्। ३लग्नावधिचतुर्थस्थाने च ज्यो० त०। तत्र जलस्य चिन्तनीयत्वात् तथात्वम्।

**तोयकर्म्मन्** न० तोयेन कर्म्म । तर्पणे "तोयकर्म्मणि चारब्धे गाथामुदकदानिके" भा०आ०१अ० ।

**तोयकाम** पु० तोयं कामयते कम-अण् । १अम्बवेतसे जटाधर । २जलाभिलाषुके त्रि० ।

**तोयकुम्भ** पु० तोयस्य कुम्भ इव । शैवाले पारस्करनिघण्टु ।

**तोयकृच्छ्र** न० जलमात्रपानरूपे प्रायश्चित्ते व्रतभेदे । "यदा तु विल्वानि फलानि प्रत्येकं कथितानि मासं भ्योयन्ते तदा फलकृच्छ्रादिव्यपदेशं लभते । यथाह मार्कण्डेय "फलैर्मासेन कथित फलकृच्छ्रो मनीषिभिः । श्रीकृच्छ्रं श्रीफलैः प्रोक्तं पद्माक्षैरपरस्तथा । मासेनामलकैरेव श्रीकृच्छ्रमपरं स्मृतम् । पत्रैर्मतः पत्रकृच्छ्रः पर्णैस्तत्कृच्छ्र उच्यते । मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेन तु" इति ।"इति पर्णकृच्छ्रमेकादशविधम्" मिता० ।

**तोयडिम्ब** पु० तोयस्य डिम्ब इव । १मेघोपले करकायां हारा० ।

**तोयद** पु० तोयं ददाति दा+क । १मेघे, २मुस्तके च । ३घृते न० मेदि० । ४विधिना जलदातरि त्रि० । "तोयदस्तृप्तिमाप्नोति"पुरा० । तद्दानमाहात्म्य भा० शा० दानधर्मे यथा

"अद्भिर्दत्ते नरेणेह प्राणा दत्ता भवन्त्युत । प्राणदानाद्धि परमं न दानमिह विद्यते । पानं चापि प्रभवति पानीयात् कुरुसत्तम ।। नीरजातेन हि विना न किञ्चित् सम्प्रवर्त्तते । सर्वौषध्यो महाराज । वीरुधश्च जलोद्भवाः । यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते ।। तस्मात् पानीयदानाद्धि न परं विद्यते क्वचित् । तच्च दद्यान्नरो नित्यं यदीच्छेद्भूतिमात्मनः । धन्यं यशस्यमायुष्यं जलदानमिहोच्यते । शत्रूंश्चाप्यधि कौन्तेय । सदा तिष्ठति तोयदः । सर्वकामानवाप्नोति कीर्त्तिञ्चैवेह शाश्वतीम् । प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते । तोयदो मनुजव्याघ्र । स्वर्गं गत्वा महाद्युते ।। अक्षयान् समवाप्नोति लोकानित्यब्रवीन्मनुरिति" ।

**तोयधर** पु० तोयं धरति धृ-अच् । १मेघे मेदि० २मुस्तके च "नीला इवातपात्यये तोयं तोयधरा घनाः" रामा० आ० ६१ अ० ।

**तोयधार** पु० तोयानां धारा यत्र । १मेघे २मुस्तके च । धारि-भावे अच् । तोयस्य धारं वर्षणम् । ३जलवर्षणे पु० । "समवर्णोयधारेण ववर्ष कमलाम्बु भिः" हरिव० ११९अ० । ६त० । ४जलसन्ततौ स्त्री । "शरान् व्यसृजता घोरान् तोयधारा घना इव" भा०वि० ३२अ० । "गिरिं गजस्येव तोयधाराः" रामा० आ० २५ अ० ।

**तोयधि** पु० तोयानि धीयन्तेऽत्र धा कि उप०स० । १समुद्रे जलधिप्रभृतयोऽप्यत्र । २चतुःसंख्यायाञ्च ।"समन्तान्मेरुमध्यात् तु तुल्योभागेषु तोयधेः" सू० सि० ।

**तोयधिप्रिय** न० तोयधि प्रीणाति प्री-क ।१लवङ्गे शब्दच० ।

**तोयनिधि** पु० तोयं निधीयतेऽस्मिन् नि+धा-कि उप०स० । १समुद्रे २चतुःसंख्यायाञ्च ।"पूर्वापरौ तोयनिधी वगाह्य" कुमा० ।

**तोयनिवी** स्त्री तोयं समुद्रोदकं नीवीव यस्याः स्वार्थे न कप् । १पृथिव्यां "तोयनीव्याः पतिं भुवोरथ्यविमुक्तलाङ्गले"भाग० ९।१५।२८। लोके तु कप् तोयनीविका तत्रार्थे । [बाहुल्यात् अमर ।

**तोयपिप्पली** स्त्री तोये पिप्पलीव । (काँचड़ा) शाकभेदे

**तोयपुष्पी** स्त्री तोयेन बहुजलदानेन पुष्पागमयस्याः । १पाटलावृक्षे शब्दमाला ।

**तोयप्रसादन** पु तोयं प्रसादयति फलयोगेन प्र+सद्-णिच्-ल्यु । १कतके (निर्म्मलि) । फलपरत्वे न० रत्नमाला 'तोयप्रसादकाम्बुप्रसादकादयोऽप्यत्र "फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्" मनु ।

**तोयफला** स्त्री तोयप्रधानं फलं यस्याः ।१इर्वारौ कर्कटीभेदे राजनि० । [२मुस्तके च ।

**तोयमुच्** पु० तोयं मुञ्चति मुच-क्विप् ६त० । जलमुचि मेघे

**तोययन्त्र** न० स्त० नि० उदकं आनयनार्थे घटीयन्त्रभेदे घटीयन्त्रशब्दे २७८१ पृ० दृश्यम् । (फोयारा) इति ख्याते २जलयन्त्रभेदे च ।

**तोयराज्** पु०तोयेषु राजते राज क्विप् । १समुद्रे "यदीच्छेद सागर किञ्चिदुत्पन्नं मिह तोयराट्" हरिव०२२६अ०।२वरुणे च

**तोयराशि** पु० तोयानां राशिरिव । १समुद्रे । ६त० । २जलसमूहे च "तोयराशिरसम्भवापि तृष्णा संवर्द्धयति काद०। [रत्नमा०। स्वार्थे क । तोयवल्लिकाप्यत्र ।

**तोयवल्ली** स्त्री तोयसन्निहितस्थाने वल्ली ।१कारवेल्ले (उच्छे)

**तोयशुक्तिका** स्त्री तोयजाता शुक्तिका शा०त०। जलशुक्तिकायां राजनि० ।

**तोयशूक** पु० तोयस्य शूक इव । शैवाले पार० नि० ।

**तोयसूचक** पु स्त्री तोयं तोयवर्षं सूचयति स्वेन सूच-ण्वुल् । १भेके शब्दार्थक० । स्त्रियां जातित्वात् ङीष् । २अवर्षणसूचके योगभेदे त्रि०। जलशब्दे१०६१पृ०दृश्यम् ।

**तोयविम्ब** न० तोयोत्थित विम्बम् अर्द्धडिम्बाकार वस्तु । जलविम्बे जलोपरिभासमाने अर्द्धगोलाकारे पदार्थे । अय शब्द तोयशक्तीशब्दात् पर पाठ्य ।

**तोयात्मन्** पु० तोयमात्मा स्वरूप यस्य तत्प्रकृतित्वात् । १परमेश्वरे । "यस्य केशेषु जीमूता । नद्य सर्वाङ्गसन्धिषु कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नम" विष्णु स्तुति ।

**तोयाधार** पु० ६त० । १जलाशये । जलाशयोत्सर्गशब्दे ३०७५ पृ० तद्भेदादि दृश्यम् । "तोयाधारपथाश्च वल्कलशिखा निष्यन्दरेखाङ्किता" शकु० ।

**तोयाधिवासिनी** स्त्री तोय तोयार्द्र देशमधिवसति अधि+वस–णिनि ङीप् । पाटलावृक्षे रत्नमाला ।

**तोयेश** पु० ६त० । १वरुणे तदधिदेवताके २शतभिषानक्षत्रे च । तोय जलमधिदेवोऽस्य । ३पूर्वाषाढानक्षत्रे न० ।

**तोरण** पु न० । तुर–युध आघाते ल्युट् तोलयत्यनेन तुल–उन्माने करणे–ल्युट् लस्य रो वा । बहि॰ स्थिते १द्वारे । "अथोन्मुखैस्तोरणसङ्गभङ्गेति" "गणो नृपाणामथ तोरणाद्वहि" माघ । "भासोज्ज्वलत्काञ्चनतोरणानाम्" कुमा० । तच्च द्वाराग्रे निखातस्तम्भोपरिनिबद्धो धनुराकार (फटक्) इति ख्यात पदार्थ । यागादौ मण्डपाद्बहिर्द्वाररूपस्य तोरणस्य काष्ठविशेषप्रमाणादिक मण्डपशब्दे दृश्य मत्स्यसूक्ततन्त्रादा नादिपद्धतौ विस्तरो दृश्य । २कन्धराया न० हारा० ।

**तोरश्रवस्** पु० अङ्गिरोसुनौ ।

**तोल** पुं न० । चु० तुल–कर्म्मणि अच् । अशीतिरत्तिकामाने १कर्षे । "एकतोल द्वितोल वा त्रितोल वेदतोलकम् । इतोऽधिकं नर कृत्वा प्रायश्चित्तीयते ध्रुवम्" आगम । स्वार्थे क । तत्रार्थे "पल तु लौकिकैर्मानै साष्टरत्तिद्विमाषकम् । तोलकत्रितय चेयम्" तिथित० ।

**तोल्य** त्रि० तुल+उन्माने कर्म्मणि–यत् ।१तोलनीये । भावे यत् । २तोलने न० । "जीवाना वयसा मौल्ये तोल्ये वर्णस्य हेमनि" लीला० ।

**तोश** पु० तुश–वधे भावे घञ् । १हिंसायाम् । कर्त्तरि अच् । २हिंसके "त्वे राय इन्द्र । तोशतमा " ऋ०१।१६९।५। "तोशतिर्वधकर्मा नितोशयति निबर्हयतीति तत्कर्मसु पाठात् तोशतमा नाशयितृतमा "भा०। "तोशा वृत्रहणा हुवे" ऋ० ३।१२।४ । "तोशा बाधकौ" भा० । अौस्थाने आच् । [भा०ड०३९अ० ।

**तोष** पु० तुष–भावे घञ् । सन्तोषे । "तोषपरो हि लाभ "

**तोषण** न० तुष-भावे ल्युट् । १सन्तोषे । तुष–णिच् भावे ल्युट् । २सन्तोषोत्पादने । "एतावदेव पुरुषै कार्य्यं हृदयतोषणम्" भा०स०१६अ०। कर्त्तरि ल्यु । ३सन्तोषजनके त्रि० "पश्यन् हृदयतोषणान्" भा० उ० ८३ अ० । करणे ल्युट् । ४तोषसाधने स्त्रियां ङीप् तोषणी ।

**तोषल** न० तोष लूनाति लू- बा० ड । अस्त्रभेदे १मुषलेऽस्त्रे "कृष्णस्तोषलमुद्यम्य गिरिकूटोपम बली" हरिव०८७अ०।

**तौञ्चिक** पु०धनूराशौ दीपिका कौर्प्यशब्दे २२७८पृ०दृश्यम् ।

**तौतातिक** न० तुतातभट्टेन निर्वृत्तम् ठञ् । तुतातभट्टकृतशास्त्रे "नैवाश्रावि गुरोर्मत न विदित तौतातिक दर्शनम्" प्रबोधच० ।

**तौतिक** न० १मुक्तायां २शुक्तौ च राजनि० ।

**तौदी** स्त्री विषनाशके ओषधिभेदे हतकुमार्य्याम् ।"तौदी नामासि कन्या घृताची वा असि" अथ० १९।४।४२।

**तौम्बुरविन्** पु० व०व०। तुम्बुरुणा कलाप्यन्तेवासिना प्रोक्तमधीयते इनि । कलाप्यन्तेवासिना तुम्बुरुणा प्रोक्तशाखाध्येतृषु ।

**तौर** न० यागभेदे ।"संवत्सरमहरहस्तौरेण यजेत"लाट्या० श्रौ० १०।२०।१ । "दार्षद्वततौरयोर्व्रतानि"१०।१८।१० । तत्रैव ।

**तौरयान** न० तूर्णं यानमस्य पृषो० । तूर्णगमनयुक्ते । "स तौरयान उपयाहि यज्ञम्" निरुक्ते ५।२५। श्रुति॰ तौरयान तूर्णयान "तौरयाम इत्यपि"निगमो भवति"

**तौरश्रवस** न०तोरश्रवसाऽङ्गिरसा दृष्ट साम अण् । सामभेदे "तौरश्रवसे माध्यन्दिने पवमाने तदाश्वपमश्नुते " कात्या० श्रौ० २५।१४।१४ । "तौरश्रवसे सामनी" कर्क ।

**तौर्य** न० तूर्ये मुरजादौ वाद्ये भवम् अण् । सुरजादि ध्वनौ ।

**तौर्य्यत्रिक** न० त्रय परिमाणमस्य कन् तौर्य्योपलक्षित त्रिकम् । समुदितेषु नृत्यगीतवाद्येषु अमर । "वनेऽपि तौर्य्यत्रिकमारराध तम्" नैषधम् । "तौर्य्यत्रिक वृथाट्या कामजो दशको गण " मनु ।

**तौल** न० तुलैव तुला+स्वार्थे अण् स्वार्थिका अपि प्रत्यया क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इत्युक्ते दैवतादिवत् क्लीवता। मानभेदे १तुलायाम् २उन्मानदण्डे ३तुलाराशौ च ज्यो० ।

**तौलिक** पु०तुल्या जीवति तुली+ठक् । चित्रकरे शब्दमाला ।

**तौलिकिक** पु० तुलिकया जीवति ठक् । चित्रकरे हेमच० ।

**तौलिन्** पु० तुलैव तौल तत् विद्यतेऽस्य इनि । तुलाराशौ "तौलिनि चित्रान्त्यार्द्धे स्वाति पादत्रय विशाखायाः" ज्यो०त०१०२प०। अस्य क्लीवत्वमपि "गर्भे तौलिनि कुलागमेऽ-लिधनुषो यास्ये मृगो नैर्ऋते" ज्यो०राशिमलनिर्णय ।

**तौल्य** त्रि० तुलया परिच्छिन्नम् ष्यञ् । तुलया परिच्छिन्ने त्रिका० । तुल्यमेव स्वार्थेऽण् । २तुल्ये म० ।

**तौल्वलि** पु०तुल्वलस्यापत्यम् इञ् । तुल्वलार्षेरपत्ये "धर्मेभ्य एव निष्क्रीयादिति तौल्वलि क्रियागुणत्वात्" आश्व० श्रौ० २।६।१७ "आभञ्जपित्तरेण तौल्वलिः क्वता र्थत्वात्" ५।६।२४ । तत इञन्तत्वात् यूनि फक् तौल्व-ल्यादित्वात् युवप्रत्ययस्य न लुक् । तौल्वलायन–यूनि तदपत्ये ।

**तौल्वल्यादि** पु० "न तौल्वलिभ्य" पा० सूत्रोक्ते युवप्र-त्ययस्य लुकि पर्युदस्ते शब्दगणे स च गण पा०ग०सू० उक्तो यथा

"तौल्वलि, धारणि पारणि रावणि, दैलीपि, दैवति, वार्कलि, नैवकि, दैवमति, दैवयज्ञि, चाफट्टकि, वैल्वकि, वैङ्कि, आनुराहति, पौष्करसादि, आनुरो-हति, आनुति, प्रादोहनि, नैमिश्रि, प्राडाहति, वा-न्धकि, वैशीति, आसिनासि, आहिंसि, आसुरि नै-मिषि, आसिबन्धकि, पौष्करेणुपालि, वैकर्णि, वै-रकि, वैहति ।

**तौवरक** त्रि० तुवर्य्यां इदम् अण् स्वार्थे क । तुवरीस-म्बन्धिनि १स्नेहादौ "एते भल्लातकस्नेहात् स्नेहा-स्तौवरकास्तथा" सुश्रुत । स्वार्थे अण् । तत स्वार्थे क । २तुवरके । "आयुष्कर तौवरकं कषाय कटुपाकिकम् । उष्ण क्रमिज्वरानाहमेहावर्त्तविनाशनम्" सुश्रुत ।

**तौविलिका** स्त्री ओषधिभेदे । तौविलिके ! ऽमेलयापाय-मैकव ऐलयोत्" अथ० ६।१६।२ ।

**तौषायण** त्रि० तुषस्यादूरदेशादि पक्षा० चतुरर्य्यां फक् । तुषस्यादूरदेशादौ ।

**तौषार** त्रि० तुषारस्येदमण् । तुषारसम्बन्धिनि जले राजनि "तस्मान्तरिक्षं धारं चार तौषार हैममिति" आन्तरिक्षजलविभागे सुश्रुत । भावप्र० तल्लक्षणादि उक्त यथा "अपि नद्याः समुद्रान्ते पङ्क्तिरापश्च तद्भवा । धूमावयवमिश्रस्त्वात्तौषारास्तास्तु ताः स्मृता । अपथ्या प्राणिना प्रायो भूरुहाणान्तु ता हिता । तुषाराम्बु-हिम रूक्ष स्यादातलमपित्तलम् । कफोरुस्तम्भ-कण्ठाग्निमेदोगण्डादिरोगनुत्" । नदीमारभ्य समुद्र पर्य्यन्तं पङ्क्तिरापो तद्भवा पङ्क्तिभवा धूमावयववति-र्य्यक्ता धूमाम्बरहिता आप तौषाराख्या इत्यर्थः ।

**त्मन्** पु० आत्मन्+आलोप । आत्मनि "त्मनमूर्ज न विश्वध क्षरध्यै" ऋ० १।६३।८ । त्मनमात्मानम् । "आतोऽस्यमापि छन्दसि दृश्यत" पा० इत्यात्मन आकारलोप मन्त्रापूर्वकस्य विधेर्निमित्तत्वादुपधालोपो भावः" भा० । "त्मने तोकाय तनयाय मृड" ऋ० १।११४।६ । "उप त्मन्या वनस्पत" ऋ १।१८८।१० । 'त्मन्या आत्मना" भा० । तृतीयास्थाने या । "अग्नो एतन त्मन्या' यजु० २८।१० । "वनस्पतिरवसृष्टो न पाशै त्मन्या" १०।४५ ।

**त्यक्त** त्रि० त्यज–कर्म्मणि क्त । कृतत्यागे उत्सृष्टे समुज्झिते अमर "अरष्टार्थेत्यक्तद्व्यसीकार प्रतिपद 'शूनपाणि त्यजधातौ उदा० । २त्यक्तुमुद्यते च "मदर्थे त्यक्तजीविता" गीता "इत्युक्त करुण वाक्यं वानरैस्त्यक्तजीवितैः, रामा० कि० ५४ अ० ।

**त्यज** हानौ दाने च भ्वा० सक० पर० अनिट् । त्यजति अत्याक्षीत् तत्याज । त्यक्तव्य त्याज्यम् त्याग त्यक्त त्यक्ता त्यागी । "त्यजेदेक कुलस्यार्थे ग्रामस्यार्थे कुल त्यजेत् । ग्राम जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" चाणक्य "योऽत्याक्षीत् सयुगं भयात्' भा० द्रो० ८५ अ० "त तत्याजाहित पुत्रम्" रामा० २।३६ अ । "नैव भीत्रिवर्णेन कदाचित् त्यज्यते पञ्चत० । (नृग ) "मदर्थे त्यक्तजीविता" गीता "पतितोऽङ्गा गुरोर्वैव त्यक्ताग्नि-र्याज्ञविश्वथा" मनु "न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति" मनु "त्याज्य दोषवदित्येके कर्म प्राहु-र्मनीषिण । यज्ञदानतप कर्म न त्याज्यमिति चापरे" गीता "शातिसम्बन्धिभिस्त्वेते त्यक्तव्या कृतलक्षणा" मनु "अनुमदा स्वयूथेभ्यस्त्यक्त्वा परभृतिपु" ह०स ६ अ० । वेदे तु नि० । चान्नि तित्याज "यस्तित्याज सखि विद सखा-यम्" ऋ०१०।७१।६। त्यागश्च स्वत्वध्वसात्कूलव्यापार न ममेदमित्याकार । स च मूर्त्तद्रव्याणामेव भवति अमूर्त्त-जीवनादेर्वियोजनरूप । उपसर्गपूर्वकस्य तत्तदुपसर्गद्यो-त्यार्थयुक्तत्यागे इति भेद ।

**त्यजस्** पु ०त्यज–भावेऽसुन् । १त्यागे "इन्द्रस्य न त्यजसा वि ह्रुणाति" ऋ०१।१६६।१२। "त्यजसा त्यागेन" भा०कर्त्तरि– असुन् ।२त्यागकर्त्तरि त्रि०। "विद्वारयातेमहि । अजा" ऋ०

१०।१४४।६। त्यजो दुःखस्य वर्जयितृ भा० "न तं तिग्मं चन त्यजो न" ऋ०८।४७।७। करणे ल्युट्। ३क्रोधे च क्रोधात् प्रमुच्यमानमायुधं मुच्यते इति तस्य तथात्वम्।

त्यद् त्रि० त्यज—"त्यजितनियजिभ्यो डित्" उ० अदि डिच्च।१पविद्धे। अस्य सर्वनामतया त्यदादिकार्य्यम्, स्यः त्यौ त्ये त्यस्मै त्यस्मात् त्येषां त्यस्मिन्। स्त्रियां स्या त्ये त्याः। क्लीबे त्यद् त्ये त्यानीति भेदः। २सर्वदा परोक्षाभिधानार्हे वस्तुनि।

"द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च। तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरीक्षाच्चैतन्मर्त्यमेतत् स्थितमेतत् सत्तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः। अथामूर्त्तं वायुश्चान्तरिक्षञ्चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम्" वृ० उ०। "ते एते द्वे वाव वावशब्दोऽवधारणार्थः। द्वे एवेत्यर्थः। ब्रह्मणो परमात्मनो रूपे रूप्यते याभ्यामरूपं परमब्रह्माविद्याध्यारोपणाभ्यां के ते द्वे। मूर्त्तञ्च एव मूर्त्तमेव च। तथा अमूर्त्तञ्च एवामूर्त्तमेव चेत्यर्थः। अन्तर्भूतस्वात्मविशेषणे मूर्त्तामूर्त्ते द्वे एवेत्यवधार्य्यते। कानि पुनस्तानि विशेषणानि मूर्त्तामूर्त्तयोरित्युच्यन्ते। मर्त्यं मरणधर्म्यमृतञ्च तद्विपरीतम्। स्थितं परिच्छिन्नं गतिपूर्वकं यत् स्थास्नु। यच्च यातीति यद्व्याप्यपरिच्छिन्नं स्थितविपरीतम्। सच्च यदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत्। त्यच्च तद्विपरीतं त्यदित्येव सर्वदा परोक्षाभिधानार्हम्। अथामूर्त्तमधुनाऽमूर्त्तमुच्यते। वायुश्चान्तरिक्षञ्च यत्परिशेषितं भूतद्वय एतदमृतममूर्त्तत्वादस्थितमतोऽविरुध्यमानं केनचिदमृतममरणधर्मि तद्यत् स्थितविपरीतं व्याप्यपरिच्छिन्नं यस्मादेतदन्येभ्योऽप्रविभज्यमानविशेषमतस्त्यदिति परोक्षाभिधानार्हमेव पूर्ववत्। तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्य चतुष्टयविशेषणस्यामूर्त्तस्यैष रसः। कोऽसौ। य एष एतस्मिन्मण्डले पुरुषः करणात्मको हिरण्यगर्भप्राण इत्यभिधीयते। स स एषः अमूर्त्तस्य भूतद्वयस्य रस पूर्ववत् सारिष्ठ, यतत्पुरुषसारञ्चामूर्त्तं भूतद्वयं हैरण्यगर्भलिङ्गारम्भाय हि भूतद्वयाभिव्यक्तिरव्याकृतात् तस्मात्तादर्थ्यात्तत् सारं भूतद्वयम्। त्यस्य ह्येष रसो यथाद्यो मण्डलस्थः पुरुषो मण्डलस्य च हैरण्यगर्भस्य भूतद्वयस्य च साधर्म्यम्। तस्मादुक्तं प्रसिद्धवदेतदुपादानं त्यस्य ह्येष रस इति" शा० भाष्यम् "द्यूतो वा द्यूतपुत्रो वा यो वा स्यो वा भवाम्यहम्" वेणी०। अव्ययीभावे शरदा० अच् समासान्त। उपत्यदम्।

त्यदादि पु० पा० गणसूत्रोक्ते शब्दसमूहे। स च गणः "त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम्" "त्यदादीनामः" पा० अत्र अत्वविधौ द्विपर्य्यन्तस्यैव ग्रहणमिति भाष्यकारेष्टिः।

त्याग पु० त्यज—भावे घञ्। उत्सर्गे स्वत्वध्वंसानुकूलव्यापारे न ममेदमित्याकारे। "न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति" "उन्मत्तं पतितं क्लीवमवीरं पापरोगिणम्। न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्त्तनम्" मनुः अमूर्त्तद्रव्यस्य २वियोगमात्रे च। त्यागश्च सात्त्विकादिभेदात् त्रिविधः। यथाह गीता "नियतस्य तु संन्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः। दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्। कार्य्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन!। सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः"। विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च पुनरपि सात्त्विकस्त्यागः त्रिविधः तथा हि फलाभिसन्धिपूर्वककर्मत्यागः सत्यपि कर्मणि फलाभिसन्धित्यागादेकः। स च सात्त्विकत्वादेयः। सत्यपि फलाभिसन्धौ कर्मत्यागात् द्वितीयः। स च दुःखबुद्ध्या कृतो राजसः मिथ्याधीर्मेन कृतस्तामसः इति भेदः। द्विविधोऽपि हेयो भवति। फलाभिसन्धेः कर्मणश्च त्यागात् तृतीयः। स च कर्मानधिकारिकर्त्तृको नैष्कर्म्यरूपः। सोऽपि साधनफलभेदेन द्विविधः। तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्यं वेदान्तविचाराय फलाभिसन्धिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य परित्यागः स एक साधनभूतो विविदिषासन्न्यास उच्यते। जन्मान्तरकृतसाधनाभ्यासपरिपाकादस्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य स्वत एव फलाभिसन्धेः कर्मणश्च परित्यागः फलभूतः स विद्वत्सन्न्यास इत्युच्यते। "त्यागप्रपञ्चरूपस्य चिदात्मत्वावलोकनात्। त्यागो

हि महता पूज्य स्यो मोक्षमयो यतः। त्यागेन मुक्ता दिवसुपतन्ति त्यागेन हीना नरके मज्जन्ति। न त्यागिना दुष्करमस्ति किञ्चित् त्यागो हि सर्वव्यसनानि हन्ति” शब्दार्थचि० धृतवाक्यम्।

त्यागिन् त्रि० त्यज–घिणुन्। १ दातरि, २शूरे, ३वर्ज्जनशीले, ४कर्मफलत्यागिनि च “न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते। त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः। न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते” गीता “आत्मनस्त्यागिनां चैव निवर्त्तेतोदकक्रिया” मनु।

त्यागिमन् त्रि० त्यागेन निर्वृत्तः त्याग+इमनिच्। त्यागेन निर्वृत्ते।

त्याज्य त्रि० त्यज+ण्यत् कुत्वाभावः। १वर्ज्जनीये “तीरे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः” प्रा० त०। २दानयोग्ये च। “त्याज्यो दुष्ट प्रियोऽप्यासीदङ्गुलीवोरगक्षता” रघुः। “सा त्वनाप्यात्यतो गर्भं त्याज्या भवति पापिनी। महापातकदुष्टा च पतिगर्भविनाशिनी” व्यासस०।

त्रक गतौ भ्वा० आत्म०सक०सेट्। त्रकते अत्रकिष्ट। तत्रके।

त्रख गतौ भ्वा० पर० सक० सेट् धातुपाठः। त्रखति अत्रखीत् अत्राखीत्। तत्राख। [अत्रङ्खीत्। तत्रङ्ख।

त्रखि गतौ भ्वा० पर० सक० सेट् इदित् धातुपाठः। त्रङ्खति

त्रग गतौ भ्वा० पर०सक० सेट् इदित्। त्रङ्गति अत्रङ्गीत्। तत्रङ्ग। अयं दिवा० धातुपाठः। त्रङ्ग्यति।

त्रङ्ग पु स्त्री त्रगि–अच्। पुरभेदे हरिश्चन्द्रपुरे सौभे उडङ्के प्रतिमार्गके त्रिका०।

त्रन्द चेष्टायां भ्वा० पर० अक० सेट् इदित्। त्रन्दति अत्रन्दीत्। तत्रन्द।

त्रप लज्जायां भ्वा० आ० अक० वेट्। त्रपते अत्रपिष्ट अत्रप्त। णिच् वा घ०। त्रपयति त्रापयति। षित् त्रपा। “कान्तया कान्तसंयोगे किमकारि नवोढ़या। अनापि च क्रिया प्रत्नोत्तरा शुभा न बुध्यते” विदग्धमुख०। “अपेक्षाभिव्यायामपि किमपि चेतस्त्रपयति” शान्तिश०। अप–अपत्रपा लज्जायाम् “त्रपाङ्कुरैरपत्रपे” भट्टि। “लज्जा सापत्रपान्यतः” अमरः।

त्रपा स्त्री त्रप–भावे अङ्। १लज्जायाम् अमरः। कर्त्तरि अच्। २लज्जके त्रि०। ३कुलटायां स्त्री मेदि०। ४कुले ५कीर्त्तौ च शब्दच०।

त्रपाक पु स्त्री० त्रप–आक। म्लेच्छजातिभेदे उणादि०।

त्रपारण्डा स्त्री त्रपायां रण्डा। लज्जाहीनायां वेश्यायां जटा० शब्दक० वस्तुतः त्रपारण्डेति नामद्वयं मेदिनी त्रपाशब्दस्य वेश्यार्थकत्वोक्तेः रण्डाशब्दस्य च तदर्थप्रसिद्धेस्तत्समानार्थकत्वौचित्यात्।

त्रपिष्ठ त्रि० अतिशयेन तृप्रः अतिशायने इष्ठन् प्रियादि० त्रपादेश। तृप्रतरे। [स्त्रियां ङीप्।

त्रपीयस् त्रि० अतिशयेन तृप्रः ईयसुन् त्रपादेशः। तृप्रतमे

त्रपु न० अग्नि दृष्ट्वा त्रपते लज्जते इव त्रप–उन्। १सीसके २रङ्गे च मेदि० तस्य विकारः अण् “त्रपुजतुनोः षुक् च” पा० षुक् च। त्रापुष तद्विकारे त्रि०। “ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च” मनुः। “सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु। ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम्” भा०प्र० १८ अ०। [लताभेदे।

त्रपुकर्कटी स्त्री त्रपु इव शुभा कर्कटी। (शसा) इति ख्याते

त्रपुटी स्त्री त्रप–बा०–उटक् गौरा० ङीष्। सूक्ष्मैलायाम्। रत्नमाला।

त्रपुल न० त्रप– बा० उल। रङ्गे हिरूपकोष।

त्रपुष(स)न० त्रपुषा (षा) फलम् अण् फले तस्य लुप्। त्रपुषी(सी)फले। “त्रपुस(ष) लघु शीतञ्च नव तद्गुणदाहजित्। स्वादु पित्तापहं शीतं रक्तपित्तहरं परम्। तत्पक्वमुष्णं स्यात् पित्तलं कफवातनुत्। तद्बीजं रूक्षं शीतं रूक्षं पित्तास्रकृच्छ्रजित्” भावप्र०।

त्रपु(ष)स न०त्रप बा०उस(ष)। १रङ्गे हिरूपकोष। गौरा० ङीष् २माहेन्द्रवारुण्यां कर्कटीभेदे (शसा) लताभेदे। सा च पीतपुष्पा कण्टालु बहुफला हस्विकफला कण्टकफला सुधावासा च।

त्रप्सा स्त्री घनीभूतदध्यादौ। “कृमिकीटपतङ्गैर्वर्जिता यत्र मेदिनी। त्रप्सया कर्षणैः क्षिप्रा वान्तैर्वा दुष्टता व्रजेत्। नखदन्ततनूजत्वक्तुषपांशुरजोमलैः। भस्मपङ्कैश्चापि प्रच्छन्ना मलिना भवेत्” “त्रप्सा घनीभूतदध्यादि” शु०त०।

त्रप्स्य न० घनेतरदधनि अमरटीकायां विद्याविनोदः।

त्रय न०स्त्री त्रयाणामवयवम् अयच्। त्रित्वे १त्रित्वसङ्ख्यायाम् “वेदत्रय निरदुहत् भूर्भुवः स्वरितीति च” मनुः। स्त्रीत्वपक्षे ङीप्। “व्याप्नोति द्यामवेद्यामयो नरशिखिमयी” काव्यः त्रयोऽवयवा अस्य अयच्। २त्रित्वसङ्ख्यान्विते त्रि० स्त्रियां ङीप्। “प्रमाणमनुमानञ्च शास्त्रञ्च विविधागमम्। त्रयं सुविदितं कार्यं धर्म-

गुप्तिमभीप्सता" मनु ङीपन्त "ऋग्यजु सामरूपे १वेदत्रये त्रित्वसंख्यान्वितेषु ऋगादिवेदेषु अमर "एत-द्विदन्तोविद्यात्रयीनिष्कर्षमन्वहम्" "त्रैविद्येभ्यस्त्रयीं विद्यादण्डनीतिञ्च शाश्वतीम्" मनुः। "ब्रह्माऽथ पुरुषो रुद्रस्त्रयमेतत् त्रयीमयम्। सर्गादावृङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मय। रुद्र साममयोऽन्ताय तस्मात् तस्याशुचिर्ध्वनि" मनु ४पुरन्ध्र्यां ५सुमतौ स्त्रियाम् विश्व ६सोमराजीवृक्षे स्त्री शब्दच०। ७भवान्याम् दुर्गायाम्। यथा "ऋग्यजु सामभागेन साङ्गवेदगतापि या। त्रयीति पठ्यते लोके दृष्टा दृष्टार्थसाधिनीति" देवीपु०।

**त्रयःपञ्चाशत्** स्त्री त्र्यधिका पञ्चाशत् निपातनात् त्रय आदेश। (निपात्य)१त्र्यधिकपञ्चाशत्संख्यायां २तत्संख्या-न्विते च बहुत्वेऽप्येकत्वम्। एवं त्रयोदशत्रयोविंशतित्रय स्त्रिंशत् त्रयश्चत्वारिंशत् प्रभृतय त्र्यधिकदशादिसंख्यायां तत्संख्ये ये च। दर्शांस्तु भेदे अशीतिभिन्ने चत्वारिंश दादौ वा त्रय आदेश। तेन पक्षे त्रिचत्वारिंशादित्यादि तत्रार्थे अशीतौ नेति त्र्यशीति।

**त्रययाय्य** पु० त्रय जन्मत्रय याति या -बा० आय्य। जन्म त्रयप्राप्ते "स्तुतं त्रययाय्य" ऋ० ६।२।७। "त्रययाय्यो जन्मत्रय प्राप्त। जन्मत्रय पर्यते। मातुरग्रेऽधि-जननात् द्वितीय मौञ्जिबन्धनात्। तृतीयं यज्ञदीक्षाया इति जन्मत्रय स्मृतमिति" तादृशः पुत्र इति" भा०।

**त्रयस्त्रिंश** त्रि० त्रयस्त्रिंशत्+पूरणे डट्। त्र्यधिकत्रिंशत्-संख्यापूरणे स्त्रियां ङीप्।

**त्रयस्त्रिंशत्पति** पु० त्रयस्त्रिंशतो देवानां पति। १इन्द्रे हेमच०। २प्रजापतौ च तयो त्र्यधिकत्रिंशतो देवानां पतित्वात् तथात्वम्। देवाना त्रयस्त्रिंशत्त्व त

"अष्टौ वसव एकादश रुद्रा द्वादशादित्या इमे एव द्यावा पृथिवी त्रयस्त्रिंश्यौ, त्रयस्त्रिंशद्वै देवा प्रजा-पतिश्चतुस्त्रिंशस्तदेनं प्रजापतिम्" शत० ब्रा० ४।५।६।२। "कतमे ते त्रयस्त्रिंश दित्यष्टौ वसव एकादश रुद्रा द्वादशा-दित्यास्त एकत्रिंशत् इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति" शत० ब्रा० ११।६।३।५। तु अन्यथोक्ता अस्मिन् पक्षे नि-र्द्दोरणसप्तम्यासमासात् इन्द्रप्रजापतिपरत्वम् तयो-स्तेषां मध्ये श्रेष्ठत्वेन पतित्वात्तथात्वमिति बोध्यम्। "आदित्याश्च वसु वैश्व रुद्राश्चैवाश्विनावपि" रामा० १। २०। अन्यथा संख्योक्ता।

**त्रयस्त्रिंशस्तोम** पु० त्रयस्त्रिंशत् स्तोमा अत्र ष्टो०। यज्ञ-भेदे। "त्रयस्त्रिंशस्तोमेन शोण सात्रासाह पाञ्चालो राजा। तदेतद्गाथयाऽभिगीतम् "सात्रासाहे यजमाने अश्वमेधेन तौर्वशा। उदीरते त्रयस्त्रिंशा षट् सहस्राणि वर्मिणाम्" शत० ब्रा० १३।५।४।१६।

**त्रयस्त्रिंशिन्** न० त्रयस्त्रिंशत् अस्य सन्त्यस्मिन् इनि ङित्त्व। त्रयस्त्रिंशद्गृभिर्गीयमाने सामभेदे। "त्रयस्त्रिंशि नाम साम माध्यन्दिने पवमाने भवति" तैत्ति० १।२।२।४

**त्रयीतनु** पु० त्रयी वेदा एव तनुरस्य। १सूर्ये हला०। "स्वर्गद्वारं त्रय्या विद्यया भगवन्त त्रयीमय सूर्य्यमात्मान यजन्ते" भाग०५।२०।३। तस्य त्रयीमयत्वोक्तात्तथात्वम्।

**त्रयीधर्म्म** पु० त्रय्या वेदत्रयेण विधीयमानो धर्म शाक०। वैदिके धर्मे ज्योतिष्टोमादौ अमर।

**त्रयीमय** पु० त्रय्यात्मक मयट्। १सूर्य्ये त्रयीतनुशब्दे दृश्य० २त्रयीधर्म्मात्मके त्रि०। "एक मुहूर्त्तेन चतुस्त्रिंशल्लक्ष योजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चत-सृषु परिवर्त्तते पुरीषु" भाग० ५ २१।१७। "त्रयीमय रूपमिदञ्च शौकरम्" इत्युक्ते वाराहे ३रूपे न० तद् यथि-इतिक्तत्रैव "स्रुक्तुण्ड आसीत् स्रुव ईश। नासयोरिडो दरे चमसा कर्णरन्ध्रे। प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्व्वणं ते भगवन्नग्निहोत्रम्। दीक्षानुजन्मोपसद शिरोधर त्व प्रायणीयोदयनीयदंष्ट्र जिह्वाप्रवर्ग्यस्तव-शीर्षक क्रतो सभ्यावसथ्य चितयोऽसवो हि ते। सोमस्तु रेत सवनान्यवस्थिति संस्थाविभेदास्तव देव। धातवः। सत्राणि सर्वाणि शरीरसन्धयस्त्व सर्वयज्ञक्रतुरिष्टिबन्धन। नमो नमस्तेऽखिलमन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने" भाग० ३।१३।४०। ४परमेश्वरे च पु०। "स एष आत्मात्मव-तामधीश्वरस्त्रयीमयो धर्ममयस्तपोमय" भाग०२।४।१९।

**त्रयीमुख** पु० त्रयी मुखेऽस्य। विप्रे हेमच०।

**त्रयोदशन्** त्रि०त्रयश्च दश च, त्र्यधिका वा दश शाक० त्रय आदेश। १त्र्यधिकदशसंख्यायां २तत्संख्यान्विते च। "कश्चित् द्वादश मासा संवत्सरा क्वचित् त्रयोदश मास" श्रुति म०त०। तत पूरणे डट्। त्रयोदश तत्पूरणे त्रि० "ज्यैष्ठे ज्येष्ठस्य कुर्वीत त्रयोदश्यादिनाम् परम्" ज्यो० स्त्रियां ङीप्। सा च चन्द्रस्य त्रयोदशकलाक्रियात्मके तिथिभेदे सा च कार्त्तिक तत्रैव तस्योत्पत्तेः। "त्रयो दशी पञ्चदशी च माघे" मन्वादिकथने "वन्येन सतामुक्ता मघौ कृष्णा त्रयोदशी" वारुणीकथने च ति०त०।

**त्रय्यारुण** पु० आम्नातृवृष्णे त्रिधर्मणि सुते नृपभेदे "राज

"त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते" सू॰ सि॰ ।

**त्रिंशक** त्रि॰ त्रिंशता क्रीतं वुन् डिच्च । त्रिंशत्संख्यान्वितद्रव्येण क्रीते वस्तुनि ।

**त्रिंशत्** त्रि॰ त्रयोदशतः परिमाणमस्य नि॰ । १त्रिदशकसंख्यायां २तत्संख्यान्विते च । तत्र संख्येये "निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला । त्रिंशत् कला मुहूर्तं स्यादहोरात्रन्तु तावतः" । "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्" मनुः "संख्यायाः "तत्त्रिंशता भवेन्मासः" सू॰ सि॰ ।

**त्रिंशत्क** त्रि॰ त्रिंशत्परिमाणमस्य कन् । १त्रिंशत्परिमाणे अवयवे कन् । २तत्संख्यायाम् "अमात्याः पृथक् तेषां त्रिंशत्कं परिचक्षते" कामन्द॰ ।

**त्रिंशति** स्त्री त्रिंशत्+पृषो॰ । १त्रिंशत्संख्यायां २तत्संख्येये च ।"पञ्चकं मण्डलं जय्यं त्रिंशत्याश्च समीरिभिः" काम॰

**त्रिंशत्तम** त्रि॰ त्रिंशतः पूरणः तमप् । १त्रिंशत्संख्यापूरणे स्त्रियां ङीप् । "ततस्त्रिंशत्तमे व्यूहे पङ्क्तिश्चतिवन्त" शत॰ब्रा॰ १०।४।२।२२ ।

**त्रिंशत्पत्र** न॰ त्रिंशत्संख्यानि पत्राणि दलानि प्रतिपुष्पमस्य । १कुमुदे शब्दमाला ।

**त्रिंशांश** पु॰ त्रिंशत्तः त्रिंशत्पूरणोऽंशः । राशेस्त्रिंशत्पूरणे भागे षष्टिकलात्मके भागे षड्वर्गान्तर्गतानां राशिभेदे तेषामंशविशेषाणामधिपतय ज्यो॰ उक्ता यथा

"पञ्च पञ्चाष्टसप्ताक्ष्या विषमे त्रिंशदंशकाः । भौमेशनिजीवज्ञशुक्राणां व्युत्क्रमात् समे" । विषमराशौ कुजशनिगुरुबुधशुक्राणां पञ्च पञ्चाष्टसप्तपञ्चमितास्त्रिंशांशकाः क्रमात् ज्ञेयाः । समे राशौ व्युत्क्रमात् तेषां विपर्ययेण त्रिंशांशा ज्ञेया । यथा मेषो विषमराशिः तत्र प्रथमावधिपञ्चांशा भौमस्य । षष्ठांशमारभ्य दशमांशपर्य्यन्त पञ्चांशाः शनेः । एकादशांशमारभ्याष्टादशांशपर्य्यन्तमष्टावंशा गुरोः । ऊनविंशांशमारभ्य पञ्चविंशांशपर्य्यन्त सप्तांशा बुधस्य । ततः षड्विंशांशमारभ्य त्रिंशांशपर्य्यन्तं पञ्चांशा शुक्रस्य त्रिंशांशा क्रमात् ज्ञेया । मिथुनसिंहतुलाधनुःकुम्भेष्वप्येवम् । समराशौ व्युत्क्रमाद्यथा । वृषे प्रथमांशमारभ्य पञ्चांशा भृगोः । ततो द्वादशांशपर्य्यन्त सप्तांशा बुधस्य, ततो विंशांशपर्य्यन्तमष्टावंशा गुरोः । ततः पञ्चविंशांशपर्यन्त पञ्चांशा कुजस्य त्रिंशांशाः । एवं कर्ककन्यावृश्चिकमकरमीनेष्वपि बोध्याः। त्रिंशदंशका इत्यत्र वृत्तौ त्रिभागवत् पूरणार्थता

**त्रिंशिन्** त्रि॰ त्रिंशत् प्रमाणमस्य इनि डिच्च । त्रिंशत्प्रमाणे स्त्रियां ङीप् ।

**त्रिक** न॰ त्रयाणां सङ्घः कन् ।१त्रित्वसङ्ख्यायाम् २पृष्ठवंशाधोभागे, ३कटिभागे, ४त्रिफलायाम् (हरितक्यामलकीवयस्याफलत्रये) ५त्रिकटुनि, (शुण्ठीपिप्पलीमरिचत्रये) । वातादिषु मिलितेषु त्रिषु कायति कै क । ६गोक्षुरे पु॰ अमर । ७त्रिपथस्थाने हेम॰ । ८त्रिमदे "गुडूचीसारसंयुक्तात् त्रिकत्रयसमन्वयात् । वातरक्तं निहन्त्याशु सर्वरोगहरन्त्वयं." मुग्धबोध त्रिकत्रयं त्रिकटुत्रिमदम् त्रिफलम् चेति त्रयमित्यर्थः ।"युग सद्धत्कारविवर्तितत्रिक" माघ । "व्यपोढपार्श्वैरपवर्तितत्रिका" किरा॰ । "त्रिफला तु फलत्रिकम्" "कश्चिद्विवृत्तत्रिकभिन्नहारः" रघु । "एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकं तथा" हरिका॰ । तृतीयेन रूपेण चतुर्थो यस्य कन् पूरणप्रत्ययस्य वा लुक् । ९तृतीयके त्रि॰ । त्रयः अधिका शुल्कं लाभो वृद्धिर्वा यत्र शतादौ १०त्र्यधिकलाभादियुक्ते शतादौ । "द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं समम् । मासस्य वृद्धिं गृह्णीयात् वर्णानामनुपूर्वशः" मनु॰। (शतकरा तिनटाका सुद) "स्फिगस्थ्नोः पृष्ठवंशास्थ्नोर्य्ये सन्धिस्तत्त्रिकं स्मृतम्" इत्युक्ते ११सन्धिभेदे न॰।

**त्रिककुद्** पु॰ त्रीणि ककुदतुल्यानि शृङ्गाण्यस्य ककुदस्य अन्त्यलोपः समा॰ । त्रिकूटाख्ये पर्वतभेदे अमर । पर्वत एवास्य अन्त्यलोपः नान्यत्र । तत्र त्रिककुद तद्युक्ते त्रि॰ । २विष्णावपि पु॰ वा अन्त्यलोपः । "तथैवास्मि त्रिककुदो वाराहं रूपमास्थितः । त्रिककुत् तेन विख्यातः शरीरस्य प्रमापणात्" भा॰ शा॰ ३४४ अ॰ । ३दशरात्रसाध्ये यज्ञभेदेऽपि वा अन्त्यलोपः । "त्रिककुद्वा एष यज्ञो यद्दशरात्रं ककुत् पञ्चदश ककुदेकविंश ककुत् त्रयस्त्रिंशो य एवं विद्वान् दशरात्रेण यजते त्रिककुदेव समानानाम्" तै॰सं॰७।२।५।२ । "चतुष्टोमात् समूढात् त्रिककुद शस्तम् अथ महात्रिककुदश्च, छन्दोमत्रिककुदश्च" शा॰ श्रौ॰ १६।२६।१४ । "यत्र वा इन्द्रो वृत्रमहंस्तस्य यदक्ष्याशीत्तं गिरिं त्रिककुदमकरोत्" शत॰ ब्रा॰ ३।१।३।१२। "वर्षिष्ठः पर्वतानां त्रिककुन्नाम ते पिता" अथ॰ ४।६।८।

**त्रिककुभ्** पु॰ त्रिभा क पीतमुदकं स्कुभ्नाति स्कुम्भ क्विप् छान्दस सलोपः । १उदाने वायौ "उदानो वै त्रिककुप्छन्द" शत॰ब्रा॰ ८।५।२।४। २नवरात्रसाध्ये यज्ञ॰

भेदे । त्रिककुभोऽप्यत्र । त्रिककुबप्यर्द्ध पुन्न । महात्रिक-
कुप् व्यूढो नवरात्र । समूहस्त्रिककुप्समूह” आश्व० श्रौ० १०।
२।१ नवरात्र इत्यनुवर्त्तते, नारा० “चतुष्टोम त्रिककुबनभ्य
ष्टोऽभिप्लव एतैश्चतुर्भिः स्वामा श्चैन्द्रकामो यजेत ।
२२ एतैस्त्रिककुम्महात्रिककुप्समूढ त्रिककुप् चतुष्टोमत्रिक-
कुब्भि स्वामां श्चैन्द्रकामो यजेत । एतेषां दशमो वैश्वा-
नर एव भवति । कामश्चैतेषामेकैकेन सम्बध्यते” नारा० ।

त्रिककुब्धामन् पु० मूर्द्धादिमध्याभेदेन तिसृणां ककुभां
टिया समाहार त्रिककुब् तत् धाम स्थानयो यस्य ।
विष्णौ विष्णुस० । [ गोक्षुरवृक्षे शब्दर० ।

त्रिकट पु० त्रीन् वातादिदोषान् कटति आवृणोति अच् ।

त्रिकटु न० त्रयाणां कटुरसानां समाहारः । मिलितेषु
शुण्ठीपिप्पलीमरिचेषु हेम० । “विश्वोपकुल्यामरिच
त्रयं त्रिकटु कथ्यते । त्र्यूषणं दीपनं हन्ति श्वासकास
त्वगामयान् । गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान्”
भावप्र० ।

त्रिकण्ट पु० त्रय कण्टा कण्टका अस्य । १गोक्षुरे २क्षुद्रगो-
क्षुरे, च रत्नमा० (टेङ्गरा) ३मत्स्यभेदे शब्दर० । ४पलाशे
शब्दच० । वृहत्यग्निदमनीद्रु स्वर्णीमके ५वृक्षे राजनि० ।

त्रिकण्टक पु० स्त्री लघुगर्गमत्स्ये त्रिका० समा० द्वि० ।
२कण्टकत्रये स्त्री । तत परिमाणे रत्नमा० अञ् । त्रैक-
ण्टक तत्परिमाणे । त्रयः कण्टका अस्य । ३गोक्षुर
वृक्षे पु० हेमच० । ४कण्टकत्रयान्विते त्रि० ।

त्रिकद्रुक पु० ज्योतिर्गौरायुरित्येतन्नामके “अभिप्लवाहस्त्रिके
“अभिप्लवत्र्यह पूर्व त्रिकद्रुका इत्याचक्षते” आश्व० श्रौ० ११।
१।११ त्रिकद्रुकेषु पाहि सोममिन्द्र ।” ऋ० २।११।१७ “त्रिकद्रु-
केषु ज्योतिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेष्वहःसु”
भा० “त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः” कात्या०
श्रौ० २४।१।६ त्रिकद्रुक इति ज्योतिरादीनां सर्वादितना
मना सव्यवहारार्थं कर्म “त्रिकद्रुका ष्ठायनस्य
इति पशुकामस्य” आश्व० श्रौ० ।।१०।१।१६ ।

त्रिकर्मन् पु० त्रीणि कर्माण्यस्य । यजनं याजनञ्चैव तथा
दानप्रतिग्रहौ । अध्यापनञ्चाध्ययन षट्कर्मा धर्मभाग्
द्विज” भा० अनु० १२१ अ० । उक्तेषु षट्सु कर्मसु
मध्ये इत्यर्थयाजनप्रतिग्रहाध्यापनभिन्नाश्यसंदाने-
ज्याध्ययनरूपकर्मकारिणि द्विजे । “त्रैविद्यो ब्राह्मणो
विद्वान् न चाध्ययनजीवकः । त्रिकर्मा त्रिपरिक्रान्तो
मैत्र एव स्मृत द्विज” भा० अनु० १४१ अ० ।

त्रिकघ्न न० तिसृणां कशाना तदाघातानां समाहार । कशा-
घातत्रये । कशाघातत्रिकस्य कशशब्दे १८२४पृ० दर्शितम् ।

त्रिकशूल न० ६त० । वातजन्ये त्रिकस्थे व्यथाभेदे । “स्फि
गस्थ्नो पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिक स्मृतम् । तत्र
वातेन या पीडा त्रिकशूल तदुच्यते” भावप्र० ।

त्रिका स्त्री त्रिधा कायति कै—क । कूपसमीपस्थे जलोद्धारके
त्रिदारुमये यन्त्रभेदे क्षीरस्वामी ।

त्रिकाण्ड पु० त्रीणि काण्डान्यस्य । स्वर्गवर्गादिकाण्डभूमि-
वर्गादिकाण्डसामान्यकाण्डरूपात्मके नामलिङ्गानुशासने
अमरसिंहकृते १कोषभेदे तस्यैव शेषभूतस्त्रिकाण्डशेषः पुरु-
षोत्तमकृत यथाह तदुपोद्घाते “अमौक्तिकत्वादमरः स्वकोषे
न यानि नामानि समुल्लिलेख । विलोक्य तैरप्यधुना प्रचा-
रमय प्रयत्न पुरुषोत्तमस्य” । २निरुक्ते तदपि त्रिकाण्ड
तच्चानुक्रमणिकाभाष्ये दर्शितम् यथा “आद्य नैघण्टुक
काण्ड द्वितीय नैगम तथा । तृतीय दैवत चेति समा-
म्नायस्त्रिधा मत” । त्रयाणां काण्डानां समाहारः ङीप् ।
त्रिकाण्डी ३काण्डत्रये स्त्री । त्रीणि काण्डानि प्रमाण
मस्य मात्रच् द्विगोस्तस्य लुकि चेत्परत्वे ङीप् त्रिकाण्डी
क्षेत्रभक्ति । त्रिकाण्डमिते रज्ज्वादौ स्त्री टाप् ।

त्रिकाय पु० त्रयः काया अस्य त्रिक दु वा त्रिकमेत्यकात् इ—
अपादाने अच् वा । बुद्धदेवे हेमच० ।

त्रिकार्षिक न० कर्षाय हितम् ठक् त्रयाणां वातपित्तक-
फानां कार्षिकम् । नागरातिविषामुस्तारूपे मिलिते
औषधभेदे राजनि० ।

त्रिकाल न० त्रयाणां कार्य्यकालभूतभविष्यत्कालानां समा-
हार । १भूतभविष्यद्वर्त्तमानकालत्रये २प्रातर्मध्याह्न-
रूपकालत्रये च । “त्रिकाल पूजयेद्देवीम्” इति तन्त्रम् ।
त्रिकालज्ञः । त्रयः काला अस्य । ३कालत्रयवर्त्तिनि
त्रि० । साम्प्रतकाल बाह्य त्रिकालमाभ्यन्तर करणम्”
सा० का० । करणस्य मनसः त्रिकालमुदाहरणमत्र
यथा “नदीपूरभेदादभूद्वृष्टि, अस्ति धूमादग्निरिह नग-
निकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति
वृष्टिरिति । तदनुरूपाय सङ्कल्पाभिमानाध्यवसाया
भवन्ति” सा० कौ० ।

त्रिकालज्ञ पु० त्रिकालवर्त्तिपदार्थान् जानाति ज्ञा—क ।
१सर्वज्ञे त्रिकालविदादयोऽप्यत्र । २भूतभविष्यद्वर्त्तमान-
कालाभिज्ञे त्रि० । “युद्ध यथा यदा वा भविष्यदादि-
ष्टते त्रिकालज्ञ” इ०व० १७ अ० । त्रिकालवेत्ताप्यत्र ।

**त्रिकालदर्शिन्** पु० त्रिकाल तद्वर्त्तिवस्तु पश्यति दृश–णिनि । १ऋषौ हारा० । २त्रिकालज्ञे त्रि० "प्रश्ने त्रिन्यपि काले त्रिकालदर्शी कलौ भवति" वृ० स० २१ अ० ।

**त्रिकूट** पु० त्रीणि कूटानि शृङ्गाण्यस्य । लवणसमुद्रमध्यस्थे लङ्कापुराधारे पर्वतभेदे अमर । "तैश्छे केशरिक्रान्त-त्रिकूटशिखरोपमा" माघ "स सागरमनाधृष्यमतिक्रम्य महाबल । त्रिकूटस्य तटे लङ्का स्थित स्वस्थो ददर्श ह" रामा० सु० २ अ० । स आकरत्वेनास्त्यस्य अच । २तद्भवे सामुद्रलवणे न० । ३सुमेरुसुते क्षीरोदसमुद्रतीरस्थे पर्वते च तत्कथा वामनपु० "सर्वरत्नमय श्रीमान् त्रिकूटो नाम पर्वत । सुत पर्वतराजस्य सुमेरोर्भास्कर द्युते । क्षीरोदजलवीच्या यो धौतामलशिलातल । उत्थित सागर भित्त्वा देवर्षिगणसेवित" इत्युपक्रमे "तस्यैक काञ्चन शृङ्ग सेवते यद्दिवाकर । नानापुष्प समायुक्त नानागन्धाधिवासितम् । द्वितीय राजत शृङ्ग सेवते यन्निशाकर । पाण्डुराम्बुदसकाश तुषारचयसन्निभम् । वज्रेन्द्रनीलवैदूर्यतेजोभिर्भासयन् दिश । तृतीय ब्रह्मसदन प्रकृष्ट शृङ्गमुत्तमम । न तत् कृतघ्ना' पश्यन्ति न नृशसा न नास्तिकाः । नातप्त तपसो लोका ये च पापकृतो जना । तस्य सानुमत पृष्ठे सर काञ्चनपङ्कजम् । कारण्डवसमाकीर्ण राजहसोपशोभितम । गजो ह्यचलसकाशो मदाञ्चितलोचन । तृषित पातुकामोऽसावयतीर्याथ तज्जलम् । सलील पङ्कजवने यूथमध्यगतश्चरन् । गृहीतस्तेन रौद्रेण ग्राहेणाव्यक्तमूर्त्तिना । गरुडस्थो जगन्नाथो लोकाधारस्तपोधन ।। ग्राहग्रस्त गजेन्द्र त तञ्च ग्राहं जलाशयात् । उज्जहाराप्रमेयात्मा तरसा मधुसूदन । स्थलस्थ दारयामास ग्राह चक्रेण माधव । मोक्षयामास नागेन्द्र पाशेभ्य शरणागतम्" ।

**त्रिकूटलवण** न० त्रिकूट सामुद्रमिव लवणम् । द्रोणीलवणे राजनि० ।

**त्रिकूटवत्** पु० त्रीणि कूटानि सन्त्यत्र मतुप् मस्य व । त्रिकूटपर्वते । "हिमवान् पारियात्रश्च तथा चक्रत्रिकूटवान्" भा० आश्वमेधिकप० मेरुपर्वतकथने" ४३ अ० ।

**त्रिकूटा** स्त्री भैरवीभेदे तन्त्रसा० ।

**त्रिकूर्चक** न० सुश्रुतोक्ते शस्त्रभेदे शस्त्रधारशब्दे ३७५ पृ० दृश्यम् । "विशेषेण बालवृद्धसुकुमारभीरुनारीणा राज्ञा राजपुत्राणाञ्च त्रिकूर्चकेन विस्रावयेत्" सुश्रु० ।

**त्रिकोण** त्रि० त्रय कोणा यस्य । त्रिकोटियुक्ते १पदार्थे "बिन्दुत्रिकोणवसुकोणदशारयुग्मम्" तन्त्रे श्रीचक्रोक्तौ । ज्योतिषोक्ते लग्नात् २नवमपञ्चमस्थाने न० । "त्रिकोण नवपञ्चमम्" दीपि० । "त्रिकोणगान् गुरुश्चैव पश्यन् पूर्णफलप्रद" ज्यो० त० । ३योनौ शब्दकल्पतरु । ४त्रिभुजे क्षेत्रभेदे न० । क्षेत्रशब्दे २३८१ पृ० समत्रिकोणविषमत्रिकोणादिस्वरूपादिकमुक्तम् । ५कामरूपपीठभेदे "करतोया समारभ्य यावद्दिक्करवासिनीम् । शतयोजनविस्तार त्रिकोण सर्वसिद्धिदम्" कामाख्यातन्त्रम् । त्रिकोणपदार्थाय कतिचित् कविकल्पलतायां सञ्चित्य दर्शिता । "हलहरनेत्रकामाख्यावह्निमण्डलैकारवज्रशृङ्गाटशकटयोनिरूपा" ।

**त्रिकोणफल** न० त्रिकोण फलमस्य । १शृङ्गाटके भावप्र० । ६त० । त्रिभुजक्षेत्रफले "लम्बगुण भूम्यर्द्ध स्पष्ट त्रिभुजे फल भवति" लीला० । [क्षारावयवक्षारटङ्कणक्षारेषु ।

**त्रिक्षार** न० त्रयाणा क्षाराणा समाहार । मिलिते सर्जि-

**त्रिक्षुर** पु० त्रीणि क्षुराणीवाग्राण्यस्य । कोकिलाख्यवृक्षे रत्ना० ।

**त्रिख** न० त्रिधा खमाकाशोऽवकाश फलेऽस्य । त्रपुषे शब्दच० ।

**त्रिखट्** न० त्रिसृणा खट्टाना समाहार । खट्टात्रये । तत वा ङीप् । तत्रार्थे स्त्री अमर ।

**त्रिखर्व** पु० सामवेदशाखाभेदाध्यायिनि "तामेतान्त्रिखर्वा उपासते तस्मात्ते स्पर्द्धमाना न पूर्यन्ते" ताण्ड्यब्रा० २।८।२। "तामेता दशसप्तास्या विष्टुति त्रिखर्वा शाखिन उपासते प्रयुञ्जते" भाष्यम् ।

**त्रिगङ्ग** अव्य० तिस्रो गङ्गा नद्यो यत्र बहुव्रीहौ "नदीभिश्च" पा० अव्ययी० । १तीर्थभेदे । "सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन् । सुधा चैव लभेत् भोक्तु यो नरो जायते पुन" भा० अनु० २५ अ० ।

**त्रिगण** द्वि० ६त० । १त्रिवर्गे अमरटीकायां नीलकण्ठ "न बाधतेऽस्य त्रिगण परस्परम्" किरा० ।

**त्रिगन्धक** न० त्रयाणा गन्धद्रव्याणा समाहार । १त्रिजातके त्रि० मेदिन्यां भास्कर । त्रिसुगन्धिसमाख्यम् । त्रिजातकशब्दे दृश्यम् ।

**त्रिगम्भीर** पु० त्रिभिर्गम्भीर । स्वरेण सत्त्वनाभिश्च त्रिगम्भीर शिशु शुभ' काशी० ११ अ० उक्ते शुभलक्षणयुक्ते "त्रिषु विपुलो गम्भीरस्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्व" इत्युपक्रमे "नाभि स्वर सत्त्वमिति प्रदिष्ट गम्भीरमेतत्त्रितय नराणाम्" वृ० स० ६८ अ० ।

**त्रिगर्त्त** पु० त्रीणि गर्त्तानि यत्र । १जालन्धरे देशे हेमच० । स च देशः वृ०स०१४अ० कूर्मविभागे उत्तरस्यामुक्तः “उत्तरत कैलास” इत्युपक्रमे “आदर्शान्तर्द्वीपित्रिगर्त्ततुरगाननाश्वमुखा” सोऽस्याभिजन, तस्य राजा वा अण् । त्रैगर्त्त पित्रादिक्रमेण तद्देशवासिनि तस्य पे च बहुषु अणो लुक् । २तदर्थे व०व० “इयिद्वाम्बष्ठत्रिगर्त्तसौराष्ट्रान्” वृ स० ९अ० । “सुशर्मा च नरव्याघ्र । त्रिगर्त्त प्रस्थलाधिप” भा० द्रो० १७अ० । आर्षत्वात् एकत्वेऽपि अणो लुक् । “मद्रराजश्च बलवान् त्रिगर्त्तानां धीश्वर” हरिवं०९१ अ० । स्वार्थे क । तदर्थे त्रिका० ।

**त्रिगर्त्तषष्ठ** पु० ब० व० त्रिगर्त्तः षष्ठो वर्गो यस्य । १आयुधजीविसङ्घभेदे स च सङ्घ सि० कौ० उक्तो यथा “आहुस्त्रिगर्त्तषष्ठांस्तु कौण्डोपरथदाण्डकी । क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकि” “दामन्यादित्रिगर्त्तषष्ठाच्छ” पा० स्वार्थे तेभ्य छ । कौण्डोपरथीय इत्यादि ।

**त्रिगर्त्ता** स्त्री त्रयो योनिस्था गर्त्ता अस्याः । कामुकस्त्रीमायां मेदि० । एकयोनिकाया अपि तस्या मैथुनाचरणे त्रियोनिकतुल्यत्वात्तथात्वम् ।

**त्रिगुण** न० त्रयाणां सत्त्वरजस्तमसां गुणानां समाहारः । समाहृता वा त्रयो गुणा, त्रयोगुणा अस्य वा । साङ्ख्यमतसिद्धे साम्यावस्थापन्नगुणत्रयात्मके १प्रधाने । “त्रिगुणमविवेकि विषय सामान्यमचेतन प्रसवधर्मि” सा० कौ० “त्रिगुण त्रयो गुणा सुखदुःखमोहा अस्येति त्रिगुण तदनेन सुखादीनामात्मगुणत्व पराभिमतमपाकृतम्” त०कौ० “शब्दस्पर्शविहीन तद्रूपादिभिरसंयुतम् । त्रिगुण तज्जगद्योनिरनादिप्रभवाप्ययम्” विष्णुपु० “सत्त्वरजस्तमसां साम्यावस्था प्रकृति प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्च तन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्य स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गण” सा० सू० ‘सत्त्वादीनि द्रव्याणि न वैशेषिकवद्गुणा संयोगवत्त्वात् लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च । तेष्वत्र शास्त्रे श्रुत्यादौ च गुण शब्द पुरुषोपकरणत्वात्पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च प्रयुज्यते । तेषां सत्त्वादिद्रव्याणां या साम्यावस्था न्यूनानतिरिक्तावस्था न्यूनाधिकभावेनासंहतावस्थेति यावत् । अकार्यावस्थेति निष्कर्षः । अकार्यावस्थोपलक्षित गुणसामान्य प्रकृतिरित्यर्थः । यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात् “सत्त्व रजस्तम इति एषैव प्रकृति सदा । एषैव संसृतिर्जन्तोरस्या पारे पर पदम्” इत्यादिस्मृतिभिर्गुणसाम्यातस्यैव प्रकृतित्ववचनाच्च । सत्त्वादीनामनुगमाय सामान्येति । पुरुषव्यावर्त्तनाय गुणेति । महदादिव्यावर्त्तनाय चोपलक्षितान्तमिति । महदादयोऽपि हि कार्यसत्त्वादिरूपा पुरुषोपकरणतया गुणाश्च भवन्तीति । तदत्र प्रकृते स्वरूपमेवोक्तम्” भाष्यम् २सत्त्वादिगुणयुक्ते त्रि० “महान्तमेव चात्मान सर्वाणि त्रिगुणानि च । विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च” मनु । त्रिभिर्गुण्यते गुण–कर्मणि क । ३त्रिभिर्गुणिते त्रि० “तस्य व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य” रघुः “अताय मौर्वीं त्रिगुणां बभार याम्” कुमा० “एतच्छौच गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुण वानप्रस्थानां यतीनान्तु चतुर्गुणम्” मनुः । त्रयोगुणा अस्याः । ४मायायां स्त्री ५तन्नामके (ह्रीं)बीजभेदे च “वेदाद्य त्रिगुणां रमामथ वदेत् कामेन संवेष्टिताम्” तन्त्रसा० श्री विद्यामन्त्रभेदोक्तौ ६त्रिगुणे त्रिसूत्रे “त्रिगुणपरिवारप्रहरण” किरा० । “त्रिगुण त्रिविध परिवार आकारो यस्य” मल्लि० । कर्णशब्दे परेऽस्य सञ्ज्ञायाम् दीर्घत्वम् त्रिगुणो कर्णौ अस्य । त्रिगुणाकर्ण तथा सञ्ज्ञायुक्ते त्रि० । “पञ्चभिर्मर्विवेक्षो रागादि त्रिपदात्मा । उत्पत्तिस्थितिनाशेषु रजआदित्रिगुणा मता” देवीपु० ४५ अ० उक्ते ७दुर्गायां स्त्री ।

**त्रिगुणाकृत** त्रि० त्रिगुण कृत्वा कृष्ट डाच् कृ–क्त । त्रिधा हलेन कृष्टे क्षेत्रादौ अमर ।

**त्रिगुणात्मक** न० त्रयो गुणा तेजोबन्नरूपा आत्मानोऽस्य । प्रधाने । “गुणाश्च लोहितशुक्लकृष्णाः प्रमाणकार्येषु तेजोबन्नेष्वन्तरप्रकृतिषु श्रुतिप्रसिद्धा । तथा च कार्यगत त्रिरूपेण कारणमप्युन्नामव्यक्तात्मक त्रिगुणात्मकम् । यद्वा रजःसत्त्वतमोरूपास्त्रयोगुणास्तद्युक्तप्रधान गुणगुणिनोरभेदविवक्षया त्रिगुणात्मक भवति ।

**त्रिगुणित** त्रि० त्रिभिर्गुणित । त्र्याहते ।

**त्रिगुणी** स्त्री त्रयो गुणा मतेऽस्याः गौरा० । बिल्ववृक्षे तस्य मतस्य त्रिगुणात्मकत्वात्तथात्वम् । “मूल धात्री त्रिगुणत्रा सवितरि त्रिगुणे, चीरिकामूलबिल्वे” ज्यो० “त्रिगुणी श्रीफलवृक्ष” शब्दच० ।

**त्रिचक्र** पु० त्रीणि चक्राण्यस्य । अश्विनीकुमारयो रथे । “अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनो र्यातु सुष्टुत” ऋ०१।१५७।२ ।

**त्रिचक्षुस्** पु० त्रीणि चक्षूंषि यस्य । त्रिनेत्रे शिवे "त्रिचक्षुर्गणधुरेकस्त्व विभुर्दामोदरोऽपि च" भा० शा० ४२ अ० ।

**त्रिचतुर** त्रि० । त्रयो वा चत्वारो वा विकल्पार्थे बहु० डच् समा०। विकल्पेन त्रित्वचतुष्कसंख्यान्विते(तिन या चार) अर्थे । "सन्तु पुरीपरिसरे च शिरीषमृद्वी गत्वा जवात् त्रिचतुराणि पदानि सीता" सा०द० ।

**त्रिचित्** पु० त्रीन्+अग्नीन् चिनोति स्म चि—भूते क्विप् । अतीताग्नित्रयचयनकर्त्तरि ।

**त्रिचित** पु० त्रिभागोत्सेधाभिरिष्टकाभिश्चित । गार्हपत्येऽग्निभेदे । "त्रिचितमित्येके" कात्या० श्रौ० १७।१।२२ । "गार्हपत्यं कुर्वन्ति तत्र च त्रिभागोत्सेधा इष्टका इति सम्प्रदाय । अस्मिंश्च पक्षे प्रथमचितिं लोकंपृणाना पूरण स्मृत्यम्" कर्क । "उपर्येव चितिं यावत्क चिनोति । अथ यो गार्हपत्येऽग्नि सोऽस्यायमग्निः प्राणात त एके त्रिचितं चिन्वन्ति" शत०ब्रा० ७।१।२।१५ ।

**त्रिजगत्** न० त्रिगुणितं जगत् समाहारात् कर्मधारयः । स्वर्गमर्त्यपातालरूपे लोकत्रये "तस्य पितस्त्रिजगतो जनको जनन्या" भाग० ८।८।१६ श्लो० । त्रिजगत्यप्यत्र स्त्री "अन्तराल एव त्रिजगत्यास्तु दक्षिणस्याम्" भाग० ५।२६।६ श्लो० ।

**त्रिजटा** स्त्री तिस्रो जटा यस्याः ।१रावणालयस्थे सीतापक्षपातिराक्षसीभेदे "सीतां ताभिरनार्याभिर्दृष्ट्वा सन्तर्जितां तदा । राक्षसी त्रिजटा वृद्धा प्रबुद्धा वाक्यमब्रवीत्" । "एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्च्छिता" रामा०२७ अ०"हनुमानपि विक्रान्तः सर्वं शुश्राव तत्त्वत । सीतायास्त्रिजटायाश्च राक्षसानाञ्च गर्ज्जितम्" ३० अ० । "सीता मायेति शंसन्ती त्रिजटा समजीवयत्" रघुः । २शिवे पु० । "त्रिजटाय त्रिशीर्षाय त्रिशूलायुधपाणिने । त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नम" भा० अनु० २८६ । ३विल्ववृक्षे पु० । "शृणु देवि ! प्रवक्ष्यामि रहस्यं त्रिजटोत्तमम् । यत्र ब्रह्ममय देवि ! अद्भुत वरवर्णिनि ! । श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनम् । विष्णुप्रीतिकरश्चैव मम प्रीतिकरं सदा । ब्रह्मविष्णुशिवा पत्रे हन्ते च शक्तिरूपिणी । तन्मूले तु यजेत् यत्र मम त्वद् प्रिये ! । एवञ्च त्रिजटापत्रैर्हरं वा हरिमर्च्चयेत् । कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः" मानभैरवीतन्त्रे ६प० ।

**त्रिजात** न० त्रिगुणितं जातं सुगन्धिद्रव्यरूप मन्दद्रव्य समाहारात् कर्म० । १तुल्यभागे त्वगेलापत्ररूपे मिलिते सुगन्धिद्रव्ये । स्वार्थे क । त्रिजातक तत्रार्थे "त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तं चतुर्जातकमुच्यते" राजनि० । "एलादिभिः चतुर्भिस्तु त्रिजात त्रिसुगन्धिकम् । चतुर्जातं समागम्य इव वातकफापहम्" "शीत त्रिजातात्क्रमशो विमृद्य योगात्तद्रूपा गुटिका प्रयोज्या" 'व्योष त्रिजातकं मुस्ता विडङ्गामलके तथा" सुश्रु० ।

**त्रिजीवा** स्त्री त्रिषु राशिषु जीवा । नवांशां राशीनां ज्या२४२८ संख्यारूपे ज्यारूपे पदार्थे "अन्त्यज्याघ्नत्रिजीवाप्त स्फुटो भूपरिधि स्मृतः" सू० सि० ।"त्रिज्यया गजाग्निवेदराम ३४३८ मितया भक्तः" रङ्गना० । त्रिजत्रादयोऽप्यत्र । "तच्चेत विपरीताया कृत्यात् त्रिजत्रान्त्यकर्णयो" सू० सि० "त्रिज्यान्त्यकर्णयोस्त्रिराशिज्याद्वितीयशीघ्रकर्णयो" रङ्गना०।

**त्रिण** न० तृण+पृषो० । तृणशब्दार्थे शब्दरत्ना० । तृणशब्दव्युत्पत्तौ रेफेकारसंयुक्तणव्युत्पन्नशब्दान्तरमस्तीति उज्ज्वलद० । "उत्क्षिप्तत्रिणपलप्रांशुविहगः सौम्यस्वनः पूजित" वराह ।

**त्रिणता** स्त्री त्रिषु स्थानेषु नता समासात् पूर्वपदात् णत्वम् । १धनुषि त्रिका० । २त्रिषु स्थानेषु नते त्रि० । अससंज्ञायां न णत्वमिति भेद । "स्तनयोरापीनभारात्तराकृष्ट नमिता इव । कामुकानिव नालीकांस्त्रिणता सहसाऽमुचम्" माघ । वेश्यानां मध्यमश्रु त्रिषु स्थानेषु नतत्वात् त्रिणतत्व केचि णनकारयोरभेद इत्याचक्षुरिका । त्रिणस्य भाव तल् । ३तृणभावे तृणत्वे च स्त्री ।

**त्रिणव** पु० त्रिरावृत्तानव सुच्समा० समासात् णत्वम् । सप्तविंशतिसंख्यायामे सामस्तोमभेदे । "त्रिणवत्रयस्त्रिंशौ स्तोमौ हेमन्तशिशिरावृतू" यजु० १०।१४ । "त्रिणवस्तोम एव साम्नात "नवभ्यो हिङ्करोति स तिसृभि स पञ्चभि स एकया" नवभ्यो हिङ्करोति स एकया स तिसृभि स पञ्चभि, नवभ्यो हिङ्करोति स पञ्चभि स एकया स तिसृभिर्वज्रो वै त्रिणव इति" श्रुतिः । "प्रथमपर्य्याये प्रथमा त्रिर्गायेत् मध्यमां पञ्चकृत्वः उत्तमा सकृत्, द्वितीयपर्य्याये प्रथमा सकृद्गायेन्मध्यमा त्रि;रुत्तमां पञ्चकृत्व ,तृतीयपर्य्याये प्रथमां पञ्चकृत्वो, मध्यमां सकृदुत्तमा त्रिर्गायेत् सोऽयं त्रिरावृत्तनवसङ्ख्योपेतत्वात् त्रिणवको वलसमान० स्तोम" वेददी० । "त्रिणवान्युक्थानेकविंशानि पृष्ठानि पट्-

"अथ नभस्य इव त्रिदशायुधम् कनकपिङ्गतडिद्गुणसंयुतम्" रघु ।

**त्रिदशारि** ६त० । असुरे शब्दरत्ना० ।

**त्रिदशालय** पु० ६त० । १स्वर्गे अमर । २सुमेरुपर्वते हलायु० ।

**त्रिदशावास** पु० ६त० । १स्वर्गे हला० । २सुमेरुपर्वते च ।

**त्रिदशाहार** ६त० । अमृते सुधायां हलायु० ।

**त्रिदशेश्वर** पु० ६त० । १इन्द्रे २दुर्गायां स्त्री ङीप् । "सुराणांस्त्रिदशा देवा नन्दिनी दुन्दुभिर्मता । तेषाञ्च नन्दिनी नन्दी ईशत्वात् त्रिदशेश्वरी" देवीपु० ४५ अ० ।

**त्रिदिनस्पृश्** पु० त्रीन् दिन स्पृशति स्पृश–क्विन् । १त्र्यहस्पर्शे अवमदिनभेदे यथा "तिथ्यन्तद्वयमेको दिनवारं स्पृशति यत्र तद्भवत्यवमदिनम् । त्रिदिनस्पृक् दिनत्रयस्पर्शनादह्न" इति ज्यो० त० । अयनशब्दे ४२१ पृ० तद्गमनादि दृश्यम् । अस्य क्विन्नन्तत्वात् झलि पदान्ते च कुत्वम् ।

**त्रिदिव** पु० त्रयो ब्रह्मादयो दीव्यन्त्यत्र अधर्थे आधारे क, त्रिधा सत्त्वादिभेदेन दीव्यन्ति प्रकाशन्तेऽत्र दिव–क वा तृतीया द्यौः वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वात् पृषो० । चोकात् पुंस्त्वम् । १स्वर्गे, अमर० २आकाशे, हेमच० । ३सुखे ४सुखे न० शब्दार्थचि० । ५नदीभेदे स्त्री मेदि० । "न कोटमस्य त्रिदिवेऽपि भूपते" । "त्रिदिवस्थेऽपि निस्पृहोऽभवत्" । "देवादिनाम त्रिदिवेऽपि यस्य" रघु । "अमू किल त्व त्रिदिवादवातर" माघः ।

**त्रिदिवाधीश** पु० ६त० । १इन्द्रे हेम० २देवमात्रे च । त्रिदिवेश्वरादयोऽप्यत्र ।

**त्रिदिवेश** पु० ६त० । १देवे अमर० ।

**त्रिदिवोद्भवा** स्त्री त्रिदिवे उद्भवो यस्याः । १स्थूलैलायां राजनि० । २गङ्गायाञ्च । ३स्वर्गभवमात्रे त्रि० ।

**त्रिदिवौकस्** पु० त्रिदिवं ओको यस्य । १देवे अमरः । "यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकस" मनु पृषो० त्रिदिवौकसोऽपि तत्रार्थे ।

**त्रिदृश्** पु० त्रीणि दृशोऽस्य त्रीणि भूतादीनि पश्यति वा दृश–कर्त्तरि क्विप् वा । १त्रिनयने शिवे हेमच० ।

**त्रिदोष** न० त्रयाणां दोषाणां वातपित्तकफजानां समाहार । १वातपित्तकफजदोषत्रये त्रयो दोषाहेतुत्वेन यत्र । २त्रिदोषजे रोगभेदे त्रिदोषजशब्दे दृश्यम् ।

**त्रिदोषज** त्रि० त्रिदोषात् जायते जन–ड । दोषत्रयजाते वातादित्रिसन्निपातजे रोगभेदे "चिरज्वरे वातकफोत्थे वा त्रिदोषजे वा दशमूलमिश्र० । किरातत्तिक्तादिगणं प्रयोज्य शुद्ध्यर्थिने वा त्रिवृतामिश्र" चक्रद० । अस्य पूर्वरूप "सर्वलिङ्गसमवाय" भावप्र० । ज्वरशब्दे दृश्यम् ।

**त्रिधन्वन्** पु० सुधन्वन पुत्रभेदे "सुधन्वन सुतश्चासीत् त्रिधन्वा रिपुमर्दन० । राज्ञस्त्रिधन्वनश्चासीद्विद्वांस्त्रय्यारुण० सुत" हरिवं० १२ अ० ।

**त्रिधा** अव्य० त्रि+प्रकारे धाच् । त्रिप्रकारे । "एकैकमूर्त्तिर्बिभिदे त्रिधा सा" कुमा० । "ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदत" गीता ।

**त्रिधातु** पु० त्रीन् धर्मार्थकामान् दधाति पुष्णाति धा–तुन् । १गणेशे त्रिका० । समा० द्विगु० । २धातुत्रये न० ।

**त्रिधामन्** पु० त्रीणि धामानि भूरादीनि स्थानानि, तेजांसि सत्त्वादीनि वा यस्य । १शिवे, २विष्णौ, ३अग्नौ च । शब्दार्थकल्पतरुः । समाहारद्विगु । ४धामत्रये न० स्त्री स्त्रीत्वपक्षे वा ङीप् । "स एषोऽक्षयश्चक्रविद् त्रिनाभिसप्ताश्वयुक्तं वहते वै त्रिधाम" भा० आनु० १५८ अ० । "त्रिधामानं जयस्तत्र करन् विष्णुं सनातनम्" हरिवं० २७१अ० । ६त० । ५त्रिसंख्यान्विते त्रि० तानि च कानिचित् संक्षिप्य "त्रिगुणीकृतसर्वाङ्गी चिद्रूपा त्रिवर्गोहिनी । प्रसूते" इत्युपक्रमे "त्रिपुष्करं स्वरान् देवीर्ब्रह्मादीनां त्रयं त्रयम् । वह्निकालत्रयं शक्तित्रयं इतित्रयं महत् । नाडीत्रयं त्रिवर्गं वा यद्यदन्यत् त्रिधाम तत्" शा० ति० उक्तानि । अन्यान्यपि त्रित्वसंख्यान्वितानि एकादिशब्दे दृश्यानि ।

**त्रिधामूर्त्ति** पु० त्रिधा मूर्त्तिरस्य । ब्रह्मविष्णुमहेशरूपमूर्त्तित्रयान्विते परमेश्वरे ।

**त्रिधार** त्रि० तिस्रो धारा यस्याः, त्रिषु स्थानेषु वा धाराः प्रवाहा यस्य यस्या वा । १धारात्रयान्विते २गङ्गायां स्त्री तस्याः स्वर्गमर्त्यपातालेषु धारावत्त्वात् तथात्वम् ३स्नुहीभेदे च शब्दार्थचि० । तस्य अग्रत्रयवत्त्वात् तथात्वम् ।

**त्रिधारक** पु० तिस्रो धारा अग्राण्यस्य कप् संज्ञायां कन् वा । गुण्डतृणे राजनि० ।

**त्रिधारस्नुही** स्त्री त्रिषु भागेषु धारा यस्याः कर्म० । (तेकाटासिजु) स्नुहीभेदे राजनि० ।

**त्रिधाविशेष:** पु० त्रिधा त्रिप्रकारो विशेष० । सूक्ष्मादित्रयरूपे विशेषे "सूक्ष्मा मातापितृजा सह प्रभूतैः त्रिधा विशेषा स्युः" सां०का० । "सूक्ष्मशरीरमेकं माता पितृजो द्वितीयः महाभूतानि तृतीयो विशेषः । तेषां

मध्ये स्वच्छागियता मातापितृजा निवर्त्तन्ते कीटान्ता वा भस्मान्ता वा विड्न्ता वेति” त० कौ०।

**त्रिधासर्ग** पु० त्रिप्रकारः सर्गः। १भूतादिसर्गे। “अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति। मानुष्यश्चैकविधः समासतोऽयं त्रिधासर्गः” सा०का०। “ब्राह्मः प्राजापत्य ऐन्द्रः पैत्रः गान्धर्वो याक्षः राक्षसः पैशाच इत्यष्टविकल्पो दैवः सर्गः। पशुमृगपक्षिसरीसृपस्थावरा इति पञ्चविधस्तैर्य्यग्योनः सर्गः। मानुष्यश्चैकविधः ब्राह्मणाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात्” सा०त०कौ०।

**त्रिनयन** पु० त्रीणि नयनानि यस्य “पूर्वपदात् संज्ञायामगः” पा० णत्वे प्राप्ते क्षुभ्ना० पाठात् न णत्वम्। १महादेवे “योग्यस्त्रिनयनलोचनार्च्चिः” “शोभां शुभ्रत्रिनयननयनोत्थानलप्लोपमेयाम्” माघ। २पार्वत्यां स्त्री “लोचनत्रययुक्ता पूर्णेन्दुसदृशाननाम्” तद्ध्याने तस्या नेत्रत्रयोक्तेः। ३लोचनत्रययुक्ते त्रि० “बिभ्राणा विशदप्रभां त्रिनयनां वाग्देवतामाश्रये” मातृकासरस्वतीध्यानम्। त्रिनेत्रत्रिलोचनादयोऽप्यत्र। पर्यायस्तु भेदः त्रिनेत्रशब्दस्य महादेवपरत्वे संज्ञात्वात् पूर्वपदात् णत्वे प्राप्ते गिरिनद्या० वा णत्वम्। अन्यत्र न णत्वमिति। शिवस्य तृतीयनेत्राविर्भावकथा भा० अनु० १४० अ०। यथा

“ततो हिमवतः पार्श्वं हरपार्श्वमुपागमत्। तत आयान्ती पाणिभ्यां नर्मार्थं चारुदर्शना। हरनेत्रे शुभे देवी सहसा सा समावृणोत्। संवृताभ्यान्तु नेत्राभ्यां तमोभूतमचेतनम्। निर्होमं निर्वषट्कारं जगद्वै सहसाऽभवत्। जनश्च विमनाः सर्वो भयत्राससमन्वितः। निमीलिते भूतपतौ नष्टसूर्य्य इवाभवत्। ततो वितिमिरो लोकः क्षणेन समपद्यत। ज्वाला च महती दीप्ता ललाटात्तस्य निःसृता। तृतीयञ्चास्य सम्भूतं नेत्रमादित्यसन्निभम्” इत्युपक्रमे उमोवाच “भगवन् सर्वभूतेश! शूलपाणे! महाव्रत! संशयो मे महान् जातस्तन्मे व्याख्यातुमर्हसि। किमर्थं ते ललाटे वै तृतीयं नेत्रमुत्थितम्। किमर्थञ्च गिरिर्दग्धः सपक्षिगणकाननः। किमर्थञ्च पुनर्देव! प्रकृतिस्थस्त्वया कृतः। तथैव द्रुमसंछन्नः कृतोऽयं मे पिता मम” महेश्वर उवाच। “नेत्रे मे संवृते देवि! त्वया बाल्यादनिन्दिते। नष्टालोकस्तथा लोकः क्षणेन समपद्यत। नष्टादित्ये तथा लोके तमोभूते नगात्मजे!। तृतीयं लोचनं दीप्तं सृष्टं मे रक्षता प्रजाः। तस्य चाक्ष्णो महत्तेजो येनायं मथितो गिरिः। त्वत्प्रियार्थञ्च मे देवि! प्रकृतिस्थः पुनः कृतः”। दुर्गाया त्रिनयनाशब्दवाच्यत्वे हेतुर्देवीपु० ४५ अ० उक्तो यथा

‘पश्चिमां चोत्तरं लोकं तथा ब्रह्मायनं परम्। नयं सम्मार्गधर्मस्य दृष्टौ त्रिनयना मता’ देवीपु० ४५ अ०। “पञ्चवक्त्रं त्रिनेत्रम्” शिवध्यानम्। “निजत्रिनेत्रत्वावतरणबोधिकाम्” नैष०। साध्यगणभेदानां त्रिनेत्रत्वं मत्स्यपु० उक्तं यथा ‘तत्र साध्यगणानीशस्त्रिनेत्रानसृजत् पुनः। कोटयश्चतुरशीतिर्जरामरणवर्जिताः। नाम सृजस्व मर्त्यान् वै ब्रह्मणा विनिवारितः। नैव विधा भवेत् सृष्टिर्जरामरणवर्जिता”।

**त्रिनवति** स्त्री त्र्यधिका नवतिः शा० त०। १त्र्यधिकनवतिसंख्यायां २तत्संख्येये च। तत्र पूरणे डट्। त्रिनवत तत्संख्यापूरणे त्रि० तमप् वा। त्रिनवतितम तत्संख्यापूरणे त्रि० स्त्रियामुभयतो ङीप्। पक्षे त्रयसादेशे त्रयोनवत्यादयोऽप्यत्र। तत्राय भेदः “संख्या” पा० त्रिनवत्यादौ पूर्वपदे प्रकृतिस्वरः। त्रय आदेशोऽन्तोदात्त इति।

**त्रिनाक** पु० नास्ति अकं दुःखं यस्मिन् नाकः पुण्यलोकः। तृतीयं नाकं वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वात्। १तृतीये नाके २उत्तमस्थाने च। “यत्रानुकामं चरणं त्रिनाके” ऋ० ८।११३।८। “तावत्त्रिनाकं नहुषः शशास” भाग० ६।१३।१६ श्लोकः।

**त्रिनाभ** पु० त्रयो लोका नाभौ यस्य अच् समा०। विष्णौ “त्रिनाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे” भा० शा० ४७ अ०। विष्णुस्तुतौ।

**त्रिनिष्क** त्रि० त्रिभिर्निष्कैः क्रीतम् ठञ् तस्य वा लुक्। त्रिभिर्निष्कैः क्रीते लुगभावे ठञि उत्तरपदस्य वृद्धिः। त्रैनैष्किक तत्रार्थे त्रि०।

**त्रिनेत्रचूडामणि** पु ६त०। चन्द्रे त्रिका०।

**त्रिपक्ष** पु० तृतीयः पक्षः संख्याशब्दस्य वृत्तौ पूरणार्थत्वात्। तृतीये पक्षे ‘षष्ठे मासि त्रिपक्षे वा” स्मा० त०।

**त्रिपञ्च** त्रि० ब० व०। त्रिगुणिताः पञ्च। पञ्चदशसंख्यान्विते “त्रिपञ्चारे पीठे” कर्पूरस्तव।

**त्रिपञ्चाङ्ग** पु० त्रिपञ्च पञ्चदशाङ्गान्यस्य। समाधिभेदे तदङ्गानि च “यमो हि नियमस्त्यागो मौनं देशश्च कालता। आसनं मूलबन्धश्च देहसाम्यञ्च दृक्स्थितिः। प्राणसंयमनञ्चैव प्रत्याहारश्च धारणा। आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात्” मन्त्रार्थच० धृतवाक्योक्तानि।

**त्रिपञ्चाशत्** स्त्री त्र्यधिका पञ्चाशत् शा॰त॰। १त्र्यधिक-पञ्चाशत्संख्यायां २तत्संख्यान्विते च। ततः पूरणे डट्। ३त्रिपञ्चाश तत्संख्यापूरणे त्रि॰। पक्षे तमप्। त्रिपञ्चाश-त्तम तत्रैवार्थे स्त्रियामुभयतो ङीप्। पक्षे त्रय आदेशे। त्रयःपञ्चाशदादयोऽप्युक्तार्थेषु।

**त्रिपटु** पु॰ काचे पारस्करनिघण्टुः।

**त्रिपताक** न॰ तिस्रः पताका इव यस्मिन्। पताकाकारवलि-त्रयान्विते १ललाटे, हारा॰। मध्यमानामिकासङ्कोचेन वशिष्टाङ्गुलित्रयोत्तानत्वेन २त्रिपताकाकारिते करे पु॰। "त्रिपताककरं कृत्वा" इत्यादि सा॰ द॰ जनान्तिकशब्द-निर्वचने स्थितम्।

**त्रिपत्र** पु॰ त्रीणि त्रीणि पत्राणि प्रतिपत्रं यस्य सप्तच्छदवत् संख्याशब्दस्य वृत्तौ वीप्सार्थत्वम्। १बिल्ववृक्षे। तदीय-पत्रेषु ब्रह्मादीनां स्थितिरुक्ता यथा "ऊर्द्ध्वपत्रं हरो ज्ञेयः पत्रं वामं विधिः स्वयम्। अहं दक्षिणपत्रं च त्रिपत्रदलमित्युत" वृहद्धर्मपु॰ ११ अ॰। २पुत्रत्रययुक्ते त्रि॰। समा॰ द्विगुः। ३पत्रत्रये न॰।

**त्रिपत्रक** पु॰ त्रिपत्र+संज्ञायां कन्। १पलाशवृक्षे राजनि॰। त्रयाणां पत्राणां समाहारः संज्ञायां कन्। "तुलसी कुन्दमालूरपत्रागस्त्यास्त्रिपत्रकम्" देवीपु॰ उक्ते २तुल-स्यादिपत्रत्रये न॰।

**त्रिपथ** न॰ त्रयाणां पथां समाहारः अच् समा॰। "पथ संख्याव्ययादेः" पा॰ क्लीवता। १मार्गाणां त्रितये। त्रयः पन्थानो यत्र अच् समा॰। २त्रिमार्गयुक्ते (तेमाथा पथ) इति ख्याते स्थाने। "शून्यागारे श्मशाने वा निर्जने वा चतुष्पथे। बिल्वमालोद्भवस्थाने त्रिपथे वा भवेद्यदि। स भवेत् सर्वसिद्धीश सर्ववेदविदां वरः" गुप्तसाधनतन्त्रम्।

**त्रिपथगा** स्त्री त्रयाणां पथां समाहारः अच् समा॰ तेन गच्छति गम—ड। गङ्गायाम्। त्रिमार्गगादयोऽप्यत्र "गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च। त्रीन् पथो भावयन्तीति तस्मात् त्रिपथगा स्मृता" रामा॰ आ॰ ४४ अ॰ "तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम्" ४५ अ॰ "तन्वी भरन्त्रिपथगा प्रथिमे कपोलौ लोले दृशौ रुचिरचञ्चलखञ्जरीटौ" अमरुशत॰ "त्रिशिखां भ्रुकुटिं चास्य ददृशुर्दानवा रणे। ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव" हरिव॰ २३५ अ॰। "त्रीन् पथो हेतुना येन प्लावयेल्लोकपावनी। कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा। त्रिषु लोकेषु धर्मज्ञ। कर्मभिः कैः समन्विता" इत्युपक्रमे रामप्रश्ने विश्वामित्रस्योत्तरम् रामा॰ आ॰ ३६ अ॰ वाक्यं गङ्गाशब्दे दृश्यम्। णिनि ङीप्। त्रिपथगामिन्यादयोऽप्यत्र।

**त्रिपदी** स्त्री त्रयः पादा अस्याः अन्त्यलोपः समा॰ ङीपि पद्भावः। १त्रिपादयुक्तायां स्त्रियां २गायत्रीच्छन्दसि च तस्या अष्टाक्षरपादत्वेन चतुर्विंशत्यक्षरायास्त्रिपादत्वात् तथात्वम्। यथा "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे" ऋ॰ १।२२।१७। "गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे" शत॰ ब्रा॰ १४।८।१५।१०। ३हस्तिनः पादबन्धनार्थरज्जुभेदे "नाशकत्करिणां मैव त्रिपदीच्छेदिनामपि" रघुः ४अश्वादिभारपात्रभेदे (तेपाइ) तन्त्रसा॰ ५गोधापदीलतायां रत्नमा॰। स्वार्थे क त्रिपदिकापि तत्रार्थे। भाषाकवितायां ६छन्दोभेदे तल्लक्षणं यथा "पञ्चकटिकान्ता यदि यमकान्ता द्वादशपरिच्छन्नमात्रा किन्नरगीतिस्तदिति नीविति, स्यात् समाक्षरगात्रा। (सु॰पदान्त)। यैषा सङ्गीतके नित्यं निर्णीतिः किन्नराख्यिका। सैव स्यात् प्राकृते गाने त्रिपदीति परिस्तुता" इति काव्योदयः। "ङाप्यपि" पा॰ टापि भत्वात् पद्भावः। त्रिपदा ७गायत्र्यामृचि छन्दोभेदे स्त्री तच्छन्दस्के ऋङ्मात्रे स्त्री "त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्" मनुः। "द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः" यजु॰ २३।३४। "त्रीणि पदानि पादा अस्याः "इतिपदशब्देन समास" वेददी॰। त्रिविक्रमे ८परमेश्वरे पु॰ त्रीणि पदानि विचक्रमे इति श्रुतेस्तथात्वम्। "त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत्" विष्णुस॰। ९अरत्नेर्दशमभागरूपपदत्रययुक्ते प्रक्रमे पु॰ यथा। "पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदः समविभक्तस्य" कात्या॰ श्रौ॰ १६।८।२१ "पञ्चारत्नयो यस्य स पञ्चभिररत्निभिः पुरुषः दशभिः पदैः पुरुषो द्वादशभिरङ्गुलैः पदम् इत्येवमर्थो न भवति इत प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात् अतश्चैवम् पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः तस्य दशमो भागः पदम् पदस्य द्वादशो भागोऽङ्गुलम् त्रिभिः पदैरेकः प्रक्रमः" कर्कः।

**त्रिपरिक्रान्त** पु॰ त्रिषु सत्यर्थं कर्मसु परिक्रान्तः चेष्टमानः। याजनाध्यापनप्रतिग्रहरूपजीविकात्रयनिरते ब्राह्मणे। "त्रैविद्यो ब्राह्मणो विद्वान् न चाध्ययनजीवकः। त्रि-

रत्नमा० । ७मल्लिकायां ८वृहदेलायाम् ९त्रिवृति (तेओडि) च स्त्री मेदि० । १०कर्णस्फोटलतायां ११स्थूलैलायां १२रक्तत्रिवृति च स्त्री राजनि० । १३देवीभेदे च स्त्री "ऋषिः सम्मोहनश्छन्दो गायत्री देवता पुनः । त्रिपुटाख्या द्विरुक्तैस्तैर्बीजैरङ्गानि षट् क्रमात्" तन्त्रसा० तद्ध्यानादिकं तत्रैव दृश्यम् १४त्रिवृति एरण्डे वा ङीप् । त्रयाणां पुटानां समाहारः । १५ पुटत्रये स्त्री ङीप् । त्रीणि पुटानि यस्य कप् ।१६व्रणाकारभेदे "तत्रायस्तु तरस्नो वृत्तस्त्रिपुटक इति सर्वव्रणसमास" सुश्रुत । त्रिपुट + स्वार्थे क संज्ञायां कन् वा । त्रिवृति वैद्यके "सद्भवनसुद्गफलायमकुष्ठमसूरमकुष्ठचणकसतीन-त्रिपुटकहरेणवाढकीप्रभृतयो वैदला" सुश्रु० ।

**त्रिपुटिन्** पु० त्रीणि पुटानि सन्त्यस्य इनि । एरण्डवृक्षे शब्दमा०

**त्रिपुटी** स्त्री त्रीणि पुटानि सन्त्यस्याः अच् गौरा० ङीष् । त्रिवृति भरत० ।

**त्रिपुटीफल** पु० त्रिपुटी पुटत्रय फलेऽस्य । एरण्डवृक्षे हारा०

**त्रिपुण्ड्र** न० त्रयाणां पुण्ड्राणां इक्षुवदाकाराणां समाहारः । १ललाटस्थे तिर्य्यग् रेखात्रयात्मके, "यस्य ललाटगाभिस्तो भस्मरेखात्रिपुण्ड्रकम्" इत्युक्ते तिलकभेदे "विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः । तस्मान्मृदापि कर्त्तव्यं ललाटेऽपि त्रिपुण्ड्रकम्" ति०त० ब्रह्माण्डपुराणम् । "ऊर्द्ध्वपुण्ड्रं मृदा कुर्य्यात् त्रिपुण्ड्रं भस्मना सदा । तिलकं वै द्विजः कुर्य्यात् चन्दनेन यदृच्छया । ऊर्द्ध्वपुण्ड्रं द्विजः कुर्य्यात् क्षत्रियश्च त्रिपुण्ड्रकम् । अर्द्धचन्द्रन्तु वैश्यश्च वर्त्तुलं शूद्रयोनिजः" आ० त० । "शिवागमे दीक्षितस्तु धार्य्यं तिर्य्यक् त्रिपुण्ड्रकम् । विष्णागमे दीक्षितस्तु ऊर्द्ध्वपुण्ड्रं विधारयेत्" इति नागोजीभट्टधृतस्मृतसंहिता "मृदा वा भस्मना वापि त्रिपुण्ड्रं बिन्दुसंयुतम् । ललाटे तिलकं कार्य्याद्रायमारावहङ्कनाश्च [?]" इति महानिर्वाणतन्त्रम् "येषां वपुर्मनुष्याणां त्रिपुण्ड्रेण विना स्थितम् । श्मशानसदृशं तत् स्यान्न प्रेक्ष्य पुण्यकृज्जनैरिति" देवीभाग० । अपि च तत्रैव नारद प्रति नारायणवाक्यम् "त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते । धारयन्ति च ये भक्त्या धारयन्ति तमेव ते । तिर्य्यग्रेखाः प्रदृश्यन्ते ललाटे सर्वदेहिनाम् । तथापि मानवा मूर्खा न कुर्वन्ति त्रिपुण्ड्रकमिति" ।

**त्रिपुर्** स्त्री त्रिगुणिता पुर समासान्तविधेरनित्यत्वात् श्रावे न अच् समा० । पुराणां त्रये त्रिपुरशब्दे च पुरत्रय दृश्यम् । "ददाह तेन दुर्भेद्या हरोऽथ त्रिपुरो नृप ।" भाग० ७।१०।५४ ।

**त्रिपुर** न० त्रयाणां पुराणां समाहारः । असुराणां १पुरत्रये । तत्पुरकथा भा० क० प० ३३ अ० ।

"ततस्ते सहिता राजन् । संप्रधार्य्यासकृद्बहु । सर्वलोकेश्वरं वाक्यं प्रणम्येदमथाब्रुवन् । अस्माकं त्वं वरं देव । प्रयच्छेमं पितामह ।। वयं पुराणि त्रीण्येव समास्थाय महीमिमाम् । विचरिष्याम लोकेऽस्मिंस्त्वत्प्रसादपुरस्कृताः । ततो वर्षसहस्रे तु समेष्यामः परस्परम् । एकीभावं गमिष्यन्ति पुराण्येतानि चानघ । समागतानि चैतानि यो हन्याद्भगवंस्तदा । एकेषुणा देववर स नो मृत्युर्भविष्यति । एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम् । ते तु लब्धवराः प्रीताः संप्रधार्य्य परस्परम् । पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुरम् । विश्वकर्म्माणमजरं दैत्यदानवपूजितम् । ततो मयः स्वतपसा चक्रे धीमान् पुराणि च । त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा । काञ्चनं दिवि तत्रासीदन्तरीक्षे च राजतम् । आयसञ्चाभवद्भूमौ चक्रस्थं पृथिवीपते ।। एकैकं योजनशतं विस्तारायामसंमितम् । गृहाट्टालकसंयुक्तं बृहत्प्राकारतोरणम् । गृहप्रवरसम्बाधमसम्बाधमहापथम् । प्रासादैर्विविधैश्चैव द्वारैश्चाप्युपशोभितम् । पुरेषु चाभवन् राजन् । राजानो वै पृथक् पृथक् । काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः । राजतं कमलाक्षस्य विद्युन्मालिन आयसम् । मयस्तैर्दैत्यराजानस्त्रींल्लोकानाशु तेजसा । आक्रम्य तस्थुर्वर्षपूगान् च नाम प्रजापतिः । तेषां दानवमुख्यानां प्रयुतान्यर्बुदानि च । कोटयश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः । मांसाशनाः सुदृप्ताश्च सुरैर्विनिकृताः पुरा । महदैश्वर्य्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः । सर्वेषाञ्च पुनस्तेषां सर्वयोगवहो मयः । तमाश्रित्य हि ते सर्वे वर्त्तयन्त्यकुतोभयाः । यो हि यं मनसा कामं दध्यात् त्रिपुरसंश्रयः । तस्मै कामं मयस्तं तं विदधे मायया तदा । तारकाक्षसुतो वीरो हरिर्नाम महाबलः । तपस्तेपे परमकं येनातुष्यत् पितामहः । सन्तुष्टमवृणोद्देव वापी भवतु नः पुरे । शस्त्रैर्विनिहता यत्र क्षिप्ताः स्युर्बलवत्तराः । स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः । ससृजे

तत्र वापीं तां मृतसञ्जीवनीं प्रभो!। येन रूपेण दैत्यास्तु येन योगेन चैव ह। मृतास्तस्यां परिक्षिप्तास्तादृशेनैव जज्ञिरे। तां प्राप्य ते पुनस्तांस्तु सर्वान् लोकान् बबाधिरे। महता तपसा सिद्धा सुराणां भयवर्द्धनाः। न तेषामभवद्राजन् क्षयो युद्धे कथञ्चन"। "सगोत्रनामस्त्रिपुरावदाम" कुमा०। "गङ्गेव त्रिपुरद्विष" रघु "त्रिपुरदाहसमापतितेषिण" किरा०। त्रीणि पुराणि येषाम्। २तारकाक्षसुतकमलाक्षादिषु असुरभेदे पु०ब०व०। त्रीन् धर्मार्थकामान् पिपर्त्ति पृ—क। ३देवीभेदे स्त्री। "वैष्णव्या मन्त्रसङ्घेषु त्रिपुरायास्तत शृणु" तन्त्रसार। "शृणु त्वं त्रिपुरामूर्त्तेः कामाख्यायास्तु पूजनम्" कालिकापु० ६२ अ०। ४तद्दिग्वर्त्यां त्रिपुराख्यदेशभेदे स्त्री ङीप् हेमच०।

**त्रिपुरघ्न** पु० त्रिपुर हन्ति हन—टक्। १महादेवे तस्य त्रिपुरहननकथा भा० क० ३४ अ०।

"मूर्त्तिं सर्वां समाधाय त्रैलोक्यस्य ततस्तते। रथं ते कल्पयिष्यामो देवेश्वर! महौजसम्। तथैव बुद्ध्या विहितं विश्वकर्मकृतं महत्। ततो विबुधशार्दूलास्तं रथं समकल्पयन्। विष्णुं सोमं हुताशञ्च तस्येषुं समकल्पयन्। शृङ्गमग्निर्बभूवास्य भल्लः सोमो विशाम्पते!। कुड्मलश्चाभवद्विष्णुस्तस्मिन्निषुवरे तदा। वसुन्धरां पृथिवीं देवीं विशालपुरमालिनीम्। सपर्वतवनद्वीपां चक्रुर्भूतधरां तदा। मन्दरः पर्वतश्चाक्षो जङ्घा तस्य महानदी। दिशश्च प्रदिशश्चैव परिवारो रथस्य ह। ईषा नक्षत्रवंशश्च युगं कृतयुगोऽभवत्। कूबरश्च रथस्यासीद्वासुकिर्भुजगोत्तमः। अपस्करमधिष्ठाने हिमवान् विन्ध्यपर्वतः। उदयास्तावधिष्ठाने गिरी चक्रुः सुरोत्तमाः। समुद्रमक्षमसृजन् दानवालयमुत्तमम्। सप्तर्षिमण्डलञ्चैव रथस्यासीत् परिष्कारः। गङ्गा सरस्वती सिन्धुर्दुर्गमाकाशमेव च। उपस्करो रथस्यासन्नापः सर्वाश्च निम्नगाः। अहोरात्रं कलाश्चैव काष्ठाश्च ऋतवस्तथा। अनुकर्षं ग्रहा दीप्ता वरूथञ्चापि तारकाः। धर्मार्थकामसंयुक्तं त्रिवेणु दारुबन्धुरम्। ओषधीर्वीरुधस्तत्र नानापुष्पफलोपगाः। सूर्याचन्द्रमसौ कृत्वा चक्रे रथवरोत्तमे। पक्षौ पूर्वापरौ तत्र कृते रात्र्यहनी शुभे। दश नागपतीनीषां धृतराष्ट्रमुखान् दृढान्। द्यां युगं युगचर्माणि संवर्त्तकवलाहकान्। सन्ध्यां धृतिञ्च मेधाञ्च स्थितिं सन्नतिमेव च। ग्रहनक्षत्रताराभिश्चर्म्म चित्रं नभस्तलम्। सुराम्बुप्रेतवित्तानां पतीन् लोकेश्वरान् हयान्। कालपृष्ठोऽथ नहुषः कर्कोटकधनञ्जयौ। इतरे चाभवन्नागा हयानां बालबन्धनाः। दिशश्च प्रदिशश्चैव रश्मयो रथवाजिनाम्। वषट्कारः प्रतोदोऽभूत् गायत्री शीर्षबन्धनी। सिनीवालीमनुमतिं कुहूं राकाञ्च सुव्रताम्। योक्त्राणि चक्रुर्वाहानां रोहकांस्तत्र कण्टकान्। कर्म्म सत्यं तपोऽर्थश्च विहितास्तत्र रश्मयः। अधिष्ठानं मनश्चासीत् परिरथ्या सरस्वती। नानावर्णाश्च चित्राश्च पताका पवनेरिता। विद्युदिन्द्रधनुर्नद्धं रथं दीप्तं व्यदीपयन्। यो यस्मिन् विहितः पूर्वमीशानस्य महात्मनः। संवत्सरो धनुस्तद्वै सावित्री ज्या महास्वना। दिव्यञ्च वर्म्म विहितं महार्हरत्नभूषितम्। अभेद्यं विरजस्कं वै कालचक्रबहिष्कृतम्। ध्वजयष्टिरभून्मेरुः श्रीमान् कनकपर्वतः। पताकाश्चाभवन्मेघास्तडिद्भिः समलङ्कृताः। रेजुरध्वर्युमध्यस्था ज्वलन्त इव पावकाः। क्लृप्तन्तु तं रथं दृष्ट्वा विस्मिता देवताऽभवन्। सर्वलोकस्य तेजांसि दृष्ट्वैकस्थानि मारिष!। युक्तं निवेदयामासुर्देवास्तस्मै महात्मने। एवं तस्मिन् महाराज! कल्पिते रथसत्तमे। देवैर्मनुजशार्दूल! द्विषतामभिमर्द्दने। स्वान्यायुधानि दिव्यानि न्यदधात् शङ्करो रथे। ध्वजयष्टिं वियत् कृत्वा स्थापयामास गोवृषम्। ब्रह्मदण्डः कालदण्डो रुद्रदण्डस्तथा ज्वरः। परिस्कन्दा रथस्यासन् सर्वतोदिशमुद्यताः। अथर्वाङ्गिरसावास्तां चक्ररक्षौ महात्मनः। ऋग्वेदः सामवेदश्च पुराणञ्च पुरःसराः। इतिहासयजुर्वेदौ पृष्ठरक्षौ बभूवतुः। दिव्या वाचश्च विद्याश्च परिपार्श्वचराः स्थिताः। स्तोत्रादयश्च राजेन्द्र! वषट्कारस्तथैव च। ओङ्कारश्च मुखे राजन्नति शोभाकरोऽभवत्। विचित्रमृतुभिः षड्भिः कृत्वा संवत्सरं धनुः। छायामेवात्मनश्चक्रे धनुर्ज्यामक्षयां रणे। कालो हि भगवान् रुद्रस्तस्य संवत्सरो धनुः। तस्माद्रौद्री कालरात्रिर्ज्या कृता धनुषोऽजराम्। इषुश्चाप्यभवद्विष्णुर्ज्वलनः सोम एव च। अग्नीषोमं जगत् कृत्स्नं वैष्णवञ्चोच्यते जगत्। विष्णुश्चात्मा भगवतो भवस्यामिततेजसः। तस्माद्धनुर्ज्यासंस्पर्शं न विषेहुर्हरस्य ते। तस्मिन् शरे तिग्ममन्युर्मुमोचाविषहं प्रभुः। भृग्वङ्गिरोमन्युभवं क्रोधाग्निमतिदुःसहम्। स नीललोहितो धूम्रः कृत्तिवासा भयङ्करः। आदित्यायुतसङ्काशस्तेजो-

ज्वालावृतोऽज्वलत्। दुष्प्रधर्षप्रावनो जेता हन्ता ब्रह्मद्विषां हरः। नित्य त्राता च हन्ता च धर्माधर्माश्रितान्नरान्। प्रमाथिभिर्भीमबलैर्भीमरूपैर्मनोजवैः। विभाति भगवान् स्थाणुस्तैरेवात्मगुणैर्युतः। तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत्। जङ्गमाजङ्गमं राजन्। शुशुभेऽद्भुतदर्शनम्। दृष्ट्वा तन्तु रथं युक्तं कवची स शरासनी। बाणमादाय तं दिव्यं सोमविष्ण्वग्निसम्भवम्। तस्य राजंस्तदा देवाः कल्पयाञ्चक्रिरे प्रभो। पुण्यगन्धवहं राजन्! श्वसनं देवसत्तमम्। तमास्थाय महादेवस्त्रासयन् दैवतान्यपि। आरुरोह तदा यत्तः कम्पयन्निव मेदिनीम्। तमारुरुक्षुं देवेशं तुष्टुवुः परमर्षयः। गन्धर्वा देवसङ्घाश्च तथैवाप्सरसाङ्गणाः। ब्रह्मर्षिभिः स्तूयमानो वन्द्यमानश्च वन्दिभिः। तथैवाप्सरसावृन्दैर्नृत्यद्भिर्नृत्यकोविदैः। स शोभमानो वरदः खड्गी बाणी शरासनी। हसन्निवाब्रवीद्देवान् सारथिः को भविष्यति। तमब्रुवन् देवगणा यं भवान् संनियोक्ष्यते। स भविष्यति देवेश! सारथिस्ते न संशयः। तानब्रवीत् पुनर्देवो मत्तः श्रेष्ठतरो हि यः। तं सारथिं कुरुध्वं मे स्वयं सञ्चिन्त्य मा चिरम्। एतच्छ्रुत्वा ततो देवा वाक्यमुक्तं महात्मना। गत्वा पितामहं देवाः प्रसाद्येदं वचोऽब्रुवन्। यथा तत् कथितं देव! त्रिदशारिविनिग्रहे। तथा च कृतमस्माभिः प्रसन्नो नो वृषध्वजः। रथश्च विहितोऽस्माभिर्विचित्रायुधसंवृतः। सारथिन्तु न जानीमः कः स्यात्तस्मिन् रथोत्तमे। तस्माद्विधीयतां कश्चित् सारथिर्देवसत्तम!। सफलां तां गिरं देव! कर्तुमर्हसि नो विभो!। एवमस्मासु हि पुरा भगवन्नुक्तवानसि। हितं कर्त्तास्मि भवतामिति तत् कर्तुमर्हसि। स देवयुक्तो रथसत्तमो नो दुरावरो द्रावणः शात्रवाणाम्। पिनाकपाणिर्विहितोऽत्र योद्धा विभीषयन् दानवानुद्यतोऽसौ। तथैव वेदाश्चतुरो हयाग्र्या धरा सशैला च रथो महात्मन्। नक्षत्रवंशानुगतो वरूथी हरो हि योद्धा सारथिर्नाभिलक्ष्यः। तत्र सारथिरेष्टव्यः सर्वैरेतैर्विशेषवान्। तत्प्रतिष्ठो रथो देव! हरो योद्धा तथैव च। कवचानि सशस्त्राणि कार्मुकञ्च पितामह!। त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम्। त्वं हि सर्वगुणैर्युक्तो दैवतेभ्योऽधिकः प्रभो!। स रथं तूर्णमारुह्य संयच्छ परमान् हयान्। जयाय त्रिदशेशानां वधाय त्रिदशद्विषाम्। इति ते शिरसा नत्वा त्रिलोकेशं पितामहम्। देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम्"। पितामह उवाच। "नात्र किञ्चिन्मृषा वाक्यं यदुक्तं त्रिदिवौकसः। संयच्छामि हयानेष युध्यतो वै कपर्दिनः"।

इत्युपक्रमे "तान् सोऽसुरगणान् दग्ध्वा प्राक्षिपत् पश्चिमार्णवे। एवन्तु त्रिपुरं दग्धं दानवाश्चाप्यशेषतः। महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा" भा०क०३४अ०। भा० द्रो० २०० अ० किञ्चिदन्यथोक्तं यथा

"गन्धमादनविन्ध्यौ च कृत्वा वंशध्वजौ हरः। पृथ्वीं ससागरवनां रथं कृत्वा तु शङ्करः। अक्षं कृत्वा तु नागेन्द्रं शेषं नाम त्रिलोचनः। चक्रे कृत्वा तु चन्द्रार्कौ देवदेवः पिनाकधृक्। अणी कृत्वैव पत्रञ्च पुष्पदन्तञ्च त्र्यम्बकः। युगं कृत्वा तु मलयमवाहञ्च तक्षकम्। योक्त्राङ्गानि च सत्त्वानि कृत्वा शर्वः प्रतापवान्। वेदान् कृत्वाथ चतुरश्चतुरोऽश्वान् महेश्वरः। उपवेदान् खलीनांश्च कृत्वा लोकत्रयेश्वरः। गायत्रीं प्रग्रहं कृत्वा सावित्रीञ्च महेश्वरः। कृत्वोङ्कारं प्रतोदञ्च ब्रह्माणञ्चैव सारथिम्। गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा च वासुकिम्। विष्णुं शरोत्तमं कृत्वा शल्यमग्निं तथैव च। वायुं कृत्वाथ वाजाभ्यां पुङ्खे वैवस्वतं यमम्। विद्युतं कृत्वाथ निश्राणं मेरुं कृत्वाथ वै ध्वजम्। आरुह्य स रथं दिव्यं सर्वदेवमयं शिवः। त्रिपुरस्य वधार्थाय स्थाणुः प्रहरतां वरः। असुराणामन्तकरः श्रीमानतुलविक्रमः। स्तूयमानः सुरैः पार्थ! ऋषिभिश्च तपोधनैः। स्थानं माहेश्वरं कृत्वा दिव्यमप्रतिमं प्रभुः। अतिष्ठत् स्थाणुभूतः स सहस्रं परिवत्सरान्। यदा त्रीणि समेतानि अन्तरीक्षे पुराणि च। त्रिपर्वणा त्रिशल्येन तदा तानि बिभेद सः। पुराणि न च तं शेकुर्दानवाः प्रतिवीक्षितुम्। शरं कालाग्निसंयुक्तं विष्णुसोमसमायुतम्। पुराणि दग्धवन्तं तं देवा याता प्रवीक्षितुम्"।

त्रिपुरदहनादयोऽप्यत्र।

**त्रिपुरभैरवी** स्त्री त्रिपुरा भैरवी कर्म०। त्रिपुराख्यदेवीभेदे "आद्या त्रिपुरभैरव्या बीजमाद्यं प्रकीर्त्तितम्" इति "चिन्तयेद्वरदां देवीमेव त्रिपुरभैरवीम्" इति च तन्त्रसा०।

**त्रिपुरमल्लिका** स्त्री त्रीणि पुराणीव पुष्पाणि यस्याः कर्म०। त्रिपुरमल्लिकापुष्पवृक्षभेदे त्रिका०।

**त्रिपुरान्तक** पु॰ त्रिपुरस्यान्तं करोति अन्त+णिच्-ण्वुल्। शिवे अमर।

**त्रिपुरारि** पु॰ ६त॰। शिवे "त्रिपुरारिशिरश्चारि" गङ्गास्तव।

**त्रिपुरुष** न॰ त्रयाणां पुरुषाणां समाहारः। १पित्रादिपुरुषत्रये। "क्रमात्त्रिपुरुषागता" स्मृतिः। त्रयः पुरुषाः पित्राद्यो भोक्तारो यस्य। २भोगभेदे पु॰। त्रिपुरुषाद्योऽप्यत्र। व्यासः "प्रपितामहेन यद्भुक्तं तत् पुत्रेण विना च तम्। तौ विना यस्य भोगः स्यात् स विज्ञेयः त्रिपूरुषः। पिता पितामहो यस्य जीवेच्च प्रपितामहः। त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुष" व्यव॰त॰। त्रयः पुरुषाः परिमाणमस्याः ठन् तस्य लुक्। ३पुरुषत्रयपरिमिते त्रि॰ "अथ त्रिपुरुषीं रज्जुं मिमीते" शत॰ब्रा॰१०।२।१।२। वा ङीप्। त्रिपुरुषीत्यप्यत्र।

**त्रिपुषा** स्त्री त्रीन् वातादिदोषान् पुष्णाति पुष-क। कृष्णत्रिवृति (कालतेओड़ि) शब्दच॰।

**त्रिपुष्कर** न॰ त्रयाणां पुष्कराणां समाहारः। १पुष्करत्रये प्रख्याततीर्थभेदे २ज्येष्ठमध्यमकनिष्ठभेदेषु त्रिषु पुष्कराभिधह्रदेषु। ३नक्षत्रतिथिवारयोगभेदे पु॰। "वारा क्रूरास्तिथिर्भद्रा नक्षत्रं भग्नपादकम्। जातेऽत्र जारजो योगो मरणेऽत्र त्रिपुष्करः" ज्यो॰त॰। स्वार्थे अ अण्। त्रैपुष्करोऽप्यत्र पु॰ "भद्रातिथौ रविजभूतनयार्कवारे द्वीशार्यमाजचरणादितिवह्निवैश्वे। त्रैपुष्करो भवति मृत्युविनाशवृद्धौ त्रैगुण्यदो द्विगुणकृद्युतचान्द्रे" मु॰ चि॰।

"अथ त्रिपुष्करयोगं सफलं वसन्ततिलकयाह भद्रेति भद्रासञ्ज्ञिका तिथिः द्वितीया सप्तमी द्वादशी तथा शनिभौमसूर्यवारेषु तथाद्वीशः विशाखा अर्यमोत्तराफाल्गुनी अजचरणः पूर्वाभाद्रपदा अदितिः पुनर्वसुः वह्निः कृत्तिका विश्वमुत्तराषाढ़ा एषु षट्सु नक्षत्रेषु उक्ततिथिवारनक्षत्ररूपे विशिष्टयोगे सति त्रिपुष्कर एव त्रैपुष्करः प्रज्ञादिभ्यश्चेति स्वार्थेऽण्। त्रिपुष्करयोगो भवतीत्यर्थः कीदृशः। मृत्युविनाशवृद्धौ त्रैगुण्यदः तद्दिने यदि कश्चित् म्रियेत तदा तदीयास्तत्सम्बन्धिनस्त्रयो म्रियेरन् यदि किञ्चिद्वस्तु विनष्टं तदा तद्वस्तुत्रयनाशः तथा किञ्चिद्वस्तु लब्धं तदा त्रिगुणतल्लाभः इत्यर्थः। उक्तञ्च वशिष्ठेन। "रविरविजभौमवारे भद्रायां विषमपादनक्षत्रे। त्रैपुष्कराख्ययोगः त्रिगुणफलो वधकर्मवृद्धिषु"। नारदेनापि।

"अर्कार्किभौमवारे चेद्भद्राया विषमाङ्घ्रिभम्। त्रिपुष्करं त्रिगुणदो द्विगुणो यमलाङ्घ्रिभे"। अत्र यन्नक्षत्रं प्रथमपादान्ते तृतीयपादान्ते वा राशिसमाप्तिर्यस्य तन्नक्षत्रं विषमपादमुच्यते तदेव स्पष्टं द्वीशार्यमेत्यादिनोपनिबद्धम् अथ यावश्रीधनिष्ठा तथा चित्रा चान्द्रं मृग एतानि भानि भद्रास्तिथय रविजभूतनयार्कवाराश्च अत्रापि विशिष्टयोगे सति द्विपुष्करनामायोगो भवति तत्फलं मृत्युविनाशवृद्धौ द्वैगुण्यकृत् मृते नष्टे वृद्धौ द्विगुणतां करोतीत्यर्थः "द्विगुणो यमलाङ्घ्रिभे" इत्युक्तेः यन्नक्षत्रे द्वितीयचरणान्ते राशिसमाप्तिस्तद्यमलाङ्घ्रिभं तच्च मृगचित्राधनिष्ठारूपमेव। अथ दैवात्त्रिपुष्करादिके तिथिवारनक्षत्रात्मके विशिष्टयोगे सति कस्यचिन्मरणसम्भवस्तदा तद्दोषशान्त्यर्थं दानं विधेयं यथाह वशिष्ठः "त्रितयं गवां हि दद्याद्दोषस्यापनुत्तये विद्वान्। द्वितयं द्विपुष्करेऽपि च निर्दिष्टैर्विप्रमुख्येभ्यः"। द्वितयं गवामिति शेषः अत्र तिथिवाराभावे केवलं विषमाङ्घ्रिभे यमलाङ्घ्रिभे वा मरणसम्भवे दोषो नास्तीत्यर्थः। अमुमर्थं स्पष्टमाह नारदः "प्रदद्याद्दोषनाशाय गोत्रयं मूल्यमेव वा। द्विपुष्करे द्वयं दद्यान्न दोषस्त्वृक्षमात्रतः" इति। अत्र त्रिपुष्करयोगे कश्चिदुडुसतिवारोऽप्युक्तः यथाह कश्यपः "भद्रा तिथिः शनीज्यारवारे चेद्विषमाङ्घ्रिभम्। त्रिपुष्करं त्रिगुणदं द्विगुणं द्व्यङ्घ्रिभे कृतार्थवित्" इदमेव दृढं श्रीपतिनाप्युक्तम्। "विषमचरणधिष्ण्यं भद्रा तिथिर्यदि जायते सुरगुरुयमिक्ष्मापुत्राणां कथञ्चन वासरे। मुनिभिरुदितः सोऽयं योगस्त्रिपुष्करसञ्ज्ञितस्त्रिगुणफलदो वृद्धौ नष्टे हृते च मृतेऽपि वा"। अस्य पूर्वोक्तवाक्यस्य चैकवाक्यता देवाः कर्तुमर्हन्ति। कश्यपवाक्ये कृतार्थविति पदोपादानान्मरणे एवायं विचारो न तु नष्टे वृद्धौ च यदुक्तं ब्रह्मपुराणेऽपि "धनिष्ठापञ्चके जीवो मृतो यदि कथञ्चन। त्रिपुष्करे याम्यभे च कुलजान्मारयेत् ध्रुवम्। तद्विनिर्विनाशार्थं विधानं सम्यदीरयेदिति" पी॰ धा॰।

**त्रिपुष्ट** पु॰ त्रयः धर्मार्थकामाः पुष्टा अस्य। १प्राजापत्ये राजभेदे हेमच॰। [ स्त्रियते वस्तलोके हेमच॰।

**त्रिपृष्ठ** न॰ त्रयाणां लोकानां पृष्ठं समाहारः। त्रिपृष्ठ-

**त्रिपौरुष** त्रि॰ त्रीन् पित्रादीन् पुरुषान् व्याप्नोति अण् उत्तरपदवृद्धिः। पित्रादिक्रमेण पुरुषत्रयव्यापके भोगादौ। त्रिपुरुषशब्दे दृश्यम्। स्त्रियां ङीप्

यस्य वेदश्च वेदी च वितता त्रिपौरुषी स वै दुर्ब्राह्मण" कात्या॰ श्रौ॰ ८।२।१६ सूत्रे कर्कः।

**त्रिप्रश्न** पु॰ त्रयाणां दिग्देशकालानां प्रश्नः। १दिग्देशकालानां प्रश्ने २तन्मूलके दिगादिनिरूपणे च। तदधिकारेण सि॰ शि॰ उक्तं यथा "जगुर्यदत्रोऽद किल कालतत्त्वं दिग्देशकालावगमोऽत्र यस्मिन्। त्रिप्रश्नमाज्ञि प्रचुरोक्तियाज्ञि"। सू॰ सि॰ "शिलातलेऽम्बुसंशुद्धे"इत्यादिनोक्त्वा "इति त्रिप्रश्नाधिकारः" इत्युक्तम् "दिग्देशकालानां प्रतिपादनमिदं परिपूर्तिमाप्तमित्यर्थः। दिशा साधनं शिलातल इत्यादि नियत, तत्सम्बन्धेन समकोणयाम्योत्तरशङ्कुना साधनान्यपि दिगन्तर्गतान्यनियतानि। पलभालम्बाक्षादिसाधनं देशनिरूपणं नियतम्। अथाचरादिसाधननियतम्। कालसाधनं तच्छायादिसाधनं च कालनिरूपणमिति विवेकः" रङ्गना॰।

**त्रिप्रस्नुत** पु॰ त्रिषु स्थानेषु प्रस्नुतः मेढ्रकपोलनेत्रेषु त्रिषु स्थानेषु क्षरितमदे मत्तगजे "गजानां तु प्रभिन्नानां त्रिधा प्रस्रुता मदम्" भा॰ आ॰ २२१ अ॰। "त्रिप्रस्नुतमदस्तुङ्गो पश्चिमेनैव मत्तकुञ्जरात्" १५१ अ॰। "करात् कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः"। पालकाप्ये तु मदप्रस्रावस्य सप्तस्थानस्योक्तेरिह प्राधान्यात् त्रिस्थानत्व बोध्यम्।

**त्रिप्लक्ष** पु॰ देशभेदे तद्देशविहितः। "अवभृथमभ्यवयन्ति यमुनां त्रिप्लक्षावहरणं प्रति" कात्या॰ श्रौ॰ २४।६।२८। "यथा त्रिप्लक्षावहरणसार्वण्येन यमुनामवभृथमभ्युपैति तत्र च यमुनां प्राप्य त्रिप्लक्षहरणे देशे त्रिप्लक्ष नाम जनपदं प्राप्य तत्रैव यमुनायामवभृथमभ्युपैति तत्रैव हि देशे दृषद्वती मनुष्येभ्यस्तिरोभवति। बहूदकापि सती तत्रैवान्तर्हिता भवतीत्यर्थः" कर्कः।

**त्रिफला** स्त्री त्रयाणां फलानां समाहारः अजा॰ टाप्। "पथ्या विभीतधात्रीणां फलैः स्यात् त्रिफला समा" इत्युक्ते हरीतक्यादित्रये। तद्गुणा भावप्र॰ उक्ता यथा "फलत्रिकञ्च त्रिफला सा वरा च प्रकीर्त्तिता। त्रिफला कफपित्तघ्नी मेहकुष्ठहरा सरा। चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी"।

**त्रिफलाघृत** न॰ त्रिफलानां रसेन युक्तं घृतम् शा॰ त॰। चक्रदत्तोक्ते घृतभेदे तच्च नानाविधं तत्रैवोक्तं यथा "त्रिफलाव्यूषवर्हीमधुमद्भ्यामाज्यश्छागपयसि गोमूत्रे। नागं सप्तनिषिक्तं करोति गरुडोपमञ्चक्षुः" अन्यदपि "त्रिफलाक्काथकल्काभ्यां सपयस्कं शृतं घृतम्। तिमिराण्यचिराद्धन्ति पीतमेतन्निशामुखे"।

**त्रिफलादिलौह** न॰ भैषज्यरत्नावल्युक्ते लौहभेदे यथा "त्रिफला मुस्तक व्योष विडङ्ग पुष्कर वचा। चित्रकं मधुकञ्चैव पलाशं सूक्ष्मचूर्णितम्। अयश्चूर्णपलान्यष्टौ शुग्गुलोस्तावदेव हि। आलोड्य मधुनोपेत पलद्वादशकेन च। प्रातर्विलिह्य भुञ्जानो जीर्णे तस्मिन् जयेद्ध्रुवम्। दुःसाध्यमामवातञ्च पाण्डुरोग हलीमकम्। जीर्णाग्निं समश शूल श्वयथु विषमज्वरम्"

**त्रिफलाद्यघृत** न॰ चक्रदत्तोक्ते घृतभेदे तदपि लघुमहद्भेदेन द्विविधं तत्र लघु यथा "फलत्रिकं भीरुकषायसिद्ध कल्केन यष्टीमधुकस्य युक्तम्। सर्पिः समं क्षौद्रचतुर्थभागं हन्यात् त्रिदोषं तिमिरं प्रवृद्धम्" महत् यथा "त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च। वृषभस्य रसप्रस्थं शतावर्य्याश्च तत्समम्। अजाक्षीरं गुडूच्याश्च आमलक्यारसस्तथा। प्रस्थं प्रस्थं समाहृत्य सर्वैरभिघृतं पचेत्। कल्कः कणा सिता द्राक्षा त्रिफला नीलमुत्पलम्। मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका। तत्साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत्। ऊर्द्धं पानमधः पानं मध्यपानञ्च शस्यते। यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति। सरक्ते रक्तदुष्टे च रक्ते चातिस्रुतेऽपि च। नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे। अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे। नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च। अदृष्टि मन्ददृष्टिञ्च कफवातप्रदूषिताम्। स्रवतो वातपित्ताभ्यां सकण्डूरासदूरदृक्। गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्द्धनम्। सर्वनेत्रामयं हन्यात्त्रिफलाद्यं महद्घृतम्"।

**त्रिःफलीकृत** त्रि॰ त्रिः त्रिवारं फलीकृत वितुषीकृत। त्रिधा वितुषीकृते तण्डुलादौ। "दक्षिणोत्तराभ्यां पाणिभ्यां त्रिःफलीकृतास्तण्डुलान्श्रिर्दर्भैरवत्य प्रक्षालयेत्" गोभिल "त्रिः फलीकृतान् त्रिधा वितुषीकृतान्" सं॰त॰ रघुनन्दन।

**त्रिबन्धन** पु॰ हर्य्यश्वपौत्रे २नृपभेदे। "हर्य्यश्वस्तत्सुतस्याभीदुरगोऽथ त्रिबन्धन" भाग॰९।७।४। त्रीणि बन्धनानि यस्य। २आपदादावस्थात्रययुक्ते जीवे पु॰।

**त्रिवली(लि)** स्त्री त्रिगुणिता व(ली)र्वलि॰ । १उदरस्थे वलीत्रये "त्रिवलीवलयोपेता भ्रुकुटीभीषणाननाम्" दुर्गाध्यानम् । तिसृणा वलीनां समाहार । २त्रिवलि तत्रार्थे न॰ उज्ज्वलदत्तः। [तस्य वलीत्रयवत्त्वात्तथात्वम् ।

**त्रिवलीक** न॰ तिस्रो वल्यो यत्र कप् । पायौ हेम॰ ।

**त्रिबाहु** पु॰ त्रयो बाहवोऽस्य । १रुद्रानुचरभेदे "त्रिबाहु पञ्चबाहुश्च व्याघ्रपत्नः शिरानन:" हरिव॰ २७७ अ॰ । २असियुद्धाकारभेदे ।"त्रिबाहुसुत्तमबाहु च"हरिव ६१६ अ॰ । खड्गशब्दे २४६॰ दृश्यम् ।

**त्रिभ** न॰ त्रयाणां भानां राशीनां समाहार॰ । १लग्नादि राशित्रये ।"त्रिभ त्रिभ लग्नगत क्रमेण स्त्रीणां नृणां रात्रिदिनेषु तेषु"नील॰ता॰ । २राशित्रयभाते च । "इत्रिभघ्नजक्रान्तिभागघ्ना क्षेपशिञ्जिका:" सू॰सि॰। त्रीणि भानि नक्षत्राणि यत्र ।३नक्षत्रत्रययुक्ते "कार्त्ति॰- क्यादिषु संयोगे कृत्तिकादि द्वय द्वयम् । अन्त्योपान्त्यौ पञ्चमच त्रिभं मासत्रयं स्मृतम्" सू॰सि॰। "अत्र कार्त्ति- कथादित्वेन यथादन्य आश्विनः उपान्त्यः भाद्रः पञ्चम फाल्गुन॰ । मासत्रयं त्रिभि स्मृतम् । रेवत्यश्विनीभर- णीतिनक्षत्रत्रयसम्बन्धादाश्विन । शततारापूर्वोत्तराभाद्र पदेति नक्षत्रत्रयसम्बन्धाद्भाद्रपदः पूर्वोत्तरफाल्गुनीहस्तेति नक्षत्रत्रयोगात् फाल्गुन " रङ्गना॰ ।

**त्रिभङ्गी** स्त्री "प्रथम यदि दयनं वदति विरामं तदनु निकामं यमकम् । वसुविमलतुरङ्गममतिहृदयङ्गमहृषि- तभुजङ्गमपतितकम् । त्रिमदुविकलासुविहितनि- धान सततविलास हृदयहरेति मदमुदितभुजङ्गी मोहन- रङ्गी वदति त्रिभङ्गीछन्दम्" इत्युक्ते मात्रावृत्ते छन्दोभेदे ।

**त्रिभजीवा** स्त्री इत॰ राशित्रयधनुराकारक्षेत्रस्य जीवायाम् त्रिज्यायां त्रिज्याशब्दे दृश्यम् । "यद् वा त्रिभजी- यानः" सू॰ सि॰ । त्रिभज्याप्यत्र । "त्रिभज्यया भजे- च्छेषं लघुगं परिशोधयेत्" सू॰ सि॰ ।

**त्रिभण्डी** स्त्री त्रीन् वातादिदोषान् भनक्ति भञ्ज-परि- माणे अच् । त्रिवृति (तेओड़ि) अमरः।

**त्रिभद्र** न॰ त्रिषु दन्तक्षताक्षिक्षणमर्दनेष्वपि भद्रं यत्र । सुरते त्रिका॰ ।

**त्रिभाग** पु॰ तृतीयो भागः इत्यो संख्यायाश्च पूरणार्थे- त्वम् । तृतीये भागे "त्रिभागशेषासु निशासु च क्षणम्" कुमा॰ ।"अमावस्याप्रपन्नं तु श्राद्धं कुर्याद् दिने दिने । त्रिभागहीनं पक्ष वा त्रिभाग त्वर्द्धमेव वा"।१४॰ब्रह्मपु॰।

**त्रिभानु** पु॰ तुर्वसुवंश्ये नृपभेदे। "तुर्वसोस्तु सुतो वह्निर्वह्ने- र्भर्गोऽथ भानुमान् । त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधी " भाग॰ ९।२३।४ ।

**त्रिभाव** पु॰ त्रिषु कालेषु भावोऽस्य । त्रैकालिके पदार्थे तस्य भावः कर्म वा ब्राह्मणा॰ ष्यञ् । त्रैभाव्य तद्भावादौ न॰।

**त्रिभुक्ति** पु॰ त्रिषु भुक्तिरस्य । (तीरहुत) देशभेदे त्रिका॰ ।

**त्रिभुज** न॰ त्रयो भुजा यत्र। त्रिबाहुके त्रिकोणे क्षेत्रभेदे क्षेत्रशब्दे दृश्यम् ।"त्रिभुजे भुजयोर्योगस्तदन्तरगुणो भू- वा हृतो लब्ध्या" "स्पष्ट त्रिभुजे फल भवति" लीला॰ । "योनि कृत्वा त्रिभुज प्रयान" अष॰ ८।९। अत्र योनि त्रिभुजमिव कृत्वेत्यर्थ तेन न स्त्रीत्वम् । अतः त्रिभुज् इति शब्दान्तरकल्पन प्रामादिकम् ।

**त्रिभुवन** न॰ त्रयाणां भुवनानां लोकानां समाहार पात्रा॰ न ङीप् । त्रिलोक्यां मिलितेषु स्वर्गमर्त्यपाता- लेषु । "त्रिभुवनजये सा पञ्चेषो करोति सहायताम्" सा॰द॰ "त्रिभुवनगुरोर्धाम चण्डीश्वरस्य" मेघ॰ ।

**त्रिभूम** पु॰ तिस्रो भूमय ऊर्द्धाधोमध्यस्था यस्य अच् समा॰ । (तेताला) प्रासादभेदे ।

**त्रिमण्डला** स्त्री लूताभेदे"लूतास्तु द्विविधा स्मृता""तासा मष्टौ कष्टसाध्यास्त्वष्टावसाध्या एव तु । त्रिमण्डला तथा श्वेता कपिला पितिका तथा । आलमूत्रविषा रक्ता कसना चाष्टमी स्मृता । ताभिर्दृष्टे शिरो दुःख कण्डू- र्दंशे च वेदना । भवन्ति च विशेषेण गदाः श्लैष्मिक वातिकाः"। "त्रिमण्डलया दष्टेऽस्क् कष्ट स्रवति दीर्यते" इति च सुश्रु॰ ।

**त्रिमद** पु॰ त्रिगुणितो मद सङ्घातात् कर्म॰ । "विद्यामदो धनमदस्तथैवाभिजनो मदः । एते मदा मदान्धानां त एव हि सतां दमा "।इत्युक्ते गर्वत्रये "नून त्वयाधा त्रिमदोत् पथानां नर्क्षी सहस्राक्षयता षमूभि " भाग॰ ३।१।४२ । २मुस्ताचित्रकविडङ्गेषु च वैद्यकम् ।

**त्रिमधु** न॰ त्रिगुणित मधु सङ्घातात् कर्म॰ ।"दुग्ध सिता माक्षिकञ्च विज्ञेय मधुरत्रयम्" इत्युक्ते १दुग्धादित्रये । २ऋग्वेदैकदेशे पु॰ ३तद्व्रतभेदे तदाचरणेन ४तद्वेदाध्या- यिनि पु॰मिता॰ "मधुवाता इति त्र्यचः मधुशब्दो यत्र । मधुवाता इत्यादिके ऋक्त्रये पु॰ । "वेदार्थवित् ज्येष्ठ- सामा त्रिमधुस्त्रिसुपर्णकः" याज्ञ॰। "त्रिणाचिकेत.स- मधुस्त्रिसुपर्णः षडङ्गवित्" मनुः । ५मधुपर्णत्रये च

"गायत्रीं त्रिः सकृद्वापि जपेद्व्याहृतिपूर्विकाम्। मधुवाता इति त्र्यृचं मध्वित्येतत् त्रिकं जपेत्" इति पारस्कर॰। ७आज्यमधुसितात्रये न॰ "कमलैस्त्रिमध्वक्तै-र्हुनेदष्टोत्तर शतम्" तन्त्र॰।

**त्रिमधुर** न॰ त्रिगुणित मधुर समाहारात् कर्म॰। दुग्धसितामाक्षिकरूपे मधुरत्रये त्रिमधुशब्दे दृश्यम्। "त्रिमधुरेणाभ्यर्च्य यथाभागान्" वृह॰ ४८ अ॰।

**त्रिमातृ** त्रि॰ त्रयाणां लोकानां माता निर्माता। लोकत्रयनिर्मातरि "उत त्रिमाता विदथेषु सम्राट्" ऋ॰२।५६।५ भा॰।

**त्रिमात्र** पु॰ तिस्रः मात्रा उच्चारणकालेऽस्य। प्लुतस्वरे "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम्" शिक्षा॰ "प्रणवस्य ऋषिर्ब्रह्मा देवोऽग्निस्तस्य कथ्यते। गायत्रञ्च भवेच्छन्दो नियोग सर्वकर्मसु। त्रिमात्रस्तु प्रयोक्तव्यः प्रारम्भे सर्वकर्मणाम्" संवर्त॰। भोजदेवेन तु तस्य सार्द्धत्रिमात्रकतोक्ता यथा "तज्जपस्तदर्थभावनम्" पा॰ सू॰ "तस्य सार्द्धत्रिमात्रिकस्य प्रणवस्य जप" वृत्तिः। युक्तञ्चैतत् ओकारस्य प्लुतत्वेन त्रिमात्रत्वेऽपि तदुत्तरमकारस्य व्यञ्जनत्वादर्द्धमात्रत्वेन सार्द्धत्रिमात्रत्वं संवर्तवचने त्रिमात्रपदं सार्द्धत्रिमात्रे लाक्षणिकमिति बोध्यम्। वस्तुतः मकारान्तत्वे सार्द्धत्रिमात्रत्वम् अनुस्वारान्तत्वे त्रिमात्रत्वमिति भेद। तदभिप्रायेणैव तस्य त्रिमात्रतया जपफलं प्रश्नोपनिषदुक्तं तच्च ओम् शब्दे १५६० पृ॰ दर्शितम्।

**त्रिमार्गगा** स्त्री त्रिभिर्मार्गैर्गच्छति गम–ड। १गङ्गायां हेमच॰। "त्रिमार्गगावीचिविमर्दशीत" रघु॰। "अन्वर्थतैव परं त्रिमार्गगा" माघः। गम–णिनि। त्रिमार्गगामिन्यादयोऽप्यत्र।

**त्रिमार्गी** स्त्री त्रयो मार्गा अस्याः। १गङ्गायां "त्रिमार्गेव त्रिदिवस्य मार्ग" कुमा॰। (तेमाथा) २पथि। "त्रयाणां मार्गाणां समाहारः। ३मार्गत्रये स्त्री ङीप्। [हेमच॰।

**त्रिमुकुट** पु॰ त्रीणि मुकुटानीव शृङ्गाणि यस्य। त्रिकूटपर्वते

**त्रिमुख** पु॰ त्रीणि मुखानि अस्य। १शाक्यमुनौ त्रिका॰। गायत्रीजपाङ्गे चतुर्विंशतिमुद्रान्तर्गते मुद्राभेदे तल्लक्षणं विधानपारिजाते उक्तं यथा "मणिबन्धयोः पाण्योः कनिष्ठाद्वययोगतः। शेषाङ्गुलीना वैरल्यात् मुद्राः स्युर्द्विमुखादयः" "मणिबन्धपाण्योः कनिष्ठाद्वययोगेन शेषाङ्गुलीनां विरलत्वेनाङ्गुष्ठद्वयमारभ्याकानिष्ठान्तं यावत् द्विमुखत्रिमुखचतुर्मुखपञ्चमुखाः मुद्राः स्युः' तद्व्याख्या। तथा चाङ्गुष्ठतर्ज्जनीना वैरल्ये त्रिमुखमुद्रा। २बुद्धदेवीभेदे मायादेव्यां स्त्री त्रिका॰।

**त्रिमुनि** न॰ त्रयाणां मुनीनां समाहारः। पाणिनिकात्यायनपतञ्जलिरूपे मुनित्रये। त्रयो मुनयो वंश्याः "संख्या वंश्येन" पा॰ स॰। पाणिन्यादिमुनित्रयप्रणीते व्याकरणे विद्यातद्वतामभेदविवक्षया तस्य तथात्वम् "वंश्यश्च जन्मना विद्यया वा तत्र भवः वंश्य" इति सि॰कौ॰।

**त्रिमूर्त्ति** पु॰ तिस्रो मूर्त्तयोऽस्य। ब्रह्मविष्णुशिवरूपमूर्त्तित्रययुक्ते परमेश्वरे। "नमस्त्रिमूर्त्तये तुभ्यं प्राक्सृष्टेः केवलात्मने" कुमा॰। "त्रिमूर्त्तिर्यः सर्गस्थितिविलयकर्माणि तनुते" चिन्तामणिः २ब्रह्मशक्तिभेदे स्त्री। "एकमूर्त्तिरपि त्रिधारूपिणी या जगज्जननपालनक्षये। काच्युतेश्वरतया विवर्त्तते ब्रह्मशक्तिमहमानतोऽस्मि ताम्" शब्दार्थचि॰ धृ॰ वाक्यम्। ३बुद्धदेवीभेदे स्त्री त्रिका॰।

**त्रिमूर्द्ध** पु॰ त्रयो मूर्द्धानोऽस्य ष समा॰। मूर्द्धत्रययुक्ते। "बहुमूर्द्धा द्विमूर्द्धा च त्रिमूर्द्धा चाहता मृधे" भट्टिः।

**त्रियम्बक** पु॰ त्रीण्यम्बकानि दृष्टयो यस्य। "छन्दस्युभयथा" पा॰ वा इयङ्। त्रिनेत्रे। क्वचिल्लोकेऽपि इयङ् "त्रियम्बकं संयमिनं ददर्श" कुमा॰ तद्व्याख्यायां मल्लिनाथेन महाकविप्रयोग एव तत्र मूलतयोक्तः।

**त्रियव** न॰ त्रयो यवाः परिमाणमस्य। अण्लुक् "सर्षपाः षट् यवो मध्यस्त्रियवं त्वेककृष्णलम्" मनुः।

**त्रियष्टि** स्त्री त्रिषु वातादिषु यष्टिरिव विद्रावकत्वात्। (श्वेतपापड़ा) १क्षुपभेदे रत्नमा॰। तिस्रो यष्टयो यस्य। २त्रिगुणे हारभेदे पु॰। [ण्वुल्। पापे शब्दमा॰।

**त्रियामक** न॰ त्रिषु कालेषु यमयति अन्तर्भूतण्यर्थे यम–

**त्रियामा** स्त्री त्रयो यामा अस्याः आद्यान्त्ययोरर्द्धयामयोश्चेष्टाकालत्वेन दिनप्रायत्वात्। १निशायाम् अमरः "त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्। नाडीनां, तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते" ति॰ त॰। "संक्षिप्येत क्षणमिव कथं दीर्घयामा त्रियामा" मेघ॰। "क्वचिदसमेतपरिच्छदस्त्रियामाम्" रघु॰। "ज्योतिर्भिरुद्यद्भिरिव त्रियामा" कुमा॰ २हरिद्रायाम् अमरः। कृष्णत्वात् ३यमुनायां ४नील्यां ५कृष्णत्रिवृति च उणादिको॰।

**त्रियुग** पु॰ त्रीणि युगानि आविर्भावकालोऽस्य। १यज्ञपुरुषे तस्य कलियुगे आविर्भावाभावात् कलौ छन्नत्वाद् वा। "इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान् विभावयसि

त्रुटिशस् अव्य० त्रुटि+वीप्सार्थे शस्। त्रुटिस्त्रुटिरित्याद्यर्थे। "त्रुटिशोलवशश्चापि गण्यते कालनिश्चय" भा० उ० ११८ अ०।

त्रुन्प(म्प) वधे भ्वा०पर०सक० सेट्। त्रुम्पति अत्रुम्पीत्। नोपधत्वे क्विपि त्रुप् त्रुपौ णोपधत्वे त्रुन् त्रुम्पौ इति भेद।

त्रुन्फ(म्फ) वधे भ्वा० पर० सक० सेट्। त्रुम्फति अत्रुम्फीत्। नोपधत्वे क्विपि त्रुप् त्रुफौ णोपधत्वे त्रुन् त्रुम्फौ इति भेद। [(फी)त्। अत्रोप (फ)

त्रुप(फ) वधे भ्वा० पर० सक० सेट्। त्रोप(फ)ति अत्रोपी-

त्रेता स्त्री त्रित्वमिता इण०। दक्षिणाग्निगार्हपत्याहवनीयात्मके समुदिते १अग्नित्रये, सत्ययुगानन्तरवर्त्तिनि युगभेदे, द्यूतक्रीडासाधनपाशकस्य यस्मिन् पार्श्वे त्रयोऽङ्कास्तस्य पार्श्वस्य उत्तानतया ३पतने, द्यूतविशेषे वराटकानां मध्ये त्रयाणामुत्तानतया ४पतने च "त्रेतया हृतसर्वस्व" इति मृच्छकटिका। अयमब्दे २२४पृ० दृश्यम्

"त्रेतायुगमानन्तु दिव्यमानेन ३००० वर्षा आदौ सन्ध्या ३००। अन्ते सन्ध्यांशः ३०० मिलिता ३६००। वर्षा मानुषमानेन ३६० गुणिता १२९६००० वर्षा। यथाह मनु "चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः। इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्त्तन्ते सहस्राणि शतानि च"। सि० शि० "खखाभ्रदन्तसागरैर्युगाग्नियुग्मभूगुणैः। क्रमेण सूर्य्यवत्सरैः कृतादयोयुगाङ्घ्रय। खसन्ध्यकालदशकैर्निजार्क१२भागसम्मितैः। युताश्च तद्युता युगं रदाब्धयोऽयुताहता"। खखाभ्रदन्तसागरैः ४३२०००अङ्कैस्त्रिभिर्गुणितैस्तन्मिता वर्षा त्रेतामानं तत्रापि त्रेतादौ सन्ध्यामानं १०८००० त्रेतामानं १०८०००० वर्षाः। त्रेतान्ते सन्ध्यांशमानम् १०८०००। मिलित्वा १२९६००० वर्षा त्रेतामानम्। स्पष्टमुक्तं ब्रह्मवै० प्र० ख० "द्विषट्लक्षपरिमितं षण्णवतिसहस्रकम्। त्रेतायुगं परिमितं कालविद्भिः प्रकीर्त्तितम्"।

"दण्डनीत्यां यदा राजा त्रीनंशाननुवर्त्तते। चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्त्तते। अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्त्तते। कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा"। "राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च। युगस्य च चतुर्थस्य राजा भवति कारणम्। कृतस्य कारणाद्राजा स्वर्गमत्यन्तमश्नुते। त्रेतायाः कारणाद्राजा स्वर्गं नात्यन्तमश्नुते" भा० शा० ६९ अ०। तद्धर्माश्च "त्रेतायुगे समायाते धर्मः पादोनतां गत। अल्पक्लेशान्विता लोकाः केचित्, केचिद्दयाशया। विष्णुध्यानरता लोका यज्ञदानपरायणा। वर्णाश्रमाचाररता सुखिन शुभ्रचेतस। क्षत्रा भूमिस्पृश शूद्राः सर्वे ब्राह्मणसेविन। ब्राह्मणाश्च महात्मानो वेदवेदाङ्गपारगा। प्रतिग्रहनिवृत्ताश्च सत्यसन्धा जितेन्द्रिया। तपोव्रतपरा नित्य दातारो विष्णुसेविनः। कालवर्षी तदिन्द्रस्ताश्च स्त्रिय सर्वा पतिव्रता। वसुन्धरा च शस्याढ्या पुत्राश्च पितृसेविन" इति पाद्मे क्रियायोगसारोक्ताः।

"अनाद्याद्या भगवती जीवाना निष्कृतिं यथा। कृते व्यतीते त्रेताया दृष्ट्वा धर्मव्यतिक्रमम्। वेदोक्तकर्मभिर्मर्त्या न शक्ता स्वेष्टसाधने। बहुक्लेशकरं कर्म वैदिकं भूरिसाधनम्। कर्तुं न योग्यामनुजाश्चिन्ताव्याकुलमानसाः। त्यक्तुं वाऽहं न चार्हन्ति सदा कातरचेतस। वेदार्थयुक्तशास्त्राणि स्मृतिरूपाणि भूतले। तदा त्वं प्रकटीकृत्य तपःस्वाध्यायदुर्बलान्। लोकानतारय पापाद् दुःखशोकभयप्रदात्। त्वां विना कोऽस्ति जीवानां घोरसंसारसागरे। भर्त्ता धाता समुद्धर्त्ता पितृवत् प्रियकृत् प्रभुः" इति श्रीमहानिर्वाणतन्त्रे जीवोद्धारणहेतवे सदाशिवं प्रति जगन्मातृ वाक्यम्। तस्मिन् युगे पुरुषायुष्कालस्त्रिशतवर्षो मनुनोक्तो यथा "चतुष्पात् सकलो धर्मः सत्यञ्चैव कृते युगे। नाधर्मेणागमः कश्चिन्मनुष्यान् प्रतिवर्त्तते। इतरेष्वागमाद्धर्मः पादशस्त्ववरोपितः। चौरिकानृतमायाभिर्धर्मश्चापैति पादशः। अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुष। कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः। वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम्। फलन्त्यनुयुगं लोके प्रभावश्च शरीरिणाम्"।

पुराणान्तरे अयुतवर्षास्तत्काल उक्ता अतएव "दशवर्षसहस्राणि रामो राज्यमकारयत्" इत्यादि सङ्गच्छते। तपसा आयुःकालाधिक्यमिति न मनूक्तिविरोध इति तु न्याय्यम्।

"धर्मादौ हि यथा त्रेता वह्निस्त्रेता तथैव च। तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षय" भा० आश्व० ९० अ०। अग्नित्रयस्य त्रेतानामनिरुक्तिर्यथा "त्रिधा प्रणीतो ज्वलनो मुनिभिर्वेदपारगैः। अतस्त्रेतासमा-

ष्टेति यज्ञ् । स्वर्गादिवेदसम्बन्धिहोताध्वर्युमोद्गातृ ज्योतिष्टोमादौ काम्यकर्म्मणि ।

**त्रैधातवी** स्त्री उदवसानीयाख्ये इष्टिभेदे "तस्य योनिराशय आस । तमनु परामृश्य सत्याच्छिनत् सैवेष्टिरभवत् तद्यदेतस्मिन्नाशये त्रिधातुरिवैषाविद्यासीन तस्मात् त्रैधातवी नाम" शत० ब्रा० ५।५।५।६। "सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा एषेष्टिर्यत्त्रैधातवी" ११ । "त्रैधातव्युदवसानीयासावेव बन्धु" शत० ब्रा० १२।६।२।१७ । "त्रैधातव्युदवसानीया सर्वेषु" कात्या० श्रौ० १२।४।८ ।

**त्रैधातवीय** न० त्रिधातवी+गहा० छ । इष्टिभेदाङ्गकर्मभेदे "सर्वो वा एष यज्ञो यत्त्रैधातवीयम्" तैत्ति०सं०२।४।११।२।

**त्रैधातुक** त्रि० त्रिभि धातुभि स्वर्णरौप्यताम्रै निर्वृत्त ठञ् । स्वर्णादिधातुत्रयनिष्पाद्ये ।

**त्रैनिष्किक** त्रि० त्रिभि निष्कै क्रीतम् ठक् । त्रिनिष्कक्रीते । तस्य वा लुक् । त्रिनिष्क अप्यत्र ।

**त्रैपारायणिक** त्रि० त्रि पारायणमावर्त्तयति ठञ् । त्रिवार वेदपारायणकारके ।

**त्रैपुर** पु० त्रिपुर+स्वार्थे अण् । १त्रिपुरदेशे हेमच० । त्रिपुरोऽभिजनोऽस्य तस्य राजा वा अण् । २पित्रादिक्रमेण तद्वासिनि ३त्रिपुराधीशे च बहुषु अणो लुक् ।"मेखलैस्त्रैपुरैश्चैव चिच्छलैश्च समन्वित" भा० भी० ८८ अ० । आर्षत्वात् बहुषु अणो न लुक् । त्रिपुरं पुरत्रयमस्त्यस्य अण् । त्रिपुरस्वामिषु ४असुरभेदेषु त्रिपुरशब्दे दृश्यम् । "येनोद्धतास्त्रैपुरा मायिनो ये दग्धाघोरेण वितथान्ता शरेण" हरिव० १३१ अ० ।

**त्रैपुरुष** त्रि० त्रीन् पुरुषान् व्याप्नोति अण् स्वार्थे पूर्वपदवृद्धि । त्रिपुरुषव्यापके । "ब्राह्मणानिन्दिता राजन् ! हन्युस्त्रैपुरुषं कुलम्" भा० आनु० ६० अ० । लोके तु उत्तरपदवृद्धि त्रिपौरुष इत्येव ।

**त्रैफल** न० त्रिफलानां तदाद्यद्रव्याणामिदम् अण् । चक्रदत्तोक्ते घृतभेदे । यथा "त्रिफला त्र्यूषण द्राक्षा मधुकं कटुरोहिणीम् । प्रपौण्डरीक सूक्ष्मैला विडङ्ग नागकेसरम् । नीलोत्पल शारिवे द्वे चन्दन रजनीद्वयम् । कार्षिकं पयसा तुल्य त्रिगुण त्रिफला रसम् । घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम् । तिमिर दोषमाश्राव कामला काचमर्बुदम् । वीसर्पं प्रदर कण्डूं रक्त श्वयथुमेव च । खालित्यं पलितञ्चैव केशानां पतनन्तथा । विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति । अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजा । तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा । न चैवास्मात् परं किञ्चिद्दृष्टिभि काश्यपादिभि । दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम्" ।

**त्रैवलि** पु० ऋषिभेदे "दाभ्योष्णीयस्त्रैवलिश्च पर्णादो वरजानुक । मौञ्जायनो वायुभक्ष पाराशर्य्यश्च सारिक" भा० स० ४ अ० ।

**त्रैमातुर** पु० तिसृणां मातृणामपत्यम् अण् मातुरुत् । तिसृणां कौशल्याकैकयीसुमित्राणां स्नेहभाजनत्वेन तदीयार्द्धपायसभोजनेन जनिते लक्ष्मणे "त्रैमातुर कृतसुमित्रासुताङ्ग" भट्टि० । "सुमित्रया, स्वार्द्धपिण्डद्वयप्रदानात्ताभ्याञ्च जनित" जयम० । तत्कथा रामायणे दर्शिता यथा "पायसं प्रतिगृह्योथा पुत्रीय त्रिदशात्मन । कौशल्यायै नरपति पायसार्द्धं ददौ तदा । अर्द्धादर्द्धं ददौ चापि सुमित्रायै नराधिप । कैकेय्यै चावशिष्टार्द्धन्ददौ पुत्रार्थकारणात् । प्रददौ चावशिष्टार्द्धं पायसस्यामृतोपमम् । अनुचिन्त्य सुमित्रायै पुनरेव महामति । एवन्तासां ददौ राजा भार्य्याणां पायसं पृथक् । ताश्चैव पायसं प्राप्य नरेन्द्रस्योत्तमा स्त्रिय । सम्मानं मेनिरे सर्वा प्रहर्षोदितचेतस । ततस्तु ता प्राश्य तदुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक् । हुताशनादित्यसमानतेजसोऽचिरेण गर्भान् प्रतिपेदिरे तदा" आ० १६ स० ।

**त्रैमासिक** त्रि० त्रिमास तृतीयमास भूत अवस्थया प्राप्त "तमधीष्टो भृतो भावी" पा० ठञ् इत्यौ त्रिशब्दस्य पूरणार्थत्वेन सङ्ख्यावाचकत्वाभावात् न द्विगुत्व तेन "द्विगोर्लुगनपत्ये" पा० न लुक् । अवस्थया जन्मतस्तृतीयमासव्यापके त्रिमासवयस्के "तोकेन जीवहरण यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्त" भाग० २।७।२८ । २त्रिमासभवे च ।

**त्रैमास्य** न० त्रिमास+स्वार्थे ष्यञ् । त्रिमासे "अर्द्धमास माससैमास्यषाण्मास्ये चैके" का० श्रौ० २०।३।६ ।

**त्रैयम्बक** त्रि० त्र्यम्बको देवता अस्य । "त्र्यम्बकदेवताके १पशुभेदे । "शुक्लास्त्रैयम्बका" यजु० २४।१८ । "विशे यूपे त्रियम्बकदेवताका शुक्ला" वेददी० । २होमभेदे पु० 'त्रैयम्बकान् यक्ष्यामि' इत्युपक्रमे कात्या० श्रौ० ५। १०।१०। "निर्वपति रौद्रानित्यादिना ते होमा दर्शिता

साधने कर्मादौ। “अस्या विनाशाय कृत्यस्य कर्म त्रैवर्गिकञ्च यत्” भा० ग० २।४।५। स्त्रियां ङीप्। “विद्धि त्रैवर्गिकी यतः” भाग० ३।१४।१५। त्रिवर्गे प्रसृतः ठञ्। २त्रिवर्गरते। “त्रैवर्गिकास्ते पुरुषा विमुखा हरिमेधसः” भाग० ३।३२।१४।

**त्रैवर्ग्य** त्रि० त्रिवर्गे साधु ष्यञ्। त्रिवर्गसाधने धनादौ “त्रैवर्ग्यार्थो यतो नित्यं कृतान्तश्च यमयुतः” भाग० ४।२।११२।

**त्रैवर्णिक** त्रि० त्रिषु वर्णेषु विहितः ठञ्। १ब्राह्मणक्षत्रियवैश्यरूपद्विजातिधर्मे। स्वार्थे ठञ्। २द्विजातौ च ‘त्रैवर्णिकानामराजकेषु राष्ट्रेषु परराष्ट्रपरचक्रागमनादिजनिते स्तोमक्षराद्यौ प्रायः” कुल्लू०। “त्रैवर्णिकानामधिकारः” कक।

**त्रैवर्षिक** त्रि० त्रिवर्षे भविष्यति ठञ्। “वर्षस्याभविष्यति” पा० नोत्तरपदवृद्धिः। त्रिवर्षे भविष्यति वस्तुनि “त्रैवर्षिकं तापयित्वा तस्य सोम्य सवनस्य” आश्व० श्रौ० १२।५।१२। अभविष्यति तु त्रैवार्षिक इत्येव।

**त्रैवार्षिक** त्रि० त्रिवर्षं भृतो भवति वा ठञ् अभविष्यत्त्वात् उत्तरपदवृद्धिः। १त्रिवर्षभृते २तत्र भवति च। ‘यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये” मनु। “त्रैवार्षिकाधिकान्नोयः स तु सोमं पिबेत् द्विजः” याज्ञ०।

**त्रैविक्रम** त्रिविक्रमस्येदम् अण्। १त्रिविक्रमसम्बन्धिनि। “त्रैविक्रमं पादमिवेन्द्रशत्रुः” रघु २त्रिविक्रमावतारे च। “वर्द्धयस्व महाबाहो! पुरा त्रैविक्रमे यथा” हरिवं० ५६ अ०।

**त्रैविद्य** पु० तिस्रो विद्याः समाहृताः ऋग्यजुःसामरूपास्त्रिविद्यं तदधीते वेद वा अण्। १वेदत्रयाभिज्ञे। “त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा” व्यव० त० नारद। ‘चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा” “राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु। त्रैविद्यं वृत्तिमद् ब्रूयात् स्वधर्मः पाल्यतामिति” याज्ञ०। तिसृणां विद्यानां समाहारः त्रिविद्यं स्वार्थे अण्। २तिसृषु विद्यासु। ‘धर्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम्” भाग० ६।२।२४। ताश्च तिस्रो नानारूपा “ऋचो यजूंषि सामानि त्रैविद्यं तत्र तिष्ठति” सा० द्य०। ‘स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः। महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः” मनु “कर्षकाणां तपिष्ठन्ति पण्यं विपणिजीविनाम्। शान्तोऽस्माकं परा वृत्तिरेव त्रैविद्यमुच्यते” हरिवं० ७३ अ० “त्रयोऽग्नयस्त्रयो वेदास्त्रैविद्यं कौस्तुभो मणिः” हरिवं० १६८ अ० “त्रयो लोकास्त्रयो वेदास्त्रैविद्यं पावकत्रयम्” मार्कण्डेयपु०।

**त्रैवि(पि)ष्टप** पु० त्रिविष्टपे वसति अण्। देवे शब्दार्थचि०। “त्रैविष्टपानामपि दूरदर्शनम्” भाग० ११।७।

**त्रैविष्टपेय** पु० त्रिविष्टपे वसति वा० ढक्। देवे “गन्धर्वसिद्धासुरयक्षचारणत्रैविष्टपेयादिषु नान्वविन्दत” भाग० ८।८।१९।

**त्रैवृष्ण** पु० त्रिवृष्णस्यापत्यं वा० अण्। राजभेदे “त्रैवृष्णो अग्ने दशभिः सहस्रैर्वैश्वानर त्र्यरुणश्चिकेत” ऋ० ५।२७।१।

**त्रैवेदिक** त्रि० त्रिषु वेदेषु तदध्ययनार्थं विहितः ठक्। वेदत्रयाध्ययनार्थे व्रतादौ। “षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्” मनु। [शब्दे दृश्यम्।

**त्रैशङ्कव** पु० त्रिशङ्कोरपत्यम् अण्। हरिश्चन्द्रे त्रिशङ्कु-

**त्रैशोक** न० त्रिशोकेन ऋषिणा दृष्टं साम। “विश्वा पृतना,” इत्यादिकायामृचि गेये ब्रह्मज्ञोतके सामभेदे।

**त्रैसानु** पु० तुर्वसुवंश्ये गोभानुसुते नृपभेदे “गोभानोस्तु सुतो राजा त्रैसानुरपराजितः। करन्धमस्तु त्रैसानोर्मरुत्तस्तस्य चात्मजः” हरिवं० ३२ अ०।

**त्रैस्वर्य्य** न० त्रिस्वर+चतुर्व० स्वार्थे ष्यञ्। उदात्तानुदात्तस्वरितरूपस्वरत्रिके। तत्र यत्र य स्वरः तत् उदात्तानुदात्तशब्दयोरुक्तं स्वरितशब्दे वक्ष्यते च तस्यापवाद एकश्रुतिशब्दे १४८४पृ० उक्तः।

**त्रैहायण** त्रि० त्रिहायणस्येदम् हायनान्तत्वात् अण्। १त्रिवर्षसम्बन्धिनि। स्त्रियां ङीप्। भावे अण्। २तद्भावे न०।

**त्रोटक** त्रि० त्रोटयति चु० त्रुट–ण्वुल्। १छेदके। “सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्। त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्” सा० द० उक्ते २दृश्यकाव्यभेदे प्रत्यङ्कं सविदूषकत्वात् शृङ्गारोऽत्राङ्गीति बोध्यम्। तत्र सप्ताङ्कं स्तम्भितरम्भम्। पञ्चाङ्कं विक्रमोर्वशी।

**त्रोटि(टी)** स्त्री चु० त्रुट–इन् वा ङीप्। १कट्फले, २चञ्चौ, (पाखिर ठोंट) ३पक्षिभेदे ४मत्स्यभेदे च मेदि०। [खगे शब्दच०। स्त्रियां जातित्वात् ङीप्।

**त्रोटिहस्त** पु स्त्री त्रोटिर्हस्त इव चञ्चुसाधनं यस्य।

**त्रोतल** न० १त्रोडकतन्त्रे (तोतला) २स्खलद्वाक्ये त्रि०।

**त्रोत्र** न० त्रायतेऽनेन त्रै–त्रन्। प्राजने तोदने अस्त्रे

शब्दो वेदलक्षणो यस्येति वा, अम्बनम् अम्बः शब्दः। त्रयोऽकारोकारमकाराः अम्बाः शब्दाः प्रतिपादका वाचका वा अस्येति वा, त्रीणि पृथिव्यन्तरीक्षद्युलोकाख्यानि अम्बकानि स्थानानि यस्येति वा। १शिवे अमरः "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्" यजु॰ ३।६० "अधीज्यतस्त्र्यम्बकमीक्षणेन' महेश्वरस्त्र्यम्बक एव नापरः" रघु। २दुर्गायां स्त्री "सोमसूर्य्यानलाक्षित्वात् त्र्यम्बका सा स्मृता बुधैः" देवीपुरा॰।

**त्र्यम्बकसख** पु॰ ६त॰ टच् समा॰। कुबेरे अमरः कुबेरशब्दे तस्य तथात्वम् दृश्यम्। [क्यादिक दृश्यम्।

**त्र्यरुण** पु॰ त्रिवृष्णपुत्रे राजर्षिभेदे त्रैवृष्णशब्दे ऋ॰ वा-

**त्र्यरुषि** त्रि॰ त्रीणि अरुषीणि रोचमानानि शुभ्राणि ककुत्पृष्ठपार्श्वस्थानानि यस्य। रोचमानशुभ्रपृष्ठादित्रययुक्ते गवादौ। "त्र्यरुषीणां दश गवां सहस्रा" ऋ॰ ८।४६।२२।

**त्र्यवि** पु॰ षण्मासात्मकः कालः अविः तिस्रोऽवयोऽस्य। अष्टादशमासवयस्के पशौ। "त्र्यविर्वयस्त्रिष्टुप्छन्दः" यजु॰ १४।१०। त्रीन् लोकान् अवति अव-रक्षणादिषु इन्। वेददी॰। "तस्मै त्र्यवि रेरिहाणा" ऋ॰ ३।५५।१४। 'त्र्यविः सार्द्धवत्सरवयस्को वत्सस्त्र्यविरुच्यते तत्प्रमाणमादित्यम् त्रीन् लोकानवति स्वतेजसा व्याप्नोतीति वा" भा॰ उक्ते २त्रैलोक्यव्यापके च।

**त्र्यब्द** न॰ समा॰द्वि॰पात्रा॰। १वर्षत्रये "त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम्" मनुः। त्रयोऽब्दा अयोमानं यस्य तद्धितार्थद्विगुः मात्रेत्यिक अध्यर्द्धेत्यादि पा॰ तस्य लुक्। २त्रिवर्षवयस्के त्रि॰।

**त्र्यशीति** स्त्री त्र्यधिकाऽशीतिः शाक॰ त॰ त्रयश्च अशीतिश्च समा॰ द्व॰ वा। (तिराशी) १त्र्यधिकाशीतिसंख्यायां २तत्संख्येये च। तस्य पूरणे डट्। त्र्यशीत तत्पूरणे त्रि॰। स्त्रियां ङीप् तमप्। त्र्यशीतितम तत्पूरणे त्रि॰। त्र्यशीत्या युत शतादि ड। त्र्यशीत तद्युतशतादौ।

**त्र्यष्टक** न॰ सुश्रुतोक्ते जलनिक्षेपस्थानभेदे। पञ्च निक्षेपस्थानानि भवन्ति। तद्यथा फलक त्र्यष्टक सज्जवलय उदकमण्डिका शिक्यञ्चेति" सुश्रु॰।

**त्र्यष्टन्** त्रि॰ त्रिगुणिता अष्ट। १चतुर्विंशतिसंख्यायां २तत्संख्येये च। "त्र्यष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः" मनु॰।

**त्र्यस्र** न॰ तिस्रः अस्रयः कोणा यस्य अच् समा॰। १त्रिकोणे राजनि॰। "प्रथमत्र्यस्रे द्वितीयत्र्यस्रे इत्यादि" कालीपूजापद्धतिः।

**त्र्यह** पु॰ त्रयाणामह्नां समाहारः टच् समाहारद्विगुत्वात् नाह्नादेशः। "अह्नाह्ना पुंसि" पा॰ पुंस्त्वम्। दिनत्रये। उत्तरपदद्विगौ तु अह्नादेशः त्र्यह्णप्रिय इत्यादि। "त्र्यहं न कीर्त्तयेत् ब्रह्म राज्ञो राहोश्च सूतके" "त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यं चरन् द्विजः" मनुः।

**त्र्यहस्पर्श** पु॰ त्र्यहं चान्द्रदिनत्रयं स्पृशति स्पृश-अण्। १तिथित्रयस्पर्शिन्येकसावनदिने त्र्यहस्पर्शिनि २दिनक्षये च

**त्र्यहस्पृश्** पु॰ "एकं दिनं यत्र तिथित्रयं च स्पृशेत्तमाहुर्भुन-योऽयमाख्यम्। एका तिथिस्त्रीणि दिनानि यत्र स्पृशेत्तदाहुस्त्रिदिनस्पृशन्तु" इत्युक्ते सावनदिनत्रयस्पर्शिनि एकस्मिन् तिथौ "त्र्यहस्पृश नाम यदेतदुक्तं तत् प्रयत्न मुनिभिर्विधेय। विवाहयात्राशुभपुष्टिकर्म सर्वं न कार्य्यं त्रिदिनस्पृशे तु" ज्यो॰ त॰। क्विन्। त्र्यहस्पृश् क्विन्नन्तत्वात् झलि पदान्ते च कुः। तत्रार्थे "तिथिवारत्रये चैका त्र्यहस्पृक् समुदाहृता"। "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। त्र्यहस्पृक् तदहो रात्रमुपोष्या सा सदा तिथिः" स्मृतिः। [क्रतुभेदे।

**त्र्यहीन** पु॰ त्रिभिरहोभिः निर्वृत्तः ख। त्रिदिनसाध्ये

**त्र्यहैहिक** त्रि॰ ईहा चेष्टा तस्यां भवः ठण् ऐहिकम् धनादि त्र्यहपर्य्याप्तमैहिकं धनं यस्य। दिनत्रयनिर्वाहोचितधनशालिनि। "त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा" मनुः।

**त्र्याक्षायण** पु॰ त्र्यक्षस्य युवाऽपत्यम् फञ्। ऐक्षकारिगणे "द्व्याक्षायण त्र्याक्षायणेति निर्देशात्" "न य्वाभ्यां पदान्ताभ्यां पूर्वौ ताभ्यामैच्" पा॰ सूत्रोक्तं कार्य्यं न। त्र्यक्षस्य शिशुपालवधादेर्युवापत्ये। तस्य विषयो देशः ऐषुका॰ भक्तल्। त्र्याक्षायणभक्त तदीये विषये।

**त्र्यायुष** न॰ त्रयाणां बाल्ययौवनस्थाविराणामायुषां समाहारः वेदे अच् समा॰। बाल्याद्यायुस्त्रये। "त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्" यजु॰ ३।६२।

**त्र्यार्षेय** पु॰ त्रय आर्षेया अपत्यं यत्र। त्रिप्रवरे १गोत्रभेदे आर्षेयशब्दे दृश्यम्। ऋषेरपत्यम् ढक् आर्षेयः ऋषिधर्मः त्रय आर्षेया धर्माः येषाम्। २अन्धबधिरमूकेषु तेषां हि यथा ऋषिधर्मयत्नस्तथा समर्थितं तत्त्वबोधिन्याम्' यथा "अतस्त्र्यायमूलक एव तिर्य्यक्पक्त्यार्षेयदेवतानां यागेषु नाधिकार इति प्रवादः। त्र्यार्षेयास्त्रय ऋषि-

धर्मो ऽन्धत्वबधिरत्वमूकत्वानि येषां ते प्रसिद्धा हि परद्रव्यदर्शनेन तत्र रागोत्पत्तिसम्भावनया चक्षुर्निमीलनेनान्धत्वम्, परनिन्दाश्रवणशङ्कया श्रोत्रनिग्रहेण बधिरत्वं मिथ्याकथनशङ्कया वाक्संयमनान्मूकत्वम्" । अन्धादीनां कर्मानधिकारे हेतुश्च "मनुष्याणां वा आरम्भसामर्थ्यात्" ४ "अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम्" कात्या० श्रौ० १।१।५। सूत्राभ्यां निरूपित तत्र कर्कव्याख्या "अङ्गहीनाश्रोत्रियषण्ढशूद्रान् वर्जयित्वा मनुष्याणामधिकारः कर्मसु भवति । मनुष्या अपि ये अङ्गहीना अङ्गेन चक्षुरादिना हीना अन्धपङ्गुमूकबधिरादय अश्रोत्रिया अनधीतवेदाः षण्ढा नपुंसकाः शूद्राश्च नैतेषामधिकार इत्यर्थः । आरम्भसामर्थ्यादित्यत्राप्यनुवर्त्तते न चैतेऽङ्गहीनादयो यथाश्रुत कर्मारब्धु कर्त्तुं शक्नुवन्ति तद्यथा न ह्यन्ध आज्यावेक्षणं कर्त्तुं शक्नोति मूकश्च मन्त्रोच्चारणम्, पङ्गुश्च विष्णुक्रमम् । बधिरश्च प्रैषश्रवणम् अनधीतवेदोऽश्रोत्रिय इत्युच्यते स च किमपि मन्त्रसाध्यं कर्त्तुं न शक्नोति षण्ढो नपुंसकः तस्याप्यनधीतवेदत्वादद्रव्यत्वादशुचित्वाच्च नाधिकारः शूद्रस्य चानधीतवेदत्वादनधिकारः । आज्यावेक्षणादिकं विना कर्मणो वैगुण्यं भवत्येव । ननूक्तम् अशक्याङ्गरहितकर्मानुष्ठानादधिकारो भविष्यतीति । उच्यते । भवेदेवं यदि आज्यमवेक्षेत इत्यादीन्यङ्गवाक्यानि स्वातन्त्र्येण पुरुषं सम्बध्येरन् प्रधानवाक्यशेषत्वात्तेषाम् । तदङ्गयुक्तेन प्रधानवाक्येन तदङ्गयुक्तक्रतुः पुरुषे सम्बध्यमानोऽसमर्थान् परित्यज्य समर्थान् प्रतिपद्यते तेनान्धस्य क्रतुरेवाविहितो न त्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यम् । न च प्रधानवाक्यविरोधः सर्वाधिकारानिश्चयात् विशेषभावाद्धि सर्वाधिकारः स्यात् अस्ति च विशेष आरम्भसामर्थ्यम् अत समर्थानामेवाधिकारः । यत्र तु प्रधानवाक्यविरोधो यावज्जीवं यजेतेत्यादौ तत्र यथाशक्ति प्रयोगादपि फलं भवति तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलम् । ननु आरम्भसामर्थ्यादित्यनेनैव शूद्रादीनामिवान्धादीनामप्यधिकाराभावसिद्धे किमर्थं पुनरङ्गहीनादिवर्जनमित्युक्तम् उच्यते नियमार्थम् एतेषामेवानधिकारो न निर्धनस्य तस्य चाधिकारो भवत्येव न त्वारम्भसामर्थ्याभावादनधिकारः यतो निर्धनोऽपि क्रत्वर्थं धनमर्जनादिना सम्पाद्यावश्यं यजेतेति । यत्र-
गन्धादिरपि यद्यौषधिमन्त्रादिनान्धत्वादिकं स्फोटयितुं शक्नोति तस्याप्यधिकारो भवत्येव पूर्वमनङ्गहीनत्वावस्थायामाहिताग्निश्चेत् पश्चाद्रोगादिनाङ्गवैकल्ये जाते काम्येष्वधिकारो न भवति नित्येषु तु यथाशक्ति कर्मस्वधिक्रियत एव अङ्गवैकल्ये सति अग्न्याधेयं न भवत्येव" त्रीणि आर्षेयाणि यस्य । ३ त्रिगोत्रोत्पन्ने माधवः । अत्रेदमभिधीयते तत्रयोभिन्नाम् त्र्यार्षेयपदव्याख्यादिपरत्वकल्पन सूत्रभाष्यविरुद्धम् । तथाहि "अङ्गहीनश्च तद्धर्मा" ६।१।४१। जै० सू०। "अग्निहोत्रादिषु अङ्गहीनं प्रति सन्देहः किम् असावधिक्रियते, उत न इति । तत्राप्यधिकरणातिदेशः । अयमर्थ इति कृत्वा पूर्वः पक्षः शक्तेर्विद्यमानत्वात् उत्तरः । तदिदम् अभिधीयते अङ्गहीनश्च तद्धर्मा । किंधर्मा षण्ढधर्मा' शब० भा० । "उत्पत्तौ नित्यसंयोगात्" जै० ६।१।४२ "यस्य तु अप्रतिसमाधेयमङ्गवैकल्यं तं प्रति विचारः किम् अधिक्रियते न, इति पूर्वाधिकरणेन अधिक्रियते इति प्राप्ते ब्रूमः न अधिक्रियते इति । कुतः ? शक्त्यभावात् न असौ केनचित् अपि प्रकारेण शक्नोति यष्टुम्, तस्मात् तस्य अधिकारो न गम्यते । ननु यत् शक्नोति तत्र अधिक्रियते इति चक्षुर्विकलो विना आज्यावेक्षणेन, विना विष्णुक्रमं पङ्गुः, विना प्रैषादिश्रवणेन च बधिरः, एतान् पदार्थान् प्रति चक्षुर्विकलादीनामनधिकार इति यदि हि तं प्रति निर्दिश्येत ततो विकलोऽप्यधिक्रियते क्रतुम् प्रति । एषाम् उपदेशः प्रकरणाविशेषात् पदस्य च आख्यातेन अनभिधानात् इति उक्तमेतत् । "विधिर्वा संयोगान्तरात् (३।४।११) इत्यत्र । तैश्च विना विगुणं कर्म प्रयुक्तमपि न फलं साधयेत् । तस्मात् तस्य अनधिकारः" भा०। "अत्र्यार्षेयस्य स न स्यात्" जै० ६।१।४३ "दर्शपूर्णमासयोः श्रूयते, "आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते पञ्चाति वृणीते इति । तत्र सन्देहः किम् अत्र्यार्षेयस्य अधिकारः उत न इति किं प्राप्तम् । अत्र्यार्षेयोऽप्यधिक्रियते इति कुतः आर्षेयं वृणीते इति सामान्यवचनम् तस्मात् एकं वरिष्यति द्वौ वा तत्र दर्शयति एकं वृणीते इति तथा प्रतिषेधति न चतुरो वृणीते इति । न हि अप्राप्तस्य प्रतिषेधोऽवकल्पते । तस्मात् अत्र्यार्षेयोऽप्यधिक्रियेत ।

एवं प्राप्ते ब्रूमः यो न त्र्यार्षेयः स न अधिक्रियते ।

कुत ? त्रीन् वृणीते इति विशेषवचनात् विधिश्च अप्राप्तत्वात्। ननु एक वृणीते इत्यपि विशेषवचनमस्ति। न इत्युच्यते, विधायिकाया विभक्तेरभावात्। ननु स्तुत्या विधास्यन्ते यथा त्रीन् वृणीत इति। उच्यते त्रयाणामेव स्तुतिं सा त्रित्वं विधास्यति। एकं वृणीते इत्ययमुत्यवादोऽयं त्रयाणामेव, तत्रापि त्रित्वमेव श्रूयते विधातुम्। एवम् एकवाक्येन विधानं भविष्यति इति। न चतुरो वृणीते न पञ्चातिवृणीते इति नित्यानुवादो भविष्यति। तस्मात् त्र्यार्षेयस्य अधिकारो नान्यस्य इति” शब०भा०। न्यायमालायां माधवस्तु “ऋषि-गोत्रप्रवर्त्तक कश्यपभरद्वाजादिस्तस्य सम्बन्धं आर्षेयस्तं वृणीते उच्चारयति कश्यपगोत्रोऽहं भरद्वाजगोत्रोऽह-मिति एवम् उपमन्युवशिष्ठगोत्रोऽहमिति द्विगोत्रोच्चार-णम्। आङ्गिरसबार्हस्पत्यभरद्वाजगोत्रोऽहमिति त्रि-गोत्रोच्चारणम्”। एवञ्च सूत्रभाष्यादिग्रन्थेषु त्र्या-र्षेयशब्दस्य अन्यार्थपरत्वात् जात्यन्धादेः सूत्रान्तरेण अनधिकारस्य प्रतिपादनात् त्र्यार्षेयशब्दस्य न अन्धादि-परत्वमिति सुधीभिर्भाव्यम्।

**त्र्याशिर्** त्रि० दधितक्रपयोरूपा आशिरः अभिश्रयण-साधनभूता यस्य। आग्नेयपभेदे। “यस्य मा परुषा शतमुद्धर्षयन्त्युक्षणः। अश्वमेधस्य दानाः सोमा इव त्र्याशिरः” ऋ० ५।२७।५।

**त्र्याहण** पुस्त्री त्रिभिः चञ्चुपादैराहन्ति आ+हन–अच् पूर्वपदात् संज्ञात्वात् णत्वम्। विष्किरे पक्षिभेदे। “चकोर-कलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रकतित्तिरि-कुररवाङ्कवर्त्तकप्रभृतयस्त्र्याहनाविष्किरालघवः शीत-मधुरा कषायादोषशमनाश्च” सुश्रुत।

**त्र्याहाव** पु० देशभेदे तत्र भव वुञ्। त्रैयाहावक तत्रार्थे

**त्र्याहिक** त्रि० त्र्यहे भव ठञ्। आर्षत्वात् त्र्याद्यायचेति निर्देशाद्वा व्याख्या पूर्वं न ऐच्। त्र्यहभवे ज्वरादौ। ‘ऐकाहिको द्व्याहिकश्च त्र्याहिकश्चातुर्थिकेत्यादि अप-राजितास्तोत्रे। त्र्यहपर्याप्त धन अण् त्र्याहम् तद-स्यास्ति ठन्। त्र्यहपर्याप्तधनयुक्ते त्रि०। “कुम्भकुम्भी-धान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा” याज्ञ०। लोके तु व्याख्या पूर्वमेव त्रैयाहिक इत्येव त्र्यहभवे वस्तुनि।

**त्र्युदय** न० त्रिषु सवनेषु उदयो गतिरस्य। सोमाख्ये द्रव्ये। “त्र्युदयं देवहितं यथा वः” ऋ० ४।२७।२।

**त्र्युधन्** पु० त्रीणि. वसन्तग्रीष्मवर्षासु अभिरूपोऽस्य अनङ् ऊरुश्च। वसन्तादिरूपोधोयुक्ते पर्जन्यरूपे वृषभे। “उत त्र्युधा पुरुध प्रजावान्” ऋ० ३।५६।३।

**त्र्यु(त्र्यू)षण** न० त्रयाणामुषणानां समाहारः पृषो० वा दीर्घः। मिलितशुण्ठीपिप्पलीमरिचत्रिके अमरः भर-तस्तु दीर्घमध्य पपाठ।

**त्र्यृच** न० तिसृणामृचां समाहारः अच् समा०। ऋक्त्रये। “उदित्र्यृचा वा वारुण्या तृचेनाब्दैवतेन वा” “अथ तृचं जपेदब्दम्” मनु। पक्षे सम्प्रसारणे तृच-मप्यत्र।

**त्रेणी** स्त्री त्रीणि एतान्यस्य सि०कौ० त्रिषु स्थानेषु एत कर्बुरो यस्याः स०य०माधव। “वर्णादनुदात्तात्” पा० ङीप् तस्य नश्च णत्वम्। त्रिषु स्थानेषु कर्बुरायां स्त्रियाम्। “तत्त्रेणी शलली भवति लोह क्षुर सा या त्रेणी शलली सा त्र्यै विद्यायै रूपं लोह क्षुरो ब्रह्मणो रूपमग्निर्हि ब्रह्मणो हित इव ह्यग्निरूपमाह क्षुरो भवति” शत० ब्रा० २।६।४।५। “त्रेणीति त्रिषु स्थानेषु एत श्वेत वर्णो यस्याः सा त्रेणी” भा०। “अथास्यै युम्मेन मह्राद्गुल्पलेन त्रेण्या च शलल्या” आश्व० गृ० १।१४।४। त्रीण्येतानि यस्याः सैव त्रेणी शलली। एत शुक्ल इत्यर्थः” नारा०

**त्व** त्रि० तन–विच् अनश्च व। १भिन्ने अन्यार्थे सर्वनामकार्य्यं सर्वनामगणे त्वत्त्वसमसिमेति पठित्वा “त्वत्वेति द्वावप्यदन्तौ अन्यपर्य्यायौ एक उदात्तोऽपरो-ऽनुदात्त इत्येके। एकस्तान्त इत्यपरे” सि० कौ० उक्तेः तान्तत्वमपि तत्र क्विपि तुकि रूपमिति विवेक। “ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्व-रीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः” ऋ० १०।७१।११। त्वशब्द सर्वनामसु पठितः एकशब्दपर्य्यायः भा०उक्ते २एक-शब्दार्थे माधव। “प्रजायै त्वस्यै यदशिष इन्द्र!” ऋ० १०।५४।१। “त्वस्यै एकस्यै प्रजायै” भा०। “उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम्। उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः” ऋ० १०।७१।४। “त्वशब्द एकवाची। एक। उत-शब्दोऽप्यर्थे। पश्यन्नपि मनसा पर्य्यालोचयन्नपि वाचं न ददर्श दर्शनफलाभावात् पश्यति। त्व एकः शृण्वन्नप्येनां वाचं न शृणोति श्रवणफलाभावात्। इत्यनेनार्द्धेनाविद्वानभिहित.। तृतीयपादेन विद्व-

वेदार्थमाह । त्वचा एकया अपि तन्वमात्मीय शरीर वि सस्रे, स्वम् आत्मविषयं गमयति" भा० । अस्या एव ऋचामर्थव्याख्याने ऋग्वेदोपद्घाते माधव सायणस्य अन्यार्थतामभिप्रेत्याह, यथा "उत त्वः पश्यन्न ददर्श वाचमुत त्वः" अस्य कश्चिदर्थज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसाराहित्यादेना वेदरूपां वाच न सम्यक् शृणोति" अत उभयार्थता

"पिश रूशन्तीमभिरूपा विराज पशयन्ति त्वे न त्वे पशयन्त्येनाम्" अथ० ८।९।९ ।सर्वनामत्वात् जस शीभाव

**त्वक्कण्डुर** पु० त्वच कण्डु, रासि रा—क । व्रणे हारा० ।

**त्वक्क्षीरा** स्त्री त्वच वंशत्वच क्षीरमस्त्यस्या अकारत्वेन अच् ।१वंशरोचनायां ।२तत्मार्थे गौरा० ङीष् राजनि०। "सिताजगन्धा त्वक्क्षीरी विदारी लिवृता समा" सुश्रु०

**त्वक्छद** पु० त्वगेव छदोऽस्य । क्षीरीवृक्षे (क्षीरकञ्चुकी) प्रसिद्धे वृक्षे रत्नमा० ।

**त्वक्तरङ्ग** पु०त्वचस्तरङ्ग इव । कण्डुपदार्थे पार०निघण्टु ।

**त्वक्पञ्चक** न० त्वचा पञ्चकम् । "न्यग्रोधोदुम्बराश्वत्थशि-रीषप्लक्षपादपा । पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्-पञ्चक मतम्" इत्युक्ते न्यग्रोधादित्वक्पञ्चके । केचित्तु शिरीषस्थाने वेतसं परे पारिशम् पठन्तीति भेद "त्वक्-पञ्चक हिम ग्राहि व्रणशोथविसर्पजित् । विदग्धा-ग्नामजित् तिक्त कषाय लघु लेखनम्" भावप्र० ।

**त्वक्पत्र** न० त्वगिव पत्रमस्य । १गुडत्वचि ( दारचिनि ) २तेजपत्रे च अमरभरतौ । "चन्दनागुरुसूक्ष्माणि त्वक्-पत्राभ्यां वनानि च" भा० शा०१७०अ० । ३हिङ्गुपत्र्याम् स्त्री गौरा ङीष् अमरः ।

**त्वक्पाक** पु० त्वच पाको यत्र । "शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते" इत्युपक्रमे "त्वक्पाक शोणितार्बुदम्" इत्यादिना च तान् विभज्य "पित्तरक्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहवान्" सुश्रुतोक्ते शूकदोषनिमित्ते व्याधिभेदे ।

**त्वक्पारुष्य** न० त्वच पारुष्यं कठोरता । त्वच काठिन्ये "तस्य पूर्वरूपाणि त्वक्पारुष्यमकस्मात् रोमहर्ष "सुश्रुत ।

**त्वक्पुष्प** न० त्वच पुष्पमिव । १रोमाञ्चे त्रिका० २किलासे (छुली) ख्याते हेमच । त्वचि पुष्प यस्याः गौरा० ङीष् । ३किलासे स्त्री जटा० स्वार्थे क । त्वक्पुष्पिका किलासे त्रिका० ।

**त्वच** तनूकरणे भ्वा०पर०सक० सेट् त्वचति अत्वचीत् ।"त्वष्टा तूर्णमश्नुते इति नैरुक्तास्त्विषेर्वा स्यात् त्वक्षतेर्वा स्यात्" निरुक्ते ८।१२ उक्तत्वात् तथा धातुरस्तीति गम्यते । "प्रत्वक्षाणो अतिविश्वा सहांसि" ऋ० ०।५४।१ । "हत "छाया प्रकर्षेण तनूकुर्वन्" भा० ।

**त्वचस्** न० त्वच्यतेऽनेन त्वच—करणे असुन् । वर्णे निघण्टु । "सप्रथिवा त्वचसा हसो दिपय" ऋ० १।१००।१५ । "त्वचसा वर्णेन" भा० ।

**त्वचीयस्** त्रि०अतिशयेन त्वचिता ईयसुन् तृणो लोप । दीप्ते "मरुत्वान् त्वचीयसा वयसा नाधमानम् ऋ० २।३३।५। "त्वचीयसा दीप्तेन" भा० ।

**त्वक्सार** पु० त्वचि सारोऽस्य । १वंशे अमर । त्वगेव सारो-ऽस्य । २गुडत्वचि (दारचिनि) ख्याते पदार्थे शब्दच०। ३शोणकवृक्षे ४रम्भप्रधानवृक्षे (तन्नतारोमा) राजनि० । "त्वक्साररन्ध्रपरिपूरणलब्धगीति" माघ । "चन्द्रा-त्मात् पाण्डुसोपाकस्त्वक्साररव्यवहारवान्" मनु ।"नि-म्बानां सरलभीरूणां सत्वाभावे च योजयेत् । त्वक्-सारादिपञ्चवर्गे क्षेपे भेदो च बुद्धिमान्" सुश्रु । त्वक्सार उत्पत्तिस्थानत्वेनास्त्यस्या अच् । ५वंशरोच-नायां स्त्री राजनि०। [ङीप् । गुडत्वक्वृक्षे राजनि० ।

**त्वक्सारभेदिनी** स्त्री त्वचः सार भिनत्ति भिद—णिनि

**त्वक्सुगन्ध** पु० त्वचि फलत्वचि सुगन्धोऽस्य । नारङ्गे (नेबु) भेदे भावप्र० । २एलवालुकाख्यगन्धद्रव्ये स्त्री शब्दार्थचि० । [त्वचि शब्दार्थचि०।

**त्वक्स्वादी** स्त्री त्वचि स्वाद्वी । (दारचिनि) ख्याते वृक्ष

**त्वग** गतौ भ्वा० सक० पर० सेट् ईदित् । त्वङ्गति अत्वङ्गीत् तत्वङ्ग ।

**त्वगङ्कुर** पु० त्वच अङ्कुर इव । रोमाञ्चे हारा० ।

**त्वगाक्षीरी** स्त्री त्वच आक्षीर स्वल्पक्षीर यस्या गौरा० ङीष् । वंशरोचनायाम् जटा०।

**त्वगन्ध** पु० त्वचि फलत्वचि गन्धोऽस्य । नागरङ्गे राजनि०

**त्वगज** न० त्वचो जायते जन—ड । १रोमणि २रुधिरे च राजनि० ।

**त्वग्दोष** पु० त्वच दूषयति दुष—णिच्—अण् । कोठरोगे राजनि०"श्वयथु पाण्डुरोगश्च त्वग्दोषमविपाचिताम्" सुश्रु०।"प्रिय प्रजानामपि स त्वग्दोषेण प्रदूषित"भा० उ०१४८अ०। तत अस्त्यर्थे इनि तद्युक्ते त्रि० । "देवापिस्तु महातेजास्त्वग्दोषी राजसत्तम ।" भा०उ १४८अ० ।

**त्वग्दोषापहा** स्त्री त्वग्दोषमपहन्ति अप+हन—ड । माञ्जि-ष्ठायाम् राजनि० ।

**त्वग्दोषारि** पु० ६त० । हस्तिकन्दे राजनि० त्वग्दोषान्तोऽप्यत्र । [ अत्वचीत् । तत्वाच । त्वक् ।

**त्वच** संवरणे तु० पर० सक० सेट् । त्वचति अत्वाचीत्

**त्वच्(चा)** स्त्री त्वच्यते संवियते देहोऽनया त्वचति स० वृणोति वा देहम् त्वच-क्विप् । १गुडत्वचि (दारचिनि) २वल्कले ३चर्मणि च मेदि० ।४स्पर्शग्राहके वाह्येन्द्रियभेदे सा च देहव्यापिनी त्वचिस्थिता स्पर्शा-वायो सत्त्वांशेनोत्पन्ना वाताधिष्ठातृदेवताका” वेदा० सा० टत्रम् । तत्र “उद्भूतस्पर्शवद्द्रव्य गोचरः सोऽपि च त्वचः । रूपान्यच् चक्षुषो योग्य रूपमत्रापि कार-णम् । द्रव्याध्यक्षे, त्वचो योगो मनसा ज्ञानकारणम्” भाषा० चर्मन् शब्दे २६०२ पृ० दृश्यम् ।

चर्मणि “त्वच समेध्या परिधाय रौरवीम्” रघु “आयूंषि त्वच निर्भिद्य प्राभञ्जनिरमोचयत्” भट्टि० । “त्वगुत्तरासङ्गवतीमधीतिनीम्” कुमा०। वल्कले “भूर्जत्वचः कुञ्जरबिन्दुशोणाः” कुमा० । गुडत्वचि “त्वगेलापत्रकै स्तुल्यैः त्रिसुगन्धि त्रिजातकम्” राजनि० । हलन्तत्वात् वा टाप् । तत्रार्थे शब्दरत्ना० त्वचापत्रम् । “शुक्लत्वच इवोरग” भा० शा० ७५०अ०। “नीलवृषाङ्कोऽरविन्दाक्ष ऊर्द्ध्वरोमा सहस्त्वच” हरिवं०।७६ अ० ।

**त्वच** न० त्वच-अच् । वल्कले “त्वचवेष्टितमस्थिपञ्जरम्” उद्भटः। गुडत्वचम् इत्यादि। समासान्त त्वगन्तस्य अच्। २त्वक्पत्रे न०। “त्वच लघूष्णं कटुकं स्वादु तिक्तञ्च रूक्षकम् । पित्तलं कफवातघ्नं कण्डूमाहर्षनाशनम् । हृद्वस्तिरोगवातार्श्ःक्रिमिपीनसशुक्रहृदिति”। [त्वचयति ।

**त्वच** त्वच करोति सत्यापाशेत्यादि०पा०स्वार्थे-णिच् नामधातु ।

**त्वचस्** न०त्वच-असुन् । त्वचि । त्वचषि हितम् यत् । त्व गिन्द्रियहिते “यच्च त्वचस्य ते मयम्” अथ० २।३३।७।

**त्वचापत्र** न० त्वचा त्वक् पत्रमिवास्य । (दारचिनि) त्वक्-पत्रे शब्दार्थचि०।

**त्वचिष्ठ** त्रि० अतिशयेन त्वगवान् इष्ठन् मतुपो लुकि न षदान्तकार्यम् । अतिशयत्वग्युक्ते । ईयसुन् त्वचीयस् तत्रार्थे त्रि० स्त्रियां ङीप् ।

**त्वचिसार** पु० त्वचि सारोऽस्य हलन्तत्वात् वा सप्तम्या न लुक् । वंशे अमर । [ छायाम् हारा० ।

**त्वचिसुगन्धा** स्त्री त्वचि सुगन्धोऽस्या अलुक् समा० । क्षुद्रे-

**त्वच्य** त्रि०त्वचि हित यत् भत्वात् न पदान्तकार्यम् । त्वचि हिते । “त्वच्य वर्ण्यं मधुरविपाकम्” सुश्रु० ।

**त्वत्** त्रि० तन-क्विप् अनो व तुक् च । अन्यार्थे सर्वनामा-यम् । त्वगब्दे दृश्यम् । सर्वनामत्वात् टेरकच् त्वकत् । इति बोध्यम् । [काशादिन्याद्यर्थे “त्वत्त सर्वं प्रवर्तते” ।

**त्वत्तस्** अव्य०एकार्थवृत्ते युष्मद तसिल् त्वदादेश । त्वत्तः ।

**त्वदीय** त्रि० तव इदम् त्यदादित्वेन वृद्धत्वात् छ त्वदादेश । एकवचनार्थवृत्तियुष्मदर्थसम्बन्धिनि ।“पितुस्त्वदीयस्य मया-ऽपकारितं” रघु ।

**त्वन्च** गतौ भ्वा० पर० सक० सेट् । त्वञ्चति अत्वञ्चीत् । तत्वञ्च । उदित् । त्वञ्चित्वा त्वक्त्वा ।त्वक्त

**त्वन्च** सङ्कोचे रुधा० पर० सक० सेट् । त्वनक्ति अत्वा-ञ्चीत् मतान्तरे उदित् । क्त्वा वेट् । अन्यत्र सेट् । त्वक्त ।

**त्वद्विध** त्रि० तवेव विधा प्रकारो यस्य । त्वत्सदृशे ।

**त्वम्पदलक्ष्यार्थ** पु० त्वमिति पदस्य लक्ष्योऽर्थः । अज्ञानादि-व्यष्ट्युपाध्युपहिताधारभूते अनुपहितप्रत्यगानन्दरूपे तुरीयचैतन्ये । [जीवस्तु त्वम्पदाभिध” वेदान्तसा०।

**त्वम्पदवाच्य** त्रि०६त०। त्वम्पदाभिधे ।“देहादिभिः परिच्छिन्नो

**त्वम्पदवाच्यार्थ** त्रि०त्वम्पदस्यार्थे अज्ञानादिव्यष्टिः एतदुपहि-तात्पसत्वादिविशिष्टं चैतन्यम् एतदनुपहितचैतन्यञ्च । एतत्त्रय तप्तायःपिण्डवदेकत्वेनावभासमानः त्वम्पदवा-च्यार्थो भवति”वेदान्तसा०।

**त्वम्पदाभिध** पु० त्वम्पदमभिधा यस्य । त्वम्पदवाच्ये जीवे “आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयो । अन्तः-करणसम्भिन्नबोधः स त्वम्पदाभिध”इत्युक्ते ।

**त्वयता** स्त्री त्वया दत्तम् पृषो०। त्वया दत्ते इत्यर्थे“मन इन्द्र । त्वयताया इषे” ऋ०७।२०।२०। “त्वयतायै इषे त्वया दत्तायै इषे अन्नाय” भा० अन्नाय पद भोक्तुमिच्छसि ।

**त्वर** वेगे भ्वा० आत्म० अक० सेट् । त्वरते अत्वरिष्ट । घटा० । णिच्-त्वरयति । भिदू त्वरा । ञीत् त्वरितो-ऽस्ति । “गन्धाः सङ्क्षिप्तो तत्र समाधि त्वरते मनः” रामा० आर० ७८ स० । “वत्स मा त्वरते बुद्धि” भा० स० १५१श्लो० “दूता हि त्वरयन्ति माम्” रामा० सा० “अतत्वरत्तान् योद्धुम्” भट्टि ।

**त्वरा** स्त्री त्वर-अङ् ।।वेगे, २अभीप्सितार्थे विलम्बासहने च “औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया” रत्नावली ।

**त्वरायत** त्रि० त्वरा अदमनस्य आसम् । त्वरान्विते अमर

**त्वरायस्** त्वरणे कण्ड्वा० आकृतिगण पर० अक० सेट् । त्वरायति ।

त्वरि स्त्री त्वर–भावे भावे इन्। त्वरायां हेमचन्द्रकोषः।

त्वरित न॰ त्वर–क्त। १शीघ्रे। २तद्वति त्रि॰। "पयोऽभि-षङ्गुत्वरित चञ्चरा" माघ "त्वरितगतिश्च जगुरति" छन्दोम॰। ३छन्दोभेदे स्त्री "अथाभिधास्ये त्वरितां त्वरित फलदायिनीम्" इत्युपक्रमे तन्त्रसा॰ तद्ध्यानादिक-मुक्तं दृश्यम्।

त्वरितक पु॰ त्वरितं कायति प्रकाशते कायते कै–क। व्रीहिभेदे (तोरी) लघ्वव्रीह्यादीन्युपक्रमे "त्वरितक कुक्कुटाण्डकेत्यादि" सुश्रु॰।

त्वरितगति स्त्री "त्वरितगतिश्च नजनगै" छ॰ म॰ उक्ते दशाक्षरपादके वर्णवृत्तभेदे। [ वचनि ल्प्रमर।

त्वरितोदित न॰ त्वरितमुदितम्। शीघ्रोच्चारिते निरुक्ते

त्वलग पु॰ जलग+पृषो॰। जलमध्ये पारस्करनि॰।

त्वष्ट त्रि॰ त्वक्ष–तनूकरणे क्त। तनूकृते तष्टशब्दार्थे अमर

त्वष्टि पु॰ "मत्स्याघातो निषादानां त्वष्टिस्त्वायोगवस्य च" मनूक्ते सङ्कीर्णजातिभेदे।

त्वष्टीमती स्त्री त्वष्टा तदनुग्रहोऽस्त्यस्या मतुप् पृषो॰। त्वष्टुरनुग्रहोपेतायां स्त्रियाम् "स्त्रीपुरुषमिथुनरूपाणां पशुमनुष्यादीनां शरीरनिर्माता त्वष्टा तदा च अन्तर्-यस्थानम॰ श्रूयते "यावन्तो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावन्तो वै तत् प्रजायते" तारयस्य त्वष्टुरनुग्रहोपेता" भा॰।

त्वष्टृ पु॰ त्वक्ष–तृच्। "एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते" भा॰ आ॰ ६५ अ॰ उक्ते १द्वादशादित्य-मध्ये १आदित्यभेदे। "निर्भिन्ने अक्षिणी त्वष्टा लोक-पालोऽविशत् विभो। चक्षुषांशेन रूपाणां प्रतिपत्ति-र्यतो भवाम्" भाग॰२।६।१४श्लो॰। उक्तेरस्य नेत्रोपकार-कतया नेत्राधिष्ठातृत्वम्। २देवशिल्पिभेदे अमरः "विश्वकर्मा च त्वष्टा च चक्राते ह्यायुधं बहु" हरिव॰ २१८ अ॰। "आहूये विश्वकर्माणमथ त्वष्टारमेव च" रामा॰ बा॰ ८१ स॰। "त्वष्टा तथैवोर्जितविश्वकर्मा" हरिव॰ २४१ अ॰ इत्यादिषु तयोर्भेदेन निर्देशात् न पर्या-यता। ३ तद्देवताके चित्रानक्षत्रे। ४ तक्षणि ५तदाकारे वर्णसङ्करभेदे च। ५तक्षणकर्तरि त्रि॰ स्त्रियां ङीप्। ६पशुमनुष्यादीनां गर्भान्त स्वरेतोरूपविकारकारके देवभेदे त्वष्टीमतीशब्दे दृश्यम्।

त्वष्टृमत् त्रि॰त्वष्टृ+अस्त्यर्थे मतुप्। वीर्याधिष्ठातृदेवभेदयुक्ते "त्वष्टृमन्तस्त्वा सपेम" यजु॰२७।२०। "त्वष्टा रेतसामधि

ष्ठाता तद्युक्ता। वैधृताद्योषधयो वीर्याधिष्ठाता देविनोऽस्य यत्नयुताः" वेददी॰।

त्वाम्कामा स्त्री त्वा कामयते कम–णिङ् अण् मट् द्वितो याया म लुक्। त्वामभिलषन्त्याम्। "ऋग्मे। त्वाका-मया गिरा" ऋ॰ ८।१।१७। लोके तु त्वत्काम इत्येव।

त्वायु त्रि॰ त्वामात्मन इच्छति क्यच् युष्मदस्मदादेशे क्याच्छ न्दसि' पा॰ उ। आत्मनः त्वां मन्यमाने। "सुता इमे त्वायवः" ऋ॰ १।२।४।

त्वावत् त्रि॰ तवेव दर्शनमस्य युष्मद्+वतुप्मकरणे "युष्मद-स्मद्भ्यां छन्दसि सादृश्ये उपसंख्यानम्" उक्तेः सादृश्ये मतुप् त्वादेशः "आ सर्वनाम्नः" पा॰ आ। त्वत्सदृशे "त्वा च त्वावान् त्वामान्" ऋ॰ १।१०।१४।

त्वावसु पु॰ त्वं पठ्यापकोऽस्य त्वादेश वेदे पृषो॰ आ। त्वदाश्रिते। लोके तु त्वद्वसु इत्येव।

त्वाष्टी स्त्री दुर्गायाम्। "त्वष तुष्टौ क्तो धातुकाय तुटी निपातने। सृजत्येषा प्रजास्तुष्टी त्वाष्टी तेन प्रकी-र्तिता" देवीपु॰ ४५ अ॰।

त्वाष्ट्र त्रि॰त्वष्टा देवता अस्य अण्। त्वष्टृदेवताके १आज्यादौ २चित्रानक्षत्रे स्त्री। त्वष्टुः आदित्यभेदस्य अपत्यम् अण्। ३विश्वरूपे ४वृत्रासुरे च। "त्वाष्ट्रस्य विश्वरूपस्य गोना माश्वकाय त्रीणि शीर्णवराक्षे" ऋ॰१०।८।८। "विश्वरूप-र्षमा पुत्रा त्वष्टाय सविता तथा" इत्युपक्रमे विश्वरूपोत्पत्ति-कथामभिधाय। "त्वष्टुर्दैत्याभवत् भार्या रोचना नाम कन्यका। सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान्। तं वव्रिरे सुरगणा स्वस्रीय द्विषतामपि" भाग॰६।६स॰ ४४श्लो॰ इति विश्वरूपोत्पत्तिकथा। वृत्रासुरोत्पत्तिकथा च "हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे। इन्द्रशत्रो! विवर्द्धस्व मा चिरं जहि विद्विषम्" इत्युपक्रमे तदुत्-पत्तिमुपवर्ण्य "येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना। स वै वृत्र इति प्रोक्तः पापः परमदारुणः" भाग॰ ६।९ अ॰कथा। त्वष्टुः स्त्र्यपत्यम् अण् ङीप्। ५संज्ञानामनि ४सूर्यपत्न्यां स्त्री शब्दरत्ना॰। छायाशब्दे २९८५ पृ॰ दृश्यम्। ५चुद्रराये त्रिका॰। ६सामभेदे। "इन्द्रो वृत्रांद्विभ्यहां नाविशत् स त्वाष्ट्रेऽन्वपन्ध्यन् यामेति तमेतैः सामभिरजनयन्" पञ्चवींशब्रा॰।

त्विष दीप्तौ भ्वा॰ उभ॰ सक॰ अनिट्। त्विषति ते। अत्वि-क्षत् अत्विक्षत। तित्वेष तित्विषे। त्विषीष्ट। "लोकस्य इव तित्विषे" ऋ॰ ८।६।५। "वनचरान् वनानि

त्विष्वन यत्" ऋ० ५।५४।१२। "अग्निरिव मन्यो ! त्विषित सहस्व" ऋ० १०।८४।२।

**त्विष(षा)** स्त्री त्विष्—सम्प०भावे क्विप्। दीप्तौ। "निशीथदीपाः सहसा हतत्विषः" रघु। "रुचिधाम्नि भर्त्तरि परलोकमभ्युपगते विविशुः। ज्वलनं त्विष कथमिवेतरथा" "वयस्त्विषामित्यवधारितं पुरः" माघ.। हलन्तत्वात् वा टाप्। तत्रार्थे शब्दरत्ना०।

**त्विषामीश** पु० ६त० अलुक् समा०। १सूर्य्ये हेमच० २अर्कवृक्षे च। [वृक्षे च।

**त्विषाम्पति** पु०६त० अलुक् स०। १सूर्य्ये अमर० २अर्क-

**त्विषि** पु० त्विष—इन्। किरणे हेमच०।

**त्विषित** त्रि० त्विष् जातास्य तार० इतच्। ज्वलिते। "अग्निरिव मन्यो त्विषितः" ऋ० १०।८४।२।

**त्वेषथ** त्रि० त्विष—अथच्। दीप्ते। "शूरस्येव त्वेषथादीषते वयः" ऋ० १।१४१।८। [त्वेषः" ऋ० ११६१।११

**त्वेषस्** त्रि० त्विष—असुन्। दीप्ते "अस्येदु त्वेषसा रन्त सि-

**त्वै** अव्य० त्वच—बा० डै। १विशेषे २वितर्के च शब्दार्थचि०।

**त्वोत** त्रि० त्वया ऊतः वेदे नि०। त्वया रक्षिते इत्यर्थे। "त्वोतासो न्यर्वता" ऋ० १।८।२। लोके तु त्वदूत इत्येव

**त्सर** छद्मगतौ भ्वा० पर० सक० सेट्। त्सरति अत्सारीत्। "यस्त्वा स्वपन्तीं त्सरति यस्त्वा दिप्सति जाग्रतीम्" अथ० ८।६।८। "यो हैनं पाप्मा मायया त्सरति न हैनं सोऽभिभवति" शत० ब्रा० ११।१।६।१२।

**त्सरु** पु० त्सर—उन्। खड्गमुष्टौ। "मा मा पद्येन रपसा विदत् त्सरुः" ऋ०७।५०।१। "खड्गं च कनकत्सरुम्" भा० व० ११२७ श्लो०। "गृहीतखड्गचर्माणस्तदा भूयः प्रहारिणः। त्सरुमार्गान् यथोद्दिष्टांश्चेरुः सर्वासु भूमिषु" भा० आ० ५२४१श्लो०।

**त्सारुक** त्रि० त्सरौ तद्युद्धे निपुणः आकर्षा० कन् तत स्वार्थे अण्। असियुद्धनिपुणे। "तथाऽतिपुरुषानन्यान् त्सारुकौ यमजावुभौ" भा० आ० १३२ अ०।

**त्र्यब्दस्पृश्** पु० त्र्यब्दं त्रैवर्षिकत्रय स्पृशति स्पृश क्विन् त्रैवर्षिकत्रययुक्ते लुप्तसंवत्सरे सौरवर्षभेदे। "एकस्मिन् रविवर्षे सौरवर्षद्वयावसान चेत्। त्र्यब्दस्पृगेवमेन विलुप्तवत्सर प्रोक्तः" यशोधरजातकम्। "शुरुवर्षयुग्मवत्समा गदिता या ननु लुप्तसंज्ञिता" ज्योतिर्विदाभरणम्।

इति वाचस्पत्ये तकारादिशब्दार्थसङ्कलनम्।

116 वाच - IV —

# थ

थकारः तवर्गीयद्वितीयवर्णो व्यञ्जनवर्णविशेषः अस्योच्चारणस्थानम् दन्तमूलं तदुच्चारणे दन्तमूलेन सह जिह्वाग्रस्पर्शः आभ्यन्तरप्रयत्नः,अतएवास्य स्पर्शवर्णता। बाह्यप्रयत्नास्तु विवारश्वासाघोषामहाप्राणाश्च। अस्य वाचकशब्दा वर्णाभिधाने उक्ता यथा

थश्चिवासी महाग्रन्थिर्ग्रन्थिग्राही भयानकः। शिली चिरचिरो दन्ती भद्रकाली शिलोच्चयः। कृष्णो बुद्धिर्विकर्णाश्च दक्षिणाशाधिपोऽमर। वरदा भोगदा केशो वामजङ्घाऽलसोऽनल। लोलजिह्वो पृथुर्गुह्ये शरच्चन्द्रो विदारकः"। मातृकान्यासे अस्य वामजङ्घायां न्यास। अस्याधिष्ठातृदेवीध्येयरूप यथा "नीलवर्णां त्रिनयना षड्भुजा वरदा पराम्। पीतवस्त्रपरीधाना सदा सिद्धिप्रदायिनीम्। एवं ध्यात्वा थकारन्तु तन्मन्त्रं दशधा जपेत्। पञ्चदेवमय वर्णं पञ्चप्राणमय सदा। तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्" अस्य स्वरूपं यथा "थकारं चञ्चलापाङ्गि! कुण्डली मोक्षरूपिणी। त्रिशक्तिसहितं वर्णं त्रिविन्दुसहितं सदा। पञ्चदेवमयं वर्णं पञ्चप्राणात्मकं सदा। तरुणादित्यसङ्काशं थकारं प्रणमाम्यहम्" कामधेनुतन्त्रम्। काव्यादौ अस्य प्राक्प्रयोगे युद्धं फलम् "थस्तु युद्धम्" वृ० र० टीको क्ते।

**थ** पु० थुड्—थुर्व वा ड। १पर्वते २भयत्रायके त्रि० ३मङ्गले ४भये रक्षणे न० मेदि०। [पाङ्गि!" कामधेनुत०।

**थकार** पु०थ+स्वरूपे कार। थस्वरूपे वर्णे "थकार चञ्चा-

**थर्व्व** चरणे भ्वा० पर० सक० सेट्। थर्वति अथर्वीत्। तदर्थे "अङ्गीरसो नः पितरो नवग्वा अथर्वाणो भृगव सोम्यासः" निघण्टुधृता श्रुतिः "अथर्वाणोऽथर्वनवन्तः थर्वतिश्चरतिकर्मा तत्प्रतिषेध" निरु० ११।८। लोकेऽपि गतिशून्ये (अथर्व इति) प्रसिद्ध।

**थुड** संवृतौ तु० कु० पर० सक० सेट्। थुडति अथुडीत्। तुथोड। [करणे शब्दभेदे।

**थुत्कार** पु० थुत् इत्यव्यक्तशब्दस्य कारः। निष्ठीवनत्यागानु

**थुथूकृ** थुथु इत्यव्यक्त शब्दात् निष्ठीवनत्यागानुकरणशब्दात् च्वि—कृञोऽनुप्रयोग। थुथूकरोति। "थुथूकृत्य ममाङ्गे रथ्यागजने" इक्षिकर्णोक्तम्।

**थुथूकृत्** स्त्री थुथु इत्यव्यक्तशब्दं करोत्यस्याम् कृ—बा० आधारे क्विप्। होलाकायां पारस्करनिघ०।

पङ्क्तिद्वयप्रान्ते चत्वारो दन्तभेदा दंष्ट्रा इति प्रसिद्धे । द्विगुणीकृतदन्तावलिरित्येके "दंष्ट्राकरालानि च ते मुखानि" गीता । "दंष्ट्राया धरणिमंस्ते टितिसुताधीश पदे रोदसी" सा० द० । "दंष्ट्रामयूखैः शकलानि कुर्वन्" रघु०

**दंष्ट्रानखविष** पु० दंष्ट्रायां नखे च विषं यस्य । मार्ज्जारादौ यथाह सुश्रुत । "तत्र दृष्टिनिश्वास दंष्ट्रानखमूत्रपुरीषशुक्रलालार्त्तवमुखसन्दंशविशर्द्धितगुदास्थिपित्तशूकशवामीति" विषस्थानोपक्रमे "मार्ज्जारश्वानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पादकीटास्तथान्ये दंष्ट्रानखविषा"।

**दंष्ट्राल** त्रि० दंष्ट्रा+अस्त्यर्थे चूडा० ल । दंष्ट्रायुक्ते "धूम्रकेशो हरिश्मश्रुर्दंष्ट्रालोष्ठपुटाननः" हरिवं० ४७ अ० ।

**दंष्ट्राविष** पु० दंष्ट्रायां विषमस्य । १भौमे सर्पे "भौमास्तु दंष्ट्राविषाः" सुश्रुत २ लूताभेदे स्त्री । यथाह सुश्रुतः
"विषन्तु लालानखमूत्रदंष्ट्रारजःपुरीषैरथ चेन्द्रियेण ।
सप्तप्रकारं विसृजन्ति लूतास्तदुग्रमध्यावरवीर्ययुक्तम् ।
सकण्डुकोठं स्थिरमल्पमूलं लालाकृतं मन्दरुजं वदन्ति ।
शोफश्च कण्डूश्च पुलालिका च धूमायनं चैव नखावदंशे ।
दंशन्तु मूत्रेण सकृष्णमध्यं सरक्तपर्य्यन्तमवेहि दीर्णम् ।
दंष्ट्राभिरुग्रं कठिनं विवर्णं जानीहि दंशं स्थिरमण्डलञ्च"।
लालाविषादयोऽप्यत्र । [शुभादयोऽप्यत्र

**दंष्ट्राम्ल** पु स्त्री दंष्ट्रास्त्वमिवाम्लं । यगाद्ये शब्दार्थचि० । दंष्ट्रा-

**दंष्ट्रिका** स्त्री दंष्ट्रा स्वार्थे क कापि ह्रस्वः अत इत्त्वम् । दाढ़िकायां दंष्ट्राशब्दार्थे । दंष्ट्रा+व्रीह्या० वा ठन् । दंष्ट्रायुक्ते त्रि० ।

**दंष्ट्रिन्** पु० दंष्ट्रा अस्त्यर्थे व्रीह्या० इनि । शूकरे अमरः २सर्पे शब्दर० । ३दंष्ट्रायुक्ते त्रि० "दंष्ट्रिभिः शृङ्गिभिर्वापि हताश्चैव तस्करैः" शु० त० अग्निपु० ।

**दंसना** स्त्री चु० दन्स–भावे युच् । १कर्म्मणि निरुक्ते दंसस् इति शब्दस्य कर्मपर्य्यायतोक्तेस्तथार्थत्वम् । "तव क्रत्वा तव तद्दंसनाभिः" ऋ० ६।१७।६ । "दंसनाभिः कर्मभिः" भा० । "शची वस्तव दंसना" ऋ० १।२८।२।

**दंसस्** न० दन्स–असुन् । कर्म्मणि निघण्टुः "आदृतमस्ति दंसः" ऋ० १।६२।६ । "अयर्द्धयो वजिनो अस्य दंसना" १०।१२८ । "दंससा कर्म्मणा" भा० । "अशोयापर्विना दंसोभिः" यजु० १२।७४ ।

**दंसि** पु० दन्स–इन् । कर्म्मणि । "कृताय मम्मवाय दंसय" ऋ० १०।१२८।१ । "दंसय कर्माणि" भा० "दंसय कर्माणि दंसयत्येनानि" निरुक्ते ४।२५ ।

**दंसिष्ठ** त्रि० दन्स–तृन् दंसयिता अतिशयेन स इष्ठन् तृणो लुकि णिलोप । १अत्यन्तकर्म्मकर्त्तरि । "दस्रा दंसिष्ठा रथ्या रथीतमा" ऋ० १।१८२।२। "दंसिष्ठा अतिशयितकर्म्माणौ" भा० औष्ठाने व्याच् । २दर्शनीयतमे ३अतिशयेन शत्रुहिंसके च । 'येना दंसिष्ठ । कृत्वने" ऋ०८।२४।२५। "हे दंसिष्ठ । दर्शनीयतम । यद्वा शत्रूणामुपक्षपयित ।" भा० । अत्र दंशे दंसे वा धातोरूप पृषो०।

**दक** न० उदक+पृषो० टैप्–शोधे क तत सप्तमाया कन् वा । जले त्रिका० दकोदरम् । दकार्गलम् ।

**दकोदर** न० दकं जलस्फीतमुदरं यत्र । सुश्रुतोक्ते जलोदरापरनामके उदररोगभेदे यथा "य स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथ वा निरूढ । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरं पूर्ववदभ्युपैति । स्निग्धं महत्तत्परिवृत्तनाभि भृशोच्छ्रितं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् । "नाभेरधश्चतुरङ्गुले वेवन्या वामपार्श्वे दकोदरे" "वेध्या शिरा बहुविधा मूत्रवृद्धिदकोदरम्" सुश्रु० ।

**दक्ष** वृद्धौ शीघ्रार्थे च भ्वा० आत्म० अक० सेट् । दक्षते अदक्षिष्ट । ददक्षे । दक्ष । "स्वमिनो गर्तिभामि दक्षसे" ऋ० २।१।११।

**दक्ष** हन्त्यर्थे (गतौ बधे च) भ्वा० आत्म० सक० सेट् । दक्षते अदक्षिष्ट ददक्षे । मित् तत्करणसामर्थ्यात् अनुपधाया अपि दीर्घे णिचि अदाक्षि अदक्षि चाणि दक्ष दक्षम् दाक्ष दाक्षमिति रूपं मित् भावे अ । दक्षा ।

**दक्ष** पु० दक्ष–कर्त्तरि अच् । १ताम्रचूडे दक्षसंहिताकर्त्तरि २मुनिभेदे ३शिववृषभे ४वृक्षभेदे ५अग्नौ च विश्वः । ६महेश्वरे शब्दरत्ना० । ब्रह्मणो दक्षिणाङ्गुष्ठजाते ७प्रजापतिभेदे । ८चतुरे शीघ्रेषु कर्त्तव्येषु उपस्थितेषु सद्य एव शाठं कर्तुं च समर्थे पटौ त्रि० मेदि० ।

"दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवान् ऋषिः । ब्रह्मणः पृथिवीपाल ! शान्तात्मा सुमहातपाः । वामादजायताङ्गुष्ठाद्भार्य्या तस्य महात्मनः । तस्यां पञ्चाशतं कन्याः स एवाजनयत् मुनिः । ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः । पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजा-

पति" भा० आ० ६६ अ०। तस्य पुत्रनामकथा दक्षसुत शब्दे दृश्यम्। हरिवंशे २अ० तु तस्य प्राचेतसत्वमुक्तं यथा

"उपगम्याब्रवीदेतानथ सोमः प्रजापतीन्। कोपं यच्छत राजानः! सर्वे प्राचीनबर्हिषः!। वृक्षशून्या कृता पृथ्वी शाम्येतामग्निमारुतौ। रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी। भविष्यं जानता तत्त्वं धृता गर्भेण वै मया। मारिषा नाम कन्येयं वृक्षाणामिति निर्मिता। भार्य्या वोऽस्तु महाभागा सोमवंशविवर्द्धिनी। युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः। अस्यामुत्पत्स्यते पुत्रो दक्षो नाम प्रजापतिः। स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै। अग्निनाऽग्निसमो भूत्वा प्रजाः संवर्द्धयिष्यति। ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः। संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम्। मारिषायां ततस्ते तु मनसा गर्भमादधुः। दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः। दक्षो जज्ञे महातेजाः सोमस्यांशेन भारत!। पुत्रानुत्पादयामास सोमवंशविवर्द्धनान्। अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः। स सृष्ट्वा मनसा दक्षः पश्चादसृजत स्त्रियः। ददौ स दश धर्माय कश्यपाय त्रयोदश। शिष्टाः सोमाय राज्ञेऽथ नक्षत्राख्या ददौ प्रभुः। तासु देवाः खगा गावो नागा दितिजदानवाः। गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः। ततः प्रभृति राजेन्द्र! प्रजा मैथुनसम्भवाः। सङ्कल्पाद्दर्शनात् स्पर्शात् पूर्वेषां प्रोच्यते प्रजा"।

अनयोर्विरोधमाशङ्क्य कल्पभेदादविरोधः भङ्ग्या तत्रैव समाहितो यथा

"जनमेजय उवाच। देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम्। सम्भवः कथितः पूर्वं दक्षस्य च महात्मनः। अङ्गुष्ठाद्ब्रह्मणो जातो दक्षः प्रोक्तस्त्वयाऽनघ!। वामाङ्गुष्ठात्तथा चैव तस्य पत्नी व्यजायत। कथं प्राचेतसत्वं स पुनर्लेभे महातपाः। एतन्मे संशयं विप्र! सम्यगाख्यातुमर्हसि। दौहित्रश्चैव सोमस्य कथं श्वशुरतां गतः"। वैशम्पायन उवाच। "उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु पार्थिव!। ऋषयोऽत्र न मुह्यन्ति विद्वांसश्चैव ये जनाः। युगे युगे भवन्त्येते सर्वे दक्षादयो नृपाः। पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति। ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीज्जनाधिप!। तप एव गरीयोऽभूत् प्रभावश्चैव कारणम्" हरिवं० २अ०। ८औशीनरपुत्रभेदे "शिविर्वनः शमिर्दक्षश्चत्वारौशीनरात्मजाः" भाग० ९। २३।४। ९दक्षिणभागे "वामतो जानकी यस्य दक्षभागे च लक्ष्मणः। मारुतिः पुरतो यस्य" रामकवचम्। १०विष्णौ "उग्रः संवत्सरो दक्षः" विष्णुस०। "जगद्रूपेण वर्द्धमानत्वात् सर्वकर्माणि क्षिप्रं करोतीति वा दक्षः" भा०। ११कुशले "दक्षमिष्टमधुवासरसारम्" "उपवनपवनानुपातदक्षैः" माघः "रक्षोन्वेषणदक्षाणां द्विपानामिव ता ययौ" रघुः। "मेरौ स्थिते दोग्धरि दोहदक्षे" कुमा०। दक्ष क्षिप्रे करणे पच्। १२बले निघण्टुः। "स दक्षाणां दक्षपतिर्बभूव" ऋ० १।९५।६। "दक्षाणां बलानाम् मध्ये यदतिशयितं बलं तस्याधिपतिः" भा०। १३वीर्ये न० "स्वैर्दक्षैर्दक्षपितेह सीद देवानाम्" यजु० १४।३। "स्वैर्दक्षैः वीर्यैः सामर्थ्यैः सह, दक्षशब्दोऽत्र वीर्यार्थः। दक्षपिता दक्षं वीर्यं पातीति पालयिता" वेददी०।

**दक्षकन्या** स्त्री ६त०। दक्षस्य सुतासु तास्र षष्टिः। यथाह मत्स्यपु० ५ अ०।

"ततस्तेषु विनष्टेषु षष्टिं कन्याः प्रजापतिः। वैरिण्यां जनयामास दक्षः प्राचेतसस्तथा। प्रादात् स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशति सोमाय चतस्रोऽरिष्टनेमये। द्वे चैव भृगुपुत्राय द्वे कृशाश्वाय धीमते। द्वे चैवाङ्गिरसे तद्वत्तासां नामानि विस्तरात्"। "तांश्चैव नष्टान् विज्ञाय पुत्रान् दक्षः प्रजापतिः। षष्टिं ततोऽसृजत् कन्या वैरिण्यामिति नः श्रुतम्। तास्तदा प्रतिजग्राह भार्य्यार्थं कश्यपः प्रभुः। सोमो धर्मश्च कौरव्य! तथैवान्ये महर्षयः। ददौ स दश धर्माय कश्यपाय त्रयोदश। सप्तविंशति सोमाय चतस्रोऽरिष्टनेमिने। द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे तथा। द्वे कृशाश्वाय विदुषे तासां नामानि मे शृणु" हरिवं० ३ अ०। २सतीनाम्न्यां भवपत्न्यां दुर्गायाञ्च तत्कथा "प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः। तस्यां ससर्ज दुहितॄः षोडशामललोचनाः। त्रयोदशाऽदाद्धर्माय तथैकामग्नये विभुः। पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे" भाग० ४।१। "अथापमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी। सती सती योगविसृष्टदेहा" कुमा०। दक्षसुतादयोऽप्यत्र।

**दक्षक्रतु** पु० ६त०। दक्षप्रजापतिकृते गिरीश्वरभागे यज्ञभेदे। तद्यज्ञकथा काशी० ८७ अ० यथा

"अहं यियक्षुर्यूयं मे यज्ञसाहाय्यकारिणः। भवन्तु यज्ञसम्भारानानयन्तु त्वरान्विताः। श्वेतद्वीपमथो गत्वा

यज्ञे चक्रिणमच्युतम्। महाक्रतुपदेष्टारं यज्ञपुरुषमेव च। तस्यर्त्विजोऽभवन् सर्वे ऋषयो ब्रह्मवादिनः। प्रावर्त्तत ततस्तस्य दक्षस्य च महाध्वरः। दूरादेव निकायाश्च तस्मिन् दक्षमहाध्वरे। धर्मेश्वरात्ततो येषां व्याजं कृत्वा गृहं ययौ। दधीचिरथ सर्वोऽस्य सर्वान् स्वर्लोकवासिनः। दक्षयज्ञे समेयातान् सतीश्वरविवर्जितान्। प्राप्तसम्मानसम्भारान् सासोऽनङ्गतिपूर्वकम्" इत्युपक्रमे तत्र दधीचिना सह दक्षस्य उक्तिप्रत्युक्ती यथा

"न विदन्ति वर्णिनश्चाद्यास्तवशार्विज्ञं भजन्ति ये। एको रुद्रो न द्वितीयः सविदानाथपीति हि। प्रावर्त्तनपरोऽन्योऽपि गौरवात्तव च क्रतौ। यदि मे ब्राह्मणस्यैकस्याल्पोऽपि वचनं हितम्। तदा क्रतुफलाधीशं विश्वेशं समाह्वय। विना तेन क्रतुरसौ क्रतोऽप्यकृत एव हि। सति तस्मिन् महादेवे विश्वकर्मैकसाक्षिणि। तथापि नैषां सर्वेषां फलिष्यति मनोरथः। यथा जडानि बीजानि न फलन्ति स्वयं तथा। जडानि सर्वकर्माणि न फलन्तीश्वरं विना। अर्थहीना यथा वाणी धर्महीना यथा तनुः। पतिहीना यथा नारी शिवहीना तथा क्रिया। गङ्गाहीना यथा देशा पुत्रहीना यथा गृहाः। दानहीना यथा सम्पत् शिवहीना तथा क्रिया। मन्त्रहीनं यथा राज्यं श्रुतिहीना यथा द्विजाः। योषाहीनं यथा सौख्यं शिवहीना तथा क्रिया। दर्भहीना यथा सन्ध्या तिलहीनं तु तर्पणम्। हविर्हीनो यथा होमः शिवहीना तथा क्रिया। इत्थं दधीचिनाख्यातं जगाद वचनं स तम्। दक्षो दक्षोऽपि तत्रैव शम्भोर्मायाविमोहितः। प्रोवाच च भव क्रुद्धः का चिन्ता तव मे क्रतौ। क्रतुरूपाणि सर्वाणि यानि कर्माणि सर्वशः। तानि सिध्यन्ति नियतं यथार्थकरणादिह। अयथार्थविधानेन सिद्ध्येह कर्मापि नेशितुः। स्वकर्मसिद्धये नाथ सर्वं एव हि चेश्वरः। ईश्वरः कर्मणां साक्षी यत् त्वयापीति भाषितम्। तत्तथास्तु परं साक्षी नार्थं दद्याच्च कुत्रचित्। जडानि सर्वकर्माणि न फलन्तीश्वरं विना। यदुक्तं भवता तत्राप्यहो दृष्टान्तया व्यहम्। जडान्यपि च बीजानि कालं सम्प्राप्य चात्मना। अङ्कुरयन्ति कालाच्च पुष्प्यन्ति च फलन्ति च। विनाऽपीशं यथा कर्म स्वयं काले फलत्यहो। किमीश्वरेण तेनात्र महाऽमङ्गलमूर्त्तिना। दधीचिरुवाच। यथार्थकरणात् सिद्ध्यत्यपि कार्यं कदाचन। ईश्वरस्यातिकृपया सिद्धमेवाशु नश्यति। ईश्वरेच्छाबलात् कर्म कृतमप्यविधानतः। सिध्येत्तदधीनाश्च कथं सर्वं इहेश्वरात्। सामान्यसाक्षिवन्नेव सर्वेषां सर्वकर्मणाम्। साक्षी भवेदसन्दिग्धं फलस्य प्रतिभूरपि। भूतलादिस्वरूपेण विदध्यादङ्कुरोदयम्। यत् त्वयोक्तं विनापीशं काले कर्म फलेत् स्वयम्। स एव कालो भगवान् सर्वकर्त्ता महेश्वरः। अन्यच्च भवता प्रोक्तं यदेक तथ्यमेव तत्। किमीश्वरेण तेनात्र महामङ्गलमूर्त्तिना। ये महान्तो भवन्त्यत्र ये च मङ्गलमूर्त्तयः। ईश्वराख्याश्च ये सन्ति किन्तैरत्र तवान्तिके। उत्तरादुत्तरश्चेति प्रत्युत्तरयति द्विजे। दधीचौ चुकुपेऽत्यन्तं दक्षो गर्वी हृतान्वयः। आदिदेश समीपस्थानालोक्य परितः स्थितान्। ब्राह्मणाधममद चामुं परिद्रावयताशु वै। अस्मादध्वरस्थानादनादिष्टमिहागतम्। इत्थं दधीचिराकर्ण्य प्रोवाच प्रहसन्निव। किं मा दूरयसे मूढ। दूरीभूतो भवानपि। सर्वेभ्यो मङ्गलेभ्यश्च सर्वैरेभिः समं ध्रुवम्। अकाण्डे क्रोधतो दण्डस्तव मूर्ध्नि पतिष्यति। महेशविद्विषस्तव गमी पुरीषास्तु प्रजापते॥ इत्युक्त्वा निर्जगामाशु यज्ञवाटात् ततो द्विजः। तस्मिन्निर्याते निर्यातो दुर्वासाश्च्यवनो महान्। उत्तङ्क उपमन्युश्च ऋषिर्वोद्दालकावपि। माण्डव्यो वामदेवश्च गालवो गर्गगौतमौ। शिवतत्त्वविदोऽन्येऽपि दक्षयज्ञाद्विनिर्ययुः"। दक्षयज्ञादयोऽप्यत्र। दक्षा कुशला क्रतवः सङ्कल्पा येषाम्। चक्षुरादीन्द्रियरूपेषु प्राणेषु "ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु" यजु॰ ४।११। "ये देवा ईश्वरा दीव्यन्ति द्योतन्ते इति देवाश्चक्षुरादीन्द्रियरूपाः प्राणाः। "इमे वै प्राणा वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा इति" शत॰ ब्रा॰ १।२।२।१२ इत्युक्ताः। किम्भूता मनोजाता दर्शनश्रवणादीच्छारूपान्मनस उत्पन्नाः इच्छोत्पन्ना तेषां प्रवर्त्तमानत्वात्। तथा मनोयुजः रूपादिदर्शनकालेऽपि मनसा युक्ता एव वर्त्तन्ते अन्यमनस्कस्य रूपादिप्रतिभासाभावात्। यद्वा स्वप्नावस्थायां मनसा युज्यन्ते ते मनोयुजः। तथा दक्षक्रतवः दक्षाः कुशलाः क्रतवः सङ्कल्पा येषां ते यद्दुत्सितार्थकारिण इत्यर्थः। ते देवा नोऽस्मानवन्तु यज्ञानुष्ठानादिसम्परिहारेण पालयन्तु तेभ्यः प्राणरूपेभ्यः स्वाहा इदं चीरं हुतमस्तु" वेददी॰।

दक्षक्रतुध्वंसिन् पु॰ दक्षक्रतु ध्वंसति ध्वंस–णिनि–

प्रजापतिः। षष्टिं ततोऽसृजत् कन्यां वैरण्यामिति न श्रुतम्”।

३अग्निभ्यादौ च स्त्री “तमोऽपहं दक्षसुता दृशावभु” रघुः।

**दक्षाध्वरध्वंसक** दक्षस्याध्वरं ध्वंसयति ध्वन्स–णिच्–ण्वुल्। १शिवे २वीरभद्रे च दक्षाध्वरनाशकादयोऽप्यत्र।

**दक्षाय्य** पु॰ दक्ष–आय्य। १गरुडे २गृध्रखगे च उणादिवृत्तौ सि॰कौ॰। दक्ष–हद्धौ धान्तर्भूतण्यर्थे ण्वुल्। ३वर्द्धके त्रि॰। “मित्रो दक्षाय्यो अर्य्यमेवासि सोम!” ऋ॰२।६२।३। “दक्षाय्यः सर्वेषां वर्द्धकः” भा॰।

**दक्षिण** त्रि॰ दक्ष–इनन्। १परच्छन्दानुवर्त्तिनि पराभिप्रायानुवर्त्तिनि २सरले। ३दक्षभागस्थे च मेदि॰। ४वामे अपसव्ये देहभागभेदे (डाहिन) ख्याते भागे हेमच॰। “एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः” सा॰ द॰ उक्ते ५नायकभेदे यथा “स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्द्यूते रात्रिरियं जिता कमलया, देवी प्रसाद्याद्य च। इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः”। ६दामेच्छया मेरुगिरितो विमलरायाः ६दिशि स्त्री ७तद्वर्त्तिनि त्रि॰। ८यज्ञदानान्ते दाने ९प्रतिष्ठायां स्त्री यज्ञाद्यन्तदक्षिणानामभिव्यक्तिः” शत॰ ब्रा॰ २।२।२।२। “स एव यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदस्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति तस्माद्दक्षिणा ददाति”। दक्षिणाविशेषनिर्णयः हेमा॰ दा॰ यथा

भविष्यपुराणे “अदत्तदक्षिणं दानं व्रतस्यैव क्रमोत्तम!। विफलं तद्विजानीयाद्भस्मनीव हुतं हविः”। भट्टनिबन्धतात् “ब्राह्मणाय यथाशक्ति दानं दद्यात् सदक्षिणम्। अदक्षिणन्तु यद्दानं तत् सर्वं निष्फलं भवेत्”। मैत्रायणीयपरिशिष्टम् “दक्षिणालाभे पूर्णपात्रं दद्यात् न त्वेव यजेत्”। तथा शतपथश्रुतिः “तस्मादादक्षिणं हविः स्यादिति”। भविष्योत्तरे “कार्य्यं यद्दीयते किञ्चित्तत्सर्वं सुखावहम्। अदक्षिणन्तु दोषाय भवतीह परत्र च। तस्माद्दक्षिणया हीनं विधानविकलं न च। देयं दानं महाराज! सम्यक्फलकाङ्क्षया। अन्यथा दीयमानं तदपकाराय केवलम्। मन्त्रतन्त्रार्थहानिर्न च तत् फलदं भवेत्”।

आह भगवान् व्यासः “सुवर्णं परमं दानं सुवर्णं दक्षिणा परा। सर्वेषामेव दानानां सुवर्णं दक्षिणेष्यते।” एतच्च, विशेषविहितगोवस्त्रादिदक्षिणकदानवर्जं सामान्यविहितदक्षिणेषु दानेषु व्यवतिष्ठते तत्रापि परा श्रेष्ठमेति प्राशस्त्यं दर्शयति न त्वन्यां दक्षिणां निराचष्टे आनन्त्यार्थत्वाद्दक्षिणायाः सुवर्णस्य प्रकृष्टत्वात् सर्वदानेषु सुवर्णं दक्षिणेतिवचनार्थः, अन्यदपि सुवर्णाद्यभावे तदुपयिकं तण्डुलादिकं दक्षिणार्थेन योज्यं यत्तु श्रूयते “अन्येषाञ्चैव दानानां सुवर्णं दक्षिणा स्मृता। सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते” इति तदेतच्छ्रौतस्मार्त्त्य परिहाय मन्तव्यम्। “सुवर्णं रजतं ताम्रं तण्डुला धान्यमेव च। नित्यश्राद्धं देवपूजा सर्वमेव सदक्षिणम्”। स्कन्दपुराणे। “देयद्रव्यतृतीयांश दक्षिणां परिकल्पयेत्। अनुक्तदक्षिणे दाने दशांशं वापि शक्तितः”। तुलापुरुषादिदानानि अधिकृत्य लिङ्गपुराणे “दक्षिणा च शतस्यार्द्धं तदर्द्धं वा प्रदापयेत्। ऋत्विजाञ्चैव सर्वेषां दश निष्कान् प्रदापयेत्”। भविष्योत्तरे “श्रेष्ठं निष्कशतं पार्थ! दानेषु विधिरुत्तमः। मध्यमस्तु तदर्द्धेन तदर्द्धेनाधमः स्मृतः। मेरुप्रभृति कालपुरुषे तथान्येषु महत्स्वपि। एवं हेमे तथा दे च धेनौ कृष्णाजिनस्य च। अशक्तस्यापि कृष्णोऽय पञ्चसौवर्णिको विधिः। अतोऽप्यल्पेन यो दद्याल्लोभाद्दानं नराधमः। प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत्”, जयाभिषेकमुदाहृत्य लिङ्गपुराणे “अष्टषष्टिपलोन्मानं दद्याद्वै दक्षिणां गुरोः। होतृणाञ्चैव सर्वेषां त्रिंशत्पलसदाहृतम्। अध्येतृणां तदर्द्धेन द्वारपानां तदर्द्धतः”। एतेनान्यत्रापि, गुरोरर्द्धम्, ऋत्विजां तदर्द्धं, जापकानां तदर्द्धं द्वारपालानां तदर्द्धमिति दक्षिणाविभागोऽवगन्तव्यः।” अन्या अपि दक्षिणा तत्र तत्रोक्ता वेदितव्याः। यज्ञभेदे दक्षिणाभेदः कात्या॰ श्रौ॰सू॰ उक्तः कातीयशब्दे दर्शितप्राय विशेषतोऽवसेयः। यथेष्ट दक्षिणाया अदाने कालविलम्बभेदे च दोषा दक्षिणानामनिरुक्तिप्रहिता उक्ता यथा।

“कार्त्तिक्यां पूर्णिमायान्तु राधे राधामहोत्सवे। आविर्भूता दक्षिणांशात् लक्ष्म्यास्तेन दक्षिणा”। यज्ञो दक्षिणया सार्द्धं पुत्रेण च फलेन च। कर्मिणां फलदाता स इत्येव वेदविदो विदुः। कृत्वा कर्म च तस्यैव तूर्णं दद्याच्च दक्षिणाम्। तत् कर्मफलमाप्नोति वेदैरुक्तमिदं मुने!।

°दक्षिणम । "मेषाद्याराशयो ज्ञेयास्त्रिरावृत्त्या परिभ्रमात्" ।। तद्दिक्स्थनक्षत्राणि च मघादिसप्तकम् । "कृत्तिकाद्यास्तु पूर्वादौ सप्त सप्तोदिता क्रमात्" ज्यो॰ त॰ उक्ते । दक्षिणदिग्भागस्था देशाश्च कूर्मविभागशब्दे वृ॰सं॰ १४अ॰ उक्ता "अथ दक्षिणेन लङ्का" इत्युपक्रमे दर्शिताः ।

**दक्षिणपश्चात्** अव्य॰ दक्षिणस्याः पश्चिमायाश्च दिशः अन्तराला दिक् बहु॰ आति परस्य पश्चादेश । प्रथमापञ्चमीसप्तम्यर्थवृत्तौ दक्षिणपश्चिमभागशब्दार्थे नैर्ऋतकोणे ।

**दक्षिणपश्चिमा** स्त्री दक्षिणस्याः पश्चिमायाः दिशोऽन्तराला दिक् । "दिङ्नामान्यन्तराले" पा॰ बहु॰ पुंवत् । १नैर्ऋते कोणे । "लब्धमेरुतटाद्‌वूल । दिशं दक्षिणपश्चिमाम्" भा॰ सभाप॰ १अ॰ । २तद्देशवर्त्तिनि त्रि॰ "दक्षिणपश्चिमे दक्षिणम्" आश्व॰ गृ॰ ।१।१२ ।

**दक्षिणपूर्व्वा** स्त्री दक्षिणस्याः पूर्वस्याः दिशोऽन्तराला दिक् बहु॰ पुंवत् । १अग्निकोणे २तद्दिग्भागस्थे त्रि॰ "दक्षिणपूर्वे उद्धृतान्व आहवनीयं निदधाति" आश्व॰गृ॰४।२।१

**दक्षिणमानस** न॰ गयास्थिते तीर्थभेदे "तस्य दक्षिणभागे तु तीर्थं दक्षिणमानसम् । दक्षिणे मानसे चैव तीर्थत्रय मुदाहृतम्" वायुपु॰ गयामा॰ ।

**दक्षिणमार्ग** पु॰ १तन्त्रोक्ते आचारभेदे २पितृयाणे मार्गभेदे "निर्दिष्टोऽस्य दक्षिणमार्गेण गतागतलक्षणेन" ईशोपनिषद्भाष्यम् । [लवणाम्बुधौ ।

**दक्षिणसमुद्र** पु॰ कर्म॰ । दक्षिणदिक्स्थे समुद्रे

**दक्षिणस्थ** त्रि॰ दक्षिणे भागे तिष्ठति स्था—क ७त॰ । १दक्षिणभागस्थिते २सारथौ पु॰ अमर ।

**दक्षिणा** अ॰ दक्षिणा+प्रथमापञ्चमीसप्तम्यर्थे आच् । प्रथमाद्यर्थवृत्तिके दक्षिणाशब्दार्थे दक्षिणा वसति आगच्छति रमणीयं वा "अथ दक्षिणा विश्वकर्मा" यजु॰ २३।५५

**दक्षिणांसव्रणिन्** पु॰ दक्षिणांसे दक्षस्कन्धे व्रणोऽस्त्यस्य इनि । दक्षिणस्कन्धस्थव्रणयुक्ते "पितृसत्त्वभिगमनात् दक्षिणांसव्रणी भवेत् । तेनापि निष्कृतिः कार्य्या आज्यादानेन शक्तितः" पराशरः ।

**दक्षिणाग्नि** पु॰दक्षिणोऽग्निः । अन्वाहार्य्यपचनाख्ये यज्ञाग्निमध्येऽग्निभेदे ।"अन्वाहार्य्यं दक्षिणाग्नावधिश्रयति" कात्या॰ श्रौ॰ २।५।२७ "हीनं यज्ञस्यान्वाहरतीत्यन्वाहार्य्यः अध्वर्युरन्वाहार्यसंज्ञकं दक्षिणार्थं तण्डुलरूपमोदनं दक्षिणाग्नावधिश्रयति चतुर्णामृत्विजां तृप्तिर्यावता स्यात् तत्परिमाणं ततोऽधिकं वाऽन्वाहार्य्यमोदनं कुर्य्यात्" कर्क ।
"उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानीय विट्कुलाद्वित्तवतो वैश्ययोनय इत्येके ध्रियमाणं वा प्रज्वाल्यारणिमन्त वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्" आश्व॰ श्रौ॰ २।२।१ "उत्सर्गे अजस्रोत्सर्गे अग्निहोत्रहोमार्थं विहरेत् नाजस्रे होमस्तत्स्वपि भवतीत्युक्तम्, एवं स्थिते विहरणसहितमग्निहोत्रहोमप्रयोगं वक्तुकाम उत्सर्ग इत्युक्तवान् । अत्रापराह्णशब्देन अह्नश्चतुर्थभागो गृह्यते । विहरणकाले गार्हपत्यं प्रादुष्कृत्य प्रज्वाल्य च दक्षिणाग्निं वैश्यगृहादानयेत् । चतुर्णां वर्णानामन्यतमस्य द्रव्यवतो वा गृहात्, गार्हपत्याद्वा । धार्य्यश्चेत् प्रज्वलयेत् । काले काले यदि निर्मन्थ्य तदा मन्थेत् । एवं प्रकाराणामुत्पत्तिग्राह्यत्रयस्था । तेषामन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा ततो गार्हपत्यात् ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत् पात्रान्तरेण पृथक् कुर्य्यादित्यर्थः" नारा॰ । तस्य स्थापनञ्च नैर्ऋतकोणे "दक्षिणपश्चिमे दक्षिणम्" आश्व॰ गृ॰ ४।१२ । उक्तेः ।

**दक्षिणाग्र** पु॰ दक्षिणस्यामग्रमस्य । दक्षिणदिग्भागस्थाग्रे कुशादौ "अथ यान्यमून्युदीचीनाग्राणि तृणानि भवन्ति दक्षिणाग्राणि तानि करोति पितृदेवत्यमेवैनत्तत्करोति" शत॰ ब्रा॰ १२।५।१।१२ । "उदगग्रान् दक्षिणाग्रान् करोतीति श्रुतेः" कात्या॰ श्रौ॰ ४।१०।१५ ।

**दक्षिणाचल** पु॰ दक्षिणस्थितोऽचलः । मलयपर्वते हेमच॰ दक्षिणपर्वतादयोऽप्यत्र ।

**दक्षिणाचार** पु॰ कर्म॰ १तन्त्रोक्ते आचारभेदे । "स्वधर्मनिरतो भूत्वा पशुतत्त्वेन पूजयेत् । स एव दक्षिणाचारः शिवो भूत्वा शिवां यजेत्" आचारभेदतन्त्रम् । दयास्तु तत्र भेदः महास्थाने विजयारसः । "चतुर्मकारा अन्त्ये च पञ्चमो विजयारसः" इत्युक्तेः । दक्षिणा दक्षिणस्या आचारो गतिरस्य । २दक्षिणदिग्गतिशालिनि त्रि॰ । "दक्षिणा दक्षिणाचारो दिशं येनाजयत् प्रभु" भा॰ वि॰ ५अ॰ ।

**दक्षिणाज्योतिस्** पु॰ दक्षिणा दक्षिणस्याः ज्योतिरस्य । यज्ञौदने यागभेदे । "योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति" अथ॰ ९।५।२२।२३।२४।२५।२६ । तद्दानफलमुक्तम् ।

**दक्षिणात्** अव्य० दक्षिण+प्रथमापञ्चमीसप्तम्यर्थे आति। प्रथमाद्यर्थवृत्तौ दक्षिणशब्दार्थे दक्षिणात् रमणीयम् आगच्छति वसति वा।

**दक्षिणान्तिका** स्त्री "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नोनिरन्तरा। न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" इत्युपक्रमे "तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः" वृ० र० उक्तलक्षणे वैतालीयभेदे मात्रावृत्तभेदे। "समस्तपादेषु द्वितीयलः यदि तृतीययुक् द्वितीयमात्रातृतीयमात्राभ्यामेको गुरुश्चेत् शेषं वैतालीयवत् तदा दक्षिणान्तिका नाम छन्दः इत्यर्थः।

**दक्षिणापथ** पु० दक्षिणा (आजन्त) पन्थाः अच् समा०। देशभेदे तद्देशवर्णनं भा० व० ६१ अ० यथा "एते गच्छन्ति बहवः पन्थानो दक्षिणापथम्। अवन्तीमृक्षवन्तञ्च समतिक्रम्य पर्वतम्। एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा। आश्रमाश्च महर्षीणां बहुमूलफलान्विताः। एष पन्था विदर्भाणामसौ गच्छति कोशलान्। अतः परञ्च देशोऽयं दक्षिणे दक्षिणापथः"। "दक्षिणापथजन्मानः सर्वे नरवरान्धकाः। गुहाः पुलिन्दाः शबराश्चुचुका मद्रकैः सह" भा० शा० २०७ अ०। "युयुधे पाण्डुराजेन दिवसान् नकुलानुजः। स जित्वा स महाबाहुः प्रययौ दक्षिणापथम्" भा० स० ३० अ०। "तथापरे जनपदा दक्षिणापथवासिनः। पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च। सेतुका मूषिकाश्चैव कुपथा वनवासिकाः। नवराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः। आभीराश्च सहैषीका आटव्याः शबरास्तथा। पुलिन्दा विन्ध्यमूलीका वैदर्भा दण्डकैः सह। कुलीयाश्च सिरालाश्च रूपसास्तापसैः सह। तथा तैत्तिरिकाश्चैव सर्वे कारस्करास्तथा। नासिक्याद्याश्च ये चान्ये ये चैवान्तरनर्मदाः। भानुकच्छाः समाहेयाः सह सारस्वतैस्तथा। कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्बुदैः सह" मत्स्यपु०। २दक्षिणास्थितमार्गमात्रे पु०। "कृष्णाजिनानि भुञ्जन्त स्वयमेव दक्षिणापथं यान्ति" आश्व० श्रौ० ५।१३।१२। दक्षिणापथोऽस्त्यस्य स्वामित्वेन आवासत्वेन सम्बन्धेन वा ठन्। दक्षिणापथिक तद्देशस्थे तत्र वासिनि तत्सम्बन्धे च। "एते चान्ये च बहवो दक्षिणापथिकान् पथः" हरिवं० ११ अ०।

**दक्षिणापरा** स्त्री दक्षिणाया अपरायाः दिशोऽन्तराला दिक्। नैरृतकोणे "दक्षिणपूर्वस्या दिशि दक्षिणपरस्या वा" आश्व०गृ० ४।१।६। २तत्स्थिते त्रि० "पुनर्दक्षिणापरेऽक्षुत्य पूर्वोत्तरे यजमान" कात्या० श्रौ० ८।५।१६। दक्षिणायां परः। ३यज्ञपूर्व्यदक्षिणादानरूपदक्षिणा तत्परे त्रि०।

**दक्षिणाप्रवण** त्रि० दक्षिणा (आजन्त) दक्षिणस्यां प्रवणम् निम्नम्। उत्तरापेक्षया दक्षिणतो निम्ने भूभागादिदेशे "दक्षिणाप्रवणम्" कात्या० श्रौ० २२।३।६। "दक्षिणाप्रवणे देवयजनं भवति" कर्क "शुचिदेशं विविक्तं च गोमयेनोपलेपयेत्। दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत्" मनुः। "दक्षिणाप्लवनमप्यत्र परिश्रुते शुचौ देशे दक्षिणाप्लवने तथा" याज्ञ० श्राद्धदेशोक्तौ।

**दक्षिणाप्रष्टि** पु० धुर्यापेक्षया प्रकृष्टं देशमश्नोति प्र+अश–क्तिच् पृषो०। दक्षिणा दक्षिणभागे प्रष्टिः वाह्यः। धुर्यमध्ये दक्षिणस्थे धुराङ्गे प्रकृष्टदेशस्थे वा अश्वभेदे "दक्षिणाप्रष्टि सवो यस्त इति" कात्या० श्रौ० १४।३।८। "रथे तृतीयमश्वं युनक्ति धुर्यापेक्षया प्रकृष्टं देशमश्नोतीति प्रष्टिवाड्यो युग्य" सं० व्या०। दक्षिणस्यां स इव इति विग्रहे २दक्षिणस्थे प्रष्टिसदृशेऽन्ये च। "अथ दक्षिणा प्रष्टि युनक्ति सव्यप्रष्टि वा" शत० ब्रा० ५।१।४।६। "प्रष्टिर्नाम पादत्रयोपेतो भोजनपात्राधार" (तेपाइ) भा०।

**दक्षिणाबन्ध** पु० दक्षिणाया बन्ध अनुबन्ध। नाट्यस्वाटीका दक्षिणानुबन्धभेदे यथा "दक्षिणाबन्धो नाम रहस्यमन्त्राधिकारिभिर्वक्ष्यमाणानां कामक्रोधोपहतचेतसामभिमानपूर्विकां दक्षिणां प्रयच्छतां दक्षिणाबन्ध इत्युच्यते" तन्त्रसार।

**दक्षिणाभिमुख** त्रि० दक्षिणा दक्षिणस्यामभिमुखम्। दक्षिणदिङ्मुखे। "दक्षिणाभिमुखो रात्रौ सन्ध्यायोश्च यथा दिवा" आह्नि० त०। दक्षिणामुखादयोऽप्यत्र। "आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः"। "उदकेनैव विधिना निर्वपेद् दक्षिणामुख" मनु। "यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुख" मनुना आह्नीयविषये तथा भोजनं निषिद्धम्। दक्षिणा दक्षिणस्यां मुखम्। दक्षिणदिक्स्थे मुखे न०। "अमावास्यायां गयां श्राद्धं दक्षिणामुखभोजनम्। न जीवत्पितृकः कुर्याद् कृते च पितृहा भवेत्" ति० त०।

**दक्षिणामूर्त्ति(र्ति)** पु० दक्षिणा अनुकूला मूर्त्तिरस्य वा कप् अनुकूलत्वात् न पुंवत्। शिवमूर्त्तिभेदे तन्त्रागमादिके

यथा "मोद्यद्व्याख्यमुद्रावटद्रुमतले योगासनस्थं प्रभुं प्रत्यक्तत्त्वमनुस्मृतम्भिः प्रतिदिशं मोदीक्ष्यमाणाननम्। मुद्रां तर्कमयीं दधानममलं कर्पूरगौरं शिवं स्मृत्यन्तं कलये स्फुरन्तमनिशं श्रीदक्षिणामूर्त्तिकम्"। "नित्यशो दक्षिणामूर्त्तिं ध्यायेत् साधकसत्तम। शास्त्रव्याख्यानसामर्थ्यं लभन्ते वत्सरान्तरे" तन्त्रसारादिके तन्त्रे दृश्यम्। ध्यानान्तरं ध्यानशब्दे दृश्यम्।

दक्षिणायन न॰ दक्षिणा दक्षिणस्यां दक्षिणे गोले वाऽयनं रवेः। रवेः स्वाधिष्ठितस्थानापेक्षया १दक्षिणदिग्गमने २दक्षिणगोलरूपतुलादिराशिषट्के गमने तदुपलक्षिते ऋतुत्रयात्मके ३कालभेदे च तत्राद्यार्थे "ऋतुत्रयञ्चाप्ययनं द्वे अयने वर्षसंज्ञिते। कर्कटादिस्थिते भानौ दक्षिणायनमुच्यते" मल॰ त॰ विष्णु पु॰। द्वितीयार्थे "दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः। अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्" मनु। अयनशब्दे ३५२ पृ॰ उत्तरायणशब्दे ११०४ पृ॰ खगोलशब्दे च दक्षिणायनशब्दार्थस्योक्तप्रायत्वेऽपि दक्षिणायनव्यवस्थार्थमधिकमत्रोच्यते यद्यपि चन्द्रस्यापि स्वाधिष्ठितस्थानापेक्षया दक्षिणस्यां दक्षिणगोले च गतिः सम्भवति तथापि सूर्य्यस्यैव गतिभेदे तदुपलक्षितकाले च दक्षिणायनशब्दव्यवहारः। "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च। अयनं विषुवं चैव सङ्क्रान्तेः पुण्यकालता" सू॰ सि॰ अयनस्य सौरत्वोक्तेः "यान् मासान् दक्षिणा आदित्य एति यान् मासानुत्तरादित्य एति" वाजसनेयिनां पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः पाठात् "तस्मादादित्यः षण्मासान् दक्षिणेनैति षण्मासानुत्तरेणैतीति तैत्तिरीयश्रुतेश्चादित्यगतिमुपजीव्यैवायनशब्दप्रवृत्तेश्च। तेनादित्यगतिनिष्पन्नत्वात्तस्य सौरत्वम्। उभयविधदक्षिणायनस्य किमवधिकस्य मनूक्तरात्रित्वं तदभिधीयते। तत्र "मेषादौ देवभागस्थो देवानां याति दर्शनम्। असुराणां तुलादौ तु सूर्य्यस्तद्भागसञ्चरः" सू॰ सि॰।

"जम्बुद्वीपलवणसमुद्रसन्धौ परिधिवृत्तं भूगोलमध्ये तत्र सम्प्रवेणाकाशे वृत्तं विषुवद्वृत्तं तत्र क्रान्तिवृत्तं षड्भान्तरेण स्थानद्वये लग्नं तन्मेषतुलास्थानं प्रवहवायुना विषुवद्वृत्तमार्गे भ्रमति मेषस्थानात् कर्कादिस्थानं विषुवद्वृत्तादवधि शत्यंशान्तरं उत्तरतः। मकरादिस्थानं विषुवद्वृत्तादवधि शत्यंशान्तरे दक्षिणतः। तत् स्वस्थाने प्रवहवायुना भ्रमति। एवं क्रान्तिवृत्तप्रदेशाः स्वस्वस्थाने प्रवहवायुना भ्रमन्ति। तत्र मेषादौ देवभागस्थ "जम्बुद्वीपं च तत्रापि देवासुरविभागकृदिति" पूर्वोक्तेः। तत्सम्बन्धी मेषादिकन्यान्ता राशय उत्तरगोलः। तत्स्थः सूर्य्यो मेषादौ मेषादिप्रदेशे देवानां मेरोरुत्तरावस्थितानां दर्शनं षण्मासानन्तरं प्रथमदर्शनं याति गच्छति प्राप्नोतीत्यर्थः विषुवद्वृत्तस्य तत्क्षितिजत्वात्। एवं दैत्यानां मेरोर्दक्षिणावस्थितानामित्यसुराणामित्युक्तेनैवोक्तम् । ।गसञ्चरो दैत्यभागे समुद्रादिदक्षिणविभागस्थास्तुलादिमीनान्ता राशयो दक्षिणगोलस्तत्र सञ्चरो गमनं यस्य स तादृशः तुलादिप्रदेशे तुलारादर्शनानन्तरं प्रथमदर्शनं प्राप्नोतीत्यर्थः तेषामपि विषुवद्वृत्तस्य क्षितिजत्वात्" र॰ ॰। "देवासुरा विषुवति क्षितिजस्थं दिवाकरम्। पश्यन्त्यन्योन्यमेतेषां वामसव्ये दिनक्षपे" सू॰ सि॰।

"विषुवति काले देवदैत्याः सूर्य्यं क्षितिजस्थं पश्यन्ति विषुवद्वृत्तस्य तयोः स्वस्थानाद्भूगोलमध्यस्थत्वेन क्षितिजत्वात्। एतेषां देवदैत्यानामन्योन्यं परस्परं ये वामसव्ये अपसव्यसव्ये ते क्रमेण दिनक्षपे दिवसरात्री भवतः। अयं भावः देवानां भूमेरुत्तरभागः स्वकीयत्वात् सव्यमतो दैत्यानामपसव्यं स्वकीयत्वाभावात्। एवं दैत्यानां भूमेर्दक्षिणभागः स्वकीयत्वात् सव्यं देवानां स्वकीयत्वाभावादपसव्यमतो दैत्यानां वामसव्यमाशुत्तरदक्षिणगोलौ देवानां क्रमेण दिनरात्री। देवानां वामसव्यभागौ दक्षिणोत्तरगोलौ दैत्यानां दिनरात्री। अन्यथाऽन्योन्यं वामसव्ये इत्यनयोः सङ्गतार्थानुपपत्तेः। अतएव पूर्वं मेषादावित्याद्युक्तमिति" रङ्गना॰। अथ पूर्वश्लोकोत्तरार्धस्य सन्दिग्धत्वशङ्कया दिनपूर्वापरार्धकथनच्छलेन तदर्थं श्लोकाभ्यां विशदयति।

"मेषादावुदितः सूर्य्यस्त्रीन् राशीनुदगुत्तरम्। सञ्चरन् प्रागहर्मध्यं पूरयेन्मेरुवासिनाम्। कर्कादीन् सञ्चरंस्तद्वदह्नः पश्चार्धमेव सः। तुलादींस्त्रीन् मृगादींश्च तद्वदेव सुरद्विषाम्" सू॰ सि॰।

"मेषादौ विषुवद्वृत्तस्थक्रान्तिवृत्तभागे रेवत्यासन्ने उदितो दर्शनतां प्राप्तः सूर्य उदक् यथोत्तरं क्रमेणेति यावत् त्रीन् राशीनुदगुत्तरभागस्थान् मेषवृषमिथुनान् सञ्चरन्नतिक्रामन् सन् मेरुस्थानां देवानां प्रागहर्मध्यं प्रथमदिनस्यार्धं पूरयेत् पूर्णं करोतीत्यर्थः। मिथुनान्ते सूर्ये मेरुस्थानां मध्याह्नं स्यादिति फलितार्थः। कर्कादीन् त्रीन्

ऽश्मनि च मण्डूकः । काकोदुम्बरिकायां वल्मीको दृश्यते शिरा तस्मिन् । पुरुषत्रये सपादे पश्चिमदिक्स्था वहति सा च । आपाण्डुपीतिका मृद् गोरसवर्णश्च भवति पाषाणः । पुरुषार्धे कुमुदनिभो दृश्यश्च मूषिको याति । जलपरिहीने देशे दृष्ट्वा कम्पिल्लको यदा दृश्यः । प्राच्यां हस्तत्रितये वहति शिरा दक्षिणा प्रथमम् । नीलोत्पलवर्णा कापोती चैव दृश्यते तस्मिन् । हस्तेऽजगन्धिमत्स्यो भवति पयोऽल्पं च सक्षारम् । शोण्याकतरोरपरोत्तरे शिरा द्वौ करावतिक्रम्य । कुमुदा नाम शिरा सा पुरुषत्रयवाहिनी भवति । आसन्नो वल्मीको दक्षिणपार्श्वे विभीतकस्य यदि । अध्यर्धे तस्य शिरा पुरुषे ज्ञेया दिशि प्राच्याम् । तस्यैव पश्चिमायां दिशि वल्मीको यदा भवेद्धस्ते । तत्रोदग्भवति शिरा चतुर्भिरर्धाधिकैः पुरुषैः । श्वेतो विश्वम्भरकः प्रथमे पुरुषे तु कुङ्कुमाभोऽश्मा । अपरस्यां दिशि च शिरा नश्यति वर्षत्रयेऽतीते । सकुशासित ऐशान्यां वल्मीको यत्र कोविदारस्य । मध्ये तयोर्नरैरर्धपञ्चमैस्तोयमक्षोभ्यम् । प्रथमे पुरुषे भुजगः कमलोदरसन्निभो मही रक्ता । कुरुविन्दः पाषाणश्चिह्नान्येतानि वाच्यानि । यदि भवति सप्तपर्णो वल्मीकवृतस्तदुत्तरे तोयम् । वाच्यं पुरुषैः पञ्चभिरत्रापि भवन्ति चिह्नानि । पुरुषार्धे मण्डूको हरितो हरितालसन्निभा भूश्च । पाषाणोऽभ्रनिकाशः सौम्या च शिरा शुभाम्बुवहा । सर्वेषां वृक्षाणामधः स्थितो दर्दुरो यदा दृश्यः । तस्माद्धस्ते तोयं चतुर्भिरर्धाधिकैः पुरुषैः । पुरुषे तु भवति नकुलो नीला मृत् पीतिका ततः श्वेता । दर्दुरसमानरूपः पाषाणो दृश्यते चात्र । यद्यहिनिलयो दृश्यो दक्षिणतः संस्थितः करञ्जस्य । हस्तद्वये तु याम्ये पुरुषत्रितये तु शिरा सार्धे । कच्छपकः पुरुषार्धे प्रथमं चोद्भिद्यते शिरा पूर्वा । उद्गन्धा स्वादुजला हरितोऽश्माधस्ततस्तोयम् । उत्तरतश्च मधूकादहिनिलयः पश्चिमे तरोस्तोयम् । परिहृत्य पञ्च हस्तान् अर्धाष्टमपौरुषे प्रथमम् । अहिराज पुरुषेऽस्मिन् धूम्रा धात्री कुलत्थवर्णोऽश्मा । माहेन्द्री भवति शिरा वहति स फेनं सदा तोयम् । वल्मीकः स्निग्धो दक्षिणेन तिलकस्य सकुशदूर्वश्चेत् । पुरुषैः पञ्चभिरम्भो दिशि वारुण्यां शिरा पूर्वा । सर्पावासः पश्चाद् यदा कदम्बस्य दक्षिणेन जलम् । परतो हस्तत्रितयात् षड्भिः पुरुषैस्तुरीयोंऽशे । कौबेरी चात्र शिरा वहति जलं लोहगन्धि चाक्षोभ्यम् । कनकनिभो मण्डूको नरमात्रे मृत्तिका पीता । वल्मीकसंवृतो यदि तालो वा भवति नारिकेलो वा । पश्चात् षड्भिर्हस्तैर्नरैश्चतुर्भिः शिरा याम्या । याम्येन कपित्थस्याहिसंवृते दृङ्गजलं वाच्यम् । सप्त परित्यज्य करान् खात्वा पुरुषान् जलं पञ्च । कर्बुरकोऽहि पुरुषे कृष्णा मृत् पुटभिदपि च पाषाणः । श्वेता मृत् पश्चिमतः शिरा ततश्चोत्तरा भवति । अश्मन्तकस्य वामे बदरी वा दृश्यतेऽहिनिलयो वा । षड्भिरुदक् तस्य करैः सार्धे पुरुषत्रये तोयम् । कूर्मः प्रथमे पुरुषे पाषाणो धूसरः ससिकता मृत् । आदौ शिरा च याम्या पूर्वोत्तरतो द्वितीया च । वामेन हरिद्रतरोर्वल्मीकश्चेत्ततो जलं पूर्वे । हस्तत्रितये पुरुषैः सत्र्यंशैः पञ्चभिर्भवति । नीलो भुजगः पुरुषे मृत् पीता मरकतोपमश्चाश्मा । कृष्णा भूः प्रथमं वारुणी शिरा दक्षिणेनान्या । जलपरिहीने देशे दृश्यन्तेऽनूपजानि चिह्नानि । वीरणदूर्वा मृदवश्च यत्र तस्मिन् जलं पुरुषे । भार्गी त्रिवृता दन्ती सूकरपादी च लक्ष्मणा चैव । नवमालिका च हस्तद्वयेऽम्बु याम्ये त्रिभिः पुरुषैः । स्निग्धाः प्रलम्बशाखा वामनविटपद्रुमाः समीपजलाः । सुषिरा जर्जरपत्रा रूक्षाश्च जलेन सन्त्यक्ताः । तिलकाम्रातकवरुणकभल्लातकबिल्वतिन्दुकाङ्कोलाः । पिण्डारशिरीषाञ्जनपरूषकाश्च वञ्जुलातिबलाः । एते यदि सुस्निग्धा वल्मीकैः परिवृतास्ततस्तोयम् । हस्तैस्त्रिभिरुत्तरतश्चतुर्भिरर्धेन च नरस्य । अतृणे सतृणा यस्मिन् सतृणे तृणवर्जिता मही यत्र । तस्मिन् शिरा प्रदिष्टा वक्तव्यं वा धनं तस्मिन् । कण्टक्यकण्टकानां व्यत्यासेऽम्भस्त्रिभिः करैः पश्चात् । खात्वा पुरुषत्रितयं त्रिभागयुक्तं धनं वा स्यात् । नदति मही गम्भीरं यस्मिंश्चरणाहता जलं तस्मिन् । सार्धैस्त्रिभिर्मनुष्यैः कौबेरी तत्र च शिरा स्यात् । वृक्षस्यैका शाखा यदि विनता भवति पाण्डुरा वा स्यात् । विज्ञातव्यं शाखातले जलं त्रिपुरुषं खात्वा । फलकुसुमविकारो यस्य तस्य पूर्वे शिरा त्रिभिर्हस्तैः । भवति पुरुषैश्चतुर्भिः पाषाणोऽध क्षितिः पीता । यदि कण्टकारिका तु कण्टकैर्विना दृश्यते सिते कुसुमे । तस्यास्तलेऽम्बु वाच्यं त्रिभिर्नरैरर्धपुरुषे च । खर्जूरी द्विशिरस्का यत्र भवेज्जलविवर्जिते देशे । तस्याः पश्चिमभागे निर्देश्यं त्रिपुरुषे वारि ।

